

# शिशुपालवधम् ।

महाकवि-श्रीमाघ-प्रणीतम् ।

महोपाध्याय-कोलाचल-श्रीमल्लिनाथ-सूरिविरचितया
सर्वङ्कषाख्यया टीकया समन्वितम् ।

गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
भट्टाचार्य्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थ-
महोपदेशक-
**श्रीहरिदाससिद्धान्तवागीश-भट्टाचार्य्येण**
प्रणीतया माधुरीसमाख्यया टिप्पन्या अन्वयेन
वङ्गानुवादेन च सहितम् ।

नकीपुर-हरिचरणचतुष्पाठीतस्थेनैव प्रकाशितञ्च ।

१८४७ शकाब्दीय-सौराग्रहायण प्रथमदिवसे ।

1925

मूल्यं ५, राजतमुद्रापञ्चकम् ।

चिरं हरिप्रेम-

निबद्धमानसे !

गुणैर्यतीन्द्रानुगुणे !

गुणान्विते !।

इदं तवास्तां

भुवनानुपालिके !

कात्यायनीदेवि !

समर्पितम् मया ॥

विनीत—श्रीहरिदासशर्म्मणा।

१८४७ शकाब्दीयरासपूर्णिमायाम्।

## अथ कविकथा ।

पुरा किल गुर्ज्जर-(गुजराट) देशान्तःपातिनि "भिन्नमालव"नामनि (१) नगरे श्रीधर्म्मनाभो नाम कश्चन नरपतिरासीत् (२)। तस्य च सुप्रभदेवनामा कश्चित् ब्राह्मणो महामन्त्री (३) बभूव। तस्य दत्तक-शुभङ्करनामानौ द्वौ पुत्रौ समजायेताम् (४)। तयोश्च दत्तकस्य पुत्रो माघः सर्व्वलक्षणलक्षितं सर्व्वोत्कृष्टम् शिशुपालवधं नाम महाकाव्यमिदं प्राणैषीत्। एष च धाराभिधानां नगरीमधिवसतो मालवाधिपतेः श्रीभोजदेवस्य बालमित्रमासीत् (५) अतएव

(१) शिशुपालवधपुस्तकविशेषेषु सर्गसमाप्तौ "इति श्रीभिन्नमालव-वास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृतौ शिशुपालवधे महाकाव्ये" इत्यादिकं लिखितं दृश्यते। तच्च भिन्नमालवनामधेयाधुना अपभ्रंश-विषया 'भिनमाला' नाम्नि परिणतम्। तदपि सम्प्रति गुजराट-मारवाड़देशयोः सीमायां विद्यते। श्रीप्रभा-चन्द्रविरचिते प्रभावकचरिते तु 'श्रीमालम्' इति नामोपलभ्यते। यथा—

"अस्ति गुर्ज्जरदेशोऽन्य-सज्ज-राजन्य दुर्ज्जरः।
तत्र श्रीमालमित्यस्ति पुरं मुखमिव क्षितेः॥"

(२) प्रभावकचरिते—"तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः।
नृपः श्रीवर्म्मलाताख्यः शत्रुमर्म्मभिदाक्षमः॥"

शिशुपालवधशेषे कविवंशवर्णने तु श्रीधर्म्मनाभ एव नाम दृश्यते। यथा—"श्रीधर्म्मनाभस्य बभूव राज्ञः।"
अपि च शिशुपालवधपुस्तकेषु तन्नामनि बहव एव भेदा दृश्यन्ते। यथा धर्म्मनाभः, धर्म्मनाथः, धर्म्मलाभः, वर्म्मलातः, धर्म्मलातः, धर्म्मदेवः, वर्म्मलाख्यः, वर्म्मलातः, वर्म्मनाभः निर्म्मलान्तः, इत्येते।

(३) प्रभावकचरिते—"तस्य सुप्रभदेवोऽस्ति मन्त्री सिततपाः किल।" शिशुपालवधशेषे कविवंशवर्णने च—"देवोऽपरः सुप्रभदेवनामा।" प्राचीने काले ब्राह्मणानामेव राजमन्त्रित्वश्रवणात् मृतस्य माघस्य दाहसत्-कारार्थं व ब्राह्मणानादाय राजा तत्रागच्छदिति भोजप्रबन्धाभिप्रायोपलम्भाच्च सुप्रभदेवो ब्राह्मण एवासीत्। यथा भोजप्रबन्धे—"ततो राजा माघपण्डितं विपन्नं विदित्वा निजनगरात् ब्राह्मणशतावृतो भौमो पद्भ्यामेव तत्रागात्।"

(४) प्रभावकचरिते—"तस्य पुत्रावुभावं स्वाविव विश्वम्भरक्षमौ॥
आद्यो दत्तः स्फुरद्वित्तो द्वितीयश्च शुभङ्करः॥"

"तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्म्मपरस्तनूजः" इति शिशुपालवधशेषे च।

(५) प्रभावकचरिते—"तस्य श्रीभोजभूपाल बालमित्रं कवीश्वरः।
श्रीमाघो नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः॥"

(६) भोजप्रबन्धे—"ततोऽन्यदा राजनि सिंहासनासीने श्रीभोजे द्वाःस्थः प्रणम्य राजानं प्राह—राजन्! गुर्ज्जरदेशादागत्य माघनामा पण्डितवरो दुर्भिक्षेणातिविड़म्बितो देवस्य नगराद्बहिस्तिष्ठति। तेन तु दारिद्र्यविड़म्बितेन स्वपत्नी प्रेषिता। सा च भवनद्वारि वर्त्तते। राजा—"प्रवेशय।" ततो माघपण्डितस्य

चासौ दुर्भिक्षसमये भिक्षार्थमुपगतः क्षुधायातनया तस्यामेव धारानगर्य्यां पञ्चत्वमगच्छत् (६)।

परमविद्योत्साही नानाशास्त्रीयग्रन्थकर्त्ता भोजदेवस्तु खृष्टीयैकादशशताब्दीशेषभागे प्रादुरभूत् (७)। तत्समसामयिकतया माघकविरपि तदानीन्तन एवासीदिति प्रतीयते। यत्तु तेनैव भोजदेवेन प्रणीते सरस्वतीकण्ठाभरणे "कुमुदवनमपश्रि श्रीमदम्भोजषण्डम्" इत्यादिकं शिशुपालवधपद्यजातमुद्धृतं दृश्यते; तत्तु समसामयिकत्वेऽपि बालमित्रस्य ग्रन्थं प्रति समादरातिशयेन सर्वथैवोपपद्यते। इत्थञ्च दशमशताब्दीप्रादुर्भूतेन कातन्त्रवृत्तिकृता दुर्गसिंहेन

---

पत्नी प्रविश्य राज्ञः पत्रं प्रयच्छति। राजा तदादाय वाचयति—"कुमुदवनमपश्रि श्रीमदम्भोजषण्डम् त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः। उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ह्री विचित्रो विपाकः॥" (शिशुपालवधे ११ सर्गे ६४ श्लोकः) राजा तदद्भुतगुणं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीं प्रति प्राह—"मातः! इदं मया भोजनाय दीयते। प्रातरहं माघपण्डितं नमस्कर्त्तुमागमिष्यामि।" ततः सा माघपत्नी तदादाय स्वस्थानमागच्छन्ती याचकव्रातात् स्वभर्त्तुः शारदचन्द्रकिरणगौरान् गुणान् श्रुत्वा तेभ्यो याचकेभ्यो निखिलमपि धारेन्द्रदत्तं वित्तं दत्तवती। गत्वा च माघपण्डितं प्राह—"नाथ! राज्ञा भोजेनाहं बहुमानिता, धनञ्चातिभूरि दत्तम्। मया च मार्गे आयान्त्या याचकमुखेभ्यो लोकोत्तरांस्तांस्तान् तव गुणानाकर्ण्य तन्निखिलमपि वित्तं याचकेभ्यो दत्तम्।" माघः प्राह—"देवि! साधु कृतम्। परमन्ये याचका आयान्ति, तेभ्यः किं दातव्यम्।" ततो माघपण्डितं वस्त्रावशेषं विदित्वा कोऽप्यर्थी प्राह—"आश्वास्य पर्वतकुलं तपनोष्मतप्तम् उद्दाम-दाव-विधुराणि च काननानि। नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद! सैव तवोत्तमा श्रीः॥" ततो माघः पत्नीं प्राह—"अर्था न सन्ति न च मुञ्चति मां दुराशा त्यागान्न सङ्कुचति दुर्ललितं मनो मे। याच्ञा च लाघवकरी स्ववधे च पापं प्राणाः! स्वयं व्रजत किं नु विलम्बितेन॥ दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा। याचकाशाविघातान्तर्दाहः केनोपशाम्यति॥ देवि! किं बहुना, चित्ते कष्टं किमपि नास्ति; परं तथाप्युच्यते—,'न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं लभन्ते कर्म्माणि द्विजपरिवृढ़ान् कारयति कः। अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्म्मो गृहिणि! गहनो जीवननिधिः॥" ततस्तथाविधामवस्थां माघस्य विलोक्य सर्वे याचका यथास्थानमगुः। याचकेषु यथास्थानं गच्छत्सु माघः प्राह—"व्रजत व्रजत प्राणाः! अर्थिनि व्यर्थतां गते। पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः॥" ततो माघपत्नी स्वामिनि परलोकं प्राप्ते प्राह—"सेवन्ते च गृहं यस्य दासवत् भूभुजः पुरा। सोऽद्य भार्य्यासहायोऽयं मृतो वै माघपण्डितः।" ततो राजा माघपण्डितं विपन्नं विदित्वा निजनगरात् ब्राह्मणशतावृतो मौनी पद्भ्यामेव तत्रागात्। ततो माघपत्नी राजानं वीक्ष्य प्राह—"राजन्! यदि पण्डितस्तव देशं प्राप्तस्तर्हि गृहमेव प्राप्तः। ततो देवेन कार्य्यशेषं सम्पादनीयम्।" राजा तं विपन्नं माघपण्डितं नर्म्मदातीरं प्रापयामास। सा च माघपत्नी तेन सह वह्निप्रवेशं कृतवती। ततो राजा माघस्यौत्तरक्रियां पुत्र इव चक्रे। ततो दिवं गते माघे राजा शोकाकुलो विशेषेण कालिदासविरहेण तथा सकलविद्वत्प्रवसनेन च दिने दिने कार्श्येन प्रतिपच्चन्द्राकृतिरासीत्॥"

(৭) "ভোজরাজের সংক্ষিপ্ত বিবরণ এইরূপ। ইনি মালবদেশের অধীশ্বর ছিলেন। ......১০৯২ খৃঃ অব্দে ইনি কালগ্রাসে পতিত হন।" সুবলমিত্রের বাঙ্গালা অভিধান।

भारवि-बाणभट्टयोः प्रमाणमुल्लिखतापि (८) माघस्य प्रमाणं यन्नोल्लिखितम्, तत् सम्भवपरमेव; आत्मनः प्राचीनतया अर्वाचीनस्यालब्धत्वात्।

केचित्तु खृष्टीयनवमशताब्दीवर्त्तिना काश्मीरदेशवासिना आनन्दवर्द्धनाचार्य्येण प्रणीतस्य ध्वन्यालोकग्रन्थस्य द्वितीयोद्द्योते माघपद्योल्लेखदर्शनात् माघकविम् आनन्दवर्द्धनात् प्राचीनमेव मन्यन्ते। तत् खल्वसमञ्जसमेव प्रतिभाति; भोजसमसामयिकतावादिभिर्भोजप्रबन्ध-प्रबन्धचिन्तामणि--प्रभावकचरितादिभि--र्ग्रन्थैः सह विरोधात् ध्वन्यालोके माघपद्य-प्रक्षेपस्यापि सम्भवात्।

यत्तु जर्म्मणदेशवासी क्लाटो नाम पण्डितो माघकविं खृष्टीयदशमशताब्दीप्रथमभागप्रादुर्भूतं मन्यते, तदपि नोपपद्यते; दृढ़प्रमाणाभावात् भोजप्रबन्धादिभिर्विरोधाच्च।

यच्च जर्म्मणदेशवास्तव्य एव याकोवी नाम पण्डितो माघकविं खृष्टीयषष्ठशताब्दीमध्यभागवर्त्तिनं ब्रवीति, तदपि न सङ्गच्छते; भोजप्रबन्धादिभिर्विरोधात्। किञ्च, तथात्वे माघकवेर्बालमित्रस्य भोजदेवस्यापि तस्यामेव षष्ठशताब्द्यां स्थितिरवश्यं मन्तव्या। ततश्च तेनैव भोजदेवेन प्रणीते सरस्वतीकण्ठाभरणे सप्तमशताब्दीशेषभागप्रादुर्भूतस्य भवभूतेर्विरचितात् उत्तररामचरिताच्च प्रमाणोल्लेखः कथमपि नोपपद्यत इति।

---

(८) "तनोति शुभ्रं गुणसम्पदा यशः" भारविकृतकिरातार्ज्जुनीयपद्यपादः दुर्गसिंहकृतकातन्त्रवृत्त्याख्यातद्वितीयपादे। "सदा पुरोडाशपवित्रिताधरे" वाणकृतकादम्बरीपद्यपादः दुर्गसिंहकृतकातन्त्रवृत्तौ कृत्तृतीयपादे।

## अथ शिशुपालवधकाव्यस्य सर्गसंक्षेपः ।

(१) श्रीकृष्णं प्रति नारदस्य गगनादिन्द्रेच्छयोपस्थितिः
रम्या तस्य च वर्णना, सविनयालापस्तयोः सुन्दरः ।
अत्याचारकथा हिरण्यकशिपोर्लङ्केशचेदीशयोः
शेषे चैद्यविनाशयाचनमियं वार्त्ताद्यसर्गे स्थिता ॥

(२) चैद्यं यातः प्रथममथवा पाण्डवं राजसूयं
द्रष्टुं चेत्यं सदसि हरिणा हारिणा भाषितेन ।
पूर्वं तस्मिन् हलधरमतं, शेषमेवोद्धवस्य
शेषच्छेदं हरिरुपगतो वृत्तमेवं द्वितीये ॥

(३) पुरः प्रयाणं पुरतो रमापतेः प्रवर्णनं द्वारवती-समुद्रयोः ।
समुद्रतीरोत्तरणं ततः क्रमात् तृतीयसर्गे कविना समीरितम् ॥

(४) नानाविधैर्वृत्तचयैः समलङ्कृता कृतात्मना सत्कविना च्युतिं विना ।
सर्गे चतुर्थे यमकैरलङ्कृता कृता गिरे रैवतकस्य वर्णना ॥

(५) तत्र रैवतकपर्वते हरेः पञ्चमे खलु विहर्त्तुमिच्छतः ।
सङ्गि-लोक-पटमण्डपाङ्गना-हस्ति-घोटक-वृषादि-वर्णना ॥

(६) वसन्तमारभ्य च षष्ठसर्गे षण्णामृतूनां क्रमशो विहारम् ।
समस्तपद्यैर्यमकाभिरम्यैः संवर्णनं चात्र चकार माघः ॥

(७) सप्तमे युवतिभिः सह यूनां हावभावगमनं वनभूमौ ।
पुष्प-पल्लव-चयश्च कवीशोऽवर्णयद्वनविहारमथेत्थम् ॥

(८) यूनां यदूनां युवतीमतां सतां यानं सरस्यां बहुभङ्गि-सङ्गतम् ।
महान्तमाप्लावमहं महाकविः आचष्ट सर्गे जलकेलिमष्टमे ॥

(९) कविना नवमे सर्गे मनस्वि-जन-रञ्जनम् ।
आदितः शेषपर्यन्तं सन्ध्यावर्णनमीरितम् ॥

(१०) निसर्गरम्ये दशमे च सर्गे गोष्ठीप्रबन्धं मधुपानमोदम् ।
सकेलिहासं प्रणयप्रलापं सम्भोगशृङ्गारमवर्णयच्च ॥

(११) मञ्जुलं प्राञ्जलं प्रायः सरसं रसिकप्रियम् ।
एकमेकादशे सर्गे प्रभातवर्णनं कृतम् ॥

(१२) द्वादशे करि-तुरङ्ग-पुङ्गव-स्यन्दनैः सह हरेः प्रयाणकम् ।
ग्राम-शैल-यमुना-तदुत्तरान् मन्दमुत्तममवर्णयत् कविः ॥

(१३) त्रयोदशे यादवपाण्डवानां सम्मेलनं तत्र महोत्सवञ्च ।
हरिप्रयाणं रमणीविलासं सभाञ्च संवर्णितवान् क्रमेण ॥

(१४) संलापो हरिणा समं नरपतेर्यज्ञक्रियाडम्बरं
तस्यान्ते ह्यहदर्घ्यदानविषये संपृष्ट-भीष्मोत्तरम् ।
श्रीकृष्णस्य महत्त्वकीर्त्तनमथो तत्राघ्यदानं पुनः
सर्गे तत्र चतुर्दशे रचितवान् वृत्तान्यमूनि क्रमात् ॥

(१५) चैद्यो तथा पञ्चदशे च सर्गे पार्थञ्च भीष्मञ्च हरिञ्च निन्दन् ।
भीष्मोक्तपादाहति-दुष्ट-राज-क्षोभात् परं सन्नहनं चकार ॥

(१६) षोड़शे च शिशुपालदूततो द्व्यर्थकीर्त्तिमधिगम्य सात्यकिः ।
उत्तरं तदुचितं ददौ, पुनः सोऽभ्यधात् परुषमच्युतं बहु ॥

(१७) ततः पुनः सप्तदशे च सर्गे श्रीकृष्णपक्षस्य विशेषरोषः ।
युद्धाय सज्जा त्वरितं प्रयाणं सैन्योत्थधूलीपरिवर्णनञ्च ॥

(१८) अष्टादशे ततः सर्गे श्रीकृष्णशिशुपालयोः ।
सेनयोस्तुमुलं युद्धं महाकविरवर्णयत् ॥

(१९) एकैकपदशान्तरगैः सुदुष्करैः एकैकपदशैर्यमकादिशोभितैः ।
वै चित्रकाञ्चितैर्हृचिरशालिभिः तथोनविंशे रण एव वर्णितः ॥

(२०) शेष-विंशतितमे किल सर्गे कृष्ण-चैद्यनृपयोर्युगयुद्धम् ।
कृष्ण-नोदितसुदर्शनचक्रं चैद्य-शीर्षमलुनादवसाने ॥

=:०:=

# टीकाकृतो मङ्गलाचरणम् ।

इन्दीवरदलश्यामामिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फण-फणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाभिधाम् ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि ।
क्षुभ्यन्नावतरङ्गिते रससुधापूरे निमङ्क्तन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ।

नेतास्मिन् यदुनन्दनः स भगवान् वीरः प्रधानो रसः
शृङ्गारादिभिरङ्गवान्विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलम्
धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

# शिशुपालवधम् ।

—:*:—

## प्रथमः सर्गः ।

—*—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥१॥

---

अन्वयः—श्रियः पतिः जगन्निवासः हरिः, जगत् शासितुं श्रीमति वसुदेवसद्मनि वसन्, अम्बरात् अवतरन्तं हिरण्यगर्भाङ्गभुवं मुनिं ददर्श ॥१॥

टीका—अथ तत्रभवान् माघकविः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।" इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां "काव्यालापांश्च वर्जयेदिति" निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति । श्रिय इति । तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धिरभ्युच्चयः । तदुक्तम् । "देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वेति । श्रियो लक्ष्म्याः पतिः अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनीति विष्णुपुराणात् । जगन्निवासो जगतामाधारः कुक्षिस्थाखिलभुवन इति यावत् तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुः अम्बरादवतरन्तमायान्तम् इन्द्रसन्देशकथनार्थमिति भावः हिरण्यस्य गर्भो ब्रह्मा ब्रह्माण्डप्रभवत्वात् तस्याङ्गभुवं तनुजम् अथवा तस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूः तं मुनिं नारदमित्यर्थः । "उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुव इति भागवतात् । ददर्श कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकाभिधोऽलङ्कारः । तदुक्तम् । "आधाराधेययोरानुरूप्याभावोऽधिको मत इति । जगन्निवासस्य जगदेकदेशनि-

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पततयधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥२॥

---

वासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति रुक्षव्य-ञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालङ्कारौ । एषाञ्चान्योन्यनैरपेक्ष्येणैकत्र समावेशा-त्तिलतण्डुलवत् संसृष्टिः । सर्गेऽस्मिन् वंशस्थवृत्तम् । जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् ॥१॥

टिप्पनी—

स्वयं सन्नपि यो ब्रह्म, ब्रह्म ध्यायति सर्वदा ।
अमूर्त्तिं नष्टमूर्त्तिं वा तं नमामि महेश्वरम् ॥
मल्लिनाथेन यन्नोक्तं तन्मात्रमिह वक्ष्यते ।
तथापि मणिमालेव महासूक्ष्मैव टिप्पनी ॥

श्रिय इति । अत्र श्रियः श्रीतिव्यञ्जनसंघस्य सकृदनेकधासाम्यात् छेकानुप्रासः ; तथा जगज्जगदिति शब्दार्थयोः पौनरुक्त्यात् तात्पर्य्यमात्रतो भेदाच्च साहित्यदर्पणादिमते लाटानुप्रास एव इति संसृष्टिः ; लाटानु-प्रासस्य श्लिष्टपदरूपत्वेन वृत्त्यनुप्रासादिबाधकत्वात् अन्यथा "अरराजीवनदले ! नयने किं निमीलिते ।" इत्यादि-दर्पणोदाहरणेऽपि वृत्त्यनुप्रासप्रसङ्गः । मल्लिनाथेन तु मतान्तरमाश्रित्य वृत्त्यनुप्रास उक्तः। श्रुतिविषया रतिर्भावः, ओजो गुणः, गौड़ी रीतिः ॥१॥

বাঙ্গালা—লক্ষ্মীপতি এবং জগতের আধার শ্রীকৃষ্ণ, জগৎ শাসন করিবার জন্য, শোভাসম্পন্ন বসুদেবগৃহে অবস্থান করতঃ, (কোন সময়ে) আকাশ হইতে অবতরণকারী নারদ মুনিকে দর্শন করিয়াছিলেন ॥১॥

अन्वयः—अनूरुसारथेः गतं तिरश्चीनम्, हविर्भुजः ऊर्द्ध्वज्वलनं प्रसिद्धम् । सर्वतः विसारि धाम अधः पतति, एतत् किम् इति जनैः आकुलम् ईक्षितम् ॥२॥

टीका—तदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह । गतमिति । अविद्यमानावूरू यस्य सः अनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्य्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्य्यग्भूतं विभाषाऽञ्चेरदिक्स्त्रियामिति तिर्य्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात् स्वार्थे खप्र-त्ययः । हविर्भुजोऽग्नेरूर्द्ध्वज्वलनम् ऊर्द्धस्फुरणं प्रसिद्धम् इदन्तु सर्वतो विसारि धाम अधः पतति किमेतदिति सूर्य्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्म-यात् सम्भ्रान्तं यथा तथा जनैरीक्षितम् ईक्षणं कृतम् । सकर्म्मकादप्यविवक्षिते कर्म्मणि क्तः । प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति वचनात् । केचित् कर्म्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्व्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्य्याग्निभ्यामु-पमानाभ्यामधःप्रसरणधर्म्माधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे । उपमानाद् यदन्यस्य व्यतिरेकः स एव स इति । "धाम रश्मौ गृहे स्थाने जन्मप्रभावयोरिति हैमचन्द्रः ।

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥३॥

---

दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन-

द्विधाकृतात्मा किमयं दिवाकरो

विधूमरोचिः किमयं हुताशनः।

इति चरणद्वयेन सह इममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह। तत्राद्यचरणद्वयेन सन्देहाकारो गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात्॥२॥

टिप्पनी—गतमिति। अत्र एकस्य नकारस्य रेफस्य धकारस्य वकारस्य च सकृत् साम्यात् छेकानुप्रासः। तेन च मल्लिनाथोक्तव्यतिरेकेण सह संसृष्टिः। भावादयः पूर्ववत्॥२॥

বাঙ্গালা—সূর্য্যের গতি, তির্য্যক্ (তেরচা) ভাবেই হইয়া থাকে; অগ্নিরও উপরের দিকে প্রজ্বলিত হওয়াই প্রসিদ্ধ। কিন্তু সকল দিকে বিস্তৃত এই তেজ, নীচের দিকে পড়িতেছে; সুতরাং এটা কি? এইরূপে জনসাধারণ বিস্ময়াকুলভাবে দেখিতে লাগিল॥২॥

अन्वयः—विभुः सः पुरा त्विषां चयः इति अवधारितम्, ततः विभाविताकृतिं शरीरी इति (अवधारितम्)। (ततः) विभक्तावयवं पुमान् इति (अवधारितम्) अमुं क्रमात् नारदः इति अबोधि॥३॥

अथ भगवान्निरणैषीदित्याह। चय इति। विभुर्दूरस्थावधारणसमर्थः स हरिः पुरा प्रथमं त्विषाञ्चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितं ततः प्रत्यासन्ने विभाविता विस्पष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् अत एव शरीरी चेतन इत्यवधारितं ततो विभक्ता विविच्य गृहीताः अवयवा मुखादयो यस्य तं तथोक्तम् अत एव पुमानित्यवधारितम् अमुमागच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गतो निर्वाहः। क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण। लोकदृष्ट्येदमुक्तं हरिस्तु सर्वं वेदैवेति तत्त्वम्। नारद इत्यबोधि नारदं बुद्धवानित्यर्थः। नारदस्य कर्म्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया। तिङ्सुपसङ्ख्यानस्योपलक्षणत्वात्। यथाह वामनः। "निपातेनाभिहिते कर्म्मणि न कर्म्मविभक्तिः परिगणनस्य प्रायिकत्वादिति। बुध्यतेः कर्त्तरि लुङ् दीपजनेत्यादिना चिण् चिणो लुगिति लुक्। अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात्॥३॥

टिप्पनी—चय इति। अत्र एकावधारणक्रियया सह बहूनाम् अप्रस्तुतानाम् इतिशब्दाभिधेयानां करणतया अभिसम्बन्धात् तुल्ययोगिता च। तेन च मल्लिनाथोक्तकाव्यलिङ्गेन सहास्य परस्परनिरपेक्षतया संसृष्टिः। भावः पूर्ववत्, प्रसादो गुणः, पाञ्चाली रीतिः॥३॥

नवानधोऽधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥४॥
दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥

---

**বাঙ্গালা**—ত্রিলোকের অধিপতি শ্রীকৃষ্ণ, প্রথমে 'তেজঃপুঞ্জ' বলিয়া নিশ্চয় করিলেন ; পরে আকৃতি দেখিয়া 'শরীরধারী' বলিয়া মনে করিলেন ; তাহার পরে পৃথক্ পৃথক্ ভাবে মুখ ও হস্ত-পদাদি অঙ্গ-প্রত্যঙ্গ দেখিয়া 'পুরুষ' বলিয়া স্থির করিলেন ; ক্রমে ঐ ব্যক্তিকে 'নারদ' বলিয়া জানিতে পারিলেন ॥৩॥

**अन्वयः**—नवान् बृहतः पयोधरान् अधोऽधः समूढकर्पूरपरागपाण्डुरम्, क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना भूतिसितेन शम्भुना स्फुटोपमम् (ददर्श) ॥४॥

**टीका**—अथ सप्तभिस्तं विशिनष्टि । नवानित्यादि । कीदृशमसुं नवान् सद्यः-सम्भृतसलिलानिति यावत् बृहतो विपुलान् पयोधरान् मेघान् अधोऽधः मेघानां समीपाधः-प्रदेशे स्थितमिति शेषः । उपर्य्यध्यधसः सामीप्ये इति द्विर्भावः तद्योगे द्वितीया उभसर्व-तसोः कार्य्या धिगुपर्य्यादिषु त्रिष्वित्यादिवचनात् । समूढः पुञ्जीकृतः "समूढः पुञ्जिते भुग्ने" इति विश्वः । कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम् अत एव क्षणं मेघसमीपावस्थानक्षणे । अत्यन्त-संयोगे द्वितीया । क्षणेषु ताण्डवोत्सवेषु । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्य-प्यमरः । भूत्या भस्मना सितेन । भूतिर्भस्मनि सम्पदीत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटं शम्भूपममित्यर्थः । सापेक्षत्वेऽपि समासः । सदृशपर्य्याय-योस्तुल्योपमाशब्दयोरतुलोपमाभ्यामिति निषेधात् सादृश्यवाचित्वे तृतीयेत्याहुः । केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राक् लिखित्वा व्याचक्षते तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्ड-मात्रस्य शम्भूपमौचित्यं चिन्त्यम् ॥४॥

**टिप्पनी**—नवानिति । अत्र द्वितीयपादे लुप्तोपमा, स्फुटोपममिति आर्थी समासगता उपमा इत्यनु-प्रासश्च ; एतेषां संसृष्टिः । भावः पूर्ववत्, ओजो गुणः, गौड़ी रीतिः । पुरा भगवान् भूतनाथो गजासुरं निहत्य तदीयं चर्म्म पृष्ठे दधानो ननर्त्त इति पुराणवार्त्ता ॥४॥

**বাঙ্গালা**—নূতন বড় বড় মেঘের নিকট নিম্নদেশে নারদ অবস্থান করিতেছিলেন এবং তাঁহার শরীরটী, রাশীকৃত কর্পূরচূর্ণের ন্যায় শুভ্রবর্ণ ছিল। সুতরাং নৃত্যোৎসবের সময় যাঁহার পৃষ্ঠলগ্ন হস্তিচর্ম্ম ঊর্দ্ধে উঠিতেছিল এবং দেহটী ভস্মময় অঙ্গরাগে শুভ্রবর্ণ ছিল, সেই মহাদেবের সঙ্গে ক্ষণকালের জন্য নারদের সাদৃশ্য সুস্পষ্ট হইয়াছিল ॥৪॥

**अन्वयः**—अम्भोरुहकेसरद्युतीः जटाः दधानम्, शरच्चन्द्रमरीचिरोचिषम् ; विपाकपिङ्गाः तुहिनस्थली-रुहः व्रततीततीः (दधानं) धराधरेन्द्रम् ( इव स्थितं नारदं ददर्श ) ॥५॥

पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥ ৬ ॥
विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गुणैरिव ॥ ৭ ॥

---

टीका—दधानमिति । पुनश्च अम्भोरुहकेशरद्युतीः पद्मकिञ्जल्कप्रभाः पिशङ्गीरित्यर्थः जटा दधानं स्वयन्तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तं धवलमित्यर्थः अतएव विपाकेन परिणामेन पिङ्गाः पिङ्गला तुहिनस्य श्रीं रोहन्तीति तद्विनस्थलीरुहः व्रततीर्लताः दधानम् "वल्ली तु व्रततिर्लता" इत्यमरः । दधानं धराधरेन्द्रो हिमवान् तुहिनस्यतीति लिङ्गात् नारदोपमानत्व च तमिव स्थितम ॥ ৫ ॥

टिप्पनी—दधानमिति । अत्र पूर्वार्द्धे लुप्तोपमाद्वयम, परार्द्धे च श्रौती उपमा, रोचि रोचीति छेकानुप्रासः, ततो ततीति च यमकम्, इत्थं तेषां परस्परनिरपेक्षतया संसृष्टिः । भावः पूर्ववत्, ओजो गुणः, गौड़ी रीतिः ॥৫॥

বাঙ্গালা—নারদ, পদ্মের কেশরের ন্যায় পিঙ্গলবর্ণ জটা ধারণ করিতেছিলেন, এবং শরচ্চন্দ্রের কান্তির ন্যায় তাঁহার দেহের শুভ্রবর্ণ কান্তি ছিল; সুতরাং পক্বতানিবন্ধন পিঙ্গলবর্ণ এবং হিমময়স্থানোৎপন্ন লতাসমূহধারী হিমালয় পর্বতের ন্যায় তাঁহাকে দেখা যাইতেছিল ॥৫॥

अन्वयः—पिशङ्गमौञ्जीयुजम् अर्जुनच्छविम्, अञ्जनद्युति एणाजिनं वसानम् ; (अतएव) सुवर्णसूत्राकलिताधराम्बरां शितिवाससः तनुं विडम्बयन्तम (ददर्श) ॥৬॥

टीका—पिशङ्गेति । पुनः मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्ग्या मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुजम । सत्सूद्विषेत्यादिना क्विप् स्त्रियाः पुंवदिति पिशङ्गशब्दस्य पुंवद्भावः । अर्जुनच्छविं धवलकान्तिम । "वलक्षो धवलोऽर्जुन" इत्यमरः । अञ्जनद्युति कज्जलवर्णम एणाजिनं कृष्णमृगचर्म्म वसानम् आच्छादयन्तम । वस आच्छादन इति धातोः शानच् । सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धम अधराम्बरम् अन्तरीयकं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तमनुकुर्वाणमित्यार्थीयमुपमा ॥ ৬ ॥

टिप्पनी—पिशङ्गेति । अत्र अञ्जनद्युतीति लुप्तोपमा मल्लिनाथोक्तार्थोपमया संसृज्यते । भावः पूर्ववत्, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥৬॥

বাঙ্গালা—নারদের দেহকান্তি শুভ্রবর্ণ ছিল এবং তিনি কজ্জলের ন্যায় কৃষ্ণবর্ণ একখানি মৃগচর্ম্ম পরিধান করিয়াছিলেন; সে মৃগচর্ম্ম খানি আবার পিঙ্গলবর্ণ মুঞ্জমেখলা দ্বারা বদ্ধ ছিল; সুতরাং স্বর্ণসূত্র দ্বারা পরিবদ্ধ নীলবর্ণবস্ত্র-পরিধানকারী বলরামের শরীরের তিনি অনুকরণ করিতেছিলেন ॥৬॥

अन्वयः—विहङ्गराजाङ्गरुहैः इव आयतैः, हिरण्मयोर्वीरुहवल्लितन्तुभिः कृतोपवीतं हिमशुभ्रम् ; (अत-एव) घनान्ते तडितां गुणैः कृतोपवीतम् उच्चकैः घनम् इव (स्थितं ददर्श) ॥৭॥

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

---

टीका—विहङ्गेति । पुनः विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः आयतैर्दीर्घैः हिरण्यस्य विकारो हिरण्मयी । दाण्डिनायनेत्यादिना मयटि यलोपनिपातः । तस्या उर्व्यां जाता रुहाः । इगुपधालक्षणः कप्रत्ययः । तासां लतानां तन्तुभिस्तत्तुल्यैः सूक्ष्मावयवैः उपादानभूतैः हिरण्मयैः यज्ञोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम् अतएव घनान्ते शरदि तडितां गुणैरुपलाञ्छितम् । तडित्सौदामनी विद्युदित्यमरः । उच्चैरेव उच्चकैरुन्नतं घनं मेघमिव स्थितम् ॥ ७ ॥

टिप्पनी—विहङ्गेति । अत्र प्रथमे चरणे श्रौतोपमा छेकानुप्रासश्च, चतुर्थे चरणे च तथैव श्रौतोपमा छेकानुप्रासश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । भावः पूर्ववत्, माधुर्यं गुणः पाञ्चाली रीतिः ॥७॥

বাঙ্গালা—গরুড়ের লোমের ন্যায় দীর্ঘ এবং স্বর্ণময়ভূমিজাত লতার সূত্রের ন্যায় সূক্ষ্ম সূত্র দ্বারা নির্ম্মিত একটি যজ্ঞোপবীত তিনি ধারণ করিতেছিলেন এবং তাঁহার দেহটী শুভ্রবর্ণ ছিল; সুতরাং বর্ষাবসানে (শরৎকালে) বিদ্যুতের গুণে পরিবেষ্টিত শুভ্র মেঘের ন্যায় তাঁহাকে দেখা যাইতেছিল ॥৭॥

अन्वयः—निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना चारुचमूरुचर्मणा, कुथेन इन्द्रवाहनं नागेन्द्रम् इव चकासतम् (ददर्श) ॥८॥

टीका—निसर्गेति । पुनः निसर्गात् स्वभावादेव चित्राणि शबलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन् यो बिसच्छेदो मृणालखण्डः । छेदः खण्डोऽस्त्रियामिति त्रिकाण्डशेषः । तद्वत् सिते अङ्गे वपुषि सङ्गिना सक्तेन चारुणा चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोरित्यमरः । इन्द्रवाहनं नागेन्द्रम् ऐरावतमिव चकासतं शोभमानम् । इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षितत्वात् वाहनमाहितादिति न णत्वम् । यथाह वामनः । "नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वादिति । चकास्तेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । जक्षित्यादयः षडित्यभ्यस्तसंज्ञा ॥ ८ ॥

टिप्पनी—निसर्गेति । प्रथमचरणे छेकानुप्रासः, द्वितीयचरणे लुप्तोपमा वृत्त्यनुप्रासश्छेकानुप्रासा-नामेकाश्रयानुप्रवेशरूपः सङ्करः, तृतीयचरणे वृत्त्यनुप्रासः, चतुर्थचरणे च छेकानुप्रासश्रौतोपमयोः पूर्ववत्सङ्करः, इत्येतेषां समुदाये संसृष्टिः । संसृष्टिसङ्करयोरपि संसृष्टिसङ्करौ सम्भवत इति प्रदर्शितमस्माभिः साहित्यदर्पणटीकायाम् । भावादयः पूर्ववत् ॥८॥

বাঙ্গালা—মৃণালখণ্ডের ন্যায় শুভ্রবর্ণ ও শোভমান আপন দেহে নারদ এক খানি

अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरःप्रवालैरिव पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥
रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

---

সুন্দর হরিণ চর্ম্ম ধারণ করিয়াছিলেন; সেই হরিণচর্ম্মের সূক্ষ্ম সূক্ষ্ম লোমগুলি, স্বভাবতই বিচিত্র ও উজ্জ্বল ছিল। সুতরাং পৃষ্ঠের আস্তরণ বস্ত্র দ্বারা ইন্দ্রবাহন ঐরাবতের ন্যায় সেই চর্ম্ম দ্বারা তিনি শোভা পাইতেছিলেন ॥৮॥

अन्वयः—अजस्रम् आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया (अतः) पुरः प्रवालैः पूरितार्द्धया इव (स्थितया) अच्छस्फटिकाक्षमालया विभान्तं (ददर्श) ॥ ९ ॥

टीका—अजस्रमिति । पुनरजस्रं प्राचुर्य्येणास्फालितास्ताडिताः सौष्ठवपरीक्षार्थं ह्यङ्गुष्ठेन तन्त्रीताडनं प्रसिद्धं तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया तद्रागरक्तयेत्यर्थः अत एव पुरः पुरोभागे प्रवालैः विद्रुमैः "अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकमित्यमरः । पूरितार्द्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया जपमालयेत्यर्थः । "अक्षो भल्लूके स्फटिकेऽनक्षि-ऽक्षाभिमुखेऽव्ययमिति हेमचन्द्रः । तथा प्रसिद्धस्फटिकग्रहणात् ऋषेर्मोक्षार्थित्वं व्यज्यते । स्फटिको मोक्षदः परमिति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात् । विभान्तं भासमानम् । भातेः शतृप्रत्ययः । अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः । तद्गुणः स्वगुणत्यागादिति ॥९॥

टिप्पनी—अजस्रमिति । तृतीयचरणे क्रियोत्प्रेक्षा चेति मल्लिनाथोक्ततद्गुणालङ्कारेण सह संसृष्टिः । भावः पूर्ववत्, ओजो गुणः, पाञ्चाली रीतिः ॥ ९ ॥

বাঙ্গালা—বার বার বীণার গুণ তাড়ন করায় দক্ষিণ হস্তের বৃদ্ধাঙ্গুলীতে ক্ষত হইয়াছিল; সুতরাং সেই অঙ্গুলীর রক্তবর্ণ নখ কিরণে মালাটীর সম্মুখ ভাগও রক্তবর্ণ হইয়াছিল, তাহাতে বোধ হইতেছিল সেই সম্মুখ ভাগের অর্দ্ধাংশ যেন প্রবাল দ্বারা পূর্ণ করা হইয়াছে, এহেন স্ফটিকময় জপমালা দ্বারা তিনি শোভা পাইতেছিলেন ॥ ৯ ॥

अन्वयः—नभस्वतः आघट्टनया पृथक् रणद्भिः विभिन्नश्रुतिमण्डलैः स्वरैः स्फुटीभवद्ग्रामविशेषमूर्च्छनां महतीं मुहुः मुहुः अवेक्षमाणं (नारदं ददर्श) ॥ १० ॥

टीका—रणद्भिरिति । पुनर्नभस्वतो वायोराघट्टनया आघातेन पृथगसङ्कीर्णं रणद्भिर्ध्वनद्भिः अनुरणनोत्पद्यमानैरित्यर्थः । श्रुत्यारब्धमनुरणनं स्वर इति लक्षणात् । तदुक्तं रत्नाकरे । "श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यत इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम् । "प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति । विभिन्नानि

निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभःसदः ।
समासदत्सादितदैत्यसम्पदः पदं महेन्द्रालयचारु चक्रिणः ॥ ११ ॥

---

प्रतिनियतसंख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहो येषां तैर्विभिन्नश्रुतिमण्डलैः श्रुतिसंख्यानियमश्च दर्शितः। चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिरृषभधैवतौ। स्वराः षड्जादयः सप्तोक्तलक्षणाः। तदुक्तं, "श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः। पञ्चमो धैवतश्चाथ निषाद इति सप्त ते। तेषां संज्ञाः सरिगमपधनीत्यपरा मता इति। तैः स्वरैः स्फुटीभवन्तीः ग्रामविशेषाणां षड्जादिग्रामनामकानां स्वरसङ्घातभेदानां त्रयाणां मूर्च्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं निजवीणाम्। विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपीति वैजयन्ती। मुहुर्मुहुरवेक्षमाणम्। रन्ध्रोत्थेन जनानेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वनतीति कौतुकादनुसन्धानमित्यर्थः। अथ ग्रामलक्षणम्। यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते। षड्जग्रामो भवेदादौ मध्यमग्राम एव च। गान्धारग्राम इत्येतद् ग्रामत्रयमुदाहृतमिति। तथाच नन्द्यावर्त्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतव इति। मूर्च्छनालक्षणञ्च। क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च। ग्रामत्रयेऽपि प्रत्येकं सप्तसप्तमूर्च्छना इत्येकविंशतिमूर्च्छना भवन्ति। तत्र नामानि तु नानपेक्षितमुच्यत इति-प्रतिज्ञाभयान्न लिख्यन्ते इति सर्वं भवदातम्। अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पनैपुण्यातिशयो वीणायाः प्रतीयते। तेन अत्र स्वतः प्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात् तन्मूलातिशयोक्तिरलङ्कारः। सा च महत्याः पुंव्यापारं विना मूर्च्छासम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्य्योत्पत्तिद्योतनाद्विभावना व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥१०॥

**टीप्पनी**—माधुर्यं गुणः, पाञ्चाली रीतिः ॥ १० ॥

**বাঙ্গালা**—বায়ুর আঘাতে, বীণার তন্ত্রী হইতে পৃথক্, পৃথক্ ভাবে অনুরণন (রেশ) প্রকাশ পাইতেছিল; আর শ্রুতিগুলিও ভিন্ন ভিন্ন ভাবে বাহির হইতেছিল; এই রূপ নিষাদ প্রভৃতি স্বর সমূহ দ্বারা সে সকলের মূর্চ্ছনাগুলিও বীণা হইতে স্পষ্ট রূপ বাহির হইতেছিল; এই রূপ মহতীনাম্নী আপন বীণার প্রতি নারদ বার বার দৃষ্টিপাত করিতেছিলেন ॥ ১০ ॥

**अन्वयः**—अतीन्द्रियज्ञाननिधिः सः अनुव्रजतः कृतानतीन् नभःसदः निवर्त्य सादितदैत्यसम्पदः चक्रिणः महेन्द्रालयचारु पदं समासदत् ॥ ११ ॥

पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत।
गिरेस्तड़िल्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः॥१२॥

टीका—निवर्त्त्येति। अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपादिविप्रकृष्टार्थाः। अत्यादयः क्रान्ताद्यर्थे द्वितीयेति समासः। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधो वक्तव्य इति विशेष्यलिङ्गत्वम्। तेषां ज्ञानं तस्य निधिः सर्वार्थद्रष्टेत्यर्थः। अतानतान् अतप्रणामान् अनुव्रजतोऽनुगच्छतः नभसि आकाशे सीदन्ति गच्छन्तीति नभःसदः सुरान् सत्सूद्विषदित्यादिना क्विप्। निवर्त्त्य प्रतिषिध्य स मुनिः सादितदैत्यरुम्मदः सादिता विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत्। समाङ्पूर्वात् सद्धातोर्लङ्। अत्र नतौनतौ पदः पदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः अन्यत्र वृत्त्यनुप्रासः इत्य नयोः संसृष्टिः॥११॥

বাঙ্গালা—যে সকল পদার্থ, সাধারণ লোকের জ্ঞানগোচর ছিল না; নারদ সে গুলিও জানিতেন; দেবতারা সেই নারদের পিছনে পিছনে দ্বারকার উপরিদেশ পর্যন্ত আসিয়া নমস্কার করিলে নারদ তাঁহাদিগকে ফিরাইয়া দিয়া দৈত্যহন্তা নারায়ণের গৃহে উপস্থিত হইলেন; সে গৃহ ইন্দ্রভবনের ন্যায় সুন্দর ছিল॥১১॥

अन्वयः—पतत्पतङ्गप्रतिमः तपोनिधिः अस्य पुरः भुवि यावत् न व्यलीयत; तावत् अच्युतः गिरेः तड़िल्वान् इव उच्चकैः पीठात् जवेन उदतिष्ठत्॥१२॥

टीका—पतदिति। पतन् यः पतङ्गः सूर्य्यः स प्रतिमा उपमानं यस्य सः। पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। तपोनिधिर्मुनिः अस्य हरेः पुरो भुवि पुरःप्रदेशे यावत् न व्यलीयत नातिष्ठत्। लीङ् गताविति धातोर्देवादिकात्कर्त्तरि लङ्। तावदच्युतो गिरेः शैलात् तड़ितोऽस्य सन्तीति तड़िल्वान् मेघ इव। मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वकारः तसौ मत्वर्थे इति भसंज्ञायामकसंज्ञाधिकारेणापदत्वान्न जश्त्वम्। उच्चकैरुन्नतात् पीठात् आसनात् जवेनोदतिष्ठत्। मुनिवरस्य भूप्राप्तेः प्रागेव स्वयमुत्थितवान्। ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते इति शास्त्रमनुस्मरन्निति भावः। उदोऽनूर्द्ध्वकर्मणीति नियमादिहोर्द्ध्वकर्मणि नात्मनेपदं। परःत्यतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्य्यदण्डिप्रभृतयो बभणुः। अत एवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति॥१२॥

टिप्पनी—पतदिति। गिरेस्तड़िल्वानिवेति श्रौतोपमा, प्रथमपादे छेकानुप्रासो वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः। भावादयः पूर्ववत्॥१२॥

অথ প্রযত্নোন্নমিতানমৎফণৈর্ধৃতে কথঞ্চিৎ ফণিনাং গণৈরধঃ।
ন্যধায়িষাতামভিদেবকীসুতং সুতেন ধাতুশ্চরণৌ ভুবস্তলে ॥১৩॥
তমর্ঘ্যমর্ঘ্যাদিকয়াদিপূরুষঃ সপর্য্যয়া সাধু স পর্য্যপূপুজৎ
গৃহানুপৈতুং প্রণয়াদভীপ্সবো ভবন্তি নাপুণ্যকৃতাং মনীষিণঃ ॥১৪॥

---

**বাঙ্গালা**—পতনোন্মুখ সূর্য্যের ন্যায় মহর্ষি নারদ, যাবৎ শ্রীকৃষ্ণের সম্মুখে ভূতলে (আসিয়া) অবস্থান না করিলেন ; তাহার মধ্যেই মেঘ যেমন পর্বত হইতে উঠে, তেমন শ্রীকৃষ্ণ, উচ্চ আসন হইতে সত্বর গাত্রোত্থান করিলেন ॥১২॥

**অন্বয়ঃ**—অথ ধাতুঃ সুতেন প্রযত্নোন্নমিতানমৎফণৈঃ ফণিনাং গণৈঃ অধঃ কথঞ্চিৎ ধৃতে ভুবঃ তলে অভিদেবকীসুতং চরণৌ ন্যধায়িষাতাম্ ॥১৩॥

**টীকা**—অথেতি। অথাভ্যুত্থানানন্তরং ধাতুঃ সুতেন নারদেন প্রযত্নোন্নমিতা অপি মুনিপাদন্যাসভারাদানমন্ত্যঃ ফণা যেষাং তেষাং ফণিনাং গণৈঃ অধোঽধঃপ্রদেশে কথঞ্চিদ্ধৃতে ধারিতে ভুবস্তলে ভূপৃষ্ঠে অভিদেবকীসুতম্ অভিলক্ষীকৃত্যেত্যর্থঃ লক্ষণেনাভিপ্রতী আভিমুখ্যে ইত্যব্যয়ীভাবঃ। চরণৌ পাদৌ। পদঙ্ঘ্রিশ্চরণোঽস্ত্রিয়ামিত্যমরঃ। ন্যধায়িষাতাং নিহিতৌ। দধাতেঃ কর্ম্মণি লুঙ্। স্যসিচ্সীত্যাদিনা চিণ্বদিট্ যুক্। অত্র ফণানাং নমনোন্নমনাসম্বন্ধেঽপি মুনিগৌরবায় তৎসম্বন্ধাভিধানাদতিশয়োক্তিভেদঃ ॥১৩॥

**টিপ্পনী**—অথেতি। অত্যন্তপ্রাচীন টীকোক্তাতিশয়োক্তিঃ সংসূচ্যতে। ভাবাদয়ঃ পূর্ব্ববৎ ॥১৩॥

**বাঙ্গালা**—তদনন্তর, সর্পগণ যত্নপূর্বক ফণাগুলি উত্তোলন করিতেছিল ; তথাপি সে ফণাগুলি অবনত হইয়া যাইতেছিল ; এই অবস্থায় সেই সর্পগণ অতিকষ্টে নিম্নদেশে ধারণ করিলে, নারদ শ্রীকৃষ্ণের সম্মুখে আসিয়া ভূতলে চরণযুগল স্থাপন করিলেন ॥১৩॥

**অন্বয়ঃ**—আদিপূরুষঃ সঃ অর্ঘ্যাদিকয়া সপর্য্যয়া অর্ঘ্যং তং সাধু পর্য্যপূপুজৎ। মনীষিণঃ অপুণ্যকৃতাং গৃহান্ প্রণয়াৎ উপৈতুম্ অভীপ্সবঃ ন ভবন্তি ॥১৪॥

**টীকা**—তমিতি। আদিপূরুষঃ পুরাণপুরুষঃ। অন্যেষামপি দৃশ্যতে ইতি বা দীর্ঘঃ। স কৃষ্ণঃ অর্ঘং পূজামর্হতীতি অর্ঘ্যঃ। দণ্ডাদিভ্যো যঃ। তং নারদম্। অর্ঘার্থং দ্রব্যমর্ঘ্যম্। পাদার্ঘাভ্যাং চেতি যৎপ্রত্যয়ঃ। মূল্যে পূজাবিধাবর্ঘঃ ষট্সু ত্রিষ্বর্ঘ্যমর্ঘার্থমিতি চামরঃ। অর্ঘ্যমাদির্যস্যাস্তয়া অর্ঘ্যাদিকয়া। শেষাদ্বিভাষেতি বিকল্পেন কপ্প্রত্যয়ঃ। সপর্য্যয়া পূজয়া। পূজা নমস্যাপচিতিঃ সপর্য্যার্চ্চার্হণাঃ সমা ইত্যমরঃ। সাধু যথা তথা পর্য্যপূপুজৎ পরিপূজিতবান্। ণৌ চঙন্তং কর্ত্তব্যম্। যুক্তং চৈতদিত্যর্থান্তরং ন্যস্যতি গৃহানিতি। মনস ঈষিণো মনীষিণঃ সন্তঃ পৃষোদরাদিত্বাৎসাধুঃ। অপুণ্যকৃতাং পুণ্যমকৃতবতাম্। সুকর্ম্মপাপমন্ত্রপুণ্যেষু কৃঞ ইতি ভূতে ক্বিপ্। গৃহান্ প্রণয়াদুপৈতুমভীপ্সবঃ প্রাপ্তুমিচ্ছবঃ আপ্নোতেঃ সনন্তাদুপ্রত্যয়ঃ আপ্জ্ঞপ্যৃধামীদিতীকারঃ। ন ভবন্তি কিন্তু পুণ্যকৃতামেব। অতঃ কৃষ্ণলভ্যাঃ সন্তঃ পূজ্যা ইত্যর্থঃ ॥১৪॥

न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥१५॥
महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥१६॥

---

**टिप्पनी**—तमिति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, पूर्वार्द्धे छेकानुप्रासो वृत्त्यनुप्रासश्च, इत्येतेषां मिथो निरपेक्षतया संसृष्टिः । गृहानिति "गृहाः पुंसि च भूम्न्येव" इत्यमरप्रामाण्यात् बहुत्वं पुंस्त्वम् । माधुर्यं गुणः, वैदर्भी रीतिः ॥१४॥

**বাঙ্গালা**—আদিপুরুষ শ্রীকৃষ্ণ, অর্ঘ্যপ্রভৃতি পূজাদ্রব্যদ্বারা পূজনীয় নারদের সম্যক্ পূজা করিলেন। কারণ, সজ্জনেরা প্রণয়বশতঃ অপুণ্যকারীদিগের গৃহে যাইতে অভিলাষী হন না ॥১৪॥

**अन्वयः**—जनः तुषाराञ्जनपर्वतौ इव उत्थितौ एतौ यावत् न उदपश्यत् ; तावत् चिरन्तनो मुनिः स्वहस्तदत्ते आसने मुनिम् अभिन्यवीविशत् ॥१५॥

**टीका**—न यावदिति । उत्थितावेतौ मुनिकृष्णौ जनः तुषाराञ्जनयोः पर्वताविव यावन्नोदपश्यदित्युत्प्रेक्षा, तावच्चिरन्तनः पुराणो मुनिः कृष्णः । पुरा किल भगवान् बदरिकाश्रमे नारायणावतारेण तपसि स्थितवानिति पुराणात् । सायं चिरमित्यादिना ट्युः प्रत्ययः तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदम् अभिन्यवीविशत् स्वाभिमुख्येनो-पवेशितवान् । अभिनिपूर्वात् विशतेर्ण्यन्ताल्लुङि णिश्रीति चङ् ॥१५॥

**टिप्पनी**—नेति । अत्र तुषाराञ्जनपर्वतयोरप्रसिद्धत्वात् रुय्यकमते अभूतोपमा ; नवीनमते तु उत्प्रेक्षा ; प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

**বাঙ্গালা**—হিমের পর্বত ও কজ্জলের পর্বতের ন্যায় নারদ ও শ্রীকৃষ্ণকে দণ্ডায়মান অবস্থায় যে পর্য্যন্ত লোকে দেখিয়াছিল না ; তাহার মধ্যেই পুরাতন মুনি শ্রীকৃষ্ণ, স্বহস্ত-দত্ত আসনে নারদমুনিকে উপবেশন করাইলেন ॥১৫॥

**अन्वयः**—महामहानीलशिलारुचः कंसकृषः पुरः उच्चकैः विष्टरे निषेदिवान् सः अभिसायं श्रितो-दयाद्रेः चन्द्रमसः अभिरामताम् अचूचुरत् ॥१६॥

**टीका**—महामहेति । महत्या महानीलशिलायाः सिंहलद्वीपसम्भवेन्द्रनीलोपलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृता इति भग-वानगस्त्यः । कंसकृषो हरेः पुरोऽग्रे उच्चकैरुन्नते विष्टरे आसने । वृक्षासनयोर्विष्टर इति षत्वम् । निषेदिवानुपविष्टवान् । भाषायां सदवसश्रुव इति क्वसुः । स मुनिरभि-सायं सायङ्कालाभिमुखम् । अव्ययीभावसमासः सायङ्कालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभाम् अचूचुरत् चोरितवान् आत्मसात्कृतवानित्यर्थः । चुरस्तेये णिश्रीति चङ् । अन्यस्यान्यधर्मसम्बन्धासम्भवात् चन्द्रमसो-

विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः।
ग्रहीतुमार्य्यान् परिचर्य्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥१७॥
अशेषतीर्थोपहृताः कमण्डलोर्निधाय पाणावृषिणाभ्युदीरिताः।
अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥१८॥

---

ऽभिरामतामिवाभिरामतामित्यौपम्यपर्य्यवसानादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः स चोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥१६॥

टिप्पनी—महेति। छेकानुप्रासो वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः। तथा कंसजय इति पदं जयार्थे अवाचकमित्यवाचकत्वदोषः; 'कंसरिपोः' इति पाठे तु तत्समाधानम्। मधुरवर्णनावशात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥१६॥

বাঙ্গালা—নারদ, বৃহৎ মহানীলমণির ন্যায় কান্তিশালী শ্রীকৃষ্ণের সম্মুখে উচ্চ আসনে উপবেশন করিয়া, সায়ংকালে উদয়াচলসন্নিহিত চন্দ্রের শোভা অপহরণ করিলেন ॥১৬॥

अन्वयः—यज्वनां प्रियः प्रसेदुषः तस्य अपचितिं विधाय प्रकामम् अप्रीयत। हि महानुभावाः परिचर्य्यया आर्य्यान् मुहुः ग्रहीतुं नितान्तम् अर्थिनः (भवन्ति) ॥१७॥

टीका—विधायेति। यज्वानो विधिनेष्टवन्तः। यज्वा तु विधिनेष्टवानित्यमरः। सुयजोरिति यजिधातोः क्वनिप्। तेषां प्रियो हरिः प्रसेदुषः प्रसन्नस्य। सदेः क्वसुरित्यु- न्नम्। तस्य मुनेरपचितिं पूजाम्। पूजा नमस्यापचितिरित्यमरः। विधाय विधिविध्य मनोवाक्कायकर्म्मभिस्तत्परतया कृत्वा प्रकाममत्यर्थमप्रीयत प्रीतो बभूव। प्रीयतेर्द्दैवादिकात् कर्त्तरि लुङ्। मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति। महानुभावा महात्मानः आर्य्यान् पूज्यान् परिचर्य्यया मुहुर्ग्रहीतुं वशीकर्त्तुम्। ग्रहोऽलिटि दीर्घ इतीटो दीर्घः। नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति। अर्थोऽभिलाषः स एषामस्तीति मत्वर्थ इनिः न तु णिनिः सम्प्रवृत्तेरुपहितप्रवृत्तिर्बलीयसीति भाष्यात् ॥१७॥

टिप्पनी—विधायेति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—যাজ্ঞিকদিগের প্রিয় শ্রীকৃষ্ণ, প্রসন্নচিত্ত নারদের পূজা করিয়া, অত্যন্ত প্রীতি লাভ করিলেন। কারণ, মহাত্মারা পরিচর্য্যা দ্বারা পূজনীয় লোকদিগকে একান্ত বশীভূত করিবার জন্য বিশেষ অভিলাষী হইয়া থাকেন ॥১৭॥

अन्वयः—हरिः नतेन मूर्ध्ना अशेषतीर्थोपहृताः कमण्डलोः पाणौ निधाय ऋषिणा अभ्युदीरिताः अघौघविध्वंसविधौ पटीयसीः अपः अग्रहीत् ॥१८॥

टीका—अशेषेति। अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा कमण्डलोरुदकपात्रा- दुद्धृत्येत्यर्थः पाणौ निधाय ऋषिणाभ्युदीरिता आक्षिप्ताः अत एवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थास्ताः। पटुशब्दात् ईयसुनि उगितश्चेति ङीप्। अपो जलानि हरिर्नतेन मूर्ध्ना अग्रहीत् स्वीकृतवान्। ग्रहेर्लुङ् ॥१८॥

स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत।
जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् ॥१९॥
स तप्तकार्त्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः।
विदिद्युते वाड़वजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥२०॥

---

टीप्पनी—अशेषे ति। अत्र अघौघविध्वंसविधिं प्रति अशेषतीर्थोपहृतपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, परार्द्धे छेकानुप्रासश्चेत्युभयोः संसृष्टिः। ओजोगुणः, पाञ्चाली रीतिः ॥१८॥

বাঙ্গালা—মহর্ষি নারদ, সমস্ত তীর্থ হইতে আনীত বলিয়া পাপসমূহ নাশ করিতে সমর্থ জল, কমণ্ডলু হইতে হস্তে সংস্থাপন করিয়া নিক্ষেপ করিলেন; শ্রীকৃষ্ণও তাহা অবনত মস্তকে গ্রহণ করিলেন ॥১৮॥

अन्वयः—नवाम्बुदश्यामवपुः सः मुनेः अनुज्ञया काञ्चने यत्र न्यविक्षत; तत् आसनं तदा जम्बूजनितश्रियः सुमेरुशृङ्गस्य श्रियं जिगाय ॥१९॥

टीका—स काञ्चन इति। नवाम्बुदश्यामवपुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे वैकारिकोऽण् प्रत्ययः। यत्रासने न्यविक्षत उपविष्टवान्। निपूर्वविशो लुङि नेर्विंश इत्यात्मनेपदं शल इगुपधादनिटः क्सः। तदासनं तदा हर्य्युपवेशनसमये जम्बूर्नीलफलविशेषः। जम्बूः सुरभिपत्रा च राजजम्बूर्महाफलेत्यभिधानरत्नमालायाम्। तया जनिता श्रीर्यस्य तत्तथोक्तस्य। भाषितपुंस्कत्वात् पक्षे पुंवद्भावानुभावः। सुमेरुशृङ्गस्य श्रियञ्जिगायाभिभावितवान्, इत्यर्थः। सन्लिटोर्जेरिति कुत्वम्। उपमानानुप्रासयोः संसृष्टिः ॥१९॥

टीप्पनी—स इति। अत्र मधुररचनावशात् माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१९॥

বাঙ্গালা—নূতন মেঘের ন্যায় শ্যামলদেহ শ্রীকৃষ্ণ, নারদের অনুমতি অনুসারে যে স্বর্ণাসনে উপবেশন করিলেন; সেই আসন খানি তখন জম্বূফলশোভিত সুমেরুশৃঙ্গের শোভাকে জয় করিল ॥১৯॥

अन्वयः—तप्तकार्त्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः सः वाड़वजातवेदसः शिखाभिः आश्लिष्टः अम्भसां निधिः इव विदिद्युते ॥२०॥

टीका—स तप्ते ति। तप्तं पुटपाकशोधितं कार्त्तस्वरं सुवर्णम्। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामित्यमरः। तद्वद्भास्वरं दीप्यमानमम्बरं यस्य स पीताम्बर इत्यर्थः। कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य स इत्युपमानपूर्वपदो बहुव्रीहिः उत्तरपदलोपश्च। स हरिर्वाड़वजातवेदसो वाड़वाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टो व्याप्तोऽम्भसां निधिरिव समुद्र इव विदिद्युते बभौ ॥२०॥

रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्त्तेरिव नक्तमंशवः ॥२१॥
प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी तदैकवर्णाविव तौ बभूवतुः ॥२२॥

---

टीप्पनी—स इति । अत्र पूर्वार्द्धे लुप्तोपमाद्वयं, छेकानुप्रासो वृत्त्यनुप्रासश्च, परार्द्धे च श्रौतोपमा, इत्यत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । पूर्ववत् गुणो रीतिश्च ॥२०॥

বাঙ্গালা—তপ্ত কাঞ্চনের ন্যায় উজ্জ্বল পীতবর্ণ একখানি বস্ত্র শ্রীকৃষ্ণের পরিধানে ছিল এবং পূর্ণচন্দ্রের কলঙ্কের ন্যায় তাঁহার কান্তি কৃষ্ণবর্ণ ছিল । সুতরাং বাড়বানলের শিখা দ্বারা আলিঙ্গিত সমুদ্রের ন্যায় তিনি দীপ্ত পাইতেছিলেন ।২০।

अन्वयः—रथाङ्गपाणेः रोचिषां पटलेन संवलिताः ऋषित्विषः नक्तं तरोः चलत्पलाशान्तरगोचराः तुषारमूर्त्तेः अंशवः इव विरेजिरे ॥२१॥

टीका—रथाङ्गपाणेरिति । रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति पाणेः परनिपातः । रोचिषां छवीनां पटलेन समूहेन संवलिता मिलिता ऋषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम । तरोश्चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते तुषारा मूर्त्तिर्यस्य तस्येन्दोरंशव इव विरेजिरे चकाशिरे ॥१॥

टीप्पनी—रथाङ्गेति । अत्र श्रौतोपमालङ्कारः वृत्त्यनुप्रासश्छेकानुप्रासश्च इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२१॥

বাঙ্গালা—নারদের কিরণসমূহ, শ্রীকৃষ্ণের কিরণসমূহের সহিত সম্মিলিত হইয়া, রাত্রিতে বৃক্ষের চঞ্চল পত্রের ভিতরে পতিত চন্দ্রের কিরণসমূহের ন্যায় শোভা পাইতে লাগিল ।২১।

अन्वयः—शुभैः प्रफुल्लतापिच्छनिभैः सप्तच्छदपांशुपाण्डुभिश्च अभीषुभिः परस्परेण छुरितामलच्छवी तौ तदा एकवर्णौ इव बभूवतुः ॥२२॥

टीका—प्रफुल्लेति । प्रफुल्लतीति प्रफुल्लं विकसितम् । फुल्लविकसने इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायाम् अनुपसर्गात् फुल्लक्षीवकृशोल्लाघा इति निपातनात् प्रफुल्लमित्येवेति क्षीरस्वामी । तापिच्छस्य तमालस्य पुष्पं तापिच्छम् । फले लुगिति तद्धितलुक् । द्विहीनं प्रसवे सर्वमिति नपुंसकत्वम् । कालस्कन्धस्तमालः स्यात्तापिच्छोऽपीत्यमरः । तेन सदृशैः प्रफुल्लतापिच्छनिभैः । नित्यसमासत्वादस्वपदविग्रहः । अत एव सुवन्तपदे त्वमीति । निभसङ्काशनीकाशप्रतीकाशोपमादय इत्यमरः । सप्त सप्तच्छदाः पर्णानि पर्वसु यस्येति सप्तच्छदो वृक्षभेदः । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इत्यमरः । स्वाभ्यस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये । शेषन्तापिच्छवत् ।

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः॥२३॥
निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी।
विलोचने बिभ्रदधिश्रितश्रियी स पुण्डरीकाक्ष इति स्फुटोऽभवत्॥२४॥

---

तस्य पुष्पाणि सप्तच्छदानि तेषां पांशुवत् पांशुभिः शुभ्रैरभीषुभिः अन्योन्यरश्मिभिः। अभीषुः प्रग्रहे रश्माविति शाश्वतः। परस्परेण छुरिते कर्पिते अमले छवी अन्योन्यकान्ती ययोस्तौ। छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः। तौ हरिनारदौ तदा एकवर्णाविव बभूवतुः उभयप्रभामेलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणिप्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव। तन्निमित्ता चेयम् अनयोरेकवर्णत्वोत्प्रेक्षा॥२२॥

टीप्पनी—प्रफुल्लेति। अत्र प्रथमार्द्धे लुप्तोपमाद्वयं वृत्त्यनुप्रासश्च मल्लिनाथोक्तया उत्प्रेक्षया संसृज्यते। पूर्ववत् गुणरीती॥२२॥

বাঙ্গালা—প্রস্ফুটিত তমালপুষ্পের ন্যায় কৃষ্ণবর্ণ এবং সপ্তপর্ণপুষ্পের রেণুর ন্যায় শুভ্রবর্ণ মাঙ্গলিক কিরণসমূহে শ্রীকৃষ্ণ ও নারদের কান্তি পরস্পর রঞ্জিত হইয়াছিল, তাহাতে তখন তাঁহারা দুই জনেই যেন একবর্ণ হইয়া গিয়াছিলেন॥২২॥

अन्वयः—जगन्ति युगान्तकालप्रतिसंहृतात्मनः कैटभद्विषः यस्यां तनौ सविकाशम् आसत तत्र तपोधनाभ्यागमसम्भवाः मुदः न ममुः॥२३॥

टीका—युगान्तेति। युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृता आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यान्तनौ जगन्ति सविकाशं सविस्तरमासत अतिष्ठन्। आस उपवेशने लङ्। तत्र तनौ देहे तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः। पचाद्यच्। मुदः सन्तोषाः न ममुः अतिरिच्यन्त इत्यर्थः। इत्थं त्रिभुवनभरणपर्य्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिः सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा॥२३॥

टीप्पनी—युगान्तेति। अत्र साहित्यदर्पणमते आश्रिताधिक्ये अधिकालङ्कार उक्त इति मल्लिनाथोक्तातिशयोक्त्यादौ संकीर्य्यते। प्रसादो गुणः, वैदर्भी च रीतिः। प्रथमार्द्धप्रमाणं यथा-शारीरकभाष्यधृता श्रुतिः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद्ब्रह्म तद्विजिज्ञासस्व।"॥२३॥

বাঙ্গালা—প্রলয়কালে সমস্ত জীবগণকে আনিয়া আপনাতে সন্নিবিষ্ট করিলে, শ্রীকৃষ্ণের যে দেহে সমস্ত জগৎ বিস্তৃত ভাবে অবস্থান করিত; শ্রীকৃষ্ণের সেই দেহেতেই নারদের আগমননিবন্ধন আনন্দ ধরিয়াছিল না॥২৩॥

अन्वयः—निदाघधामानम् इव अधिदीधितिं मुनिम् अभि मुदा विकासम् उपेयुषी अधिश्रितश्रियी विलोचने बिभ्रत् सः पुण्डरीकाक्ष इति स्फुटः अभवत्॥२४॥

---

सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाऽथ लम्भयन्।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ॥२५॥

---

**टीका**—निदाघेति। निदाघमुष्णं धाम किरणो यस्य तथोक्तम्। निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपीति विश्वः। अर्कमिवाधिदीधितिम् अधिकतेजसं मुनिमभिलक्ष्य। अभिरभागे इति लक्षणे कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्ते द्वितीया। मुदा विकाशमुपेयुषी उपगते। क्वसुप्रत्ययान्तो निपातः। अत एवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते। इकोऽचि विभक्ताविति नुमागमः। विलोचने बिभ्रत्। नाभ्यस्ताच्छतुरिति नुमभावः। स हरिः पुण्डरीकाक्षः इत्येवं स्फुटोऽभवत् दृश्यसन्निधाने श्रीविकाशभावाद्दृशां पुण्डरीकसाधर्म्यात्। पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तमन्वर्थसंज्ञोऽभूदित्यर्थः। बिभ्रत् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥२४॥

**टिप्पनी**—निदाघेति। अत्र प्रथमार्द्धे वृत्त्यनुप्रासः, तृतीयचरणे च छेकानुप्रास इति मल्लिनाथोक्तसङ्करेण सह पुनः संसृष्टिः। तथा प्रथमचरणत्रये अनुप्रासानन्तरं शेषचरणे अनुप्रासाभावात् पतत्प्रकर्षता दोषः, स च "स पुण्डरीकाक्ष इति प्रभुर्वोऽभवत्" इति पाठेन समाधेयः। एतत्पाठे तु पकारद्वयस्य सकृत् साम्यात् छेकानुप्रासः स्यात्। ओजोगुणः, पाञ्चाली च रीतिः ॥२४॥

**বাঙ্গালা**—সূর্য্যের ন্যায় অত্যন্ত তেজস্বী মহর্ষি নারদের সম্মুখে, আনন্দবশত বিকাশপ্রাপ্ত এবং শোভাসমন্বিত নয়নযুগল ধারণ করতঃ শ্রীকৃষ্ণ, স্পষ্টতই 'পুণ্ডরীকাক্ষ' হইয়াছিলেন ॥২৪॥

**अन्वयः**—अथ अच्युतः विसारिभिः द्विजावलिव्याजनिशाकरांशुभिः सितं मुनेः वपुः सौधम् इव सितिम्ना लम्भयन् शुचिस्मितां वाचम् अवोचत् ॥२५॥

**टीका**—सितमिति। अथोभयोरुपवेशनानन्तरम् अच्युतो हेतुकर्त्ता विसारिभिरभीक्ष्णं प्रसरद्भिः। बहुलमाभीक्ष्ण्ये इति णिनिः। द्विजावलिर्दन्तपङ्क्तिः। दन्तविप्राण्डजा द्विजा इत्यमरः। सैव व्याजः कपटं यस्य स तद्रूप इत्यर्थः स चासौ निशाकरस्य तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तम्। अव्ययादाम्-प्रत्ययः। सितिम्ना धावल्येन प्रयोज्यकर्त्रा लम्भयन् व्यापारयन् अतिधवलयन्नित्यर्थः। लभेरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् गतिबुद्धीत्यादिना अणिकर्त्तुर्न कर्मत्वम्। तथाह वामनः, लभेर्गत्यर्थत्वात् णिचाणौ कर्त्तुः कर्मत्वाकर्मत्वे इति प्राप्त्युपसर्जनगत्यर्थत्वे तु न कर्मत्वमेवेति रहस्यम्। लभेश्चेति नुमागमः। शुचिस्मितां वाचमवोचत् उक्तवान्। ब्रुवो वचादेशः लुङि वचि उम् इत्युमागमे गुणः। अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरैरिति छलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथो निरपेक्षत्वात् संसृष्टिः ॥२५॥

हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥२६॥
जगत्यपर्य्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभिरसङ्ख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥२७॥

---

टीप्पनी—स्मितमिति। अत्र प्रथमपादे वृत्त्यनुप्रासस्तथा सं[illegible]। माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२५॥

বাঙ্গালা—শ্রীকৃষ্ণের মুখের ভিতরে দন্তসমূহচ্ছলে চন্দ্র অবস্থান করিতেছিলেন; তাঁহার বিস্তৃত কিরণজালে নারদের স্বভাবশুভ্র দেহটীকে অট্টালিকার ন্যায় আরও শুভ্র করিয়া, শ্রীকৃষ্ণ নির্ম্মল ঈষদ্-হাস্যপূর্ব্বক পরবর্ত্তী কথাগুলি বলিতে লাগিলেন ॥২৫॥

अन्वयः—सम्प्रति अघं हरति, एष्यतः शुभस्य हेतुः, पूर्वाचरितैः शुभैः कृतम्। (अतएव) भवदीयदर्शनं कालत्रितये अपि शरीरभाजां योग्यतां व्यनक्ति ॥२६॥

टीका—हरतीति। भवदीयदर्शनं शरीरभाजां द्रष्टॄणाम् इत्यर्थः। भजो ण्विः। कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति गमयति। कुतः सम्प्रति दर्शनकाले अघं पापं हरति एष्यतो भाविनः शुभस्य श्रेयसो हेतुः तथा पूर्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतम् एवं त्रैकाल्येऽपि कार्य्यत्वेन च पुंसि सुकृतसमवायमवगमयते। अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः। अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यार्थं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥२६॥

टीप्पनी—हरतीति। मुनिविषयकरतिभावः स्थायी, प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—আপনাদের দর্শন বর্ত্তমান সময়ে পাপ নাশ করে, ভাবী মঙ্গলের কারণ হয় এবং পূর্ব্বকৃত পুণ্যের ফলরূপে উপস্থিত হয়। সুতরাং আপনাদের দর্শন, ভূত, ভবিষ্যৎ ও বর্ত্তমান এই তিন কালেই শরীরীদিগের পবিত্রতা সূচনা করে ॥২৬॥

अन्वयः—जगति अपर्य्याप्तसहस्रभानुना भानुना यत् नियन्तुं न समभावि; त्वया असंख्यतां गतैः तेजोभिः अदः अनुत्तमं तमः प्रसह्य नुन्नम् ॥२७॥

टीका—जगतीति। जगत्यपर्य्याप्ता अपरिच्छिन्नाः सहस्रं भानवः अंशवो यस्य तेन भानुना अर्केण भानवोऽर्कत्विषांशव इति वैजयन्ती। यत्तमो नियन्तुं निवारयितुं न समभावि न शेके। भावे लुङ्। अविद्यमानमुत्तमं यस्मात् तदनुत्तमं सर्वाधिकम् अदस्तमो मोहात्मकम् असङ्ख्यतां गतैस्तेजोभिः प्रसह्य बलात् त्वया नुन्नं छिन्नम् अतः श्लाघ्यदर्शनो भवानिति भावः। नुदविदेत्यादिना विकल्पान्निष्ठानत्वभावः। अत्रोपमानाद्भानोरुपमेयस्याधिक्य-प्रतिपादनात् व्यतिरेकालङ्कारः ॥२७॥

अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रबन्दीश्वसितानिलैर्यथा ।
सचन्दनाम्भःकणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ ॥६५॥
तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनकॢप्तिं दधतः सदर्त्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥६६॥

---

বাঙ্গালা—রাবণের হস্তিসমূহ দিগ্‌হস্তীদিগকে পরাজিত করিয়া দিয়াছিল ; তাহাতে দিগ্‌হস্তীদিগের গণ্ডস্থল হইতে মদজল লুপ্ত হইয়াছিল এবং তাহারা পলাইয়া গিয়া নানা দিক্ আশ্রয় করিয়াছিল, কিন্তু আর ফিরিয়া আসে নাই। সুতরাং সেই দিগ্‌হস্তীরা চির-কালের জন্য আপন নামের সার্থকতা লাভ করিয়াছিল ॥৬৪॥

अन्वयः—सोष्मणः तस्य वपुः अभीक्ष्णम् उष्णैः अपि सुरेन्द्रबन्दिश्वसितानिलैः यथा निर्ववौ, तथा सचन्दनाम्भःकणकोमलैः जलार्द्रापवनैः न निर्ववौ ॥६५॥

टीका—अभीक्ष्णमिति । उष्मणा सन्ज्वरेण सहितः सोष्मा तस्य सोष्मणस्तस्य रावणस्य वपुरभीक्ष्णं भृशमुष्णैरपि शोकादिति भावः, सुरेन्द्रस्य बन्द्यः बन्दीकृताः स्त्रियः तासां श्वसितानिलैः निःश्वासमारुतैर्यथा निर्ववौ निर्वृतम् । निर्वाणं निर्वृतौ मोक्षे इति वैजयन्ती । तथा सचन्दनाम्भःकणाः चन्दनोदकबिन्दुसहिताः ते च ते कोमला मृदुलाश्च तैर्जलार्द्राणां जलोचिततालवृन्तानां पवनैर्न निर्ववौ । धुवित्रं तालवृन्तं स्यादुत्क्षेपो व्यजनं च तत् । जलेनार्द्रं जलार्द्रा स्यादिति वैजयन्ती । अत्र सन्तप्तस्योष्णोपचारान्निर्वृति-रिति कारणविरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कारः ॥६५॥

टिप्पनी—अभीक्ष्णमिति । अत्र माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥६५॥

বাঙ্গালা—কামসন্তাপে সন্তপ্ত রাবণের শরীর, দেবগণের বন্দীকৃত স্ত্রীলোকদিগের অত্যন্ত উষ্ণ নিশ্বাসবায়ুতেও যেরূপ শীতল হইত ; চন্দনজলকণায় পরিপূর্ণ ও কোমল জলার্দ্র তালবৃন্তের বায়ুতে সেরূপ শীতল হইত না ॥৬৫॥

अन्वयः—सदा प्रसूनकॢप्तिं दधतः ऋतवः वर्षाः तपेन हिमागमः शरदा शिशिरश्च वसन्तलक्ष्म्या समेत्य अस्य पुरे वास्तव्यकुटुम्बितां ययुः ॥६६॥

टीका—तपेनेति । सदा नित्यं न तु यथाकालं प्रसूनकॢप्तिं कुसुमसम्पत्तिम् । प्रसूनं कुसुमं सुमनमित्यमरः । दधतो धारयन्तः ऋतवो वर्षाः प्रावृट् तपेन ग्रीष्मेण । उष्म उष्मागमस्तप इति, स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियामिति चामरः । तथा हिमागमो हेमन्तः शरदा तथा शिशिरो वसन्तलक्ष्म्या च समेत्य मिथुनीभावेन मिलित्वा अस्य रावणस्य पुरे वसन्तीति वास्तव्याः वस्तारः । वसेस्तव्यत्कर्त्तरि णिच्चेति तव्यत्प्रत्ययः । ते च कुटुम्बिनश्च तेषां भावं तत्तां प्रतिवासित्वमित्यर्थः । ययुः समेत्य ययुरिति समुदायाय-

अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानिनः ॥६७॥

---

सुदायिनोरभेदविवक्षया समानकर्तृत्वम् । अत्र पुरे युगपत् सर्वर्त्तुसम्बन्धाभिधानाद्-असम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥६६॥

**टिप्पनी**—तपेनेति । अत्र लिङ्गसाम्येन कार्य्यसाम्येन च वर्षातपादिषु प्रतिवेशिस्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिरलङ्कारोऽपीति मल्लिनाथोक्तातिशयोक्त्या सह संसृष्टिः । तथा तपेनेति पुंलिङ्गतृतीयान्तपदेन उपक्रम्य शरदा वसन्तलक्ष्म्या इति स्त्रीलिङ्गतृतीयान्तपदाभिधानात् भग्नप्रक्रमतादोषः ; किञ्च वसन्तलक्ष्म्या इति पदांशगतो दुःश्रवत्वदोषश्च । अनयोः परिहाराय पूर्वार्द्धमेवं पठनीयम्—

ततः सवर्षैः सशरद्धिमागमैः तथैव शीतैः सवसन्तकान्तिभिः ।

प्रसादो गुणः, वैदर्भी च रीतिः ॥६६॥

**বাঙ্গালা**—গ্রীষ্মকালের সহিত বর্ষাকাল, শরৎকালের সহিত হেমন্তকাল এবং বসন্তকালের সহিত শীতকাল সম্মিলিত হইয়া, সর্বদাই কুসুমসম্পদ ধারণ করিয়া, রাবণের রাজধানীতে প্রতিবাসিত্ব প্রাপ্ত হইয়াছিল ॥৬৬॥

**अन्वयः**—अमानवम् अजं मनोः कुले जातं प्रभाविनम् (भवन्तम्) आत्मनः अन्तं भाविनं जानन् अपि यः जानकीं न मुमोच । हि मानिनः सदा अभिमानैकधनाः ॥६७॥

**टीका**—स चायमासन्नविनाशस्त्वय्येव हत इति युग्मेनाह । अमानवमिति । मनोरयं मानवः । तस्येदमित्यण्प्रत्यये पर्य्यवसानाज्जातावेकवचनम् अन्यथा मनोर्जातमित्येव स्यात् । अमानवममानुषं न जायत इत्यन्येष्वपि दृश्यत इति डप्रत्ययः । तथापि मनोः कुले जातं रामस्वरूपेणोत्पन्नमिति विरोधः । स चाभासत्वादलङ्कार इत्याह । प्रभाविनमिति महानुभावे तस्मिन् न कश्चिद्विरोध इति भावः । आभीक्ष्ण्ये णिनिरिति णिनिर्वा मत्वर्थीयः । भवन्तमिति शेषः । आत्मनः स्वस्यान्तं करोतीति अन्तम् । अन्तशब्दात्तत्करोतीति ण्यन्तात् पचाद्यच् । भाविनं भविष्यन्तम् । भविष्यति गम्यादयः । जानन्नपि यो रावणः जनकस्यापत्यं स्त्री जानकी सीता तां न मुमोच नामुञ्चदित्यन्वयः । जानतोऽपि अमोचने कारणमाह । मानिनः सदा प्राणात्ययेऽपि अभिमान एवैकं मुख्यं धनं येषां ते प्राणात्ययेऽपि न मानं मुञ्चन्तीत्यर्थः । कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥६७॥

**टिप्पनी**—अमानवमिति । अत्र प्रभाविनं भाविनमिति यमकम्, अन्यत्र तु छेकानुप्रास इति मल्लिनाथोक्तविरोधाभासार्थान्तरन्याभ्यां संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६७॥

**বাঙ্গালা**—মানব ও জন্মবান্ না হইয়াও মনুর বংশে জাত এবং অত্যন্তপ্রভাবশালী আপনি, নিজের বিনাশক হইবেন ইহা জানিয়াও যে রাবণ সীতাকে পরিত্যাগ করিয়াছিল না। কারণ, সর্বদা একমাত্র অভিমানই মানী ব্যক্তিদের ধন হইয়া থাকে ॥৬৭॥

स्मरत्यदो दाशरथिर्भवन् भवानमुं वनान्ताद्वनितापहारिणम् ।
पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ॥६८॥
अथोपपत्तिं छलनापरोऽपरामवाप्य शैलूष इवैष भूमिकाम् ।
तिरोहितात्मा शिशुपालसंज्ञया प्रतीयते सम्प्रति सोऽप्यसः परैः ॥६९॥

---

अन्वयः—भवान् दाशरथिः भवन् वनान्तात् वनितापहारिणम् अमुम् आबद्धचलज्जलाविलं पयोधिं विलङ्घ्य लङ्कां निकषा हनिष्यति अदः स्मरति ? ॥६८॥

टीका—स्मरतीति । भातीति भवान् । भातेर्डवतुः । दशरथस्यापत्यं पुमान् दाशरथिः । अत इञिती ञ् प्रत्ययः । भवन् रामः सन्नित्यर्थः । भवतेर्लटः शत्रादेशः, वनान्ताद्दण्डकारण्यात् वनितापहारिणं सीतापहर्त्तारम् अमुं रावणम् । आबद्धः प्रक्षिप्ताद्रिभिर्बद्धसेतुः अत एव चलन्ति जलानि यस्य स च अत एव आविलश्च तम् आबद्धचलज्जलाविलं पयोधिं विलङ्घ्य लङ्कां निकषा लङ्कासमीपे । समयानिकषाशब्दौ सामीप्ये त्वव्ययौ मताविति हलायुधः । अभितः परितः समया निकषाहाप्रतियोगेष्वपीति द्वितीया । हनिष्यति अवधीत् अभिज्ञावचने लृट् इति भूते लृट् । अदो हननं भवान् स्मरतीति काकुः प्रत्यभिजानासि किमित्यर्थः । शेषे प्रथमः ॥६८॥

टिप्पनी—स्मरतीति । अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः । उद्धतघटनाव्यञ्जकत्वात् ओजो गुणः, गौड़ी च रीतिः ॥६८॥

বাঙ্গালা—আপনি দশরথের পুত্র রাম হইয়া, সমুদ্রে সেতু বন্ধন করায় তাহার জল আবিল হইয়া চলিতেছিল এহেন সমুদ্র লঙ্ঘন করিয়া, লঙ্কাপুরীর নিকটে, বনমধ্য হইতে বনিতাপহারী এই রাবণকে বধ করিয়াছিলেন ; ইহা স্মরণ করিতেছেন কি ? ।৬৮।

अन्वयः—अथ सम्प्रति छलनापरः एषः शैलूषः अपरां भूमिकाम् इव अपराम् उपपत्तिम् अवाप्य शिशुपालसंज्ञया तिरोहितात्मा (सन्) सोऽपि परैः असः प्रतीयते ॥६९॥

टीका—अथेति । अथ राघवदेहत्यागानन्तरं सम्प्रति छलनापरः परवञ्चनापरः एष रावणः शैलूषो नटः तस्य भूमिकां रूपान्तरमिव । शैलूषो नटबिल्वयोः भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे इति विश्वः । अपरामुपपत्तिं जन्मान्तरमित्यर्थः । अवाप्य शिशुपालसंज्ञया तिरोहितात्मा तिरोहितस्वरूपः सन् सोऽपि रावण एव सन्नपि परैरितरैः स न भवतीत्यसः तस्मादन्य एव । नञिति नञ्समासः, अत एव एतत्तदोः सुलोप इत्यादिना न सुलोपः, प्रतीयते ज्ञायत इति प्रतिपूर्वादिणः कर्मणि लट् । यथैक एव शैलूषः रूपान्तरमास्थाय तद्वेशभाषादिभिरन्य एव प्रतीयते, तद्वदयमपि मानुषदेहपरिग्रहादन्य इव भाति दौर्जन्यन्तु तदेवेत्यवश्यं संहार्य्य इति भावः ॥६९॥

टिप्पनी—अथेति । अत्र श्रौतोपमालङ्कारः छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः । प्रसादो गुणः वैदर्भी च रीतिः ॥६९॥

स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ॥৭০॥
स्वयं विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया ।
दशाननादीनभिराद्धदेवता-वितीर्णवीर्यातिशयान् हसत्यसौ ॥৭১॥

---

বাঙ্গালা—তাহার পর, নট যেমন একটি রূপ পরিত্যাগ করিয়া অপর রূপ ধারণ করে; পরপ্রতারণাপরায়ণ এই রাবণও তেমন পূর্ব্বরূপ পরিত্যাগপূর্ব্বক অপর রূপ ধারণ করিয়া, এখন শিশুপালনামে স্বরূপ গোপন রাখিতেছে এবং সেই হইলেও লোকে তাহাকে তদ্ভিন্ন বলিয়াই মনে করিতেছে ॥৬৯॥

**अन्वयः**—सः बालः (सन्) वपुषा चतुर्भुजः आसीत्, मुखेन पूर्णेन्दुनिभः त्रिलोचनः आसीत्, सम्प्रति युवा (सन्) कराक्रान्तमहीभृत् उच्चकैः तेजसा रविः असंशयम् ॥৭০॥

**टीका**—अथैतद्दौर्जन्यं त्रिभिराविष्करोति । स बाल इति । स शिशुपालो बालः सन् वपुषा चतुर्भुजो भुजचतुष्टयवानासीत् । विष्णुरिति ध्वनिः । मुखेन पूर्णेन्दुनिभस्तत्तुल्यः त्रिलोचनो लोचनत्रयवानासीत् । त्र्यम्बक इति ध्वनिः । बालविशेषणात् सम्प्रति तत् सर्वमन्तर्हितमिति भावः । सम्प्रति तु युवा सन् करेण बलिना आक्रान्तमहीभृदधिष्ठितराजकः सन् अन्यत्रांशुव्याप्तशैलः । बलिहस्तांशवः करा इत्यमरः । उच्चकैस्तेजसा रविरसंशयं संशयो नास्तीत्यर्थः । अर्थाभावेऽव्ययीभावः । वपुषा मुखेन चेति, येनाङ्गविकार इति तृतीया । हानिवदाधिक्यस्यापि विकारत्वात् । तथा च वामनः, हानिवदाधिक्यमप्यङ्गविकार इति, तेजसेति प्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीया । कराक्रान्तेत्यादिना श्लेषानुप्राणितेयमुत्प्रेक्षा रविरसंशयमिति तस्य पूर्णेन्दुनिभ इत्युपमया संसृष्टिः । हरिहरादितुल्यमहिमत्वादतिदुर्द्धर्षः स इति भावः ॥৭০॥

**टिप्पनी**—स इति । अत्र गुणरीती पूर्ववत् ॥৭০॥

বাঙ্গালা—বাল্যকালে শিশুপালের শরীরে চারি খানি হাত ছিল এবং পূর্ণচন্দ্রের ন্যায় মুখ ও তিনটী চোখ ছিল। কিন্তু বর্ত্তমান সময়ে সে যুবক হইয়া, সকল রাজাদের নিকট হইতে কর আদায় করিতেছে এবং গুরুতর তেজে সূর্য্যই বটে, এ বিষয়ে কোন সন্দেহ নাই ॥৭০॥

**अन्वयः**—यदृच्छया स्वयं सुरदैत्यरक्षसाम् अनुग्रहावग्रहयोः विधाता असौ अभिराद्धदेवतावितीर्णवीर्यातिशयान् दशाननादीन् हसति ॥৭১॥

**टीका**—स्वयमिति । यदृच्छया स्वेच्छया स्वयं सामर्थ्येन न तु देवताप्रसादबलादिति भावः । सुरदैत्यरक्षसां देवतादानवयातुधानानाम् अनुग्रहावग्रहयोः प्रसादनिग्रहयोर्विधाता कर्त्ता असौ शिशुपालः अभिराद्धाभिराराधिताभिर्देवताभिरीश्वरादिभिर्वितीर्णा दत्ता-

बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥ ७२॥
तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो निपातनीया हि सतामसाधवः ॥७३॥

---

वीर्य्यातिशयः प्रभावातिशयौ येषां तान् दशाननादीन् हसति । अनन्यप्रसादलब्धैश्वर्य्ये मयि कथं याचकैस्तुल्यतेति गर्वात् हसतीत्यर्थः ॥७१॥

टिप्पनी—स्वयमिति । अत्र हासं प्रति अभिराद्धदेवतेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तेन च दशाननाद्यपेक्षया शिशुपालस्याधिक्यप्रतीतेर्व्यतिरेकालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः । ओजो गुणः, गौड़ी च रीतिः ॥७१॥

বাঙ্গালা—শিশুপাল নিজের ইচ্ছানুসারে নিজেই দেব, দানব ও রাক্ষসগণের প্রতি অনুগ্রহ ও নিগ্রহ করিয়া থাকে এবং আরাধিত দেবতারাই গুরুতর শক্তি দিয়াছিলেন বলিয়া রাবণপ্রভৃতিকে উপহাস করে ॥৭১॥

अन्वयः—जिगीषुणा तेन अधुना अपि बलावलेपात् पूर्ववत् जगत् प्रबाध्यते । सती योषित् इव सुनिश्चला प्रकृतिः भवान्तरेषु अपि पुमांसम् अभ्येति ॥७२॥

टीका—बलेति । जिगीषुणा नित्योत्साहवतेत्यर्थः, तेन शिशुपालेन बलावलेपाद् बलगर्वादधुनापि पूर्ववत् पूर्वजन्मनीव जगत्प्रबाध्यते । तथा हि सती पतिव्रता योषिदिव सुनिश्चला अतिस्थिरा प्रकृतिः स्वभावो भवान्तरेष्वपि पुमांसमभ्येति । पतिं या नाभिचरति मनोवाक्कायसंयता । सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते इति मनुः । उपमोपमेयपुरस्कृतोऽर्थान्तरन्यासः ॥७२॥

टिप्पनी—बलेति । अत्र छेकानुप्रासश्चालङ्कार इति मल्लिनाथोक्ताभ्यामुपमार्थान्तरन्यासाभ्यां सह संसृष्टिः । गुणरीती पूर्ववत् ॥७२॥

বাঙ্গালা—জয়াভিলাষী শিশুপাল, এই জন্মেও, পূর্বজন্মেরই ন্যায় বলের অহঙ্কারে জগতের উৎপীড়ন করিতেছে। কারণ, সতী স্ত্রীর ন্যায় অতিস্থির প্রকৃতি, জন্মান্তরেও পুরুষকে পাইয়া থাকে ॥৭২॥

अन्वयः—तत् विधेः उल्लङ्घितशासनम् एनं कीनाशनिकेतनातिथिं विधेहि । हि शुभेतराचारविपक्त्रिमापदः असाधवः सतां निपातनीयाः ॥७३॥

टीका—तदेनमिति । तत्तस्माद्विधेर्विधातुरपि उल्लङ्घितशासनं स्वयं विधातेत्याद्युक्तरीत्यातिक्रान्तदैवमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः, एनं शिशुपालं कीनाशनिकेतनातिथिं कीनाशो यमः तस्य निकेतनं गृहं तत्र अतिथिं प्राघुणिकं विधेहि कुरु यमगृहं प्रेषयेत्यर्थः । कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोरिति विश्वः । न

हृदयमरिवधोदयादुदूढद्रढिम दधातु पुनः पुरन्दरस्य ।
घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम् ॥७४॥

चैतत् प्राघुणिकहस्तेन सर्पमारणं भवादृशामनभ्यस्तत्वादित्याह । शुभेतराचारैः दुराचारैः विपक्त्रिमाः परिपाकेण निर्वृत्ताः कालपरिपाकेण प्राप्ता आपदो येषां ते तथोक्ताः । ड्वितः क्त्रिरिति पचेः क्त्रिप्रत्ययः, क्त्रेर्मम्नित्यमिति तद्धितो मप्प्रत्ययः । असाधवो दुष्टाः सतां भवादृशां जगन्नियन्तॄणां निपातनीया वध्या हि । न च नैघृण्यदोषः स्वदोषैरेव तेषां विनाशे निमित्तमात्रत्वादस्माकमित्याशयेन शुभेतराचारैरित्यादिविशेषणोक्तिः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥७३॥

टीप्पनी—नदिति । अत्र 'विधेर्विधेहि' इति छेकानुप्रासः । यमकमिति केचित् । इत्यर्थान्तरन्यासेन सह संसृष्टिः । वीरो रसः गुणरीती पूर्ववत् ॥७३॥

বাঙ্গালা—অতএব বিধাতারও আদেশলঙ্ঘনকারী এই শিশুপালকে আপনি যমপুরের অতিথি করুন। কেন না, দুর্ব্যবহারে যাহাদের বিপদ আপনা আপনি উপস্থিত হয়; সেই অসজ্জনদিগকে নিপাত করা সজ্জনদিগের পক্ষে একান্ত উচিত ॥৭৩॥

अन्वयः—अरिवधोदयात् उदूढद्रढिम पुरन्दरस्य हृदयं पुनः घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनचमत्त्वं दधातु ॥७४॥

टीका—किञ्चैवं दुष्टनिग्रहे शिष्टानुग्रहः स्यादित्याह । हृदयमिति । अरिवधोदयात् रिपुनाशलाभात् उदूढद्रढिम नैश्चिन्त्यात् धृतदार्ढ्यं स्वस्थमिति यावत् । पृथ्वादिभ्यः इमनिच् इति दृढशब्दादिमनिच् प्रत्ययः । रऋतो हलादेर्लघोरिति ऋकारस्य रेफादेशः, पुरः शत्रुपुराणि दारयतीति पुरन्दर इन्द्रः । पूःसर्वयोर्दारिसहोरिति खच् प्रत्ययः खचि ह्रस्व इति उपधाह्रस्वः, वाचंयमपुरन्दरौ चेति निपातनाददन्तत्वं सुमागमश्च । तस्य हृदयं पुनर्भूयोऽपि पूर्ववदेवेति भावः, घनपुलकयोः, सान्द्ररोमाञ्चयोः पुलोम्नो जाता पुलोमजा शची तस्याः कुचाग्रयोः द्रुतपरिरम्भं औत्सुक्यात् शीघ्रालिङ्गनं तत्र यत्पीडनं तस्य क्षमत्वं सहत्वं दधातु प्राक् चित्तविक्षेपात् त्यक्तभोगेन शक्रेण सम्प्रति त्वत्प्रसादान्निष्कण्टकं स्वकीयं राज्यं भुज्यतामित्यर्थः. अत्र दृढपदार्थस्योदूढद्रढिमेति विशेषणगत्या निपीडनक्षमत्वं प्रति हेतुत्वोक्त्या पदार्थहेतुकं काव्यलिङ्गम् । हृदयनिपीडनक्षमत्वसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धेऽसम्बन्धरूपातिशयोक्तिरित्यर्थालङ्कारो छेकानुप्रासश्च तैरन्योन्यं संसृज्यते । पुष्पिताग्रा वृत्तम् । अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ॥७४॥

टीप्पनी—हृदयमिति । अत्र साहित्यदर्पणमते तृतीयचरणे छेकानुप्रास एव । सम्भोगशृङ्गारी रसः किन्तु आलम्बनोद्दीपनादिभिरपरिपुष्टतया न वीररसस्य रौद्ररसस्य वा निष्पत्तिरिति न "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तविरुद्धरससमावेशदोष इति सुधीभिर्भाव्यम् । गुणरीती पूर्ववत् ॥७४॥

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचन्नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यम्प्रति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥७५॥

---

বাঙ্গালা—শত্রু বিনাশ হওয়ায় দেবরাজের হৃদয়ে দৃঢ়তা জন্মিবে; সুতরাং সে হৃদয় পুনরায় … … ॥৭৪॥

**अन्वयः**—तस्मिन् सुरमुनौ इति वाचं व्याहृत्य नभ उत्पतिते पुरः इन्दोः श्रियं बिभ्रति (सति), अथ ओम इत्युक्तवतः चैद्यं प्रति क्रुद्धस्य शार्ङ्गिणः वदने व्योम्नि इव अनिशं शत्रूणां विनाशपिशुनः केतुः भ्रुकुटिच्छलेन आस्पदं चकार ॥७५॥

**टीका**—ओमिति । तस्मिन् सुरमुनौ नारदे इति इत्थम्भूतां वाचं व्याहृत्योक्त्वा नभ उत्पतिते खमुद्गते पुरोऽग्रे इन्दोः श्रियं बिभ्रति सति अथ मुनिवाक्यानन्तरमोमित्युक्तवतस्तथास्त्वित्यङ्गीकृतवतः । ओमित्यङ्गीकृतौ रोषे इति विश्वः । चेदीनां जनपदानामयं चैद्यः शिशुपालः, वृद्धेत्कोसलाजादाञ् ञ्यङिति ञ्यङ् प्रत्ययः । तम्प्रति क्रुद्धस्य शार्ङ्गिणो वदने व्योम्नीवानिशं सर्वदा अव्यभिचारेणेत्यर्थः । शत्रूणां विनाशस्य पिशुनः सूचकः । चन्द्रमभ्युत्थितः केतुः क्षितीशानां विनाशकृदिति शास्त्रादिति भावः केतुरुत्पातविशेषः । केतुर्ना द्युतौ पताकायां ग्रहोत्पातारिलक्ष्मस्वित्यमरः । भ्रुकुटिच्छलेन भ्रूभङ्गव्याजेनास्पदं प्रतिष्ठां स्थितिं चकार । आस्पदं प्रतिष्ठायामिति निपातनात् सुडागमः । अनेन वाक्यार्थभूतस्य वीररससहकारिणो रौद्रस्य स्थायी क्रोधः स्वानुभावेन भ्रुकुट्या कारणभूतोऽनुमेय इत्युक्तम् । तथा तदविनाभूतस्याङ्गिनो वीरस्य स्थायी प्रयत्नोपनेय उत्साहोऽप्युत्पन्न एवेत्यनुसन्धेयम् । इन्दोः श्रियं बिभ्रति इत्यत्र मुनेरिन्दुश्रियोऽयोगात्तत्सदृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनालङ्कारः । वदने व्योम्नीवेत्युपमा । भ्रुकुटिच्छलेन केतुरिति छलादिशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः । तत्र शत्रुविनाशसूचके त्वपेक्षितेन्दुसान्निध्यव्योमावस्थानसम्पादकत्वे निदर्शनोपमयोरपह्नवोपकारसत्त्वादङ्गाङ्गिभावेन सङ्करः । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु श्रीशब्दप्रयोगः । यथाह भगवान् भाष्यकारः, मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति अध्येतारश्च प्रवक्तारो भवन्तीति । शार्दूलविक्रीडितं वृत्तम् । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितमिति लक्षणात् । सर्गान्तत्वाद् वृत्तभेदः । यथाह दण्डी । सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकमिति ॥७५॥

ইতি শ্রীমাঘকৃতৌ শিশুপালবধে মহাকাব্যে
কৃষ্ণনারদসম্ভাষণং নাম
প্রথমঃ সর্গঃ ॥১॥

---

অথ কবিঃ কবিকাব্যবর্ণনীয়াখ্যানপূর্বকং সর্গসমাপ্তিং কথয়তি ইতীতি। ইতিশব্দঃ সমাপ্তৌ মাঘকৃতাবিতি কবিনামকথনং মহাকাব্যে ইতি মহচ্ছব্দেন লক্ষণসম্পত্তিঃ সূচিতা শিশুপালবধ ইতি কাব্যনামকথনং প্রথমঃ সর্গঃ সমাপ্ত ইতি শেষঃ। এবমুত্তরত্রাপি দ্রষ্টব্যম্।

ইতি শ্রীমহোপাধ্যায়কোলাচলমল্লিনাথসূরিবিরচিতে
শিশুপালবধকাব্যব্যাখ্যানে সর্বঙ্কষাখ্যে
প্রথমঃ সর্গঃ ॥১॥

—:০:—

**টীপ্পনী**—সোমিতি। অত্র তৃতীয়চরণে ছেকানুপ্রাসস্যেতি মল্লিনাথোক্তসঙ্করেণ সহ পুনঃ সংসৃষ্টিঃ। সংসৃষ্টিসঙ্করয়োরপি পুনঃ সংসৃষ্টিসঙ্করৌ সম্ভবত ইতি প্রদর্শিতমস্মাভিঃ সাহিত্যদর্পণটীকায়াং তৎপ্রকরণে। বীরসহকারী রৌদ্রো রসঃ, তস্য চ ক্রোধঃ স্থায়ী ভাবঃ, শিশুপাল আলম্বনবিভাবঃ, নারদবচনমুদ্দীপনবিভাবঃ, ভ্রুকুটিশ্চানুভাবঃ। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭৫॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশবিরচিতায়াং শিশুপালবধ-
টীপ্পন্যাং মাধুরীসমাখ্যায়াং প্রথমঃ সর্গঃ ॥

**বাঙ্গালা**—সেই দেবর্ষি নারদ এই সকল কথা বলিয়া, আকাশে উঠিয়া, শ্রীকৃষ্ণের সম্মুখে চন্দ্রের শোভা ধারণ করিলে; তাহার পর "তাহাই হইবে" এই কথা বলিয়া শ্রীকৃষ্ণ নারদের কথা স্বীকার করিলেন এবং শিশুপালের প্রতি ক্রুদ্ধ হইলেন; তখন আকাশের ন্যায় তাঁহার বদন মণ্ডলে ভ্রুকুটিচ্ছলে সর্বদা শত্রুগণের বিনাশসূচক ধূমকেতু উদয় পাইল ॥৭৫॥

# द्वितीयः सर्गः ।



यियक्षमाणेनाहूतः पार्थेनाथ द्विषन्मुरम् ।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्य्यद्वयाकुलः ॥१॥
सार्द्धमुद्धवसीरिभ्यामथासावासदत्सदः ।
गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ॥२॥

---

अन्वयः—अथ यियक्षमाणेन पार्थेन आहूतः अभिचैद्यं प्रतिष्ठासुः मुरं द्विषन् कार्य्यद्वयाकुलः आसीत् ॥१॥

टीका—अस्मिन् सर्गे मन्त्रवर्णनाय वीजं वपति । यियक्षमाणेनेति । अथेन्द्रसन्देशश्रवणानन्तरं यियक्षमाणेन यष्टुमिच्छता । यजतेः सनन्ताल्लटः शानच् । पार्थेन पृथापुत्रेण युधिष्ठिरेण । तस्येदमित्यण्, अन्यथा स्त्रीभ्यो ढक् स्यात् । आहूत आकारितः । ह्वयतेः कर्म्मणि क्तो सम्प्रसारणदीर्घौ । तथा अभिचैद्यं शिशुपालं प्रति । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः, अभिरभागे इति कर्मप्रवचनीयत्वे तद्योगे द्वितीया वा । प्रतिष्ठासुः प्रस्थातुमिच्छुः । तिष्ठतेः सनन्तादुप्रत्ययः । मुरं द्विषन् मुरारिः । द्विषोऽमित्रे इति शतृप्रत्यये द्विषः शतुर्वेति वैकल्पिकः षष्ठीप्रतिषेधः । कार्य्यद्वयेन सुरकार्य्यसुहृत्कार्य्यरूपेणाकुलो विप्रतिषेधादावश्यकत्वाच्च द्वयोः सन्दिहान आसीत् अतो मन्त्रस्यायमवसर इति भावः ॥१॥

टीप्पनी— यियक्षमाणेनेति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥१॥

বাঙ্গালা—তাহার পর, যুধিষ্ঠির রাজসূয় যজ্ঞ করিবার ইচ্ছা করিয়া শ্রীকৃষ্ণকে নিমন্ত্রণ করিলেন ; এদিকে শ্রীকৃষ্ণ শিশুপালকে আক্রমণ করিবার জন্য যাইবার ইচ্ছা করিয়াছিলেন। সুতরাং তখন তিনি দুইটী কার্য্যের মধ্যে কোনটী করিবেন—এই—বিষয়ে সন্দিহান হইয়াছিলেন ॥১॥

अन्वयः—अथ असौ अभिनभः गुरुकाव्यानुगां चान्द्रीं श्रियं बिभ्रत् (सन्) उद्धवसीरिभ्यां सार्द्धं सदः आसदत् ॥२॥

जाज्वल्यमाना जगतः शान्तये समुपेयुषी ।
व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥३॥
रत्नस्तम्भेषु सङ्क्रान्तप्रतिमास्ते चकाशिरे ।
एकाकिनोऽपि परितः पौरुषेयवृता इव ॥४॥

---

টীকা—एवं मन्त्रबीजसन्दर्भमुपन्यस्य मन्त्रोचितं देशमाह । सार्द्धमिति । अथ सन्देशानन्तरम् असौ हरिः अभिनभः । पूर्ववदव्ययीभावः, कर्मप्रवचनीयत्वे वा द्वितीया । गुरुकाव्यौ बृहस्पतिशुक्रावनुगावनुयायिनौ यस्यां ताम् । गीष्पतिर्धिषणो गुरुरिति, शुक्रो दैत्यगुरुः काव्य इति चामरः । चन्द्रस्येमां चान्द्रीं श्रियं बिभ्रत् । अत्र श्रीतुल्यां श्रियमिति निदर्शनाभेदः । उद्धवसीरिभ्यां सार्द्धम् उद्धवरामाभ्यां सह सदः सभामासदत् अगमत् राजसदसः प्रसादत्वादिति भावः । सदेर्लुङि पुषादित्वात् च्लेरङादेशः । अत्र मनुः । गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः । अरण्ये निःशलाके वा मन्त्रयेदविभाविनाविति ॥२॥

टिप्पनी—सार्द्धमिति । अत्र छेकानुप्रासो वृत्त्यनुप्रासश्चेति मल्लिनाथोक्तनिदर्शनया सह संसृष्टिः । गुणरीती पूर्ववत् ॥२॥

বাঙ্গালা—তাহার পর, আকাশে বৃহস্পতি ও শুক্র অনুগামী হইলে চন্দ্রের যেমন শোভা হয় সেই রূপ শোভা ধারণ করতঃ শ্রীকৃষ্ণ, উদ্ধব ও বলরামের সহিত সভাভবনে গমন করিলেন ॥২॥

অন্বয়:—जगतः शान्तये समुपेयुषी जाज्वल्यमाना असौ नरशिखित्रयी सभावेद्यां व्यद्योतिष्ट ॥३॥

টীকা—জাজ্বল্যমানেতি । जगतः शान्तयेऽनुपद्रवाय समुपेयुषी मिलिता जाज्वल्यमाना भृशं ज्वलन्ती । धातोरेकाचो हलादेः क्रियासमभिहारे यङ्, ततो लटः शानजादेशे टाप् । असौ नराः पुरुषा एव शिखिनोऽग्नयस्तेषां त्रयी । द्वित्रिभ्यामित्यादिना तयस्यायजादेशे कृते टिड्ढाणञित्यादिना ङीप् । सभा आस्थानी सैव वेदिः । वेदिः परिष्कृता भूमिरित्यमरः । तस्यां व्यद्योतिष्ट दीप्यते स्म । द्युद्भ्यो लुङीत्यभावे तङ् । रूपकालङ्कारः ॥३॥

টীপ্পনী—जाज्वल्यमानेति । अत्र तृतीयचरणे छेकानुप्रास इति टीकोक्तनिरङ्गकेवलरूपकेण सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

বাঙ্গালা—অগ্নিস্বরূপ উজ্জ্বল সেই মনুষ্য তিনটী জগতের শান্তির নিমিত্ত সম্মিলিত হইয়া, সেই সভাভবনে শোভা পাইতে লাগিলেন ॥৩॥

অন্বয়:—रत्नस्तम्भेषु संक्रान्तप्रतिमाः ते एकाकिनः (सन्त) अपि परितः पौरुषेयवृताः इव चकाशिरे ॥४॥

अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी।
तैरूहे केशरिक्रान्तत्रिकूटशिखरोपमा ॥५॥
गुरुद्वयाय गुरुणोरुभयोरथ कार्य्ययोः।
हरिर्विप्रतिषेधन्तमाचचक्षे विचक्षणः ॥६॥

---

टीका—रत्नेति। रत्नानां स्तम्भा इति षष्ठीसमासस्य विशेषे पर्य्यवसानाद्विकारार्थत्वम्, तेषु संक्रान्तप्रतिमाः संक्रान्तप्रतिबिम्बाः। प्रतिमानं प्रतिबिम्बं प्रतिमेत्यमरः। ते त्रयः एकाकिनोऽसहाया अपि। एकादाकिनिच्चासहाये इत्याकिनिच् प्रत्ययः। परितोऽभितः सर्वतः पर्य्यभिभ्यां चेति तसिलप्रत्ययः, स च सर्वोभयार्थाभ्यामिष्यते। पौरुषेयैः प्रतिबिम्बभूयस्त्वात्। पुरुषसमूहेनावृता इवेत्युत्प्रेक्षा। चकाशिरे। सर्वपुरुषाभ्यां णढञौ। पुरुषाद् वधविकारसमूहतेन कृतेष्विति वक्तव्यमिति समूहे ढञ् प्रत्ययः। एतेन विजनत्वमुक्तम्। यद्यपि, निःस्तम्भे निर्गवाक्षे च निर्भित्त्यन्तरसंश्रये। प्रासादाग्रे त्वरण्ये वा मन्त्रोऽविभाविनाविति कामन्दकीये मन्त्रभूमेः स्तम्भप्राचुर्य्यं निषेधो गम्यते, तथापि तस्यापि विजनोपलक्षणत्वाददोष इति भावः ॥४॥

टीप्पनी—रत्नेति। अत्र पौरुषेयवृतत्वसम्भावनां प्रति संक्रान्तप्रतिमपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमिति मल्लिनाथोक्तया उत्प्रेक्षया सङ्कीर्य्यते। प्रसादो गुणः वैदर्भी च रीतिः ॥४॥

বাঙ্গালা—রত্নময় স্তম্ভসমূহে তাঁহাদের প্রতিবিম্ব পড়িয়াছিল; সুতরাং তাঁহাদের অন্য সহচর না থাকিলেও, তাঁহারা যেন সকল দিকে পুরুষগণে পরিবেষ্টিত হইয়াই শোভা পাইতেছিলেন ॥৪॥

अन्वयः—अमी यानि उत्तुङ्गहेमपीठानि अध्यासामासुः, तैः केशरिक्रान्तत्रिकूटशिखरोपमा ऊहे ॥५॥

टीका—अध्यासामासुरिति। अमी त्रयो यान्युत्तुङ्गहेमपीठानि आसनानि अध्यासामासुरधितष्ठुः येषूपविष्टा इत्यर्थः। अधिशीङ्स्थासां कर्मेति कर्मत्वम् आस उपवेशने लिट्, दयायासश्चेत्याम्प्रत्ययः कृञ्चानुप्रयुज्यते लिटीति अस्तेरनुप्रयोगः आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति कृञ एवेति नियमादस्तेर्नात्मनेपदम्। तैः पीठैः केशरिभिः सिंहैः क्रान्तानां त्रिकूटस्य त्रिकूटाद्रेः शिखराणामुपमा सादृश्यम् ऊहे ऊढा वहेः कर्म्मणि लिट् सम्प्रसारणम्। त्रीणि कूटान्यस्येत्यन्वर्थसंज्ञा। कूटोऽस्त्री शिखरं शृङ्गमित्यमरः। उपमालङ्कारः ॥५॥

टीप्पनी—अध्यासामासुरिति। अत्र गुणरीती पूर्ववत् ॥५॥

বাঙ্গালা—উঁহারা যে তিন খানি উচ্চ স্বর্ণাসনে উপবেশন করিয়াছিলেন; সেই আসন তিন খানি, ত্রিকূটপর্বতের সিংহাধিষ্ঠিত তিনটি শৃঙ্গের সাদৃশ্য ধারণ করিয়াছিল ॥৫॥

अन्वयः—अथ विचक्षणः हरिः गुरुद्वयाय गुरुणोः उभयोः कार्य्ययोः तं विप्रतिषेधम् आचचक्षे ॥६॥

দ্যোতিতান্তঃসভৈঃ কুন্দকুড্মলাগ্রদতঃ স্মিতৈঃ।
স্নপিতেবাভবত্তস্য শুদ্ধবর্ণা সরস্বতী ॥৭॥
ভবদ্গিরামবসরপ্রদানায় বচাংসি নঃ।
পূর্বরঙ্গঃ প্রসঙ্গায় নাটকীয়স্য বস্তুনঃ ॥৮॥

---

টীকা—গুর্বিতি। অথোপবেশনানন্তরং, বিবক্ষুরিতি বিবক্ষণো বক্তা। কর্তরি লুড়িতি ন্যাসকারঃ। অসনয়োশ্চ প্রতিষেধো বক্তব্য ইতি বচিভঃ খ্যাআদেশাভাবঃ। হরি-র্গুর্বোঃ উদ্ধবরামযোঃ পিতৃব্যজ্যেষ্ঠযোর্লঘীয়ঃ যাভ্যামিত্যর্থঃ। গুরুণোর্মহতোরুভযোঃ কার্য্যযোঃ পূর্বোক্তযোঃ তং বিপ্রতিষেধং বিরোধমাচচক্ষে আখ্যাতবান্। তুল্যবলবিরোধো বিপ্রতিষেধঃ ॥৬॥

টিপ্পনী—গুর্বিতি। বিপ্রতিষেধো বিরোধঃ একস্য করণে অন্যস্যাকরণরূপঃ। অত্র ছেকানুপ্রাসোঽলঙ্কারঃ, গুণরীতী পূর্ববৎ ॥৬॥

বাঙ্গালা—তাহার পর, বাগ্মী শ্রীকৃষ্ণ, পিতৃব্য উদ্ধব ও জ্যেষ্ঠভ্রাতা বলরামের নিকট, গুরুতর কার্য্য দুইটীর সেই পরস্পর বিরোধের কথা বলিতে লাগিলেন ॥৬॥

অন্বয়ঃ—কুন্দকুড্মলাগ্রদতঃ তস্য সরস্বতী দ্যোতিতান্তঃসভৈঃ স্মিতৈঃ স্নপিতা ইব (সতী) শুদ্ধবর্ণা অভবৎ ॥৭॥

টীকা—দ্যোতিতেতি। কুন্দং মাঘভবঃ পুষ্পবিশেষঃ। মাঘ্যং কুন্দমিত্যমরঃ। কুন্দকুট্মলাগ্রদতঃ। কুন্দকুড্মলাগ্রাণীব দন্তা যস্য তস্য কুন্দকুড্মলাগ্রদতঃ। অগ্রান্তশুদ্ধশুভ্রবৃষবরাহেভ্যশ্চেত্যগ্রান্তপূর্বপদবহুব্রীহেঃ সমাসান্তো বৈভাষিকো দতাদেশঃ। তস্য হরেঃ সরস্বতী অন্তঃপ্রধানা সভা অন্তঃসভা সভাভ্যন্তরমিত্যর্থঃ। সা দ্যোতিতা প্রকাশিতা যৈস্তৈঃ স্মিতৈঃ স্নপিতেব ক্ষালিতেব। স্নাতের্ণ্যন্তাৎ ক্তঃ, অর্ত্তিহ্রীত্যাদিনা পুগাগমঃ, মিতাং হ্রস্বঃ। শুদ্ধবর্ণা স্ফুটাক্ষরত্বাৎ স্বচ্ছকান্তিরভবৎ। অত্র স্বাভাবিকবর্ণশুদ্ধেঃ স্নানহেতুকত্বমুৎপ্রেক্ষ্যতে। স্মিতপূর্বাভিভাষী হরিরিতি ভাবঃ ॥৭॥

টিপ্পনী—দ্যোতিতেতি। অত্র কুন্দেত্যাদৌ লুপ্তোপমা, স্নপিতেত্যত্র ক্রিয়োৎপ্রেক্ষা; মল্লিনাথমতে তু হেতূৎপ্রেক্ষা, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। গুণরীতী পূর্ববৎ ॥৭॥

বাঙ্গালা—শ্রীকৃষ্ণের দন্তসমূহ, কুন্দকুসুমের কলিকাগ্রের ন্যায় (সমান, নির্ম্মল ও ক্ষুদ্র ক্ষুদ্র) ছিল এবং তাঁহার ঈষদ্‌হাস্য, সভার মধ্যস্থান প্রকাশ করিতেছিল। সুতরাং তাঁহার কথাগুলি, সেই ঈষদ্‌হাস্যে প্রক্ষালিত হইয়াই যেন নির্ম্মলবর্ণ হইয়াছিল ॥৭॥

অন্বয়ঃ—নঃ বচাংসি ভবদ্‌গিরাম্ অবসরপ্রদানায় (ভবিষ্যন্তি) পূর্বরঙ্গঃ নাটকীয়স্য বস্তুনঃ প্রসঙ্গায় (ভবতি) ॥৮॥

টীকা—কার্য্যবিপ্রতিষেধং নিবেদ্য তত্র স্বমতমাবেদয়িষ্যন্ পণ্ডিতমানিত্বং তাবৎ পরিহরতি। ভবদ্গিরামিতি। ভবদ্গিরাং যুষ্মদ্বাচাম্ অবসরপ্রদানায় প্রসঞ্জনায়েত্যর্থঃ।

करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाप्यस्मदलम्भूष्णुरिज्यायै तपसः सुतः ॥९॥

नोऽस्माकं वचांसि सिद्धान्तोत्थापनार्थं सुच्यते न तु सिद्धान्तत्वेनेत्यर्थः। तथाहि, पूर्वं रच्यतेऽस्मिन्निति पूर्वं रङ्गः नाट्यशाला तत्स्थं कर्मापि पूर्वरङ्ग इति दशरूपके। अतः पूर्वरङ्गो नाम रङ्गप्रधानाख्यो रङ्गविघ्नोपशान्तिकारी नान्दीपाठगीतवादित्रायनेकाङ्गविशेषो नाट्यादौ कर्त्तव्य कर्मविशेषः। तदुक्तं वसन्तराजीये, यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्त्तित इति। स पूर्वरङ्गो नाटके भवं नाटकीयं वस्तु वर्ण्यमित्यर्थः। वृद्धाच्छः तस्यायनेतीयादेशः। तस्य वस्तुनः प्रसिद्धस्य प्रसङ्गाय प्रसञ्जनाय प्रवर्त्तनायेति यावत्। अत्र प्रथमवादो न दोषायेति भावः। पूर्वरङ्गः प्रस्तावनेति रङ्गराजः तद्विन्यस्य, पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते। प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः। प्रथमं पूर्वरङ्गस्य ततः प्रस्तावनेति च। आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यत इति दशरूपकाद्युक्तमेदविरोधादिति। अत्र हरिवाक्यपूर्वरङ्गयोः प्रसञ्जकत्वस्वरूपसामान्यस्य वाक्यद्वये शब्दान्तरेण पृथङ्निर्देशात्प्रतिवस्तूपमालङ्कारः, तल्लक्षणं तूक्तम् ॥८॥

टीप्पनी—भवदिति। अत्रापि गुणरीती पूर्ववत् ॥८॥

বাঙ্গালা—আপনাদের কথা বলার প্রসঙ্গ উত্থাপন করিবার জন্যই আমার কথাগুলি হইবে। কেন না, নাটকে অভিনেয় বিষয়ের প্রসঙ্গ উত্থাপনের জন্যই পূর্বরঙ্গ অনুষ্ঠিত হইয়া থাকে ।৮॥

অন্বয়ঃ—দিশাং জিত্বরৈঃ ভ্রাতৃভিঃ করদীকৃতভূপালঃ তপসঃ সুতঃ অস্মৎ বিনা অপি ইজ্যায়ৈ অলং ভূষ্ণুঃ ॥৯॥

टीका—अस्मदिति स्वमतमाह। करदीकृतेति। दिशां जित्वरैः जयनशीलैः। इण्नशजिसर्त्तिभ्यः क्वरप्, कर्तृयोगात्कर्मणि षष्ठी। भ्रातृभिर्भीमादिभिर्हेतुभिः करदाः षष्ठभागप्रदाः। भागधेयो बलिः कर इत्यमरः। ततः च्वि, उर्यादिच्विडाचश्चेति गतिसंज्ञायां कुगतिप्रादय इति नित्यसमासः। अकरदाः करदाः सम्पद्यमानाः कृताः करदीकृता भूपाला यस्य स वशीकृतराजमण्डलः तपसः सुतो धर्मपुत्रः। तपस्मान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि चेति विश्वः। अस्मद्विना अस्माभिर्विनापीत्यर्थः। पृथग्विनानानेत्यादिना तृतीयाविकल्पात् पञ्चमी। इज्यायै यागाय। यजेर्भावे क्यप्, वचिस्वपीत्यादिना सम्प्रसारणम्, नमःस्वस्तीत्यादिना चतुर्थी। अलं समर्थो भूष्णुर्भवनशीलः। भूष्णुर्भविष्णुर्भवितेत्यमरः। ग्लाजिस्थश्च ग्स्नुरिति ग्स्नुप्रत्ययः, क्ङिति चेत्यत्र गकारस्य प्रश्लेषात् गुणाभावः। तथाच जयादित्यः तत्रैव गकारोऽपि च तत्वभूतो निर्दिश्यते। अतो जेतव्यात्रैव कार्या न यज्ञदातेति भावः ॥९॥

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥१०॥
न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।
यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम् ॥११॥

---

टिप्पनी—करदीति । अत्र युधिष्ठिरस्य यज्ञसम्पादनसामर्थ्यं प्रति करदीकृतभूपालपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । गुणरीती पूर्ववत् ॥९॥

বাঙ্গালা—ভীম ও অর্জুনপ্রভৃতি দিগ্বিজয়ী ভ্রাতারাই পৃথিবীর সমস্ত রাজগণকে যুধিষ্ঠিরের নিকট করদাতা করিয়া দিয়াছেন ; সুতরাং আমাদের ব্যতীতও যুধিষ্ঠির রাজসূয় যজ্ঞ করিতে সমর্থ হইবেন ॥৯॥

अन्वयः—पथ्यम् इच्छता (जनेन) तु उत्तिष्ठमानः परः न उपेक्ष्यः । हि शिष्टैः वर्त्स्यन्तौ आमयः स च समौ आम्नातौ ॥१०॥

टीका—ननु यज्ञतो जैत्रयात्रायामुभयानुसरणं स्यात्तत्राह । उत्तिष्ठमान इति । उत्तिष्ठमानो वर्द्धमानः । उदोऽनूर्ध्वकर्मणीत्यात्मनेपदम् । परः शत्रुः पथ्योऽनपेतं पथ्यं हितमारोग्यं चेच्छता पुंसेति शेषः, नोपेक्ष्यो नौदासीन्येन द्रष्टव्यः । कुतः हि यस्माद्वर्त्स्यन्तौ वर्द्धिष्यमाणौ । लृटः सद्वेति सदादेशे वृद्भ्यः स्यसनोरिति विभाषया परस्मैपदं न वृद्भ्यश्चतुर्भ्यं इतीडभावः । आमयो व्याधिः । रोगव्याधिगदामया इत्यमरः । स शत्रुश्च शिष्टैर्नीतिज्ञैः समौ तुल्यवृत्तौ आम्नातावाख्यातौ । अल्पीयसोऽप्यरेर्वृद्धिर्महानर्थाय रोगवत् । अतस्तस्यानुपेक्षणात् उभयानुसृतिः कुत इति भावः । उपमालङ्कारः ॥१०॥

टिप्पनी—उत्तिष्ठमान इति । अत्र पर इति शत्रुसामान्याभिधानात् शिशुपालरूपशत्रुविशेषप्रतीतेरप्रस्तुतप्रशंसा, अनुपेक्षणीयत्वरूपकार्यस्य परवृद्धिरूपकारणेन समर्थनादर्थान्तरन्यासः ; टीकोक्तया उपमया सहानयोरङ्गाङ्गिभावेन सङ्करः । वीरो रसः, गुणरीती पूर्ववत् ॥१०॥

বাঙ্গালা—যাঁহারা আপন হিত কামনা করেন, তাঁহাদের পক্ষে বৃদ্ধিশীল শত্রুকে উপেক্ষা করা উচিত নহে। কারণ, বৃদ্ধিশীল রোগ ও শত্রু এই দুইকেই শাস্ত্রজ্ঞ ব্যক্তিরা সমান বলিয়াছেন ॥১০॥

अन्वयः—सात्वतीसूनुः यत् मह्यम् अपराध्यति, (ततः) न दूये ; यत्तु लोकं दन्दह्यते, अदः मां दुःखाकरोति ॥११॥

टीका—नन्वेवं स्वार्थपरत्वदोषो लोकानुग्रहार्थत्वादस्याः प्रवृत्तेरित्याशयेनाह । नेति । सत्वतोऽपत्यं स्त्री सात्वती नाम हरेः पितृष्वसा । उत्सादिभ्योऽञ् । तस्याः सूनुश्चैद्यः । बन्धुरपि खलो न मृष्यत इति भावः । यन्मह्यमपराध्यति द्रुह्यतीति यावत् । क्रुधद्रुहेत्यादिना चतुर्थी । तत इति शेषः यत्तदोर्नित्यसम्बन्धात् । न दूये न परितप्ये । दूञो

मम तावन्मतमिदं श्रूयतामङ्ग ! वामपि ।
ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्य्यवस्तुनि ॥१२॥
यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥१३॥

---

दैवादिकात् कर्त्तरि लट्। उत्तमपुरुषैकवचनम्। किन्तु लोकं दन्दह्यते गर्हितं यथा स्यादेवं दहतीति यत्। लुपसदचरजपेत्यादिना गर्हायां यङ्। जपजभदहदशभञ्जपशां चेत्यभ्यासस्य नुमागमः। असौ लोकदहनं मां दुःखाकरोति दुःखमनुभावयतीत्यर्थः। दुःखात् प्रातिलोम्ये इति डाच् प्रत्ययः। अतश्चैद्य एवाभिधातव्यः पार्थस्तु प्रार्थनयापि पश्चात् सम्भाव्य इत्यर्थः ॥११॥

टीप्पनी—नेति। अत्रापि रसादयः पूर्ववत् ॥११॥

বাঙ্গালা—শিশুপাল আমার নিকট যে অপরাধ করিয়াছে, তাহাতে আমি দুঃখিত নহি; কিন্তু সে যে জনসাধারণের উৎপীড়ন করিতেছে; তাহাতেই আমি দুঃখিত ॥১১॥

अन्वयः—तावत् इदं मम मतम्, अङ्ग! (इदानीं) वाम् अपि (मतं) श्रूयतां (मया)। ज्ञातसारः अपि एकः कार्य्यवस्तुनि सन्दिग्धे खलु ॥१२॥

टीका—स्वमतं निगमयन् परमतं शुश्रूषुः पृच्छति। ममेति। तावद्भवन्मतश्रवण-पर्य्यन्तमित्यर्थः मम मतमिदम्। अङ्गेत्यामन्त्रणेऽव्ययम्। अथ सम्बोधनार्थकाः स्युः प्याट् पाडङ्ग हे है भोरित्यमरः। वां युवयोः। युष्मदस्मदोः षष्ठीचतुर्थीत्यादिना वामादेशः। मतं श्रूयताम्। विधौ लोट्। तदिदं मया श्रोतव्यमन्यथा सन्देहानिवृत्तेरिति भावः। विदुषस्ते कुतः सन्देहस्तत्राह। ज्ञातसारः ज्ञाततत्त्वार्थोऽप्येकः एकाकी कार्य्यवस्तुनि कर्त्तव्यार्थे सन्दिग्धे संशेते, खलु निश्चये, अतो मयापि सन्दिह्यत इत्यर्थः। दिह उपचये कर्त्तरि क्त घत्वधत्वे। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥१२॥

टिप्पनी—ममेति। अत्र द्वितीयपादे 'मया' 'मतम्' इत्येतयोः पदयोरनभिधानेऽपि न न्यूनपदता-दोषः, तयोः सामर्थ्यादेवावगतेः। तथा चोक्तम् दर्पणे—"क्वचिन्न दोषो न गुणः।" प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—আমার এই মত; হে (আর্য্যগণ!) এখন আপনাদের মত ও আমি শুনিব। কেন না, তত্ত্বজ্ঞ হইলেও, এক ব্যক্তি কর্ত্তব্য বিষয়ে সন্দিহানই হইয়া থাকে ॥১২॥

अन्वयः—माधवः यावदर्थपदाम् एवं वाचम् आदाय विरराम। महीयांसः प्रकृत्या मितभाषिणः (भवन्ति) ॥१३॥

टीका—यावदिति। माधवो हरिर्यावानर्थो यावदर्थम्। यावदवधारणे इत्यव्ययी-

ततः सपत्नापनयस्मरणानुशयस्फुरा ।
ओष्ठेन रामो रामौष्ठविम्बचुम्बनचुञ्चुना ॥१४॥

---

भावः । यावदर्थं पदानि यस्यास्ताम् अभिधेयसम्मिताक्षरामित्यर्थः । एवमुक्तप्रकारेण वाचमादाय गृहीत्वा उक्त्वेत्यर्थः, विरराम तूष्णीमास । व्याङ्परिभ्यो रम इति परस्मैपदम् । तथाहि, महीयांस उच्चमाः प्रकृत्या मितभाषिणः, वृथालापनिषेधादिति भावः । पूर्ववदलङ्कारः ॥१३॥

टीप्पनी—यावदिति । अत्र विरराम इति पूर्वार्द्धान्वयिन एकस्य पदस्य परार्द्धे अभिधानात् अर्द्धान्तरैकपदतादोषः । तत्समाधानाय श्लोक एवं पठनीयः—

यावदर्थपदां वाचमित्युक्त्वा विरतो हरिः ।
महीयांसः स्वभावेन भवन्ति मितभाषिणः ॥

गुणरीती पूर्ववत् ॥१३॥

বাঙ্গালা—শ্রীকৃষ্ণ, উপযুক্ত অর্থসম্পন্ন এইরূপ বাক্য বলিয়া বিরত হইলেন। কারণ; মহাজনগণ স্বভাবতই মিতভাষী হইয়া থাকেন ॥১৩॥

अन्वयः—ततः सपत्नापनयस्मरणानुशयस्फुरा रामौष्ठविम्बचुम्बनचञ्चुना ओष्ठेन (उपलक्षितः) रामः (जगाद) ॥१४॥

टीका—अथाष्टभिः कुलकेन रामं वक्तुं यद्वाक्यमवतारयति । तत इति । ततो रामो जगादेत्युत्तरेणान्वयः । सपत्नो रिपुः । रिपुर्वैरिसपत्नारीत्यमरः । तस्यापनयोऽपकारः तस्य स्मरणेन योऽनुशयः पश्चात्तापः । भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोरिति विश्वः । तेन स्फुरतीति अनुशयस्फुः तेन स्फुरा ओष्ठो विम्बमिवेत्युपमितसमासः । रामायाः ओष्ठविम्बस्य चुम्बनेन वित्तो रामौष्ठविम्बचुम्बनचुञ्चुः तेन वित्तश्चुप्चणपाविति चुञ्चुप्रत्ययः, ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् । तेनौष्ठेनोपलक्षितः समरसुरतयोः सलरस इति भावः । उपमानुप्रासयोः संसृष्टिः ॥१४॥

टिप्पनी—तत इति । अत्र पूर्वार्द्धे रौद्रो रसः, परार्द्धे च सम्भोगशृङ्गार इति परस्परविरुद्धरसयोः समावेशेऽपि भिन्नभिन्नालम्बनत्वान्न दोषः "कपोले जानक्याः करिकलभदन्तद्युतिमुषि" इत्यादिदर्पणोदाहरणवत् रौद्रस्यालम्बनं शिशुपालः, शृङ्गारस्यालम्बनन्तु रामेत्यालम्बनभेदः । पूर्वार्द्धे ओजो गुणः, गौड़ी च रीतिः ; परार्द्धे तु माधुर्यं गुणः, पाञ्चाली च रीतिः ॥१४॥

বাঙ্গালা—তাহার পর, বলরাম বলিতে আরম্ভ করিলেন ; তখন শিশুপালকৃত অপকার স্মরণ করায় তাঁহার অনুতাপ উপস্থিত হইয়াছিল ; তাহাতে তাঁহার ওষ্ঠযুগল কম্পিত হইতে লাগিল ; আবার সে ওষ্ঠযুগল রমণীর ওষ্ঠবিম্বচুম্বনকার্য্যে প্রসিদ্ধ ছিল ॥১৪॥

विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् ।
प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम् ॥१५॥
घूर्णयन्मदिरास्वादमदपाटलितद्युती ।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥१६॥

---

**अन्वयः**—विवक्षितां तत्क्षणप्रतिसंहृताम् अर्थविदः पवनव्याधेः गिरम् उत्तरपक्षतां प्रापयन् (जगाद) ॥१५॥

**टीका**—विवक्षितामिति । विवक्षितां स्वकृत्याभिमानादग्रे वक्तुमिष्टाम् । वचेर्ब्रूञो वा सन्नन्तात् कर्मणि क्तः । तत्क्षणे विवक्षाक्षण एव इत्यविलम्बोक्तिः प्रतिसंहृतां रामानुरोधादनुक्ताम् अर्थविदः कार्य्यज्ञस्य अत एव पवनव्याधेरुद्धवस्य गिरमुत्तरपक्षतां सिद्धान्तपक्षतां प्रापयन् स्वयमसत्पक्षावलम्बित्वादिति भावः । अनेन रामस्य व्यग्रता उक्ता ॥१५॥

**टिप्पनी**—विवक्षितामिति । अत्र आवेगो नाम व्यभिचारी भावः, प्रसादो गुणः, पाञ्चाली रीतिः ॥१५॥

**বাঙ্গালা**—কার্য্যজ্ঞ উদ্ধব, কথা বলিবার ইচ্ছা করিয়াছিলেন ; ( কিন্তু বলরামের আগ্রহ দেখিয়া) তৎক্ষণাৎ তাহার উপসংহার করিলেন ; বলরাম সেই উদ্ধবের কথাকে সিদ্ধান্তপক্ষে স্থাপন করিয়া (বলিতে লাগিলেন) ॥১৫॥

**अन्वयः**—मदिरास्वादमदपाटलितद्युती रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ घूर्णयन् (जगाद) ॥१६॥

**टीका**—घूर्णयन्निति । पुनः मदिरास्वादेन मद्यपानेन यो मदस्तेन पाटलिता ईषद्रक्तीकृता द्युतिर्ययोस्ते रेवत्या देव्याः वदने यदुच्छिष्टं मद्यलेपताम्बूलादि अधिचुम्बन-मुक्तान्तमिति भावः । तेन परिपूते शुद्धे पुटे ययोस्ते दृशौ घूर्णयन् भ्रामयन्निति मद-विकारोक्तिः । उच्छिष्टपरिपूतेत्यत्र, रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनामिति स्मर-णात् । उच्छिष्टस्य पावित्र्यजनकत्वविरोधस्याभासत्वाद्विरोधाभासोऽलङ्कारः । आभासत्वे विरोधस्य विरोधाभास उच्यत इति लक्षणात् ॥१६॥

**टिप्पनी**—घूर्णयन्निति । अत्र मदो नाम व्यभिचारी भावः, समासबहुलतया ओजो गुणः, गौडी च रीतिः । बलरामस्य क्षत्रियतया सुराव्यतिरिक्तमद्यपाने न दोषः । तथाच मनुः—

"कामतोऽपि हि राजन्यो वैश्यो वापि कथञ्चन ।
मद्यं पीत्वाऽसुरां सन्न न कश्चिद्दोषमर्हति" ॥१६॥

**বাঙ্গালা**—মদ্যপান করায় মত্ততা উপস্থিত হইয়া, বলরামের নয়নযুগলকে আরক্তবর্ণ করিয়াছিল ; আর রেবতীদেবীর মুখোচ্ছিষ্ট মদ্য ও তাম্বূলে সে নয়নযুগলের দুইটী পুটকে পবিত্র করিয়াছিল ; বলরাম এহেন নয়নযুগলকে ঘূর্ণিত করতঃ (বলিতে লাগিলেন) ॥১৬॥

८

आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।
म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः ॥१७॥
दधत्सन्ध्यारुणव्योम-स्फुरत्तारानुकारिणीः ।
द्विषद्द्वेषोपरक्ताङ्ग-सङ्गिनीः स्वेदविप्रुषः ॥१८॥
प्रोल्लसत्कुण्डलप्रोत-पद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥१९॥

---

अन्वयः—अभिमानोष्णैः मुखानिलैः आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीं वनमालां म्लापयन् (जगाद) ॥१७॥

टीका—आश्लेषेति। पुनराश्लेषलोलुपाया आलिङ्गनलुब्धाया वध्वाः स्तनयोः कार्कश्यस्य काठिन्यस्य साक्षिणीम् उपद्रष्ट्रीं नित्यं पीड्यमानामिति भावः। साक्षाद् द्रष्टरि संज्ञायामिति साक्षाच्छब्दादिनिप्रत्ययः। वनमालामभिमानोष्णैरहङ्कारतप्तैर्मुखानिलैः निश्वासमारुतैर्म्लापयन् ग्लापयन्। म्लायतेर्ण्यन्ताल्लटः शत्रादेशः, आदेच इत्यात्वे पुगागमः। अस्थाने म्लानसम्बन्धादतिशयोक्तिः ॥१७॥

टिप्पनी—आश्लेषेति। अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥१७॥

বাঙ্গালা—আলিঙ্গনলোলুপা রমণীর স্তনযুগলের কাঠিন্যের সাক্ষী বনমালাকে অহঙ্কারোষ্ণ নিশ্বাস বায়ু দ্বারা ম্লান করতঃ (বলিতে লাগিলেন) ॥১৭॥

अन्वयः—सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः दधत् [जगाद] ॥१८॥

टीका—दधदिति। पुनः सन्ध्यायामरुणे व्योम्नि स्फुरन्तीस्तारा अनुकुर्वन्तीति तथोक्ताः अतः द्विषतः शत्रोर्द्वेषेण क्रोधेनोपरक्ते रक्ते वपुषि सङ्गिनीः सक्ताः स्वेदविप्रुषः स्वेदबिन्दून्। पृषन्ति बिन्दु पृषताः पुमांसो विप्रुषः स्त्रिय इत्यमरः। दधद्दधानः। नाभ्यस्ताच्छतुरिति नुमभावः। उपमालङ्कारः ॥१८॥

टिप्पनी—दधदिति। अत्र छेकानुप्रासस्यालङ्कार इति मल्लिनाथोक्तया उपमया सह संसृष्टिः। रौद्रो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१८॥

বাঙ্গালা—শত্রু শিশুপালের প্রতি ক্রোধবশতঃ বলরামের শরীর আরক্তবর্ণ হইয়াছিল এবং তাহাতে ঘর্ম্মবিন্দু সকল আবির্ভূত হইয়া, সন্ধ্যাকালীন অরুণবর্ণ আকাশে প্রকাশমান নক্ষত্রসমূহের অনুকরণ করিতেছিল; বলরাম এইরূপ ঘর্ম্মবিন্দু সকল ধারণ করতঃ (বলিতে লাগিলেন) ॥১৮॥

अन्वयः—प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा कृष्णोत्तरासङ्गरुचं चौतपल्लवीं विदधत् (जगाद) ॥१९॥

टीका—प्रोल्लसदिति। पुनः प्रकर्षेणोल्लसतां कुण्डलयोः प्रोतानां स्यूतानां पद्मराग-

कर्कुण्डिकन्यावक्त्रान्तर्वासलब्धाधिवासया।
मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥२०॥

जगाद वदनच्छद्म-पद्मपर्य्यन्तपातिनः।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥२१॥

---

दलानां माणिक्यशकलानां त्विषा कान्त्या। प्रीतेति प्रपूर्वाद्दैञः कर्मणि क्तः, यजादित्वा-त्सम्प्रसारणम्। कृष्णोत्तरासङ्गौ नीलोत्तरीयम्। द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा संव्यानमुत्तरीयञ्चेत्यमरः। तस्य रूपं च्युतपल्लवस्येमां चौतपल्लवीं विदधत् कृष्णलोहित-मिश्रवर्णं च्युतपल्लववत्कुर्वन्नित्यर्थः। धूम्रधूम्रलौ कृष्णलोहिते इत्यमरवचनात्। अत्रान्यवर्णोऽन्यदीयत्वायोगात् सादृश्याक्षेपी निदर्शनालङ्कारः ॥१९॥

**टिप्पनी**—प्रौढ़वदिति। अत्र समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥१९॥

**বাঙ্গালা**—বলরামের কর্ণকুণ্ডলে যে সকল পদ্মরাগমণিখণ্ড বসান ছিল, তাহার দীপ্তিতে, কৃষ্ণবর্ণ উত্তরীয়বসন খানিকে আম্রপল্লবের বর্ণ করতঃ বলরাম (বলিতে লাগি-লেন) ॥১৯॥

**अन्वयः**—कर्कुण्डिकन्यावक्त्रान्तर्वासलब्धाधिवासया मदिरया कृतानुव्याधं मुखामोदम् उद्वमन् (जगाद) ॥२०॥

**टीका**—कर्कुण्डीति। पुनः कर्कुण्डिकन्यायाः रैवत्या वक्त्रस्यान्तः अभ्यन्तरे वासेन स्थित्या लब्धोऽधिवासो वासना यया तया तन्मुखसौरभवासितयेत्यर्थः। संस्कारो गन्धमाल्याद्यैर-धिवासनमुच्यते। मदिरया कृतानुव्याधं कृतसंसर्गं प्रियागण्डूषगन्धिनमित्यर्थः। व्यधजपो रनुपसर्गे इत्यनुपसर्गादप्प्रत्ययविधानादुपसृष्टे व्यधेर्घञ्प्रत्ययः। मुखामोदं स्वमुख-गन्धविशेषम्। आमोदः सोऽतिनिर्हारीत्यमरः। उद्वमन् उद्गिरन्। अत्र मदिरारामसुख-गन्धयोः स्वगन्धतिरोधानेन रामामुखगण्डूषमधुगन्धस्वीकारात्तद्गुणयोरलोत्तरस्यातिविशेष-त्वेन पूर्वसापेक्षत्वादङ्गाङ्गिभावेन सङ्करः। तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृति-रिति लक्षणात् ॥२०॥

**टिप्पनी**—कर्कुण्डीति। अत्र छेकानुप्रासस्यालङ्कार इति मल्लिनाथोक्ततद्गुणेन सह संसृष्टिः। समास-बाहुल्यात ओजो गुणः, गौड़ी च रीतिः ॥२०॥

**বাঙ্গালা**—রেবতীদেবীর মুখসৌরভে সুবাসিত মদিরা পান করায়, নিজের মুখ হইতে মনোহর সৌরভ বাহির করতঃ বলরাম (বলিতে লাগিলেন) ॥২০॥

**अन्वयः**—(रामः) उदग्रदशनांशुभिः वदनच्छद्मपद्मपर्य्यन्तपातिनः मधुलिहः श्वैत्यं नयन् जगाद ॥२१॥

**टीका**—जगादेति। वदनमेव छद्म कपटं यस्य तत् पद्मं वदनमेव पद्ममित्यर्थः।

यद्वासुदेवेनादीनमनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥२२॥
नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥२३॥

---

छद्मशब्देनासत्यप्रतिपादनरूपोऽपह्नवः । तस्य पर्य्यन्तपातिनः प्रान्तसञ्चारिणः । मधु लिहन्तीति मधुलिहस्तान् मधुपान्, क्विप् । उदग्रैः उच्छ्रितैः दशनांशुभिः श्वैत्यं धावल्यं नयन् एवं जगाद । तद्रूपकालङ्कारः तस्य मधुपसन्निधापकवदनापह्नवसापेक्षत्वात्तेन सङ्करः ॥२१॥

**टिप्पनी**—जगादेति । अत्र छेकानुप्रासो वृत्त्यनुप्रासश्चेति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । गुणरीती पूर्ववत् ॥२१॥

**বাঙ্গালা**—বলরামের মুখ ত নহে, সে একটী পদ্ম ছিল; সুতরাং তাহার নিকট দিয়া যে সকল ভ্রমর উড়িতেছিল, বলরাম আপন উন্নত দন্তের কিরণে সেগুলিকে শুভ্রবর্ণ করতঃ বলিতে লাগিলেন ।২১॥

**अन्वयः**—वासुदेवेन अदीनम् अनादीनवं यत् ईरितम्, तस्य वचसः केवलं सपदि क्रिया उत्तरम् ॥२२॥

**टीका**—रामो जगादेत्युक्तं किं तदित्याकाङ्क्षायामाह । यदिति । वासुदेवेन न दीनमित्यदीनम् अकातरं नादीनवोऽस्येत्यनादीनवं निर्दोषम् । दोष आदीनवो मल इत्यमरः । यद्वचः ईरितम् उत्तिष्ठमानस्तु पर इत्यादिपद्यमाश्रित्य युक्तमित्यर्थः । तस्य वचसः सपदि क्रिया केवलं सद्योऽनुष्ठानमेवोत्तरं सिद्धान्तस्य चोक्तत्वादिति भावः ॥२२॥

**टिप्पनी**—यदिति । अत्र तस्य वचसः सपदि क्रियैव उत्तरम्, न पुनर्वाक्यात्मकमुत्तरम् उत्तरम् इत्यन्यव्यपोहनादार्थी परिसंख्यालङ्कारः छेकानुप्रासश्चेति द्वयोः संसृष्टिः । उत्साहस्य व्यङ्ग्यत्वात् वीरो रसः, उद्धतघटनाव्यञ्जकत्वात् ओजो गुणः, पाञ्चाली च रीतिः ॥२२॥

**বাঙ্গালা**—শ্রীকৃষ্ণ, তেজস্বিতাব্যঞ্জক এবং নির্দোষ যে কথা বলিয়াছেন; (সেই কথা অনুসারে) শীঘ্র কার্য্য করাই সেই কথার উত্তর ॥২২॥

**अन्वयः**—भूयस्या वाचा लघु अपि एतत् वचः न अतिशय्यते । अग्निः इन्धनौघधक् अपि त्विषा पूषणं न अत्येति ॥२३॥

**टीका**—अथ तदेव प्रतिपादयिष्यन् अनन्यातिशयतयोपस्करोति । नैतदिति । लघु सङ्क्षिप्तमप्येतद्वचो भूयस्या बहुतरया विस्तृतयापीत्यर्थः । द्विवचनविभज्येत्यादिना ईयसुनि बहोर्लोपो भू च बहोरितीकारलोपो बहोश्च भूरादेशः । वाचा नातिशय्यते नातिरिच्यते गुर्वर्थत्वादिति भावः । शीङः कर्मणि लटि यक्, अयङ्यि क्ङितीति अयङादेशः ।

संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।
सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥२४॥

---

तथाहि इन्धनौघान् दहतीति इन्धनौघधक् काष्ठराशिदाहकः भूयानपीत्यर्थः । क्विपि घत्वधत्वे भष्भावः । अग्निस्त्विषा प्रभया पूषणं सूर्यमल्पीयांसमपीति भावः । नात्येति नातिक्रामति तेजसः प्रभावस्त्वमिव वचसोऽयं वस्तुमलङ्घ्यत्वहेतुरित्यर्थः । अत्र समानधर्म-विम्बविम्बिततया दृष्टान्तालङ्कारः ॥२३॥

**टिप्पनी**—नेति । अत्र अतिशय्यते अत्येति इत्युभयोरपि एकातिक्रमार्थत्वात् अथ च सादृश्यपृथक्-निर्द्देशात् प्रतिवस्तूपमैव भवितुं युक्ता । टीकोक्तदृष्टान्तस्तु चिन्त्यः । वच इत्यनेन प्रक्रम्य वाचा इत्यभिधानात् प्रक्रान्तिविषयो भग्नप्रक्रमतादोषः ; स च "नैषा लघ्वपि भूयस्या वाचा वाचातिशय्यते" इति पाठेन समाधेयः । प्रसादो गुणः, पाञ्चाली च रीतिः ॥२३॥

**বাঙ্গালা**—শ্রীকৃষ্ণের এই কথা কয়টী অল্প হইলেও, বহুতর বাক্যে উহাকে অতিক্রম করা যায় না। কারণ, অগ্নি কাষ্ঠরাশি দগ্ধ করিতে থাকিলেও তেজ দ্বারা সূর্য্যকে অতিক্রম করিতে পারে না ॥২৩॥

**अन्वयः**—अतः सुविस्तरतराः मे वाचः संक्षिप्तस्य अपि अर्थगरीयसः अस्य वाक्यस्य भाष्यभूताः भवन्तु ॥२४॥

**टीका**—यदि हरिवचो नातिशय्यते अलं तर्हि तत्रापि वागारम्भैरित्याह । संक्षिप्त-स्येति । अतो हरिवचसोऽनतिशयनीयत्वादेव सुविस्तरतराः प्रपञ्चतराः । प्रथने वाव-शब्द इति घञः प्रतिषेधे ऋदोरबित्यप् । मे वाचः संक्षिप्तस्याऽल्पाक्षरस्यार्थेन गरीयसः सूत्रकल्पस्येत्यर्थः । अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरिति लक्षणात् । अस्यैव नान्यस्य भाष्यभूताः भाष्यैः समाः । नित्यसमासः । क्ष्मादौ जन्तौ भूतं क्लीवं समेऽतीते त्रिष्विति वैजयन्ती । व्याख्यानरूपा भवन्त्वित्यर्थः । सूत्रव्याख्यानविशेषो भाष्यम् । सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरिति । मया तु तदेव विशेषप्रकाशनाय व्याख्यायते न त्वतिशयाय प्रत्याख्यायते इत्यदोष इत्यर्थः । उपमालङ्कारः ॥२४॥

**टिप्पनी**—संक्षिप्तस्येति । अत्रापि वाक्यपदेन प्रक्रम्य वागित्यभिधानात् पूर्ववत् भग्नप्रक्रमतादोषः ; सोऽपि च 'सुविस्तरतरं वाक्यम् अस्तु भाष्यसमं मम' इति परार्द्धपाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

**বাঙ্গালা**—অতএব শ্রীকৃষ্ণের বাক্য সংক্ষিপ্ত হইলেও, অর্থ অনুসারে উহা অতিশয় গুরুতর; সুতরাং আমার এই প্রচুরতর বাক্যগুলি ঐ বাক্যের ভাষ্যস্বরূপ হউক ॥২৪॥

विरोधिवचसो मूकान् वागीशानपि कुर्वते ।
जड़ानप्यनुलोमार्थान् प्रवाचः कृतिनां गिरः ॥२५॥
षड़् गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्त्तुमिति दुर्मेधसोऽप्यलम् ॥२६॥

---

अन्वयः—कृतिनां गिरः विरोधिवचसः वागीशान् अपि मूकान् कुर्वते ; अनुलोमार्थान् जड़ान् अपि प्रवाचः कुर्वते ॥२५॥

टीका—इत्थं यानं सिद्धान्तयित्वा तत्रोद्धवप्रतिरोधं हृदि निधाय त्रिभिः प्रत्याचष्टे । विरोधीति । कृतिनां कुशलानां गिरः कर्त्र्यः विरोधिवचसः, प्रतिकूलवादिनो वागीशान् वाक्पतीनपि । वागीशो वाक्पतिः समावित्यमरः । मूकान्निर्वाचः कुर्वते जड़यन्तीत्यर्थः अनुलोमोऽनुकूलोऽर्थोऽभिधेयं येषां तेऽनुलोमार्थाः अनुकूलवादिनः तान् जड़ानज्ञानपि प्रवाचः प्रगल्भवाचः कुर्वते अतोऽस्मद्गिरः प्रवाच्या इति भावः । अत्र वागीशानां मूकत्वकरणाज्जड़ानां प्रवाक्त्वकरणाच्च शक्यवस्तुकरणरूपो विशेषोऽलङ्कारः असम्बन्धे सम्बन्धातिशयोक्तिप्रतिभोत्थापित इति सङ्करः ॥२५॥

टिप्पनी—विरोधीति । अत्र कुर्वत इत्येकया क्रियया सह वागीशजड़योः कर्मतया अभिसम्बन्धानुप्रयोगितापि टीकोक्तसङ्करे युज्यते । गुणरीती पूर्ववत् ॥२५॥

বাঙ্গালা—দক্ষ লোকদিগের বাক্য, প্রতিবাদী বাগ্মীদিগকেও নির্বাক্ করিয়া থাকে ; আবার নিজের অনুকূলবাদী মূর্খদিগকেও প্রকৃষ্ট বক্তা করিয়া তোলে ॥২৫॥

अन्वयः—दुर्मेधः अपि ग्रन्थान् अधीत्य षट् गुणाः, तिस्रः शक्तयः सिद्धयश्च, त्रयः उदयाः, इति व्याकर्त्तुम् अलम् ॥२६॥

टीका—नन्वात्मनीनेन स्वामिना बुद्धेः फलमनाग्रह इति न्यायेन शास्त्रज्ञवचनं प्रतिकूलमपि ग्राह्यमेवेत्याशङ्क्याह । षड़िति । दुष्टा मेधा येषां ते दुर्मेधसः मन्दबुद्धयोऽपि । नित्यमसिच् प्रजामेधयोरिति समासान्तोऽसिच् प्रत्ययः । ग्रन्थानौशनसादीनधीत्य पठित्वा गुणाः सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः षट् । शक्तयः प्रभुत्वमन्त्रोत्साहाख्यास्तिस्रः । सिद्धयः पूर्वोक्तशक्तित्रयसाध्याः पुरुषार्थलाभात्मिकाः ताश्च तिस्रः प्रभुसिद्धिर्मन्त्रसिद्धिरुत्साहसिद्धिश्चेति । उदयाः वृद्धिक्षयावस्थानानि चलितन्यायेन उदया उच्यन्ते तत्र वृद्धिक्षयौ स्वशक्तिसिद्धयोः पूर्वावस्थानादुपचयापचयौ स्थानं ते च त्रय इति व्याकर्त्तुं व्याख्यातुमलं समर्थाः । पर्याप्तिवचनेष्वलमर्थेष्विति तुमुन् पञ्चाङ्गनिर्णयशक्तिविकलानां सन्ध्यादिरूपसञ्ज्ञामात्रपठकानाम् अशास्त्रज्ञत्वादुद्धवादयो न ग्राह्यवचना इत्यभिसन्धिः अत्रामरः । सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनामिति । तत्रारिविजिगीषो-

अनिर्लोडितकार्य्यस्य वाग्जालं वाग्मिनो वृथा।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥२७॥
सर्वकार्य्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥२८॥

---

र्य्यं वस्थाकरणमैक्यं सन्धिः विरोधो विग्रहः, विजिगीषोररिं प्रति यात्रा यानं, तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम्। दुर्बलप्रबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः। अरिणा पीड्यमानस्य बलवदाश्रयणं संश्रयः कोषदण्डोत्थं तेजः प्रभावः कार्त्तव्यार्थेषु स्थेयान् प्रयत्न उत्साहः षड्गुणचिन्तनं मन्त्रः गतमन्यदिति सङ्क्षेपः ॥२६॥

**टिप्पनी**—षड़िति। अत्रापि गुणरीती पूर्ववत् ॥२६॥

**বাঙ্গালা**—অল্পবুদ্ধি লোকেরাও, শুক্রনীতিপ্রভৃতি গ্রন্থ অধ্যয়ন করিয়া এরূপ ব্যাখ্যা করিতে পারে যে, রাজাদের গুণ ছয়টী, শক্তি তিনটী ও সিদ্ধি তিনটী এবং উদয়ও তিনটী (টীকা দ্রষ্টব্য) ॥২৬॥

**अन्वयः**—अनिर्लोडितकार्य्यस्य वाग्मिनः वाग्जालम्, निमित्तात् अपराद्धेषोः धानुष्कस्य वल्गितम् इव वृथा ॥२७॥

**टीका**—ननु शास्त्रोक्तार्थव्याख्यातैव शास्त्रज्ञः स एव शास्त्रवचनस्यैवाशङ्क्याह। अनिर्लोडितेति। अनिर्लोडितं नालोकितं कार्य्यं येन तस्य कार्य्याकार्य्यमजानत इत्यर्थः। वाचोऽस्य सन्तीति वाग्मी वावदूकः। वाचो युक्तिःपटुर्वाग्मी वावदूकोऽतिवक्तरीत्यमरः। वाचो ग्मिनिरिति ग्मिनिप्रत्ययः। तस्य वाग्जालं वागडम्बरो निमित्तात् लक्ष्यात्। वेध्यं लक्ष्यं निमित्तं च शरव्यं च समं विदुरिति वैजयन्ती। अपराद्धेषोः स्खलितबाणस्य धनुः प्रहरणमस्येति धानुष्को धन्वी। प्रहरणमिति ठक्, इसुसुक्तान्तात् कः। अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः। धन्वी धनुष्मान् धानुष्क इत्यमरः। तस्य वल्गितमिव वृथा निष्फलम्। कार्य्यंमस्य वचो ग्राह्यं न तु वाग्जालस्येति भावः ॥२७॥

**टिप्पनी**—अनिर्लोडितेति। गुणरीती पूर्ववत् ॥२७॥

**বাঙ্গালা**—ধনুর্দ্ধরের বাণ লক্ষ্যভ্রষ্ট হইয়া গেলে পরও তাহার আস্ফালন যেমন নিষ্ফল; সেইরূপ যে কার্য্য সম্পাদন করে নাই, তাদৃশ বাগ্মীর বাক্যসমূহও নিষ্ফল ॥২৭॥

**अन्वयः**—सर्वकार्य्यशरीरेषु अङ्गस्कन्धपञ्चकम् मुक्त्वा सौगतानाम् अन्य आत्मा इव, महीभृताम् अन्यः मन्त्रः नास्ति ॥२८॥

**टीका**—षाड्गुण्यादिपाठमात्रं न मन्त्र इति सिद्धं सम्प्रति स्वयं मन्त्रस्वरूपमाह। सर्वेति। कार्य्याणि सन्ध्यादीनि शरीराणीव इत्युपमितसमासः। सौगतानामिवेति श्लिष्टत्वेषु सर्वकार्य्यशरीरेषु सर्वेषु शरीरेष्विव सर्वकार्य्येष्वित्यर्थः अङ्गानि स्कन्धा इवेत्यु-

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥२९॥

---

पमितसमासः । तेषां पञ्चकं युक्तम् । स्कन्धपञ्चकमित्याङ्गपञ्चकं चिन्त्वेत्यर्थः । पञ्च परिमाणमस्येति पञ्चकम् । सङ्ख्यायाः संज्ञा सङ्घसूत्राध्ययनेष्विति कप्रत्ययः । सुगतो भक्तिभंजनीय एषां सौगताः बौद्धाः । भक्तिरित्यण् प्रत्ययः । तेषामन्य आत्मैव मद्वीभूतामन्यो मन्त्रो नास्ति । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विपत्तिप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह कामन्दकः, सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यत इति । रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः । तत्र विषयप्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धः । एवं पञ्चधा परिवर्त्तमानो ज्ञानसन्तान एवात्मा इति बौद्धाः । एवं यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकातिरिक्त आत्मा नास्ति । तथा राज्ञामङ्गपञ्चकातिरिक्तो मन्त्रो नास्तीत्युपमालङ्कारः, तच्चात्मकं समग्रमेवेत्ययमेव यात्राकाल इति भावः ॥२८॥

टिप्पनी—सर्वेति । पूर्वार्द्धे लुप्तोपमाद्वयम्, तेन च मल्लिनाथोक्ता पराङ्गगतश्रौतोपमा सङ्कीर्य्यते । ओजो गुणः, गौड़ी च रीतिः ॥२८॥

बाङ्गाला—বৌদ্ধদিগের মতে যেমন সমস্ত দেহে পঞ্চ স্কন্ধ ব্যতীত অন্য আত্মা নাই ; রাজাদেরও তেমন সমস্ত কার্য্যে পঞ্চ অঙ্গ ব্যতীত অন্য মন্ত্রণা নাই ।

(স্কন্ধ—বিভাগ। বৌদ্ধদের মতে তাহা পাঁচ প্রকার ;—রূপস্কন্ধ, বেদনাস্কন্ধ, বিজ্ঞানস্কন্ধ, সংজ্ঞাস্কন্ধ ও সংস্কারস্কন্ধ। দৃশ্যমান সকল বস্তুই রূপস্কন্ধ ; তাহার জ্ঞান—বেদনাস্কন্ধ ; ধারাবাহী আশ্রয়জ্ঞান—বিজ্ঞানস্কন্ধ, বস্তুসমূহের নাম—সংজ্ঞাস্কন্ধ ; আর চিত্তে ছাপ পড়া—সংস্কারস্কন্ধ ।)

(পঞ্চ অঙ্গ ;—কার্য্য আরম্ভের উপায় ; কার্য্য সাধনের উপযোগী দ্রব্যসংগ্রহ ; দেশ ও কালের নিরূপণ ; বিপদের প্রতীকার ; আর কার্য্যসাধন) ॥২৮॥

अन्वयः—संवृतैः सर्वाङ्गैः (उपलक्षितः) अपि मन्त्रः अधीरः योधः इव परेभ्यः भेदशङ्कया चिरं स्थातुं न सहते ॥२९॥

टीका—अथ मन्त्रितार्थक्रियाविलम्बे दोषमाह । मन्त्र इति । संवृतैर्गुप्तैः सर्वाङ्गैः पूर्वोक्तैरुपायादिभिरुरःस्थलादिभिश्च उपलक्षितोऽपि सर्वाङ्गसंवृतोपीत्यर्थः मन्त्रो विचारः अधीरो भीरुः युध्यत इति योधो भट इव । पचाद्यच् । परेभ्योऽन्येभ्योऽरिभ्यश्च । पर दूरान्यमुख्येषु परोऽरिपरम लनोरिति वैजयन्ती । भेदो विदारणं तृतीयगामित्वं च तस्य शङ्कया चिरं स्थातुं विलम्बितुमित्यर्थः न सहते न क्षमः । शकधृषेत्यादिना तुमुन् प्रत्ययः । अतो न विलम्बितव्यमन्यथा मन्त्रभेदे कार्य्यहानिः स्यादिति भावः ॥२९॥

आत्मोदयः परग्लानिर्द्वयन्नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥३०॥
तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥३१॥

---

**टिप्पनी**—मन्त्र इति। अत्र पूर्णोपमालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

**বাঙ্গালা**—বক্ষঃস্থল প্রভৃতি সমস্ত অঙ্গ আবৃত থাকিলেও, ভীরু যোদ্ধা যেমন শত্রু কর্ত্তৃক দেহবিদারণের আশঙ্কায় অনেক কাল যুদ্ধস্থানে থাকিতে পারে না, সেইরূপ উপায় প্রভৃতি সমস্ত অঙ্গ গুপ্ত থাকিলেও, অন্যের নিকট ব্যক্ত হইবার আশঙ্কায় মন্ত্রণা, দীর্ঘকাল বিলম্ব সহ্য করিতে পারে না ॥২৯॥

**अन्वयः**—आत्मोदयः परग्लानिः इति द्वयम् इयती नीतिः। कृतिभिः तदूरीकृत्य वाचस्पत्यं प्रतायते ॥३०॥

**टीका**—किञ्च नीतिसर्वस्वपर्य्यालोचनयापि न विलम्बः कार्य्य इत्यभिप्रेत्याह। आत्मोदय इति। आत्मन उदयो वृद्धिः परस्य शत्रोर्ग्लानिर्हानिः। वीज्याज्वरिभ्यो निरित्यौणादिको निःप्रत्ययः। इति द्वयम् इदं परिमाणमस्या इति इयती एतावती। किमिदंभ्यां वो घ इति वतुपो वस्य घस्य उगितश्चेति ङीप्। नीतिः नीतिसंग्रहः एतद्द्वयातिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः। यदन्यत् षड्गुण्यादिवर्णनं तत्सर्वं मस्यैव प्रपञ्च इत्याह। तदिति। तद् द्वयमूरीकृत्याङ्गीकृत्य ऊरीकृतमुररीकृतमङ्गीकृतमित्यमरः। ऊर्यादिच्विडाचश्चेति गतिसंज्ञायां कुगतिप्रादय इति समासे क्त्वो ल्यप्। कृतिभिः कुशलैः वाचस्पत्यं वाग्मित्वम्। कस्कादित्वादलुक् सत्वे षष्ठ्याः पतिपुत्रेत्यादिना सत्वमिति स्वामी तत्र, तस्य छन्दोविषयत्वात् ब्राह्मणादित्वात् भावे ष्यञ् प्रत्ययः। प्रतायते विस्तार्य्यते। कर्मणि लट्। तनोतेर्यकीत्यात्वम्। तस्मादात्मोदयार्थिभिः अविलम्बाच्छत्रुरुच्छेत्तव्यः तन्नान्तरीयत्वात्तस्येति भावः ॥३०॥

**टिप्पनी**—आत्मोदय इति। गुणरीती पूर्ववत् ॥३०॥

**বাঙ্গালা**—আপনার উন্নতি, আর শত্রুর ক্ষতি—এই দুইটীমাত্রই নীতির বিষয়। সুতরাং কার্য্যকুশল ব্যক্তিরা সেই দুইটীকে স্বীকারপূর্ব্বক কথা বলিয়া বাগ্মিত্ব প্রকাশ করিয়া থাকেন ॥৩০॥

**अन्वयः**—परेण अपि महिम्ना महात्मनां न तृप्तियोगः (भवति)। अत्र पूर्णः (सन् पुनः) चन्द्रोदयाकाङ्क्षी महार्णवः दृष्टान्तः ॥३१॥

**टीका**—ननु लब्धोदयस्य किं परोच्छित्त्येत्यत्राह। तृप्तियोग इति। महीयसां महात्मनां परेणापि प्रभूतेनापि महिम्ना ऐश्वर्य्येण तृप्तियोगः सन्तोषलाभो न अत तृप्त्यभावे

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥२९॥

पमितसमासः । तेषां पञ्चकं सूक्तम्। स्कन्धपञ्चकमिवाङ्गपञ्चकं हित्वेत्यर्थः । पञ्च परिमाणमस्येति पञ्चकम् । सङ्ख्यायाः संज्ञा सङ्घसूत्राध्ययनेष्विति कप्रत्ययः । सुगतो भक्तिमंजनीय एषां सौगताः बौद्धाः । भक्तिरित्यण् प्रत्ययः । तेषामन्य आत्मेव मद्दीभृतामन्यो मन्त्रो नास्ति । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विपत्तिप्रतीकारः कार्य्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह कामन्दकः, सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते इति । रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः । तत्र विषयप्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धः । एवं पञ्चधा परिवर्त्तमानो ज्ञानसन्तान एवात्मा इति बौद्धाः । एवं यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकातिरिक्त आत्मा नास्ति । तथा राज्ञामङ्गपञ्चकातिरिक्तो मन्त्रो नास्तीत्युपमालङ्कारः, तच्चाङ्गकं समग्रमेवेत्ययमेव यात्राकाल इति भावः ॥२८॥

**टिप्पनी**—सर्वेति । पूर्वार्द्धे लुप्तोपमाद्वयम्, तेन च मल्लिनाथोक्ता पराङ्गगतश्रौतोपमा सङ्कीर्य्यते । ओजो गुणः, गौड़ो च रीतिः ॥२८॥

**বাঙ্গালা**—বৌদ্ধদিগের মতে যেমন সমস্ত দেহে পঞ্চ স্কন্ধ ব্যতীত অন্য আত্মা নাই; রাজাদেরও তেমন সমস্ত কার্য্যে পঞ্চ অঙ্গ ব্যতীত অন্য মন্ত্রণা নাই।

(স্কন্ধ—বিভাগ। বৌদ্ধদের মতে তাহা পাঁচ প্রকার;—রূপস্কন্ধ, বেদনাস্কন্ধ, বিজ্ঞানস্কন্ধ, সংজ্ঞাস্কন্ধ ও সংস্কারস্কন্ধ। দৃশ্যমান সকল বস্তুই রূপস্কন্ধ; তাহার জ্ঞান—বেদনাস্কন্ধ; ধারাবাহী আশ্রয়জ্ঞান—বিজ্ঞানস্কন্ধ, বস্তুসমূহের নাম—সংজ্ঞাস্কন্ধ; আর চিত্তে ছাপ পড়া—সংস্কারস্কন্ধ।)

(পঞ্চ অঙ্গ;—কার্য্য আরম্ভের উপায়; কার্য্য সাধনের উপযোগী দ্রব্যসংগ্রহ; দেশ ও কালের নিরূপণ; বিপদের প্রতীকার; আর কার্য্যসাধন) ॥২৮॥

**अन्वयः**—संवृतैः सर्वाङ्गैः (उपलक्षितः) अपि मन्त्रः अधीरः योधः इव परेभ्यः भेदशङ्कया चिरं स्थातुं न सहते ॥२९॥

**टीका**—अथ मन्त्रितार्थक्रियाविलम्बे दोषमाह । मन्त्र इति । संवृतैर्गुप्तैः सर्वाङ्गैः पूर्वोक्तैरुपायादिभिरुरःस्थलादिभिश्च उपलक्षितोऽपि सर्वाङ्गसंवृतोपीत्यर्थः मन्त्रो विचारः अधीरो भीरुः युध्यत इति योधो भट इव । पचाद्यच् । परेभ्योऽन्येभ्योऽरिभ्यश्च । परं दूरान्यमुख्येषु परोऽरिपरमात्मनोरिति वैजयन्ती । भेदो विदारणं तृतीयगामित्वं च तस्य शङ्कया चिरं स्थातुं विलम्बितुमित्यर्थः न सहते न क्षमः । शकधृषेत्यादिना तुमुन् प्रत्ययः । अतो न विलम्बितव्यमन्यथा मन्त्रभेदे कार्य्यहानिः स्यादिति भावः ॥२९॥

आत्मोदयः परग्लानिर्द्वयन्नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥३०॥
तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥३१॥

---

टिप्पनी—मन्त्र इति । अत्र पूर्णोपमालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—বক্ষঃস্থল প্রভৃতি সমস্ত অঙ্গ আবৃত থাকিলেও, ভীরু যোদ্ধা যেমন শত্রু কর্ত্তৃক দেহবিদারণের আশঙ্কায় অনেক কাল যুদ্ধস্থানে থাকিতে পারে না, সেইরূপ উপায় প্রভৃতি সমস্ত অঙ্গ গুপ্ত থাকিলেও, অন্যের নিকট ব্যক্ত হইবার আশঙ্কায় মন্ত্রণা, দীর্ঘকাল বিলম্ব সহ্য করিতে পারে না ॥২৯॥

अन्वयः—आत्मोदयः परग्लानिः इति द्वयम् इयती नीतिः । कृतिभिः तदूरीकृत्य वाचस्पत्यं प्रतायते ॥३०॥

टीका—किञ्च नीतिसर्वस्वपर्य्यालोचनयापि न विलम्बः कार्य्य इत्यभिप्रेत्याह । आत्मोदय इति । आत्मन उदयो वृद्धिः परस्य शत्रोर्ग्लानिर्हानिः । वीज्याज्वरिभ्यो निरित्यौणादिको निःप्रत्ययः । इति द्वयम् इदं परिमाणमस्या इति इयती एतावती । किमिदंभ्यां वोघ इति वतुपो वस्य घश्च उगितश्चेति ङीप् । नीतिः नीतिसंग्रहः एतद्-द्वयातिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः । यदन्यत् षड्गुण्यादिवर्णनं तत्सर्वं मस्यैव प्रपञ्च इत्याह । तदिति । तद् द्वयमूरीकृत्याङ्गीकृत्य ऊरीकृतमुररीकृतमङ्गीकृतमित्यमरः । ऊर्यादिच्विडाचश्चेति गतिसंज्ञायां कुगतिप्रादय इति समासे क्त्वो ल्यप् । कृतिभिः कुशलैः वाचस्पत्यं वाग्मित्वम् । कस्कादित्वादलुक् सत्वे षष्ठ्याः पतिपुत्रेत्यादिना सत्वमिति स्वामी तन्न, तस्य छन्दोविषयत्वात् ब्राह्मणादित्वात् भावे ष्यञ् प्रत्ययः । प्रतायते विस्तार्य्यते । कर्मणि लट् तनोतेर्यकीत्यात्वम् । तस्मादात्मोदयार्थिभिः अविलम्बात् कृत्युच्छेत्तव्यः तत्रान्तरीयत्वाच्चस्येति भावः ॥३०॥

टिप्पनी—आत्मोदय इति । गुणरीती पूर्ववत् ॥३०॥

বাঙ্গালা—আপনার উন্নতি, আর শত্রুর ক্ষতি—এই দুইটীমাত্রই নীতির বিষয় । সুতরাং কার্য্যকুশল ব্যক্তিরা সেই দুইটীকে স্বীকারপূর্ব্বক কথা বলিয়া বাগ্মিত্ব প্রকাশ করিয়া থাকেন ॥৩০॥

अन्वयः—परेण अपि महिम्ना महात्मनां न तृप्तियोगः (भवति) । अत्र पूर्णः (सन् पुनः) चन्द्रोदयाकाङ्क्षी महार्णवः दृष्टान्तः ॥३१॥

टीका—ननु लब्धोदयस्य किं परोच्छित्त्येत्यत्राह । तृप्तियोग इति । महीयसां महात्मनां परेणापि प्रभूतेनापि महिम्ना ऐश्वर्य्येण तृप्तियोगः सन्तोषलाभो न अत्र तृप्त्यभावे

सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम् ॥३२॥

समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥३३॥

---

पूर्णः सन् चन्द्रोदयाकाङ्क्षी वृद्ध्यर्थमिति भावः । महार्णवो दृष्टान्तः दृष्टः अन्तो निश्चयो यस्मिन् दृष्टान्तो निदर्शनमुपमानमिति यावत् राज्ञा वृद्ध्यवलम्बिना कार्य्या । असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गनेति न्यायादिति भावः । नायं दृष्टान्तालङ्कारः बिम्बप्रतिबिम्बभावेनौपम्यस्य गम्यत्वे तस्योत्थानात् । किन्तु दृष्टान्तशब्देन तस्याभिधानादुपमालङ्कारः । अतएव दृष्टान्तोदाहरणनिदर्शनरूपाः शब्दा न प्रयोक्तव्याः पौनरुक्त्यापत्तेरित्येकावल्यलङ्कारः ॥३१॥

**टिप्पनी**—तृप्तीति । अत्र द्वितीयपादे महि-महेति छेकानुप्रासश्चेति मल्लिनाथोक्तया उपमया सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

**বাঙ্গালা**—প্রচুর ঐশ্বর্য্যেও মহাত্মাদিগের তৃপ্তিলাভ হয় না। কেন না, পরিপূর্ণ থাকিয়াও আবার চন্দ্রোদয়ের প্রত্যাশী সমুদ্রই এ বিষয়ে দৃষ্টান্ত ॥৩১॥

**अन्वयः**—यः स्वल्पया अपि सम्पदा सुस्थिरम्मन्यः भवति ; मन्ये कृतकृत्यः विधिः तस्य तां न वर्द्धयति ॥३२॥

**टीका**—तथापि सन्तोषे दोषमाह । सम्पदेति । यः स्वल्पयापि सम्पदा सुस्थिरमात्मानं मन्यत इति सुस्थिरम्मन्यः स्वस्थमानी भवति । 'आत्ममाने खश्चेति खश् प्रत्यये' मुमागमः । तस्याल्पसन्तुष्टस्य तां स्वल्पसम्पदं कृतकृत्यस्तावतैव कृतार्थः विधिर्दैवमपि न वर्द्धयति अहमिति मन्ये पौरुषहीनाद्दैवमपि जुगुप्सते तत्तु वृत्तेः परमर्द्धिप्राप्तिरिति भावः ॥३२॥

**टिप्पनी**—सम्पदेति । अत्र मन्ये इत्यस्य उत्प्रेक्षावाचकतया वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, तथा वर्द्धनाभावं प्रति कृतकृत्यपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च ; अनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

**বাঙ্গালা**—যে ব্যক্তি অল্প সম্পত্তিতেও আপনাকে সুস্থির বলিয়া মনে করে; বিধাতা কৃতকার্য্য হইয়া তাহার সে সম্পত্তি আর বর্দ্ধিত করেন না ইহা আমি মনে করি ॥৩২॥

**अन्वयः**—मानिनः परान् समूलघातम् अघ्नन्तः न उद्यन्ति । अत्र प्रध्वंसितान्धतमसः रविः उदाहरणम् ॥३३॥

**टीका**—किञ्च परानाशनतश्च एवोदयो नान्य इत्याह । समूलेति । मानिनः अभिमानिनः परान् शत्रून् समूलं हत्वा समूलघातम् अघ्नन्तः अनुन्मूलयन्त इत्यर्थः । समूलाकृतजीवेषु हन्कृञ्ग्रह इति णमुल् प्रत्ययः, कषादिषु यथाविध्यनुप्रयोग इति हन्तेरनु-

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते॥३४॥
म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम्।
पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम्॥३५॥

---

प्रयोगः। नोयन्ति किन्तु हत्वैवोद्यन्तीत्यर्थः। तत्र हत्वैवोदये, अन्धयतीत्यन्धं गाढं तमोऽन्धतमसम्। ध्वान्ते गाढेऽन्धतमसमित्यमरः। अवसमन्धेभ्यस्तमस इत्यच् प्रत्ययः। प्रध्वंसितमन्धतमसं येन सः उदयात्प्रागिति भावः। वह्निरुदाहरणं दृष्टान्तः। अत्रापि दृष्टान्तोऽत्र प्रहार्थैव इतिवद्रूपकालङ्कारो न तु दृष्टान्त इति द्रष्टव्यम्॥३३॥

टिप्पनी—समूलेति। अत्रापि गुणरीती पूर्ववत्॥३३॥

বাঙ্গালা—তেজস্বী ব্যক্তিরা শত্রুদিগকে সমূলে উন্মূলন না করিয়া অভ্যুদয় লাভ করেন না। গাঢ় অন্ধকারকে সম্পূর্ণ ধ্বংস করিয়া উদয়মান সূর্য্যই সেবিষয়ের উদাহরণ॥৩৩॥

अन्वयः—विपक्षम् अखिलीकृत्य प्रतिष्ठा दुर्लभा खलु। उदकं धूलिं पङ्कताम् अनीत्वा न अवतिष्ठते॥३४॥

टीका—किञ्चानुच्छिन्नशत्रोः प्रतिष्ठैव दुर्घटेत्याह। विपक्षमिति। विपक्षं शत्रुमखिलीकृत्य खिलमुल्लनमकृत्वा अनुन्मूल्येत्यर्थः प्रतिष्ठा दुर्लभा खलु। तथाहि, उदकं कर्तृ धूलिं स्वपरिभाविनीमिति भावः। पङ्कतामनीत्वा नाशमकृत्वेत्यर्थः नावतिष्ठते किन्तु नीत्वैव तिष्ठतीत्यर्थः। समवप्रविभ्यः स्थ इत्यात्मनेपदम्। वाक्यभेदेन प्रतिबिम्बनात्पेक्षो दृष्टान्तालङ्कारः॥३४॥

टिप्पनी—विपक्षमिति। गुणरीती पूर्ववत्॥३४॥

বাঙ্গালা—শত্রুকে উৎসন্ন না করিয়া প্রতিষ্ঠা লাভ করা দুষ্করই বটে। কেন না, জল, ধূলিকে কর্দ্দম না করিয়া অবস্থান করিতে পারে না॥৩৪॥

अन्वयः—एकः अपि रिपुः यावत् म्रियते तावत् सुखं कुतः? हि सैंहिकेयः असुरद्रुहां पुरः सोमं क्लिश्नाति॥३५॥

टीका—नन्वयं शिशुपाल एकाकी नः किं करिष्यतीत्याशङ्क्याह। म्रियत इति। एकोऽपि रिपुर्यावत् म्रियते अवतिष्ठते। मृङ् अवस्थाने इति धातोस्तौदादिकात् कर्त्तरि लट्, रिङ् शयग्लिङ्क्षु इति रिङादेशः। तावत्तदवधि सुखं कुतः। यावत्तावच्च साकल्येऽवधाविव्यमरः। तथाहि, सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः। तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद इत्यमरः। स्त्रीभ्यो ढक्। असुरद्रुहां देवानां पुरः अग्रे सोमं क्लिश्नाति बाधते। प्राचुर्य्यात्सोमग्रहणं सूर्य्यं चेति भावः। तस्मादेकोऽपि शत्रुरु-

सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यतः ।
स्यातामित्रौ मित्रे च सहजप्राकृतावपि ॥३६॥
उपकर्त्त्रारिणा सन्धिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥३७॥

---

च्छेत्तव्य इति भावः। अत्र : शेषमृणाच्छेषं शत्रोः शेषं न शेषयेदिति तात्पर्य्यम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥३५॥

टिप्पनी—म्रियत इति । गुणरीती पूर्ववत् ॥३५॥

वाङ्गाला—যে পর্য্যন্ত একটিমাত্রও শত্রু থাকিবে ; সে পর্য্যন্ত সুখ কোথায় ? দেখ— রাহু, দেবগণের সম্মুখে চন্দ্রকে ক্লেশ দিয়া থাকে ॥৩৫॥

अन्वयः—कृत्रिमः सखा शत्रुश्च गरीयान् ; हि तौ कार्य्यतः (भवतः)। सहजप्राकृतौ अपि अमित्रौ मित्रे च स्याताम् ॥३६॥

टीका—ननु क्षुद्रोऽयं चैद्यः किं नः करिष्यतीत्याशङ्क्य तस्य बलवत्तां वक्तुं मित्रामित्रबलाबलविवेकं तावत्करोति। सखेति। क्रियया उपकारापकारान्यतररूपया निर्वृत्तः कृत्रिमः। डि्वतः क्त्रिः क्त्रेर्मम्नित्यम्। सखा सुहृत् शत्रुश्च कृत्रिमो गरीयान्, कुतः हि यथातौ कृत्रिममित्रशत्रू कार्य्यतः उपकारापकाररूपकार्य्यवशात् निर्वृत्ताविति शेषः। उक्तकार्य्यापाधेर्यावज्जीवमनपायादनयोर्मित्रामित्रभावेऽपि अनपायीति गरीयांस्त्वमिति भावः। सहजप्राकृतौ तु नैवमित्याह। स्यातामिति। सहजातः सहजः एकशरीरावयवत्वात् तत्र सहजं मित्रं मातृष्वसेयपितृष्वसेयादि, सहजशत्रुस्तु पितृव्यतत्पुत्रादिः, प्रकृत्या सिद्धः प्राकृतः पूर्वोक्तसहजकृत्रिमलक्षणरहित इत्यर्थः। तत्र विषयान्तरः प्राकृतः शत्रुः तदनन्तरः प्राकृतं मित्रम्। अपि त्वर्थे। तौ सहजप्राकृतौ शत्रुमित्रे च स्यातां तावात्कार्य्यवशादनियमेनोभयरूपतामापद्यते न कृत्रिमशत्रुमित्रे कृत्रिमः शत्रुः शत्रुरेव मित्रं च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ न तु सहजौ नापि प्राकृतावित्यर्थः। अनेन कृत्रिमत्वं सर्वापवादीति सिद्धम् ॥३६॥

टिप्पनी—सखेति। अत्र सखिशत्रोरेकगरीयस्त्वरूपगुणाभिसम्बन्धादेका तुल्ययोगिता ; पराद्धे च सहजप्राकृतयोरमित्रत्वमित्रत्वरूपगुणाभिसम्बन्धादपरा च तुल्ययोगितेत्यनयोर्मिथो निरपेक्षतया संसृष्टिः। गुणरीती पूर्ववत् ॥३६॥

वाङ्गाला—কৃত্রিম সখা ও কৃত্রিম শত্রুই প্রধান। কেন না, তাহারা কার্য্য দ্বারা হইয়া থাকে। সহজ প্রাকৃত ব্যক্তিরাও শত্রু এবং মিত্র হইয়া থাকে (টীকা দ্রষ্টব্য) ॥৩৬॥

अन्वयः—उपकर्त्रा अरिणा (सह) सन्धिः (कर्त्तव्यः ; किन्तु) अपकारिणा मित्रेण (सह) सन्धिर्न (कर्त्तव्यः)। हि उपकारापकारौ एतयोः लक्षणं लक्ष्यम् ॥३७॥

त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे!।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥३८॥

---

टीका—एवं चेदस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात्सन्धातव्यो न तु यातव्य इत्यत आह। उपकर्त्रेति। उपकर्त्रा उपकारकारिणा अरिणापि सहजेन प्राकृतेन चेति शेषः। सन्धिः कार्य्यः अरित्वापवादेन कृत्रिममित्रतायां बलीयस्या यावज्जीवमाविन्यास्तत्रोत्पन्नत्वादिति भावः। एवमपकारिणा मित्रेणापि सहजेन प्राकृतेन चेति शेषः। सन्धिर्न कार्य्यः। मित्रत्वापवादेन कृत्रिमशत्रुतायां बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः। ननु साधारणरिणा सन्दध्यात् मित्रेण कथं विरुन्ध्यादित्याशङ्क्य क्रियया तयोर्वैपरीत्याददोष इत्याह। हि यस्मादुपकारापकारावेव तयोर्मित्रामित्रयोर्लक्षणं स्वरूपं लक्ष्यं द्रष्टव्यम्। उपकर्त्तैव मित्रम् अपकर्त्तैव शत्रुरित्यर्थः। तस्मात् सहजमित्रत्वेऽपि चैद्यः क्रियया शत्रुत्वात् यातव्य एवेति भावः ॥३७॥

टिप्पनी—उपेति। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। तथा उपकर्त्रेति तृच्प्रत्ययेन प्रक्रम्य अपकारिणेति णिनिप्रत्ययाभिधानात् प्रत्ययविषयो भग्नप्रक्रमता दोषः; स च "अपकर्त्रा न बन्धुना" इति द्वितीयचरणपाठेन समाधेयः। किन्तु प्रथमार्द्धे 'सह' 'कर्त्तव्य' 'किन्तु' इति त्रयाणां पदानामनभिधानेऽपि न न्यूनपदता दोषः, तेषां सामर्थ्यादेवावगतेः "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणात्। गुणरीती पूर्ववत् ॥३७॥

বাঙ্গালা—উপকারী শত্রুর সহিতও সন্ধি করা উচিত; কিন্তু অপকারী মিত্রের সহিতও সন্ধি করা উচিত নহে। কারণ, উপকার এবং অপকারই মিত্র ও শত্রুর লক্ষণ জানিবে ॥৩৭॥

अन्वयः—(हे) हरे! त्वया रुक्मिणीं हरता (सता) चैद्यः विप्रकृतः। हि बद्धमूलस्य वैरतरोः स्त्रियः महत् मूलम् ॥३८॥

टीका—अथ चैद्यस्य कृत्रिमशत्रुत्वं चतुर्भिराह। त्वयेति। हे हरे! रुक्मिणीं हरता बन्धुभिस्तस्मै प्रदत्तां राक्षसधर्मेणोद्वहतेत्यर्थः। राक्षसो युद्धहरणादिति याज्ञवल्क्यः। गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृताविति मनुः। त्वया चैद्यो विप्रकृतः। तथाहि, बद्धमूलस्य रूढ़मूलस्य वैरतरोः स्त्रियो महत् प्रधानं मूलं हि निश्चये। रूपकसंसृष्टोऽयम् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥३८॥

टिप्पनी—त्वयेति। अत्र छेकानुप्रासोऽपि मल्लिनाथोक्तसंसृष्टौ युज्यते। गुणरीती पूर्ववत् ॥३८॥

বাঙ্গালা—কৃষ্ণ! তুমি রুক্মিণীকে অপহরণ করতঃ শিশুপালকে অপমানিত করিয়াছ। সুতরাং স্ত্রীলোকরাই বদ্ধমূল শত্রুতাবৃক্ষের প্রধান মূল (কারণ) হইয়া থাকে ॥৩৮॥

त्वयि भौमं गते जेतुमरौत्सीत्स पुरीमिमाम्।
प्रोषितार्य्यमणं मेरोरन्धकारस्तटीमिव ॥३९॥
आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत्।
कथापि खलु पापानामलमश्रेयसे यतः ॥४०॥
विराद्ध एवं भवता विराद्धा बहुधा च नः।
निर्वर्त्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः ॥४१॥

---

**अन्वयः**—त्वयि भौमं जेतु गते (सति), सः इमां पुरीं प्रोषितार्य्यमणं मेरोः तटीम् अन्धकारः इव अरौत्सीत् ॥३९॥

**टीका**—अथ तेनापि त्वं विप्रकृत इत्याह। त्वयीति। त्वयि भूमेरपत्यं पुमांसं भौमं नरकासुरं जेतुं गते सति स चैद्य इमां पुरीं द्वारकां प्रोषितोऽर्य्यमा सूर्य्यो यस्यास्तां मेरोस्तटीं सानुमन्धकार इवारौत्सीत् ररोध। रुधेर्लुङि लुङि रूपम्। उपमालङ्कारः ॥३९॥

**टिप्पनी**—त्वयीति। गुणरीती पूर्ववत् ॥३९॥

**বাঙ্গালা**—সূর্য্য দূরে চলিয়া গেলে, অন্ধকার যেমন সুমেরুপর্বতের সানুদেশকে অবরোধ করে; সেইরূপ তুমি নরকাসুরকে জয় করিতে গেলে, শিশুপাল এই দ্বারকানগরীকে অবরোধ করিয়াছিল ॥৩৯॥

**अन्वयः**—इदम् आलप्य अलम्, यत् सः बभ्रोः दारान् अपाहरत्। यतः पापानां कथा अपि अश्रेयसे अलं खलु ॥४०॥

**टीका**—अपकारान्तरमाह। आलप्येति। स चैद्यो बभ्रोर्यादवभेदस्य दारान् भार्य्याम्। भार्य्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनीत्यमरः। अपाहरत् इति यदिदं दारापहरणम् आलप्योच्चार्य्यालं नालपनीयमित्यर्थः। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इति क्त्वाप्रत्यये समासे ल्यबादेशः। यतः पापानां पापात्मनां कथनमुच्चारणमपि। चिन्तिपूजिकथिकुम्बीत्यप्रत्ययः। अश्रेयसेऽनर्थायालं समर्थम्। नमःस्वस्तीत्यादिना चतुर्थी। अत्र निषिध्यमानालपनानिषेधनसमर्थनात् कार्य्येण कारणसमर्थकोऽर्थान्तरन्यासः ॥४०॥

**टिप्पनी**—आलप्येति। अत्र द्वितीयार्द्धे खलशब्दयोः एकनिषेधार्थकतया अर्थस्य पुनरुक्तत्वावभासनात् प्रश्न निश्चयसमर्थार्थतया तद्दोषगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः। गुणरीती पूर्ववत् ॥४०॥

**বাঙ্গালা**—এ কথা উচ্চারণ করাও উচিত নহে যে, শিশুপাল বভ্রুর (যদুবংশীয় বিশেষের) ভার্য্যাকে অপহরণ করিয়াছিল। যেহেতু, পাপের কথাও অমঙ্গল জন্মাইতে সমর্থ হয় ॥৪০॥

**अन्वयः**—भवता एवं विराद्धः बहुधा नः च विराद्धा श्रुतश्रवसः सुतः सः क्रियया अरिः निर्वर्त्त्यते ॥४१॥

---

विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥४२॥
मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥४३॥

---

**टीका**—फलितमाह । विराद्ध इति । एवं भवता विराद्धो विप्रकृतः । राधेरनिटः कर्मणि क्तः । बहुधा नोऽस्माकं च विराद्धा विप्रकर्त्ता श्रुतश्रवा नाम हरेः पितृष्वसा तस्याः सुतः पैतृष्वसेयत्वात् सहजमित्रमपीति भावः । स चैद्यः क्रियया पूर्वोक्तान्योन्यापक्रियया अरिर्निर्वर्त्यते अरिभिः शत्रुः क्रियते, अतो बलीयस्त्वादनुपेक्ष्य इति भावः ॥४१॥

**বাঙ্গালা**—তুমি এই ভাবে শিশুপালকে অপমানিত করিয়াছ; শিশুপালও নানা প্রকারে আমাদিগকে অপমানিত করিয়াছে। সুতরাং শ্রুতশ্রবার পুত্র শিশুপাল কার্য্য দ্বারাই আমাদের শত্রুরূপে পরিণত হইয়াছে ॥৪১॥

**अन्वयः**—ये नराः सामर्षे अरौ वैरं विधाय उदासते, ते उदर्चिषं कक्षे प्रक्षिप्य अभिमारुतं शेरते ॥४२॥

**टीका**—शत्रावुपेक्षायां दोषमाह । विधायेति । ये नराः पुमांसः । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नर इत्यमरः । सामर्षे क्रोधेन सरोषे अरौ वैरं विधाय स्वयमपकृत्येत्यर्थः उदासते उपेक्षन्ते, ते नराः कक्षे गुल्मे । कक्षस्तु गुल्मे दोर्मूले पापे जीर्णवने तृणे इति वैजयन्ती । उदर्चिषम् अग्निं प्रक्षिप्य अभिमारुतम् । आभिमुख्येऽव्ययीभावः । शेरते स्वपन्ति तद्दाहहेतुरित्यर्थः । शीङो रुडिति रुडागमः । अत्र ये उदासते ते शेरते इति विशिष्टौदासीन्यशयनयोर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात्तत्स्यच्छायामसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिवृत्तिरिति निदर्शनाभेदः । न चायं दृष्टान्तः, वाक्यभेदेन प्रतिबिम्बकरणाच्चेपे तस्योत्थानात्, अत्र तु वाक्यार्थे वाक्यार्थसमारोपादैक्यकथाक्यतायां तदभाव इत्यलङ्कारसर्वस्वकारः ॥४२॥

**टिप्पनी**—विधायेति । अत्र वृत्त्यनुप्रासच्छेकानुप्रासावपीति मल्लिनाथोक्तनिदर्शनया सह संसृष्टिः गुणरीती पूर्ववत् ॥४२॥

**বাঙ্গালা**—যে সকল লোক, পূর্ব হইতেই ক্রুদ্ধ শত্রুর সঙ্গে নূতন করিয়া আবার শত্রুতা জন্মাইয়া, পরে উদাসীন হইয়া থাকে; তাহারা গৃহপ্রকোষ্ঠে প্রজ্বলিত অগ্নি লাগাইয়া দিয়া, বায়ুর অভিমুখে শয়ন করে ॥৪২॥

**अन्वयः**—यः क्षमी, (सः) मनाक् अनभ्यावृत्त्या वा कामं क्षाम्यतु । (किन्तु) कः क्रियासमभिहारेण विराध्यन्तं क्षमेत ॥४३॥

**टीका**—तथापि बान्धवत्वात् सोढव्य इत्याशङ्क्याह । मनागिति । यः क्षमी सहनः । शमित्यष्टाभ्यो घिनुन् इति घिनुन्प्रत्ययः । स सोढा मनागल्पम् अभ्यावृत्तावपीति भावः; अनभ्यावृत्त्या सकृद्वा अनल्पत्वेऽपीति भावः, विराध्यन्तमपकुर्वाणं कामं भृशं क्षाम्यतु क्षम-

अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥४४॥
मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥४५॥

---

ताम् । सम्भावनायां लोट्, अमामन्तानां दीर्घः । क्रियासमभिहारेण भृशं पौनःपुन्येन चेत्यर्थः । न च पुंवाक्यध्वनेकार्थत्वं दोषाय । विराध्यन्तं कः क्षमेत सहेत सोढुं शक्नुयात् न कोऽपीत्यर्थः । शक्तिलिङ्गिति शक्यार्थे लिङ्, क्षमू प्रसहने दैवादिको भौवादिकश्च ॥४३॥

**टिप्पनी**—मनागिति । अत्र अर्थापत्तिरलङ्कारः, ओजो गुणः, गौड़ी रीतिः ॥४३॥

**বাঙ্গালা**—যে ব্যক্তি ক্ষমাশীল হয়, সে ব্যক্তি ইচ্ছানুসারে, অল্প অল্পপরিমাণে বার বার অপকারী শত্রুকে, কিম্বা একবার মাত্র গুরুতর অপকারী শত্রুকে ক্ষমা করিতে হয় করুক ; কিন্তু যে লোক বার বার গুরুতর অপকার করিয়াছে, তাহাকে কোন্ ব্যক্তি ক্ষমা করিয়া থাকে ॥৪৩॥

**अन्वयः**—अन्यदा योषितः लज्जा इव, पुंसः क्षमा भूषणम् ; सुरतेषु (योषितः) वैयात्यम् इव, परिभवे (पुंसः) पराक्रमः भूषणम् ॥४४॥

**टीका**—ननु सर्वदा क्षमैव पुंसो भूषणम् अतोऽपराधेऽपि क्षन्तव्यमत आह, अन्यदेति । अन्यदा सुरतव्यतिरिक्ते काले योषितो लज्जेव पुंसोऽन्यदा अपरिभवे क्षमा शमो भूषणं, परिभवे तु योषितः सुरतेषु वैयात्यं धार्ष्ट्यमिव । धृष्टे धृष्णुर्वियातश्चेत्यमरः । पराक्रमः पौरुषं भूष्यतेऽनेनेति भूषणम् आभरणम् एवं च क्रियावचनत्वाविरोध इति वल्लभोक्तं प्रत्युक्तम् ॥४४॥

**टिप्पनी**—अन्यदेति । अत्र श्रौतोपमाद्वयस्य परस्परनिरपेक्षतया संसृष्टिः प्रसादो गुणः वैदर्भी रीतिः ॥४४॥

**বাঙ্গালা**—অন্য সময়ে স্ত্রীলোকের লজ্জার ন্যায় পুরুষের ক্ষমা অলঙ্কার ; কিন্তু… স্ত্রীলোকের ধৃষ্টতার ন্যায় অপমানে পুরুষের পরাক্রমই অলঙ্কার ॥৪৪॥

**अन्वयः**—यः परावज्ञादुःखदग्धः मा जीवन् अपि जीवति, जननीक्लेशकारिणः तस्य अजननिः एव अस्तु ॥४५॥

**टीका**—अथ परिभवेऽप्यपराक्रमे त्रिभिर्निन्दामाह, मा जीवन्निति । यः परस्मात् अपकर्तुरवज्ञया अपमानेन यद्दुःखं तेन दग्धस्तप्तोऽत एव मा जीवन् गर्हितजीवी सन् । माङ्याक्रोश इति लटः शतृ-देशः । जीवति प्राणान्धारयति जनन्याः क्लेशकारिणः गर्भधारणप्रसवादिवेदनाकारिणस्तद्व्यतिरिक्तार्थक्रियाहीनस्येत्यर्थः तस्याजननमजननिरनुत्पत्तिरेवास्तु । जननीक्लेशनिवृत्त्यर्थमिति भावः । आक्रोशे नञ्, अनिरिति नञ्पूर्वाज्जनिधातोरनिप्रत्ययः ॥४५॥

पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥४६॥
असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ॥४७॥

---

टिप्पनी—मेति। अत्र छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

बाङ्गाला—যে ব্যক্তি পরের অবজ্ঞাদুঃখে দগ্ধ এবং ঘৃণিতজীবন হইয়াও প্রাণ ধারণ করে; মাতার কষ্টদায়ক সেই ব্যক্তির জন্মই যেন না হয় ॥৪৫॥

अन्वयः—यत् पादाहतं [सत्] मूर्द्धानम् अधिरोहति, अपमाने [सति] अपि स्वस्थात् देहिनः तत् रजः वरम् ॥४६॥

टीका—पादेति। यद्रजो धूलिः पादेनाहतं सत् उत्थायोड्डीय मूर्द्धानमाहन्तुरेव शिरोऽधिरोहति आक्रामति तद्रजः अचेतनमपीति भावः। अपमाने सत्यपि स्वस्थात् सन्तुष्टाद्देहिनः चेतनाद्वरं श्रेष्ठम्। व्यतिरेकालङ्कारः ॥४६॥

टिप्पनी—पादेति। अत्र अप्रस्तुतात् देहिसामान्यात् प्रस्तुतस्य देहिविशेषस्य बलरामादेः प्रतीतेरप्रस्तुतप्रशंसालङ्कारोऽपि। साहित्यदर्पणे अप्रस्तुतप्रशंसाप्रकरणे इदमुदाहृतञ्च। तेन टीकोक्तव्यतिरेकेणासौ सङ्कीर्य्यते, प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

बाङ्गाला—যে ধূলি চরণে আহত হইয়াই মস্তকে আরোহণ করে, সে ধূলি, অপমানেও সুস্থ হইয়া স্থিত লোক অপেক্ষা শ্রেষ্ঠ ॥৪৬॥

अन्वयः—जातिक्रियागुणैः कञ्चिदर्थम् असम्पादयतः पुंसः यदृच्छाशब्दवत् केवलं संज्ञायै जन्म (भवति) ॥४७॥

टीका—असम्पादयत इति। किञ्च जातिः ब्राह्मणत्वादिः, क्रिया इज्याध्ययनादिः, गुणः शौर्य्यादिः तैः साधनैः। करणे तृतीया। कञ्चिदर्थं सुकृतकीर्त्त्यादिपौरुषार्थमन्यत्र गोत्वपाचकत्वशौक्ल्यादिभिः स्वाभिधेयभूतैः करणैः कञ्चिदर्थं व्यवहाररूपं प्रयोजनमसम्पादयतः उभयत्र तादृग्जात्याद्यसम्भवादिति भावः। पुंसो जन्म सत्तालाभः यदृच्छाशब्दवत् इच्छाप्रकल्पितस्य जात्यादिप्रवृत्तिनिमित्तशून्यस्य डित्थादिशब्दस्येव। तत्र तस्येवेति वतिप्रत्ययः। स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समा इति केशवः। संज्ञायै केवलं संज्ञार्थमेव एकत्र पारिभाषिकं किञ्चिन्नाममात्रम् अनुभवितुम् अन्यत्र तादृक्तामनुभवितुमित्यर्थः ॥४७॥

टिप्पनी—असम्पादयत इति। अत्र पूर्णोपमालङ्कारः। प्रसादो गुणः वैदर्भी च रीतिः ॥४७॥

बाङ्गाला—ডিথপ্রভৃতি স্বেচ্ছাকল্পিত শব্দ জাতি, ক্রিয়া ও গুণ ইহার কোনটা দ্বারাই

তুঙ্গত্বমিতরা নাদ্রৌ নেদং সিন্ধাবগাধতা ।
অলঙ্ঘনীয়তাহেতুরুভয়ন্তন্মনস্বিনি ॥৪৮॥
তুল্যেঽপরাধে স্বর্ভানুর্ভানুমন্তং চিরেণ যৎ ।
হিমাংশুমাশু গ্রসতে তন্ম্রদিম্নঃ স্ফুটং ফলম্ ॥৪৯॥

---

কোন বাচ্যার্থই বলিতে পারে না (কেন না, সেগুলি তাহার নাই)। (অকর্ম্মণ্য) পুরুষও ব্রাহ্মণত্বাদি জাতি, যাগ-যজ্ঞাদি ক্রিয়া এবং শৌর্য্যবীর্য্যাদি গুণ ইহার কোনটা দ্বারাই কোন কার্য্য করিতে পারে না। সুতরাং সেই ডিত্থপ্রভৃতি স্বেচ্ছাকল্পিত শব্দের ন্যায় অকর্ম্মণ্য পুরুষেরও জন্মটা কেবল আপন নামটী লাভের জন্যই হইয়া থাকে ॥৪৭॥

**অন্বয়ঃ**—অদ্রৌ তুঙ্গত্বম্ [অস্তি] ইতরা ন ; সিন্ধৌ অগাধতা [অস্তি], ইদং ন ; অলঙ্ঘনীয়তাহেতুঃ তৎ উভয়ং মনস্বিনি [অস্তি] ॥৪৮॥

**টীকা**—এবমপৌরুষং দূষয়িত্বা পৌরুষং ভূষয়তি, তুঙ্গত্বমিতি। অদ্রৌ পর্ব্বতে তুঙ্গত্বমৌন্নত্যমস্তীতি শেষঃ। অস্তির্ভবন্তীপরোঽপ্রযুজ্যমানোঽপ্যস্তীত্যাদিভাষ্যাৎ। ভবন্তী পূর্ব্বাচার্য্যাণাং লটঃ সংজ্ঞা। ইতরা অগাধতা নাস্তি, সিন্ধৌ সমুদ্রে অগাধতা গম্ভীরতাস্তি ইদং তুঙ্গত্বং নাস্তি, মনস্বিনি বীরে তু অলঙ্ঘনীয়তাহেতুরলঙ্ঘ্যত্বকারণং তদুভয়ং তুঙ্গত্বমগাধতা চ। তস্মাদদ্রিসিন্ধুভ্যামধিকো মনস্বীতি ব্যতিরেকালঙ্কারঃ ॥৪৮॥

**টিপ্পনী**—তুঙ্গত্বমিতি। প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥৪৮॥

**বাঙ্গালা**—পর্বতে উচ্চতা আছে, কিন্তু অগাধতা নাই; আবার সমুদ্রে অগাধতা আছে, কিন্তু উচ্চতা নাই। পরন্তু অনতিক্রমণীয়তার প্রতি হেতু সেই দুইটীই বুদ্ধিমান্ পুরুষে থাকে ॥৪৮॥

**অন্বয়ঃ**—স্বর্ভানুঃ যৎ অপরাধে তুল্যে (অপি) চিরেণ ভানুমন্তং গ্রসতে ; (যচ্চ) আশু হিমাংশুং গ্রসতে তৎ ম্রদিম্নঃ ফলং স্ফুটম্ ॥৪৯॥

**টীকা**—সম্প্রতি শত্রৌ মার্দ্দবমনর্থায়েত্যাহ, তুল্য ইতি। স্বর্ভানুঃ রাহুঃ অপরাধে তুল্যেঽপি ভানুমন্তং সূর্য্যং চিরেণ গ্রসতে হিমাংশুং চন্দ্রমাশু শীঘ্রং গিলতীতি যৎ। গ্রসিতে গিলিতে গীর্য্যমিত্যভিধানাৎ। তৎ ম্রদিম্নো মার্দ্দবস্য ফলং স্ফুটম্। পৃথ্বাদিভ্য ইমনিচ্ ইতীমনিচ্ প্রত্যয়ঃ। তদ্বিপক্ষে তীব্রেণ ভবিতব্যম্ অন্যথা মৃদুঃ সর্ব্বত্র বাধ্যত ইতি ভাবঃ। এতচ্চ প্রস্তুতমপ্রস্তুতার্কেন্দুকথনেন সারূপ্যাৎ প্রতীয়তে ইত্যপ্রস্তুতপ্রশংসাভেদোঽয়ম্। অপ্রস্তুতস্য কথনাৎ প্রস্তুতং যত্র গম্যতে। অপ্রস্তুতপ্রশংসেয়ং সারূপ্যাদিনিয়ন্ত্রিতেতি লক্ষণাৎ ॥৪৯॥

**টিপ্পনী**—তুল্য ইতি। অত্র গ্রসত ইত্যেকয়া ক্রিয়য়া ভানুমন্তং হিমাংশুমিত্যুভয়োঃ কর্ম্মতয়াভিসম্বন্ধাৎ তুল্যযোগিতা 'ভানু' 'ভানু' ইতি ছেকানুপ্রাসশ্চেতি টীকোক্তাপ্রস্তুতপ্রশংসয়া সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥৪৯॥

स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि।
निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥५०॥
तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥५१॥

---

**বাঙ্গালা**—রাহুর নিকট সূর্য্য ও চন্দ্রের সমান অপরাধ থাকিলেও, যে হেতু রাহু দীর্ঘকালের পর সূর্য্যকে গ্রাস করে এবং শীঘ্র শীঘ্র চন্দ্রকে গ্রাস করে; সে হেতু মৃদুতার ফল স্পষ্টই দেখা যায় ॥৪৯॥

**अन्वयः**—असाराणां निदर्शनं बहुतृणं लघुः नरः अल्पे अपि परवायौ उपेयुषि स्वयं प्रणमति ॥५०॥

**टीका**—एतदेव भङ्ग्यन्तरेणाह, स्वयमिति। असाराणां दुर्बलानां निदर्शनं दृष्टान्तः अत एव ईषदसमाप्तं तृणं बहुतृणं तृणकल्पमित्यर्थः। विभाषा सुपो बहुच् पुरस्तादिति बहुच प्रत्ययः प्रकृतेः पूर्वं च भवति। स्यादीषदसमाप्तौ तु बहुच् प्रकृतिलिङ्गक इति वचनात् प्रकृतिलिङ्गता। लघुर्निःसारः पक्षी नरोऽल्पोऽपि परो वायुरिवेत्युपमितसमासः। बहु-तृणमिति सप्तोपमासादृश्यार्थात् कल्पब्देश्यदेशीयदेश्यादिति दृष्टिना कल्पवादीनामौ-पम्यवाचकेष्वभिधानात्। तस्मिन्नुपेयुषि प्राप्ते सति स्वयं प्रणमते स्वयमेव प्रह्वीभवति। कर्मवत् कर्मणा तुल्यक्रिय इति कर्मवद्भावात्। भावकर्मणोरित्यात्मनेपदं न दुहस्नुनमां यक्चिणाविति यक्प्रतिषेधः। वायुना तृणमिवाल्पीयसापि रिपुणा लघुरकर्मीन परिभूयत इत्यर्थः। उपमालङ्कारः ॥५०॥

**टिप्पनी**—स्वयमिति। प्रसादो गुणः वैदर्भी च रीतिः। एतदनुरूपः श्लोको यथा किराते—

"शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः॥" ॥५०॥

**বাঙ্গালা**—অসার পদার্থের (একমাত্র) নিদর্শন এবং তৃণের ন্যায় লঘু (হালকা) মনুষ্য, অল্প বায়ুর ন্যায় সামান্য শত্রু উপস্থিত হইলেও আপনা আপনিই অবনত হইয়া পড়ে ॥৫০॥

**अन्वयः**—दवीयान् अपि तेजस्वी तेजस्विमध्ये गण्यते। पञ्चतपसः तपनः जातवेदसां पञ्चमः ॥५१॥

**टीका**—पुनः पौरुषे गुणमाह, तेजस्वीति। दवीयानपि दूरस्थोऽपि। स्थूलदूरेत्या-दिना पूर्वगुणयणादिपरलोपौ। तेजस्वी तेजस्विनां मध्ये गण्यते सङ्ख्यायते। तथाहि, पञ्चाग्निसाध्यं तपो यस्य स तथा तस्य पञ्चतपसः पञ्चाग्निमध्ये तपस्यतः तपनोऽर्को जात-वेदसामग्नीनां पञ्चमः पञ्चानां पूरणः पञ्चमो जातवेदा भवतीत्यर्थः। विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः ॥५१॥

**टिप्पनी**—तेजस्वीति। अत्र परार्द्धे 'तप' 'तप' इति छेकानुप्रासस्येति टीकोक्तार्थान्तरन्यासेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

অকৃত্বা হেলয়া পাদমুচ্চৈর্মূর্দ্ধসু বিদ্বিষাম্ ।
কথঙ্কারমনালম্বা কীর্ত্তির্দ্যামধিরোহতি ॥৫২॥
অঙ্কাধিরোপিতমৃগশ্চন্দ্রমা মৃগলাঞ্ছনঃ ।
কেশরী নিষ্ঠুরক্ষিপ্তমৃগযূথো মৃগাধিপঃ ॥৫৩॥

---

বাঙ্গালা—তেজস্বী ব্যক্তি অতিদূরবর্ত্তী হইলেও, লোকে তাহাকে তেজস্বীর মধ্যেই গণ্য করিয়া থাকে। কেন না, পঞ্চতপানামক সাধকের পক্ষে (অতিদূরবর্ত্তী) সূর্য্য, (নিকটস্থ) চারিটী অগ্নির পঞ্চম হইয়া থাকে ॥৫১॥

অন্বয়ঃ—উচ্চৈঃ বিদ্বিষাং মূর্দ্ধসু হেলয়া পাদম্ অকৃত্বা অনালম্বা কীর্ত্তিঃ কথঙ্কারং দ্যাম্ অধিরোহতি ॥৫২॥

টীকা—গুণান্তরস্য ব্যতিরেকেণাহ, অকৃত্বেতি। উচ্চৈরুন্নতেষু বিদ্বিষাং মূর্দ্ধসু হেলয়া পাদমকৃত্বা অনিধায়। অনঞ্পূর্ব্বে ইতি নিষেধাৎ সমাসেঽপি ন ল্যবাদেশঃ। কীর্ত্তিঃ কথঙ্কারং কথমিত্যর্থঃ। অন্যথৈবং কথমিত্থংসু সিদ্ধাপ্রয়োগশ্চেদিত্যনর্থকাদেব করোতেঃ কথংপূর্ব্বাণ্ণমুল্। অনালম্বা নিরাধারা কীর্ত্তির্দ্যাং দিবমধিরোহতি ন কথঞ্চিদিত্যর্থঃ। কিঞ্চিন্নিঃশ্রেণ্যাদিকমনাক্রম্যোচ্চসৌধস্য দুরারোহত্বাদিতি ভাবঃ। তস্মাৎ কীর্ত্তিমিচ্ছতঃ পৌরুষমেবাশ্রয়ণীয়ম্ ইতি শ্লোকতাৎপর্য্যম্। কীর্ত্তিংতদ্বতোরভেদোপচারাৎসমানকর্তৃতানির্ব্বাহঃ। অত্র প্রস্তুতায়াঃ কীর্ত্তের্বিষয়মহিম্না অপ্রস্তুতপ্রাসাদারোহণস্ত্রীব্যবহারপ্রতীতেঃ সমাসোক্তিঃ ॥৫২॥

টিপ্পনী—অকৃত্বেতি। প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥৫২॥

বাঙ্গালা—শত্রুগণের উন্নত মস্তকে হেলায় পাদন্যাস না করিয়া, আশ্রয়হীন কীর্ত্তি কি করিয়া স্বর্গে আরোহণ করিতে পারে? ॥৫২॥

অন্বয়ঃ—অঙ্কাধিরোপিতমৃগঃ চন্দ্রমাঃ মৃগলাঞ্ছনঃ (খ্যাতঃ); নিষ্ঠুরক্ষিপ্তমৃগযূথঃ কেশরী মৃগাধিপঃ (খ্যাতঃ) ॥৫৩॥

টীকা—পৌরুষমেবাশ্রয়ণীয়মিত্যত্রান্বয়ব্যতিরেকদৃষ্টান্তমাহ, অঙ্কেতি। অঙ্কমুৎসঙ্গমধিরোপিতো মৃগো যেন স চন্দ্রমাঃ মৃগলাঞ্ছনো মৃগাঙ্কঃ তথা নিষ্ঠুরং যথা তথা ক্ষিপ্তো হতো মৃগযূথো মৃগসমূহো যেন স কেশরী সিংহো মৃগাধিপঃ, উভয়ত্রাপি খ্যাত ইতি শেষঃ, তস্মাচ্ছত্রৌ মার্দ্দবং দুষ্কীর্ত্ত্যৈ পৌরুষং তু কীর্ত্ত্যৈ ইতি ভাবঃ। অত্রাপ্রস্তুতকথনাৎ প্রস্তুতার্থপ্রতীতেরপ্রস্তুতপ্রশংসা ॥৫৩॥

টিপ্পনী—অঙ্কেতি। অত্র মৃগলাঞ্ছনতয়া খ্যাতিং প্রতি অঙ্কেত্যাদিপদস্যার্থো হেতুরিত্যেকং কাব্যলিঙ্গম্, মৃগাধিপতয়া খ্যাতিং প্রতি চ নিষ্ঠুরেত্যাদিপদস্যার্থো হেতুরিত্যপরং কাব্যলিঙ্গং টীকোক্তাপ্রস্তুতপ্রশংসয়া সহ সঙ্কীর্য্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৩॥

বাঙ্গালা—চন্দ্র, একটী হরিণকে ক্রোড়ে রাখিয়াছেন বলিয়াই তিনি হরিণাঙ্কনামে

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥५४॥
सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥५५॥

---

প্রসিদ্ধ; আবার সিংহ নিষ্ঠুরভাবে পশুসমূহকে বিনাশ করে বলিয়াই সে পশুরাজ নামে বিখ্যাত ॥৫৩॥

अन्वयः—चतुर्थोपायसाध्ये तु रिपौ सान्त्वम् अपक्रिया। कः प्राज्ञः स्वेद्यम् आमज्वरम् अम्भसा परिषिञ्चति ॥५४॥

टीका—ननु सामादिसुकरोपायमुपेक्ष्य किं पापिकसिद्धिना दण्डेन? यथाह मनुः, साम्ना भेदेन दानेन समस्तैर्वत वा पृथक्। विजेतुं प्रयतेतारीन्न युद्धेन कदाचनेति। तस्मात्सान्त्वमेव युक्तमित्याशङ्क्य द्वाभ्यां निराचष्टे। चतुर्थोपायेति। चतुर्थोपायसाध्ये दण्डसाध्ये रिपौ सान्त्वं साम। साम सान्त्वमुभे समे इत्यमरः। अपक्रिया अपकारः। तथाहि स्वेद्यं स्वेदार्हं स्वेदनकार्यमित्यर्थः। स्वेदस्तु स्वेदने घर्मे इति विश्वः। आमज्वरमपक्वज्वरमित्यर्थः। आमो रोगे रोगभेदे आमोऽपक्वे तु वाच्यवदिति विश्वः। कः प्राज्ञः पण्डितः अम्भसा जलेन परिषिञ्चति न कोऽपीत्यर्थः। ज्वरितस्याम्भःसेकवत् क्रुद्धस्य सान्त्वमुद्दीपकरं स्यात् अतो दण्ड्य एवेति भावः। वाक्यभेदेन प्रतिबिम्बकरणापेक्षो दृष्टान्तालङ्कारः ॥५४॥

टिप्पनी—चतुर्थोपायेति। प्रसादो गुणः, वैदर्भी च रीतिः ॥५४॥

বাঙ্গালা—যুদ্ধ দ্বারা যে শত্রুর প্রতীকার করা উচিত, তাহার প্রতি সামপ্রয়োগ করিলে অপকার হইবে। দেখ—যে তরুণ জ্বরে স্বেদ দেওয়া উচিত, তাহাতে কোন্ বুদ্ধিমান্ ব্যক্তি জল দ্বারা সেক করিয়া থাকে? ॥৫৪॥

अन्वयः—प्रतप्तस्य सर्पिषः सहसा तोयबिन्दवः इव सकोपस्य तस्य सामवादाः प्रत्युत दीपकाः (एव भवेयुः) ॥५५॥

टीका—सामेति। सकोपस्य रूढवैरस्य तस्य चैद्यस्य सामवादाः प्रियोक्तयः सहसा प्रतप्तस्य क्वथितस्य सर्पिषो घृतस्य तोयबिन्दव इव प्रत्युत वैपरीत्येन दीपकाः प्रज्वलनकारिणः न तु शान्तिकरा इत्यर्थः, तस्माद् दण्ड्य एव सः। मनुवचनन्त्वप्ररूढवैरविषयमिति भावः ॥५५॥

टिप्पनी—सामेति। अत्र श्रौतोपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—অত্যন্ত উত্তপ্ত ঘৃতের মধ্যে হঠাৎ জলবিন্দু নিক্ষেপ করিলে সে যেমন জ্বলিয়া উঠে; সেইরূপ ক্রুদ্ধ শিশুপালের নিকট সামবাক্য, প্রয়োগ করিলে, সে বৈপরিত্যে জ্বলিয়াই উঠিবে ॥৫৫॥

गुणानामायथातथ्यादर्थं विप्लावयन्ति ये।
अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥५६॥
स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे।
यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥५७॥

---

अन्वयः—ये गुणानाम् आयथातथ्यात् अर्थं विप्लावयन्ति; अमात्यव्यञ्जनाः शत्रुसंज्ञिताः ते राज्ञां दूष्याः ॥५६॥

टीका—एवं स्थिते केचिद्दुष्टवादयः प्रत्यावचीरन् तान् प्रत्याह, गुणानामिति। सन्ध्यादीनां गुणानामायथातथ्यात् यथातथात्वमनतिक्रम्य यथातथं यथायोग्यम् इति यावत्। यथार्थं तु यथातथमित्यमरः। यथार्थेऽव्ययीभावः स्नानपुंसकमिति नपुंसकत्वं, ह्रस्वो नपुंसके इति ह्रस्वत्वम्। ततो नञ्समासे अयथातथं तस्य भावः आयथातथ्यम्। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः, यथातथयथापुरयोः पर्यायेणेति विकल्पाच्चञ्पूर्वपदवृद्धिः। तस्मादायथातथ्यादयथायोग्यत्वादन्यकालेऽन्यप्रयोगादित्यर्थः। अर्थं प्रयोजनं विप्लावयन्ति कार्य्यहानिं कुर्वन्तीत्यर्थः। अमात्यानां व्यञ्जनं चिह्नं येषां ते तथोक्तास्तद्वेषधारिण इत्यर्थः। अवर्व्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः। वस्तुतस्तु शत्रुरिति संज्ञा एषां सञ्जाता शत्रुसंज्ञिताः शत्रव एव ते कूटमन्त्रिणो राज्ञां दूषयितुमर्हाः दूष्या गर्ह्याः त्याज्या इति यावत्। क्तस्यानां कर्त्तरि वेति कर्त्तरि षष्ठी। अतः स्वोक्तं न प्रतिरोद्धव्यमिति भावः ॥५६॥

टिप्पनी—गुणानामिति। अत्र ओजो गुणः, पाञ्चाली रीतिः ॥५६॥

বাঙ্গালা—যাহারা সন্ধি-বিগ্রহপ্রভৃতি গুণগুলিকে যথানিয়মে প্রয়োগ না করিয়া, কার্য্যের হানি করে; তাহারা অমাত্যবেশধারী শত্রু; সুতরাং তাহাদিগকে পরিত্যাগ করা, রাজাদের পক্ষে উচিত ॥৫৬॥

अन्वयः—केचित् स्वशक्त्युपचये यानम् आहुः, अपरे परस्य व्यसने यानम् आहुः। तत् द्वयम् (एव) आसीनं त्वाम् उत्थापयति ॥५७॥

टीका—ननु यातव्येऽपि काले यातव्य इत्याशङ्कायामेव काल इत्याह, स्वेति। केचिद्वृद्धाः स्वस्य शक्त्युपचये सामर्थ्यातिरेके यानं यात्रामाहुः। यथाह कामन्दकः, प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति। तथा विपक्षे व्यसनानपेक्षो क्षमो द्विषन्तं मुदितः प्रतीयादिति। अपरे वृद्धाः परस्य शत्रोर्व्यसने विपदि। व्यसनं विपदि भ्रंश इत्यमरः। यानमाहुः। अत्र मनुः, तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोरिति। तद् द्वयमुक्तपक्षद्वयं कर्त्तृ, आसीनमनुद्युक्तानम् ईदृशस्य इति शानजन्तात्स्वे;

लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः।
यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥५८॥
विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥५९॥

---

कारादेशः। त्वामुत्थापयति प्रेरयति। तदुभयलाभादौद्धक् कालो न कदापि लभ्यत इत्यर्थः ॥५७॥

टिप्पनी—सर्वेति। अत्र द्वितीयपादे छेकानुप्रासोऽलङ्कारः। वीरो रसः। बलरामोक्तौ प्रत्येकश्लोक एव वीरो रस इति केचित्। तन्न आलम्बनाद्यनुक्तत्वेनापरिपुष्टत्वात् वीररसस्थायिभावस्य उत्साहस्यापि च क्वचित् क्वचित् तु तात्पर्यवदेव विशेषानुसन्धानलभ्यत्वात्। सरभसयानान्तर्गतवीररसप्रधानामिव प्रबन्धरसैनैव सर्वेषां रसवत्त्वन्तु वयमप्यङ्गीकुर्म्म इति संक्षेपः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५७॥

বাঙ্গালা—কেহ কেহ বলেন—আপনার শক্তিবৃদ্ধির সময়ে শত্রুকে আক্রমণ করিতে যাইবে; আবার অন্য দল বলেন—শত্রুর বিপদের সময়ে তাহাকে আক্রমণ করিতে যাইবে। সেই দুই মতই, নিরুদ্যোগী তোমাকে উদ্যোগী করিয়া তুলিতেছে ।৫৭॥

अन्वयः—वेला इव भवतः क्षमा, लोकान् लिलङ्घयिषतः अलङ्घ्यान् अलघीयसः यादवाम्भोनिधीन् रुन्धे ॥५८॥

टीका—तत्र क्षमात्युपचयं तावल्लक्षयति, लिलङ्घयिषत इति। लोकान् लङ्घयितुमिच्छन्ती लिलङ्घयिषतः। लङ्घयतेः सनन्ताल्लटः शतरि शम्। अलङ्घ्यान् स्वयं दुर्लङ्घ्यान् अतः अलघीयसः अतिगुरून् अत एव यादवा अम्भोनिधय इवेत्युपमितसमासः, तान् यादवाम्भोनिधीन् भवतः क्षमा तितिक्षा वेलेव कूलमिव। वेला कूलेऽपि वारिधेरिति विश्वः। रुन्धे प्रतिबध्नाति अन्यथा प्रागेव सर्वं संहरेयुरिति भावः ॥५८॥

टिप्पनी—लिलङ्घेति। अत्र पूर्वार्द्धे वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, परार्द्धे तु लुप्तोपमापूर्णोपमयोरङ्गाङ्गिभावेन सङ्करः; समुदाये तु संसृष्टिः। वीरो रसः ओजो गुणः, पाञ्चाली च रीतिः ॥५८॥

বাঙ্গালা—সমুদ্রের ন্যায় অতিবিশাল যাদবসেনারা, সমস্ত লোককে অতিক্রম করিবার ইচ্ছা করিতেছে; কিন্তু তাহাদিগকে কেহই অতিক্রম করিতে পারে না; তথাপি তীরের ন্যায় তোমার ক্ষমাই তাহাদিগকে রোধ করিতেছে ।৫৮॥

अन्वयः—साक्षिमात्रे फलभाजि समीक्ष्योक्ते आत्मनि बुद्धेः भोगः इव साक्षिमात्रे फलभाजि त्वयि सेनायाः विजयः अपदिश्यताम् ॥५९॥

टीका—अभ्युदयप्रायमपरः यदक्लेशेनैव ते विजयलाभ इत्याह, विजय इति। सेनायाः क्रान्त्यां विजयः साक्षिमात्रे उदासीने एव फलभाजि त्वयि समीक्ष्योक्ते साङ्ख्योक्ते। साङ्ख्ये

हते हिड़िम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥६०॥
नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥६१॥

---

समाख्यामिति त्रिकाण्डः । आत्मनि बुद्धेर्महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य कर्त्र्याः भोगः सुखदुःखानुभव इवापदिश्यतां व्यवह्रियतां भृत्यजयपराजययोः स्वामिगामित्वादिति भावः । साङ्ख्या अप्याहुः, कर्त्तैव भवत्युदासीन इति सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिरिति च ॥५९॥

टिप्पनी—विजय इति । अत्र श्रौतोपमालङ्कारः, वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५९॥

বাঙ্গালা—সাংখ্যমতে বুদ্ধি, সুখদুঃখপ্রভৃতি ভোগ করে ; আর আত্মা তাহার সাক্ষী মাত্র থাকিয়া ফলভাগী হয় ; সেইরূপ যাদবসেনারা জয় করিবে, আর তুমি সাক্ষী মাত্র থাকিয়া ফলভাগী হইবে ॥৫৯॥

अन्वयः—हिड़िम्बरिपुणा युधि द्वैमातुरे राज्ञि हते (सति), चिरस्य मित्रव्यसनी दमघोषजः सुदमः ॥६०॥

टीका—अथ परस्य व्यसनमाह, हत इति । हिड़िम्बरिपुणा भीमेन द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः । मातुरुत्संख्यासम्भद्रपूर्वाया इत्यण् प्रत्ययः, उकारश्चान्तादेशो रेफपरः । तस्मिन् राज्ञि जरासन्धे सहिताभ्यां पत्नीभ्याम् अर्द्धशः प्रसूतो जरया नाम पिशाच्या सन्धितश्चेति कथयन्ति । युधि हते सति चिरस्य चिरकालेन । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः । मित्रव्यसनी मित्रव्यसनवान् मित्रभ्रंशवानिति यावत् । व्यसनं विपदि भ्रंश इत्यमरः । दमघोषाज्जातो दमघोषजश्चैद्यः सुखेन दम्यत इति सुदमः एकाकित्वात् सुसाध्य इत्यर्थः ॥६०॥

टिप्पनी—हत इति । अत्र चतुर्थपादे छेकानुप्रासोऽलङ्कारः । वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—ভীমসেন, যুদ্ধে জরাসন্ধরাজাকে বধ করিয়াছেন ; সুতরাং দমঘোষনন্দন শিশুপাল চিরকালের জন্য মিত্রশূন্য হইয়াছে ; অতএব তাহাকে এখন অনায়াসেই দমন করা যাইবে ॥৬০॥

अन्वयः—आपदि परः गम्यः (इति) यत् नीतिः, तत् मानिनः ह्रिये । विधुन्तुदस्य विधुः इव पूर्णः सः तस्य उत्सवाय (भवति) ॥६१॥

टीका—कष्टमायं पक्षोऽभ्युपेत्यवादिनोक्तो वस्तुतस्तु शूराणाम् अभिमयश्च एव दुष्टः साक्षसंवादी । यथाह कामन्दकः, यदा समस्तं प्रसभं निहन्तुम्पराक्रमाद्दूर्जितमप्य-

অন্যদুচ্ছৃঙ্খলং সত্ত্বমন্যচ্ছাস্ত্রনিয়ন্ত্রিতম্ ।
সামানাধিকরণ্যং হি তেজস্তিমিরয়োঃ কুতঃ ॥৬২॥
ইন্দ্রপ্রস্থগমস্তাবৎ কারি মা সন্তু চেদয়ঃ ।
আস্মাকদন্তিসান্নিধ্যাদ্বামনীভূতভূরুহঃ ॥৬৩॥

---

মিতম্ । তদাভিযায়াদহিতানি কুর্বন্নুপান্ততঃ কথং ব্যপীড়নানীত্যভিপ্রেত্যাহ, নীতিরিতি । পরঃ শত্রুঃ আপদি গম্যো গমনার্হঃ নীতিরিতি যত্তদাপদি গমনং মানিনঃ শৌর্য্যাভিমানিনঃ হ্রিয়ৈ লজ্জাকরমিত্যর্থঃ, কিন্তু পূর্ণঃ উপচিতগাত্রঃ স শত্রুস্তস্য মানিনঃ, বিধুশ্চন্দ্রঃ বিধুং তুদতি ছিনত্তীতি বিধুন্তুদো রাহুঃ । বিধ্বরুষোস্তুদ ইতি খশ্ প্রত্যয়ে মুমাগমঃ । তস্যেবোৎসবায় অত এব বলিনা বলবানেব যাতব্যঃ, বলিনস্ব বয়মিতি ভাবঃ ॥৬১॥

টিপ্পনী—নীতিরিতি । অত্র শ্রৌতোপমালঙ্কারঃ, বিধুর্বিধুন্তুদস্যেত্যত্র তু লাটানুপ্রাস উভয়োঃ সংসৃষ্টিঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬১॥

বাঙ্গালা—বিপদের সময়ে শত্রুকে আক্রমণ করিবে এই যে নীতি রহিয়াছে, তাহা তেজীয়ানের পক্ষে লজ্জাকর। সুতরাং পূর্ণচন্দ্র যেমন রাহুর আনন্দজনক, সেইরূপ প্রবল শত্রুই তেজীয়ানের আনন্দজনক ॥৬১॥

অন্বয়ঃ—উচ্ছৃঙ্খলং সত্ত্বম্ অন্যৎ, শাস্ত্রনিয়ন্ত্রিতং সত্ত্বঞ্চ অন্যৎ । হি তেজস্তিমিরয়োঃ সামানাধিকরণ্যং কুতঃ ॥৬২॥

টীকা—তর্হি পূর্বোদাহৃতমন্বাদিশাস্ত্রবিরোধঃ স্যাদিত্যাশঙ্ক্যাহ, অন্যদিতি । অন্যৎ উচ্ছৃঙ্খলমনর্গলং প্রসহ্যপীড়নক্ষমমিতি ভাবঃ সত্ত্বং বলম্ অন্যৎ, শাস্ত্রেণ মন্বাদিশাস্ত্রেণ নিয়ন্ত্রিতম্ উদাহৃতং পরব্যসনকালে সত্ত্বমন্যৎ তয়োঃ সাপেক্ষত্বনিরপেক্ষত্বাভ্যাং মিথোবিরোধান্নৈকশাস্ত্রত্বং সম্ভবতীত্যর্থঃ । অত্র দৃষ্টান্তমাহ, তেজস্তিমিরয়োঃ সমানমধিকরণং যয়োস্তয়োর্ভাবঃ সামানাধিকরণ্যম্ একাশ্রয়ত্বং কুতঃ ন কুতশ্চিৎ তয়োঃ সহানবস্থানবিরোধাদিতি ভাবঃ । তস্মাদুভয়োরুদিতানুদিতহোমবদ্ভিন্নবিষয়ত্বাদিতরেতরশাস্ত্রবিরোধো ন বাধক ইতি ভাবঃ ॥৬২॥

টিপ্পনী—অন্যদিতি । অত্র উভয়োঃ সামান্যয়োর্বিম্বপ্রতিবিম্বভাবাৎ দৃষ্টান্তোঽলঙ্কারঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬২॥

বাঙ্গালা—ইচ্ছানুসারে উৎপীড়নের উপযোগী বল এক রকমের; আবার শাস্ত্রনিয়মিত বল—অন্য রকমের। যে হেতু, আলোক ও অন্ধকারের এক স্থানে অবস্থান সম্ভব হয় কিরূপে ? ॥৬২॥

অন্বয়ঃ—ইন্দ্রপ্রস্থগমঃ মা কারি তাবৎ, আস্মাকদন্তিসান্নিধ্যাৎ চেদয়ঃ বামনীভূতভূরুহঃ সন্তু ॥৬৩॥

निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥६४॥

---

टीका—तर्हि नः किमिदानीं कार्य्यमत आह, इन्द्रप्रस्थेति । इन्द्रप्रस्थस्य पार्थनगरस्य गमो गमनम् । ग्रहवृदृनिश्चिगमश्चेत्यप्प्रत्ययः । मा कारि तावन्न क्रियतामेवेत्यर्थः । यावत्ताव-त्परिच्छेदे कार्त्स्न्ये मानावधारणे इति विश्वः । करोतेः कर्मणि लुङ् . माङि लुङित्याशीरर्थे न माङ्योग इत्यट्प्रतिषेधः । किन्तु प्रदेयः चैदिदेशाः अस्माकमिमे आस्माकाः । युष्मदस्मदोरन्य-तरस्यां खञ् चेति विकल्पादण् प्रत्ययः, तस्मिन्नणि च युष्माकास्माकावित्यस्माकादेशः । सन्नि-धिरेव सान्निध्यम् । स्वार्थे ष्यञ् प्रत्ययः । आस्माकानां दन्तिनां सान्निध्यात् वामनीभूताः शाखा-भङ्गात् खर्वीभूता भूरुहो वृक्षा येषां ते तथोक्ताः सन्तु चैदियानैव क्रियतामित्यर्थः । सा च प्रस्तुताप्रस्तुतेनैव स्वकार्य्यं गम्यत इति पर्य्यायोक्तालङ्कारः । कारणं गम्यते यत्र प्रस्तु-तात् कार्य्यवर्णनात् । प्रस्तुतत्वेन सम्बन्धात् पर्य्यायोक्तः स उच्यत इति लक्षणात् ॥६३॥

टिप्पनी—इन्द्रेति । अत्र वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६३॥

বাঙ্গালা—ইন্দ্রপ্রস্থে গমন করিওই না ; আমাদের হস্তিগণ উপস্থিত হওয়ায় চেদি-দেশের বৃক্ষসকল খর্ব হইয়া যাউক ॥৬৩॥

अन्वयः—दाशार्हाः निरुद्धवीवधासारप्रसाराः (सन्तः) व्रजं गाः इव, माहिष्मतीं पुरीं द्विषः उप-रुन्धन्तु ॥६४॥

टीका—निरुद्धेति । किञ्च दाशार्हाः यादवाः वीवधो धान्यादिप्राप्तिः आसारः सुहृ-द्बलं प्रसारस्तृणकाष्ठादेः प्रवेशः । धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् । प्रसारस्तृण-काष्ठादेः प्रवेश इति वैजयन्ती । ते निरुद्धा यैस्ते तथोक्ताः, अन्यत्र निरुद्धौ वीवधानौ पर्य्याहारापरनाम्नां स्कन्धवाह्यक्षीराद्याहरणसाधनभारविशेषाणाम् आसारप्रसारौ प्रवेशनिर्गमौ यैस्ते तथोक्ताः । विवधो वीवधो भारे पर्य्याहाराध्वनोरपीति हेमचन्द्रः । व्रजं गोष्ठम् । व्रजं स्यादोकुलं गोष्ठमिति वैजयन्ती । गा इव माहिष्मतीं पुरीं द्विषोऽरीनुपरुन्धन्तु व्रजे गा इव माहिष्मत्यामरीन् आवृण्वन्त्वित्यर्थः । दुहियाचिरुधीति द्विकर्मकत्वम्, तत्र पुरीमनावकथितं कर्म अन्यदीप्सितं कर्म ॥६४॥

टिप्पनी—निरुद्धेति । अत्र पूर्णोपमालङ्कारः, वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥६४॥

বাঙ্গালা—দুধ ও ক্ষীরপ্রভৃতির ভারগুলিকে ভিতরে লইয়া যাওয়া, অথবা ভিতর হইতে সে গুলিকে বাহির করা ইত্যাদি কার্য্যের বাধা দিয়া ; গোপালগণ যেমন গোষ্ঠের ভিতরে গরুগুলিকে অবরুদ্ধ করে ; সেইরূপ ধান্য ও তিলপ্রভৃতি শস্য আহরণ, মিত্ররাজার নিকট হইতে সৈন্য আনয়ন এবং ভিতরে তৃণকাষ্ঠাদি লইয়া যাওয়া ইত্যাদি সমস্ত কার্য্যের বাধা দিয়া, যদুবংশীয়গণ মাহিষ্মতী নগরীর ভিতরে শত্রুদিগকে অবরুদ্ধ করুক ॥৬৪॥

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥६५॥
प्राप्यतां विद्युतां सम्पत् सम्पर्कादर्करोचिषाम्।
शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोचितैः ॥६६॥
इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥६७॥

---

अन्वयः—पाण्डवः यजताम्, इन्द्रः स्वर्गम् अवतु, इनः तपतु, वयं द्विषतः हनाम, सर्वः स्वार्थं समीहते ॥६५॥

टीका—तर्हि पार्थप्रार्थनायाः का गतिरित्याशङ्क्य उपेक्षैव गतिरित्याह, यजतामिति। पाण्डवो युधिष्ठिरो यजतां यागं करोतु, इन्द्रः स्वर्गमवतु रक्षतु, इनोऽर्कः। इनः पत्यौ नृपार्कयोरिति मेदिनी। तपतु प्रकाशताम्, वयं द्विषोऽरीन् हनाम मारयाम। आडुत्तमस्य पिच्चेत्याडागमः, सर्वत्र प्राप्तकाले लोट्। तथाहि, सर्वो जनः स्वार्थं स्वप्रयोजनं समीहते अनुसन्धत्ते। इन्द्रादिसमानयोगक्षेमो नः पार्थ इत्यर्थः। अर्थान्तरन्यासः ॥६५॥

टिप्पनी—यजतामिति। टीकायामर्थान्तरन्यास इति सामान्येन विशेषसमर्थनरूप इति शेषः। वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

বাঙ্গালা—যুধিষ্ঠির যজ্ঞ করুন; ইন্দ্র স্বর্গলোক পালন করুন; সূর্য্য তাপ দান করুন; আর আমরাও শত্রুবধ করি। কেন না, সকলেই স্বার্থসাধনের চেষ্টা করে ॥৬৫॥

अन्वयः—द्विषच्छिरश्छेदप्रोच्छलच्छोणितोचितैः शस्त्रैः अर्करोचिषां सम्पर्कात् विद्युतां सम्पत् प्राप्यताम् ॥६६॥

टीका—प्राप्यतामिति। किञ्च द्विषतां शिरश्छेदेन प्रोच्छलता उच्छलता शोणितेनोचितैः सिक्तैः शस्त्रैरर्करोचिषां सम्पर्काद्विद्युतां सम्पत् लक्ष्मीः प्राप्यतामिति निदर्शनालङ्कारः ॥६६॥

टिप्पनी—प्राप्यतामिति। अत्र छेकानुप्रासो वृत्त्यनुप्रासश्चेति टीकोक्तनिदर्शनया सह संसृष्टिः। वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥६६॥

বাঙ্গালা—শত্রুগণের শিরশ্ছেদ করায় নির্গত রক্তপ্রবাহে সংসিক্ত হইয়া, আমাদের অস্ত্র সকল, সূর্য্যকিরণ সম্পর্কে বিদ্যুতের শোভা ধারণ করুক ॥৬৬॥

अन्वयः—आलेख्यदेवताः भयात् सभाभित्तिप्रतिध्वानैः संरम्भिणः बलस्य इति वाणीः अन्ववदन् इव ॥६७॥

टीका—इतीति। इतीत्थं संरम्भिणः क्षुभितस्य बलभद्रस्य वाणीरालेख्यदेवतास्मिन्

निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥६८॥
भारतीमाहितभरामथानुद्धतमुद्धवः ।
तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥६९॥

---

लिखितदेवताः सभायाः सदोगृहस्य भित्तीनां प्रतिध्वानैः प्रतिध्वनिव्याजेनेत्यर्थः, भयादन्ववदन् अन्वमोदयन्निवेत्युत्प्रेक्षा ॥६७॥

**टिप्पनी**—इतीति । अत्र ओजो गुणः, पाञ्चाली च रीतिः एतदनुरूपः श्लोको यथा रघुवंशे—

"एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥" ॥६७॥

**বাঙ্গালা**—চিত্রিত দেবতারা ভয়বশতঃ দেওয়ালের প্রতিধ্বনির ছলে, ক্ষুব্ধচিত্ত বলরামের এই সকল কথার যেন অনুমোদন করিলেন ॥৬৭॥

**अन्वयः**—अधोक्षजः ताः शेषगवीः निशम्य बृहतां पत्युः शिष्याय अभिधातुं दृशा प्रस्तावम् अदिशत् ॥६८॥

**टीका**—निशम्येति । अधःकृतमक्षजमिन्द्रियजं ज्ञानं येन सोऽधोक्षजो हरिः ताः शेषस्य शेषावतारस्य बलभद्रस्य गाः वाचः शेषगवीः । गोरतद्धितलुकीति टच्, टित्वाङ् ङीप् । निशम्य श्रुत्वा । निशाम्यतीति श्रवणे तथा निशमयत्यपीति भट्टमल्लः । तत्र शाम्यतेरिदं रूपम् अन्यथा निशमय्येति स्यात् । अत एव वामनः निशम्यनिशमय्यशब्दौ प्रकृतिभेदादिति । बृहतां वाचां पत्युः बृहस्पतेस्तस्य शिष्याय उद्धवायाभिधातुं वक्तुं दृशा दृक्संज्ञया प्रस्तावम् अवसरमदिशत् अतिसृष्टवान् । प्रस्तावः स्यादवसर इत्यमरः ॥६८॥

**टिप्पनी**—निशम्येति । अत्र तालव्यशकारबाहुल्यात् ओजो गुणः, पाञ्चाली च रीतिः ॥६८॥

**বাঙ্গালা**—শ্রীকৃষ্ণ বলরামের সেই সকল বাক্য শুনিয়া, উদ্ধবকে বলিবার জন্য নয়নের ইঙ্গিতে অবসর দিলেন ॥৬৮॥

**अन्वयः**—अथ उद्धवः आहितभरां तथ्यां भारतीम् अनुद्धतं गदाग्रजम् अग्रे उतथ्यानुजवत् जगाद ॥६९॥

**टीका**—भारतीमिति । अथ कृष्णानुज्ञानन्तरम् उद्धवः आहितो भरोऽर्थगौरवं यस्यां सा तां तथ्यां यथार्थां भारतीं वाचम् अनुद्धतमगर्वितं यथा तथा गदस्याग्रजं कृष्णम् अग्रे पुरत इति प्रागल्भ्योक्तिः । उतथ्यस्य महर्षेरनुजो बृहस्पतिः । उतथ्यावरजो जीव इति विश्वः । तद्वत् तेन तुल्यं जगाद । तद्वत्तेन तुल्यं क्रिया चेद्वतिरिति वतिः । तद्धितगेय-मुपमा ॥६९॥

সম্প্রত্যসাম্প্রতং বক্তুমুক্তে মুষলপাণিনা।
নির্দ্ধারিতেঽর্থে লেখেন খলূক্ত্বা খলু বাচিকম্ ॥৭০॥
তথাপি যন্ময্যপি তে গুরুরিত্যস্তি গৌরবম্।
তৎপ্রযোজককর্ত্তৃত্বমুপৈতি মম জল্পতঃ ॥৭১॥

---

টিপ্পনী—ভারতীমিতি। অত্র ছেকানুপ্রাসো বৃত্ত্যনুপ্রাসশ্চেতি টীকোক্তোপময়া সহ সংসৃষ্টিঃ। সংযুক্তবর্ণবাহুল্যাৎ ওজো গুণঃ, উদ্ভটবন্ধাচ্চ গৌড়ী রীতিঃ ॥৬৯॥

বাঙ্গালা—তাহার পর, উদ্ধব সম্মুখে থাকিয়া শান্তভাবে শ্রীকৃষ্ণকে অর্থগৌরবসম্পন্ন ও সত্য বাক্য সকল বৃহস্পতির ন্যায় বলিতে লাগিলেন ॥৬৯॥

অন্বয়ঃ—সম্প্রতি মুষলপাণিনা উক্তে (সতি) বক্তুম্ অসাম্প্রতম্। লেখেন অর্থে নির্দ্ধারিতে (সতি) খলু বাচিকম্ উক্ত্বা খলু ॥৭০॥

টীকা—কিং জগাদেত্যাহ, সম্প্রতীতি। সম্প্রতি মুষলপাণিনা বলভদ্রেণ কেবলং শূরেণেতি ধ্বনিঃ। উক্তে সতি বক্তুমসাম্প্রতম্ অযুক্তম্। অসাধুত্বাদভ্যাসসমানযোগক্ষেমপ্রসঙ্গাদিতি ধ্বনিঃ। সাম্প্রতশব্দস্যার্হার্থত্বাত্তদ্যোগে শকধৃষেত্যাদিনা তুমুন্। তথাহি, লেখেন পত্রেণার্থে বাচ্যে নির্দ্ধারিতে নির্ণীতে সতি বাচিকং ব্যাহৃতার্থাং বাচং সন্দেশবচনমিত্যর্থঃ। সন্দেশবাগ্বাচিকং স্যাদিত্যমরঃ। বাচো ব্যাহৃতার্থায়ামিতি ঠক্। উক্ত্বা খলু ন বাচ্যং খল্বিত্যর্থঃ। খলুরাদ্যঃ প্রতিষেধে অন্যো বাক্যালঙ্কারে। নিষেধবাক্যালঙ্কারে জিজ্ঞাসানুনয়ে খলু ইত্যুভয়ত্রাপ্যমরঃ। অলংখল্বোঃ প্রতিষেধয়োঃ প্রাচাং ক্ত্বেতি ক্ত্বাপ্রত্যয়ঃ। ইন ন পাদাদৌ খল্বাদয় ইতি নিষেধস্যোদ্দেজকাভিপ্রায়ত্বাৎ। নঞর্থখলুশব্দস্যানুদ্বেজকত্বাৎ নঞ্বদেব পাদাদৌ প্রয়োগে ন দুষ্যতীত্যনুসন্ধেয়ম্। লিখিতার্থে বাচিকমিব বক্তোক্তে মদুক্তিরনবকাশেতি বাক্যার্থে প্রতিবিম্বকরণাৎ অষ্টস্তাবদ্ দৃষ্টান্তঃ স্তুতিব্যাজেন নিন্দাবগমাৎ ব্যাজস্তুতিশ্চ। তয়োশ্চাগ্রে বক্ষ্যতে ॥৭০॥

টিপ্পনী—সম্প্রতীতি। অত্র প্রথমার্দ্ধে ছেকানুপ্রাসঃ দ্বিতীয়ার্দ্ধে তু বৃত্ত্যনুপ্রাস ইতি টীকোক্তদৃষ্টান্তব্যাজস্তুতিভ্যাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭০॥

বাঙ্গালা—বলরাম যখন কর্ত্তব্য বিষয় বলিয়া ফেলিয়াছেন; তখন আমার এখন বলা অসঙ্গত। কেন না, পত্র দ্বারা নির্দ্ধারিত বিষয়ে আবার মৌখিক সংবাদ বলা উচিত নহে ॥৭০॥

অন্বয়ঃ—তথাপি ময়ি অপি যৎ তে গুরুঃ ইতি গৌরবম্ অস্তি, তৎ জল্পতঃ মম প্রযোজককর্ত্তৃত্বম্ উপৈতি ॥৭১॥

টীকা—তর্হি কিং তূষ্ণীম্ভূতেন ভাব্যং নেত্যাহ, তথাপীতি। তথাপি বক্ত্রেণ নির্ণীতে

वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥७२॥
वह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥७३॥

---

ऽपि ते तव मय्यपि बलभद्र इवेत्यपिशब्दार्थः । गुरुरित्येव यद्गौरवमादरः तद्गौरवं जल्पतो जल्पने प्रयोज्यकर्म्मणो मे प्रयोजककर्तृत्वं प्रेरकत्वमुपैति अतो वक्ष्यामीत्यर्थः । न हि पण्डितैः सादरं पृष्टस्य विशेषज्ञस्य अज्ञवत्तुष्णीम्भावो युक्त इति भावः ॥७१॥

**टिप्पनी**—तथापीति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७१॥

**বাঙ্গালা**—তাহা হইলেও, আমার উপরেও তোমার গুরু বলিয়া যে গৌরব রহিয়াছে; তাহাই, বলিবার বিষয়ে আমাকে প্রবৃত্ত করাইতেছে ॥৭১॥

**अन्वयः**—स्वरैरिव कतिपयैरेव वर्णैः ग्रथितस्य गेयस्य इव वाङ्मयस्य अहो अनन्ता विचित्रता ॥७२॥

**टीका**—ननु रामेणैव सर्वं प्रपञ्चेनोक्तं सम्प्रति किन्ते वाच्यमस्तीत्याशङ्क्य तथा प्रपञ्चोऽयमिति हृदि निधाय स्तुवन्नाह, वर्णैरित्यादिलर्येण । कतिपयैः परिमितैर्वर्णैः पञ्चाशतैव मातृकाक्षरैः कतिपयैः सप्तभिरेव स्वरैर्निषादादिभिः ग्रथितस्य गुम्फितस्य वाङ्मयस्य शब्दजालस्य । एकाचोऽपि नित्यं मयटमिच्छन्ति इति स्वार्थे मयट् । गीयत इति गेयं तस्य गानस्येव विचित्रता रचनाभेदादनन्तता अपरिमितता भवतीत्यर्थः । अहो अतस्तेन साधूक्तेऽपि विशेषानन्त्यात् ममापि वक्तव्यमस्तीत्येको भावः । तस्य इवशब्दस्याध्याहार्य्यत्वाद्वाक्योन्वयः । प्रत्यवयवमिवोपादानादनेकैवेयमुपमा ॥७२॥

**टिप्पनी**—वर्णैरिति । अत्र श्रौतीपमाद्वयस्य अङ्गाङ्गिभावेन सङ्कर इति मल्लिनाथाभिप्रायः । प्रसादो गुणः, वैदर्भी च रीतिः ॥७२॥

**বাঙ্গালা**—নিষাদপ্রভৃতি সাতটী মাত্র স্বর দ্বারা গানসমূহ রচিত হইলেও, তাহার যেমন অনন্ত বৈচিত্র্য দেখা যায়; তেমন পঞ্চাশটী মাত্র অক্ষর দ্বারা বাক্যসমূহ রচিত হইলেও, তাহার অনন্ত বৈচিত্র্য দেখা যায় ॥১২॥

**अन्वयः**—स्वेच्छया प्रकीर्णं वहु अपि कामम् अभिधीयते (येन केनापि जनेन) । (किन्तु) अनुज्झितार्थः सम्बन्धः प्रबन्धः दुरुदाहरः ॥७३॥

**टीका**—बह्वपीति । स्वेच्छया स्वप्रतिभानुसारेण प्रकीर्णमसङ्गतं बह्वपि कामं यथेष्टमभिधीयते, किन्तु अनुज्झितोऽर्थसम्बन्धः पदार्थसङ्गतिर्यस्मिन् स प्रबन्धः सन्दर्भः दुरुदाहरो दुर्वचः । दुरतः खल् प्रत्ययः । रामेण तु सङ्गतमेवोक्तमिति स्तुतिः असङ्गतोमेवोक्तमिति निन्दा च गम्यते ॥७३॥

**टिप्पनी**—बह्विति । प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

# तृतीयः सर्गः ।



कौवेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे ॥१॥

---

अन्वयः—अथ कौवेरदिग्भागम् अपास्य आगस्त्यं मार्गम् अवतीर्णः उष्णांशुः इव अपेतयुद्धाभिनिवेशसौम्यः हरिः हरिप्रस्थं प्रतस्थे ॥१॥

टीका—कौवेरेति। अथोद्धववाक्यश्रवणानन्तरमपेतो युद्धे अभिनिवेश आग्रहो यस्य स शान्तक्रोध इत्यर्थः। अत एव सौम्यः प्रसन्नः अतएव कौवेर्य्या दिशो भागमुत्तरायणमित्यर्थः। स्त्रियाः पुंवदित्यादिना पुंवद्भावः। तमपास्यागस्त्यस्येममागस्त्यं मार्गमवतीर्णो दक्षिणायनगत इत्यर्थः उष्णांशुरिव स्थितः। अनेन हरेः क्रोधः कार्य्यवशादाकालमन्तः स्तम्भितो न त्वेकान्ततो निवृत्त इति सूचितम्। हरिः कृष्णः हरिप्रस्थमिन्द्रप्रस्थं प्रतस्थे प्रचचाल। इन्द्रो दुश्च्यवनो हरिरिति हलायुधः। समवप्रविभ्यः स्थ इत्यात्मनेपदम्। देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति गन्तव्यकर्मत्वम्। उपमालङ्कारः। सर्गेऽस्मिन्निन्द्रोपेन्द्रवज्रामिश्रणादुपजातिर्वृत्तम्। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति लक्षणात् ॥१॥

टिप्पनी—कौवेरेति। अत्र चतुर्थपादे छेकानुप्रासश्चेति मल्लिनाथोक्तः श्रौतोपमया सह संसृष्टिः। तथा युधिष्ठिरराजधान्यर्थे इन्द्रप्रस्थशब्द एव योगरूढ़ः। तेन गीर्वाणादिशब्दस्येव इन्द्रप्रस्थशब्दस्य एकतरांशेऽपि न परिवृत्तिसहत्व इति हरिप्रस्थपदोपादानात् तत्र च रुढ़िप्रयोजनयोरभावेऽपि हरिपदेन अशक्तिकेनेन्द्ररूपलक्ष्यार्थप्रकाशनात् पदांशगतो नेयार्थतादोषः "समरे निहताः शूरा वचोवाणत्वमागताः" इति दर्पणोदाहरणवत्। ततश्चात्र खञ्जचरणे नूपुर इव दुष्टस्थाने अलङ्कारो न चमत्कारितामावहति, किन्तु कौतुकहासमेवोपजनयति। 'हरिस्ततः पार्थपुरं प्रतस्थे' इति पाठेन तत्समाधानं विधेयम्। प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

বাঙ্গালা—তদনন্তর, উত্তরায়ণ পরিত্যাগ করিয়া দক্ষিণায়নে প্রবৃত্ত সূর্য্যের ন্যায়, যুদ্ধের আগ্রহ পরিত্যাগ করিয়া (যজ্ঞে যাইতে প্রবৃত্ত) শ্রীকৃষ্ণ শান্তমূর্ত্তি হইয়া, ইন্দ্রপ্রস্থ রাজধানীর প্রতি প্রস্থান করিলেন ॥১॥

जगत्पवित्रैरपि तं न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः ।
यतो बृहत्पार्वणचन्द्रचारु तस्यातपत्रं बिभराम्बभूवे ॥२॥
मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्धोरभूतपूर्वां रुचमम्बुराशेः ॥३॥

---

**अन्वयः**—अर्कः जगत्पवित्रैः अपि पादैः जगत्पूज्यं तं स्प्रष्टुम् न अयुज्यत । यतः तस्य बृहत्-पार्वणचन्द्रचारु आतपत्रं बिभराम्बभूवे ॥२॥

**टीका**—अथास्य प्रस्थानसन्नाहं वर्णयन्नादौ छत्रधारणमाह, जगदिति । अर्को जगत्पूज्यं तं हरिम् अतएव जगत्पवित्रैरपि पादैश्चरणैः किरणैश्च स्प्रष्टुं नायुज्यत नार्हत । युजेर्दैवादिकात्कर्त्तरि लङ् । यतः तस्य हरेः बृहद्विपुलं पार्वणचन्द्रचारु पूर्णेन्दुसुन्दरमित्युपमालङ्कारः । आतपात् त्रायत इत्यातपत्रं छत्रम् । सुपीति योगविभागात् कः । बिभरांबभूवे दध्रे । भृञः कर्मणि लिट्, भीह्रीभृहुवामिति विकल्पादाम्प्रत्ययः । आतपत्रान्तर्हितं तस्य सूर्यैरपि पादैः स्प्रष्टुमशक्यत्वादित्यर्थः । जगत्पूज्यस्य हरेः पादेन स्पर्शं निषेधादिति भावः ॥२॥

**टिप्पनी**—जगदिति । अत्र छेकानुप्रासवृत्त्यनुप्रासावपि शब्दालङ्काराविति मल्लिनाथोक्तलुप्तोपमया सह तयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

**বাঙ্গালা**—সূর্য্য, জগতের পবিত্রতাজনক কিরণ (চরণ) দ্বারাও, জগৎপূজনীয় শ্রীকৃষ্ণকে স্পর্শ করিতে সমর্থ হইয়াছিলেন না। যেহেতু, ভৃত্যেরা তাঁহার মস্তকের উপরে পূর্ণিমার চন্দ্রের ন্যায় সুন্দর বৃহৎ একটি ছত্র ধারণ করিয়াছিল ॥২॥

**अन्वयः**—मृणालसूत्रामलं चलच्चामरयोः द्वयम् अन्तरेण स्थितः सः, अभितः पातुकसिद्धसिन्धोः अम्बुराशेः अभूतपूर्वां रुचं भेजे ॥३॥

**टीका**—अथ चामरधारणमाह, मृणालेति । मृणालसूत्रामलं विसतन्तुविशदमित्युपमा । चलन्ती च ते चामरे च चलच्चामरे वीजनादिति भावः । तयोर्द्वयमन्तरेण स्थितः द्वयस्य मध्ये स्थित इत्यर्थः । अन्तरान्तरेण युक्ते इति द्वितीया । स हरिरभितः पातुका उभयतः पातिनी सिद्धसिन्धुराकाशगङ्गा यस्य स तथोक्तः । पर्य्यभिभ्यां चेति तसिल् प्रत्ययः; सर्वोभयार्थवर्त्तमानाभ्यामिष्यत इत्युभयार्थत्वं सुप्सुपेति समासः । पातुकेति । लषपतेत्यादिना उकञ् प्रत्ययः । तस्याम्बुराशेः समुद्रस्य अभूतपूर्वां पूर्वमभूताम् । सुप्सुपेति समासः । रुचं कान्तिं भेजे । अतएव निदर्शना सा चाम्बुराशेः सम्भावनासालोक्या अभितः पातुकसिद्धसिन्धुसम्बन्धमूलया असम्बन्धे सम्बन्धरूपातिशयोक्त्या स्वोपजीवकसं-योगेन सङ्कीर्य्यत इति सङ्क्षेपः ॥३॥

**टिप्पनी**—मृणालेति । अत्र मधुररचनावशात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥३॥

চিত্রাভিরস্যোপরি মৌলিভাজাং ভাভির্মণীনামনণীয়সীভিঃ।
অনেকধাতুচ্ছুরিতাশ্মরাশের্গোবর্দ্ধনস্যাকৃতিরন্বকারি ॥৪॥
তস্যোল্লসৎকাঞ্চনকুণ্ডলাগ্রপ্রত্যুপ্তগারুত্মতরত্নভাসা।
অবাপ বাল্যোচিতনীলকণ্ঠপিচ্ছাবচূড়াকলনামিবোরঃ ॥৫॥

---

বাঙ্গালা—মৃণালসূত্রের ন্যায় শুভ্রবর্ণ এবং সঞ্চালিত দুইটী চামরের মধ্যস্থানে শ্রীকৃষ্ণ অবস্থান করিতে লাগিলেন, তখন দুই পার্শ্ব দিয়া দুইটী মন্দাকিনীর প্রবাহ পতিত হইতে লাগিলে সমুদ্রের যেরূপ আশ্চর্য্য শোভা হয়, সেইরূপ আশ্চর্য্য শোভা তিনি ধারণ করিতে লাগিলেন ॥৩॥

অন্বয়ঃ—অস্য উপরি মৌলিভাজাং মণীনাম্ অনণীয়সীভিঃ চিত্রাভিঃ ভাভিঃ অনেকধাতুচ্ছুরিতাশ্মরাশেঃ গোবর্দ্ধনস্য আকৃতিঃ অন্বকারি ॥৪॥

টীকা—অথাষ্টভিরস্য প্রসাধনবিধিং বর্ণয়ন্ মুকুটধারণমাহ, চিত্রাভিরিতি। অস্য হরেরুপরি ঊর্দ্ধ্বদেশে মৌলিভাগে মৌলিভাজাং মুকুটগতানাং মণীনামনণীয়সীভির্মহতীভিশ্চিত্রাভিরনেকবর্ণাভির্ভাভিঃ প্রভাভিঃ কলীভিঃ। স্যুঃ প্রভা রুগ্‌রুচিস্ত্বিড্‌ভা ভাশ্ছবিদ্যুতি-দীপ্তয় ইত্যমরঃ। ভান্তপর্চ্চে ভী ভগো ইত্যাদিনা ঈয়ংকারে তদ্ধহলি সর্ব্বেষামিতি লোপঃ। অনেকৈর্ধাতুভির্গৈরিকাদিভিশ্চ্ছুরিতানাং রূষিতানাম্ অশ্মনাং মণীনাং রাশিঃ সমূহো যস্য তস্য গোবর্দ্ধনাখ্যপর্ব্বতস্যাকৃতিরন্বকারি অনুকৃতা তৎসাদৃশ্যমভাজীত্যর্থঃ। পূর্ণোপমেয়ম্ ॥৪॥

টিপ্পনী—চিত্রাভিরিতি। অত্র বৃত্ত্যনুপ্রাসস্যেতি মল্লিনাথোক্তপূর্ণোপময়া সহ সংসৃষ্টিঃ। পূর্ণোপমেতি তু মতান্তরমাশ্রিত্যাভিহিতম্; দর্পণকারমতে তু শ্রৌতীপমামাত্রম্। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

বাঙ্গালা—রক্ত নীলাদি নানাবর্ণের বহুতর ধাতু নির্গত হইয়া গোবর্দ্ধনপর্ব্বতের প্রস্তরসমূহকে রঞ্জিত করিয়া থাকে; আবার শ্রীকৃষ্ণের মস্তকের উপরে যে মুকুট ছিল, তাহার মণিসমূহের বিচিত্র ও বিশাল কিরণরাশিও তাঁহার দেহটীকে রঞ্জিত করিয়াছিল; সুতরাং তৎকালে শ্রীকৃষ্ণের দেহটী গোবর্দ্ধনপর্ব্বতের আকৃতির অনুকরণ করিতেছিল ॥৪॥

অন্বয়ঃ—তস্য উরঃ উল্লসৎকাঞ্চনকুণ্ডলাগ্রপ্রত্যুপ্তগারুত্মতরত্নভাসা বাল্যোচিতনীলকণ্ঠপিচ্ছাবচূড়াকলনাম্ অবাপ ইব ॥৫॥

টীকা—কুণ্ডলে চ ধৃতে ইত্যাহ, তস্যেতি। তস্য হরেরুরঃ উল্লসন্ত্যা কাঞ্চন-কুণ্ডলাগ্রয়োঃ প্রত্যুপ্তানাং খচিতানাং গারুত্মতরত্নানাং মরকতমণীনাং ভাসা দীপ্ত্যা উরসি প্রসরন্ত্যেতি ভাবঃ। বাল্যং শৈশবম্। ব্রাহ্মণাদিত্বাৎ ষ্যঞ্। তত্রোচিতমভ্যস্তং যন্নীল-কণ্ঠপিচ্ছং ময়ূরবর্হম্। অভ্যস্তেঽপ্যুচিতং ন্যায্যে ইতি যাদবঃ। পিচ্ছবর্হে নপুংসকে ইত্যমরঃ। তেন নির্ম্মিতাবচূড়া মালিকা তস্যাঃ কলনামামোচনমবমোচনং বা অবাপে-

तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् ।
बंहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥६॥
निसर्गरक्तैर्वलयावनद्धताम्राश्मरश्मिच्छुरितैर्नखाग्रैः ।
व्यद्योतताद्यापि सुरारिवक्षोविक्षोभजासृक्स्नपितैरिवासौ ॥७॥

---

वेत्युत्प्रेक्षा । यत्नात्यधर्मसम्बन्धादन्यदेवोपतर्कितम् । प्रकृतेर्हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षत इति लक्षणात् ॥५॥

टिप्पनी—तस्येति । अत्र समासबाहुल्यात् ओजो गुणः गौड़ी च रीतिः ॥५॥

बाङ्गाला—श्रीकृष्णের সুবর্ণময় কর্ণকুণ্ডল দুইটীর অগ্রদেশে দুইটী মরকতমণি বসান ছিল; তাহার নীলবর্ণ কিরণগুলি যাইয়া তাঁহার বক্ষঃস্থলে পতিত হইতেছিল; সুতরাং তিনি বাল্যকালে যে ময়ূরপুচ্ছের মালা বক্ষে ধারণ করিতেন; তৎকালে তাঁহার বক্ষ যেন সেই মালাই ধারণ করিতেছে বলিয়া বোধ হইতেছিল ॥৫॥

अन्वयः—मन्दरकूटकोटिव्याघट्टनोत्तेजनया बंहीयसा मणीनां दीप्तिवितानकेन उल्लसन्ती अङ्गदे तं चकासयामासतुः ॥६॥

टीका—तमङ्गदे इति । तं हरिं मन्दरकूटकोटिव्यघट्टनं मन्दराचलशिखराग्रसङ्घर्षणं तेनोत्तेजना शाणोल्लेखना तया बंहीयसा बहुतरेण । प्रियस्थिरेत्यादिना बहुशब्दस्येयसुनि बंहादेशः । मणीनां दीप्तिवितानकेन प्रभापटलेन उल्लसन्ती दीप्यमाने । आच्छीनद्योर्नुमिति नुमागमः । अङ्गदे केयूरे केयूरमङ्गदं तुल्ये इत्यमरः । चकासयामासतुः शोभयाञ्चक्रतुः अङ्गदे द्युतवानित्यर्थः । चकास्तेर्ण्यन्ताल्लिटि आमन्तयेऽस्तेरनुप्रयोगः । अत्राङ्गदयोः प्राग्भवीयाङ्गदभेदेऽप्यभेदोक्तिरुत्प्रेक्षा तयोर्मन्दरकूटकोट्यसम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशयोक्त्योः सङ्करः ॥६॥

टिप्पनी—तमिति । अत्र वामनादिप्राचीनमते प्रसादो गुणः; दर्पणमते तु ओजोगुणः । तथा च तत्रैव—

"श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः । गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥"

"प्रसाद ओजोमिश्रितशैथिल्यात्मा" इति तद्वृत्तिः । एवमन्यत्राप्यनुसन्धेयम् । गौड़ी च रीतिः ॥६॥

বাঙ্গালা—(দুই বাহুর) দুইটী কেয়ূর শ্রীকৃষ্ণকে বিশেষরূপে শোভিত করিয়াছিল; কেন না, সেই কেয়ূর দুইটীতে যে সকল মণি বসান ছিল, মন্দরপর্বতের প্রস্তরের সংঘর্ষে সেই মণিগুলি হইতে বহুতর কিরণরাশি নির্গত হইয়া, সেই কেয়ূর দুইটীকে অতিশয় দীপ্তিশালী করিয়াছিল ॥৬॥

अन्वयः—असौ निसर्गरक्तैः वलयावनद्धताम्राश्मरश्मिच्छुरितैः (अतएव) अद्यापि सुरारिवक्षोविक्षोभजासृक्स्नपितैः इव (स्थितैः) नखाग्रैः व्यद्योतत ॥७॥

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥८॥

टीका—निसर्गेति। असौ हरिर्निसर्गरक्तैः स्वभावलोहितैः किञ्च वलये कटके। कटकं वलयोऽस्त्रियामित्यमरः। तयोरवलग्नानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिः स्फुरितैः अत एवाद्यापि सुरारेर्हिरण्यकशिपोः वक्षसो विपाटनेन विदारणेन जाता या असृक् तया स्नपितैः सिक्तैरिव स्थितैरित्युत्प्रेक्षा। स्नातेर्ण्यन्तात् क्तः, अर्त्तिह्रीत्यादिना पुगागमः, मितां ह्रस्वः। नखाग्रैर्व्यद्योतत। कटके च धृतवानित्यर्थः॥७॥

टिप्पनी—निसर्गेति। अत्र छेकानुप्रासस्याऽलङ्कार इति मल्लिनाथोक्तया उत्प्रेक्षया सह संसृष्टिः। अत्र वर्ग्यवर्णबाहुल्यात् समासबाहुल्यात् उद्धतघटनात्मकत्वाच्च ओजो गुणः, गौड़ी च रीतिः॥७॥

বাঙ্গালা—শ্রীকৃষ্ণের দুই হাতে দুই গাছি বালা ছিল; তাহাতে বহুতর পদ্মরাগ মণি বসান ছিল; সেই মণিগুলির কিরণে তাঁহার নখগুলি রঞ্জিত হইয়াছিল; সুতরাং হিরণ্যকশিপুর বক্ষ বিদারণ করায় যে রক্ত নির্গত হইয়াছিল, তাহা দ্বারা তখনও যেন শ্রীকৃষ্ণের সে নখগুলি সিক্ত ছিল বলিয়া বোধ হইতেছিল; সেই সকল নখ দ্বারা শ্রীকৃষ্ণ বিশেষরূপে শোভা পাইতেছিলেন॥৭॥

अन्वयः—आकाशगङ्गापयसः उभौ प्रवाहौ यदि व्योम्नि पृथक् पतेताम्; [तदा] तेन तमालनीलम् आमुक्तमुक्तालतम् अस्य वक्षः उपमीयेत॥८॥

टीका—उभाविति। तमालवन्नीलम् आमुक्ते आसञ्जिते लतादीर्घत्वसाम्येन मौक्तिकहारौ यस्मिन् तदस्य हरेर्वक्षः आकाशगङ्गायाः पयसः उभौ प्रवाहौ व्योम्नि यदि पृथक् पतेतां प्रवहेतां चेत्। सम्भावनायां लिङ्। तेन व्योम्नोपमीयेत समीक्रियेत नान्योपमानं किञ्चित् पश्याम इति भावः। मुक्ताहारं धृतवानित्यर्थः। अत्र व्योम्नो गङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनायां सम्बन्धकथनादतिशयोक्तिः। तदेतत् पुष्पं प्रवालोपहितं यदि स्यादित्याद्युदाहृत्यालङ्कारसर्वस्वकारः स्पष्टीचकार॥८॥

टिप्पनी—उभाविति। एकस्यैव मुक्ताहारस्य गललम्बितत्वे वक्षस उभयपार्श्वे तस्य लहरीद्वयपतनात् मूले उभाविति विशेषणं टीकायाञ्च मौक्तिकहाराविति द्विवचनं सङ्गच्छत इत्यवधेयम्। अत्र तमालनीलमिति लुप्तोपमा चेति टीकोक्तातिशयोक्त्या सह तस्य सङ्करः, आमुक्तमुक्तेति च छेकानुप्रास इति समुदाये संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥८॥

বাঙ্গালা—শ্রীকৃষ্ণের বক্ষঃস্থল তমালতরুর ন্যায় নীলবর্ণ ছিল এবং তাহাতে তিনি মুক্তার হার পরিধান করিয়াছিলেন; সুতরাং আকাশগঙ্গার দুইটী প্রবাহ যদি পৃথক্ ভাবে আকাশে পতিত হইত; তাহা হইলে, সেই আকাশ শ্রীকৃষ্ণের সেই বক্ষঃস্থলের উপমাস্থল হইতে পারিত॥৮॥

तेनाम्भसां सारमयः पयोधेर्दध्रे मणिर्दीधितिदीपिताशः।
अन्तर्वसन् बिम्बगतस्तदङ्गे साचादिवालच्यत यत्र लोकः ॥९॥
मुक्तामयं सारसनावलम्बि भाति स्म दामाप्रपदीनमस्य।
अङ्गुष्ठनिष्ठ्यूतमिवोर्द्ध्वमुच्चैस्त्रिस्रोतसः सन्ततधारमम्भः ॥१०॥

---

**अन्वयः**—तेन दीधितिदीपिताशः पयोधेः अम्भसां सारमयः मणिः दध्रे; यत्र बिम्बगतः लोकः, तदङ्गे साचात् अन्तर्वसन् लोकः इव अलच्यत ॥९॥

**टीका**—तेनेति। तेन हरिणा दीधितिभिर्दीपिता आशा येन सः दिगन्तविश्रान्ततेजा इत्यर्थः। पयोधेरम्भसां सारस्य विकारः सारमयः मणिः समुद्रमन्थनोत्थः कौस्तुभाख्य इत्यर्थः। दध्रे धृतः। धृञ् धारणे कर्मणि लिट्। यत्र मणौ बिम्बगतः प्रतिबिम्बगतो लोकः वाह्यप्रपञ्चः तदङ्गे तस्य हरेः शरीरे साचात् वहिः प्रत्यचेण लक्ष्यमाण इत्यर्थः। अन्तर्वसन् अन्तर्गतो लोक इवालच्यत। यत्र मणौ प्रतिबिम्बितो वाह्यलोकः तदङ्ग एव नैर्मल्याद्वहिः प्रतिफलितः कुचिस्थलोक इवालच्यत इत्युत्प्रेचा ॥९॥

**टिप्पनी**—तेनेति। अत्र एकोऽपि लोकशब्दः काकाचिगोलकन्यायेन उपमानोपमेययोरुभयोरप्यन्वीयत इति मल्लिनाथाशयः। वृत्त्यनुप्रास-छेकानुप्रासाभ्यां टीकोक्तोत्प्रेचा संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

**বাঙ্গালা**—শ্রীকৃষ্ণ কৌস্তভমণি ধারণ করিয়াছিলেন; তাহার কিরণে সমস্ত দিক্ উদ্ভাসিত করিয়াছিল এবং সে মণি সমুদ্রজলের সারাংশ হইতে উৎপন্ন হইয়াছিল। যে মণিতে বাহিরের সমস্ত পদার্থের প্রতিবিম্ব পড়িত; তাহাতে সকলে ইহা মনে করিত যে, সমস্ত জগৎটাই যেন শ্রীকৃষ্ণের শরীরের ভিতরে প্রত্যক্ষরূপে বাস করিতেছে ॥৯॥

**अन्वयः**—सारसनावलम्बि आप्रपदीनम् मुक्तामयं अस्य दाम, अङ्गुष्ठनिष्ठ्यूतम् ऊर्द्ध्वम् उच्चैः सन्ततं धारं त्रिस्रोतसः अम्भः इव भाति स्म ॥१०॥

**टीका**—मुक्तेति। अस्य हरेर्मुक्तामयं मुक्ताप्रचुरम्। तत्प्रकृतवचने मयट्। सारसने कटिसूत्रेऽवलम्बते इति सारसनावलम्बि। क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु-इत्यमरः। आप्रपदीनम् आ समन्तात्प्रपदं प्राप्नोतीति खञ् प्रत्ययः। पदाग्रं प्रपदं पाद इत्यमरः। दाम मुक्ताहारः अङ्गुष्ठेन निष्ठ्यूतं विसृष्टमित्यर्थः। गौणार्थत्वादग्राम्यत्वम्। यथाह दण्डी, निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकचां विगाहत इति। ऊर्द्ध्वम् ऊर्द्ध्वप्रवाहमुच्चैरुन्नतन्त्रिस्रोतसो मन्दाकिन्याः सन्ततधारमविच्छिन्नसम्पातमम्भ इव भाति स्मेत्युत्प्रेचा ॥१०॥

**टिप्पनी**—मुक्तेति। अत्र बन्धवैकट्यात् ओजो गुणः, गौड़ी च रीतिः ॥१०॥

**বাঙ্গালা**—কটিসূত্রে বদ্ধ থাকিয়া চরণ পর্য্যন্ত পতিত হয়, এইরূপ এক ছড়া মুক্তার

स इन्द्रनीलस्थलनीलमूर्त्तीरराज कर्च्चूरपिशङ्गवासाः ।
विसृत्वरैरम्बुरुहां रजोभिर्यमस्वसुश्चित्र इवोदभारः ॥११॥
प्रसाधितस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ता ह्युरसीतरा तु ॥१२॥

---

মালা শ্রীকৃষ্ণ ধারণ করিয়াছিলেন। সুতরাং তাঁহারই অঙ্গুষ্ঠ হইতে নির্গত হইয়া, অবিচ্ছিন্ন প্রবাহে উপরের দিকে উঠিতে থাকে, এইরূপ মন্দাকিনীর জলধারায় ন্যায় সেই মুক্তার মালা শোভা পাইতেছিল ॥১০॥

**अन्वयः**—इन्द्रनीलस्थलनीलमूर्त्तिः कर्च्चूरपिशङ्गवासाः सः, विसृत्वरैः अम्बुरुहां रजोभिः चित्रः यमस्वसुः उदभारः इव रराज ॥११॥

**टीका**—स इति । इन्द्रनीलस्थलमिव नीलमूर्त्तिः श्यामाङ्गः । संहितायां रोरीति रेफलोपः, ढ्लोपे पूर्वस्येति दीर्घः । कर्च्चूरं हरितालमिव पिशङ्गं वासो यस्य सः पीताम्बरो हरिः । हरितालन्तु कर्च्चूरमिति वैजयन्ती । स हरिर्विसृत्वरैः विसमरैः । इण्नशजिसर्त्तिभ्यः क्वरप् । अम्बुरुहाम् अम्बुजानाम् । रुहेः क्विप् । रजोभिः परागैश्चित्रः चित्रवर्णैः यमस्वसुर्यमुनायाः उदकस्य भारः पूरः उदभारः स इव रराज । मन्थौदनेत्यादिना उदकस्योदादेशः ॥११॥

**टिप्पनी**—स इति । अत्र श्रौतोपमालङ्कारः छेकानुप्रासस्तु तयोः संसृष्टिः । आरोहावरोह-विन्यासात् ओजो गुणः, पाञ्चाली च रीतिः ॥११॥

**বাঙ্গালা**—শ্রীকৃষ্ণের শরীরটী ছিল—ইন্দ্রনীলমণিময় ভূমির ন্যায় নীলবর্ণ; আর তাঁহার পরিধানে ছিল— হরিতালের ন্যায় পীতবর্ণের বস্ত্র। সুতরাং পদ্মের রেণুসকল যমুনার জলের উপরে ছড়াইয়া পড়িলে, সেই বিচিত্র যমুনাজলপ্রবাহের ন্যায় তিনি শোভা পাইতেছিলেন ॥১১॥

**अन्वयः**—प्रसाधितस्य अस्य मधुद्विषः अन्या एव लक्ष्मीः अभूत् इति एतत् युक्तम् । हि अखिललोककान्ता सा अशेषे वपुषि (स्थिता), अनन्यकान्ता तु उरसि (स्थिता) ॥१२॥

**टीका**—प्रसाधितस्येति । प्रसाधितस्यालङ्कृतस्यास्य मधुद्विषः हरेः अन्यैवासदृशी विभिन्ना च । अन्यौ विभिन्नासदृशाविति वैजयन्ती । लक्ष्मीः शोभा पद्मा च । शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यत इति विश्वः । अभूदित्येतद्युक्तम् । कुतः हि यस्मात् सा प्रसाधनरूपा लक्ष्मीरशेषे वपुषि वसतीति शेषः । किञ्चाखिललोकस्य कान्ता प्रिया, इतरा नित्या तु अन्यस्य कान्ता प्रिया न भवतीत्यनन्यकान्ता किन्तु तस्यैवेत्यर्थः । उरसि उरस्येव वसतीत्यर्थः । अत्र हरेः प्रसाधानादसाधारणी शोभा जातेति पारमार्थिको वाक्यार्थः ।

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥१३॥
प्राणच्छिदां दैत्यपतेर्नखानामुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥१४॥

---

अत्र लक्ष्मीशब्देन श्लेषमर्यादया वाच्याया: शोभायाः प्रतीमानया श्रीदेव्या सहाभेदाध्यवसाया-देकातिशयोक्तिः इयमन्यैव लक्ष्मीरित्यभेदे भेदरूपा चापरातिशयोक्तिरलङ्कारः ॥१२॥

टिप्पनी—प्रसाधितस्येति । अत्र छन्त्यनुप्रासच्छेकानुप्रासयोर्निः टीकोक्तातिशयोक्तिभ्यां सहानयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—শ্রীকৃষ্ণ সমস্ত অলঙ্কারে অলঙ্কৃত হইলে, তাঁহার আর একটী লক্ষ্মী (শোভা, শ্রীদেবী) যে হইয়াছিল, ইহা সঙ্গত বটে। কেন না, সাধারণের কামনীয় লক্ষ্মী (শোভা) ছিল তাঁহার সমস্ত অঙ্গে ; আর কেবল তাঁহারই কামনীয় লক্ষ্মী (শ্রীদেবী) ছিল তাঁহার বক্ষে ॥১২॥

अन्वयः—कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य आनन्दिताशेषजना सर्वाङ्गसङ्गिनी अपरा एव लक्ष्मीः बभूव ॥१३॥

टीका—अर्थान्तरमेवार्थमभ्यन्तरेणाह, कपाटेति । कपाटवद्विस्तीर्णे मनोरमे यौरःस्थले स्थिता श्रीरिति ललना कान्ता यस्य तस्य हरेरानन्दिताशेषजना सर्वाङ्गसङ्गिनी अत-एव परं वासाधारण्येव श्रीदेव्या अन्यैव लक्ष्मीः शोभा रमा च बभूव । स एवालङ्कारः । प्रायेण काव्यमप्यनेकं श्लोकसुक्तिविशेषलाभाल्लिखन्ति कवयः । यथाह नैषधे, पाद्रावेव निपीयेत्यादि श्लोकद्वयं तथा खर्वखिलेत्यादि श्लोकद्वयश्चेति ॥१३॥

टिप्पनी—कपाटेति । अत्र टीकोक्तातिशयोक्तिसंसृष्टच्छेकानुप्रासयः । समासबाहुल्यात् ओजो-गुणः, पाञ्चाली च रीतिः ॥१३॥

বাঙ্গালা—কপাটের ন্যায় বিস্তৃত অথচ মনোহর বক্ষঃস্থলে নিজবনিতা লক্ষ্মীদেবী বাস করিতেছিলেন ; আর যিনি সমস্ত লোকের আনন্দ জন্মাইয়া, শ্রীকৃষ্ণের সমস্ত অঙ্গে বাস করিতেছিলেন, সে লক্ষ্মী পূর্বোক্ত লক্ষ্মী হইতে ভিন্নই ছিলেন ॥১৩॥

अन्वयः—भूषणताम् उपेयुषाम् दैत्यपतेः प्राणच्छिदां नखानां क्षतेन प्रकाशकार्कश्यगुणौ स्तनौ दधानाः तरुण्यः एनं परिवव्रुः ॥१४॥

टीका—अथ देवीसहचरस्यैवास्य यात्रेति सूचयन् प्रसाधनविधेः फलमाह, प्राणेति । भूषणतामुपेयुषां न तु प्रहरणतामिति भावः । दैत्यपतेः हिरण्यकशिपोः प्राणच्छिदां प्राणमुषां प्राणापहारिणां वज्रादपि कठोराणामित्यर्थः : नखानां क्षतेन व्रणेन प्रकाशौ व्यक्तः कार्कश्यमेव गुणो ययोस्तौ स्तनौ स्तनावित्यर्थः । जातावेकवचने प्राप्ते जातिभूयः

आकर्षतेवोर्द्ध्वमतिक्रमीयानत्युन्नतत्वात् कुचमण्डलेन।
ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम् ॥१५॥
यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव।
निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥१६॥

---

स्तनादिषु जातेर्द्वित्वविशिष्टत्वात् द्विवचनम्। यथाह वामनः, स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति। दधानास्तरुण्यो युवतयः। वयसि प्रथमे इति ङीप्। एनं हरिं परिवव्रुः। अत्र हरिनखानां नरहरिनखमेदेऽप्यभेदोक्त्या स्तनयोश्च तादृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्तो तयोश्च सापेक्ष चालङ्कारः ॥१४॥

**टिप्पनी**—प्रागेति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

**বাঙ্গালা**—হিরণ্যকশিপুর প্রাণনাশক অথচ সেই সময়ের অলঙ্কারস্বরূপ নখের আঘাতে যে সকলের কাঠিন্য গুণ ব্যক্ত হইতেছিল, তাদৃশস্তনশালিনী তরুণীরা শ্রীকৃষ্ণকে পরিবেষ্টন করিয়াছিল ॥১৪॥

**अन्वयः**—अत्युन्नतत्वात् ऊर्द्ध्वम् आकर्षता इव (स्थितेन) अतिगुरुत्वभाजा अङ्गनानां कुचमण्डलेन अतिक्रमीयान् मध्यः नितान्तम् आक्रान्तः इव ननाम ॥१५॥

**टीका**—आकर्षतेति। अत्युन्नतत्वाद्धेतोः ऊर्द्ध्वमाकर्षतेव नमन्तं मध्यमुन्नमयतेव स्थितेनेत्युत्प्रेक्षा। अतिगुरुत्वमतिभारत्वम् अतिप्रवृद्धत्वञ्च भजतीति भाक्। भजो ण्विः। तेनाङ्गनानां कुचमण्डलेनातिक्रमीयान् अत्यन्तकृशतरः तनीयान् क्षीणश्च। रक्रतो हलादेर्लघोरिति रेफादेशः मध्यो नितान्तमाक्रान्तः पीड़ित इव ननाम नतः प्रणतश्च। अत्र मध्यकुचमण्डलयोर्विशेषणसाम्याद्दुर्विजिगीषुराजप्रतीतेः समासोक्तिः, तथा वाच्ययोः प्रतीयमानामेदेनाक्रमणक्रियाकर्मकर्त्तृभावसम्भावितेयं नमनस्याक्रमणहेतुकत्वोत्प्रेक्षा इत्यनयोः सङ्करः उत्प्रेक्षयोस्तु नैरपेक्ष्यादसंसृष्टिरेवेति विवेकः ॥१५॥

**टिप्पनी**—आकर्षतेति। पूर्वापरयोः सम्भोगशृङ्गारात् सन्दंशपातन्यायेनात्रापि सम्भोगशृङ्गार एव रस इति दिक्। प्रसादो गुणः वैदर्भी च रीतिः ॥१५॥

**বাঙ্গালা**—যুবতিদিগের অত্যন্তভারী স্তনগুলি অত্যন্ত উন্নত বলিয়া, অবনত মধ্যদেশকে যেন উপরের দিকে আকর্ষণ করিতেছিল এবং অত্যন্তকৃশ মধ্যদেশ তাদৃশস্তনকর্তৃক আক্রান্ত হইয়াই যেন অবনত হইয়া পড়িয়াছিল ॥১৫॥

**अन्वयः**—प्रियः यां यां प्रैक्षत, सा सा कातराक्षी (सती) ह्रिया नम्रमुखी बभूव। अन्याः आहितेर्ष्याः (सत्यः) तत्र अन्तरे निःशङ्कं समं कटाक्षैः अमुं जघ्नुः ॥१६॥

**टीका**—यां यामिति। प्रियो हरिर्यां यामङ्गनाम्। नित्यवीप्सयोरिति वीप्सायां द्विर्भावः एकपदम्। प्रैक्षतालोकयत सा सा। पूर्ववत् द्विर्भावः। कातराक्षी साध्वसात्

तस्यातसीसूनसमानभासो भ्राम्यन्मयूखावलिमण्डलेन।
चक्रेण रेजे यमुनाजलौघः स्फुरन्महावर्त्त इवैकबाहुः ॥१७॥
विरोधिनां विग्रहभेददक्षा मूर्त्तेव शक्तिः क्वचिदस्खलन्ती।
नित्यं हरेः सन्निहिता निकामं कौमोदकी मोदयति स्म चेतः ॥१८॥

---

कितलोचना सती ह्रिया नम्रमुखी बभूव। एतेन कार्य्यद्वारा लज्जासाध्वसभावोदय उक्तः। अन्यासामीर्ष्याभावोदयमाह। अन्याः अप्रेक्षिताङ्गनाः आहितेर्ष्याः कृतासूयाः सत्यः। परोत्कर्षाक्षमेर्ष्या स्यादिति लक्षणात्। तदान्तरे तस्मिन्नवलोकनावसरे। क्लीवेऽन्तरमवकाश-कालौ तादर्थ्येऽवसरेऽवधाविति वैजयन्ती। निःशङ्कं तदवलोकनादेव विस्रब्धं यथा तथा समं युगपत् कटाक्षैरस्तुं हरिं जघ्नुः प्रजह्रुः सरोषमद्राक्षुः ॥१६॥

टिप्पनी—यां यामिति। अत्र स्वभावोक्तिरलङ्कारः, सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१६॥

বাঙ্গালা—শ্রীকৃষ্ণ যে যে রমণীর প্রতি দৃষ্টিপাত করিয়াছিলেন; সেই সেই রমণীই চকিতনেত্রা হইয়া, লজ্জায় অধোমুখ হইয়াছিল; আর সেই অবসরে অন্য রমণীরা ঈর্ষা করিয়া, নিঃশঙ্কভাবে এক যোগে শ্রীকৃষ্ণের প্রতি কটাক্ষপাত করিয়াছিল ॥১৬॥

अन्वयः—अतसीसूनसमानभासः तस्य एकबाहुः भ्राम्यन्मयूखावलीमण्डलेन चक्रेण स्फुरन्महावर्त्तः यमुनाजलौघः इव रेजे ॥१७॥

टीका—अथास्य पञ्चभिर्दिव्यास्त्रसन्निधानमाह, तस्येत्यादि। अतसीसूनेन क्षुमाकुसु-मेन समानभासः तुल्यकान्तेः स्निग्धश्यामस्येत्यर्थः। अतसी स्यादुमा क्षुमेत्यमरः। तस्य हरेरेकबाहुः भ्राम्यदावर्त्तमानं मयूखावलीनां मण्डलं चक्रवालं यस्य तेन चक्रेण सुदर्श-नेन स्फुरन्महानावर्त्तो भ्रमो यस्य सः। स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः। यमुनाजलाना-मोघः पूर इव रेजे चकासावित्यर्थः ॥१७॥

टिप्पनी—तस्येति। अत्र श्रौतोपमावृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—অতসীকুসুমের ন্যায় স্নিগ্ধশ্যামবর্ণ শ্রীকৃষ্ণের দক্ষিণহস্তে সুদর্শনচক্র ছিল, তাহার কিরণরাশি সকল দিকে ঘুরিতেছিল, সুতরাং বিশাল আবর্ত্ত (ঘোলা) ঘুরিতে থাকিলে, যমুনার জলপ্রবাহ যেমন শোভা পায়, তাঁহার দক্ষিণহস্ত সেইরূপ শোভা পাইতে-ছিল ॥১৭॥

अन्वयः—विरोधिनां विग्रहभेददक्षा क्वचित् अस्खलन्ती नित्यं सन्निहिता मूर्त्ता शक्तिः इव कौमोदकी हरेः चेतः निकामं मोदयति स्म ॥१८॥

टीका—विरोधिनामिति। विरोधिनां वैरिणां विग्रहभेदे शरीरविदारणे दक्षा।

न केवलं यः स्वतया मुरारेरनन्यसाधारणतान्दधानः।
अत्यर्थमुद्वेजयिता परेषां नाम्नापि तस्यैव स नन्दकोऽभूत् ॥१९॥
न नीतमन्येन नतिङ्कदाचित् कर्णान्तिकप्राप्तगुणं क्रियासु।
विधेयमस्याभवदन्तिकस्थं शार्ङ्गन्धनुर्मित्रमिव द्रढीयः ॥२०॥

---

शरीरं वर्ष्म विग्रह इत्यमरः। क्वचित् क्वापि अस्खलन्ती सर्वत्राप्रतिहतवृत्तिरित्यर्थः नित्यं सन्निहिता अनपायिनी अत एव मूर्त्ता मूर्त्तिमती शक्तिः सामर्थ्यमिव स्थितेत्युत्प्रेक्षा, कौमोदकी गदा हरेश्चेतो निकामं मोदयति स्म सन्निधानेनेति भावः ॥१८॥

**टिप्पनी**—विरोधिनामिति। अत्र 'मोद मोद' इति छेकानुप्रासस्येति टीकोक्तोत्प्रेक्षया सहास्य संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

**বাঙ্গালা**—যে গদা শত্রুদিগের শরীরমর্দ্দনে সমর্থ এবং যে গদা কোন স্থানেও প্রতিহত হয় না; বিশেষতঃ সর্বদাই শ্রীকৃষ্ণের নিকটে থাকে, কৌমোদকীনামক সেই গদা শ্রীকৃষ্ণের চিত্তে বিপুল আনন্দ জন্মাইতে লাগিল ॥১৮॥

**अन्वयः**—अनन्यसाधारणतां दधानः यः केवलं स्वतया मुरारेः नन्दकः न; (अपितु) परेषाम् अत्यर्थम् उद्वेजयिता (अतएव) नाम्ना अपि सः तस्य एव नन्दकः (सन्निहितः) अभूत ॥१९॥

**टीका**—न केवलमिति। अन्यस्य साधारणो न भवतीत्यनन्यसाधारणस्तस्य भावस्तत्ता तान्दधानः तथापि यो नन्दकः स्वतया केवलं गजाश्वादिवत् स्वत्वेनैव मुरारेर्नन्दको न किन्तु परेषां शत्रूणाम् अत्यर्थमुद्वेजयिता भीषयिता सन् अतएव नाम्नापि चन्द्रादिवन्नन्दयतीति नन्दक इत्यन्वर्थसंज्ञाबलेनापि नन्दयितृत्वेनापीति यावत्। तस्यैव तदीय एव योऽनन्यसाधारणत्वात्परोद्वेजकत्वाच्च तस्यैव नन्दको नन्दयिता चेत्यर्थः। स नन्दको नन्दकाख्यः खड्गोऽभूत सन्निहितोऽभूदित्यर्थः। सम्बन्धानुवादेन सन्निधानमेवात्र विधेयं प्रकरणात् अत्रानन्यसाधारणत्वपरोद्वेजकत्वपदार्थाभ्यां विशेषणगत्या नन्दकस्य तदीयतासमर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥१९॥

**टिप्पनी**—नेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—যে তরবারি শ্রীকৃষ্ণকে অসাধারণ করিয়া (সর্বপ্রধান বীর করিয়া) কেবল আপন মূর্ত্তিতেই তাঁহার আনন্দ জন্মাইত না; কিন্তু শত্রুদিগের অত্যন্ত ভয় জন্মাইয়া, নাম দ্বারাও তাঁহার আনন্দ জন্মাইত; নন্দকনামক সেই তরবারি তাঁহার নিকটে আসিয়াছিল ॥১৯॥

**अन्वयः**—कदाचित् अन्येन नतिं न नीतं क्रियासु कर्णान्तिकप्राप्तगुणं विधेयं द्रढीयः शार्ङ्गं धनुः मित्रम् इव अस्य अन्तिकस्थम् अभवत् ॥२०॥

**टीका**—न नीतमिति। अन्येन पुरुषान्तरेण नतिमाकर्षणं भेदेन स्वानुकूल्यं च न नीतं न प्रापितं क्रियासु रणकर्मसु हिताहितकृत्येषु च कर्णान्तिकं कर्णगोचरं प्राप्तो

প্রবৃদ্ধমন্দ্রাম্বুদধীরনাদঃ কৃষ্ণার্ণবাভ্যর্ণচরৈকহংসঃ।
মন্দানিলাপূরকৃতং দধানো নিধ্বানমশ্রূয়ত পাঞ্চজন্যঃ ॥২১॥
ররাজ সম্পাদকমিষ্টসিদ্ধেঃ সর্বাসু দিক্ষ্বপ্রতিষিদ্ধমার্গম্।
মহারথঃ পুষ্যরথং রথাঙ্গী ক্ষিপ্রং ক্ষপানাথ ইবাধিরূঢ়ঃ ॥২২॥

---

গুণো মৌর্বী আয়তাধমস্য যস্য তদ্বিধেয়ং ক্রিয়াসু বশ্যং দ্রঢীয়ঃ দৃঢ়তরং পৌড়াসহতরমিতি যাবৎ শৃঙ্গস্য বিকারঃ শার্ঙ্গং নাম ধনুঃ মিত্রমিবাস্য হরেরন্তিকস্থং সন্নিহিতমভবৎ ॥২০॥

টিপ্পনী—নীতি। অত্র পূর্ণোপমালঙ্কারঃ, নীতং নতিমিতি ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২০॥

বাঙ্গালা—অন্য লোক কখনও যাহাকে অবনত করিতে পারে নাই, যুদ্ধের সময় যাহার গুণ কর্ণের নিকটে যাইয়া থাকে এবং যে বশ্য ও দৃঢ়তর; শৃঙ্গনির্ম্মিত সেই ধনু, বন্ধুর ন্যায় শ্রীকৃষ্ণের সন্নিহিত হইয়াছিল ॥২০॥

অন্বয়ঃ—প্রবৃদ্ধমন্দ্রাম্বুদধীরনাদঃ কৃষ্ণার্ণবাভ্যর্ণচরৈকহংসঃ মন্দানিলাপূরকৃতং নিধ্বানং দধানঃ পাঞ্চজন্যঃ অশ্রূয়ত ॥২১॥

টীকা—প্রবৃদ্ধেতি। ধিয়ং রাতীতি ধীরো মনোহরঃ মন্দ্রো গম্ভীরোঽম্বুদস্য মেঘস্যেব ধীরস্য নাদঃ প্রবৃদ্ধো যেন সঃ প্রবৃদ্ধমন্দ্রাম্বুদধীরনাদ ইত্যুপমা। কৃষ্ণ এবার্ণবঃ সমুদ্র-স্তস্যাভ্যর্ণচরোঽন্তিকচরঃ। উপকণ্ঠান্তিকাভ্যর্ণা ইত্যমরঃ। স চাসাবেকহংসশ্চেতি শ্লিষ্টপরম্পরিতরূপকম্। মন্দানিলস্যাপূর আপূরণান্তেন কৃতং জনিতং নিধ্বানং দধানঃ অনাধ্মাতোঽপি মন্দমারুতপ্রবেশাদেব ধ্বনতীতি পাটবাদতিশয়োক্তিঃ ধ্বন্যসম্বন্ধেঽপি সম্বন্ধ-কথনাৎ। পঞ্চজনো নাম কশ্চিদসুরস্তত্র ভবঃ পাঞ্চজন্যোঽস্য শঙ্খঃ। বহির্দেবপঞ্চজনেভ্যশ্চ বক্তব্যমিতি ঞ্যপ্রত্যয়ঃ। অশ্রূয়ত শ্রূয়তে স্ম পাঞ্চজন্যোঽপি সন্নিহিতোঽভূদিত্যর্থঃ। বীণা শ্রূয়তে পুষ্পাণ্যাঘ্রায়ন্তে ইত্যাদিবদ্ধর্মধর্মিণোরভেদোপচারাৎ পাঞ্চজন্যস্য শ্রবণোক্তিঃ ॥২১॥

টিপ্পনী—প্রবৃদ্ধেতি। অত্র ধীরপদং মনোহরার্থস্য অবাচকমিত্যবাচকত্বদোষঃ, গম্ভীরার্থং বালকল্প-নায়ান্তু মন্দ্রপদস্যাপি তদর্থত্বাৎ অর্থগতপুনরুক্ততাদোষঃ; তদেতৎ সমাধানায় 'প্রবৃদ্ধগম্ভীরপয়োদনাদঃ' ইতি পাঠঃ সমাশ্রয়ণীয়ঃ। বন্ধবৈকট্যাৎ ওজোগুণঃ, গৌড়ী চ রীতিঃ ॥২১॥

বাঙ্গালা—যাহার ধ্বনি, মেঘগর্জনের ন্যায় বৃহৎ, গভীর ও মনোহর; এবং যে, কৃষ্ণরূপ সমুদ্রের নিকটে বিচরণকারী অদ্বিতীয় হংসস্বরূপ; আর যে, অল্প বায়ুর পূরণেই ধ্বনি উৎপাদন করিতেছিল; সেই পাঞ্চজন্য শঙ্খের ধ্বনি শুনা যাইতে লাগিল ॥২১॥

অন্বয়ঃ—মহারথঃ রথাঙ্গী ইষ্টসিদ্ধেঃ সম্পাদকং সর্বাসু দিক্ষু অপ্রতিষিদ্ধমার্গং ক্ষিপ্রং পুষ্যরথম্ অধি-রূঢ়ঃ (সন্) পুষ্যরথম্ অধিরূঢ়ঃ ক্ষপানাথঃ ইব ররাজ ॥২২॥

টীকা—ররাজেতি। মহান্ রথো যস্য স মহারথো রথিকবিশেষঃ। আত্মানং সারথিং চাশ্বান্ রক্ষন্ যুধ্যেত যো নরঃ। স মহারথসংজ্ঞঃ স্যাদিত্যাহুর্নীতিকোবিদা ইতি। রথাঙ্গং

ध्वजाग्रधामा ददृशेऽथ शौरिः संक्रान्तमूर्त्तिर्मणिमेदिनीषु।
फणावतस्त्रासयितुं रसायास्तलं विविक्षन्निव पन्नगारिः ॥२३॥
यियासतस्तस्य महीध्ररन्ध्रभिदापटीयान् पटहप्रणादः।
जलान्तराणीव महार्णवौघः शब्दान्तराण्यन्तरयाञ्चकार ॥२४॥

---

चक्रमस्यास्तीति रथाङ्गी हरिः इष्टसिद्धेः सम्पादकं लक्षणवत्त्वात्। पुष्यः सर्वार्थसाधक इति शास्त्रादिति भावः। सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् अनिषिद्धगमनमित्यर्थः अधिष्ठानशक्तेर्निरङ्कुशत्वात्। पुष्यो हस्तो मैत्रमप्याश्विनश्च चत्वार्य्याहुः सर्वदिग्द्वारकाणीति शास्त्रादिति भावः। क्षिप्रं क्षिप्रगामिनम् अन्यत्र क्षिप्रनामकम्। क्षिप्रं चाश्विदिनेशपुष्यमिति शास्त्रात्। पुष्यरथं क्रीड़ारथम्। असौ पुष्यरथः क्रीड़ायानं न समराय यदित्यमरः। अधिरूढ़ः सन् पुष्यो रथ इव तं पुष्यरथमधिरूढ़ः पुष्यनक्षत्रगतः क्षपानाथश्चन्द्र इव रराज ॥२२॥

टिप्पनी—अत्र पूर्णोपमा वृत्त्यनुप्रासः छेकानुप्रासश्चालङ्काराः, तेषाञ्च परस्परनिरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

বাঙ্গালা—যে রথ, অভীষ্টসিদ্ধির সম্পাদন করিত এবং সকল দিকেই যে রথের গতি, অপ্রতিহতভাবে হইত; দ্রুতগামী সেই ক্রীড়ারথে আরোহণ করিয়া শ্রীকৃষ্ণ, পুষ্যানক্ষত্রগত চন্দ্রের ন্যায় শোভা পাইতে লাগিলেন ॥২২॥

अन्वयः—अथ शौरेः ध्वजाग्रधामा मणिमेदिनीषु संक्रान्तमूर्त्तिः पन्नगारिः फणावतः त्रासयितुं रसायाः तलं विविक्षन् इव ददृशे (लोकैः) ॥२३॥

टीका—ध्वजेति। अथ रथारोहणानन्तरं शौरेः कृष्णस्य ध्वजाग्रं धाम स्थानं यस्य सः मणिमेदिनीषु मणिमयकुट्टिमेषु संक्रान्तमूर्त्तिः प्रतिबिम्बिताङ्गः सन् पन्नगारिर्गरुड़ः फणावतः सर्पान् त्रासयितुं द्रावयितुं रसायास्तलं पातालं विविक्षन् प्रवेष्टुमिच्छन्निवेत्युत्प्रेक्षा। विशतेः सनन्ताल्लटः शत्रादेशः। ददृशे दृष्टः। सोऽपि सन्निहितोऽभूदित्यर्थः ॥२३॥

टिप्पनी—ध्वजेति। अत्र पन्नगारेः रसातलप्रवेशेच्छासम्भावनां प्रति संक्रान्तमूर्त्तिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेति टीकोक्तक्रियोत्प्रेक्षया सह तस्य सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—শ্রীকৃষ্ণ রথে আরোহণ করিলে পর, দেখা গেল—গরুড় আসিয়া তাঁহার রথের ধ্বজের উপরে বসিলেন; মণিময় ভূমিতে গরুড়ের প্রতিবিম্ব পড়িল; তাহাতে বোধ হইতে লাগিল—গরুড় যেন সর্পগণকে ভীত করিবার জন্য পাতালে প্রবেশ করিতে ইচ্ছা করিতেছেন ॥২৩॥

अन्वयः—यियासतः तस्य महीध्ररन्ध्रभिदापटीयान् पटहप्रणादः, महार्णवौघः जलान्तराणि इव शब्दान्तराणि अन्तरयाञ्चकार ॥२४॥

टीका—यियासत इति। यातुमिच्छतो यियासतः। यातेः सनन्ताल्लटः शत्रादेशः।

यतः स भर्त्ता जगतां जगाम धर्त्त्रा धरित्र्याः फणिना ततोऽधः ।
महाभराभुग्नशिरःसहस्रसाहाय्यकव्यग्रभुजं प्रसस्रे ॥२५॥
अथोच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि ।
क्रियाफलानीव सुनीतिभाजं सैन्यानि सोमान्वयमन्वयुस्तम् ॥२६॥

---

तस्य हरेः सम्बन्धी महीं धरन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात् क इति वामनः । महीध्रादयो मूलविभुजादिदर्शनादिति । तेषां रन्ध्राणि विलानि तेषां भिदा भेदनम् । षिद्भिदादिभ्योऽङ् । तस्यां पटीयान् समर्थ तरः पटहप्रणाद आनकघोषः महार्णवस्यौघः समुद्रस्य प्रवाहः अन्यानि जलानि जलान्तराणीव । सुप् सुपेति समासः । अन्यान् शब्दान् शब्दान्तराणि । पूर्ववत्समासः । अन्तरयाञ्चकार अन्तर्हितानि चकार छादयामासेत्यर्थः । अन्तरशब्दादन्तर्द्धानार्थात् करोतेर्ण्यन्ताल्लिट् । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदता-दर्थ्ये इत्युभयत्राप्यमरः ॥२४॥

टिप्पनी—यियासत इति । अत्र पटहप्रणादस्य महीध्ररन्ध्रभिदापटीयस्त्वासम्बन्धेऽपि तत्सम्बन्धाभि-धानादतिशयोक्तिः श्रौतोपमा, छेकानुप्रासश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः । वर्णवैकट्यात् ओजो गुणः, गौड़ी च रीतिः ॥२४॥

বাঙ্গালা—শ্রীকৃষ্ণ গমন করিবার ইচ্ছা করিলেন ; তখন ঢাকের বিশাল শব্দ হইতে লাগিল ; সে শব্দ পর্ব্বতের গুহা বিদারণ করিতে সমর্থ ছিল ; সুতরাং সমুদ্রের জলপ্রবাহ যেমন অন্যান্য জলপ্রবাহকে নীচে ফেলে ; সেইরূপ সেই ঢাকের শব্দ অপরাপর শব্দকে নীচে ফেলিয়াছিল ॥২৪॥

अन्वयः—जगतां भर्त्ता सः यतः जगाम, ततः अधः धरित्र्याः धर्त्त्रा फणिना महाभराभुग्नशिरः-सहस्रसाहाय्यकव्यग्रभुजं प्रसस्रे ॥२५॥

टीका—यत इति । जगतां भर्त्ता धारयिता कुक्षिस्थाखिललोक इत्यर्थः । कर्त्तृ-कर्मणोः कृतीति कर्मणि षष्ठी । स हरिर्यतो येन भूमार्गेण जगाम ततस्तस्मिन् भूभागे अधः पाताले धरित्र्याः धरण्याः धर्त्त्रा धारयित्रा । पूर्ववत् षष्ठी । फणिना शेषेण महता भरेण आसमन्तात् भुग्नस्य कुब्जीभूतस्य शिरःसहस्रस्य साहाय्यके सहायकर्मणि । योपधाद्गुरूपोत्तमाद्वुञ् । व्यग्राः त्वरमाणाः भुजा यस्मिन् तद्यथा तथा प्रसस्रे प्रसृतम् । भावे लिट् । हरिस्त्रधातेत्यर्थः । अत्र शेषस्य विशिष्टप्रसरणासम्बन्धेऽपि सम्बन्धोक्तेरति-शयोक्तिः ॥२५॥

टिप्पनी—यत इति । अत्र वृत्त्यनुप्रासश्छेकानुप्रासश्चेति टीकोक्तातिशयत्त्या सह संसृष्टिः । वर्णावयाङ्कु-र्ण्यात् ओजो गुणः, गौड़ी च रीतिः ॥२५॥

বাঙ্গালা—ত্রিভুবনের আধার শ্রীকৃষ্ণ, যে পথে চলিতে লাগিলেন ; সেই পথের নীচে—পৃথিবীধারক অনন্তনাগ, অত্যন্তভারে অবনত আপন সহস্র মস্তকের সাহায্যের জন্য হাত দিয়া, সেই সেই স্থানকে ঠেলিয়া ধরিতে ধরিতে চলিতে লাগিলেন ॥২৫॥

श्यामारुणै र्वारणदानतोयै रालोड़िताः काञ्चनभूपरागाः ।
आनेमिमग्नैः शितिकण्ठपत्रक्षोदद्युतश्चुक्षुदिरे रथौघैः ॥२७॥
न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः पदाहतो यत्सदृशं गरिम्णः ॥२८॥

---

अन्वयः—अथ उच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि सैन्यानि सोमान्वयं तम्, सुनीतिभाजं क्रियाफलानि इव, अन्वयुः ॥२६॥

टीका—अथेति। अथ हरिचलनानन्तरम् उच्चकैरुन्नते तोरणे द्वारदारुणि सङ्गेन भङ्गस्तस्माद्भयेनावनम्रीकृतानि केतनानि यैस्तानि सैन्यानि सोमस्यान्वयः सन्तानः तं सोमान्वयं हरिं सुनीतिभाजं सुष्ठु नीतिमन्तं क्रियाः सामाद्युपायप्रयोगास्तासां फलानि हिरण्यभूमिरूप्यादिलाभा इवान्वयुः अन्वगच्छन्। यातेर्लङ् लङः शाकटायनस्यैवेति सेर्जुस् ॥२६॥

टिप्पनी—अथेति। अत्र श्रौतोपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः। समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥२६॥

বাঙ্গালা—তাহার পর, উচ্চ তোরণে (গেটে) লাগিয়া ভাঙ্গিয়া যাইবে এই ভয়ে, সৈন্যেরা আপন আপন ধ্বজকে নামাইল; তৎপরে, সামাদি উপায়প্রয়োগের ফল যেমন নীতিপথানুসারী রাজার অনুসরণ করে সেইরূপ সেই সৈন্যেরা শ্রীকৃষ্ণের অনুসরণ করিল ॥২৬॥

अन्वयः—श्यामारुणैः वारणदानतोयैः आलोड़िताः शितिकण्ठपत्रक्षोदद्युतः काञ्चनभूपरागाः आनेमिमग्नैः रथौघैः चुक्षुदिरे ॥२७॥

टीका—श्यामेति। श्यामानि चारुणानि च तैः श्यामारुणैः कृष्णलोहितैः। वर्णो वर्णेनेति समासः। वारणदानतोयैर्गजमदोदकैरालोड़िताः सम्मिलिता अतएव शितिकण्ठपत्रक्षोदाः मयूरबर्हचूर्णा इव द्योतन्त इति तथोक्ताः। क्विप्। उपमालङ्कारः। काञ्चनस्य भूः काञ्चनभूस्तस्याः परागाः पांशवः आनेमि नेमिमभिव्याप्य। तस्यान्तनेमिः स्त्रीत्यमरः। आङ् मर्य्यादाभिविध्योरित्यभिविधावव्ययीभावः। मग्नै रथौघैः चुक्षुदिरे पिष्टा इत्यर्थः। परागाणां विशिष्टपेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। तथा च महती गजरथसम्पत्तिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥२७॥

टिप्पनी—श्यामेति। अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोरिति टीकोक्तातिशयोक्त्या सह संसृष्टिः। बन्धवैकट्यात् ओजो गुणः, गौड़ी च रीतिः ॥२७॥

বাঙ্গালা—স্বর্ণময় ভূমির ধূলি সকল, হস্তিগণের কৃষ্ণ ও লোহিতবর্ণের মদজলে প্রক্ষিপ্ত হইয়া, ময়ূরপুচ্ছচূর্ণের ন্যায় শোভা পাইতে লাগিল; তার পরে চক্রপ্রান্তপর্য্যন্ত মগ্ন রথসমূহের আঘাতে সে গুলি আবার নিষ্পেষিত হইয়া যাইতে লাগিল ॥২৭॥

अन्वयः—अष्टापदभूमिरेणुः पदाहतः (सन्) महाजनानां शिरांसि न लङ्घयामास, उद्धतिं नैव आजगाम, यत् गरिम्णः सदृशम् अचेष्टत ॥२८॥

निरुध्यमाना यदुभिः कथञ्चिन्मुहुर्यदुच्चिक्षिपुरग्रपादान्।
ध्रुवं गुरून्मार्गरुधः करीन्द्रानुल्लङ्घ्य गन्तुं तुरगास्तदीषुः ॥२९॥
अवेक्षितानायतवल्गमग्रे तुरङ्गिभिर्यत्ननिरुद्धवाहैः।
प्रक्रीड़ितान् रेणुभिरेत्य तूर्णं निन्युर्जनन्यः पृथुकान् पथिभ्यः ॥३०॥

---

टीका—नेति। अष्टसु धातुषु पदं प्रतिष्ठा अस्येति अष्टापदं सुवर्णम्। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामिति सुवर्णपर्यायेष्वमरः। तस्य भूमिस्तस्याः रेणुः काञ्चनभूरजः पदाहतो रथाश्वादिचरणताड़ितोऽपि सन्नित्यर्थः महाजनानां बहुजनानां पूज्यानाञ्च शिरांसि न लङ्घयामास नाक्रामति स्म किं बहुना उड्डतिमुत्पतनन्दर्पञ्च नैवा-जगाम कुतः यद्यस्मात् गरिमणो गुरुत्वगुणस्य माहात्म्यस्य च। प्रियश्रियेत्यादिना गुरोर्गरा-देशः। सदृशमनुरूपं यथा तथा अचेष्टत अलङ्घनव्यवहारे गुरुत्वस्यौद्धत्यप्रतिबन्धकत्वा-दिति भावः। अत्रानौद्धत्यादिप्रस्तुतसुवर्णपरागविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेः समासो-क्तिरलङ्कारः ॥२८॥

टिप्पनी—नेति। तृतीयपादे छेकानुप्रासस्येति टीकोक्तसमासोक्त्या सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

বাঙ্গালা—স্বর্ণময় ভূমির ধূলি সকল, রথ, অশ্ব ও সৈন্যগণের চরণে আহত হইয়া, বহু লোকের মস্তক লঙ্ঘন করিল না, উড়িলও না, কিন্তু আপনগুরুত্বের অনুরূপ আচরণ করিল (ভারবশতঃ ভূতলেই থাকিল) ॥২৮॥

अन्वयः—तुरगाः यदुभिः कथञ्चित् निरुध्यमानाः (अपि) यत् अग्रपादान् उच्चिक्षिपुः, तत् मार्गरुधः गुरून् करीन्द्रान् उल्लङ्घ्य ध्रुवं गन्तुम् ईषुः ॥२९॥

टीका—निरुध्यमाना इति। तुरगाः यदुभिरारूढैरिति भावः कथञ्चिदतिप्रयत्नेन निरुध्यमाना वल्गाकर्षणेन वार्य्यमाणा अपि यद्यस्मादग्राश्च ते पादाश्च तानग्रपादान्। हस्ताग्राग्रहस्तादयो गुणगुणिनोरभेदयोगादिति वामनः सामानाधिकरण्येन समासः। मुहु-रुच्चिक्षिपुरुत्क्षिप्तवन्तः तत्तस्मान्मार्गं रुन्धन्तीति मार्गरुधः मन्दगमनेन मार्गरोधिनः। क्विप्। गुरून् महतः पूज्यांश्चालङ्घ्यानपीति भावः। करीन्द्रानुल्लङ्घ्य गन्तुमीषुरिच्छन्ति स्म। ध्रुव-मित्युत्प्रेक्षायाम्। गुरवोऽपि सन्मार्गरोधकाः परैरुल्लङ्घ्यन्त इति अलङ्कारेण वस्तुध्वनिः ॥२९॥

टिप्पनी—निरुध्यमाना इति। अत्र ध्रुवमित्यस्य उत्प्रेक्षावाचकत्वात् वाच्या भावाभिमानिनी क्रियोत्-प्रेक्षालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—যাদবসৈন্যেরা লাগাম টানিয়া ধরিয়া অতিকষ্টে ঘোড়াগুলিকে নিরুদ্ধ করিলেও, যেহেতু সে ঘোড়াগুলি চরণাগ্র উত্তোলন করিয়াছিল ; সেহেতু নিশ্চয়ই তাহারা পথরোধক বিশালদেহ বৃহৎ হস্তীগুলিকে লঙ্ঘন করিয়া যাইতে ইচ্ছা করিয়াছিল ॥২৯॥

अन्वयः—जनन्यः तूर्णम् एत्य आयतवल्गम् यत्ननिरुद्धवाहैः तुरङ्गिभिः अग्रे अवेक्षितान् रेणुभिः प्रक्रीड़ितान् पृथुकान् पथिभ्यः निन्युः ॥३०॥

दिदृक्षमाणाः प्रतिरथ्यमीयुर्मुरारिमारादनघं जनौघाः ।
अनेकशः संस्तुतमप्यनल्पा नवं नवं प्रीतिरहो करोति ॥३१॥

---

टीका—अवेक्षितानिति । आयता आकृष्टा वल्गा मुखरज्जुर्यैस्तान् कर्मणि तथा तथ यत्नेन दुर्वारवेगत्वात् अतिप्रयत्नेन निरुद्धा वाहा वाजिनो यैस्तैः । वाजिवाहार्वगन्धर्व इत्यमरः । तुरङ्गिभिः अश्वसादिभिरग्रे पुरोदेशेऽवेक्षितानालोकितान् रेणुभिः प्रक्रीडन्तीति प्रक्रीडितान् पांशुक्रीडाकरान् । कर्त्तरि क्तः । पृथुकान् शिशून् । पृथुकः शावकः शिशुरित्यमरः । जनन्यस्तूर्णमेत्य पथिभ्यो निन्युः अपसारयाञ्चक्रुरिति स्वभावोक्तिः ॥३०॥

टिप्पनी—अवेक्षितानिति । अत्र वत्सलरसः त्रासाख्यव्यभिचारिभावस्य अङ्गमिति रसवदलङ्कारः टीकोक्तस्वभावोक्त्या सङ्कीर्यते ; छेकानुप्रासश्च शब्दालङ्कार इति समुदाये संसृष्टिः । वत्सलोरसः प्रसादो गुण, वैदर्भी च रीतिः ॥३०॥

বাঙ্গালা—বহুতর বালক ধূলা দিয়া পথে খেলা করিতেছিল ; অশ্বারোহীরা তাহাদিগকে সম্মুখে দেখিয়া, লাগাম লম্বা করিয়া দিয়া, বিশেষ চেষ্টা করিয়া ঘোড়াগুলিকে নিরুদ্ধ করিল ; ইত্যবসরে সেই বালকদের জননীরা তাড়াতাড়ি আসিয়া তাহাদিগকে পথ হইতে নিয়া গেল ॥৩০॥

अन्वयः—जनौघाः अनघं मुरारिं दिदृक्षमाणाः (सन्तः) प्रतिरथ्यम् आरात् ईयुः । (तथाहि) अनल्पा प्रीतिः अनेकशः संस्तुतम् अपि (वस्तु) नवं नवं करोति ॥३१॥

टीका—दिदृक्षमाणा इति । अनघमकलङ्कं मुरारिं दिदृक्षमाणाः द्रष्टुमिच्छन्तः । दृशेः सनन्ताल्लटः शानजादेशः, ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । जनौघा रथ्यायां रथ्यायां प्रतिरथ्यम् । याथार्थ्येऽव्ययीभावः आरात् समीपम् । आराद्दूरसमीपयोरित्यमरः । ईयुर्जग्मुः । इणो लिट् दीर्घ इणः कितीत्यभ्यासदीर्घः । ननु नित्यपरिचिते का दिदृक्षेत्यत्राह, अनेकश इति । अनेकशो बहुवारमित्यर्थः । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस्प्रत्ययः । संस्तुतं परिचितमपि वस्तु जनेनेति शेषः । संस्तवः स्यात्परिचय इत्यमरः । अनल्पा अधिका प्रीतिः प्रेम कर्त्री नवं नवम् । आभीक्ष्ण्येन नवं करोति । नित्यवीप्सयोरिति द्विर्भावः । अहोशब्दः पुराणस्यापि नूतनत्वमित्याश्चर्य्ये यथा परप्रेमास्पदं वस्तु नित्यदृष्टमपि अदृष्टचरमिव प्रतिक्षणं दिदृक्ष्यते भगवानपि तथैवेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥३१॥

टिप्पनी—दिदृक्षमाणा इति । अत्र छेकानुप्रासस्येति टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । श्रीकृष्णं प्रति जनौघानां रतिर्भावः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

বাঙ্গালা—নিষ্কলঙ্ক শ্রীকৃষ্ণকে দেখিতে ইচ্ছা করিয়া, বহুতর লোক আসিয়া প্রত্যেক

**उपेयुषो वर्त्म निरन्तराभिरसौ निरुच्छ्वासमनीकिनीभिः ।**
**रथस्य तस्यां पुरि दत्तचक्षुर्विद्वान् विदामास शनैर्न यातम् ॥३२॥**
**मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा ।**
**तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥३३॥**

---

রাস্তায় তাঁহার নিকট উপস্থিত হইতে লাগল। কারণ, অত্যন্ত ভালবাসা, বিশেষ পরিচিত পদার্থকেও নূতন নূতন করিয়া থাকে ॥৩১॥

**अन्वयः**—विद्वान् तस्यां पुरि दत्तचक्षुः असौ निरन्तराभिः अनीकिनीभिः निरुच्छ्वासं वर्त्म उपेयुषः रथस्य शनैः यातं न विदामास ॥३२॥

**टीका**—उपेयुष इति । विद्वानभिज्ञः अतएव तस्यां पुरि नगर्य्यां दत्तचक्षुः निबद्धदृष्टिरसौ हरिर्निरन्तराभिर्नीरन्ध्राभिरनीकिनीभिः सेनाभिर्निरुच्छ्वासम् अविकृष्ट वर्त्म उपेयुषः प्राप्तस्य रथस्य शनैर्यातं सम्बन्धनिबन्धनं मन्दगमनं न विदामास न विवेद । उषविदजागृभ्योऽन्यतरस्यामिति आम्प्रत्ययः । व्यासङ्गादसंवेदनं नतु तत्त्वाज्ञानादिति भावः । व्यासङ्गस्य पदार्थत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥३२॥

**टिप्पनी**—उपेयुष इति । अत्रविद्वानपि न विदामास इति विरोधः, विद्वानिति ज्ञानस्य पुरीविषयकत्वाच्च तस्य समाधानमिति विरोधभासोऽलङ्कारस्तेन टीकोक्तकाव्यलिङ्गेन सह अङ्गाङ्गिभावेन सङ्करः । बन्धवैक-ट्यात् ओजो गुणः, गौड़ी च रीतिः ॥३२॥

**বাঙ্গালা**—সৈন্যগণ অতিঘনভাবে চলিতে থাকায় পথের এক তিল স্থানেও ফাঁক ছিল না; শ্রীকৃষ্ণের রথ সেই পথে উপস্থিত হইয়া আস্তে আস্তে যাইতেছিল; এদিকে শ্রীকৃষ্ণ দ্বারকানগরীর সকল অবস্থাই জানিতেন বলিয়া তাহার দিকে দৃষ্টিপাত করিতেছিলেন; সুতরাং রথ যে আস্তে আস্তে চলিতেছে, তাহা তিনি বুঝিতেই পারিয়াছিলেন না ॥৩২॥

**अन्वयः**—मध्येसमुद्रं काञ्चनवप्रभासा ककुभः पिशङ्गीः कुर्वती या जलं भित्त्वा (उत्थिता) तुरङ्गकान्ता-मुखहव्यवाहज्वाला इव उल्ललास ॥३३॥

**टीका**—अथैकत्रिंशता श्लोकैर्द्वारकां वर्णयति, मध्य इति । समुद्रस्य मध्ये मध्ये-समुद्रम् । पारे मध्ये षष्ठ्या चेति विकल्पादव्ययीभावः, मध्यशब्दस्य तत्सन्नियोगादेकारान्त-त्वम् । काञ्चनवप्रभासा हेमप्राकारप्रभया ककुभो दिशः पिशङ्गीः पिङ्गलवर्णाः । गौरादि-त्वात् ङीष् । कुर्वती या पूः जलं समुद्रोदकं भित्त्वा उत्थितेति शेषः । तुरङ्गकान्तायाः वड़वाया मुखे हव्यं वहतीति हव्यवाहोऽग्निः । कर्मण्यण्प्रत्ययः । तस्य वाड़वाग्नेः ज्वालेव उल्ललास उद्बभासे । अत्र समुद्रान्तर्लीनायां वड़वानलज्वालायां कदाचिल्लब्धाभ्यु-त्थानस्य मध्योद्भवनस्य पुरि दर्शनाभेदाध्यवसायेनास्या ज्वालात्वमुत्प्रेक्ष्यते इवशब्दोऽयमुत्प्रे-क्षाया एव व्यञ्जको नोपमायाः ईदृग्ज्वालाया अप्रसिद्धत्वेनोपमानत्वायोगात् । मन्ये शङ्के ध्रुवं नूनं प्रायः इत्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इत्याचार्य्य-दण्डी ॥३३॥

কৃতাস্পদা ভূমিভৃতাং সহস্রৈরুদন্বদম্ভঃপরিবীতমূর্ত্তিঃ।
অনির্বিদা যা বিদধে বিধাত্রা পৃথ্বী পৃথিব্যাঃ প্রতিযাতনেব ॥৩৪॥
ত্বষ্টুঃ সদাভ্যাসগৃহীতশিল্পবিজ্ঞানসম্পৎপ্রসরস্য সীমা।
অদৃশ্যতাদর্শতলামলেষু চ্ছায়েব যা স্বর্জলধের্জলেষু ॥৩৫॥

---

টিপ্পনী—মধ্য ইতি। অত্র চ ত্যতেতি পদানভিধানাৎ ন্যূনপদতাদোষঃ; স চ 'সমুত্থিতাম্বীমুখ-হব্যবাহ—' ইতি পাঠেন সমাধেয়ঃ। বন্ধবৈকট্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৩॥

বাঙ্গালা—যে দ্বারকানগরী, সমুদ্রমধ্যগত স্বর্ণময় প্রাচীরের প্রভাদ্বারা দিক্‌সমূহকে পিঙ্গলবর্ণ করতঃ, জল ভেদ করিয়া উত্থিত বাড়বানলের শিখার ন্যায় দীপ্তি পাইতেছিল ॥৩৩॥

অন্বয়ঃ—অনির্বিদা বিধাত্রা ভূমিভৃতাং সহস্রৈঃ কৃতাস্পদা উদন্বদম্ভঃপরিবীতমূর্ত্তিঃ যা পৃথিব্যাঃ পৃথ্বী প্রতিযাতনা ইব বিদধে ॥৩৪॥

টীকা—কৃতাস্পদেতি। ভূমিভৃতাং রাজ্ঞাং গিরীণাং চ সহস্রৈঃ কৃতাস্পদা কৃতাধিষ্ঠানা। আস্পদং প্রতিষ্ঠায়ামিতি নিপাতঃ। উদকমস্যাস্তীত্যুদন্বানুদধিঃ। উদন্বানুদধিঃ সিন্ধুরিত্যমরঃ। উদন্বানুদকাচেতি নিপাতনাৎসাধুঃ। তস্যাম্ভোভিঃ পরিবীতা পরিবেষ্টিতা মূর্ত্তিঃ স্বরূপং যস্যাঃ সা পৃথ্বী পৃথুঃ। বোতো গুণবচনাদিতি ঙীপ্। এবংভূতা যা পূঃ ন নির্বিণ্ণে ন খিদ্যতে ইত্যনির্বিৎ। বিদের্জ্ঞানার্থত্বান্নিঃপূর্বাৎসত্সূদ্বিষেত্যাদিনা ক্বিপ্। তেনানির্বিদা অখিন্নেন অন্যথা শিল্পসৌষ্ঠবাসিদ্ধেরিতি ভাবঃ বিধাত্রা প্রথত ইতি পৃথিবী ভূঃ। প্রথেঃ ষিবন্, ষিদ্গৌরাদিভ্যশ্চেতি ঙীষ্। তস্যাঃ প্রতিযাতনা প্রতিকৃতিরিব বিদধে বিহিতা। প্রতিযাতনা প্রতিচ্ছায়া প্রতিকৃতিরিত্যমরঃ। ভূম্রাতিনিধিত্বোৎপ্রেক্ষয়া পুরো বৈচিত্র্যবিস্তারাদি বস্তু ব্যজ্যতে ॥৩৪॥

টিপ্পনী—কৃতেতি। অত্র বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসশ্চেতি টীকোক্তোৎপ্রেক্ষয়া সহ তয়োঃ সংসৃষ্টিঃ। বন্ধবৈকট্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৪॥

বাঙ্গালা—যে দ্বারকানগরীতে অসংখ্য রাজগণ অবস্থান করিতেন এবং যে দ্বারকানগরী সমুদ্রজলে পরিবেষ্টিত ছিল; সুতরাং বিধাতা প্রসন্নচিত্ত হইয়া যে দ্বারকানগরীকে পৃথিবীর বিশাল প্রতিবিম্বের ন্যায় নির্ম্মাণ করিয়াছিলেন বলিয়াই যেন বোধ হইত ॥৩৪॥

অন্বয়ঃ—ত্বষ্টুঃ সদাভ্যাসগৃহীতশিল্পবিজ্ঞানসম্পৎপ্রসরস্য সীমা যা আদর্শতলামলেষু জলধের্জলেষু স্বঃ ছায়া ইব অদৃশ্যত ॥৩৫॥

টীকা—ত্বষ্টুরিতি। ত্বষ্টুর্বিশ্বকর্ম্মণঃ সদাভ্যাসেন গৃহীতো লব্ধো যঃ শিল্পবিজ্ঞানসম্পদঃ প্রসরঃ প্রকর্ষঃ তস্য সীমা অবধিরপ্রতিমেতি যাবৎ যা পুরাদর্শতলামলেষু দর্পণপৃষ্ঠস্বচ্ছেষু। দর্পণে মুকুরাদর্শাবিত্যমরঃ। জলধের্জলেষু স্বঃ স্বর্গস্য। স্বরব্যয়ং স্বর্গ-

रथाङ्गभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः ।
प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध ॥३६॥
यस्यामजस्रारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन ।
वप्रेण पर्य्यन्तचरोडुचक्रः सुमेरुवप्रोऽन्वहमन्वकारि ॥३७॥

---

नाक इत्यमरः । छाया प्रतिबिम्बमिवादृश्यत इत्युत्प्रेक्षा । छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोरिति वैजयन्ती ॥३५॥

टिप्पनी—लङ्घितेति । अत्र आदर्शतलामलेष्विति लुप्तोपमा, द्वितीयार्द्धे एकस्य लकारस्य असकृत् साम्यात् इत्यनुप्रासश्चेति टीकोक्तोत्प्रेक्षया सह समुदाये संसृष्टिः । समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥३५॥

বাঙ্গালা—বিশ্বকর্ম্মা, সর্বদাই অভ্যাস করিতে থাকায় শিল্পবিজ্ঞানের যে উৎকর্ষ লাভ করিয়াছিলেন, তাহার সীমাস্বরূপ যে দ্বারকানগরী, দর্পণতলের ন্যায় নির্ম্মল সমুদ্রজলের মধ্যে স্বর্গের প্রতিবিম্বের ন্যায় দেখা যাইত ॥৩৫॥

अन्वयः—अम्बुधिः पिता इव वराय रथाङ्गभर्त्रे अभिनवं प्रतिपादितायाः अङ्कभाजः यस्याः उपकण्ठं प्रेम्णा मुहुः रत्नावलीः आबबन्ध ॥३६॥

टीका—रथाङ्गेति । अम्बुधिः पितेव वराय श्रेष्ठाय जामात्रे च । वरो जामातरि श्रेष्ठ इति विश्वः । रथाङ्गभर्त्रे चक्रधराय हरये अभिनवं यथा तथा प्रतिपादितायाः अङ्कः समीप उत्सङ्गश्च तद्भाजः । अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोरिति केशवः । यस्याः पुर उपकण्ठमन्तिके । अत्यन्तसंयोगे द्वितीया । अन्यत्र कण्ठे । विभक्त्यर्थेऽव्ययीभावः । मुहुः प्रेम्णा रत्नावलीराबबन्ध आ समन्तात् बबन्ध । स्वभावानुप्राणितेयमुपमेति सङ्करः ॥३६॥

टिप्पनी—रथाङ्गेति । अत्र वत्सलो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३६॥

বাঙ্গালা—শ্রীকৃষ্ণরূপ বরের হস্তে প্রদত্ত এবং ক্রোড়বর্ত্তিনী যে দ্বারকানগরীর উপকণ্ঠে, সমুদ্র বাৎসল্যবশতঃ পিতার ন্যায় বার বার রত্নমালা পরাইয়া দিতেন ॥৩৬॥

अन्वयः—अजस्रारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन यस्याः वप्रेण पर्य्यन्तचरोडुचक्रः सुमेरुवप्रः अन्वहम् अन्वकारि ॥३७॥

टीका—यस्या इति । चलन्तीनां वारिधिवारिवीचीनाञ्छटासु परम्परासु उच्छलद्भिरुत्पतद्भिः शङ्खानाङ्कुलैराकुलेन सङ्कीर्णेन यस्याः पुरो वप्रेण प्राकारेण पर्य्यन्ते चरतीति तत् तादृशम् उडुचक्रं नक्षत्रमण्डलं यस्य सः सुमेरोर्वप्रः सानुः । सानुप्राकारयोर्वप्रमित्युभयत्रापि सज्जनः । अहन्यहनीत्यन्वहम् । अव्ययम् विभक्तीत्यादिना याथार्थ्येऽव्ययीभावः, अनश्च नपुंसकादन्यतरस्यामिति समासान्तोऽच् । अन्वकारि अनुकृतः तत्साम्यं प्रापित इत्यर्थः । मेरूपमानादस्य तत्तुल्यमौन्नत्यं व्यज्यते ॥३७॥

टिप्पनी—यस्या इति । अत्र आर्थोपमा इत्यनुप्रासच्छेकानुप्रासश्चेति तयाणां संसृष्टिः । समासबाहुल्यात् बन्धवैकल्याच ओजो गुणः, गौड़ी च रीतिः ॥३७॥

वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन् रत्नानि रत्नाकरतामवाप ॥३८॥
अम्भश्च्युतः कोमलरत्नराशीनपां निधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं विस्तारयामास तरङ्गहस्तैः ॥३९॥

---

বাঙ্গালা—সমুদ্রের চঞ্চল তরঙ্গশ্রেণীর বেগে শঙ্খসমূহ উঠিয়া দ্বারকার প্রাচীরকে ব্যাপ্ত করিত; নক্ষত্রসমূহও সুমেরুশৃঙ্গের প্রান্তদেশকে ব্যাপ্ত করিয়া থাকে; সুতরাং যে দ্বারকানগরীর তাদৃশ প্রাচীর, প্রতিদিন সেই সুমেরুশৃঙ্গের অনুকরণ করিত ॥৩৭॥

अन्वयः—यत्र वणिक्पथे पूगकृतानि अलोलद्युतिभाञ्जि रत्नानि लोलैः भ्रमागतैः अम्बुभिः मुष्णन् अम्बुराशिः रत्नाकरताम् अवाप ॥३८॥

टीका—वणिक्पथ इति । यत्र यस्यां पुरि वणिजां पथि वणिक्पथे आपणे अपूगाः पूगाः सम्पद्यमानानि कृतानि पूगकृतानि पुञ्जीकृतानि । श्रेण्यादयः कृतादिभिरिति समासः । श्रेण्यादिषु च्व्यर्थवचनमिति च्व्यर्थता । अलोलद्युतिभाञ्जि स्थिरप्रभावन्ति रत्नानि लोलैश्चलैः अतएव भ्रमागतैः जलनिर्गममार्गादागतैः । भ्रमाश्च जलनिर्गमा इत्यमरः । अम्बुभिर्मुष्णन् अपहरन् अम्बुराशिरर्णवः जलमात्रसारोऽपीति भावः । रत्नाकरतामवाप प्राप न तु प्रागिति भावः । अम्बुराशेः प्राक् रत्नसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः, तथा च पुर्य्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते ॥३८॥

टिप्पनी—वणिक्पथ इति । अत्र अम्बुभिः अम्बुराशिः रत्नानि रत्नाकरतामित्युभयत्रापि अम्बुरत्नशब्दार्थयोः पौनरुक्त्यात् तात्पर्य्यमात्रतो भेदाच्च लाटानुप्रास इति टीकोक्तातिशयोक्त्या संसृज्यते । मधुररचनामयात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥३८॥

বাঙ্গালা—যে দ্বারকানগরীতে বণিকদিগের দোকানে রাশীকৃত রত্ন থাকিত এবং সে রত্নরাশির কিরণ নির্গত হইয়া স্থিরভাবেই থাকিত; তখন নর্দ্দামা হইতে সমুদ্রের জল চলিয়া আসিয়া সেই রত্নরাশিকে অপহরণ করিত; তাহাতেই সমুদ্র রত্নাকর হইয়াছিল ॥৩৮॥

अन्वयः—यत्र अपांनिधिः अम्भश्च्युतः फेनपिनद्धभासः कोमलरत्नराशीन् आतपे दातुम् इव तरङ्गहस्तैः अधितल्पं विस्तारयामास ॥३९॥

टीका—अम्भ इति । यत्र पुरि अपां निधिः समुद्रः अम्भश्च्योतन्ति क्षरन्तीत्यम्भश्च्युतो जलस्राविणः अतएव फेनैः पिनद्धभासः पिहितकान्तीन् । अपिपूर्वान्नह्यतेः कर्मणि क्तः, वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरकारलोपः । कोमलानुत्कृष्टान् रत्नराशीनातपे दातुं शोषणार्थं निधातुमिवेति फलोत्प्रेक्षा, तल्पेष्वट्टेषु अधितल्पम् । तल्पं शय्याट्टदारेष्वित्यमरः । विभक्त्यर्थेऽव्ययीभावः । तरङ्गैरेव हस्तैर्विस्तारयामास प्रसारितवान् । अत्रातपदानस्य तरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोः सङ्करः ॥३९॥

यच्छालमुत्तुङ्गतया विजेतुं दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थैर्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥४०॥
कुतूहलेनेव जवादुपेत्य प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद् भृशमम्बुवर्षव्याजेन यस्या बहिरम्बुवाहः ॥४१॥

---

**टिप्पनी**—अत्र इति । "तल्पेषु अट्टेषु" इति मल्लिनाथः । अत्र अट्टशब्दो हट्टपरः योग्यत्वात् समुद्र-जलोपान्तहट्टचत्वरेष्वेव तादृशरत्नविस्तारसम्भवात्, भित्तिप्रताम्यान्तरायामट्टालिकायां तदसम्भवात् "अट्टो हट्टाट्टाल-कयोर्ध्वं शे । चतुष्कभक्तयोः" इति हैमाभिधानात् । बन्धस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३९॥

**বাঙ্গালা**—এমন অনেক উৎকৃষ্ট রত্ন আছে; যাহা হইতে জল নির্গত হয় এবং ফেনে যাহার কিরণসমূহকে আবৃত করিয়া রাখে; সমুদ্র সেই সকল রত্নকে রৌদে দিয়া শুকাইবার জন্যই যেন তরঙ্গরূপ হস্ত দ্বারা যে দ্বারকানগরীর হাটে বিস্তার করিয়া দিত ॥৩৯॥

**अन्वयः**—सागरस्य महोर्म्मिभिः उत्तुङ्गतया यच्छालं विजेतुम् (इव) दूरात् उदस्थीयत; अभ्यासगतैः व्याहतवाञ्छितार्थैः [सद्भिः] व्रीड़ात् इव विलिल्ये ॥४०॥

**टीका**—यच्छालमिति । सागरस्य महोर्मिभिः कर्तृभिर्यच्छालं यस्याः प्रकारम् । प्राकारो वरणः शाल इत्यमरः । उत्तुङ्गतया औन्नत्यगुणेन जेतुमिवेत्यर्थः । फलोत्प्रेक्षेयं व्यञ्जकाप्रयोगाद्गम्या । दूरादुदस्थीयत उत्थितम् । भावे लङ् । अभ्यासगतैः समीपगतैः । समीपनिकटाभ्याससन्निकृष्टसनीड़वदित्यमरः । व्याहतो वाञ्छितार्थः शालविजयरूपो येषां तैर्विजयाक्षमैरित्यर्थः । अतएव व्रीड़ादिवेति हेतूत्प्रेक्षा, ऊर्मिभिर्विलिल्ये विलीनम् । लीयतेर्भावे लिट् । अत्र प्रस्तुतस्यापि अविजिगीषोर्व्रीड़ानुदयात्प्रेक्षत्वेनोत्प्रेक्षयोः सङ्करः ॥४०॥

**टिप्पनी**—यच्छालमिति । अत्र बन्धवैकट्यात् ओजो गुणः, गौड़ी च रीतिः ॥४०॥

**বাঙ্গালা**—সমুদ্রের বিশাল তরঙ্গসকল আপন উচ্চতায় যে দ্বারকানগরীর প্রাচীরকে জয় করিবার জন্যই যেন প্রথমে দূর হইতে উঠিয়াছিল; তার পরে, নিকটে আসিলে পর তাহাদের সে অভীষ্টের ব্যাঘাত ঘটিয়াছিল; তাই তাহারা লজ্জাবশতই যেন বিলীন হইয়া গিয়াছিল ॥৪০॥

**अन्वयः**—अम्बुवाहः कुतूहलेन इव जवात् उपेत्य यस्याः प्राकारभित्त्या सहसा निषिद्धः [अतएव] बहिः रसन् अम्बुवर्षव्याजेन भृशम् अरोदीत ॥४१॥

**टीका**—कुतूहलेनेति । अम्बु वहतीत्यम्बुवाहो मेघः । कर्मण्यण् । कुतूहलेनान्तः-प्रवेशकौतुकेनेवेति हेतूत्प्रेक्षा, जवात् उपेत्य यस्याः प्राकारभित्त्या सहसा निषिद्धो निवा-रितः अतएव बहिरेव रसन् गर्जन् दुःखात् क्रन्दंश्चेति श्लेषः, अम्बुवर्षव्याजेन भृशमरोदीत् अश्रूणि मुक्तवान् । रुदिरश्रुविमोचने लङ्, रुदश्च पञ्चभ्य इतीड़ागमः । अत्राम्बुवर्षव्याजे-नेत्यपह्नवश्लोत्तोत्प्रेक्षायाश्चापेक्षत्वात् सङ्करः ॥४१॥

यदङ्गनारूपसरूपतायाः कञ्चिद्गुणं भेदकमिच्छतीभिः।
आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥४२॥
स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः।
आरुह्य नार्य्यः क्षणदासु यत्र नभोगता देव्य इव व्यराजन् ॥४३॥

---

टिप्पनी—कुतूहलं नेति। अत्र अम्बुवाहे दुर्लङ्घितस्य कस्याचद्बालकस्य व्यवहारसमारोपात् समासोक्तिः अरोदीदिवेति प्रतीयमानोत्प्रेक्षा चाधाय टीकोक्तसङ्करे प्रवेशः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४१॥

বাঙ্গালা—মেঘ সকল কৌতুকবশতই যেন বেগে আসিয়া, যে দ্বারকার প্রাচীরভিত্তি-কর্তৃক তৎক্ষণাৎ নিবারিত হইয়া, বাহিরে থাকিয়াই গর্জন করতঃ জলবৃষ্টির ছলে যেন অত্যন্ত রোদন করিত ॥৪১॥

অন্বয়ঃ—यदङ्गनारूपसरूपतायाः भेदकं कञ्चित् गुणम् इच्छतीभिः अप्सरोभिः आराधितः मनुः स्वाः प्रजाः सनिमेषचिह्नाः अद्धा चक्रे ॥४२॥

टीका—यदङ्गनेति। यस्यां पुर्य्यामङ्गनानां रूपं सौन्दर्य्यमाकारो वा। रूपं स्वभावे सौन्दर्य्ये आकारस्त्रयोरपीति विश्वः। तस्य सरूपतायाः सारूप्याद् भेदकं व्यावर्त्तकं कञ्चिद्गुणं धर्ममिच्छतीभिरपेक्षमाणाभिः। आक्षीनयोर्नमिति विकल्पान्नुमभावः। अप्सरोभिराराधितः प्रार्थितो मनुर्मानुषसृष्टिकर्त्ता स्वाः स्वकीयाः प्रजाः निमेषः पक्ष्मपात एव चिह्नं व्यावर्त्तकं तेन सह वर्त्तन्त इति सनिमेषचिह्नाः। तेन सहेति तुल्ययोग इति बहुव्रीहिः। चक्रे अद्धा तत्त्वमित्युत्प्रेक्षा। तत्त्वे त्वद्धाञ्जसा द्वयोरित्यमरः। अत्र स्वाभाविकनिमेषस्याप्सरःप्रार्थनाहेतुकत्वोत्प्रेक्षया द्वारकाङ्गनानां निमिषमात्रभिन्नममानुषं सौन्दर्य्यं वस्तु व्यज्यते ॥४२॥

टिप्पनी—यदिति। अत्र ध्रुवशब्दवत् अद्धाशब्द एव उत्प्रेक्षावाचक इति वाच्योत्प्रेक्षैवेति टीकाकारस्याशयः; प्रथमपादे छेकानुप्रासस्येति संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

বাঙ্গালা—যে দ্বারকাস্থ রমণীগণের আকৃতির সমানই আপনাদের আকৃতি ইহা দেখিয়া অপ্সরারা, উভয় আকৃতির কিছু ভেদ হয় এমন কোন গুণ ইচ্ছা করিয়া মনুর আরাধনা করিয়াছিল; তাই মনু, আপনার সন্তান মানবদিগকে নিমেষচিহ্নে চিহ্নিত করিয়াছিলেন; ইহাই সত্য ॥৪২॥

অন্বয়ঃ—यत्र क्षणदासु नार्य्यः स्फुरत्तुषारांशुमरीचिजालैः विनिह्नुताः स्फाटिकसौधपङ्क्तीः आरुह्य नभोगताः देव्यः इव व्यराजन् ॥४३॥

टीका—स्फुरदिति। यस्यां पुरि क्षणदासु रात्रिषु नार्य्यः स्फुरद्भिस्तुषारांशोश्चन्द्रस्य मरीचिजालैश्चन्द्रिकाभिः विनिह्नुताः अपह्नुताः तदेकरूपतापत्तेरलक्ष्यमाणा इत्यर्थः। अत एव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्। स्फाटिकानां स्फटिकविकाराणां सौधानां पङ्क्तीरारुह्य नभोगता देव्यो देवाङ्गना इव। देवशब्दस्य

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
पुरीप्रस्थानो नाम तृतीयः सर्गः ॥३॥

येन तस्य न तु स्वयं केनापि मथितस्येति भावः। सततं हृता श्रीः शोभा रमा च येन तस्य हृतश्रियः पुरोऽग्रे नगराद्वा परिचलतः परिगच्छतः बली रामस्तदनुजस्य हरेर्बलस्य सैन्यस्य। बलं सैन्ये बली रामे इत्युभयत्रापि शाश्वतः। परं केवलमेकस्यैव तुरगस्य जन्म जन्ममात्रं यस्य तस्यैकतुरगजन्मनः एकोऽपि जात एव नन्वस्तीति भावः। महीभृता मन्दराद्रिणा राज्ञा च मथितस्य न तु स्वयं कस्यापि मथिता सततं विगतश्रियः उत्पत्त्यनन्तरमेवास्याः हरिस्वीकरणादिति भावः जलधेश्च तदा प्रस्थानसमये महदन्तरं दूरगमनाद्विश्च व्यवधानम् उक्तरीत्या महत्तारतम्यं चाभवत्। अत्रोपमेयस्य हरिबलस्य उपमानाज्जलधेराधिक्यवर्णनात् व्यतिरेकालङ्कारः। पञ्चकावली वृत्तम्। ननजजजा जरौ नरपते! कथिता भुवि पञ्चकावलीति लक्षणात् ॥८२॥

इति श्रीमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने
सर्वङ्कषाख्ये तृतीयः सर्गः ॥३॥

—:०:—

**टिप्पनी**—तुरगेति। अत्र छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्काराविति टीकोक्तव्यतिरेकेण सह संसृष्टिः। तथा तुरगपदेन प्रक्रम्य तुरङ्गपदाभिधानात् भूभृत्पदेन प्रक्रम्य महीभृत्पदाभिधानाच्च प्रकृतिविषयो भग्नप्रक्रमतादोषः। स च 'तुरगशताकुलस्य परितस्तुरगैककजन्मशालिनः प्रमथितभूभृतः प्रतिपथं मथितस्य भृशन्तु भूभृता इति पाठेन समाधेयः। न चैवं सति पुनः कथितपदतादोष इति वाच्यम्, तस्योद्देश्यप्रतिनिर्द्देश्यभिन्नविषयत्वात् अत्र तु तद्रूपविषयत्वात्। प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां शिशुपालवधटिप्पन्यां
माधुरीसमाख्यायां तृतीयः सर्गः ॥०॥

—०—

**বাঙ্গালা**—শ্রীকৃষ্ণের সৈন্য, সকল দিকেই শত শত অশ্বে পরিপূর্ণ ছিল; আর সমুদ্র হইতে অতিপূর্বকালে একটিমাত্র অশ্ব জন্মিয়াছিল; শ্রীকৃষ্ণের সৈন্য পথে পথে পর্বত মন্থন করিয়া চলিয়াছিল; আর সমুদ্রকে পর্বতে অত্যন্ত মন্থন করিয়াছিল; এবং শ্রীকৃষ্ণের সৈন্য সর্বদাই শ্রীধারণ করিতেছিল; আর সমুদ্র হইতে চিরদিনের জন্যই শ্রী চলিয়া গিয়াছিলেন। সুতরাং শ্রীকৃষ্ণের সৈন্য সম্মুখের দিকে যাইতে লাগিলে, তখন তাহার ও সমুদ্রের মধ্যে অত্যন্ত ব্যবধান হইয়াছিল ॥৮২॥



# चतुर्थः सर्गः ।



निःश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥१॥
गुर्वीरजस्रं दृषदः समन्तादुपर्युपर्यम्बुमुचां वितानैः ।
विन्ध्यायमानं दिवसस्य भर्त्तुर्मार्गं पुनारोद्धुमिवोन्नमद्भिः ॥२॥

---

**अन्वयः**—असौ नीलोपलस्यूतविचित्रधातुम् (अतएव) रत्नभाभिः सह भूमिं भित्त्वा उत्थितम् उरगानां निश्वासधूमम् इव रैवतकं गिरिं ददर्श ॥१॥

**टीका**—निःश्वासेति । नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोताः विचित्रा नानावर्णाः धातवो गैरिकादयो यस्य तम् अतएव रत्नभाभिर्मणिप्रभाभिः सह भूमिम्भित्त्वा उत्थितम् उर्द्ध्वं निर्गतम् उरगाणां निःश्वासधूमं फुत्कारवाष्पमिव स्थितं रैवताख्यं गिरिमसौ हरिर्ददर्श । स्यूतेति, सीव्यतेः कर्मणि क्तः, च्छ्वोः शूडनुनासिके चेत्यूडादेशे यणादेशः । अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टधूमत्वोत्प्रेक्षणाद् गुणनिमित्तजातिस्वरूपोत्प्रेक्षा । सर्गेऽस्मिन्नानावृत्तानि तत्रादावष्टादशोपजातयः । तल्लक्षणं तूक्तम अतीतानन्तरसर्गादौ । अत्रासर्गसमाप्तेर्गिरिवर्णनमेव ॥१॥

**टिप्पनी**—निःश्वासेति । अत्र तादृशनिःश्वासधूमसम्भावनां प्रति नीलोपलेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेति टीकोक्तोत्प्रेक्षया सह अङ्गाङ्गिभावेन सङ्करः । उत्कर्षस्यारोहावरोहविन्यासात् ओजो गुणः गौड़ी च रीतिः ॥१॥

**বাঙ্গালা**—শ্রীকৃষ্ণ রৈবতক পর্বত দর্শন করিলেন ; গৈরিকাদি নানাবর্ণের ধাতু, ইন্দ্রনীলমণির সহিত সম্মিলিত হইয়া ঐ পর্বতটীকে বিচিত্রবর্ণ করিয়াছিল। তাহাতে বোধ হইতেছিল—পাতালস্থ সর্পগণের নিঃশ্বাসধূমরাশিই যেন সে স্থানের নানাবিধ রত্ন কিরণের সহিত ভূতল ভেদ করিয়া উঠিয়া অবস্থান করিতেছে ॥১॥

**अन्वयः**—गुर्वीः दृषदः उपर्युपरि समन्तात् अजस्रम् उन्नमद्भिः अम्बुमुचां वितानैः दिवसस्य भर्त्तुः मार्गं पुनः रोद्धुं विन्ध्यायमानमिव (स्थितं ददर्श] ॥२॥

**टीका**—गिरिन्ददर्शेत्युक्तं कीदृगित्याकाङ्क्षायामेकान्वयेनाष्टाभिर्विशिनष्टि, गुर्वीरिति । गुर्वीर्महतीर्दृषदः शिलातटीरित्यर्थः । पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्

क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम्।
श्रितं शिलाश्यामलताभिरामं लताभिरामन्त्रितषट्पदाभिः॥३॥

---

दित्यमरः। उपर्य्युपरि दृषदां समीप उपरिप्रदेश इत्यर्थः। उपर्य्यध्यधसः सामीप्ये इति द्विर्भावे तद्योगात् द्वितीयेति। यथाह वामनः, उपर्य्यादिषु सामीप्ये द्विरुक्तेषु द्वितीयेति समन्तादजस्रमुन्नमद्भिः देशकालाविच्छेदेनोत्पतद्भिरित्यर्थः अतएव तैरम्बुमुचां वितानैर्मेघवृन्दैर्निमित्तैर्दिवसस्य भर्त्तुः सूर्य्यस्य मार्गं पुनः रोद्धुम्। संहितायां रोरीति रलोपः ढ्रलोप इति दीर्घः। विन्ध्यायमानमिव विन्ध्यवदाचरन्तं तद्वद्वर्द्धमानमिव स्थितमित्यर्थः। आचारे क्यङन्ताल्लटः शानजादेशः। अत्राविच्छिन्नमेघोन्नमनेन विन्ध्यायमानत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा॥२॥

टिप्पनी—गुर्वीरिति। अत्र साहित्यदर्पणमते उपमोपक्रमोत्प्रेक्षालङ्कारः। बन्धवैकट्यात् ओजो गुणः, गौड़ी च रीतिः। पुरा किल विन्ध्याचलो निरतिशयं वर्द्धमानो दिवाकरपथं रुरोध; तद्दर्शनेन च देवताभिः प्रार्थितो भगवानगस्त्यस्तदन्तिकमुपस्थितः; विन्ध्यस्तु तमालोक्य भूतलावधि मस्तकमवनमय्य प्रणनाम; अगस्त्यस्य "यावदहं पुनरागच्छामि, तावत्त्वमित्थमेव तिष्ठ" इत्युक्त्वा दक्षिणां दिशं गतो नाद्यापि निवृत्तः। विन्ध्यस्तु तथैव भूतलस्पृष्टमस्तकस्तस्थौ। इति स्कन्दपुराणवार्त्ता अतएवात्र पुनः पदमुपात्तम्॥२॥

বাঙ্গালা—বড় বড় পাথরের উপরে উপরে চারিদিকে অনবরত মেঘ উঠিতেছিল; তাহাতে রৈবতকপর্ব্বত যেন পুনরায় সূর্য্যের পথ রোধ করিবার জন্য, বিন্ধ্যপর্ব্বতের ন্যায় আচরণ করিতেছিল॥২॥

अन्वयः—नवप्रभाजालभृतां मणीनां काञ्चनवप्रभाजा रुचा क्रान्तम्, शिलाश्यामलताभिरामम्, आमन्त्रितषट्पदाभिः लताभिः श्रितम् (रैवतकं ददर्श)॥३॥

टीका—क्रान्तमिति। पुनर्नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजालभृतः तेषां मणीनां सम्बन्धिन्या काञ्चनवप्रभाजा स्वर्णसानुप्रसृतया रुचा दीप्त्या क्रान्तं व्याप्तं पुनः शिलानां मेचकोपलानाम् इन्द्रनीलानां वा श्यामलतया श्यामलिम्ना अभिरामन्तथा आमन्त्रितषट्पदाभिः मकरन्दपूरितत्वादाहूतभृङ्गाभिः लताभिः श्रितं व्याप्तम्। इतः परं ह्यनन्तरमेकं यमकं वक्ष्यति। तत्र तदेवालङ्कारः। अर्थालङ्कारस्त्वभ्युच्चेय इति यथासम्भवमूह्यम्। यमकलक्षणं त्वाचार्य्यदण्डिनोक्तम्, अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः। यमकन्तच्च पादानामादिमध्यान्तगोचरम्। एकद्वित्रिचतुष्पादयमकानां प्रकल्पना आदिमध्यान्तमध्यान्तमध्याद्याश्चैव सर्वतः। अनन्ता बहवस्तेषां भेदाः सम्भेदयोनयः। सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचनेति॥३॥

टिप्पनी—क्रान्तमिति। अत्र चरणान्त्याद्यमकमलङ्कारः। मधुररचनावशात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः॥३॥

বাঙ্গালা—নূতন-দীপ্তিশালী মণিসমূহের কিরণরাশি, স্বর্ণময় সমতল ভূমিতে ছড়াইয়া

सहस्रसङ्ख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम्।
विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम् ॥४॥
क्वचिज्जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि।
अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम् ॥५॥

---

পরিয়া রৈবতককে ব্যাপ্ত করিয়াছিল; পাষাণের শ্যামবর্ণ, রৈবতককে মনোহর করিয়াছিল এবং নানাবিধ লতা, আপন আপন মধুর প্রলোভনে ভ্রমরগণকে আহ্বান করতঃ রৈবতকে আশ্রয় করিয়াছিল ॥৩॥

अन्वयः—सहस्रसंख्यैः शिरोभिः गगनम्, सहस्रसंख्यैः पादैः भुवं (च) व्याप्य वितिष्ठमानम्, विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम् (इव स्थितं ददर्श) ॥४॥

टीका—सहस्रेति। सहस्रमिति सङ्ख्या येषां तैः सहस्रसङ्ख्यैः शिरोभिः शिखरैः शीर्षैश्च गगनन्तथा तत्सङ्ख्यैः पादैः प्रत्यन्तपर्वतैश्चरणैश्च भुवञ्च व्याप्य वितिष्ठमानम् अवतिष्ठमानम्। समवप्रविभ्यः स्थ इत्यात्मनेपदम्। विलोचनयोर्यत् स्थानं योग्यदेशः तद्गतावुष्णरश्मिनिशाकरौ यस्य तम् अन्यत्र नेत्रीकृतार्केन्दुमित्यर्थः अतः साधु सत्यं हिरण्यगर्भं ब्रह्माणमिवेत्युत्प्रेक्षा सहस्रशीर्षेत्यादिश्रुतेरिति भावः। हिरण्यगर्भो निधिगर्भश्च ॥४॥

टिप्पनी—सहस्रेति। "उत्प्रेक्षा" इति मल्लिनाथः। इवाद्यभावात् प्रतीयमाना द्रव्योत्प्रेक्षा इत्याशयः। प्रसादो गुणः, वैदर्भी च रीतिः। "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतौ पुरुषपदमत्र ब्रह्मपरं कवेरभिमतमिति बोध्यम् ॥४॥

বাঙ্গালা—সেই রৈবতকপর্ব্বত শৃঙ্গ (মস্তক) দ্বারা আকাশকে এবং সহস্রসংখ্যক সহস্রসংখ্যক, নিকটবর্ত্তীক্ষুদ্রপর্ব্বত (চরণ) দ্বারা ভূতলকে ব্যাপিয়া অবস্থান করিতেছিল; আর তাহার নয়নস্থানে চন্দ্র ও সূর্য্য ছিলেন; সুতরাং সে যেন সত্য সত্যই বিরাটপুরুষের ন্যায় অবস্থান করিতেছিল ॥৪॥

अन्वयः—क्वचित् जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि अभ्राणि बिभ्राणम्, (अतएव) उमाङ्गसङ्गविभक्तभस्मानं स्मरारिम् इव (स्थितं ददर्श) ॥५॥

टीका—क्वचिदिति। पुनः क्वचिदेकदेशे जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि अतएव धौतं क्षालितं यदुत्तरीयं तत्प्रतिमा तत्समा छविर्येषान्तानि अभ्राणि मेघान् बिभ्राणं दधानम्। भृञः कर्त्तरि शानच्। अत एवोमायाः पार्वत्याः अङ्गसङ्गेनार्द्धभागेन विभक्तम् एकभागस्थापितं भस्म यस्य तं स्मरारिं हरमिव स्थितमित्युपमालङ्कारः ॥५॥

टिप्पनी—क्वचिदिति। अत्र द्वितीयपादे लुप्तोपमा, तथाविधस्मरारिसादृश्यं प्रति जलापायादिपदार्थो हेतव इति पदार्थहेतुकं काव्यलिङ्गञ्चेति टीकोक्तश्रौतोपमया सह सङ्करः; छेकानुप्रासश्चेति समुदाये संसृष्टिः। बन्धस्य विकटत्वात् ओजो गुणः, गौड़ी च रीतिः ॥५॥

বাঙ্গালা—রৈবতকপর্ব্বত, কোন কোন স্থানে, পরিষ্কৃত উত্তরীয় বস্ত্রের ন্যায় জলশূন্য শুভ্রবর্ণ অনেকগুলি মেঘ ধারণ করিতেছিল; তাহাতে পার্ব্বতীর শরীরসংসর্গে শরীরের

छायां निजस्त्रीचटुलालसानां मदेन किञ्चिच्चटुलालसानाम् ।
कुर्वाणमुत्पिञ्जलजातपत्रैर्विहङ्गमानां जलजातपत्रैः ॥६॥
स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रनर्त्तितानेकलताभुजाग्रान् रुद्राननेकानिव धारयन्तम् ॥७॥

---

ভস্মগুলি বিভক্ত হইয়া গেলে, মহাদেবের শরীরের ন্যায় সেই রৈবতকপর্ব্বতকে দেখা যাইতেছিল ॥৫॥

**अन्वयः**—उत्पिञ्जलजातपत्रैः जलजातपत्रैः निजस्त्रीचटुलालसानां मदेन किञ्चित् चटुलालसानां विहङ्गमानां छायां कुर्वाणम् (रैवतकं ददर्श) ॥६॥

**टीका**—छायामिति । पुनः निजस्त्रीणां चाटुषु प्रियवचनेषु लालसा लोलुपाः । लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि चेति यादवः । तेषान्निजस्त्रीचटुलालसानाम्मदेन किञ्चिदीषच्चटुलाश्चपलास्ते अलसाश्च । विशेषणयोरपि मिथोविशेषणविशेष्यभावविवक्षया विशेषणसमासः । तेषाञ्चटुलालसानां विहङ्गमानां हंसादीनाम् उत्पिञ्जलानि जातानि उत्पिञ्जलजातानि । पूर्ववत् समासः । तानि पत्राणि येषान्तैरुत्पिञ्जलजातपत्रैः उत्पिञ्जरीभूतदलैरित्यर्थः । रलयोरभेदः । जलजातपत्रैः जलजैरेवातपत्रैः छायां कुर्वाणम् । एतेन महती कमलाकरसमृद्धिर्व्यज्यते । यमकरूपकयोः सङ्करः ॥६॥

**टिप्पनी**—छायामिति । अत्र यमकरूपकयोः सङ्कर इति मल्लिनाथः । पादान्तयमकं निरङ्गं केवलरूपकञ्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्कर इत्याशयः । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥६॥

**বাঙ্গালা**—হংসপ্রভৃতি বহুতর পক্ষী, মত্ততাবশতঃ একটু চঞ্চল ও একটু অলস হইয়াছিল এবং তাহারা আপন আপন স্ত্রীর প্রিয়বাক্য শুনিবার অভিলাষী ছিল; তখন রৈবতকপর্ব্বত, পিঙ্গলবর্ণদলযুক্ত পদ্মরূপ ছত্রদ্বারা সেই সকল পক্ষিগণের ছায়া করিতেছিল ॥৬॥

**अन्वयः**—स्कन्धाधिरूढोज्ज्वलनीलकण्ठान् अहीन्द्रैः श्लिष्टतनून् प्रनर्त्तितानेकलताभुजाग्रान् अनेकान् रुद्रान् इव उर्वीरुहः धारयन्तं (रैवतकं ददर्श) ॥७॥

**टीका**—स्कन्धेति । पुनः स्कन्धं प्रकाण्डमधिरूढा उज्ज्वला नीलकण्ठा मयूरा येषान्तान् अन्यत्र स्कन्धाधिरूढा अंसस्थिता नीलाः कण्ठा येषान्तान् । अंसप्रकाण्डयोः स्कन्ध इति विश्वः । अहीन्द्रैः श्लिष्टतनून् व्याप्तदेहान् एकत्र तदावासत्वादन्यत्र तद्भूषणत्वाच्चेति भावः । प्रनर्त्तितानि अनेकलतानामेव भुजानां लतानामिव च भुजानाम् अग्राणि येषान्तानतएवानन्तानसङ्ख्यान् रुद्रानिव च स्थितानित्युत्प्रेक्षा उर्वीरुहो वृक्षान् धारयन्तमुद्वहन्तम् ॥७॥

**टिप्पनी**—स्कन्धेति । अत्र तृतीयचरणे निरङ्गं केवलरूपकञ्चेति टीकोक्तया उत्प्रेक्षया सह सङ्करः । छन्दस आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥७॥

विलम्बिनीलोत्पलकर्णपूराः कपोलभित्तीरिव लोध्रगौरीः।
नवोलपालङ्कृतसैकताभाः शुचीरपः शैवलिनीर्दधानम् ॥८॥
राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम्।
कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥९॥

---

বাঙ্গালা—রৈবতকপর্বত, অসংখ্য রুদ্রের ন্যায় অসংখ্য বৃক্ষ ধারণ করিতেছিল; সে বৃক্ষসমূহের স্কন্ধদেশে উজ্জ্বল ময়ূরগণ আরোহণ করিয়াছিল; বৃহৎ বৃহৎ সর্প, সে গুলির শরীর বেষ্টন করিয়াছিল এবং সে বৃক্ষগুলি, বহুতর লতারূপ হস্তাগ্র কম্পিত করিতেছিল ॥৭॥

অন্বয়:—বিলম্বিনীলোৎপলকর্ণপূরাঃ লোধ্রগৌরীঃ কপোলভিত্তীঃ ইব (স্থিতাঃ), নবোলপালঙ্কৃতসৈকতাভাঃ শুচীঃ শৈবলিনীঃ অপঃ দধানম্ (রৈবতকং দদর্শ) ॥৮॥

টীকা—বিলম্বীতি। বিলম্বিনো নীলোৎপলান্যেব কর্ণপূরাঃ কর্ণাবতংসা যাসান্তাঃ লোধ্রৈর্বা লোধ্ররজসা গৌরীরবদাতাঃ। ষিদ্গৌরাদিভ্যশ্চেতি ঙীপ্। কপোলভিত্তীঃ স্ত্রীণাং গণ্ডস্থলীরিব স্থিতাঃ। উপমানান্তরমাহ, নবা উলপা বল্লজতৃণানি। উলপা বল্লজাঃ প্রোক্তাঃ ইতি বিশ্বঃ। তৈরলঙ্কৃতানাং সৈকতানামাভেবাভা যাসান্তাঃ অতঃ শুচীঃ শুভ্রাঃ শৈবলিনীঃ শৈবলবতীঃ অপো দধানম্। শুচিত্বশৈবলত্বাভ্যাং বিম্বপ্রতিবিম্বভাবেনোপমাদ্বয়ম্ ॥৮॥

টিপ্পনী—বিলোম্বীতি। অত্র কপোলভিত্তীরিবেতি শ্রৌতোপমা,সৈকতাভা ইতি চ আর্থোপমা ইত্যুভয়োর্মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। সমাসবহুলবিন্যাসাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৮॥

বাঙ্গালা—রৈবতকপর্বত, নির্মল জল ধারণ করিতেছিল; যাহাতে নীলোৎপল-ময় কর্ণাভরণ ঢুলিতে থাকে এবং যাহা লোধ্রপুষ্পের রেণুতে শ্বেতবর্ণ হইয়া থাকে; রমণী-গণের সেই গণ্ডদেশের ন্যায় সে জলগুলি বিরাজ করিতেছিল; আর নূতনলতাশোভিত নদীপুলিনের ন্যায় সে জলগুলি প্রকাশ পাইতেছিল; এবং সে জলগুলিতে সেওলা ছিল ॥৮॥

অন্বয়:—রাজীবরাজী-বশলোলভৃঙ্গম্, তরূণাং ততিভিঃ উষ্ণং মুষ্ণন্তম্, রক্ষোভিঃ কান্তালকান্তাঃ সুরাণাং ললনাঃ অক্ষোভিতম্ উদ্বহন্তম্ (রৈবতকং দদর্শ) ॥৯॥

টীকা—রাজীবেতি। পুনঃ রাজীবরাজিনাং পদ্মপঙ্ক্তীনাং বশা অধীনাঃ লোলাশ্চলা ভৃঙ্গা যস্মিন্ তং রাজীবরাজীবশলোলভৃঙ্গং তরূণাং ততিভিঃ সঙ্ঘৈরুষ্ণমাতপং মুষ্ণন্তং হরন্তং কান্তা রম্যা অলকান্তাশ্চূর্ণকুন্তলান্তা যাসান্তাঃ কান্তালকান্তাঃ। অলকাশ্চূর্ণকুন্তলা ইত্যমরঃ। সুরাণাং ললনাঃ স্ত্রিয়োঽপ্সরসঃ রক্ষোভীরাক্ষসৈঃ অক্ষোভিতমনভিভূতং যথা তথা উদ্বহন্তম্ ॥৯॥

টিপ্পনী—রাজীবেতি। অত্র আদ্যযমকমলঙ্কারঃ, মাধুর্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৯॥

বাঙ্গালা—রৈবতকপর্বতে চঞ্চল ভ্রমরগণ পদ্মসমূহের অধীন ছিল; রৈবতক বৃক্ষ-শ্রেণী দ্বারা রৌদ্রের তাপ হরণ করিতেছিল এবং রৈবতকপর্বত, রাক্ষসগণ দ্বারা সুন্দর স্খলিত কেশশালিনী অপ্সরাদিগকে সুখে স্থানান্তরে লইয়া যাইতেছিল ॥৯॥

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्य्यगुणा मृषोद्याः ॥१०॥
यतः परार्द्ध्यानि भृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥११॥

---

अन्वयः—मुरारेः मुदे अमरैः सुमेरोः शृङ्गैः आनीय उपचितस्य यस्य उच्छ्रायसौन्दर्य्यगुणाः उद्दामगिरां कविनां मृषोद्याः न भवन्ति ॥१०॥

टीका—नन्वत्रोयानयं कश्चिद्रैवतको नाम शिलोच्चयः कथमियद्वर्ण्यंत इति शङ्कां निरस्यति, मुद इति । मुरारेर्मुदे सन्तोषाय अमरैः कर्त्तृभिः सुमेरोः शृङ्गैः करणैरानीयोपचितस्य वर्द्धितस्य आनीतैः शृङ्गैरुपचितस्येत्यर्थः । उपचये करणानां शृङ्गाणामर्थादानयनकर्मत्वम् । यस्य शैलस्य उच्छ्रायः औन्नत्यं सौन्दर्य्यञ्च तयोः गुणा उत्कर्षा उद्दामगिरां प्रगल्भवाचां कवीनां मृषा उद्यन्त इति मृषोद्याः मिथ्यावाच्या न भवन्ति मेरुशृङ्गेषु सर्वगुणसम्भवादिति भावः । राजसूयसूर्य्य मृषोद्येत्यादिना वदः क्यबन्तो निपातः । उत्कृष्टः श्रायः उच्छ्राय इति घञन्तेनोपसर्गस्य समासः नतूपसृष्टात् घञ् प्रत्ययः । श्रीणी-भुवोऽनुपसर्गे इति नियमात् । मुद इत्यादिश्लोकसप्तके यच्छब्दस्य दृष्टोऽयं शैलः स इत्यनेनान्वयः । मेरुशृङ्गासम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिः ॥१०॥

टिप्पनी—मुद इति । अत्र प्रथमपादे वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तस्यापि च टीकोक्तातिशयोक्त्या सह पुनः संसृष्टिः । बन्धस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥१०॥

বাঙ্গালা—দেবতারা শ্রীকৃষ্ণের সন্তোষের জন্য, সুমেরু পর্বতের শৃঙ্গ সকল আনয়ন করিয়া, যে রৈবতকপর্বতকে বর্দ্ধিত করিয়াছিলেন; সেই রৈবতকপর্বতে উচ্চতা ও সৌন্দর্য্য গুণের বর্ণনার বিষয়ে প্রগল্ভভাষী কবিদিগেরও কোন কথাই মিথ্যা হয় না ॥১০॥

अन्वयः—लोकः आढ्यात् प्रापणिकात् इव यतः परार्द्ध्यानि अनूनैः भूरिभिः प्रस्थैः मुहुः भृतानि उच्छिखानि अमितानि रत्नानि अजस्रं जग्राह ॥११॥

टीका—यत इति । लोकः परार्द्ध्यानि श्रेष्ठानि अनूनैः सम्पूर्णैः भूरिभिः प्रभूतैः । प्रभूतं प्राज्यं भूरीत्यमरः । प्रस्थैः सानुभिर्मानविशेषैश्च । प्रस्थोऽस्त्री सानुमानयोरित्यमरः । भृतानि सम्भृतानि मितानि च उच्छिखानि उद्रश्मीनि अमितानि अपरिमितानि रत्नानि यतः शैलादाढ्याद्धनिकात् । इभ्य आढ्यो धनीत्यमरः । प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक् । तदस्य प्रयोजनमिति ठक् । पण्याजीवाः प्रापणिकाः वैदेहा नैगमाश्च ते वणिज इति वैजयन्ती । तस्मादिवाजस्रं मुहुर्जग्राह । उपमालङ्कारः ॥११॥

टिप्पनी—यत इति । अत्र बन्धस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥११॥

বাঙ্গালা—রৈবতকপর্বতের বিস্তৃত অসংখ্য সমতল ভূমিতে সর্বদাই উৎকৃষ্ট উজ্জ্বল রত্নসকল থাকিত; মানুষ, ধনী বণিকের ন্যায় যে রৈবতক হইতে অনবরতঃ সেই সকল রত্ন গ্রহণ করিত ॥১১॥

अखिद्यतासन्नमुदग्रतापं रविन्दधानेऽप्यरविन्दधाने।
भृङ्गावलिर्यस्य तटे निपीतरसा नमत्तामरसा न मत्ता ॥१२॥
यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा।
सुराधिपाधिष्ठितहस्तिमल्ललीलान्दधौ राजतगण्डशैलः ॥१३॥

---

अन्वयः—आसन्नम् उदग्रतापं रविं दधाने अपि अरविन्दधाने यस्य तटे निपीतरसा नमत्तामरसा मत्ता भृङ्गावलिः न अखिद्यत ॥१२॥

टीका—अखिद्यतेति। आसन्नमौन्नत्यात् सन्निहितमत एवोदग्रतापं दुःसहातपं रविं दधानेऽपि अरविन्दधाने इति विरोधः। अरविन्दानां धाने निधाने इति परिहारः। धीयतेऽस्मिन्निति धानम्। अधिकरणे ल्युट्। शब्दश्लेषमूलो विरोधालङ्कारः। यस्य गिरेस्तटे निपीतरसा नितराम्पीतमकरन्दा नमन्ति तामरसानि पङ्केरुहाणि भारभूतया यया सा नमत्तामरसा। पङ्केरुहन्तामरसमित्यमरः। अतएव मत्ता भृङ्गावलिर्नाखिद्यत न खिन्ना। खिदेर्दैवादिकात् कर्त्तरि लङ्। अत्यन्तसूर्य्यसन्निधानेऽप्यरविन्दकरविहारा न्न शुक्रास्तापं नापुरित्यर्थः ॥१२॥

टिप्पनी—अखिद्यतेति। अत्र पादान्तयमकश्चेति मल्लिनाथोक्तविरोधालङ्कारेण सहास्य एकाश्रयानुप्रवेशरूपः सङ्करः। माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥१२॥

বাঙ্গালা—রৈবতক অত্যন্ত উচ্চ ছিল বলিয়া সূর্য্য তাহার নিকটই ছিলেন এবং সেই জন্য তাঁহার তাপও অত্যন্ত বেশী হইয়াছিল; যে রৈবতকের উপরের স্থানগুলি সেই সূর্য্যকে ধারণ করিত এবং সে সকল স্থানে বহুতর পদ্মও থাকিত, সে সকল পদ্ম ভ্রমরগণের ভরে অবনত হইত এবং ভ্রমরগণও প্রচুর পরিমাণ পদ্মের মধু পান করিয়া মত্ত হইয়া (পদ্মের ছায়ায় থাকিয়া) সূর্য্যের তাপেও কোন কষ্ট পাইত না। ॥১২॥

अन्वयः—यत्र राजतगण्डशैलः उन्निद्रपुष्पाक्षिसहस्रभाजा अधिरूढेन उच्चैः महीरुहा सुराधिपाधिष्ठितहस्तिमल्ललीलां दधौ ॥१३॥

टीका—यत्रेति। यत्र यत्रैव रजतस्य विकारो राजतः प्राणिरजतादिभ्योऽञित्यञ्-प्रत्ययः। स चासौ गण्डशैलस्य। गण्डशैलास्तु च्युताः स्थूलोपला गिरेरित्यमरः। उन्निद्राणि विकसितानि पुष्पाण्यक्षीणीवेत्युपमितसमासः। तेषां सहस्रं भजतीति तद्भाजा अधिरूढेनोच्चैर्महीरुहा वृक्षेण सुराधिपेन देवेन्द्रेण अधिष्ठितो यो हस्ती मल्ल इव तस्यैरावतस्य लीलां शोभान्दधौ ऐरावतस्य धावल्यादिति भावः। हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके इति विश्वः। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥१३॥

टिप्पनी—यत्रेति। अत्र पुष्पाक्षीति लुप्तोपमा चेति टीकोक्त निदर्शनया सहास्य अङ्गाङ्गिभावेन सङ्करः। बन्धस्य प्रगाढत्वात् समासबाहुल्याच्च ओजो गुणः, गौड़ी च रीतिः ॥१३॥

বাঙ্গালা—যে রৈবতকপর্ব্বতে রৌপ্যময় বৃহৎ পাষাণের উপরে উচ্চ বৃক্ষ জন্মিয়া-

विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥१४॥
यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः।
वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥१५॥

---

ছিল; তাহাতে আবার বহুতর পুষ্প প্রস্ফুটিত হইয়াছিল; সুতরাং সহস্রাক্ষ দেবরাজ আরোহণ করিলে, শুভ্রবর্ণ ঐরাবতহস্তীর যে শোভা হয়; সেই রৌপ্যময় পাষাণ, সেই শোভা ধারণ করিয়াছিল ॥১৩॥

**अन्वयः**—गरुड़ाग्रजेन विभिन्नवर्णाः सूर्य्यस्य रथ्याः यत्र वंशकरीरनीलैः रत्नैः परितः स्फुरन्त्या रुचा स्वां रुचं पुनः आनिन्यिरे ॥१४॥

**टीका**—विभिन्नेति। गरुड़ाग्रजेनारुणेन विभिन्नवर्णा अन्यथाकृतवर्णा अरुणिमानमापादिता इत्यर्थः। सूर्य्यस्य सम्बन्धिनो रथं वहन्तीति रथ्याः रथाश्वाः। तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः। यत्र शैले वंशकरीरनीलैः वंशाङ्कुरश्यामैः रत्नैर्मरकतैरित्यर्थः। वंशाङ्कुरे करीरोऽस्त्रीत्यमरः। वंशशब्दस्याङ्गानतावैतोरलूनतायाः प्रतिपत्त्यर्थत्वादपौनरुक्त्यम्। अत एव कार्थपदमप्रयोज्यमित्युक्ता कविकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः। न विशेषस्येदिति। परितः स्फुरन्त्या रुचा स्वप्रभया करणेन पुनः स्वां रुचं निजहरितवर्णमेव आनिन्यिरे आनीताः। नयतेर्द्विकर्मकात्प्रधाने कर्मणि लिट्। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात्। अत्र विभिन्नवर्णा इत्येकस्तद्गुणः। रथ्यानां स्वगुणत्यागेन गरुड़ाग्रजगुणग्रहणात्पुनस्त्यागेन मरकतगुणग्रहणादपरस्तद्गुणस्तदुपजीवीति सजातीययोः सङ्करः। तेन गिरेः सूर्य्यमण्डलपर्य्यन्तमौन्नत्यं वस्तु व्यज्यते। तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥१४॥

**टिप्पनी**—विभिन्नेति। अत्र वंशकरीरनीलेति लुप्तोपमा चेति टीकोक्तरुद्धरे तस्यापि प्रवेशः। बन्धस्य गाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥१४॥

**বাঙ্গালা**—সারথি অরুণের অরুণবর্ণে, সূর্য্যের শ্যামবর্ণ ঘোড়াগুলিকে, অরুণবর্ণ করিয়া ফেলিত; তার পর বাঁশের করালীর ন্যায় যে রৈবতকপর্বতের নীলবর্ণ মণি (মরকতমণি) সকল, চারিদিকে বিস্তৃত স্বকীয় নীল কিরণ দ্বারা, সেই ঘোড়াগুলিকে পুনরায় তাহাদের স্বকীয় শ্যামবর্ণ লাভ করাইয়া দিত ॥১৪॥

**अन्वयः**—यत्र विषपावकोत्था विपत् समुन्नमद्भिः अम्बुवाहैः उज्झिताभिः अद्भिः मुहुः समुन्नम् अविपन्नगानां नगानां वनं न बबाधे ॥१५॥

**टीका**—यत्रेति। यत्र शैले समुन्नमद्भिः समुत्पतद्भिरम्बुवाहैरुज्झिताभिस्त्यक्ताभिरद्भिर्मुहुः समुन्नं सम्यक् उन्नं क्लिन्नं सिक्तमित्यर्थः। उन्दी क्लेदने इति धातोः कर्मणि क्तः, नुदविदेत्यादिना निष्ठानत्वम्। विपन्नगा विगतसर्पा न भवन्तीत्यविपन्नगाः सपन्नगा

फलङ्गिरुष्णांशुकराभिमर्षात् कार्शानवं धाम पतङ्गकान्तैः।
शशंस यः पात्रगुणाद् गुणानां सङ्क्रान्तिमाक्रान्तगुणातिरेकाम्॥१६॥
दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः॥१७॥

---

इत्यर्थः। तेषामावपन्नगानामगानां छायायां वनं विषपावकोत्था विषाग्निसमुत्था विपदा-पत् न बबाधे नित्यं वर्षानुषङ्गाद्विषाग्निद्योभी छायायामकिञ्चित्कर इति भावः॥१५॥

टिप्पनी—यत्रेति। अत्र बाधनाभावं प्रति समुन्नद्धपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, पादाद्यान्तयमकञ्चेत्यनयोः संसृष्टिः। बन्धस्य प्रगाढत्वात् ओजो गुणः, गौडी च रीतिः॥१५॥

বাঙ্গালা—যে রৈবতকে মেঘ উঠিয়া জল বর্ষণ করে; তাহাতে সর্পপরিপূর্ণ বৃক্ষের বন বার বার সিক্ত হইতে থাকে; সুতরাং সর্পের বিষানলজাত বিপদ সে বনের ক্ষতি করিতে পারে না॥১৫॥

अन्वयः—यः उष्णांशुकराभिमर्षात् कार्शानवं धाम फलद्भिः पतङ्गकान्तैः गुणानां संक्रान्तिं पात्रगुणात् आक्रान्तगुणातिरेकां शशंस॥१६॥

टीका—फलद्भिरिति। यः शैलः उष्णांशुकराभिमर्षादर्ककरसम्पर्कात् कृशानोरिदं कार्शानवम् आग्नेयं धाम तेजः फलद्भिर्वद्भिरद्भिः अग्निकरसामर्थ्याभिव्यञ्जकैरिति भावः। पतङ्गकान्तैः सूर्यकान्तैः दृष्टान्तभूतैरिति भावः। गुणिनां संक्रान्तिमन्यत्र संक्रमणं संक्रान्तगुणानित्यर्थः। पात्रगुणाधारगुणसहकारादाक्रान्तः प्राप्तो गुणातिरेकः कार्यविशेषाधानरूपी गुणोत्कर्षो यस्यास्तां शशंस प्रतिपादयामास अर्कत्विषां सर्वत्र संक्रमणाविशेषेऽपि सूर्यकान्तेष्वेव ज्वलनजननदर्शनात् सर्वत्रापि संक्रम्यकारिणां गुणानामाधारगुणसहकारात् कार्यविशेषाधायकत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः। ततश्च सद्वक्तृशक्तिर्विरहिणी सहजशक्तिरनुपकारिणीति भावः। वृत्त्यनुप्रासोऽलङ्कारः॥१६॥

टिप्पनी—फलद्भिरिति। अत्र माधुर्यं गुणः, वैदर्भी च रीतिः। अस्यानुरूपः श्लोको यथा किराते—

> निःशेषक्षत्री जगतीपतीनां हत्वा गुरुर्यस्य स जामदग्न्यः।
> वीर्याविधूतः स तदा विवेद प्रकर्षमाधारवशं गुणानाम्॥१६॥

বাঙ্গালা—সূর্য্যকান্তমণি সকল, সূর্য্যের কিরণসম্পর্কে অগ্নির তেজ উদ্‌গিরণ করিতেছিল; তাহাতে একের গুণ অপরে গেলে, সে গুণ যে সে থানে যাইয়া আরও উৎকর্ষ লাভ করে, তাহা কেবল সেই পাত্রের গুণে এই বিষয় যে রৈবতক পর্বত সূচনা করিয়াছিল॥১৬॥

अन्वयः—मुहुः दृष्टः अपि सः शैलः मुरारेः अपूर्ववत् विस्मयम् आततान। यत्क्षणे क्षणे नवताम् उपैति, रमणीयतायाः तदेवरूपम्॥१७॥

उच्चारणज्ञोऽथ गिरान्दधानमुच्चारणत्पक्षिगणास्तटोस्तम् ।
उत्कन्धरं द्रष्टुमवेच्य शौरिमुत्कन्धरं दारुक इत्युवाच ॥१८॥
आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥१९॥

---

टीका—दृष्टोऽपीति । मुहुर्दृष्टोऽपि स शैलो मुरारेरपूर्ववदृष्टपूर्ववत् तुल्यमपूर्ववत् । तेन तुल्यं क्रिया चेदिति वतिः । विस्मयमाततान अतिरमणीयत्वादिति भावः । तथाहि, क्षणे क्षणे प्रतिक्षणम् । वीप्सायां द्विर्भावः । नवतामपूर्वत्वमुपैतीति यत्, तदेवत्वोपगमनमेव रमणीयतायाः रूपं स्वरूपं लक्षणमित्यर्थः । अत्र रमणीयत्वलक्षणस्य वाक्यार्थस्य विस्मये हेतुत्वसमर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥१७॥

टिप्पनी—दृष्ट इति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास एवालङ्कारः; समर्थ्यसमर्थकयोः सामान्यविशेष भावसत्त्वे अर्थान्तरन्यासस्यैवालङ्कारिकैरङ्गीकारात् अत्र तु तद्भावसत्त्वात् । तेन च मल्लिनाथोक्तं काव्यलिङ्गं चिन्त्यम् । प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—সেই রৈবতক, বহুবার দৃষ্টিগোচর হইয়া থাকিলেও নূতন দৃষ্টের ন্যায় সে, শ্রীকৃষ্ণের বিস্ময় জন্মাইয়াছিল। কারণ, বস্তু, যে প্রতিমুহূর্ত্তে নূতনতা প্রাপ্ত হয়; তাহাই সৌন্দর্য্যের স্বরূপ ॥১৭॥

अन्वयः—अथ गिराम् उच्चारणज्ञः दारुकः उच्चाः रणत्पक्षिगणाः तटीः दधानं तं धरं द्रष्टुम् उत्कम् उत्कन्धरं शौरिम् अवेक्ष्य इति उवाच ॥१८॥

टीका—उच्चारणज्ञ इति । अथ हरिविस्मयानन्तरं गिरां वाक्यानामुच्चारणं जानातीत्युच्चारणज्ञः उक्तिकुशलः । आतोऽनुपसर्गे क इति कप्रत्ययः, नेगुणचेत्यादिना आकारादनुपपदात् कर्मोपपदो भवति विप्रतिषेधेनेति वचनात् । दारुकः कृष्णसारथिः उच्चाः उन्नताः रणन्तः पक्षिगणाः यासु ताः रणत्पक्षिगणास्तटीर्दधानं तं पूर्वोक्तम् । धरतीति धरं पर्वतम । पचाद्यच् । अहार्य्यधरपर्वता इत्यमरः । द्रष्टुमुत्कम् उत्सुकम् । उत्क उन्मना इति निपातः । उत्कन्धरमौत्सुक्यादुन्नमितकन्धरं शौरिमवेक्ष्य इति वक्ष्यमाणं श्लोकवाचमुवाच । न ह्यैङ्गितज्ञोऽवसरेऽवसीदतीति भावः ॥१८॥

टिप्पनी—उच्चारण इति अत्र पादाद्यमकमलङ्कारः । ओजो गुणः, गौड़ी च रीतिः ॥१८॥

বাঙ্গালা—তদনন্তর, রৈবতকপর্বতের উচ্চ প্রদেশে পক্ষিগণ রব করিতেছিল; সুতরাং সেই পর্বতকে দেখিবার জন্য শ্রীকৃষ্ণ উৎকণ্ঠিত এবং উদ্‌গ্রীব হইয়াছেন ইহা দেখিয়া বাক্যের উচ্চারণাভিজ্ঞ দারুক এইরূপে বলিতে লাগিল ॥১৮॥

अन्वयः—आच्छादितायतदिगम्बरम् उच्चकैः गाम् आक्रम्य संस्थितम् उदग्रविशालशृङ्गं मूर्ध्नि स्खलत् तुहिनदीधितिकोटिम् एनं नगेशम् उद्वीक्ष्य कः भुवि न विस्मयते ॥१९॥

टीका—इतः प्रभृति यमकानन्तरश्लोकेषु वसन्ततिलकावृत्तं नियमेनाह, आच्छादि-

**उदयति विततोर्द्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।**
**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥२०॥**

---

तेति। आच्छादितान्यावृतानि आयतानि दीर्घाणि दिशोऽम्बरं खञ्च दिगम्बराणि येन तम् अन्यत्र आच्छादितं वसितमायातं दिगेवाम्बरं वासो येन तं तथोक्तम् उच्चकैरुन्नतां गां भुवमाक्रम्य व्याप्य संस्थितम्। तथा उदग्राणि उन्नतानि विशालानि च शृङ्गाणि शिखराणि यस्य तम् अन्यत्र उदग्रे विशाले शृङ्गे विषाणे यस्य तम् उच्चकैरुन्नतं गां वृषभमाक्रम्याधिष्ठाय संस्थितमित्यर्थः। शृङ्गं विषाणे शिखर इति। गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः। अर्जुनीनेत्रदिग्वाणभूवाग्वारिषु गौर्मतेति च विश्वः। मूर्ध्नि शिखरे अन्यत्र शिरसि स्फुरन्ती तुहिनदीधितेरिन्दोः कोटिः रश्मिः कला च यस्य तमेनं नगेशं नगश्रेष्ठं रैवतकं कैलासनायकमीश्वरञ्चोद्वीच्य को न विस्मयते सर्वोऽपि विस्मयत इत्यर्थः। नेयं तुल्ययोगिता प्रकृताप्रकृतविषये तदनुत्थानात्, नापि समासोक्तिः तस्या विशेषणसाम्यजीवित्वात्, नापि श्लेषः उभयश्लेषे विशेष्यश्लेषयोगात्। तस्मात् प्रकरणिकार्थमात्रपर्य्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरद्योतनाद् ध्वनिरित्याहुः। तदुक्तं काव्यप्रकाशे, अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति। वृत्तलक्षणन्तु, उक्ता वसन्ततिलका तभजाजगौ ग इति ॥१९॥

**टिप्पनी**—आच्छादितेति। को जनो न विस्मयते अपि तु सर्व एवेत्यर्थः। अतो भवतोऽपि विस्मितत्वं सम्भवतीति भावः। अतएवात्रार्थापत्तिरलङ्कारः। बन्धस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥१९॥

**বাঙ্গালা**—এই রৈবতক, বিস্তৃত দিক্ সকল ও আকাশকে আবরণ করিয়া রহিয়াছে; আর উন্নত ভূতলকে ব্যাপিয়া অবস্থান করিয়াছে; এবং ইহার শৃঙ্গ সকল উচ্চ ও বৃহৎ; আর ইহার উপরিভাগে চন্দ্রের কিরণ পতিত হইয়া থাকে; সুতরাং পর্বতশ্রেষ্ঠ এই রৈবতককে দেখিয়া জগতে কোন্ ব্যক্তি বিস্মিত না হয়? ॥১৯॥

**अन्वयः**—विततोर्द्ध्वरश्मिरज्जौ अहिमरुचौ उदयति (सति), विततोर्द्ध्वरश्मिरज्जौ हिमधाम्नि च अस्तं याति (सति), अयं गिरिः विलम्बिघण्टद्वयपरिवारितवारणेन्द्रलीलां वहति ॥२०॥

**टीका**—उदयतीति। वितता ऊर्ध्वाश्च रश्मिरज्जवो रश्मयो रज्जव इव यस्य तस्मिन् विततोर्ध्वरश्मिरज्जौ अहिमरुचौ सूर्य्ये उदयति उदयमाने। अय गताविति स्वरितेतं केचिदिच्छन्ति ततः शतरि सप्तमी। तथा विततोर्ध्वरश्मिरज्जौ हिमधाम्नि चास्तं याति अस्तमयमाने। यातेः शतरि सप्तमी। अयं गिरिर्विलम्बिना विशेषं लम्बमानेन घण्टाद्वयेन परिवारितस्य वेष्टितस्य वारणेन्द्रस्य लीलां शोभां वहति। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शना। तथा सूर्य्याचन्द्रमसावस्य कुक्षिसमानकक्षां बिभ्रत इति महदोः

বহতি যঃ পরিতঃ কনকস্থলীঃ সহরিতালসমাননবাংশুকঃ।
অচল এষ ভবানিব রাজতে স হরিতালসমাননবাংশুকঃ॥২১॥
পাশ্চাত্যভাগমিহ সানুষু সন্নিষণ্ণাঃ পশ্যন্তি শান্তমলসান্দ্রতরাংশুজালম্।
সম্পূর্ণলক্ষ্মললনালপনোপমানমুৎসঙ্গসঙ্গিহরিণস্য মৃগাঙ্কমূর্ত্তেঃ॥২২॥

---

নত্থং ব্যজ্যতে। পুষ্পিতাগ্রা বৃত্তম্। অযুজি নযুগরেফতো যকারো যুজি চ নজৌ জরগাশ্চ পুষ্পিতাগ্রা॥২০॥

**টিপ্পনী**—উদয়তীতি। অত্র রশ্মিরজ্জুশব্দয়োরর্থস্য আদানতঃ পুনরুক্তপ্রতীতিঃ পরস্য রশ্ময়ঃ কিরণা রজ্জব ইবেতি তদ্বিদাবগমাৎ ভিন্নাকারশব্দগতত্বাচ্চ পুনরুক্তবদাভাসোঽলঙ্কারঃ লুপ্তোপমা চানয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ, টীকোক্তনিদর্শনয়া পরিবারিতবারণেন্দ্রেতি চ্ছেকানুপ্রাসেন চ সমুদায়ে সংসৃষ্টিঃ। বন্ধবৈকট্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ॥২০॥

**বাঙ্গালা**—সূর্য্য যখন উদয় পাইতে থাকেন, তখন তাঁহার কিরণগুলি, রজ্জুর ন্যায় বিস্তৃত হইয়া এই রৈবতকের উপরে আসিয়া লাগে; আবার সেই সময়েই চন্দ্র অস্ত যাইতে থাকেন, সুতরাং তাঁহার কিরণগুলিও রজ্জুর ন্যায় বিস্তৃত হইয়া এই রৈবতকের উপরে আসিয়া লাগে। অতএব দুইটী ঘণ্টা গলার দুই দিকে ঝুলিতে থাকিলে, প্রকাণ্ড হস্তীর যে শোভা হয়, সেই শোভা এই রৈবতক পর্বত ধারণ করিতেছে॥২০॥

**অন্বয়ঃ**—লসমাননবাংশুকঃ যঃ পরিতঃ সহরিতাঃ কনকস্থলীঃ বহতি, সঃ এষঃ অচলঃ, হরিতালসমাননবাংশুকঃ ভবান্ ইব রাজতে॥২১॥

**টীকা**—বহতীতি। লসমানা দীপ্যমানা নবাংশবো যস্য স লসমাননবাংশুকঃ। শৈষিকঃ কপ্রত্যয়ঃ। যোঽচলঃ সহরিতাঃ সদূর্বাঃ। হরিতেতি চ দূর্বায়াং হরিদ্বর্ণ্যুতেঽন্যবদিতি বিশ্বঃ। কনকস্য স্থলীঃ স্বর্ণভূমীঃ। জানপদেত্যাদিনা অকৃত্রিমার্থে ঙীপ্। পরিতো বহতি স এষোঽচলঃ হরিতালেন কর্চূরেণ সমানং নবমংশুকং বাসো যস্য স হরিতালসমাননবাংশুকঃ পীতাম্বরো ভবানিব রাজতে। দ্রুতবিলম্বিতং বৃত্তম্। দ্রুতবিলম্বিতমাহ নভৌ ভরাবিতি লক্ষণাৎ॥২১॥

**টিপ্পনী**—বহতীতি। অত্র পাদযমকম্, শ্রৌতীপমা, আর্থীপমা চেত্যেতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। মধুররচনাবশ্যাৎ মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ॥২১॥

**বাঙ্গালা**—যে পর্বতে স্থিতমণিমাণিক্যাদির নূতন কিরণরাশি শোভা পাইয়া থাকে এবং যে পর্বত চারি দিকে দূর্বাযুক্ত স্বর্ণময় ভূমি ধারণ করিয়া থাকে; এই সেই রৈবতক-পর্বত, হরিতালের তুল্য পীতবর্ণ বস্ত্রধারী আপনার ন্যায় বিরাজ করিতেছে॥২১॥

**অন্বয়ঃ**—ইহ সানুষু সন্নিষণ্ণাঃ (জনাঃ) শান্তমলসান্দ্রতরাংশুজালং সম্পূর্ণলক্ষ্মললনালপনোপমানম্ উৎসঙ্গসঙ্গিহরিণস্য মৃগাঙ্কমূর্ত্তেঃ পাশ্চাত্যভাগং পশ্যন্তি॥২২॥

**টীকা**—পাশ্চাত্যেতি। ইহাদ্রৌ সানুষু সন্নিষণ্ণাঃ স্থিতাঃ জনাঃ শান্তমলক্ষ্মলক্ষ্ম

कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥२३॥

पूर्णेवर्द्धित्वान्निष्कलङ्कमत एव सान्द्रतरमंशुजालं यस्य तं सम्पूर्णं परिपूर्णं लब्धं प्राप्तं, ललनालपनोपमानं स्त्रीमुखसादृश्यं येन तम्। आननं लपनं मुखमित्यमरः। कुतः उत्सङ्गसङ्गिहरिणस्य अङ्कस्थमृगस्य मृगाङ्का मृगचिह्ना मूर्त्तिर्यस्य तस्य मृगाङ्कमूर्त्तेश्चन्द्रस्य पश्चाद्भवः पाश्चात्यः। दक्षिणपश्चात्पुरसस्त्यक्। स चासौ भागश्च तं पाश्चात्यभागं पृष्ठभागं पश्यन्ति। पाश्चात्यभागदर्शनातिशयोक्त्या तादृग्गौरत्वध्वनिः। वसन्ततिलका वृत्तम् ॥२२॥

**टिप्पनी**—पाश्चात्येति। अत्र उपमानतया प्रसिद्धस्य चन्द्रस्य तृतीयचरणेन उपमेयत्वकल्पनात् प्रतीपं नामालङ्कारः; पाश्चात्यभागदर्शनं प्रति उत्सङ्गसङ्गिहरिणपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, पाश्चात्यभागदर्शनासम्बन्धेऽपि तत्सम्बन्धकथ्या अतिशयोक्तिः, वृत्त्यनुप्रासः, छेकानुप्रासश्चेति सर्वेषां मिथो निरपेक्षतया संसृष्टिः। तथा हरिणपदेन प्रक्रम्य पुनर्मृगपदाभिधानात् प्रकृतिविषयो भग्नप्रक्रमता दोषः; स च उत्सङ्गसङ्गिहरिणस्य तदङ्कमूर्त्तेः इति पाठेन समाधेयः। तदङ्कमूर्त्तेः हरिणाङ्कमूर्त्तेरित्यर्थः। एवञ्च न कथितपदतादोषोऽपि "जम्बुविंसं घृतपरिस्फुटतत्प्रसूनाः" इति दर्पणे समाहितोदाहरणवत्। माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२२॥

**বাঙ্গালা**—মানুষ এই রৈবতকপর্বতের উচ্চ দেশে থাকিয়া, চন্দ্রের নিষ্কলঙ্ক ও ঘন-কিরণ পৃষ্ঠভাগ (ও পিঠ) দেখিয়া থাকে। কেন না, চন্দ্রের ক্রোড়দেশেই হরিণচিহ্ন আছে, কিন্তু পৃষ্ঠদেশে নাই; সুতরাং চন্দ্রের সে পৃষ্ঠভাগ, রমণীগণের মুখমণ্ডলের সম্পূর্ণ সাদৃশ্য লাভ করিয়াছে ॥২২॥

**अन्वयः**—अत्र निर्झरौघाः पुंवत् उच्चैः भृगुभ्यः ग्राव्णां मूर्ध्नि पातं कृत्वा जर्जराः द्याम् उत्पतन्तः (च सन्तः) स्मरार्त्तस्वर्लोकस्त्रीगात्रनिर्वाणं कुर्वन्ति ॥२३॥

**टीका**—कृत्वेति। अत्राद्रौ निर्झरौघाः गिरिनदप्रवाहाः। प्रवाहो निर्झरो झर इत्यमरः। च तत्पक्ष इत्यादिवत्सामान्यविशेषभावादपुनरुक्तिः। पुंवत् पुम्भिस्तुल्यम्। तेन तुल्यं क्रिया चेदिति वतिः। उच्चैर्भृगुभ्यस्तटेभ्यः। प्रपातस्त्वतटो भृगुरित्यमरः। ग्राव्णां शिलानां मूर्ध्नि पातं कृत्वा पतित्वा जर्जरा शकलीभूताः द्यामाकाशमुत्पतन्तः स्मरार्त्तानां स्वर्लोकस्त्रीणां खेचरीणामप्सरसां गात्रनिर्वाणमङ्गनिर्वृतिं कुर्वन्ति। अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः। भृग्वग्निजलसम्पातैर्मरणं प्रविधीयत इति विहितभृगुपातिनां पुंसां स्वर्लोकगामिनामिहोपमानता। शालिनी वृत्तम्। शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरिति ॥२३॥

**टिप्पनी**—कृत्वेति। अत्र पुंवदिति आर्थी तद्धितगतोपमालङ्कारः। दुःश्रवत्वदोषश्च। व्योमनिष्काशने

स्थगयन्त्यमूः शमितचातकार्त्तस्वरा
जलदास्तडित्तुलितकान्तकार्त्तस्वराः।
जगतीरिह स्फुरितचारुचामीकराः
सवितुः क्वचित् कपिशयन्ति चामी कराः॥२४॥

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीव तरां शिरोभिः।
श्रद्धेयनिर्झरजलव्यपदेशमस्य
विष्वक् तटेषु पतति स्फुटमन्तरीक्षम् ॥२५॥

---

कम्बलस्येव तद्दोषनिवारणाय शब्दान्तरनिवेशे मूलस्यैवोच्छेदप्रसङ्ग इति विरतम्। बन्धवैकत्यात् ओजो गुणः, गौड़ी च रीतिः ॥२३॥

বাঙ্গালা—এই রৈবতকপর্ব্বতে ঝরণার জল, জীর্ণ মানুষের ন্যায় উচ্চ স্থান হইতে প্রস্তরের উপরে পতিত হইয়া, বিন্দু বিন্দু হইয়া যাইয়া, আকাশের দিকে উঠিয়া, কামার্ত্ত অপ্সরাদিগের শরীর শীতল করিয়া থাকে ॥২৩॥

अन्वयः—इह शमितचातकार्त्तस्वराः तड़ित्तुलितकान्तकार्त्तस्वराः जलदाः अमूः जगतीः स्थगयन्ति। क्वचित् स्फुरितचारुचामीकराः अमी सवितुः कराश्च अमूः जगतीः कपिशयन्ति ॥२४॥

टीका—स्थगयन्तीति। इहाद्रौ क्वचिदमूर्जगतीर्भूमीः। जगती भुवने भूमाविति विश्वः। शमिताश्चातकानामार्त्तस्वरा यैस्ते शमितचातकार्त्तस्वराः। सर्वं वृष्टापतितमम्बु न चातकानामिति भूमिगतस्य तेषां विषाभत्वादभौमाम्बुदानेनोज्जीवयन्तीत्यर्थः। किञ्च तड़िद्भिस्तुलितानि उपमितानि कान्तानि कार्त्तस्वराणि सुवर्णानि यैस्ते तड़ित्तुलितकान्तकार्त्तस्वराः। तड़ित्स्फुरणे तेषामपि तद्वत् स्फुरणादिति भावः। ते जलदाः स्थगयन्ति आच्छादयन्ति। स्थग आच्छादने इति चौरादिकः। क्वचित्तु स्फुरितानि उज्ज्वलितानि चारूणि चामीकराणि सुवर्णानि यैस्ते स्फुरितचारुचामीकराः अमी सवितुः कराः आतपाश्च कपिशयन्ति कपिशिताः कुर्वन्ते क्वचिद्वृष्टिः क्वचिदातपश्चेति महदाश्चर्यमिति भावः। पथ्या वृत्तम्। सजसा यलौ च सह गेन पथ्या मता ॥२४॥

टिप्पनी—स्थगयन्तीति। अत्र तड़ित्तुलितेत्यादौ आर्थोपमा, पादान्त्ययमकस्य च अनयोः संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२४॥

বাঙ্গালা—এই রৈবতকে মেঘ সকল, (জলবর্ষণ পূর্ব্বক) চাতকপক্ষিগণের আর্ত্তরব নিবারণ করিয়া এবং বিদ্যুৎ প্রকাশ দ্বারা মনোহর স্বর্ণসমূহকে বিদ্যুতের তুল্য উজ্জ্বল করিয়া, ঐ স্থানগুলিকে আচ্ছাদন করিতেছে। আবার কোন স্থানে, সূর্য্যের ঐ কিরণগুলি সুন্দর সুবর্ণগুলিকে উদ্ভাসিত করিয়া, ঐ স্থানগুলিকে পিঙ্গলবর্ণ করিতেছে ॥২৪॥

अन्वयः—उच्छ्रितसितांशुकरावलम्बैः उत्तम्भितोडुभिः शिरोभिः अतीवतराम् उत्क्षिप्तम् अन्तरीक्षं श्रद्धेयनिर्झरजलव्यपदेशम् (सत्) अस्य तटेषु विष्वक् पतति स्फुटम् ॥२५॥

**একত্র স্ফটিকতটাংশুভিন্ননীরা নীলাশ্মদ্যুতিভিদুরাম্ভসোঽপরত্র।**
**কালিন্দীজলজনিতশ্রিয়ঃ শ্রয়ন্তে বৈদগ্ধীমিহ সরিতঃ সুরাপগায়াঃ ॥২৬॥**

---

**টীকা**—উৎক্ষিপ্তমিতি। উচ্ছ্রিতাঃ উৎক্ষিপ্তাঃ সিতাংশোশ্চন্দ্রস্য করাঃ অংশবো হস্তাশ্চাবলম্বো যেষাং তৈঃ উত্তম্ভিতান্যুডূনি যৈস্তৈঃ উডূনি চাবষ্টভ্যেত্যর্থঃ। শিরোভিঃ শিখরৈঃ সংস্তকৈশ্চাতীবতরাম্ভৃশতরম্। অতীবশব্দাদব্যয়াদামুপ্রত্যয়ঃ। উৎক্ষিপ্তমুচ্চস্য ধৃতম্ অন্তরীক্ষং শ্রদ্ধেয়ঃ সাদৃশ্যাদ্বিশ্বসনীয়ঃ নির্ঝরজলমিতি ব্যপদেশো ব্যবহারো যস্য তৎ দৃঢ়তরাং নির্ঝরজলধিয়ং কুর্ব্বদিত্যর্থঃ। অস্যাদ্রেঃ তটেষু বিষ্বক্ সমন্তাৎ পততি স্ফুটং সত্যম্ ইন্দুকরানুডূনি চাবষ্টভ্য শিরোভির্ধ্রিয়মাণমপি দুর্ব্বহত্বাদ্ অস্যদন্তরীক্ষংবেদং ন তু জলং সাদৃশ্যাত্তু ব্যপদেশো দুর্ব্বার ইতি সর্ব্বতঃ পাতিতা নির্ঝরজলং চোৎপ্রেক্ষ্যতে তেনোৎসেধবিস্তারাবস্য ব্যজ্যেতে ॥২৫॥

**টিপ্পনী**—উৎক্ষিপ্তমিতি। উত্তোলিতচন্দ্রকরান্ নক্ষত্রাণি চাবলম্ব্য স্থিতৈঃ রৈবতকশিরোভিঃ উত্তোল্য ধৃতোঽপি আকাশঃ, নির্ঝরজলচ্ছলেন সমন্তাৎ পততীবেতি সরলার্থঃ। অতএবাত্র বাচ্যা ভাবাভিমানিনী সাপহ্নবোৎপ্রেক্ষালঙ্কারঃ। বন্ধস্য গাঢ়ত্বাৎ সমাসবাহুল্যাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৫॥

**বাঙ্গালা**—এই রৈবতকপর্ব্বত, চন্দ্রের উত্তোলিত কর (কিরণ ও হস্ত) এবং নক্ষত্রমণ্ডল এই দুইয়ের উপরে নির্ভর করিয়া, জোরে মাথা দিয়া আকাশটাকে তুলিয়া ধরিয়াছিল; কিন্তু তথাপি সে আকাশ, বিশ্বাসযোগ্য ঝরণার জলের ছলে, ইহারই চারিদিকে নিম্ন ভূমিতে যেন পড়িতেছে বলিয়া স্পষ্টতই বুঝা যাইতেছে ॥২৫॥

**অন্বয়ঃ**—ইহ একত্র স্ফটিকতটাংশুভিন্ননীরাঃ অপরত্র নীলাশ্মদ্যুতিভিদুরাম্ভসঃ সরিতঃ কালিন্দীজলজনিতশ্রিয়ঃ সুরাপগায়াঃ বৈদগ্ধীং শ্রয়ন্তে ॥২৬॥

**টীকা**—একত্রেতি। একত্র একস্মিন্ ভাগে স্ফটিকস্য যত্তটন্তস্যাংশুভির্ব্বিভিন্ননীরাঃ মিশ্রোদকাঃ শুভ্রজলা ইত্যর্থঃ। অপরত্রাপরস্মিন্ ভাগে নীলাশ্মনামিন্দ্রনীলানাং দ্যুতিভিঃ ভিদুরাণি মিশ্রাণ্যম্ভাংসি যাসাং তাঃ নীলসলিলা ইত্যর্থঃ। ইহাদ্রৌ সরিতঃ কলিন্দস্যাদ্রেরপত্যং স্ত্রী কালিন্দী যমুনা। কালিন্দী সূর্য্যতনয়া যমুনা শমনস্বসেত্যমরঃ। তস্যা জলৈঃ জনিতা শ্রীঃ শোভা যস্যাস্তস্যাঃ তৎসঙ্গতায়া ইত্যর্থঃ। সুরাপগায়া গঙ্গায়াঃ বৈদগ্ধীং শোভাং শ্রয়ন্তে ভজন্তি বিদগ্ধস্য ভাবঃ বৈদগ্ধী। ব্রাহ্মণাদিত্বাদ্ গুণবচনেত্যাদিনা ষ্যঞ্ প্রত্যয়ঃ, ষিদ্গৌরাদিভ্যশ্চেতি ঙীপ্, সোঽপীত্যস্য বাহুলকত্বাদিহ বৈকল্পিকঃ অতএব ষ্যঞ্ ষিৎকরণাদীকারো বহুলমিতি বামনঃ। অত্র সিতাসিতমণিদ্যুতিসম্বন্ধাৎ সরিতাং যমুনাসঙ্গতগঙ্গাশোভাসাদৃশ্যাক্ষেপাত্তদ্গুণোত্থাপিতা নিদর্শনা। প্রহর্ষিণী বৃত্তম্। ম্নৌ জ্রৌ গস্ত্রিদশযতিঃ প্রহর্ষিণীয়ম্ ॥২৬॥

**টিপ্পনী**—একত্রেতি। অত্র সরিতাং গঙ্গাশ্রীধারণং প্রতি স্ফটিকেত্যাদিপদদ্বয়স্যার্থো হেতুরিতি পদার্থঃ

ইতস্ততোঽস্মিন্ বিলসন্তি মেরোঃ সমানবপ্রে মণিসানুরাগাঃ।
স্ত্রিয়শ্চ পত্যৌ সুরসুন্দরীভিঃ সমা নবপ্রেমণি সানুরাগাঃ ॥২৭॥

উচ্চৈর্মহারজতরাজিবিরাজিতাসৌ
দুর্বর্ণভিত্তিরিহ সান্দ্রসুধাসবর্ণা।
অভ্যেতি ভস্মপরিপাণ্ডুরিতস্মরারি-
বহ্নিলোচনললামললাটলীলাম্ ॥২৮॥

---

হেতুক কাব্যলিঙ্গঞ্চেতি টীকোক্তাতদ্গুণানিদর্শনাখ্যা সন্দেহস্য সঙ্করঃ, ছেকানুপ্রাসো বৃত্ত্যনুপ্রাসশ্চেতি সমুদায়ে সংসৃষ্টিঃ। বন্ধস্য গাঢ়ত্বাত্ সমাসবাহুল্যাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৬॥

বাঙ্গালা—এই রৈবতকপর্বতে কতকগুলি নদী আছে; একদিকে স্ফটিকময় তীরের কিরণে সে গুলির এক পার্শ্বের জল শুক্ল বর্ণ হইয়া যায়; আবার অপর দিকে মরকতমণি-ময় তীরের কিরণে অপর পার্শ্বের জল নীলবর্ণ হইয়া থাকে। সুতরাং যমুনার জল মিলিত হইয়া নীলবর্ণ শোভা জন্মাইলে, গঙ্গার যে শোভা হয়; সেই নদীগুলি সেই শোভা ধারণ করিয়া থাকে ॥২৬॥

অন্বয়ঃ—মেরোঃ সমানবপ্রে অস্মিন্ মণিসানুরাগাঃ ইতস্ততঃ বিলসন্তি। নবপ্রেমণি পত্যৌ সানুরাগাঃ সুরসুন্দরীভিঃ সমাঃ স্ত্রিয়শ্চ ইতস্ততঃ বিলসন্তি ॥২৭॥

টীকা—ইত ইতি। মেরোঃ সমানবপ্রে তুল্যপ্রস্থে অত এবাচিন্ত্যাবিতস্ততো মণিসানু-রাগা রত্নতটকান্তয়ো বিলসন্তি প্রসরন্তি কিঞ্চ নবং প্রেম যস্য তস্মিন্ নবপ্রেমণি পত্যৌ অনু-রাগেণ সহ বর্ত্তন্ত ইতি সানুরাগাঃ সুরসুন্দরীভিঃ সমাঃ সরূপাঃ স্ত্রিয়শ্চ ইতস্ততো বিলসন্তি ক্রীড়ন্তি অন্যোন্যমনুরাগিণ্যোঽনুরূপাশ্চেহ বিলাসিনস্তদনুরূপাণি চ বিহারস্থলানি সন্তীতি ভাবঃ ॥২৭॥

টিপ্পনী—ইত ইতি। অত্র প্রস্তুতপর্বতবর্ণনাঙ্গত্বেন প্রস্তুতয়োঃ স্ত্রীমণিসানুরাগয়োঃ বিলসন্তী-ত্যেকয়া ক্রিয়য়া কর্তৃতয়াভিসম্বন্ধাত্ তুল্যযোগিতালঙ্কারঃ পাদযমকঞ্চেত্যুভয়োর্মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৭॥

বাঙ্গালা—এই রৈবতকের সানু (সমতল ভূমি) গুলি, সুমেরুপর্বতের সানুরই তুল্য এবং ইহার কোন কোন মণিময় স্থানের কিরণগুলি চারি দিকে ছড়াইয়া পড়ে। আবার, নবপ্রেমিক পতির প্রতি অনুরক্ত এবং অপ্সরাদের ন্যায় পরমসুন্দরী রমণীরাও চারি দিকে বিচরণ করিয়া থাকে ॥২৭॥

অন্বয়ঃ—ইহ সান্দ্রসুধাসবর্ণা মহারজতরাজিবিরাজিতা অসৌ উচ্চৈঃ দুর্বর্ণভিত্তিঃ ভস্মপরিপাণ্ডুরিত-স্মরারেঃ বহ্নিলোচনললামললাটলীলাম্ অভ্যেতি ॥২৮॥

টীকা—উচ্চৈরিতি। ইহাদ্রৌ সান্দ্রয়া সুধয়া লেপবিশেষেণামৃতেন বা সবর্ণা সমান-বর্ণা। জ্যোতির্জনপদেত্যাদিনা সমানস্য সাদেশঃ। লেপমেদেঽমৃতে সুধেতি বৈজয়ন্তী। মহারজতরাজিবিরাজিতা কাঞ্চনরেখাশোভিতা অসৌ পুরোবর্ত্তিনী উচ্চৈরুন্নতা দুর্বর্ণভিত্তিঃ। মহারজতকাঞ্চনে ইতি। দুর্বর্ণং রজতং রূপ্যমিতি চামরঃ। ভস্মনা পরিপাণ্ডুরিতস্য-

**अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः।**
**सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्त्ति ॥२९॥**
**धूमाकारं दधति पुरः सौवर्णे वर्णे नाम्नः सद्मनि तटे पश्यामी।**
**श्यामीभूताः कुसुमसमूहैऽलीनां लीनामालीमिह तरवो बिभ्राणाः ॥३०॥**

---

स्मरारेरुद्धक्षि उन्नतार्चिर्लोचनमेव ललामं भूषणं यस्य तस्य ललाटस्य लीलां शोभामभ्येति भजतीति निदर्शनालङ्कारः। ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्यमरः ॥२८॥

**टिप्पनी**—उच्चैरिति। अत्र सान्द्रसुधासवर्णेति आर्थोपमया टीकोक्ता निदर्शना सङ्कीर्यते, तथा छत्यनुप्रासश्छेकानुप्रासश्चेति समुदाये संसृष्टिः। माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२८॥

**বাঙ্গালা**—এই রৈবতকে, প্রগাঢ় চূর্ণলেপের ন্যায় শুভ্রবর্ণ এবং স্বর্ণরেখায় পরিশোভিত ঐ উচ্চ রূপার দেওয়ালটা, ভস্মময় অঙ্গরাগে শুভ্রবর্ণ মহাদেবের অগ্নিনয়নভূষিত ললাটের শোভা ধারণ করিতেছে ॥২৮॥

**अन्वयः**—अयम् अतिजरठाः प्रकामगुर्वीः अलघुविलम्बिपयोधरोपरुद्धाः असुमतां सततम् अगम्यरूपाः परिणतदिक्करिकाः तटीः बिभर्त्ति ॥२९॥

**टीका**—अयमिति। अयं गिरिरतिजरठाः अतिकठिनाः अतिजरतीश्च। जरठः कठिने जीर्णे इति वैजयन्ती। प्रकामं गुर्वीः श्रेष्ठाः स्थौल्यदुर्भराश्च प्रकामगुर्वीः। गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर इति शब्दार्णवः। विसृष्टपटुवत् मयूरव्यंसकादित्वाश्चेति समासः। अलघुभिर्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च। स्त्रीस्तनाब्दौ पयोधराविति अमरः। उपरुद्धाः आवृताः निबद्धाः सततं सर्वदा असुमतां प्राणभृतामगम्यरूपाः अत्युन्नतत्वात् दुरारोहस्वरूपाः अन्यत्र वृद्धत्वादगमनार्हविग्रहाः। त्यजेदन्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकाञ्चैवेति गमननिषेधादिति भावः। परिणतास्तिर्य्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजाः यासु ताः परिणतदिक्करिकाः। तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मत इति हलायुधः। इतः स्त्रियामिति समासान्तः कप्प्रत्ययः। अन्यत्र परिणताः कठिनीभूताः दिशो दन्तक्षतविशेषाः करिकानखव्रणाश्च यासान्ताः। दिग्दष्टे वर्त्तुलाकारे करिका नखरेखिकेति वैजयन्ती। तटीर्बिभर्त्ति। अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः। पुष्पिताग्रा वृत्तमुक्तम् ॥२९॥

**टिप्पनी**—अयमिति। अत्र बन्धस्य गाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥२९॥

**বাঙ্গালা**—এই রৈবতক, এমন অনেক স্থান ধারণ করিতেছে যে, সে স্থানগুলি অত্যন্ত কঠিন এবং অত্যন্ত বৃহৎ; আর বৃহৎ বৃহৎ মেঘ ঝুলিয়া পড়িয়া, সে স্থানগুলিকে আবরণ করিয়া রাখিয়াছে এবং অত্যন্ত উচ্চ বলিয়া সে স্থানগুলি, প্রাণিগণের পক্ষে সর্ব্বদাই দুরারোহণীয়; আর দিগ্‌হস্তীরা সেই স্থানগুলিতে তির্য্যক্‌ভাবে (তেরচা করিয়া) দন্তপ্রহার করিয়া রাখিয়াছে ॥২৯॥

व्योमस्पृशः प्रथयता कलधौतभित्तीरुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।
सौमेरवीमधिगतेन नितम्बशोभामेतेन भारतमिलावृतवद्विभाति ॥३१॥

---

अन्वयः—इह पुरः वर्णेन अग्नेः सदृशि सौवर्णे तटे कुसुमसमूहे लीनाम् अलीनाम् आलीं बिभ्राणाः श्यामीभूताः अमी तरवः धूमाकारं दधति, पश्य ॥३०॥

टीका—धूमेति । इहाद्रौ पुरोऽग्रे वर्णेनाग्नेः सदृशि समाने अग्निसमानवर्णे इत्यर्थः । सौवर्णे सुवर्णविकारे तटे कुसुमसमूहे लीनां स्थिताम् । ल्वादिभ्यश्चेति निष्ठानत्वम् । अलीनां भृङ्गाणामालीमावलीं बिभ्राणाः अतएव श्यामीभूताः अमी तरवो धूमाकारं धूमसाम्यं दधति त्वं पश्य । स्वर्णतटम् अग्निवद्भाति श्यामास्तरवो धूमवद्भान्तीत्युपमा । जलधरमाला वृत्तम् । अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्माविति लक्षणात् ॥३०॥

टिप्पनी—धूमेति । अत्र अग्नेः सदृशीति आर्थोपमा, पादान्त्ययमकञ्चेत्येतेषां संसृष्टिः । बन्धस्य गाढ़त्वात् ओजो गुणः गौड़ी च रीतिः ॥३०॥

বাঙ্গালা—এই রৈবতকে, সম্মুখবর্ত্তী স্বর্ণময় স্থানগুলি, বর্ণে অগ্নিরই তুল্য দেখা যাইতেছে; ঐস্থানের ঐ বৃক্ষগুলি, পুষ্পসমূহে উপবিষ্ট ভ্রমরসমূহকে ধারণ করতঃ শ্যামবর্ণ হইয়া ধূমের আকার ধারণ করিয়াছে দেখুন ॥৩০॥

अन्वयः—व्योमस्पृशः उन्निद्रपुष्पचणचम्पकपिङ्गभासः कलधौतभित्तीः प्रथयता सौमेरवीं नितम्बशोभाम् अधिगतेन एतेन भारतम् इलावृतवत् विभाति ॥३१॥

टीका—व्योमेति । व्योमस्पृशोऽभ्रङ्कषाः उन्निद्रैर्विकसितैः पुष्पैर्वित्ता उन्निद्रपुष्पचणाः । तेन वित्त इति चणप् प्रत्ययः । ते च ते चम्पकाश्च तद्वत् पिङ्गभासः पिङ्गवर्णाः कलधौतभित्तीः कनकतटीः । कलधौतं रौप्यहेम्नोरिति विश्वः । प्रथयता प्रकटयता अतएव सौमेरवीं सुमेरुसम्बन्धिनीं नितम्बशोभां कटकलक्ष्मीम् अधिगतेन प्राप्तवता । गत्यर्थाकर्मकेत्यादिना गमेः कर्त्तरि क्तः । एतेन रैवतकाद्रिणा भारतं भरतस्य राज्ञ इदं भारताख्यं वर्षं भूखण्डम् । स्यादृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियामित्यमरः । इलावृतवदिलावृतवर्षमिव विभातीत्युपमा । नवखण्डस्य जम्बुद्वीपस्य हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात् सौमेरवापाराख्यं मध्यमखण्डमिलावृतवर्षम् । अतएव नाम्नेदम्भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे । तेन हैमवतं नाम परेष्वप्येवमुन्नयेत् । इलावृतं सौमेरवं सुमेरोः परितो हि तदिति वैजयन्ती ॥३१॥

टिप्पनी—व्योमेति । अत्र चम्पकपिङ्गभास इति लुप्तोपमा, सौमेरवीमिवेति सादृश्याक्षेपात् निदर्शना, इलावृतवदिति इवार्थे वतिप्रत्ययात् श्रौतोपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । बन्धस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥३१॥

বাঙ্গালা—এই রৈবতক, গগনস্পর্শী এবং প্রস্ফুটিত চম্পককুসুমের ন্যায় পিঙ্গলবর্ণ কতকগুলি স্বর্ণময় স্থান ব্যক্ত করিতেছে; তাহাতে এই পর্ব্বত সুমেরুপর্ব্বতের নিতম্বের

रुचिरचित्रतनूरुहशालिभिर्विचलितैः परितः प्रियकव्रजैः।
विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥३२॥
कुशेशयैरत्र जलाशयोषिता मुदा रमन्ते कलभा विकस्वरैः।
प्रगीयते सिद्धगणैश्च योषितामुदारमन्ते कलभाविकस्वरैः ॥३३॥

---

শোভা লাভ করিয়াছে; সুতরাং এই রৈবতকপর্বতদ্বারাই ভারতবর্ষ ইলাবৃতবর্ষের ন্যায় শোভা পাইতেছে ॥৩১॥

অন্বয়ঃ—অসৌ রুচিরচিত্রতনূরুহশালিভিঃ পরিতঃ বিচলিতৈঃ প্রিয়কব্রজৈঃ, জঙ্গমতাং গতৈঃ বিবিধরত্নময়ৈঃ অবয়বৈঃ ইব অভিভাতি ॥৩২॥

টীকা—রুচিরেতি। অসৌ গিরিঃ রুচিরৈঃ উজ্জ্বলৈঃ চিত্রৈর্নানাবর্ণৈস্তনূরুহৈঃ লোমভিঃ শালন্ত ইতি তথোক্তৈঃ পরিতঃ প্রচলিতৈঃ প্রসরদ্ভিঃ প্রিয়কাঃ কম্বলপ্রকৃতয়ো মৃগবিশেষাঃ। প্রিয়কো রোমভির্যুক্তো মৃদুচমসরুর্ষভৈরিতি বৈজয়ন্তী। তেষাং ব্রজৈঃ সমূহৈঃ জঙ্গমতাং চরিষ্ণুতাং গতৈর্বিবিধরত্নময়ৈরবয়বৈঃ স্বাঙ্গৈরিব প্রতিভাতীত্যুৎপ্রেক্ষা। দ্রুতবিলম্বিতং বৃত্তম্ ॥৩২॥

টিপ্পনী—রুচিরেতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩২॥

বাঙ্গালা—যাহাদের লোমগুলি-নানাবর্ণ ও মনোহর; সেই সকল হরিণ ইতস্ততঃ বিচরণ করিতেছে। সুতরাং এই রৈবতকপর্বত যেন নানাবিধরত্নময় এবং গমনশীল আপন অঙ্গসমূহ দ্বারা শোভা পাইতেছে ॥৩২॥

অন্বয়ঃ—অত্র জলাশয়োষিতাঃ কলভাঃ মুদা বিকস্বরৈঃ কুশেশয়ৈঃ রমন্তে। কলভাবিকস্বরৈঃ সিদ্ধগণৈশ্চ যোষিতাম্ অন্তে উদারং প্রগীয়তে ॥৩৩॥

টীকা—কুশেশয়ৈরিতি। অত্রাদ্রৌ জলাশয়োষিতাঃ জলাশয়েষু হ্রদেষু উষিতাঃ বসন্তঃ। গত্যর্থাকর্মকেত্যাদিনা বসতেঃ কর্ত্তরি ক্তঃ সম্প্রসারণং শাসিবসিঘসীনাঞ্চেতি ষত্বম্। যজাদিত্বাৎ সম্প্রসারণং বসতিক্ষুধোরিডিতীট্। কলভাস্ত্রিংশদ্বর্ষকরিণঃ। ত্রিংশদ্বর্ষস্তু কলভ ইতি বৈজয়ন্তী। বিকস্বরৈঃ বিকাসনশীলৈঃ। স্থেশভাসপিসকসো বরচ্। কুশেশয়ৈঃ শতপত্রৈঃ মুদা প্রীত্যা রমন্তে ক্রীড়ন্তি করিবিহারাণাং কমলাকরাণামযমাকর ইতি ভাবঃ। কিঞ্চ কলা অব্যক্তমধুরাঃ বিকারো মানসো ভাবঃ স প্রয়োজনমেষাং ভাবিকা উদ্দীপকা ইত্যর্থঃ কলা ভাবিকাশ্চ স্বরাঃ ষড্জাদয়ো যেষান্তৈঃ কলভাবিকস্বরৈঃ সিদ্ধগণৈঃ সুরগন্ধৈঃ যোষিতাং স্বস্ত্রীণামন্তে সমীপে উদারমুচ্চৈঃ প্রগীয়তে চ ভূয়ো গীতমিতি ভাবঃ ॥৩৩॥

টিপ্পনী—কুশেশয়েরিতি। অত্র পাদযমকমলঙ্কারঃ, মধুররচনাবশাৎ মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৩॥

বাঙ্গালা—এই রৈবতকে ত্রিংশদ্বর্ষবয়স্ক হস্তিগণ, জলাশয়ের মধ্যে থাকিয়া আনন্দে প্রস্ফুটিত পদ্ম দ্বারা খেলা করিতেছে; আর সিদ্ধগণেরা রমণীগণের নিকটে উচ্চ স্বরে মধুর ও কামোদ্দীপক গান করিতেছে ॥৩৩॥

आसादितस्य तमसा नियतेर्नियोगादाकाङ्क्षतः पुनरपक्रमणेन कालम्।
पत्युस्त्विषामिह महौषधयः कलत्रस्थानं परैरनभिभूतममूर्वहन्ति ॥३४॥
वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ताः प्रमदा इवात्र।
पुष्पेक्षणैर्लम्भितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥३५॥

---

अन्वयः—इह अमूः महौषधयः नियतेः नियोगात् तमसा आसादितस्य पुनः अपक्रमणेन कालम् आकाङ्क्षतः त्विषां पत्युः परैः अनभिभूतं कलत्र स्थानं वहन्ति ॥३४॥

टीका—आसादितस्येति। इहाद्रौ अमूर्महौषधयः नियतेर्नियोगादस्मिन् काले इदं भावीति दैवशासनात्। तमसाऽन्धकारेण तत्प्रायेण व्यसनेन वा आसादितस्याक्रान्तस्य पुनरपक्रमणेन पुनरावृत्त्या कालं समागमकालमाकाङ्क्षतः पुनरागत्य सङ्गन्तुमिच्छत इत्यर्थः। त्विषां पत्युः सूर्यस्य सम्बन्धि परैस्तेजोऽन्तरैः पुरुषान्तरैश्चानभिभूतमतिरस्कृतमनुपहतञ्च कलत्रस्थानं कलत्रभूतानां त्विषां स्थानं स्थितिं वहन्ति निर्वहन्तीत्यर्थः। स्त्रीणां स्त्रीष्वेव रक्षणं कार्यमिति भावः। यथा केनचिदापदि न्यासीकृतानि कलत्राणि संरक्ष्य कालान्तरे बान्धवस्तस्मै प्रयच्छन्ति तद्वदोषधयोऽपि त्विषः त्विषां पत्युरर्पयन्तीत्यर्थः एतच्च तासां सूर्यास्तसमये प्रज्वलनादुदये विपर्ययाच्चोपचर्यते अत्र विशेषणसाम्यादर्कादीनामापन्नादिसाम्यप्रतीतेः समासोक्तिरलङ्कारः ॥३४॥

टिप्पनी—अत्र छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तसमासोक्त्या सह संसृष्टिः। बन्धस्य गाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥३४॥

বাঙ্গালা—অন্ধকার, নিয়তির নিয়মানুসারে সূর্য্যকে আক্রমণ করে (সূর্য্য সন্ধ্যাকালে অস্তমিত হন); কিন্তু সূর্য্য আবার ফিরিয়া আসিয়া আপন দীপ্তির সহিত সম্মিলনের কাল আকাঙ্ক্ষা করেন (আবার উদিত হইয়া আপন দীপ্তি লাভ করিবার ইচ্ছা করেন); এই দৈবতকে ঐ সকল লতা সূর্য্যের সেই দীপ্তিকে রাত্রিকালে রক্ষা করে; কিন্তু অন্যে সে দীপ্তির পরাভব করিতে পারে না ॥৩৪॥

अन्वयः—अत्र वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ताः मधुव्रतव्रातवृतैः लम्भितलोचकैः वा पुष्पेक्षणैः (उपलक्षिताः) व्रतत्यः प्रमदाः इव (लक्ष्यन्ते) ॥३५॥

टीका—वनस्पतीति। अत्राद्रौ वनस्पतयो वृक्षाः। वनस्पतिर्द्रुममात्रे विना पुष्पफलद्रुमे इति विश्वः। तेषां स्कन्धेषु प्रकाण्डेषु अंसेषु च निषण्णाः सक्ता बालप्रवाला बालपल्लवा हस्ता इव यासां तास्तथोक्ताः मधूनि व्रतयन्ति भुञ्जते इति मधुव्रता मधुपास्तेषां व्रातेन वृन्देन वृतैः; वृतैः अत एव लम्भिताः प्रापिताः लोचकाख्यालङ्काराणि कज्जलानि यैस्तैर्वा तैरिव स्थितैरित्युत्प्रेक्षा। इवार्थे वाशब्दः तद्वदुत्प्रेक्षायाश्च उक्तः। लोचको मांसपिण्डे स्यात् चितारे च कज्जल इति विश्वः। पुष्पैरीक्षणैरिव पुष्पेक्षणैरुपलक्षिताः व्रतत्यो लताः प्रमदा इव लक्ष्यन्त इति शेषः। न प्रसिद्धे क्रियाध्याहारदोष इत्याह वामनः। क्रियाध्याहारः स्यादिति ॥३५॥

विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम्।
भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः ॥३६॥

विद्वद्भिरागमपरैर्विवृतं कथञ्चित्
श्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं
गूढ़ार्थमेष निधिमन्त्रगणं बिभर्त्ति ॥३७॥

---

**टिप्पनी**—वनस्पतीति। अत्र वनस्पतीत्यादिविशेषणे लुप्तोपमा, अञ्जितलोचनैर्वा इत्यत्र उत्प्रेक्षा, पुष्पोच्चयैरित्यत्र च लुप्तोपमा, प्रमदा इवेति च श्रौतोपमा इत्येतेषामङ्गाङ्गिभावेन सङ्करः, पुनश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः। बन्धस्य गाढ़त्वात् समासबाहुल्याच्च ओजो गुणः, गौड़ी च रीतिः ॥३५॥

**বাঙ্গালা**—এই রৈবতকে বহুতর লতা দেখা যাইতেছে; সে লতাগুলি, হস্তপল্লবের ন্যায় নব পল্লবগুলিকে বৃক্ষের স্কন্ধদেশে স্থাপন করিয়াছে; আবার সে লতাগুলিতে বহুতর ফুল ফুটিয়াছে সে ফুলে আবার ভ্রমর বসিয়াছে; সুতরাং কাজল দেওয়া চোখের মত সে ফুলগুলিকে দেখা যাইতেছে। অতএব এই লতাগুলি রমণীগণের ন্যায়ই বিরাজ করিতেছে ॥৩৫॥

**अन्वयः**—कदम्बसुरभौ इह विहगाः अनुक्षणम् अनेकलयं गाः कलयन्ति। धूतनवनीपवनः अयं पवनश्च मुहुः अभ्रं भ्रमयन् उपैति ॥३६॥

**टीका**—विहगा इति। कदम्बैः सुरभिः सुगन्धिस्तस्मिन् कदम्बसुरभाविहाद्रौ विहगाः पक्षिणः अनुक्षणं प्रतिक्षणम् अनेके बहुविधा लया विच्छेदा यस्मिन् कर्मणि तद् यथा तथा वाचः शब्दानित्यर्थः। कलयन्ति। अर्जुनीनेत्रदिग्वाग्भूवाग्वारिषु गौर्मतेति विश्वः। किञ्च धूतानि कम्पितानि नवानि नीपवनानि कदम्बकाननानि येन स धूतनवनीपवनः। नीपप्रियकदम्बास्तु हलिप्रिय इत्यमरः। अयं पवनः मुहुरभ्रं मेघं भ्रमयन्नुपैति। प्रमिताक्षरावृत्तम्। प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥३६॥

**टिप्पनी**—विहगा इति। अत्र पादाद्यन्त्ययमकमलङ्कारः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३६॥

**বাঙ্গালা**—এই রৈবতকপর্ব্বত কদম্বকুসুমের সৌরভে সৌরভময় হইয়া থাকে এবং এই পর্ব্বতে পক্ষিগণ সর্ব্বদা নানাবিধ লয়ে রব করিয়া থাকে। আবার এই বায়ু নূতন কদম্ববন কাঁপাইয়া এবং মেঘ সকলকে ভ্রমণ করাইয়া উপস্থিত হইয়া থাকে ॥৩৬॥

**अन्वयः**—श्रेयान् द्विजातिः इव एषः आगमपरैः विद्वद्भिः कथञ्चित् विवृतम्, अनिश्चितधीभिः अन्यैः श्रुत्वा अपि दुर्ग्रहम्, अघानि हन्तुं दक्षम्, गूढ़ार्थं निधिमन्त्रगणं बिभर्त्ति ॥३७॥

**टीका**—विद्वद्भिरिति। एषोऽद्रिः श्रेयान् श्रेष्ठः द्विजातिर्ब्राह्मण इवागमो निधिकल्पो मन्त्रशास्त्रञ्च स एव परम्प्रधानं येषान्तैरागमपरैर्विद्वद्भिर्निधीनां मन्त्राणां च साधनविधानज्ञैः कथञ्चिद्विवृतं स्वरूपतः प्रकाशितं नास्ति निश्चिता इदमित्थमिति निश्चयात्मिका

আবর্ত্তিনঃ শুভফলপ্রদশুক্তিযুক্তাঃ সম্পন্নদেবমণয়ো ভৃতরন্ধ্রভাগাঃ।
অশ্বাঃ পৃথুর্বসুমতীমতিরোচমানাস্তূর্ণং পয়োধয় ইবোর্ম্মিভিরাপতন্তঃ ॥৪॥

---

বাঙ্গালা—সূর্য্যের কিরণযোগে আকাশের প্রান্তদেশ সকল উদ্ভাসিত হইল এবং সমস্ত দিক্ যেন সম্ভ্রান্ত লোকের দর্শনে লজ্জিত হইয়া, ছোট উটের কণ্ঠদেশের ন্যায় পিঙ্গলবর্ণ এবং আকাশব্যাপী সৈন্যগণোত্থাপিত ভূতলধূলি দ্বারা নিজের অঙ্গ সকল আবৃত করিল ॥৩॥

অন্বয়ঃ—আবর্ত্তিনঃ শুভফলপ্রদশুক্তিযুক্তাঃ সম্পন্নদেবমণয়ঃ ভৃতরন্ধ্রভাগাঃ অতিরোচমানাঃ ঊর্ম্মিভিঃ আপতন্তঃ অশ্বাঃ পয়োধয়ঃ ইব তূর্ণং বসুমতীং পপ্রুঃ ॥৪॥

টীকা—আবর্ত্তিন ইতি। আবর্ত্তিনো দশাবর্ত্তবন্তঃ। প্রশংসায়ামিতি ইনিঃ। তে চ দ্বাবুরস্যৌ শিরস্যৌ দ্বৌ দ্বৌ দ্বৌ রন্ধ্রোপরন্ধ্রয়োঃ। একো ভালে ত্রপানে চ দশাবর্ত্তা ধ্রুবাঃ স্মৃতা ইত্যুক্তা দশ ধ্রুবাখ্যা বিবক্ষিতাঃ। অন্যেষামনন্তরমেব পৃথগভিধানাত্। অন্যত্র তু জলভ্রমবন্তঃ। স্যাদাবর্ত্তোঽম্ভসাং ভ্রম ইত্যমরঃ। রোমসংস্থানে তু তত্সাম্যাদ্ব্যপদেশঃ। তদুক্তম্, আবর্ত্তসাম্যাদাবর্ত্তো রোমসংস্থানমঙ্গিনামিতি। শুভফলানি রাজ্যলাভাদীনি প্রদদতীতি শুভফলপ্রদাঃ। প্রে দাম ইতি কঃ। তাভিঃ শুক্তিভিঃ সংস্থানৈরাবর্ত্তবিশেষৈর্যুক্তাঃ। তদুক্তম্, বক্ষঃস্থাঃ শুক্তয়স্তিস্র ঊর্দ্ধ্বরোমা জয়াবহা ইতি। অন্যত্র শুভফলানি মুক্তফলানি প্রদদতি যাঃ শুক্তয়ো মুক্তাস্ফোটাঃ তাভির্যুক্তাঃ। মুক্তাস্ফোটে হয়াবর্ত্তে শুক্তিঃ শঙ্খকপালয়োরিতি যাদবঃ। সম্পন্নাঃ সমগ্রা দেবমণয়ো নিগালাবর্ত্তাঃ কৌস্তুভাদিদিব্যমণয়শ্চ যেষান্তে। আবর্ত্তী রোমজো দেবমণিস্ত্বেষ নিগালজঃ। নিগালস্তু গলোদ্দেশে ব্যক্ত ইতি বৈজয়ন্তী। ভৃতাঃ পূর্ণা রন্ধ্রভাগাঃ পার্শ্বদেশা নিম্নপ্রদেশাশ্চ যেষান্তে অতিশয়িতা রোচমানাঃ কণ্ঠাবর্ত্তা যেষান্তে অতিরোচমানাঃ। কণ্ঠজো রোচমানস্তু স্বামিসৌভাগ্যবর্দ্ধন ইতি বৈজয়ন্তী। অন্যত্র তু অত্যন্তং দীপ্যমানা ইত্যর্থঃ ঊর্ম্মিভির্গতিবিশেষৈর্বীচিভিশ্চ আপতন্তঃ আধাবন্তঃ। পঞ্চীকৃতানামশ্বানাং নমনোন্নমনাকৃতিঃ। অতিবেগসমাযুক্তা গতিরূর্ম্মির্বদাহৃতেতি বৈজয়ন্তী। ঈদৃশোঽশ্বাঃ পয়োধয় ইব তূর্ণং বসুমতীং পপ্রুঃ ছাদয়ন্তি স্ম। অপিধানতিরোধানপিধানচ্ছদনানি চেত্যমরঃ। অপিপূর্ব্বাদ্দধাতের্লুঙ্, বষ্টি ভাগুরিরল্লোপমবাপ্যোরুপসর্গয়োরিত্যকারলোপঃ। একনালাবলম্বিফলদ্বয়বদেকশব্দেনার্থদ্বয়প্রতীতেরর্থশ্লেষোঽয়ং প্রকৃতাপ্রকৃতগোচরঃ উপমাত্বঙ্গমিতি সঙ্করঃ ॥৪॥

টিপ্পনী—আবর্ত্তিন ইতি। অত্র সাহিত্যদর্পণমতে পূর্ণোপমালঙ্কারঃ। বন্ধস্য প্রগাঢ়ত্বাত্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪॥

বাঙ্গালা—সৈন্যান্তর্গত ঘোটকসমূহ, সমুদ্রসমূহের ন্যায় শীঘ্রই ভূতল আচ্ছাদন করিল; সেই ঘোটকগুলির দশটি করিয়া রোমাবর্ত্ত (ঘোড়া) ছিল, রাজাদের শুভফলদাতা বিশেষ বিশেষ রোমাবর্ত্তও ছিল, গলদেশেও দেবমণিনামে রোমাবর্ত্ত ছিল এবং তাহারা

आरत्ममक्नमवमत्य सृणिं शिताग्रमेकः पलायत जवेन कृतार्त्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभारमन्योन्यतः पथि वताबिभितामिभोष्ट्रौ ॥५॥
आयस्तमैक्षत जनश्चटुलाग्रपादं गच्छन्तमुच्चलितचामरचारुमश्वम् ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥६॥

---

পার্শ্বদেশ পরিপূর্ণ করিয়া অত্যন্ত শোভা পাইতেছিল ; আর বিশেষরূপ গতিতে ধাবিত হইতেছিল ॥৪॥

अन्वयः—एकः आरत्ममग्नं शिताग्रं सृणिम् अवमत्य कृतार्त्तनादः (सन्) पलायत ; अन्यः पुनः अस्तभारं मुहुः उदप्लवत । (यतः) पथि इभोष्ट्रौ अन्योन्यतः अबिभितां वत ॥५॥

टीका—आरत्तेति । पथि नागं इभोष्ट्रावन्योन्यतः अन्योन्यस्मादबिभितां भीतवन्तौ । ञिभी भये लङ्, मिथोऽन्यतरस्माभितौत्वम् । वतेत्यनयोरपि भीतिरिति खेदेऽतिविस्मये वा । खेदानुकम्पासन्तोषविस्मयामन्त्रणे वतेत्यमरः । तत्र लिङ्गमाह, एक इभः आरत्तः कुम्भयोरधस्तलं मग्नं प्रविष्टं शिताग्रं तीक्ष्णमुखं सृणिमङ्कुशम् । अङ्कुशोऽस्त्री सृणिर्द्वयो-रित्यमरः । अवमत्य वधयन्कृत आर्त्तनादो येन सः अतिकष्टं क्रन्दन्नित्यर्थः जवेन पलायत पलायितवान् । परापूर्वादयतेर्लङ्, उपसर्गस्यायताविति रेफस्य लत्वम् । अन्यः पुन-रुष्ट्रस्तु अस्तभारं निरस्तभारं यथा तथा मुहुरुदप्लवत उत्प्लवितवान् । प्लु गताविति लङ् । स्वभावोक्तिः ॥५॥

टिप्पनी—आरत्तेति । अत्र इभस्य पलायनम् उष्ट्रस्य उत्प्लवनञ्च प्रति चतुर्थपादगतवाक्यार्थौ हेतु-रिति वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति टीकोक्तस्वभावोक्त्या सह अङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

বাঙ্গালা—হস্তী, কুম্ভের ভিতরে প্রবিষ্ট তীক্ষ্ণধার অঙ্কুশকে অগ্রাহ্য করিয়া আর্ত্তনাদ-পূর্ব্বক বেগে পলায়ন করিল ; আর উষ্ট্র, পিঠের ভার ফেলাইয়া দিয়া, বার বার লাফাইতে লাগিল। কারণ, সেই হস্তী ও উষ্ট্র, পথে পরস্পর হইতে পরস্পর ভীত হইয়াছিল। ইহা বিশেষ আশ্চর্য্যের বিষয় বটে ॥৫॥

अन्वयः—जनः चटुलाग्रपादं गच्छन्तम् उच्चलितचामरचारुम् अश्वम् आयस्तम् ऐक्षत, पुनः नागं सलीलनिमीलिताक्षं मृदु गच्छन्तम् आयस्तम् ऐक्षत । सर्वः अनुरूपचेष्टः (सन्) प्रियः भवति खलु ॥६॥

टीका—आयस्तमिति । जनश्चटुलाग्रपादं चञ्चलपूर्वचरणं यथा तथा गच्छन्तं शीघ्रं धावन्तमित्यर्थः उच्चलितैः उल्लसितैश्चामरैश्चारुमश्वमायस्तं सप्रयत्नमाहूतं यथा तथा । यसु प्रयत्ने कर्त्तरि क्तः । क्रान्तं क्रियाविशेषणम् । ऐक्षत ईक्षितवान् । ईक्षतेर्लङ्, आ.ड्-आदीनामाडिति वृद्धिः । नागं पुनर्गजं सलीलं निमीलिते अक्षिणी यस्मिन् कर्मणि तत् । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । मृदु मन्दं गच्छन्तमायस्तमैक्षत । कथं शीघ्रमन्दयोस्तुल्यदर्शित आह, सर्वः प्राणी अनुरूपचेष्टः स्वजात्युचितव्यापारः सन् प्रीणा-तीति प्रियः प्रीतिकरो भवति खलु । इगुपधज्ञाप्रीति कर्त्तरि कः । अर्थान्तरन्यासः ॥६॥

त्रस्तः समस्तजनहासकरः करेणोस्तावत् खरः प्रखरमुल्ललयाञ्चकार।
यावच्चलासनविलोलनितम्बबिम्बविस्रस्तवस्त्रमवरोधवधूः पपात॥७॥
शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः।
भूरेणवो नभसि नद्धपयोदचक्राश्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः॥८॥

---

**टिप्पनी**—आयस्तमिति। अत्र ऐक्षतेत्येकया क्रियया अश्वनागयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता, वृत्त्यनुप्रासश्चेति टीकोक्तेन सामान्यद्वारा विशेषसमर्थनरूपेणार्थान्तरन्यासेन सह तयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥६॥

**বাঙ্গালা**—ঘোড়াগুলি সম্মুখের পা দু'খানা অনবরত চালাইয়া দৌড়াইতেছিল; তখন চামরগুলি চলিতে থাকায় ঘোড়াগুলিকে বড়ই সুন্দর দেখা যাইতেছিল; জনসাধারণ বিশেষ আগ্রহের সহিত সেগুলিকে দেখিতেছিল; আবার হাতীগুলি লীলার সহিত চোখ দুইটা বুজিয়া আস্তে আস্তে যাইতেছিল; লোক সকল সে হাতীগুলিকেও যত্নের সহিত দেখিতেছিল। কারণ, সকল প্রাণীই, নিজের অনুরূপ কার্য্য করিয়া সকলেরই প্রিয় হয়॥৬॥

**अन्वयः**—करेणोः त्रस्तः खरः समस्तजनहासकरः (सन्) तावत् प्रखरम् उल्ललयाञ्चकार; यावत् अवरोधवधूः चलासनविलोलनितम्बबिम्बविस्रस्तवस्त्रं पपात॥७॥

**टीका**—त्रस्त इति। करेणोरिभ्याः। करेणुरिभ्यां स्त्रीनेभे इत्यमरः। भीत्रार्थानां भयहेतुरित्यपादानत्वम्। त्रस्तो भीतः खरो गर्दभः समस्तजनस्य हासं करोतीति तत्-करः सन्। कृञो हेत्वित्यादिना टप्रत्ययः। तावत्तदवधि प्रखरं भृशमुल्ललयाञ्चकार उत्पपात यावत् चलात् स्थानचलितादासनात् विलोलोऽपसृतस्तस्मान्नितम्बबिम्बाद्विस्रस्तं वस्त्रं यस्मिन् कर्मणि तद्यथा तथा अवरोधवधूः पपात। स्वभावोक्तिः॥७॥

**टिप्पनी**—त्रस्त इति। अत्र छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्काराविति टीकोक्तस्वभावोक्त्या सहानयोः संसृष्टिः। माधुर्य्यं गुणः, पाञ्चाली च रीतिः॥७॥

**বাঙ্গালা**—কোন গর্দ্দভ, হস্তিনীকে দেখিয়া ভয়বশতঃ সকল লোককে হাসাইয়া, সেই পর্য্যন্তই উল্লম্ফন করিল; যে-পর্য্যন্ত তাহার পীঠের উপরের আসন সরিয়া গেল, তাহাতে আরোহিণী রমণীর নিতম্ববিম্বও সরিয়া গেল, তাহাতেই আবার তাহার নিতম্ব-দেশের কাপড়ও খুলিয়া গেল, তাহার পর সেই রমণী ভূতলে পড়িয়া গেল॥৭॥

**अन्वयः**—शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः नभसि नद्धपयोदचक्राः चक्रीवदङ्गरुहधूम्ररुचः भूरेणवः विसस्रुः॥८॥

**टीका**—शैलेति। शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तम्। यद्यपि ग्रामान्त उपशल्यं स्यादित्यमरः तथापि उपचाराददोषः। तत्र निपततां धावतां रथानां नेमयश्चक्रान्ताः। चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमानित्यमरः। तासां धाराभिः निष्पिष्टानां चूर्णितानां निष्ठुरशिलातलानां चूर्णं गर्भे येषान्ते तथोक्ताः नभसि नद्धानि पयोदचक्राणि

উদ্যত্‌কৃশানুশকলেষু খুরাভিঘাতাদ্ভূমীসমায়তশিলাফলকাচিতেষু।
পর্য্যন্তবর্ত্মসু বিচক্রমিরে মহাশ্বাঃ শৈলস্য দর্দুরপুটানিব বাদয়ন্তঃ ॥৯॥
তেজোনিরোধসমতাবহিতেন যন্ত্রা সম্যক্কশাত্রয়বিচারবতা নিযুক্তঃ।
আরট্টজশ্চটুলনিষ্ঠুরপাতমুচ্চৈশ্চিত্রং চকার পদমর্দ্ধপুলায়িতেন ॥১০॥

---

পযোদাকারমণ্ডলানি যেষাং চক্রবদ্ভ্রমণমস্যাস্তীতি চক্রীবান্ গর্দ্দভঃ। চক্রীবন্তস্তু বালেয়রাসভা গর্দ্দভাঃ খরা ইত্যমরঃ। আসন্দীবচ্চক্রীবদষ্ঠীবদিত্যাদিনা সাধুঃ। তস্যাঙ্গরুহাণি রোমাণি তদ্বৎ ধূম্ররুচঃ কৃষ্ণলোহিতবর্ণাঃ। ধূম্রধূমলৌ কৃষ্ণলোহিতাবিত্যমরঃ। ভূরেণবো বিসস্রুঃ প্রসৃতাঃ ॥৮॥

টিপ্পনী—ধৌরেতি। অত্র লুপ্তোপমাদ্বয়ং ছেকানুপ্রাসশ্চৈষাং সংসৃষ্টিঃ। সমাসবাহুল্যাৎ উগ্রবন্ধঃ রেফবর্ণবাহুল্যাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৮॥

বাঙ্গালা—রথসমূহ রৈবতকপর্বতের নিকটে ধাবিত হইল, তখন গর্দ্দভের লোমের ন্যায় ধূম্রবর্ণ ভূতলের ধূলি উঠিয়া, আকাশে মেঘমণ্ডলের ন্যায় বর্তুলাকারে ঘুরিতে লাগিল; আর রথচক্রের প্রান্তদেশের সঙ্ঘর্ষে কঠিন প্রস্তর হইতেও তাহার চূর্ণ সকল উঠিয়া সেই ধূলির সঙ্গে মিশিল ॥৮॥

অন্বয়ঃ—খুরাভিঘাতাৎ উদ্যত্‌কৃশানুশকলেষু ভূমীসমায়তশিলাফলকাচিতেষু শৈলস্য পর্য্যন্তবর্ত্মসু মহাশ্বাঃ দর্দুরপুটান্ বাদয়ন্তঃ ইব বিচক্রমিরে ॥৯॥

টীকা—উদ্যদিতি। খুরাঃ শফানি। শফং ক্লীবে খুরঃ পুমানিত্যমরঃ। তেষামভিঘাতাদুদ্যন্তঃ কৃশানুশকলাঃ স্ফুলিঙ্গা যেভ্যস্তেষু টঙ্কপ্রায়াঃ খুরা ইতি ভাবঃ, ভূম্যাং সমানি সমতলানি আয়তানি চ যানি শিলাঃ ফলকানীব শিলাফলকানি তৈরাচিতেষ্বাস্তৃতেষু শৈলস্য পর্য্যন্তবর্ত্মসু প্রান্তমার্গেষু মহাশ্বা দর্দ্দুরাখ্যাং বাদ্যবিশেষাণাং পুটান্ মুখানি বাদয়ন্ত ইব বিচক্রমিরেঃ জগ্মুঃ পাদন্যাসৈঃ তাদৃশং শব্দমকুর্ব্বন্নিত্যর্থঃ। বেঃ পাদবিহরণ ইত্যাত্মনেপদম্। দর্দ্দুরস্তোয়দে ভেকে বাদ্যভাণ্ডাদ্রিভেকয়োরিত্যমরঃ। উৎপ্রেক্ষালঙ্কারঃ ॥৯॥

টিপ্পনী—উদ্যদিতি। অত্র বৃত্ত্যনুপ্রাসশ্চ শব্দালঙ্কার ইতি টীকোক্তয়া উৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। তালব্যশকারবাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৯॥

বাঙ্গালা—রৈবতকপর্বতের প্রান্তবর্ত্তী পথে বৃহৎ বৃহৎ অশ্বগণের খুরের আঘাতে ভূতলের সমতল প্রস্তরফলক হইতে অগ্নিস্ফুলিঙ্গ সকল উত্থিত হইতেছিল এবং সেই অশ্বগণের পদের আঘাতে যে শব্দ হইতেছিল, তাহাতে বোধ হইতেছিল যে, তাহারা যেন ডুগি বাজাইতে বাজাইতে দৌড়াইতেছিল ॥৯॥

অন্বয়ঃ—তেজোনিরোধসমতাবহিতেন কশাত্রয়বিচারবতা যন্ত্রা সম্যক্ নিযুক্তঃ উচ্চৈঃ আরট্টজঃ অর্দ্ধপুলায়িতেন চটুলনিষ্ঠুরপাতং চিত্রং পদং চকার ॥১০॥

টীকা—তেজ ইতি। তেজো নাম দর্পাপরনামা সত্ত্বগুণবিকারপ্রকাশকঃ অন্তঃসার-

विशेषः। यथाह भोजराजः तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः। क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणा इति। तच्च द्विविधं सततोत्थितमन्योत्थितञ्चेति। यथाह स एव, धारासु योजितानाञ्च निसर्गात् प्रेरणं विना। अविच्छिन्नमिवाभाति तत् तेजः सततोत्थितम्। कशापादादिघातैर्यत् साध्वसात् स्फुरितं तु तदिति। अत्र तेजःशब्देन तत्कार्य्यं वेगो लक्ष्यते तथा च तेजसि वेगे निरोधे तन्निवारणे समतायां वेगसाम्ये चावहितेन वल्गाविभागकुशलेनेत्यर्थः। कशा ताड़नी। अश्वादेस्ताड़नी कशेत्यमरः। अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमेषु यथासङ्ख्यं मृदुसमनिष्ठुरत्वेन त्रिरूपं त्रितयं तस्य विचारः एतेषु निमित्तेषु अङ्गेष्वेवन्ताड्य इति विमर्शः तद्वता तज्ज्ञेन। यथाह भोजः, मृदुपर्णेन घातेन दण्डकालेषु ताड़येत्। तीक्ष्णं मध्यं पुनर्द्वाभ्याञ्जघन्यन्निष्ठुरैस्त्रिभिः। उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते। वड़वालोकनोत्सुक्ये बहुगर्वितकम्पिते। सन्त्रासे च दुरुत्थाने विमार्गगमने भये। शिक्षात्यागस्य समये सञ्जाते चित्तविभ्रमे। दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि। ग्रीवायाम्भीतमाहन्यात् वक्षस्येव च वाजिनम्। विभ्रान्तचित्तमधरे त्यक्तशिक्षञ्च ताड़येत्। प्रकम्पितं स्कन्धवालौ वड़वालोकिनं तथा। उपवेशे च निद्रायां कटिदेशे च ताड़येत्। दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा। जघने स्खलितं हन्याच्चलमार्गे दुरुत्थितम्। यः क्रुद्धप्रकृतिर्वाजी तं सर्वत्रैव ताड़येदिति। एवम्भूतेन यन्त्रा सादिना सम्यग् यथाशास्त्रं नियुक्त ईरितः उच्चैरुन्नतः आरट्टोऽश्वयोनिदेशविशेषः तज्जोऽश्व आरट्टजः। विशेषणमात्रप्रयोगे सागराम्बरादिवत्तावतैव विशेष्यप्रतीतेरित्याह वामनः विशेषणप्रयोगो विशेष्यप्रतिपत्ताविति। चटुलशपलो निष्ठुरः परुषश्च पातः प्रक्षेपो यस्मिन् कर्मणि तद् यथा तथा। अर्द्धपुलायितेन मण्डलगतिविशेषेण चित्रमङ्गं तस्यदम्यदक्रमञ्चकार। शताद्धार्द्धक्रमादूर्द्ध्वं मण्डलायितवल्गितैः। उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति लक्षणात्। पुला नाम प्लुताद्यनेकापरनामा हयानां गतिविशेषः। तदुक्तं हयलीलावत्यां, प्लुतां प्रवल्गितामाहुर्या धारा पुलनामिका। पुनरेनां वल्गोपान्तां पुलामित्याह दैशिकः। तल्लक्षणञ्च तत्रैवोक्तम्। क्षिपति समविशेषानुत्क्षिपत्यग्रपादान् प्रसरति पुरतोऽश्वः साथ धारा पुलाख्या। विलसति समपादोत्क्षेपणाकुञ्चनानां करणमिह गतिज्ञाः प्राहुरन्ये पुलाख्यामिति पार्ष्णिप्रधानं प्रविधाय रागवल्गां श्लथीकृत्य वहेत् पुलाख्यामित्यादि। पुलाख्यया अयितं गतिः पुलायितम्। अय गतौ भावे क्तः, तच्च वाहेत्याद्युक्तरीत्या अनुष्ठितमर्द्धपुलायितमित्यलमतिविस्तरेण ॥१०॥

**टिप्पनी**—तेज इति। अत्र बन्धस्य गाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥१०॥

**বাঙ্গালা**—কোন্ সময়ে চাবুক দিয়া গুরুতর আঘাত করিতে হয়, কোন্ সময়ে বা মধ্যম রকমের আঘাত করিতে হয় এবং কোন্ সময়েই বা অল্প আঘাত করিতে হয়; সারথি তাহা বেশ জানিত এবং সে সারথি ঘোড়াকে বেগে চালাইতে, তাহার বেগ থামা-

নীহারজালমলিনঃ পুনরুক্তসান্দ্রাঃ কুর্বন্ বধূজনবিলোচনপক্ষ্মমালাঃ।
ক্ষুণ্ণঃ ক্ষণং যদুবলৈর্দিবমাতিতাংসুঃ পাংশুর্দিশাং মুখমতুত্থয়দুত্থিতোঽদ্রেঃ ॥১১॥
উচ্ছিদ্য বিদ্বিষ ইব প্রসভং মৃগেন্দ্রানিন্দ্রানুজানুচরভূপতয়োঽধ্যবাত্সুঃ।
বন্যেভমস্তকনিখাতনখাগ্রমুক্তমুক্তাফলপ্রকরভাঞ্জি গুহাগৃহাণি ॥১২॥

---

ইতে, কিম্বা তাহাকে সমান ভাবে চালাইতে বিশেষ সতর্ক ছিল; এহেন সারথি আরট্ট-দেশীয় উন্নত ঘোড়াকে যেখানে যেমন ভাব খাটে, সেখানে তেমন ভাবে চালাইতে লাগিল; তখন সেই ঘোড়া মণ্ডলাকার গতিবিশেষে আশ্চর্য্য রূপে পদক্ষেপ করিতে লাগিল; তখন তাহার পাগুলি কখনও চঞ্চলভাবে, কখনও বা নিষ্ঠুর ভাবে পড়িতে থাকিল ॥১০॥

**অন্বয়ঃ**—নীহারজালমলিনঃ বধূজনবিলোচনপক্ষ্মমালাঃ পুনরুক্তসান্দ্রাঃ কুর্বন্ ক্ষণং যদুবলৈঃ ক্ষুণ্ণঃ অদ্রেঃ উত্থিতঃ দিবম্ আতিতাংসুঃ (ইব স্থিতঃ) পাংশুঃ দিশাং মুখম্ অতুত্থয়ত্ ॥১১॥

**টীকা**—নীহারেতি। নীহারজালবৎ তুহিনব্যূহবন্মলিনঃ বধূজনবিলোচনানাং পক্ষ্ম-মালাঃ পুনরুক্তসান্দ্রাঃ দ্বিগুণসান্দ্রাঃ কুর্বন্ স্বভাবতোঽপি সান্দ্রত্বাদিতি ভাবঃ। ময়ূরব্যংস-কাদিত্বাদিষ্টবহুবৎ সমাসঃ। ক্ষণং যদূনাং বলৈঃ সৈন্যৈঃ ক্ষুণ্ণঃ অদ্রেরুত্থিতঃ দিবমা-কাশমাতনিতুমবতনিতুমিচ্ছুঃ আতিতাংসুঃ। তনোতেঃ সনন্তাদুপ্রত্যয়ঃ, সনীবন্তর্দ্ধেত্যাদিনা তনিপতিদরিদ্রাণামুপসংখ্যানাদ্বৈকল্পিক ইডভাবঃ, তনোতের্বিভাষেতি দীর্ঘঃ। পাংশুর্দিশাং মুখমতুত্থয়দাচ্ছাদয়তি স্ম। তুত্থ আচ্ছাদনে ইতি ধাতোশ্চৌরাদিকাল্লঙ্ ॥১১॥

**টিপ্পনী**—নীহারেতি। অত্র নীহারেত্যাদৌ লুপ্তোপমা, আতিতাংসুরিত্যত্র প্রতীয়মানোৎপ্রেক্ষা, দিশাং মুখস্য আবরণাসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাৎ অতিশয়োক্তিঃ, বৃত্ত্যনুপ্রাসঃ, ছেকানুপ্রাসশ্চ, ইত্যেতেষাং সংসৃষ্টিঃ। গুণরীতী পূর্ববৎ ॥১১॥

**বাঙ্গালা**—যাদবসৈন্যেরা ক্ষণকালের জন্য (প্রস্তর) বিদারণ করায় পর্বত হইতে যে ধূলিজাল উঠিয়াছিল, সে গুলি (রাত্রিকালের) হিমবিন্দুসমূহের ন্যায় মলিনবর্ণ ছিল এবং রমণীগণের নয়নের লোম গুলিকে দ্বিগুণ ঘন করিতেছিল, আর আকাশকে আবরণ করি-বার ইচ্ছা করিয়াই যেন সকল দিঙ্মণ্ডল আবরণ করিয়াছিল ॥১১॥

**অন্বয়ঃ**—ইন্দ্রানুজানুচরভূপতয়ঃ মৃগেন্দ্রান্ বিদ্বিষঃ ইব প্রসভম্ উচ্ছিদ্য বন্যেভমস্তকনিখাতনখাগ্র-মুক্তমুক্তাফলপ্রকরভাঞ্জি গুহাগৃহাণি অধ্যবাত্সুঃ ॥১২॥

**টীকা**—উচ্ছিদ্যেতি। ইন্দ্রানুজস্যোপেন্দ্রস্য হরেরনুচরা অনুজীবিনো ভূপতয়ো মৃগেন্দ্রান্ সিংহান্ বিদ্বিষঃ শত্রূনিব প্রসভং প্রসহ্যোচ্ছিদ্য হত্বা বন্যেভানাং মস্তকেষু নিখাতৈর্নিমগ্নৈ-র্নখাগ্রৈঃ সিংহনখমুখৈর্মুক্তান্ বিকীর্ণান্ মুক্তাফলপ্রকরান্ ভজন্তীতি তথোক্তানি গুহা গৃহাণীত্যুপমিতসমাসঃ। বিদ্বিষ ইবেতি লিঙ্গাৎ অধ্যবাত্সুরধ্যুষিতবন্তঃ। উপান্ব-ধ্যাঙ্বস ইতি কর্মত্বং, বস নিবাসে লুঙি সিচি বৃদ্ধিঃ, সস্যার্দ্ধধাতুক ইতি তত্বম্ ॥১২॥

**টিপ্পনী**—উচ্ছিদ্যেতি। অত্র বিদ্বিষ ইবেতি শ্রৌতোপমা, গুহাগৃহাণীতি চ লুপ্তোপমা ইত্যনয়োঃ পরং

विभ्राणया बहलयावकपङ्कपिङ्गपिच्छावचूड़मनुमाधवधाम जग्मुः।
चञ्च्वग्रदष्टचटुलाहिपताकयान्ये स्वावासभागमुरगाशनकेतुयष्ट्या ॥१३॥
छायामपास्य महतीमपि वर्त्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्वो हि नोपगतमप्यपचीयमानं वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥१४॥

---

स्वरस.पेचत्वादङ्गाङ्गिभावेन सङ्करः, छेकानुप्रासश्चेति पुनः संसृष्टिः। बन्धस्य गाढ़त्वात् समासबाहुल्याच्च ओजो गुणः, गौड़ी च रीतिः ॥१२॥

বাঙ্গালা—শ্রীকৃষ্ণের অনুচর রাজারা বলপূর্ব্বক শত্রুদিগের ন্যায় সিংহদিগকে বিনাশ করিয়া, গৃহতুল্য গুহার ভিতরে বাস করিলেন; সেই সিংহগণ হস্তিগণের মস্তকের ভিতরে নখ প্রবেশ করাইয়া দিয়া যে সকল মুক্তা বাহির করিয়াছিল, সেই সকল মুক্তা ঐ গুহার ভিতরে রহিয়াছিল ॥১২॥

अन्वयः—अन्ये बहलयावकपङ्कपिङ्गपिच्छावचूड़ं विभ्राणया चञ्च्वग्रदष्टचटुलाहिपताकया उरगाशनकेतुयष्ट्या अनुमाधवधाम स्वावासभागं जग्मुः ॥१३॥

टीका—बिभ्राणयेति। अन्ये भूपतयः याव एव यावकोऽलक्तकः। राक्षा लाक्षा जतु क्लीवे यावोऽलक्तो द्रुमामय इत्यमरः। यावादिभ्यः कन्निति स्वार्थे कन्। बहलेन यावकपङ्केन पिङ्गं पिङ्गलं पिच्छं बर्हमेवावचूड़म् अधोलम्बि कलापम्बिभ्राणया। अस्त्री चूड़ावचूड़ाख्याव र्द्धाधोमुखचूड़काविति ध्वजाङ्गेषु हलायुधः। चञ्चूस्त्रोटिः। चञ्चूस्त्रोटि उभे स्त्रियामित्यमरः। तस्या अग्रेण दष्टा चटुला अहिरेव पताका यस्यास्तया उरगाशनो गरुड़स्तस्य केतुयष्टिस्तदधिष्ठितो ध्वजदण्ड इत्यर्थः तया अभिज्ञानेनेति भावः अनुमाधवधाम हरिशिविरमनु स्वावासभागं स्वनिवेशप्रदेशञ्जग्मुः प्रापुः दूरादेव गरुड़ध्वजेन माधवधाम ज्ञात्वा तत्सन्निहितान्नियतदिक्कान् स्वावासान्निश्चित्य जग्मुरित्यर्थः ॥१३॥

टिप्पनी—बिभ्राणयेति। अत्र प्रथमे पादे लुप्ता पमा द्वितीये वृत्त्यनुप्रासः तृतीये च निरङ्गं केवलरूपकम् इत्येतेषां संसृष्टिः। समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥१३॥

বাঙ্গালা—গরুড় শ্রীকৃষ্ণের ধ্বজের উপরে থাকিয়া ঠোঁট দিয়া একটা সাপকে ঠোক্‌রাইতে ছিল; তাহাতে সেই সাপটাই পতাকারূপ হইয়া কাঁপিতেছিল; আর গাঢ় আল্‌তার মত পিঙ্গলবর্ণ একটা ময়ূরের পুচ্ছ সেই ধ্বজের উপর ঝুলিতেছিল; তাহা দেখিয়া অন্যান্য রাজারা শ্রীকৃষ্ণের শিবির লক্ষ্য করিয়া, আপনাদের বাসভবনে গিয়াছিলেন ॥১৩॥

अन्वयः—जनताः तरूणां वर्त्तमानां महतीम् अपि छायाम् अपास्य आगामिनीं छायां जगृहिरे। हि सर्वः उपगतम् अपि अपचीयमानम् आश्रयं न अभ्युपैति; (किन्तु) अनागतम् अपि वर्द्धिष्णुम् आश्रयम् अभ्युपैति ॥१४॥

टीका—छायामिति। जनानां समूहाः जनताः। ग्रामजनबन्धुसहायेभ्यस्तल्। तरूणां

अग्रे गतेन वसतिं परिगृह्य रम्यामापात्य सैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुनाजुहुविरे मुहुरात्मवर्ग्याः ॥१५॥
सिक्ता इवामृतरसेन मुहुर्जनानां क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥१६॥

वर्त्तमानां विद्यमानां महतीमपि छायामपास्य त्यक्त्वा आगामिनीं छायां जगृहिरे वर्द्धिष्णु-त्वादिति भावः। न च प्राप्तत्यागो दोषाय त्यागस्वीकारयोः चयहानिप्रयुक्तत्वादिति भावः। कर्म-स्थं इति। तथाहि, सर्वो जनः उपगतं प्राप्तमप्यपचीयमानं चीयमाणम्। कर्म-कर्त्तरि प्रयोगः। आश्रयन्नोपैति न गृह्णाति किं त्वनागतमप्राप्तमपि वर्द्धिष्णुं वर्द्धनशीलम् आश्रयमुपैति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥१४॥

**टिप्पनी**—छायामिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

**বাঙ্গালা**—বৃক্ষের বর্ত্তমান ছায়া বিশাল হইলেও ক্রমে তাহা ক্ষয় পাইতেছিল বলিয়া, লোকে সে ছায়া পরিত্যাগ করিয়া, ভাবী বর্দ্ধিষ্ণু ছায়া গ্রহণ করিয়াছিল। কেন না, উপ-স্থিত আশ্রয় ক্ষয় পাইতে থাকিলে, সকল লোকেই তাহা অবলম্বন করে না; কিন্তু ভাবী আশ্রয় বৃদ্ধিশীল হইলে, তাহাই অবলম্বন করিয়া থাকে ॥১৪॥

**अन्वयः**—अग्रे गतेन रम्यां वसतिं परिगृह्य आपात्यसैनिकनिराकरणाकुलेन (केनचित् जनेन) उद्बाहुना (सता) अन्यतः यान्तः आत्मवर्ग्याः प्लुतकृतस्वरं दूरात् आशु मुहुः आजुहुविरे ॥१५॥

**टीका**—अग्र इति। अग्रे गतेन पुरः प्रयातेन रम्यां वसतिं निवासम्। वहिवस्य-र्त्तिभ्यश्चेति वसेरौणादिकोऽतिप्रत्ययः। परिगृह्यापतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तः। भव्यगेयेत्यादिना कर्त्तरि यदन्तो निपातः। तेषां सैनिकानां निराकरणे निरसने आकुलेन व्यग्रेण उद्बाहुना उद्यतहस्तेन केनचिदिति शेषः अन्यतो यान्तो गच्छन्तः आत्मवर्ग्याः स्वयूथ्याः प्लुतन्त्रिमात्रिकं यथा तथा कृतः स्वरो नाद आह्वानं यस्मिन् कर्मणि तद्यथा तथा। दूराद्धूते चेति दूरादाह्वाने प्लुतविधानादिति भावः। आशु दूरान्मुहुराजुहुविरे आहूताः। ह्वयतेराङ्पूर्वात् कर्मणि लिट्, अभ्यस्तस्य चेति सम्प्रसारणे द्विर्वचनमुवङादेशश्च ॥१५॥

**टिप्पनी**—अग्र इति। अत्र स्वभावोक्तिरलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

**বাঙ্গালা**—কোন ব্যক্তি, আগে যাইয়া সুন্দর একটি বাসস্থান অধিকার করিয়া লইল এবং সেখানে যে সকল সৈন্য আসিতেছিল, তাহাদিগকে বারণ করিতে করিতে ব্যগ্র হইয়া পড়িল; এদিকে তাহার আত্মীয়গণ অন্য দিকে যাইতেছিল; তাহা দেখিয়া সেই ব্যক্তি, হাত তুলিয়া উচ্চৈঃস্বরে দূর হইতে তাহাদিগকে তাড়াতাড়ি বার বার ডাকিতে লাগিল ॥১৫॥

**अन्वयः**—अमृतरसेन सिक्ताः इव, जनानां मुहुः क्लान्तिच्छिदः शाखावसक्तवसनाभरणाभिरामाः वन-वनस्पतयः विचित्रफलैः कल्पद्रुमैः सह तदानीं विरेजुः ॥१६॥

যানাজ্জনঃ পরিজনৈরবতার্য্যমাণা রাজ্ঞীর্নরাপনয়নাকুলসৌবিদল্লাঃ ।
স্রস্তাবগুণ্ঠনপটাঃ ক্ষণলক্ষ্যমাণবক্ত্রশ্রিয়ঃ সভয়কৌতুকমৈক্ষতে স্ম ॥১৭॥

---

টীকা—সিক্তা ইতি। অমৃতরসেন সিক্তা ইবেত্যুৎপ্রেক্ষা মুহুর্জনানাং ক্লান্তিচ্ছিদঃ শ্রম-হরাঃ কল্পদ্রুমবদমৃতসেকাভাবাদপি তদ্বদাহ্লাদকা ইতি ভাবঃ, শাখাস্ববসক্তৈর্ল্লম্বনৈর্বসনৈ-রাভরণৈশ্চাভিরামা একত্র সংস্থাপিতৈরন্যত্র স্বপ্রসূতৈরিতি ভাবঃ, বনবনস্পতয়ো বনবৃক্ষাঃ বিচিত্রফলৈর্বস্ত্রাভরণাদ্যনেকফলযুক্তৈঃ কল্পদ্রুমৈস্তুল্যৈরিতি শেষঃ সহ তদানীং বিরেজুঃ তদ্বদ্বিরেজুরিত্যর্থঃ। সহেতি সাদৃশ্যে। সহ সাকল্যসাদৃশ্যযৌগপদ্যসমৃদ্ধিষ্বিতি বিশ্বঃ। তথা চোপমালঙ্কারঃ ॥১৬॥

টিপ্পনী—সিক্তা ইতি। অত্র অমৃতরসেন সিক্তা ইবেতি ক্রিয়োৎপ্রেক্ষা টীকোক্তোপমযা সহ সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

বাঙ্গালা—সেই সময়ে কতকগুলি বন্য বৃক্ষ, ছায়া দ্বারা বার বার লোকের পরিশ্রম নাশ করিতেছিল এবং সে গুলি এমনই স্নিগ্ধ ছিল যে বোধ হইতেছিল যেন সে গুলি অমৃত-রস দ্বারা চিরকাল সিক্ত হইয়া আসিতেছে ; আবার শাখায় বসন ও ভূষণ সংস্থাপিত করায় সে বৃক্ষগুলি বড়ই সুন্দর হইয়াছিল ; তাই সেই বৃক্ষগুলি, নানাপ্রকার ফলপ্রসবী কল্প-বৃক্ষের তুল্যই শোভা পাইতেছিল ॥১৬॥

অন্বয়ঃ—জনঃ পরিজনৈঃ যানাৎ অবতার্য্যমাণাঃ নরাপনয়নাকুলসৌবিদল্লাঃ স্রস্তাবগুণ্ঠনপটাঃ ক্ষণলক্ষ্যমাণবক্ত্রশ্রিয়ঃ রাজ্ঞীঃ সভয়কৌতুকম্ ঈক্ষতে স্ম ॥১৭॥

টীকা—যানাদিতি। জনঃ পরিজনৈর্যানাদ্বাহনাদবতার্য্যমাণা অবরোহ্যমাণাঃ। তৃতীয়ান্তাৎ কর্মণি লটঃ শানজাদেশঃ, বহুঃ পীঽন্যতরস্যামিতি পক্ষঃ। নরাণামালো-কিজনানামপনয়নেঽপসারণে আকুলাঃ সৌবিদল্লাঃ কঞ্চুকিনো যাসান্তাঃ। সৌবিদল্লাঃ কঞ্চুকিন ইত্যমরঃ। স্রস্তা অবরোপণসংক্ষোভাদপসৃতা অবগুণ্ঠনপটা যাসান্তাঃ অতএব ক্ষণং লক্ষ্যমাণাঃ বক্ত্রশ্রিয়ো যাসান্তাঃ তথোক্তাঃ রাজ্ঞীঃ রাজস্ত্রীঃ। পুংযোগাদাখ্যায়ামিতি ঙীপ্। সভয়কৌতুকমৈক্ষত স্ম। তাড়নাদ্ভয়ম, কামাৎ কৌতুকম্ ॥১৭॥

টিপ্পনী—যানাদিতি। অত্র স্বভাবোক্তিরলঙ্কারঃ, ক্ষণলক্ষ্যমাণবক্ত্রশ্রীত্বং প্রতি স্রস্তাবগুণ্ঠনপটত্ব-স্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, ছেকানুপ্রাসশ্চেত্যেতেষাং সংসৃষ্টিঃ। দ্রষ্টৃজনানুরাগস্য ভার্য্যান্তর-গতত্বাৎ সম্ভোগশৃঙ্গাররসাভাসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৭॥

বাঙ্গালা—পরিজনেরা বাহন হইতে রাজরমণীদিগকে নামাইয়া দিতেছিল ; তখন তাঁহাদের কঞ্চুকীরা ( শিক্ষক বৃদ্ধ ব্রাহ্মণেরা ) অন্যান্য লোকদিগকে সরাইয়া দিতে ব্যস্ত ছিল ; নামিবার সময়ের সঞ্চালনে সেই রাজরমণীদিগের ঘোমটার কাপড় পড়িয়া গিয়াছিল ; তাই ক্ষণকাল তাঁহাদের মুখশোভা দেখা যাইতেছিল , এহেন রাজরমণীদিগকে লোকে ভয় ও কৌতুকের সহিত দেখিতেছিল ॥১৭॥

कण्ठावसक्तमृदुबाहुलतास्तुरङ्गा-
द्राजावरोधनवधूरवतारयन्तः ।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलीः शुचितया न चुचुम्बुरासाम् ॥१८॥

दृष्ट्वेव निर्जितकलापभरामधस्तात्
व्याकीर्णमाल्यकबरां कबरीं तरुण्याः ।
प्रादुद्रवत् सपदि चन्द्रकवान् द्रुमाग्रात्
संघर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥१९॥

---

अन्वयः—तुरङ्गात् राजावरोधनवधूः अवतारयन्तः अधिकृताः कण्ठावसक्तमृदुबाहुलताः (सन्तः) स्फुटम् आलिङ्गनानि आपुः एव, (किन्तु) शुचितया आसां गण्डस्थलीः न चुचुम्बुः ॥१८॥

टीका—कण्ठेति । तुरङ्गाद्राजावरोधनवधूः राज्ञामवरोधस्त्रीरवतारयन्तोऽवरोप-यन्तोऽधिकृताः अन्तःपुराधिकारिणः कण्ठेषु स्कन्धेष्ववसक्ता मृदवो बाहुलता स्त्रीया येषान्ते तथोक्ताः सन्तः स्फुटं व्यक्तमालिङ्गनान्यापुरेव अन्यथा दुरवरोहत्वाद् व्याजाच्चेति भावः । आसां वधूनां गण्डस्थलीः शुचितया स्वयं शुद्धवर्तित्वाद्गण्डानां नैर्मल्याच्च न चुचुम्बुः यावत्कर्त्तव्यकारिणः शुद्धात्मानो नातिचरन्तीति भावः, अन्यत्र ते पापाचाराः पापलिङ्गानि प्रकाशयन्तीति भावः ॥१८॥

टिप्पनी—कण्ठेति । अत्रापि आलिङ्गनप्राप्तिं प्रति कण्ठावसक्तमृदुबाहुलतपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । पूर्ववदेव सम्भोगशृङ्गाररसाभासः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—অন্তঃপুরের ভৃত্যেরা রাজরমণীদিগকে অশ্ব হইতে নামাইবার সময়ে, তাঁহারা আপন আপন কোমল বাহুলতা দ্বারা ভৃত্যদিগের গলদেশ জড়াইয়া ধরিয়াছিলেন ; সুতরাং সেই ভৃত্যেরা স্পষ্টতই তাঁহাদের আলিঙ্গনসুখ লাভ করিয়াছিল , কিন্তু আপনাদের পবিত্রতাবশতঃ তাঁহাদের গণ্ডস্থলে চুম্বন করিয়াছিল না ॥১৮॥

अन्वयः—चन्द्रकवान् अधस्तात् निर्जितकलापभरां व्याकीर्णमाल्यकबरां तरुण्याः कबरीं दृष्ट्वा इव सपदि द्रुमाग्रात् प्रादुद्रवत् । संघर्षिणा गुणाभ्यधिकैः सह दुरासम् ॥१९॥

टीका—दृष्ट्वेति । अधस्तात्तरुतले निर्जितः कलापभरो बर्हभारो यया ताम् । कलापो भूषणे बर्हे इत्यमरः । व्याकीर्णेन विच्छिन्नेन माल्येन कबरां शारम् । कबरः कर्बुरः शार इति हलायुधः । तरुण्याः कबरीं केशपाशम् । कबरी केशपाशोऽस्त्रीत्यमरः । जानपदेत्यादिना ङीप् । दृष्ट्वेवेत्युत्प्रेक्षा । सपदि चन्द्रका अस्य सन्तीति चन्द्रकवान् मयूरः द्रुमाग्रात् प्रादुद्रवत् प्रद्रुतवान् । द्रुगतौ लुङि णिश्रीत्यादिना चङादेशः, अचि श्नुधात्वित्यादिना उवङादेशः । तथाहि, संघर्षिणा मत्सरिणा कर्त्रा गुणाभ्यधिकैर्गुणोत्-

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः।
भूभर्तुरायतनिरन्तरसन्निविष्टाः पादा इवाभिबभुरावलयो रथानाम् ॥२०॥
छायाविधायिभिरनुज्झितभूतिशोभैरुच्छ्रायिभिर्बहलपाटलधातुरागैः।
दूष्यैरिव क्षितिभृतां द्विरदैरुदार-तारावलीविरचनैर्व्यरुचन्निवासाः ॥२१॥

---

क्लिष्टः सह दुरासमासितुमशक्यमित्यर्थः। आसेरकर्मकादीषद्दुरित्यादिना खल् प्रत्ययः, तयोरेव कृत्यक्तखलर्थाः इति नियमात्। अत्र भयहेतुकस्य पलायनस्य कबरीदर्शनहेतुकत्वमुत्प्रेक्षा तत्समर्थनासमर्थोऽयम् अर्थान्तरन्यासः इत्यनयोरङ्गाङ्गिभावेन सङ्करः। न हि जितैर्जेतुरग्रे स्थातुमुचितमिति भावः ॥१९॥

**टिप्पनी**—दृष्टेति। अत्र छेकानुप्रासस्येति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। तथा उत्प्रेक्षि-तार्थस्य समर्थनादनुचितार्थत्वदोषः, "दिवाकरात् रक्षति यो गुहासु" इत्यादिदर्पणोदाहरणवत्। तत्समाधा-नाय उत्तरार्द्धमेवं पठनीयम् 'मत्वा गुणाधिकजनैः सहवासदैन्यं प्रादुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्' प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—কোন যুবতির খোপাটী, ফুলের মালা দিয়া জড়ান থাকায় তাহা বড়ই সুন্দর দেখাইতেছিল; সুতরাং সে খোপাটী, (সৌন্দর্য্যে) নিজের পুচ্ছদেশকে জয় করিয়াছিল; বৃক্ষের তলে যুবতির এহেন খোপা দেখিয়াই যেন ময়ূর, সেই বৃক্ষের উপর হইতে তাড়াতাড়ি উড়িয়া গেল। কারণ, আপন অপেক্ষা অধিক গুণশালী ব্যক্তির সহিত একত্র বাস করা মৎসরী ব্যক্তির পক্ষে দুষ্কর ॥১৯॥

**अन्वयः**—रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशाः वंशध्वजैः जलदसंहतिम् उल्लिखन्त्यः आयतनिरन्तर-सन्निविष्टाः रथानाम् आवलयः भूभर्तुः पादा इव अभिबभुः ॥२०॥

**टीका**—रोचिष्णुरिति। रोचिष्णवो रोचनशीलाः। अलङ्कृञित्यादिना इष्णुच् प्रत्ययः। तेषां काञ्चनचयानां कनकचयानामंशुभिः पिशङ्गिताः पिशङ्गीकृताः आशा याभिस्ताः वंशानां तत्तद्राजकुलानां ध्वजैः प्रतिनियतकुलानामङ्कुशादिचिह्नितकेतुभिः अन्यत्र वंशैर-वेणवस्तैरेव ध्वजैर्जलदसंहतिं मेघसङ्घातमुल्लिखन्त्यः आयतन्दीर्घं निरन्तरन्नीरन्ध्रञ्च सन्नि-विष्टाः संस्थिताः रथानामावलयः भूभर्तुरैवतकाद्रेः पादाः प्रत्यन्तपर्वता इवाभिबभुः भान्ति स्म। आशापिशङ्गीकरणादिक्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा ॥२०॥

**टिप्पनी**—रोचिष्णुकाञ्चनेति। अत्र बन्धस्य गाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥२०॥

**বাঙ্গালা**—রথশ্রেণী, বহুস্থান ব্যাপিয়া ঘন ঘন ভাবে সংস্থাপিত ছিল; তাহার ধ্বজদণ্ড মেঘমালাকে স্পর্শ করিতেছিল এবং দীপ্যমান স্বর্ণরাশির কিরণে সকল দিক্ পিঙ্গলবর্ণ করিয়াছিল; সুতরাং সেই রথশ্রেণী যেন রৈবতকপর্বতের নিকটবর্ত্তী ক্ষুদ্র ক্ষুদ্র পর্ব্বতের ন্যায় শোভা পাইতেছিল ॥২০॥

उत्क्षिप्तकाण्डपटकान्तरलीयमानमन्दानिलप्रशमितश्रमघर्मतोयैः ।
दूर्वाप्रतानसहजास्तरणेषु भेजे निद्रासुखं वसनसद्मसु राजदारैः ॥२२॥

---

अन्वयः—क्षितिभृतां निवासाः छायाविधायिभिः अनुज्झितभूतिशोभैः उच्छ्रायिभिः बहलपाटलधातुरागैः उदारतारावलिविरचनैः द्विरदैः दूष्यैः इव व्यरुचन् ॥२१॥

टीका—छायेति । क्षितिभृतां राज्ञां निवसन्त्यत्रेति निवासाः निवासदेशाश्छायाविधायिभिः कान्तिकरैरनातपसम्पादकैश्च । छाया त्वनातपे कान्ताविति विश्वः । अनुज्झिता भूतीनां भस्मरचनानां सम्पदां च शोभा यैस्तैः । भूतिर्भस्मनि सम्पदीत्यमरः । उच्छ्रायिभिरुन्नतैर्बहलः सान्द्रः पाटल आरक्तधातुरागो गैरिकादिरञ्जनं येषान्तैः उदारा तारावलीनां शुद्धमुक्तावलीनां विरचना येषु तैः मुक्तासारभूषितैरित्यर्थः । तारा मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके इति विश्वः । दूष्यपक्षे तारावली रज्जुसन्ततिरिति केचित् द्विरदैर्दूष्यैः पटमण्डपैरिव । दूष्यं वस्त्रे च तद्गृहे इति विश्वः । व्यरुचन् शोभन्ते स्म । रुच दीप्तौ द्युद्भ्यो लुङीति परस्मैपदं पुषादीत्यादिना च्लेरङादेशः । अत्र द्विरदानां दूष्याणाञ्च प्रकृतत्वान्नोपमा नापि श्लेषभेदः विशेष्यस्य विशेषणानां च केषाञ्चिदश्लिष्टत्वात् तस्मात् केवलप्रकृतास्पदा तुल्ययोगितेयम् इवशब्दस्तु साधर्म्यमात्रानुवादक इति सङ्क्षेपः ॥२१॥

टिप्पनी—छायेति । अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः शब्दालङ्काराविति टीकोक्ततुल्ययोगितया सह संसृष्टिः । बन्धस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥२१॥

বাঙ্গালা—রাজগণের বাসভবন গুলি, হস্তিসমূহদ্বারাও যেমন শোভা পাইতেছিল, পটমণ্ডপসমূহ দ্বারাও তেমনই শোভা পাইতেছিল। কেন না, হস্তিসমূহ শোভা জন্মাইতেছিল; পটমণ্ডপসমূহও ছায়া জন্মাইতেছিল; হস্তিসমূহ ভস্মের তিলক পরিত্যাগ করিয়াছিল না, পটমণ্ডপসমূহও সমৃদ্ধি পরিত্যাগ করিয়াছিল না; হস্তিগণ উন্নত ছিল, পটমণ্ডপসমূহও উন্নত ছিল; হস্তী ও পটমণ্ডপ উভয়ই, গাঢ় ও রক্তবর্ণ ধাতুদ্রবে রঞ্জিত ছিল এবং হস্তিগণকে মুক্তার হার দিয়া শোভিত করা হইয়াছিল; আর পটমণ্ডপগুলিতেও মুক্তার ঝালর দেওয়া ছিল ॥২১॥

अन्वयः—उत्क्षिप्तकाण्डपटकान्तरलीयमानमन्दानिलप्रशमितश्रमघर्मतोयैः राजदारैः दूर्वाप्रतानसहजास्तरणेषु वसनसद्मसु निद्रासुखं भेजे ॥२२॥

टीका—उत्क्षिप्तेति । उत्क्षिप्त उद्धृतो यः काण्डपट एव काण्डपटकः दूष्याधोलम्बिवायुसञ्चारार्थः पटः । अपटः काण्डपटी स्यादिति वैजयन्ती । तस्यान्तरेऽवकाशे लीयमानेन मन्दानिलेन प्रशमितं श्रमेणाध्वखेदेन यत् घर्मतोयं स्वेदाम्बु तद्येषां तैः राजदारैः राजावरोधैः दूर्वाणां प्रतानं प्रचय एव सहजमकृत्रिममास्तरणं तल्पं येषु तेषु वसनसद्मसु पटमण्डपेषु निद्रासुखम्भेजे ॥२२॥

टिप्पनी—उत्क्षिप्तेति । अत्र निद्रासुखभजनं प्रति प्रथमार्द्धैकपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥२२॥

প্রস্বেদবারিসবিশেষবিষক্তমঙ্গে কূর্পাসকং ক্ষতনখক্ষতমুৎক্ষিপন্তী।
আবির্ভবদ্ঘনপয়োধরবাহুমূলা শাতোদরী যুবদৃশাং ক্ষণমুৎসবোঽভূৎ ॥২৩॥
যাবৎ স এব সময়ঃ সমমেব তাবদব্যাকুলাঃ পটময়ান্যভিতো বিতত্য।
পর্য্যাপতৎক্রয়িকলোকমগণ্যপণ্যপূর্ণাপণা বিপণিনো বিপণীর্বিভেজুঃ ॥২৪॥

---

বাঙ্গালা—রাজরমণীরা পটমণ্ডপের ভিতরে দূর্ব্বাময় স্বাভাবিক শয্যার উপরে শয়ন করিয়া নিদ্রাসুখ অনুভব করিতে লাগিলেন। কারণ, পটমণ্ডপের কাপড়ের সঙ্গে যে সকল পর্দ্দা ঝুলাইয়া দিয়াছিল; তাহার ফাঁক দিয়া অল্প অল্প বায়ু প্রবেশ করিয়া, তাঁহাদের পথ-শ্রমকৃত ঘর্ম্মজল নিবারণ করিতেছিল ॥২২॥

অন্বয়ঃ—অঙ্গে প্রস্বেদবারিসবিশেষবিষক্তং কূর্পাসকং ক্ষতনখক্ষতম্ উৎক্ষিপন্তী আবির্ভবদ্ঘনপয়োধরবাহুমূলা শাতোদরী ক্ষণং যুবদৃশাম্ উৎসবঃ অভূৎ ॥২৩॥

টীকা—প্রস্বেদেতি। অঙ্গে গাত্রে প্রস্বেদবারিণা সবিশেষং সাতিশয়ং যথা তথা বিষক্তম্ অতিশ্লিষ্টং কূর্পাসকঞ্চোলকং কঞ্চুকমিত্যর্থঃ। চোলঃ কূর্পাসকোঽস্ত্রিয়ামিত্যমরঃ। ক্ষতানি পুনর্ব্বিদীর্ণানি নখক্ষতানি যস্মিন্ কর্ম্মণি তদ্যথা তথা উৎক্ষিপন্তী উন্মোচয়ন্তী অতএবাবির্ভবৎ প্রকাশমানং ঘনপয়োধরবাহুমূলং ঘনৌ পয়োধরৌ বাহুমূলে চ যস্যাঃ সা শাতোদরী। নাসিকোদরেত্যাদিনা ঙীপ্। যুবদৃশাং ক্ষণমুৎসবোঽভূৎ। এতেন যূনাং স্মরাচিন্তাদিকরমিষ্টবস্ত্ববলোকননিমিত্তজ্জালাচমুত্বলচক্ষুরৌৎসুক্যং ব্যজ্যতে। নায়িকাভিসারিণী প্রগল্ভা বা ॥২৩॥

টিপ্পনী—প্রস্বেদেতি। অত্র ঘনপয়োধরবাহুমূলয়োরাবির্ভবনং প্রতি উৎক্ষিপন্তীতি পদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ। যুবকানাং ভার্য্যেতরনায়িকাগতানুরাগত্বাৎ সম্ভোগশৃঙ্গাররসাভাসঃ, তালব্যশকার-মূর্দ্ধন্যষকারয়োর্বাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৩॥

বাঙ্গালা—ঘামের জলে জামাটি গায়ের সঙ্গে বিশেষভাবে লাগিয়া পড়িয়াছিল বলিয়া কোন কৃশোদরী তাহা খুলিয়া ফেলিতেছিল; তখন আপন নখেরই আঘাতে স্তনের পুরাতন নখক্ষতগুলি, আরও বিদীর্ণ হইয়াছিল এবং নিবিড় স্তনযুগল ও বাহুমূলযুগল বাহির হইয়া পড়িয়াছিল; সুতরাং সেই কৃশোদরী ক্ষণকালের জন্য যুবকনয়নের বিশেষ আনন্দ-জনক হইয়াছিল ॥২৩॥

অন্বয়ঃ—বিপণিনঃ যাবৎ সঃ এব সময়ঃ তাবৎ এব সমম্ অব্যাকুলাঃ (সন্তঃ) পটময়ানি অভিতঃ বিতত্য পর্য্যাপতৎক্রয়িকলোকম্ অগণ্যপণ্যপূর্ণাপণাঃ বিপণীঃ বিভেজুঃ ॥২৪॥

টীকা—যাবদিতি। বিপণৌ ব্যবহারঃ স এষামস্তীতি বিপণিনো বণিজো যাবৎ স এব সময়ঃ সেনানিবেশলক্ষণ এব তাবৎক্ষণ এব সমং যুগপৎ অব্যাকুলাঃ অব্যগ্রাঃ সন্তঃ পটময়ানি পটবিকারাণি পটমণ্ডপানীত্যর্থঃ অভিতো বিতত্য উভয়তঃ শ্রেণ্যা বিতত্য বিস্তার্য্য ক্রয়েণ জীবতীতি ক্রয়িকঃ। বস্তুক্রয়বিক্রয়াদিতি ঠক্। পর্য্যাপতৎ পরিতো ধাবৎ

অল্পপ্রয়োজনকৃতোরুতরপ্রয়াসৈ রুদ্গূর্ণলোষ্টলগুড়ৈঃ পরিতোঽনুবিদ্ধম্।
উদ্যন্তমুদ্দ্রুতমনোকহজালমধ্যাদন্যঃ শশং গুণমনল্পমবন্নবাপ ॥২৫॥
ত্রাসাকুলঃ পরিপতন্ পরিতো নিকেতান্ পুম্ভির্ন কৈশ্চিদপি ধন্বিভিরন্ববন্ধি।
তস্থৌ তথাপি ন মৃগঃ ক্বচিদঙ্গনানামাকর্ণপূর্ণনয়নেষু হতেক্ষণশ্রীঃ ॥২৬॥

---

ক্রয়িকলোকঃ ক্রেতৃজনো যস্মিন্ কর্মণি তত্ অসংখ্যৈরসংখ্যেয়ৈঃ পণ্যৈঃ পণ্যদ্রব্যৈঃ পূর্ণা আপণাঃ পণ্যপ্রসারণস্থানানি যাসু তাঃ বিপণীঃ পণ্যবীথীঃ। আপণস্তু নিষদ্যায়াং বিপণিঃ পণ্যবীথিকেত্যমরঃ। বিভেজুরসঞ্চীর্ণা ন্নিমর্সুরিত্যর্থঃ। স্বভাবোক্ত্যনুপ্রাসৌ ॥২৪॥

টিপ্পনী—যাবদিতি। অত্র মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৪॥

বাঙ্গালা—যেই সেই সময় উপস্থিত হইল, অমনিই বণিকেরা ধীরে সুস্থে, পথের দুই পার্শ্বে যুগপৎ পটমণ্ডপ খাটাইয়া, অসংখ্য পণ্যদ্রব্যে পরিপূর্ণ দোকান সকল সাজাইয়া বসিল; তখন ক্রেতারাও আসিতে লাগিল ॥২৪॥

অন্বয়ঃ—অল্পপ্রয়োজনকৃতোরুতরপ্রয়াসৈঃ উদ্গূর্ণলোষ্টলগুড়ৈঃ (জনৈঃ) পরিতঃ অনুবিদ্ধম্ অনোকহজালমধ্যাৎ উদ্যন্তম্ উদ্দ্রুতং শশম্ অবন্ অন্যঃ অনল্পং গুণম্ অবাপ ॥২৫॥

টীকা—অল্পেতি। অল্পপ্রয়োজনেনাল্পফলেন নিমিত্তেন কৃত উরুতরো ভূয়ান্ প্রয়াসো যৈস্তৈঃ অল্পস্যৈকস্য শশপিণ্ডস্য ভূয়সামকিঞ্চিৎকরত্বাদিতি ভাবঃ, উদ্গূর্ণাঃ উদ্যতাঃ লোষ্টানি মৃৎখণ্ডাঃ লগুড়াশ্চ দণ্ডকাষ্ঠানি যৈস্তৈঃ পুম্ভিরিতি শেষঃ পরিতোঽনুবিদ্ধমনুবদ্ধম্ অনসঃ শকটস্যাকং গতিং ঘ্নন্তীত্যনোকহা বৃক্ষাঃ তেষাং জালমধ্যাদুদ্যন্তমুত্থিতম্। উতপূর্বাদিতেঃ কর্ত্তরি শতৃঃ। উদ্দ্রুতমুৎক্রান্তং শশং মৃগবিশেষম্ অন্যঃ পরঃ অবন্ হন্তৃন্নিবার্য্যং রক্ষন্ অনল্পং গুণং মহান্তমুৎকর্ষমবাপ। দয়ালোরনাভিষঙ্গোত্তমস্য সুকীর্ত্তিঃ সুলভেতি ভাবঃ। অত্রার্থান্তরন্যাসস্তু, অন্যো গুণং পরমবন্ প্রযুঞ্জানঃ শশমবাপ জগ্রাহ যো হন্তা তস্যৈব মৃগ ইতি ব্যাধসময়াদিতি ভাবঃ ॥২৫॥

টিপ্পনী—অল্পেতি। অত্র স্বভাবোক্তিরলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৫॥

বাঙ্গালা—একটি হরিণ বৃক্ষসমূহের মধ্য হইতে বাহির হইয়া পালাইতেছিল; তখন চারিদিক্ হইতে বহুতর লোক, লোষ্ট্র ও লগুড় ক্ষেপ করিতে করিতে তাহার অনুসরণ করিতে লাগিল; সুতরাং তাহারা সামান্য ফলের জন্যই গুরুতর পরিশ্রম করিতে থাকিল; এমন সময়ে আর একটি লোক আসিয়া, সেই লোকগুলিকে বাধা দিয়া, সেই হরিণটীকে রক্ষা করিয়া বিশেষ প্রশংসা লাভ করিল ॥২৫॥

অন্বয়ঃ—ত্রাসাকুলঃ নিকেতান্ পরিতঃ পরিপতন্ মৃগঃ কৈশ্চিৎ অপি ধন্বিভিঃ পুম্ভিঃ ন অন্ববন্ধি, তথাপি অঙ্গনানাম্ আকর্ণপূর্ণনয়নেষু হতেক্ষণশ্রীঃ (সন্) ন তস্থৌ ॥২৬॥

টীকা—ত্রাসেতি। ত্রাসাকুলো জনদর্শনাজ্জাতবিভ্রমোঽতএব নিকেতান্ নিবেশান্ পরিতঃ সর্বতঃ। অভিতঃ পরিত ইত্যাদিনা দ্বিতীয়া। পরিপতন্ ধাবন্ মৃগো হরিণঃ কৈশ্চিদপি

आस्तीर्णतल्परचितावसथः क्षणेन वेश्याजनः कृतनवप्रतिकर्मकाम्यः।
खिन्नानखिन्नमतिरापततो मनुष्यान् प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः॥२७॥
सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसं धृतविकासिबिसप्रसूनाः।
सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषप्रवादममृजन् नगनिम्नगानाम्॥२८॥

---

धन्विभिर्धनुष्मद्भिः। धन्वा धनुष्मान् धानुष्क इत्यमरः। बाध्यमदन्वादिनिरिति स्वामी। पुम्भिर्नान्ववन्धि नानुयातः। बध्नातेः कर्मणि लुङ्। तथाप्यङ्गनानामाकर्णपूर्णा विस्तीर्णा आकृष्टाश्च ये नयनान्येव इषवस्तैर्हता ईक्षणश्रीर्यस्य सः अतः क्वापि न तस्थौ किन्तु वीर-विशिखापाताभावेऽप्यङ्गनापाङ्गविशिखपातात्पलायित एवेति भावः। अत्र जनालोकनीत्थभय-हेतुकस्य मृगानवस्थानस्याङ्गनापाङ्गेषुहतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयो-गात् प्रतीयमाना। हेतोश्च हतेक्षणश्रीरिति विशेषणगत्यीक्तत्वात् काव्यलिङ्गमिति सङ्करः॥२६॥

**टिप्पनी**—नास्वेति। अत्र छेकानुप्रासश्चेति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥२६॥

**বাঙ্গালা**—একটি হরিণ ভয়ে আকুল হইয়া প্রত্যেক গৃহের নিকট দিয়া দৌড়াইতে লাগিল; কিন্তু কোন ধনুর্দ্ধর পুরুষই তাহার অনুসরণ করিল না; তথাপি রমণীদিগের আকর্ণবিস্তৃত নয়নরূপবাণে তাহার নয়নশোভা নষ্ট হওয়ায় সে কোন স্থানেও অবস্থান করিল না॥২৬॥

**अन्वयः**—क्षणेन आस्तीर्णतल्परचितावसथः कृतनवप्रतिकर्मकाम्यः अखिन्नमतिः वेश्याजनः चिर-निविष्टः इव खिन्नान् आपततः मनुष्यान् प्रत्यग्रहीत्॥२७॥

**टीका**—आस्तीर्णेति। क्षणेनास्तीर्णतल्पं वेश्याजनैः शय्याप्रधानत्वात् प्रागेव सज्जित-शय्यं यथा तथा रचितावसथः कल्पितनिकेतः। स्थानावसथवास्तु चेति कोषः। कृतेन नवप्रतिकर्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयः अखिन्नमतिरम्लानचित्तः अगणिता-ध्वखेद इत्यर्थः। वेश्याजनः खिन्नानध्वश्रान्तानापतत आगच्छतो मनुष्यान् पुरुषान् चिर-निविष्ट इव तत्रैव नित्यवास्तव्य इवेत्युत्प्रेक्षा उपचारैः शीताम्बुताम्बूलदानादिसत्कारैः प्रत्यग्रहीत् वशीचकारेत्यर्थः॥२७॥

**टिप्पनी**—आस्तीर्णेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः॥२७॥

**বাঙ্গালা**—বেশ্যারা পথের পরিশ্রম অগ্রাহ্য করিয়া, ক্ষণকালমধ্যেই ঘর তৈয়ারি করিয়া, তাহার মধ্যে বিছানা পাতিয়া নূতন বেশ ভূষায় লোকের স্পৃহণীয় হইয়া চিরঅধিবাসীর ন্যায় জল ও পান প্রভৃতি উপচার দিয়া, পথশ্রান্ত আগন্তুক পুরুষদিগকে গ্রহণ করিতে লাগিল॥২৭॥

**अन्वयः**—सैन्याः सस्नुः, पयः पपुः, अम्बराणि अनेनिजुः, धृतविकासिबिसप्रसूनाः (सन्तः) बिसं जक्षुः, (अतएव) नगनिम्नगानां श्रियाम् अनुपभोगनिरर्थकत्वदोषप्रवादम् अमृजन्॥२८॥

नाभिह्रदैः परिगृहीतरयाणि यत्र स्त्रीणां बृहज्जघनसेतुनिवारितानि ।
जग्मुर्जलानि जलमण्डुकवाद्यवल्गु वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥२९॥

---

टीका—सस्नुरिति । सेनायां समेताः सैन्याः सैनिकजनाः । सेनाया वेति ण्यप्रत्ययः । नगनिम्नगानां याः श्रियः सम्पदः तासामनुपभोग उपभोगाभावः । क्वचित् प्रसज्यप्रतिषेधेऽपि नञ्समासो दृश्यते । यथाऽदर्शनमश्रवणमनुच्चारणम् अनुपलब्धिरभाव इत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषः तेन यः प्रवादो निन्दा तममृजन् अमार्जन् । मृजूष् शुद्धौ अदादित्वाल्लङि शपो लुक्, मृजेरजादौ सङ्क्रमे विभाषा वृद्धिर्वक्तव्येति विकल्पाद् वृद्ध्यभावः । मार्जनप्रकारमाह । सस्नुः स्नानञ्चक्रुः पयः पानीयं पपुः । ष्णा शौचे पा पाने लिट् । अम्बराण्यनैनिजुः अक्षालयन् । णिजिर् शौचे जुहोत्यादित्वाल्लिटि श्लाविति द्विर्भावः, णिजां त्रयाणां गुणः श्लाविति अभ्यासस्य गुणः । हृतानि विकाशिविसप्रसूनानि विकसितपुष्कराणि यैस्ते । विसप्रसूनराजीवपुष्कराम्भोरुहाणि चेत्यमरः । विसमृणालञ्च भक्षयाञ्चक्रुः । घसेर्लिटि गमहनेत्यादिना उपधालोपे चर्त्वम्, शासिवसिघसीनां चेति षत्वम् । स्नानाद्युपभोगैर्नैरर्थ्यं निराचक्रुरित्यर्थः । अत्र दोषमार्जनस्य स्नानादिना कृतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स्नानादिक्रियासमुच्चयस्तदङ्गमस्येति सङ्करः ॥२८॥

टिप्पनी—सस्नुरिति । अत्र द्वितीयपादे विसपदस्य द्विरुपादानात् कथितपदतादोषः ; स च 'जक्षुर्बिसं धृतपरिस्फुटतत्प्रसूनाः' इति पाठेन समाधेय इति साहित्यदर्पणमतम् । बन्धस्य गाढत्वात् ओजो गुणः, गौड़ी च रीतिः ॥२८॥

বাঙ্গালা—সৈন্যেরা পার্বত্য নদীতে স্নান করিল, জল পান করিল, কাপড় ধুইল এবং পদ্ম তুলিয়া লইয়া তাহার মৃণাল ভক্ষণ করিল, সুতরাং 'পার্বত্য নদীর সম্পদ কেহ ভোগ করে না বলিয়া, তাহা নিষ্ফল' এই যে লোক প্রবাদ রহিয়াছে, তাহা সৈন্যেরা মার্জনা করিয়া দিল ॥২৮॥

अन्वयः—स्त्रीणां नाभिह्रदैः परिगृहीतरयाणि बृहज्जघनसेतुनिवारितानि जलमण्डुकवाद्यवल्गु वल्गद्घनस्तनतटस्खलितानि जलानि यत्र मन्दं जग्मुः ॥२९॥

टीका—नाभीति । स्त्रीणां नाभिभिरेव ह्रदैः परिगृहीतरयाणि प्रतिषिद्धवेगानि बृहद्भिर्जघनैरेव सेतुभिर्निवारितानि प्रतिहतगतिकानीत्यर्थः । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः । जलमेव मण्डुकवाद्यं वाद्यविशेषः जलमेकेन पाणिनोत्थापितमपरेण ताडितं मण्डुकवत् ध्वनतीति प्रसिद्धत्वेन वल्गु सुन्दरं वल्गद्भिश्चलैः घनैः स्तनतटैः स्खलितानि स्खलनङ्गतानि गमितानि वा जलानि पूर्वोक्तनगनिम्नगासलिलानि मन्दं जग्मुः । अत्र जलमन्दगमनस्य विशेषणगत्या रयप्रतिबन्धादिपदार्थहेतुकत्वात् काव्यलिङ्गम् ॥२९॥

टिप्पनी—नाभीति । अत्र नाभिह्रदैरित्यत्र जघनसेतुभिरित्यत्र च निरङ्गं केवलरूपकम्, जलानि

आलोलपुष्करमुखोल्लसितैरभीक्ष्णमुक्षाम्बभूवुरभितो वपुरम्बुवर्षैः।
खेदायतश्वसितवेगनिरस्तमुग्धमूर्द्धन्यरत्ननिकरैरिव हास्तिकानि ॥३०॥
ये पक्षिणः प्रथममम्बुनिधिं गतास्ते येऽपीन्द्रपाणितुलितायुधलूनपक्षाः।
ते जग्मुरद्रिपतयः सरसीर्विगाढुमाक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥३१॥

---

जलेष्वत्र लाटानुप्रासः, जलमण्डुकवाद्यवल्गु इत्यत्र लुप्तोपमा, वल्गुवल्गादित्यत्र च छेकानुप्रास इति टीकोक्त-काव्यलिङ्गेन सहैतेषां संसृष्टिः। मधुररचनावशात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२९॥

**বাঙ্গালা**—যে পার্বত্য নদীতে স্ত্রীলোকেরা স্নান করিতে নামিলে, তাহাদের নাভিচ্ছিদ্র স্রোতকে গ্রহণ করিল এবং বিশাল জঘনরূপ বাঁধে স্রোতোবেগের বাধা দিতে লাগিল; আর স্রোতের জলগুলি তাহাদের ঘনস্তনতটে প্রতিহত হইয়া, জলমণ্ডুকবাদ্যের ন্যায় সুন্দর শব্দ করিতে করিতে, আস্তে আস্তে যাইতে থাকিল ॥২৯॥

**अन्वयः**—हास्तिकानि आलोलपुष्करमुखोल्लसितैः अम्बुवर्षैः खेदायतश्वसितवेगनिरस्तमुग्धमूर्द्धन्यरत्न-निकरैः इव अभीक्ष्णम् अभितः वपुः उक्षाम्बभूवुः ॥३०॥

**टीका**—आलोलेति। हस्तिनां समूहा हास्तिकानि। अचित्तहस्तिधेनोष्ठक्। आलो-लानि यानि पुष्कराणि हस्ताग्राणि। पुष्करञ्च करिहस्ताग्र इत्यमरः तेषां मुखैरन्ध्रैरुल्लसितानि उत्क्षिप्तानि तैरम्बुवर्षैः खेदेनाध्वश्रमेणायतेन द्राघीयसा श्वसितस्योच्छ्वासमारुतस्य वेगेन निरस्ता बहिष्कृतक्षिप्ताः ये मुग्धाः सुन्दराः मूर्द्धन्याः मूर्द्धनि भवाः। शरीरावयवाच्चेति यत्प्रत्ययः, ये चाभावकर्म्मणोरिति प्रकृतिभावान्नस्तद्धित इति टिलोपाभावः। रत्ननिकर मुक्ताफलप्रकरास्तैरिवेत्युत्प्रेक्षा वपुरभीक्ष्णमुक्षाम्बभूवुः सिषिचुः। उक्ष सेचने इजादेश्च गुरु-मतोऽनृच्छ इत्याम्प्रत्ययः। गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरीति गजानां मुक्ताकरत्वे प्रमाणम् ॥३०॥

**टिप्पनी**—आलोलेति। अत्र वृत्त्यनुप्रासश्च शब्दालङ्कार इति टीकोक्तया उत्प्रेक्षया सह संसृष्टिः। समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥३०॥

**বাঙ্গালা**—হস্তিগণ (জলের ভিতরে নামিয়া) চঞ্চল শুঁড়ের মুখ দিয়া জল তুলিয়া লইয়া, তাহার বর্ষা দ্বারা বার বার সমস্ত শরীর সিক্ত করিতে লাগিল; তাহাতে বোধ হইতেছিল পরিশ্রমবশতঃ যে দীর্ঘনিশ্বাস নির্গত হইতেছিল, তাহার বায়ুতে মস্তকস্থ সুন্দর সুন্দর মুক্তাসমূহ যেন নিক্ষেপ করিতেছে ॥৩০॥

**अन्वयः**—ये पक्षिणः, ते प्रथमम् अम्बुनिधिं गताः, ये अपि इन्द्रपाणितुलितायुधलूनपक्षाः, ते अद्रिपतयः आक्षिप्तकेतुकुथसैन्यगजच्छलेन सरसीः विगाढुं जग्मुः ॥३१॥

**टीका**—य इति। ये पक्षिणः पक्षवन्तः इन्द्रेणाच्छिन्नपक्षा इत्यर्थः। संसर्गे इनि-प्रत्ययः। तेऽद्रिपतयो मैनाकादयः प्रथममम्बुनिधिङ्गताः प्रविष्टाः येऽपि ये ये इत्यर्थः।

আত্মানমেব জলধেঃ প্রতিবিম্বিতাঙ্গমূর্মৌ মহত্যভিমুখাপতিতং নিরীক্ষ্য।
ক্রোধাদধাবদপভীরভিহন্তুমন্যনাগাভিযুক্ত ইব যুক্তমহো মহেভঃ ॥৩২॥
নাদাতুমন্যকরিমুক্তমদাম্বুতিক্তং ধূতাঙ্কুশেন ন বিহাতুমপীচ্ছতাম্ভঃ।
রুদ্ধে গজেন সরিতঃ সরুষাবতারে রিক্তোদপাত্রকরমাস্ত চিরং জনৌঘঃ ॥৩৩॥

---

ইন্দ্রস্য পাণিনা তুলিতেন প্রেরিতেনায়ুধেন বজ্রেণ লূনপক্ষাঃ ছিন্নগরুতস্তেঽদ্রিপতয়ঃ আচিন্না অপনীতাঃ কেতবো ধ্বজাঃ কুথাঃ পৃষ্ঠাস্তরণানি চ যেষাম্। প্রবেণ্যাস্তরণং বর্ণঃ পরিস্তোমঃ কুথো দ্বয়োরিত্যমরঃ। তেষাং সৈন্যগজানাং ছলেন সরসীর্বিগাঢ়ুং বিগাহিতুম্। ক্ষরতি-সূতীতি বিকল্পাদিড়াগমঃ। জগ্মুঃ। অত্র গজচ্ছলেতি ছলশব্দেন গজত্বমপহ্নুত্যাদ্রিত্বা-রোপাৎ। ছলাদিশব্দৈরসত্যত্বপ্রতিপাদনরূপোঽপহ্নবালঙ্কারঃ। তেন পক্ষবতামদ্রীণাং সাগরা-বগাহনদর্শনাৎ মন্মরাৎ স্বয়মপি সলিলমবগাহমানাঃ সাক্ষাল্লূনপক্ষাঃ পর্বতা ইবেত্যুৎ-প্রেক্ষা ব্যজ্যতে ॥৩১॥

টিপ্পনী—যে ইতি। অত্র বন্ধস্য গাঢ়ত্বাৎ সমাসবাহুল্যাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩১॥

বাঙ্গালা—যে সকল পর্বতের পাখা ছিল, তাহারা (মৈনাক প্রভৃতি) প্রথমেই সমুদ্রে গিয়াছিল; তার পর, ইন্দ্রহস্তনিক্ষিপ্ত বজ্র দ্বারা যাহাদের পক্ষ ছিন্ন হইয়াছিল, তাহারাও ধ্বজ ও পৃষ্ঠাস্তরণশূন্য সৈন্যহস্তীর ছলে, সরোবরে অবগাহন করিতে গিয়াছিল ॥৩১॥

অন্বয়ঃ—মহেভঃ জলধেঃ মহতি ঊর্ম্মৌ প্রতিবিম্বিতাঙ্গম্ অভিমুখাপতিতম্ আত্মানম্ এব নিরীক্ষ্য অন্যনাগাভিযুক্তঃ ইব অপভীঃ (সন্) ক্রোধাৎ অভিহন্তুম্ অধাবৎ; অহো যুক্তম্ ॥৩২॥

টীকা—আত্মানমিতি। মহেভো জলধের্জলাশয়স্য মহত্যূর্মৌ প্রতিবিম্বিতমঙ্গং যস্য তমভিমুখাপতিতমভিমুখমাগতমাত্মানমেব আত্মপ্রতিবিম্বমেবেত্যর্থঃ নিরীক্ষ্যান্যনাগেন প্রতিগজেনাভিযুক্তোঽভিদ্রুত ইবাতিতূর্ণমপভীর্নির্ভীকঃ সন্ ক্রোধাদধাবৎ অহো ইতি মৌঢ্যেন বিস্ময়ঃ তচ্চ যুক্তং মহেভস্যেতি ভাবঃ। অভিযুক্ত ইবেত্যুৎপ্রেক্ষায়াঃ প্রতিগজভ্রান্তিনিবন্ধন-ত্বাৎ ভ্রান্তিমদুৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ ॥৩২॥

টিপ্পনী—আত্মানমিতি। অত্র 'যুক্ত যুক্ত' ইতি ব্যঞ্জনসঙ্ঘস্য সকৃৎসাম্যাৎ ছেকানুপ্রাস ইতি টীকোক্ত-সঙ্করৈঃ সহ পুনঃ সংসৃষ্টিঃ। তথা মহেভঃ অধাবদিতি বাক্যমধ্যে 'অহো যুক্তম্' ইতি বাক্যান্তরস্য প্রবেশাৎ গর্ভিতত্বাদোষঃ; স চ 'নাগাভিযুক্ত ইব নাগপতির্নু চিত্রম্' ইতি পাঠেন সমাধেয়ঃ। উদ্ধতঘটনাব্যঞ্জকত্বাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩২॥

বাঙ্গালা—জলাশয়ের বৃহৎ তরঙ্গের মধ্যে নিজের শরীরেরই প্রতিবিম্ব পতিত হইলে তাহা দেখিয়া কোন মহাহস্তী, 'অন্য হস্তী সম্মুখে আসিয়া আক্রমণ করিয়াছে' ইহা মনে করিয়া নির্ভয়চিত্তে ক্রোধবশতঃ আঘাত করিবার জন্য ধাবিত হইল। এই আশ্চর্য্য ঘটনা, মূর্খ হস্তীর পক্ষে সঙ্গতই বটে ॥৩২॥

অন্বয়ঃ—অন্যকরিমদাম্বুতিক্তম্ অম্ভঃ আদাতুং ন ইচ্ছতা বিহাতুম্ অপি ন ইচ্ছতা ধূতাঙ্কুশেন সরুষা গজেন সরিতঃ অবতারে রুদ্ধে সতি, জনৌঘঃ চিরং রিক্তোদপাত্রকরম্ আস্ত ॥৩৩॥

পন্থানমাশু বিজহীহি পুরঃ স্তনৌ তে পশ্যন্ প্রতিদ্বিরদকুম্ভবিশঙ্কিচেতাঃ।
স্তম্বেরমঃ পরিণিনংসুরসাবুপৈতি ষিড়্গৈরগদ্যত সসম্ভ্রমমেব কাচিৎ ॥৩৪॥

---

টীকা—নেতি। অন্যকরিণা প্রতিগজেন মুক্তেন মদাম্বুনা তিক্তং সুরভি। কটুতিক্তকষায়াস্তু সৌরভ্যেঽপি প্রকীর্ত্তিতা ইতি কেশবঃ। অম্ভ আদাতুং গ্রহীতুং নৈচ্ছত বিহাতুং ত্যক্তুমপি নৈচ্ছত অনিচ্ছতা ক্রোধপিপাসাভ্যামিতি ভাবঃ। ধূতাঙ্কুশেন মত্তেন সক্রোধেন গজেন নগসরিতোঽবতারে তীর্থে রুদ্ধে সতি জনৌঘঃ রিক্তান্যুদপাত্রাণি যেষু তে করা যস্মিন্ তদ্যথা তথা চিরমাস্ত অতিষ্ঠৎ। আস উপবেশনে লঙ্। একহলাদৌ পূরয়িতব্যেঽন্যতরস্যামিত্যুদকশব্দস্যোদাদেশঃ ॥৩৩॥

টিপ্পনী—নেত। অত্র সরিতঃ সরুদ্ধেতি ব্যঞ্জনসংঘস্য সকৃৎসাম্যাৎ ছেকানুপ্রাসোঽলঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৩॥

বাঙ্গালা—অন্য হস্তীর মদজল পড়িয়া নদীর জলকে সুগন্ধি করিয়াছিল; সুতরাং হস্তী সে জল পান করিতে ইচ্ছা করিয়াছিল না; আবার (অত্যন্ত পিপাসা থাকায়) সে জল ছাড়িয়া যাইতেও ইচ্ছা করিয়াছিল না; কিন্তু ক্রুদ্ধ হইয়া নদীর ঘাট রুদ্ধ করিয়া দাঁড়াইয়াছিল। সেই জন্যই জনগণ শূন্যপাত্র হাতে করিয়া অবস্থান করিতেছিল ॥৩৩॥

অন্বয়ঃ—আশু পন্থানং বিজহীহি; পুরঃ তে স্তনৌ পশ্যন্ প্রতিদ্বিরদকুম্ভবিশঙ্কিচেতাঃ অসৌ স্তম্বেরমঃ পরিণিনংসুঃ (সন্) উপৈতি (ইতি) ষিড়্গৈঃ সসম্ভ্রমম্ এব কাচিৎ অগদ্যত ॥৩৪॥

টীকা—পন্থানমিতি। পন্থানমাশু বিজহীহি। ওহাক্ ত্যাগে লোটি সের্হিরাদেশঃ, আ চ হাবিতি বিকল্পাদীকারাদেশঃ। পুরোঽগ্রে তে স্তনৌ পশ্যন্ প্রতিদ্বিরদস্য কুম্ভৌ বিশঙ্কত ইতি তদ্বিশঙ্কি চেতো যস্য সঃ কুম্ভভ্রান্তিমানিত্যর্থঃ। অতএব ভ্রান্তিমদলঙ্কারঃ। স্তম্বে তৃণে রমত ইতি স্তম্বেরমঃ। ইভঃ স্তম্বেরমঃ পদ্মীত্যমরঃ। স্তম্বকর্ণয়োরমিজপোরিত্যচ্ প্রত্যয়ঃ। তৎপুরুষে কৃতি বহুলমিত্যলুক্। পরিণন্তুং তির্য্যক্ প্রহর্ত্তুমিচ্ছুঃ পরিণিনংসুঃ। নমেঃ সনন্তাদুপ্রত্যয়ঃ, একাচ উপদেশেঽনুদাত্তাদিতীট্প্রতিষেধঃ। অসাবুপৈতি পুরেতি পাঠে পুরোপৈতীত্যন্বয়ঃ উপৈষ্যতীত্যর্থঃ। যাবৎপুরানিপাতয়োর্লড়িতি ভবিষ্যদর্থে লট্। ষিড়্গৈর্বিটৈঃ। ষিড়্গঃ পল্লবিকো বিট ইতি কোষঃ। কাচিদেবমুক্তরীত্যা সসম্ভ্রমং সত্বরম অগদ্যত গদিতা ॥৩৪॥

টিপ্পনী—পন্থানমিতি। অত্র ষিড়্গানুরাগস্য ভার্য্যেতরস্ত্রীগতত্বাৎ শৃঙ্গাররসাভাসঃ, প্রসাদো, গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৪॥

বাঙ্গালা—রসিক নাগরিকেরা কোন যুবতিকে ব্যস্ততার সহিত এই কথা বলিয়াছিল যে—"শীঘ্র পথ ছাড়িয়া যাও; কেন না, সম্মুখে তোমার স্তনযুগল দেখিয়া, প্রতিদ্বন্দ্বী হস্তীর কুম্ভযুগল মনে করিয়া, ঐ হস্তী দন্তপ্রহার করিবার জন্য আসিতেছে" ॥৩৪॥

কীর্ণং শনৈরনুকপোলমনেকপানাং হস্তৈর্বিগাঢ়মদতাপরুজঃ শমায়।
আকর্ণমুল্লসিতমম্বু, বিকাশিকাশনীকাশমাপ সমতাং সিতচামরস্য ॥৩৫॥
গণ্ডূষমুজ্ঝিতবতা পয়সঃ সরোষং নাগেন লব্ধপরবারণমারুতেন।
অম্ভোধিরোধসি পৃথু প্রতিমানভাগরুদ্ধোরুদন্তমুসলপ্রসরং নিপেতে ॥৩৬॥

অন্বয়ঃ—অনেকপানাং বিগাঢ়মদতাপরুজঃ শমায় শনৈঃ হস্তৈঃ অনুকপোলং কীর্ণম্ আকর্ণম্ উল্লসিতং বিকাশিকাশনীকাশম্ অম্বু, সিতচামরস্য সমতাম্ আপ ॥৩৫॥

টীকা—কীর্ণমিতি। অনেকপানাং দ্বিপানাং বিগাঢ়ঃ প্ররূঢ়ো যো মদেন তাপঃ স এব রুক্ রোগঃ তস্যাঃ রুজঃ শমায় শনৈর্মন্দং হস্তৈরনুকপোলং কপোলয়োঃ কীর্ণং ক্ষিপ্তম্ আকর্ণং কর্ণপর্য্যন্তম্। আঙ্ মর্য্যাদাভিবিধ্যোরিত্যব্যয়ীভাবঃ। উল্লসিতমুৎপতিতং বিকাশি যৎ কাশস্তম্ভকুসুমস্তেন তৎকুসুমসনীকাশম্। নিত্যসমাসত্বাদস্বপদবিগ্রহঃ। অতএব স্যাদুত্তরপদে ত্বমী। নিভসঙ্কাশনীকাশপ্রতীকাশোপমাদয় ইত্যমরঃ। অম্বু, সিতচামরস্য সমতাং সাদৃশ্যমাপ। তুল্যার্থৈরিত্যাদিনা ষষ্ঠী। উপমালঙ্কারঃ ॥৩৫॥

টিপ্পনী—কীর্ণমিতি। অত্র প্রথমে পাদে ছেকানুপ্রাসঃ দ্বিতীয়ার্দ্ধে চ বৃত্ত্যনুপ্রাস ইতি টীকোক্তোপমযা সংসৃজ্যতে। বন্ধস্য প্রগাঢ়ত্বাত্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৫॥

বাঙ্গালা—হস্তিগণের মত্ততানিবন্ধন যে সন্তাপরোগ জন্মিয়াছিল; তাহার শান্তির জন্য তাহারা শুণ্ড দ্বারা গণ্ডদেশে ধীরে ধীরে কর্ণপর্য্যন্ত জল নিক্ষেপ করিতেছিল; প্রস্ফুটিত কাশকুসুমের ন্যায় শুভ্রবর্ণ সেই জল, শ্বেত চামরের সাদৃশ্য লাভ করিয়াছিল ॥৩৫॥

অন্বয়ঃ—লব্ধপরবারণমারুতেন নাগেন সরোষং পয়সঃ গণ্ডূষম্ উজ্ঝিতবতা (সতা) অম্ভোধিরোধসি পৃথু প্রতিমানভাগরুদ্ধোরুদন্তমুসলপ্রসরং নিপেতে ॥৩৬॥

টীকা—গণ্ডূষমিতি। লব্ধঃ পরবারণস্য প্রতিগজস্য মারুতো মদগন্ধবাহো যেন তেন অতএব সরোষং যথা তথা পয়সঃ পানীয়স্য গণ্ডূষং মুখপূরণং মুখান্তর্গতং পয় ইত্যর্থঃ। গণ্ডূষো মুখপূরণ ইতি হলায়ুধঃ। স্ত্রীলিঙ্গত্বেঽপি পুংলিঙ্গমেবাহ বামনো লিঙ্গাধ্যাহারাবিত্যত্র। উজ্ঝিতবতা ত্যক্তবতা নাগেন গজেন। মতঙ্গজো গজো নাগ ইত্যমরঃ। অম্ভোধিরোধসি সাগরতীরে। দন্তয়োরুভয়োর্মধ্যপ্রতিমানমিতি স্মৃতম্। পৃথুনা প্রতিমানভাগেন রুদ্ধঃ প্রতিবদ্ধঃ উরূ দন্তৌ মুসলাবিব তয়োঃ প্রসরঃ প্রসারো যস্মিন্ কর্মণি তৎ। পযোগ্রো মুসলোঽস্ত্রী স্যাদিত্যমরঃ। নিপেতে নিপতিতম্। ভাবে লিট্। ক্রোধবেগাদসম্বরোধাঃ প্রহৃত্য পারবশ্যাৎ স্বয়মধোমুখঃ পপাতেত্যর্থঃ। ক্রোধান্ধাঃ কিন্ন কুর্বন্তীতি ভাবঃ ॥৩৬॥

টিপ্পনী—গণ্ডূষমিতি। অত্র দন্তমুসলেতি লুপ্তোপমালঙ্কারঃ। উদ্ধতঘটনাব্যঞ্জকত্বাত্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৬॥

বাঙ্গালা—কোন হস্তী, অন্য হস্তীর মদগন্ধ পাইয়া, ক্রোধের সহিত মুখের জলগুলি

दानं ददत्यपि जलैः सहसाधिरूढ़े को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षोर्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥३७॥
अन्तर्जलौघमवगाढ़वतः कपोलौ हित्वा क्षणं विततपक्षतिरन्तरीक्षे ।
द्रव्याश्रयेष्वपि गुणेषु रराज नीलो वर्णः पृथग्गत इवालिगणो गजस्य ॥३८॥

---

বাহির করিয়া দিয়া, সমুদ্রের তীরে মুসলের ন্যায় বিশাল দন্তযুগলের প্রহার করিবার চেষ্টা করিল ; কিন্তু বিস্তৃত মধ্যভাগে ঠেকিয়া যাওয়ায় নিজে উবুর্ত হইয়া পড়িয়া গেল ॥৩৬॥

অন্বয়ঃ—दानं ददति अपि सहसा जलैः अधिरूढ़े (सति), विद्यमानगतिः कः आसितुम् उत्सहेत ? यत् मिमङ्क्षोः दन्तिनः कटकटाहतटात् अलीनां पटलैः परितः मङ्क्षु उदपाति ॥३७॥

টীকা—दानमिति । दीयत इति दानं धनं मदश्च । दानं गजमदे त्यागे इति विश्वः । तद्ददति वितरत्यपि दातर्य्यपीत्यर्थः । सहसा अकस्मात् । स्वरादित्वादव्ययमिति शाकटायनः । जलैर्जड़ैर्नीरैश्च । जलजडौकललौ नीरे क्लीवेरे च जड़ेऽन्यवदिति विश्वः । अधिरूढ़े आक्रान्ते सति विद्यमानगतिः गत्यन्तरवान् समर्थश्च कः पुमानासितुन्तत्र स्थातुमुत्सहेत न कोऽपीत्यर्थः । अकर्त्तर्य्यस्त्यादिना तुमुन् । यस्मात् मिमङ्क्षोर्मङ्क्तुमिच्छोः । मज्जेः सनन्ताद्दुप्रत्ययः । दन्तिनः कटो गण्डः स कटाहः खर्परं इव । कटाहः खर्परस्तुप इति वैजयन्ती । तस्य तटात् प्रदेशादलीनां पटलैः परितो मङ्क्षु द्राक् । द्राङ् मङ्क्षु सपदि द्रुतमित्यमरः । उदपाति उत्पतितम् । भावे लुङ्, चिण् भावकर्मणोरिति चिण् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥३७॥

টিপ্পনী—दानमिति । अत्र प्रथमार्द्धे अर्थापत्तिः, द्वितीयार्द्धे तु लुप्तोपमा, छेकानुप्रासो वृत्त्यनुप्रासश्चेति टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । बन्धोत्कर्षस्य आरोहावरोहक्रमात् ओजो गुणः, गौड़ी च रीतिः ॥३७॥

বাঙ্গালা—হস্তী মদজল নিঃসারণ করিতে থাকিয়াও, যদি হঠাৎ জলে নিমগ্ন হয় (মানুষ দাতা হইয়াও যদি হঠাৎ মন্দলোকে পরিবৃত হয়), তবে যাহার গত্যন্তর থাকে, সেরূপ কোন্ ব্যক্তি তথায় থাকিতে সমর্থ হয় ? যেহেতু হস্তী জলে নিমগ্ন হইতে থাকিলে, ভ্রমরগণ তাহার বিশাল গণ্ডস্থল হইতে উঠিয়া হঠাৎ চারিদিকে উড়িতে লাগিল ॥৩৭॥

অন্বয়ঃ—अन्तर्जलौघम् अवगाढ़वतः गजस्य कपोलौ हित्वा अन्तरीक्षे क्षणं विततपक्षतिः अलिगणः, गुणेषु द्रव्याश्रयेषु (सत्स्वपि) नीलः वर्णः पृथक् गतः इव रराज ॥३८॥

টীকা—अन्तरिति । जलौघे अन्तर्जलौघम् । विभक्त्यर्थेऽव्ययीभावः अथवा जलौघस्य जलपूरस्यान्तरभ्यन्तरे अवगाढ़वतः । प्रविष्टवतः गाहेर्निष्ठान्तात्क्तवतुप्रत्ययः ढत्वष्टुत्वढलोपाः । गजस्य कपोलौ हित्वा क्षणमन्तरीक्षे उपर्याकाशे विततपक्षतिर्विस्तृतपक्षमूलः आमूलात् विततपक्ष इत्यर्थः । स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षात्तिरिति तिप्रत्ययः । अलिगणो गुणेषु रूपादिषु द्रव्यमाश्रयो येषान्तेषु द्रव्याश्रयेषु अपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वाच्च द्रव्याधीनसत्ताकेषु सत्स्वपीत्यर्थः । पृथग्गतः जलमज्जनभयात् स्वाश्रयपरिहारेण स्थितो नीलो वर्णो

मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादिनीस्वरजिता रजिता वशमाययुः ॥९॥
समभिसृत्य रसादवलम्बितः प्रमदया कुसुमावचिचीषया ।
अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥१०॥

---

कोकिलाकूजितश्रवणानन्तरमेवाङ्गार्पणादौत्सुक्यहेतुकार्य्यान्तरज्ञयेव तया किमपि बोधिता इत्युत्प्रेक्षा ॥८॥

टिप्पनी—प्रथेति । अत्र प्रियसखीसदृशमिति आर्थोपमा यमकेन सह संसृज्यते । मधुररचनावशात् माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥८॥

বাঙ্গালা—কোকিলপক্ষিণীর কণ্ঠস্বর সকলেরই বাঞ্ছনীয় এবং তাহা মানিনীদিগের গুরুতর মান নাশ করিয়া থাকে; সুতরাং সেই কোকিলপক্ষিণীরা গুপ্তভাবে কিছু বুঝাইয়া দিয়াছিল; তাই রমণীরা আপন আপন প্রিয়তমাকে অপ্রার্থিত আপন আপন অঙ্গ সমর্পণ করিয়াছিল ॥৮॥

अन्वयः—मधुकरैः अपवादकरैः इव पथिकाः हरिणाः इव, परिवादिनीस्वरजिता वचसः कलतया रजिताः (सन्तः) स्मृतिभुवः वशम् आययुः ॥९॥

टीका—मधुकरैरिति । मधुकरैः कर्त्तृभिः अपवादं मृगवञ्चनाय घण्टादिकुत्सितवाद्यं कुर्वन्तीत्यपवादकराः व्याधास्तैरिव पथिकाः हरिणा इव परिवादिनीस्वरजिता वीणाविशेषध्वनिजयिन्या । सप्तभिः परिवादिनीत्यमरः । जिः क्विपि तुक् । वचसो गीतस्य कलतया माधुर्य्येण करणेन रजिता आकृष्टाः सन्त इत्यर्थः । रञ्जेर्ण्यन्तात् कर्मणि क्तः, रञ्जेर्णौ मृगरमणा इति उपधानकारलोपः । इहोपमानमृगसादृश्यादौपचारिकं मृगत्वम् उपमेयेषु पथिकेष्वस्तीत्यविरोधः स्मृतिभुवः कामस्य मृगपातचिन्ताविषयत्वान्मृगग्रहणगर्त्तदेशस्य च वशमाययुः यथा व्याधगानासक्त्या गर्त्ते मृगाः पतन्ति तद्वन्मधुकरहुङ्कारासक्ताः पान्थाः अपारवशमन्मथं जग्मुरित्यर्थः । अनेकैवेयमुपमा ॥९॥

टिप्पनी—मधुरेति । अत्र प्रथमद्वितीयपादगतयोः श्रौतोपमयोरङ्गाङ्गिभावेन सङ्करः; तथा प्रथमपादे छेकानुप्रासः, चतुर्थे च यमकम्, इति समुदाये संसृष्टिः । गुणरीती पूर्ववत् ॥९॥

বাঙ্গালা—বীণা অপেক্ষাও মধুরস্বর ব্যাধের গানমাধুর্য্যে আকৃষ্ট হইয়া হরিণগণ যেমন গর্ত্তের বশীভূত হয় (গর্ত্তের ভিতরে পড়ে); সেইরূপ বীণা অপেক্ষাও মধুরস্বর ভ্রমরগণের গানমাধুর্য্যে আকৃষ্ট হইয়া বিরহিগণ কামের বশীভূত হইল ॥৯॥

अन्वयः—प्रमदया कुसुमावचिचीषया समभिसृत्य रसात् अवलम्बितः (तथापि) अविनमन् (अतएव) वृथोच्चकैः वनपादपः अनृतया नृतया न रराज ॥१०॥

टीका—समभिसृत्येति । प्रमदया कर्त्र्या कुसुमानामवचिचीषयावचेतुमिच्छया रिरंसयेति भावः । चिनोतेः सनन्तादप्रत्ययादिति स्त्रियामकारप्रत्ययः, विभाषा चेरिति. विकल्पात्

इदमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहान्ततीः ।
स्तनभरेण जितस्तबकानमन्नवलते वलतेऽभिमुखं तव ॥११॥
सुरभिनिःश्वसिते दधतस्तृषं नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू मम न सौमनसौ मनसो मुदे ॥१२॥

---

च्युत्वाभावः । रसाद्रागात् समभिसृत्य समागत्यावलम्बितो हस्तेन गृहीतस्तथाप्यविनमन् वश्यमगच्छन् अतएव वृथोच्चकैर्व्यर्थं सुन्नतो वनपादपः न तु नागरिक इति भावः न रतेत्यन्तता असत्या तया अनृतया नुर्भावोन्नतता तया नृतया पुंस्त्वेन रराज । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नर इत्यमरः । यः कान्ताकरगृहीतोऽपि न द्रवति स नपुंसक एव लौकिकस्तु पुंस्त्वव्यपदेशो मिथ्यैवेति भावः ॥१०॥

**टिप्पनी**—समभिसृत्येति । अत्र कार्य्येण वनपादपे वर्वरवनचरव्यवहारसमारोपात् समासोक्तिरलङ्कारो यमकवृत्त्यनुप्रासयोः संसृष्टिः । गुणरीती पूर्ववत ॥१०॥

**বাঙ্গালা**—কোন রমণী পুষ্পচয়ন করিবার ইচ্ছায় যাইয়া, অনুরাগে কোন বন্য বৃক্ষকে ধরিল; তথাপি সে বন্য বৃক্ষ অবনত হইল না; সুতরাং সে বৃথা উন্নত ছিল; আর তাহার পুরুষত্ব মিথ্যাপ্রায় থাকায় সে শোভা পাইল না ॥১০॥

**अन्वयः**—हे) स्तनभरेण जितस्तबकानमन्नवलते ! इदं विरागि अलिकदम्बकं परागिणीः अम्बुरुहान्ततीः अपास्य तव अभिमुखं वलते ॥११॥

**टीका**—अथ कश्चित् स्वयंग्रहाश्लेषसुखार्थं प्रियमलिपातेन भीषयन् लिभिः कुचकीनाह, इदमित्यादि । स्तनभरेण साधनेन जिताभ्यां स्तबकाभ्यामानमन्ती नवलता यया सा तथोक्ता तस्याः सम्बुद्धिर्जितस्तबकानमन्नवलते स्तबकानमन्नवलतोपमे इत्यर्थः । अतएवेदं विरागि विरक्तिमदलिकदम्बकं परागिणीः परागवतीरितिविरक्तिहेतूक्तिः अम्बुरुहान्ततीरपास्य तवाभिमुखं वलते चलति विशिष्टलताभ्रमादिति भावः । तथाच भ्रान्तिमदलङ्कारो व्यज्यते ॥११॥

**टिप्पनी**—इदमिति । अत्र यमकच्छेकानुप्रासयोः संसृष्टिरलङ्कारः । सम्भोगशृङ्गारो रसः, माधुर्य्यवैदर्भ्यौ गुणरीती ॥११॥

**বাঙ্গালা**—হে প্রিয়তমে ! তোমার স্তনযুগলের সৌন্দর্য্য, এই নূতন লতাটীর পুষ্পগুচ্ছকে পরাজিত করিয়াছে; আর এই ভ্রমরসমূহ, রেণুসমন্বিত পদ্মসমূহকে পরিত্যাগ করিয়া তোমার দিকে আসিতেছে ॥১১॥

**अन्वयः**—तव सुरभिनिःश्वसिते नवसुधामधुरे अधरे च तृषं दधतः अलेः मम इव अमू सौमनसौ गन्धरसौ मनसः मुदे न अलम् ॥१२॥

**टीका**—अथालिस्तदभिमुखागमनेन कारणमाह, सुरभीति । तव सुरभिनिःश्वसिते निःश्वाससमारुते नवसुधावन्मधुरे अधरे च तृषं तृष्णां दधतो दधानस्यालेर्भ्रमरस्य ममेवामू

इति गदन्तमनन्तरमङ्गना भुजयुगोन्नमनोच्चतरस्तनी ।
प्रणयिनं रभसादुदरश्रिया वलिभयालिभयादिव सस्वजे ॥१३॥
वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥१४॥

---

उपलभ्यमानौ सुमनसां पुष्पाणां सम्बन्धिनौ सौमनसौ गन्धरसौ सौरभमाधुर्यं मनसोऽन्तः-करणस्य मुदे नालं न पर्याप्तौ अतस्त्वद्वदनरसगन्धलोभादागच्छतीत्यर्थः । नमः स्वस्तीत्यादिना चतुर्थी । अत्र कान्ताकण्ठकस्वयंग्रहाश्लेषसुखार्थिनः प्रियस्य तज्जयहेतोरलेरेवागमन-हेतुत्वेनात्र दृष्टान्तेन मुखसौरभरसलोभकुसुमवैराग्ययोर्वर्णयितुमौचित्याद्यमकानुसारेण विप्रकृष्टेनापि समशब्देनैवशब्दस्यान्वयः वत्तेऽभिमुखन्तव अलिभयादिव सस्वजे इत्युपक्रमोपसंहाराभ्यामलेः प्रकृतत्वेनोपमेयत्वावगमात् । अन्यथा मध्ये तद्वैपरीत्ये तद्वि-रोधादित्यलमतिचलनाध्वमार्गणेन अत्रोपमानुप्रासयमकानान्तावद्विजातीयानां संसृष्टिः स्पष्टैव तथा यमकानां त्रयाणां चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यान्त्रिभ्यश्च परतोऽक्षरत्रया-वृत्तिलक्षणानां स्थितत्वात् सजातीयसंसृष्टिश्चेष्टा ॥१२॥

**टिप्पनी**—सुरभीति । अत्रालङ्कारष्टीकायामेव स्पष्टमभिहितः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—হে প্রিয়তমে! তোমার নিঃশ্বাসবায়ুতে এবং নূতন অমৃতের ন্যায় সুমধুর ওষ্ঠে এই ভ্রমর তৃষ্ণা পোষণ করিতেছে; সুতরাং পুষ্পের এই সৌরভ ও মাধুর্য্য, আমারই ন্যায় ইহারও মনের আনন্দ জন্মাইতে সমর্থ হইতেছে না ॥১২॥

**अन्वयः**—भुजयुगोन्नमनोच्चतरस्तनी वलिभया उदरश्रिया (उपलक्षिता) अङ्गना इति गदन्तं प्रणयिनम् रभसात् अलिभयात् इव सस्वजे ॥१३॥

**टीका**—इतीति । इतीत्थं गदन्तं प्रणयिनम् अनन्तरं भुजयुगस्योन्नमनेनोच्चतरावत्युन्नतौ स्तनौ यस्याः सा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीप् । वलिभया वलयो विद्यन्ते यस्यास्तया वलिमत्या । तुन्दिवलिवटेर्भ इति भप्रत्ययः । उदरश्रिया मध्यशोभया उपलक्षिता अङ्गना अलिभयादिव रभसात् सस्वजे आलिलिङ्ग । वस्तुतस्तु रागादेवेति भावः । ष्वञ्ज परिष्वङ्गे इति धातोः कर्त्तरि लिट् । लज्जामन्मथमध्यस्था मध्येयं नायिका मता ॥१३॥

**टिप्पनी**—इतीति । अत्र हेतूत्प्रेक्षालङ्कारः, सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥१३॥

**বাঙ্গালা**—প্রিয়তম এইরূপ বলিলে, রমণী ভ্রমরের ভয়বশতই যেন আনন্দে তাহাকে আলিঙ্গন করিল; তখন বাহুযুগল উত্তোলন করায় সেই রমণীর স্তনযুগল সাতিশয় উচ্চ হইয়াছিল এবং পেটের থরগুলিও প্রকাশ পাইয়াছিল ॥১৩॥

अजगणन् गणशः प्रियमग्रतः प्रणतमप्यभिमानितया न याः ।
सति मधावभवन्मदनव्यथाविधुरिता धुरि ताः कुकुरस्त्रियः ॥१५॥

---

अन्वयः—वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया चलितया अलकलोलदृशा अन्यया कलमेखलाकलकलः विदधे ॥१४॥

टीका—वदनेति। वदनस्य सौरभे सौगन्ध्ये लोभेन परिभ्रमता भ्रमरेण हेतुना यः सम्भ्रमस्तेन संभृतशोभया सम्पादितश्रिया चलितया अलिसम्भ्रमात् प्रस्थितया अत-एवालकैरलकपातैर्लोलदृशा चञ्चलाक्ष्या अन्यया स्त्रिया कलो मेखलायाः कलकलः कोलाहलो विदधे विहितः अलिभयादपसरन्त्याः काञ्चीगुणध्वनिरजनीत्यर्थः। एतेन चकितत्वमुक्तम्। चकितं भयसंभ्रमः। अनुप्रासयमकयोः सजातीयशब्दालङ्कारयोः संसृष्टिः स्पष्टैव तावत् तथा यमकयोश्च द्वयोः सजातीययोः चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यां च परतोऽक्षरत्रयावृत्तिलक्षणयोः स्थितत्वात् संसृष्टिः ॥१४॥

टिप्पनी—वदनेति। अत्र माधुर्यं गुणः, पाञ्चाली च रीतिः ॥१४॥

বাঙ্গালা—কোন রমণীর মুখসৌরভের লোভে একটা ভ্রমর আসিয়া ঘুরিতেছিল; তাহাতে রমণীর ব্যস্ততানিবন্ধন আরও শোভা জন্মিয়াছিল এবং সে ভ্রমরের ভয়ে চলিয়া যাইতেছিল; তখন খোলা চুলগুলি আসিয়া চোখের উপর পড়িতে থাকায় চোখ দুইটা চঞ্চল হইয়াছিল, এই অবস্থায় সে মধুর কাঞ্চীদামের শব্দ করিয়াছিল ॥১৪॥

अन्वयः—याः कुकुरस्त्रियः गणशः अग्रतः प्रणतम् अपि अभिमानितया प्रियं न अजगणन्; ताः मधौ सति मदनव्यथाविधुरिताः (सत्यः] धुरि अभवन् ॥१५॥

टीका—अजगणन्निति। याः कुकुरस्त्रियो यादवाङ्गनाः गणशो बहुशः। बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति शस् प्रत्ययः। अग्रतः प्रणतमपि प्रियञ्चात्रैकवचनं प्रियानित्यर्थः। अभिमानिनीनां भावोऽभिमानिता तया। त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः। नाजगणन्न गणयन्ति स्म। गणेश्चौरादिकाणौ चङि: ई च गण इत्यभ्य सस्य पाक्षिक इत्वाभावः। ताः कुकुरस्त्रियो मध्यौ वसन्ते सति प्रवर्त्तमाने। मधुश्चैत्रे वसन्ते चेति विश्वः। मदनव्यथाविधुरिताः विह्वलिताः सत्यः धुरि अग्रेऽभवन्नवर्त्तन्त स्वयमेव पुरः प्रवृत्ता इत्यर्थः ॥१५॥

टिप्पनी—अजगणन्निति। अत्र प्रथमे पादे छेकानुप्रासः, चतुर्थे च यमकमित्यनयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

বাঙ্গালা—প্রিয়তম বার বার সম্মুখে অবনত হইলেও, যে যদুবংশীয়স্ত্রীলোকেরা মান করিয়া সে অনুনয় গ্রাহ্য করে নাই; বসন্তকাল উপস্থিত হইলে তাহারাই কামবেদনায় আকুল হইলে নিজেরাই সেই প্রিয়তমের সম্মুখে উপস্থিত হইয়াছিল ॥১৫॥

कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ।
मरणमप्यपराः प्रतिपेदिरे किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥१६॥
रुरुदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते ।
तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ॥१७॥
त्यजति कष्टमसावचिरादसून् विरहवेदनयेत्यघशङ्किभिः ।
प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि ! मा गिरः ॥१८॥

---

**अन्वयः**—गतभर्तृकाः अपराः कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः [सत्यः] मरणम् अपि प्रतिपेदिरे, मुहुः मुमुहुः [इति] किमु (वक्तव्यम्) ॥१६॥

**टीका**—कुसुमेति । गतभर्तृकाः वियोगिन्यः । नद्यृतश्चेति कप् । अपराः काश्चिदङ्गनाः कुसुमकार्मुकस्य कामस्य कार्मुके संहितैः द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यो मरणमपि प्रतिपेदिरे मुहुः पुनः पुनः मुमुहुर्मूर्च्छुरिति किमु वक्तव्यमित्यर्थः ॥१६॥

**टिप्पनी**—कुसुमेति । अत्र अर्थालङ्कारोऽर्थापत्तिः, शब्दालङ्कारस्तु प्रथमे पादे लाटानुप्रासः चतुर्थे च यमकमिति संसृष्टिः । माधुर्यं गुणः वैदर्भी च रीतिः ॥१६॥

**বাঙ্গালা**—কামকার্মুকনিক্ষিপ্ত বেগগামী বাণের আঘাতে বিদীর্ণদেহ হইয়া অন্যান্য বিরহিণী রমণীরা মৃত্যুপর্য্যন্ত আশ্রয় করিয়াছিল; তাহাতে বার বার যে মূর্চ্ছিত হইয়াছিল; সে বিষয়ে আর বক্তব্য আছে কি ! ॥১৬॥

**अन्वयः**—हे सुतनु ! रुरुदिषा ते वदनाम्बुरुहश्रियः अलङ्करणाय सत्यम्; तदपि सम्प्रति मधौ सन्निहिते (सति) अश्रुणः अधिगमम् अमङ्गलं धिक् ॥१७॥

**टीका**—अथ कस्याश्चित्प्रोषितभर्तृकाया बन्धुजन समाश्वासनं विशेषकेणाह, रुरुदिषेति । हे सुतनु ! शुभाङ्गि ! अन्वर्थं नद्यो ह्रस्व इति ह्रस्वत्वम्, दीर्घोत्तरपदो बहुव्रीहिः अन्यथा गुणः स्यात् । रुरुदिषा रोदनेच्छा अश्रुविमोचनमित्यर्थः । रुदः सनन्तादप्रत्यये टाप् । ते तव वदनाम्बुरुहश्रियः अलङ्करणाय सत्यं रम्याणां विकृतिरपि श्रियन्तनोतीति न्यायादिति भावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी । तदपि तथापि सम्प्रति मधौ वसन्ते सन्निहिते सन्निहितोत्सवे सति अश्रुणोऽधिगमं प्राप्तिममङ्गलं धिक् । धिङ् निर्भर्त्सननिन्दयोरित्यमरः । धिगुपर्य्यादिषु त्रिष्विति द्वितीया । अतो मा रुद इत्यर्थः ॥१७॥

**टिप्पनी**—रुरुदिषेति । अत्र तदपीति तथापीत्यर्थे अवाचकमित्यवाचकत्वदोषः; स च 'इह तथापि तु सन्निहिते मधौ' इति पाठेन परिहार्यः—। प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

**বাঙ্গালা**—হে সুন্দরি ! এই অশ্রুপাত, তোমার মুখপদ্মের শোভাই জন্মাইতেছে, ইহা সত্য ; তথাপি এখন বসন্তোৎসব নিকটবর্ত্তী হইয়াছে, এ সময়ে অশ্রুপাতরূপ অমঙ্গল আচরণ করা উচিত নহে ॥১৭॥

**न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः ।**
**प्रणयिनो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥१९॥**

---

**अन्वयः**—प्रियतया अघशङ्किभिः बान्धवैः त्वयि गदिताः कष्टम् असौ विरहवेदनया अचिरात् असून् त्यजति इति गिरः (हे) सखि ! अवितथाः मा वितथाः ॥१८॥

**टीका**—त्यजतीति । प्रियतया इष्टतया अघशङ्किभिरनर्थोत्प्रेक्षिभिः । प्रेम पश्यति भयान्यपदेऽपीति भावः । बान्धवैस्त्वयि विषये गदिताः उच्चारिताः कष्टं बत असौ बाला विरहवेदनया अचिरादसून् प्राणांस्त्यजति त्यक्ष्यति । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । इत्येवंविधा गिर उक्तीः हे सखि ! विगतं तथात्वं यासान्ताः वितथाः अनृताः । वितथं त्वनृतं वच इत्यमरः । बहुव्रीहौ विशेष्यलिङ्गता अःह्लादित्वाद्ध्रस्वः ततो नञ्-समासः । अवितथाः सत्याः मा वितथाः मा कृथाः इथाः इथातिशोकेन ला म्रथा इत्यर्थः । विपूर्वात्तनोतेर्लुङि थास् तनादिभ्यस्तथासोरिति विभाषासिचो लुक् अनुदात्तोपदेशेत्या-दिनानुनासिकलोपः न माङ्योगे इत्यडागमप्रतिषेधः ॥१८॥

**टिप्पनी**—त्यजतीति । अत्र गुणरीती पूर्ववत् ॥१८॥

**বাঙ্গালা**—বন্ধুজনেরা স্নেহবশতঃ অনিষ্টের আশঙ্কা করিয়া তোমার বিষয়ে এই কথা-গুলি বলিয়াছিল যে, "হায়! এই বালিকা বিরহযাতনায় শীঘ্রই প্রাণত্যাগ করিবে।" সখি! তুমি এই কথাগুলিকে সত্য করিও না ॥১৮॥

**अन्वयः**—असौ दूरगतः अपि महं न अतिवर्त्तते खलु बन्धुतया उदितैः अमृतैः बहिः प्रणयिनः स्वरं निशमय्य वधूः अमृतैः इव निर्ववौ ॥१९॥

**टीका**—नेति । किञ्चासौ ते प्रणयी दूरगतो दूरस्थोऽपि महं वसन्तोत्सवम् । मह उद्धव उत्सव इत्यमरः । नातिवर्त्तते नातिक्रामति खलु इति बन्धुतया बन्धुसमूहेन । ग्रामजनबन्धुसहायेभ्यस्तल् इति तल्प्रत्ययः । उदितैरुक्तैः । वदेः कर्मणि क्तः । अमृतैः सत्यवचनैः । सत्यन्त्वमृतं सम्यगित्यमरः । बहिः प्रणयिनस्तदैव दैवादागतस्य प्रियस्य स्वरं कण्ठगतं शब्दं निशमय्य श्रुत्वा । शमु अदर्शने इति चौरादिकात् ल्यप् मित्त्वाद्ध्रस्वः ल्यपि लघुपूर्वादित्ययादेशः । वधूरमृतैः सुधाभिरिव निर्ववौ निर्ववार । वातेर्लिट् । निर्वाणं निर्वृतिः सुखमिति ॥१९॥

**टिप्पनी**—नेति । अत्र उत्प्रेक्षायमकयोः संसृष्टिरलङ्कारः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—"তোমার প্রিয়তম দূরে থাকিলেও এই বসন্তোৎসব পরিত্যাগ করিয়া কখনই থাকিবে না" বন্ধুজনেরা এইরূপ সত্য কথা বলিলে, অমনিই বাহিরে প্রিয়তমের কণ্ঠ-স্বর শুনিয়া যুবতি, অমৃতদ্বারা সিক্ত হইয়াই যেন নিবৃত্তি লাভ করিল ॥১৯॥

মধুরয়া মধুবোধিতমাধবীমধুসমৃদ্ধিসমেধিতমেধয়া।
মধুকরাঙ্গনয়া মুহুরুন্মদধ্বনিভৃতা নিভৃতাক্ষরমুজ্জগে ॥২০॥
অরুণিতাখিলশৈলবনা মুহুর্বিদধতী পথিকান্ পরিতাপিনঃ।
বিকচকিংশুকসংহতিরুচ্চকৈরুদবহদ্দবহব্যবহশ্রিয়ম্ ॥২১॥

---

অন্বয়ঃ—মধুরয়া মধুবোধিতমাধবীমধুসমৃদ্ধিসমেধিতমেধয়া উন্মাদধ্বনিভৃতা মধুকরাঙ্গনয়া মুহুঃ নিভৃতাক্ষরম্ উজ্জগে ॥২০॥

টীকা—মধুরয়েতি। মধুরয়া মনোহরয়া মধুনা বসন্তেন বোধিতাঃ বিকাশিতাশ্চ তা মাধবশ্চ। পুষ্পধর্মঃ পুষ্পিতাসূপচর্য্যতে। তাসাং মাধবীনামতিমুক্তলতানাম্। অতিমুক্তঃ পুণ্ড্রকঃ স্যাদ্বাসন্তী মাধবী লতেত্যমরঃ। মধুসমৃদ্ধ্যা মকরন্দসম্পদা সমেধিতমেধয়া সংবর্দ্ধিতপ্রতিভয়া অতএবোন্মদয়তীত্যুন্মদী মদকরঃ। পচাদ্যচ্। তং ধ্বনিং বিভর্ত্তীত্যুন্মদধ্বনিভৃৎ তয়া মধুকরাঙ্গনয়া মুহুর্নিভৃতাক্ষরং লক্ষ্যয়া স্থিরনাদং যথা তথেত্যর্থঃ। অথবা সর্বঃ শব্দো বর্ণাত্মক এব ব্যঞ্জকবিশেষাভাবাদস্ফুট ইতি মতমাশ্রিত্যোক্তং সর্বংপথীনাঃ কবয় ইতি। উজ্জগে উচ্চৈর্গীতম্। গায়তেরবিবক্ষিতকর্মত্বাদ্ভাবে লিট্। অন্বর্থমস্যরাহিত্যং সমতা পদগুম্ফনে ইতি লক্ষণাৎ সমতাখ্যো গুণঃ ।২০॥

টিপ্পনী—মধুরয়েতি। অত্র বৃত্ত্যনুপ্রাসযমকয়োঃ সংসৃষ্টিরলঙ্কারঃ, মধুররচনাবশাৎ মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥২০॥

বাঙ্গালা—বসন্তাবির্ভাবে মাধবীফুল ফুটিয়াছিল ; তাহার মধু পান করায় ভ্রমরীগণের প্রতিভাশক্তি বৃদ্ধি পাইয়াছিল এবং তাহারা মনের উন্মাদজনক 'গুণ্ গুণ্' ধ্বনি ধারণ করিতেছিল ; এহেন মনোহর ভ্রমরীরা অনবরতই গান করিতেছিল ; সুতরাং সে গান-ধ্বনি স্থায়ী হইয়াছিল ॥২০॥

অন্বয়ঃ—অরুণিতাখিলশৈলবনা মুহুঃ পথিকান্ পরিতাপিনঃ বিদধতী উচ্চকৈঃ বিকচকিংশুক-সংহতিঃ দবহব্যবহশ্রিয়ম্ উদবহৎ ॥২১॥

টীকা—অরুণিতেতি। অরুণিতান্যরুণীকৃতানি অখিলানি শৈলবনানি যয়া সা মুহুঃ পথিকানধ্বগান্ বিরহিণশ্চ পরিতাপিনঃ সন্তাপবতো বিদধতী উচ্চৈরেবোচ্চকৈরুন্নতা। অব্যয়সর্বনাম্নামকচ্ প্রাক্ টেরিত্যকচ্ প্রত্যয়ঃ। বিকচা বিকসিতা যা কিংশুকসংহতিঃ পলাশকুসুমরাশিঃ স দবহব্যবহশ্রিয়ং দবাগ্নিশোভামুদবহৎ। নিদর্শনালঙ্কারঃ। ইতি বসন্তবর্ণনম্ ॥২১॥

টিপ্পনী—অরুণিতেতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২১॥

বাঙ্গালা—প্রস্ফুটিত ও উচ্চস্থিত পলাশপুষ্পসমূহ, সমগ্র পর্বত ও সমগ্র বনটাকেই অরুণবর্ণ করিয়া এবং অনবরত পথিকদিগকে সন্তপ্ত করিয়া, দাবানলের শোভা ধারণ করিল ॥২১॥

रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजोरुचः ।
उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसम्पदः ॥२२॥
दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि ।
मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥२३॥
निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृतस्तनाः ।
सरसचन्दनरेणुरनुक्षणं विचकरे च करेण वरोरुभिः ॥२४॥

---

अन्वयः—यत्र शिरीषरजोरुचः रवितुरङ्गतनूरुहतुल्यतां दधति, असौ शुचिः नवमल्लिकाः चिरसौरभसम्पदः विदधत् उपययौ ॥२२॥

टीका—अथ ग्रीष्मवर्णनमारभते, रवीत्यादि । यत्र शुचौ शिरीषरजसां रुचः कान्तयो रवितुरङ्गतनूरुहतुल्यतां सूर्य्याश्वरोमसावर्ण्यं दधति हरिद्वर्णा भवन्तीत्यर्थः । असौ शुचिग्रीष्मः । शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोस्तथा ग्रीष्मे हुतवहेऽपि स्यादिति विश्वः । नवमल्लिकाः । पुष्पे जातीप्रभृतयः स्वलिङ्गा इत्यमरः । पुष्पमूलेषु बहुलमिति बहुलग्रहणात् लुप् लुपि युक्तवद्व्यक्तिवचने भवतः । चिरश्चिरावस्थायिनी सौरभसम्पद् यासान्ताः स्थिरगन्धा इत्यर्थः विदधत् कुर्वन्नुपययौ प्राप्तः ॥२२॥

टिप्पनी—रवीति । अत्र माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२२॥

बाङ्गाला—যে সময়ে শিরীষকুসুমের রেণুর কান্তি, সূর্য্যাশ্বের লোমের সাদৃশ্য ধারণ করে ; সেই গ্রীষ্ম সময়, নবমল্লিকাকুসুমের সৌরভকে চিরস্থায়ী করিয়া উপস্থিত হইল ॥২২॥

अन्वयः—दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि उन्मदभ्रमदलौ मरुति वाति (सति) विलासिभिः मदलौल्यमुपाददे ॥२३॥

टीका—दलितेति । पाटलायाः अवयवा पाटलाः । लुक्प्रकरणे पुष्पमूलेषु बहुलमिति बहुलग्रहणादलुक् । तिष्ठति कुड्मलान्यस्य दलिता विभिन्नाः कोमलाः पाटलकुड्मला येन तस्मिन् निजवधूनां श्वसितं निःश्वासमनुविधत्तेऽनुकरोतीति तथोक्ते तादृशेत्यर्थः उन्मदा अमन्दभ्रमन्तोऽलयो यस्मिन् तस्मिन् उन्मदभ्रमदलौ मरुति ग्रीष्मानिले वाति वहति सति । वातेर्लटः शत्रादेशः । विलासिभिर्विलसनशीलैः कामिभिः । वौ कषलसकत्थस्रम्भ इति घिनुण्प्रत्ययः । मदेन लौल्यस्य चापल्यमुपाददे सञ्जातमित्यर्थः ॥२३॥

टिप्पनी—दलितेति । अत्र प्रथमे पादे छत्यनुप्रासः द्वितीये चार्थोपमा छेकानुप्रासश्च, तृतीये पुनरुक्तानुप्रासः, चतुर्थे च यमकमित्येतेषां संसृष्टिः । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२३॥

বাঙ্গালা—বায়ু, কোমল পাটলাফুলের কলিকাগুলিকে প্রস্ফুটিত করিয়া, আপন স্ত্রীর নিশ্বাসবায়ুর অনুকরণ করিয়া এবং উন্মত্ত ভ্রমরগণকে ভ্রমণ করাইয়া বহিত হইতে থাকিলে, বিলাসী লোকেরা কামচাঞ্চল্য প্রাপ্ত হইল ॥২৩॥

स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा ।
जलधरावलिरप्रतिपालितस्वसमया समयाज्जगतीधरम् ॥२५॥
गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे ।
अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रहः ॥२६॥

---

अन्वयः—वरोरुभिः तत्क्षणस्नपनवारितुषारभृतस्तनाः दयितोरसि निदधिरे, करेण सरसचन्दनरेणुः अनुक्षणं विचकरे च ॥२४॥

टीका—निदधिर इति । वरोरुभिः स्त्रीभिः तत्क्षणस्नपनेन सद्यःसेकेन वारितुषारभृतो जलशीकरधारिण इत्यर्थः । तुषारौ हिमशीकराविति शाश्वतः । स्तना दयितोरसि निदधिरे निहिताः तेषां सन्तापशान्तये स्नानाद्राङ्गा एव आलिङ्गन्नित्यर्थः । किञ्च करेण पाणिना सरस आर्द्रश्चन्दनरेणुः घृष्टचन्दनपङ्कश्चानुक्षणं विचकरे विकीर्णः । किरतेः कर्मणि लिट् ऋच्छत्यृतामिति गुणः । करेणुकरोरुभिरिति पाठस्तु उरूत्तरपदादौपम्य इत्यूङ्प्रसङ्ग इयः । इति ग्रीष्मवर्णनम् ॥२४॥

टिप्पनी—निदधिर इति । अत्र सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२४॥

বাঙ্গালা—স্ত্রীলোকেরা সদ্যঃ স্নান করায় জলবিন্দুযুক্ত স্তনগুলিই প্রিয়তমদিগের বক্ষঃস্থলে নিয়া সংস্থাপিত করিল এবং হস্ত দ্বারা আর্দ্র চন্দনের রেণুসকল অঙ্গে নিক্ষেপ করিতে থাকিল ॥২৪॥

अन्वयः—स्फुरदधीरतडिन्नयना अगलितोरुपयोधरा अप्रतिपालितस्वसमया जलधरावलिः प्रियम् इव जगतीधरं मुहुः समयात् ॥२५॥

टीका—अथ वर्षावतारमाह, स्फुरदिति । स्फुरन्ती अधीरे चञ्चले तडितौ नयने इव तडिन्नयने यस्याः सा अगलिता अरिक्ता उरुपयोधरा मेघा यस्याम् अन्यत्र ऊरू च पयोधरौ च ऊरुपयोधरम् । प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः. न गलितं न पतितं यस्याः सा जलधरावलिः मेघपङ्क्तिः अत्र जलधारावली: पयोधराणाञ्चावयवावयविभावात् पृथङ्निर्देशः । अप्रतिपालितस्वसमया अनपेक्षितनिजवेला सती एकत्र यौगपद्यादन्यत्र धैर्याच्चेति भावः । जगतीधरं रैवतकं भूधरम्प्रियमिव समयात् समागच्छत् । यातेर्लङ् । पयोजगतीशब्दयोः पचाद्यजन्तेन धरशब्देन षष्ठीसमासः । अत्र विशेषणमहिम्ना जलधरावलौ नायिकात्वप्रतीतेः समासोक्तिः सा तु प्रियमिवेत्युपमयाङ्गेन सङ्कीर्यते ॥२५॥

टिप्पनी—स्फुरदिति । अत्र यमकेन सह टीकोक्तसङ्करस्य पुनः संसृष्टिः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२५॥

বাঙ্গালা—মেঘমালা, চঞ্চল বিদ্যুৎস্বরূপ নয়ন উন্মীলিত করিয়া, প্রিয়তমের ন্যায় রৈবতকপর্বতের নিকট আসিল ; তাহার বিশাল পয়োধর গলিত হইয়াছিল না এবং সে আপন নির্দ্দিষ্ট সময় প্রতিপালন করিয়াছিল না ॥২৫॥

अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् ।
धृतधनुर्वलयस्य पयोमुचः शबलिमा बलिमानमुषो वपुः ॥२७॥
द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥२८॥

---

अन्वयः—नभसि अम्बरे गजकदम्बकमेचकम् उच्चकैः नवाम्बुदं वीक्ष्य अङ्गना एकरसं कं वल्लभं एतुः न चकमे न अभिससार च ॥२६॥

टीका—गजेति । नभसि श्रावणमासे । नभः श्रावणिकश्च स इत्यमरः । अम्बरे व्योम्नि गजकदम्बकमिव मेचकं श्यामलम् । कालश्यामलमेचका इत्यमरः । उच्चैरैवोच्चैस्तनं नवाम्बुदं वीक्ष्य अङ्गना एकः एकायनः रसो रागी यस्य तम् एकरसं तिरस्कृतनवान्तरमित्यर्थः । कं वल्लभम्प्रियं वत्र एकान्ते न चकमे न कामयते वा तथा नाभिससार च सर्वं वल्लभं सर्वापि तत्तदङ्गना चकमे अभिससार चेति । नवाम्बुदस्योद्दीपकत्वादित्ययोक्तिः तत्र कामनापूर्वकत्वादभिसरणस्य तयोरर्थक्रमबलीयस्त्वन्यायेन यमकवशात् यातपाठक्रमबाधेन योजना न्याय्यैव ॥२६॥

टिप्पनी—गजेति । अर्थापत्तिः, वृत्त्यनुप्रासः, यमकञ्च इत्येतेषां संसृष्टिः । सम्भोगशृङ्गारो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—রমণী, শ্রাবণমাসে আকাশে হস্তি সমূহের ন্যায় শ্যামবর্ণ ও উন্নত নূতন মেঘ দেখিয়া, একান্তরাগী কোন্ প্রিয়তমকে নির্জ্জন স্থানে কামনা না করিয়াছিল এবং কোন্ প্রিয়তমের প্রতিই বা অভিসরণ না করিয়াছিল ॥২৬॥

অন্বয়:—धृतधनुर्वलयस्य पयोमुचः शबलिमा विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकं बलिमानमुषः वपुः अनुययौ ॥२७॥

टीका—अनुययाविति । धृतधनुर्वलयस्य धृतेन्द्रचापमण्डलस्य पयोमुचो मेघस्य सम्बन्धी शबलस्य भावः शबलिमा विचित्रता । पृथ्वादिभ्य इमनिज्वा । विविधा नानावर्णा उपला मणयो ययोस्तयोः कुण्डलयोः द्युतिवितानकेन कान्तिपुञ्जेन संवलिता मिलिता अंशवो निजनीलभासो यस्य तत्तथोक्तम् । शेषाद्विभाषेति कप्प्रत्ययः । बलिमानमुषो बल्यसुराहङ्कारापहरस्य हरेर्वपुरनुययौ अनुचकार तद्वद् बभावित्यर्थः । उपमालङ्कारः ॥२७॥

टिप्पनी—अन्विति । अत्र माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—মেঘমালা, মণ্ডলীকৃত ইন্দ্রধনু ধারণ করিয়াছিল; সুতরাং তাহাতে বৈচিত্র্য জন্মিয়াছিল; এদিকে নানাবিধ মণিখচিত কর্ণকুণ্ডলের কিরণরাশি পতিত হওয়ায় নারায়ণের শরীরেও বৈচিত্র্য জন্মিয়া থাকে; অতএব মেঘের ঐ বৈচিত্র্য, নারায়ণের শরীরের সেই বৈচিত্র্যের অনুকরণ করিয়াছিল ॥২৭॥

অন্বয়:—द्रुतसमीरचलैः वारिदैः क्षणलक्षितव्यवहिता अचिररोचिः (द्रुतसमीरचलैः) विटपैः (क्षणलक्षित व्यवहिता) नवतमालनिभस्य नभस्तरोः मञ्जरी इव अरोचत ॥२८॥

पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती।
सनयनाम्बु सखीजनसम्भ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥२९॥
प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः।
नमयति स्म वनानि मनस्विनीजनमनोनमनो घनमारुतः ॥३०॥

---

टीका—द्रुतेति। द्रुतसमीरेण शीघ्रमारुतेन चलैर्वारिदैः चणं लक्षिता च व्यवहिता च सा चणलक्षितव्यवहिता चणिकाविर्भावतिरोधानेत्यर्थः। स्नातानुलिप्तवत् पूर्वकाल-एकेत्यादिना समासः। अचिरं रोचिर्यस्याः सा अचिररोचिर्विद्युत् द्रुतसमीरचलैः विटपैः शाखाभिः चणलक्षितव्यवहिता नवतमालनिभस्य नवतमालेन सदृशस्य तद्वन्नीलस्येत्यर्थः। नित्यसमासः। नभस्तरुरिव तस्य नभस्तरोर्मञ्जरी गुच्छ इवारोचत। उपमालङ्कारः। अत्र नभस्तरोर्नभः श्रेष्ठस्येति व्याख्याने तरुशब्दस्य व्याघ्रादिवच्छ्रेष्ठार्थगोचरत्वात् तमाल-शब्देन विशेषवाचिना तन्नीलसामान्येन पौनरुक्त्यमिति वल्लभः। तमालशब्दस्येन्द्रनील-वन्नीलमालोपमानत्वात्तरुशब्दस्य स्वार्थवृत्तित्वेऽपि न पौनरुक्त्यमित्यन्ये ॥२८॥

टिप्पनी—द्रुतेति। अत्र माधुर्यं गुणः, वैदर्भी च रीतिः ॥२८॥

বাঙ্গালা—বেগবান্ বায়ুর প্রেরণায় মেঘসকল চলিতেছিল; তাহাতে ক্ষণকাল বিদ্যুৎ দেখা যাইতেছিল, এবং ক্ষণকাল আবৃত হইতেছিল; আবার বেগবান্ বায়ুর প্রেরণায় শাখাও চলিতে থাকে, তাহাতে ক্ষণকাল মঞ্জরীও দেখা যায় এবং ক্ষণকাল আবৃতও হইয়া যায়, আকাশও নূতন তমাল তরুর ন্যায় শ্যামবর্ণ ছিল; সুতরাং তমালতরুর মঞ্জরীর ন্যায় বিদ্যুৎ শোভা পাইতেছিল ॥২৮॥

अन्वयः—पथिकाङ्गना जीवितसंशयमेष्यती सनयनाम्बु सखीजनसम्भ्रमात् विधुरबन्धुः (सती) अम्बु-मुचां पटलं अबन्धुरम् ऐक्षत ॥२९॥

टीका—पटलमिति। पथिकाङ्गना काचित् प्रोषितभर्तृका अतएव सपदि जीवित-संशयं मरणमेष्यती निश्चितमरणेत्यर्थः। आच्छीनद्योर्नुमिति विकल्पान्नुमभावः। अत-एव सनयनाम्बोः सवाष्पस्य सखीजनस्य संभ्रमात् क्षोभात् विधुरबन्धुः संभ्रमदर्शनात् विह्वलबन्धुजना सती अम्बुमुचां पटलम् अबन्धुरमशोभनं सदैन्यरोषमिति यावत्। ऐक्षत। ईक्षतेर्लङ्। आटश्चेति वृद्धिः। हन्त विरहवेदनाक्षमा या नायिका सा मरणसाधनमेघपट-लावेक्षणवशं नायां तद्वियोगलक्षणा मरणावस्थोक्ता सा हि द्विविधा तद्वियोगस्तद्योगश्चेत्याहुः। दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेत्यवस्था-संग्रहः ॥२९॥

टिप्पनी—पटलमिति। अत्र माधुर्यं गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—বিরহের যাতনায় কোন বিরহিণী রমণীর মরণ নিশ্চয় হইয়াছিল; তাহাতে সখীরা অশ্রুজল ত্যাগ করিতে থাকিয়া শোক প্রকাশ করিতেছিল; সেই জন্য

जलदपङ्क्तिरनर्त्तयदुन्मदं कलविलापि कलापिकदम्बकम् ।
कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसम्पदा ॥३१॥
नवकदम्बरजोऽरुणिताम्बरैरधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः ।
मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥३२॥

---

अन्यान्य बन्धुजनेরাও আকুল হইয়াছিল ; এই সময়ে সেই বিরহিণী, মেঘসমূহকে তীক্ষ্ণদৃষ্টিতে দেখিয়াছিল ॥২৯॥

अन्वयः—विदलकन्दलकम्पनलालितः मनस्विनीजनमनोनमनः घनमारुतः प्रवसतः सुतरामुदकम्पयत् वनानि (च) नमयति स्म ॥३०॥

टीका—प्रवसत इति। कन्दली भूकन्दली। द्रोणपर्णी स्निग्धकन्दा कन्दली भूमिकन्दलीति शब्दार्णवः। तस्याः पुष्पाणि कन्दलानि। फले लुगित्यणो लुक्। विदलानां विकचानां कन्दलानां कम्पनेन अवधूननेन लालितः उपस्कृतः मनस्विनीजनस्य मनसां नमनो नमयिता मानिनीमानभञ्जन इत्यर्थः। कर्त्तरि ल्युट्। घनमारुतो मेघवायुः वनानि नमयति स्म प्रवसतः प्रोषितान् सुतरामुदकम्पयत उद्वेजितवान् मनस्विनीमानमर्दनस्य वननमनं प्रोषितकम्पनं वा कियदिति भावः ॥३०॥

टिप्पनी—प्रवसत इति। अत्र प्रथमे पादे छेकानुप्रासः, द्वितीयतृतीययोः वृत्त्यनुप्रासः, चतुर्थे च यमकमिति सर्वेषां संसृष्टिः। तथा उदकम्पयदित्यभिधाय नमयतीत्यभिधानात् प्रत्ययविषयो भग्नप्रक्रमतादोषः, तथा नमतीत्यनन्तरं चकारो वक्तव्यः किन्तु नोक्त इति वाच्यानभिधानदोषश्च। तयोः समाधानाय तृतीयपाद एवं पठनीयः "अनमयच्च वनानिमनस्विनी"। करुणविप्रलम्भशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥३०॥

বাঙ্গালা—মেঘের বায়ু প্রস্ফুটিত ভূমিকদলীপুষ্প কম্পিত করায় সৌরভশালী হইয়া মনস্বিনী মানিনী রমণীগণের মানভঞ্জন করিয়া, প্রবাসী লোকদিগকে উদ্বিগ্ন করিল এবং বনগুলিও নমিত করিতে লাগিল ॥৩০॥

अन्वयः—निजया स्वनसम्पदा कृतसमार्जनमर्दलमण्डलध्वनिजया जलदपङ्क्तिः उन्मदं कलविलापि कलापिकदम्बकम् अनर्त्तयत् ॥३१॥

टीका—जलदेति। निजया आत्मीयया स्वनसम्पदा कृतः समार्जनस्य मार्जनाख्यसंस्कारसहितस्य मर्दलमण्डलस्य ध्वनेर्जयो यया सा तथोक्ता मार्जनं नाम मर्दलानां ध्वननार्थमभ्यस्मृदितान्नैः पुष्करलेपनम्। जलदपङ्क्तिरुन्मदमुत्कटमदं कलविलापि मधुरालापि कलापिकदम्बकं मयूरवृन्दमनर्त्तयत् ॥३१॥

टिप्पनी—जलदेति। अत्र द्वितीयपादे वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तृतीये वृत्त्यनुप्रासः चतुर्थे च यमकमिति संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥३१॥

বাঙ্গালা—মেঘসমূহ, নিজের গর্জনে গাব দেওয়া জয়ঢাকের শব্দকে জয় করিয়া, মদমত্ত এবং অস্পষ্টমধুরশব্দকারী ময়ূরদিগকে নাচাইতে লাগিল ॥৩১॥

शमिततापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम्।
प्रविरलैरचलाङ्गनमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥३३॥
द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम्।
घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥३४॥

---

अन्वयः—नवकदम्बरजोऽरुणिताम्बरैः शिलीन्ध्रसुगन्धिभिः वनवायुभिः अधिपुरन्ध्रि रागवतां मनसि नवनवा अनुरागिता आदधे ॥३२॥

टीका—नवेति। नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशं यैस्तैः शिलीन्ध्राणां कन्दलीकुसुमानां यः सुगन्धः स एषामस्तीति शिलीन्ध्रसुगन्धिनः तैः। गन्धस्येत्वे तदेकान्तग्रहणादिन्प्रत्ययाश्रयणम्। कदल्याश्च शिलीन्ध्रः स्यादिति शब्दार्णवे। वनवायुभिः पुरन्ध्रीषु स्त्रीषु विषये अधिपुरन्ध्रि। विभक्त्यर्थेऽव्ययीभावः। रागवतां कामिनां मनसि नवनवा नवप्रकारा। प्रकारे गुणवचनस्येति द्विर्भावः कर्मधारयवद्भावात् सुपो लुक्। अनुरागिता आदधे अनुराग उत्पादित इत्यर्थः ॥३२॥

टिप्पनी—नवेति। अत्र प्रथमे तृतीये च पादे छेकानुप्रासः, द्वितीये वृत्त्यनुप्रासः, चतुर्थे च यमकमिति संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—বন্য বায়ু, নূতন কদম্বপুষ্পের রেণুদ্বারা আকাশকে অরুণবর্ণ করিয়া এবং ভূমিকদলীপুষ্পের সংস্পর্শে সুগন্ধী হইয়া, কামিনীদিগের অভিলাষী পুরুষদিগের চিত্তে নূতন নূতন অনুরাগ জন্মাইতে লাগিল ॥৩২॥

अन्वयः—अम्बुमुचः प्रविरलैः अम्भसां प्रथमबिन्दुभिः शमिततापम् अपोढमहीरजः सुगन्धि अचलाङ्गनम् अङ्गनाजनसुगं न चक्रिरे (इति) न ॥३३॥

टीका—शमितेति। अम्बुमुचो मेघाः प्रविरलैरम्भसां प्रथमबिन्दुभिः शमिततापमपोढमहीरजो निरस्तधूलिकं न तु पङ्कितमिति भावः। सुगन्धि सन्तप्तसेकादुद्भूतसौरभम्। इह तदेकान्तत्वाद्गन्धस्येत्वम्। अचलाङ्गनं रैवतकाङ्गनम्। अङ्गनस्त्वजिर इत्यमरः। अङ्गनाजनस्य सुखेन गच्छत्यस्मिन्निति सुगं सुखसञ्चारमित्यर्थः। सुदुरोरधिकरणे इति गमेर्डप्रत्यये टिलोपः। न न चक्रिरे चक्रिरे इत्यर्थः। द्वौ नञौ प्रकृतमर्थं गमयतः ॥३३॥

टिप्पनी—शमितेति। अत्र तृतीयपादे छेकानुप्रासः, चतुर्थे च यमकमित्यनयोः संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३३॥

বাঙ্গালা—মেঘের অল্প অল্প প্রথম জলবিন্দুবৃষ্টি, গ্রীষ্মের তাপ নিবারণ করিল; ভূতলের ধূলি নিবৃত্তি করিল এবং পার্বত্য স্থান গুলিকে সৌরভময় করিয়া রমণীগণেরও সুখসঞ্চারের যোগ্য করিয়া দিল ॥৩৩॥

अन्वयः—द्विरददन्तवलक्षं स्फुरितभृङ्गमृगच्छवि केतकं घनघनौघविघट्टनया दिवः च्युतं कृशशिखं शशिखण्डम् इव अलक्ष्यत ॥३४॥

दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः ।
कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥३५॥
नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः ।
प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिराददे ॥३६॥

---

टीका—द्विरदेति । द्विरददन्तवलक्षं गजदन्तधवलम् वलक्षो धवलोऽर्जुन इत्यमरः। भृङ्गो मृग इव भृङ्गमृगः तस्य छविः सा स्फुरिता यस्मिन् तत्तथोक्तं केतक्याः पुष्पं केतकम् । पुष्पमूलेषु बहुलमित्यणो लुक् नादिवद्धिः लुक् तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् । घनघनौघविघट्टनया निविड़मेघसङ्घोपघातेन दिवोऽन्तरिक्षात् च्युतं शशिखण्डं सूक्ष्माग्रं शशिखण्डमिवालक्ष्यतेत्युत्प्रेक्षा ॥३४॥

टिप्पनी—द्विरदेति । अत्र प्रथमे पादे छेकानुप्रासः, प्रथमपादद्वये लुप्तोपमाद्वयम्, तृतीये छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, चतुर्थे च यमकमुत्प्रेक्षा चेति समुदाये संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥३४॥

বাঙ্গালা—নিবিড় মেঘসমূহের আঘাতে আকাশ হইতে পতিত কৃশাগ্র চন্দ্রখণ্ডের ন্যায় কেতকীপুষ্পকে দেখা যাইতেছিল; কেন না, সেই কেতকীপুষ্প, হস্তিদন্তের ন্যায় শুভ্রবর্ণ ছিল এবং হরিণের ন্যায় ভ্রমরের কান্তি প্রকাশ পাইতেছিল ॥৩৪॥

अन्वयः—दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः कुटजपुष्पपरागकणाः स्फुटं दधिरेणुविडम्बनां विदधिरे ॥३५॥

टीका—दलितेति । दलितमौक्तिकानां निष्पिष्टमुक्ताफलानाञ्चूर्णं इव विपाण्डवोऽतिशुभ्राः स्फुरिता ये निर्झराणां शीकराः कणास्त इव चारवः कुटजपुष्पपरागकणाः स्फुटं दधिरेणुविडम्बनां दधिचूर्णानुकारं विदधिरे चक्रिरे तद्वद् बभुरित्यर्थः । पूर्वोपमानद्वयानुप्राणितेयमुपमेति सङ्करः ॥३५॥

टिप्पनी—दलितेति । अत्र टीकोक्तसङ्करस्य यमकेन सह पुनः संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥३५॥

বাঙ্গালা—নিষ্পেষিত মুক্তাচূর্ণের ন্যায় অত্যন্ত শুভ্রবর্ণ এবং ঝরণার উজ্জ্বল জলকণার ন্যায় মনোহর কুটজপুষ্পের রেণুকণাগুলি, স্পষ্টই দধিকণার সাদৃশ্য ধারণ করিল ॥৩৫॥

अन्वयः—नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः प्रचलितोडुनिभैः अलिभिः शुभ्ररजोभरजः परिपाण्डिमा आददे ॥३६॥

टीका—नवेति । नवपयःकणावन्नवोदकविन्दुवत् कोमलानां मालतीकुसुमानां जातीपुष्पाणां सन्ततिषु सन्ततसङ्गिभिर्निरन्तरासक्तैः । सुमना मालती जातीत्यमरः । अतएव प्रचलितोडुनिभैः परागमूषणात् सञ्चरन्नक्षत्रकल्पैरिवेत्युत्प्रेक्षा । अलिभिः शुभाद्रजोभरात् परागपुञ्जाज्जातः शुभरजोभरजः परिपाण्डिमा धवलिमा आददे स्वीकृतः ॥३६॥

निजरजः पटवासमिवाकिरद्धृतपटोपमवारिमुचां दिशाम् ।
प्रियवियुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥३७॥
प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमथाङ्गना ववलिरे वलिरेचितमध्यमाः ॥३८॥

---

**टिप्पनी**—नवेति। अत्र "प्रचलितोडुनिभैः परागमूषणात् सचरत्षचञ्चली रवेत्युत्प्रेक्षा" इति मल्लिनाथः। एतत्तु चिन्त्यम् नक्षत्रप्रचलनस्य क्वचिदप्रसिद्धत्वात्। वस्तुतस्तु लुप्तोपमा तद्गुण यमकानां संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥३६॥

**বাঙ্গালা**—নূতন জলবিন্দুর ন্যায় কোমল মালতীফুলের সহিত সর্বদা সংসর্গ করায়, তাহার রেণু লাগিয়াছিল বলিয়া ভ্রমরগুলি শুভ্রবর্ণ ধারণ করিয়াছিল এবং চলনশীল নক্ষত্র-সমূহের ন্যায় হইয়াছিল ॥৩৬॥

**अन्वयः**—प्रियवियुक्तवधूजनचेतसाम् अनवनी नवनीपवनावलिः धृतपटोपमवारिमुचां दिशां पटवासम् इव निजरजः अकिरत् ॥३७॥

**टीका**—निजेति। पियवियुक्तवधूजनचेतसाम्। कर्मणि षष्ठी। अनवनी अर-क्षत्री किन्तु घ्नन्तीत्यर्थः। अवतेः कर्त्तरि ल्युटि ङीप्। नवनीपवनावलिः नवकदम्बकानन-पङ्क्तिः धृताः पटोपमाः पटकल्पा वारिमुचो मेघा याभिस्ताः मेघपटावृता इत्यर्थः। तासा-न्दिशां निजरजः स्वपरागम्पटवासं पिधानमिवेत्युत्प्रेक्षा अकिरत् अक्षिपत् सखीवदिति भावः ॥३७॥

**टिप्पनी**—निजेति। अत्र आर्थीपमोत्प्रेक्षायमकानां संसृष्टिरलङ्कारः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥३७॥

**বাঙ্গালা**—বিরহিণী রমণীদিগের মনে অত্যন্তদুঃখজনক কদম্ববনশ্রেণী, বস্ত্রতুল্য মেঘমালাধারী দিক্‌সমূহের গাত্রাবরণের ন্যায় নিজের (কদম্বের) রেণুসমূহ নিক্ষেপ করিতে লাগিল ॥৩৭॥

**अन्वयः**—प्रणयकोपभृतः अपि पराङ्मुखाः सपदि वारिधरारवभीरवः अथ प्रणयिनः परिरब्धुं वलि-रेचितमध्यमाः (सत्यः) ववलिरे ॥३८॥

**टीका**—प्रणयेति। प्रणयकोपभृतः अतएव पराङ्मुखाः विमुखा अपि। स्वाङ्गाच्चोप-सर्जनादसंयोगोपधादिति विकल्पादाकारः। सपदि वारिधरारवेभ्यो गर्जितेभ्यो भीरवो भीताः स्त्रिय इति शेषः। अथ अनन्तरङ्गर्जिताकर्णनानन्तरमेव प्रणयिनः प्रियान् परि-रब्धुमालिङ्गितुं वलिरेचितान्यालिङ्गनार्थमङ्गप्रसारणात् त्रिवलिरिक्तीकृतानि मध्यमान्यव-लग्नानि यासान्ताः सत्यो ववलिरे प्रवृत्ताः। वलतेर्वकारादित्वान्न प्रसद्दत्वादिगुणाना-मित्येत्वाभ्यासलोपप्रतिषेधः ॥३८॥

विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकै रनन्ृते नन्ृते नवपल्लवैः ॥३९॥
अरमयन् भवनादचिरद्युतेः किल भयादपयातुमनिच्छवः ।
यदुनरेन्द्रगणन्तरुणीगणास्तमथ मन्मथमन्थरभाषिणः ॥४०॥

---

टिप्पनी—प्रणयेति । अत्र आलिङ्गनप्रवृत्तिं प्रति वारिधरारवभीरव इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, द्वितीये पादे छन्त्यनुप्रासः चतुर्थे च यमकमिति संसृष्टिः । गुणरीती पूर्ववत् ॥३८॥

বাঙ্গালা—যুবতিরা প্রণয়কোপবশতঃ পরাঙ্মুখ হইয়া রহিয়াছিল, হঠাৎ মেঘের গর্জনে ভীত হইল; তাহার পর, প্রণয়ীদিগকে আলিঙ্গন করিবার জন্য হস্ত উত্তোলন করিল; তখন তাহাদের পেটের থরগুলি সমান হইয়া গেল; এই অবস্থায় তাহারা আলিঙ্গনে প্রবৃত্ত হইল ॥৩৮॥

अन्वयः—पयोदनभस्वति वाति (सति), विगतरागगुणः अपि कः जनः न चलति? एवम् अलिभिः उच्चकैः अनन्ृते अभिहिते (सति) नवपल्लवैः नन्ृते इव ॥३९॥

टीका—विगतेति । पयोदनभस्वति मेघमारुते वाति वहति सति । वातेर्लटः शत्रादेशः । विगतरागगुणो विरक्तोऽपि को नरो न चलति सर्वोऽपि चलत्येवेत्यर्थः । एवमलिभिरुच्चकैरुच्चैःस्वरामन्ृतमसत्यं न भवतीत्यनन्ृतं तस्मिन् अनन्ृते सत्यवचने अभिहिते सति नवपल्लवैर्नन्ृत इव नृत्यं कृतमिवेत्युत्प्रेक्षा । नृतेर्भावे लिट् ॥३९॥

टिप्पनी—विगतेति । अत्र प्रथमार्द्धे अर्थापत्तिः ; द्वितीयार्द्धे क्रियोत्प्रेक्षा यमकञ्च इत्येतेषां संसृष्टिः । गुणरीती पूर्ववत् ॥३९॥

বাঙ্গালা—'মেঘের বায়ু বহিত হইতে থাকিলে, কোন্ ব্যক্তি বিরাগী হইয়াও চঞ্চল না হইয়া থাকে' ভ্রমরগণ উচ্চৈঃস্বরে এইরূপ সত্য বাক্য বলিলে, নূতন পল্লবগুলি যেন নৃত্য করিতে (চঞ্চল হইতে) লাগিল ॥৩৯॥

अन्वयः—अचिरद्युतेः भयात् किल भवनात् अपयातुम् अनिच्छवः अथ मन्मथमन्थरभाषिणः तरुणीगणाः तं यदुनरेन्द्रगणम् अरमयन् ॥४०॥

टीका—अरमयन्निति । अचिरद्युतेर्विद्युतो भयात् किल भयादिव न तु तथा किन्तु रागादेवेति भावः । किलेत्यलीके । भवनाद्गृहमध्यगृहादपयातुं निर्गन्तुमनिच्छवः अयत्न-जातत्त्रैव स्थिता इति भावः । विन्दुरिच्छुरित्युप्रत्ययान्तौ निपातः । मन्मथेन मन्थरमल-सम्भाषन्त इति मन्मथमन्थरभाषिणः कामवश्या इत्यर्थः तरुणीगणाः तम्प्रकृतं यदव एव नरेन्द्रास्तेषां गणमरमयन् रमयन्ति स्म । अत्र भयेन रागनिगूहनान्मीलनालङ्कारः । मीलनं वस्तुना यत्रवस्त्वन्तरनिगूहनमिति लक्षणात् । सोऽप्यागन्तुकेन भयेन सहजरागतिरोधानादाग-न्तुकेन सहजतिरोधानरूपः ॥४०॥

ददतमन्तरिताहिमदीधितिं खगकुलाय कुलायनिलायिताम् ।
जलदकालमबोधकृतं दिशामपरथाप रथावयवायुधः ॥४१॥
स विकचोत्पलचक्षुषमैक्षत क्षितिभृतोऽङ्कगतां दयितामिव ।
शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्त्तनः ॥४२॥

---

टिप्पनी—चरमयसीति । अत्र टीकोक्तमीलितालङ्कारेण सह यमकस्य संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४०॥

বাঙ্গালা—যুবতিরা বিদ্যুতের ভয় ছল করিয়া বাসগৃহ হইতে যাইতে ইচ্ছা করিয়াছিল না ; তাহার পর, কামবশতঃ মৃদুমন্দ স্বরে কথা বলিতে লাগিয়া সে যদুবংশীয় রাজগণের সহিত রমণ করিতে আরম্ভ করিয়াছিল ॥৪০॥

अन्वयः—रथावयवायुधः अन्तरिताहिमदीधितिं खगकुलाय कुलायनिलायितां ददतं दिशाम् अबोधकृतं जलदकालम् अपरथा आप ॥४१॥

टीका—अथ शरद्वर्णनमारभते । ददतमिति । रथावयवायुधश्चक्रायुधो हरिरन्तरिताहिमदीधितिं तिरोहितोष्णांशुं तथा खगकुलाय पक्षिसङ्घाय कुलायेषु नीडेषु निलीयन्त इति कुलायनिलायिनः । कुलायो नीडमस्त्रियामित्यमरः तेषां भावस्तत्ता तां ददतं प्रयच्छन्तं पक्षिसञ्चारं प्रतिबध्नन्तमित्यर्थः । नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः । दिशामिति । कर्मणि षष्ठी । अबोधकृतम् अबोधकारिणं मेघावरणेन प्राच्यादिविवेकं लुम्पन्तमित्यर्थः जलदकालम् प्रावृट्कालम् अपरथा प्रकारान्तरेण आप प्राप । मेघोदयोपाधिना प्रावृट्व्यवहारभाजं तमेव कालं मेघात्ययोपाधिना शरत्त्वेनोपलेभे इत्यर्थः कालो हि एक एव सन्ननेकोपाधिसम्बन्धान्नानात्वेनोपचर्य्यत इति तद्विदः ॥४१॥

टिप्पनी—ददतमिति । अत्र द्वितीये चतुर्थे च पादे यमकमित्युभयोः संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥४१॥

বাঙ্গালা—বর্ষাকাল সূর্য্যকে আবৃত করিয়াছিল, পক্ষীগুলিকে তাহাদের বাসায় লুকাইয়া রাখিয়াছিল এবং দিক্ ঠিক্ করিবার পক্ষে বাধা দিয়াছিল , শ্রীকৃষ্ণ সেই বর্ষাকালকেই অন্যরূপে পাইয়াছিলেন (শরৎকালরূপে অনুভব করিয়াছিলেন)॥৪১॥

अन्वयः—अघनाशनकीर्त्तनः सः विकचोत्पलचक्षुषम् अच्छगलद्वसनोपमाक्षमघनां शरदं क्षितिभृतः अङ्कगतां दयिताम् इव ऐक्षत ॥४२॥

टीका—स इति । अघानां नाशनं निवर्त्तनं कीर्त्तनं यस्य सोऽघनाशनकीर्त्तनः स हरिर्विकचमुत्पलमेव चक्षुर्यस्यास्तामच्छं शुभ्रं गलत् स्रंसमानं यद् वसनं तस्योपमा सादृश्यं तस्याः क्षमा योग्या घना मेघा यस्यां सा ताम् अतएव क्षितिभृतोऽङ्कगतामुत्सङ्गगतां दयितामिवेत्युत्प्रेक्षा । शरदमैक्षत ॥४२॥

टिप्पनी—स इति । अत्र प्रथमे पादे रूपकच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीये

जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः।
जलजराजिषु नैद्रमदिद्रवन्न महतामहताः क च नारयः ॥४३॥
समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयताम् ॥४४॥

---

टीकोक्ता उत्प्रेक्षा तृतीये चार्थोपमा, चतुर्थे च यमकमिति समुदाये संसृष्टिः। माधुर्यं गुणः पाञ्चाली च रीतिः ॥४२॥

বাঙ্গালা—শ্রীকৃষ্ণ, রাজার ক্রোড়বর্ত্তিনী প্রিয়তমার ন্যায় শরৎকালকে দেখিতে পাই-লেন; কেন না, প্রস্ফুটিত পদ্মই ছিল সেই শরৎকালের চক্ষু এবং স্খলিত নির্ম্মল বস্ত্রের ন্যায় ছিল মেঘ ॥৪২॥

अन्वयः—अशीतकरः करैः जगति नैशं तमः अदिद्रवत्, वियति वारिदवृन्दमयं तमः अदिद्रवत्, जलजराजिषु नैद्रं तमः (च) अदिद्रवत्। (तथा च) महताम् अरयः क च न न अहताः (तिष्ठन्ति ?) ॥४३॥

टीका—जगतीति। अशीतकर उष्णांशुः करैः स्वांशुभिः जगति लोके निशायाम्भवं नैशम्। निशाप्रदोषाभ्याञ्चेति विकल्पादण्प्रत्ययः। तमस्तिमिरमदिद्रवत् द्रावयति स्म निरस्तवानित्यर्थः। द्रुगतौ णौ चङि उपधाया ह्रस्वः सन्वद्भावः स्रवतिशृणोतिद्रवतिप्रवति-प्लवतिच्यवतीनां वेत्यभ्यासस्य विकल्पादित्वम्। वियत्याकाशे वारिदवृन्दमयं मेघसङ्घरूपम्। स्वार्थे मयट्। तमः अदिद्रवत् जलजराजिषु निद्रामेव नैद्रं निमीलनं तदेव तमः अदिद्रवत्। तथाहि, महतां महात्मनाम्। अरयः क च क्व वा न नाहताः अहता न किन्तु सर्वत्र हता भवन्तीत्यर्थः द्वितीयनिषेधसापितस्य प्रकृतार्थस्य हननस्य तृतीयेन निषेधः पुनः क्वेति क्वशब्दसामर्थ्यात् प्रकृतार्थपर्य्यवसानम्। वैधर्म्येण सामान्याद्विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥४३॥

टिप्पनी—जगतीति। अत्र प्रथमे पादे लाटानुप्रासः, तृतीये छेकानुप्रासः, चतुर्थे च यमकम्, तथा अदिद्रवदित्येकया क्रियया नैशतमःप्रभृतीनां कर्मतयाभिसम्बन्धात् तुल्ययोगिता टीकोक्तः अर्थान्तरन्यासश्चेति संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥४३॥

বাঙ্গালা—সূর্য্য আপন কিরণ দ্বারা জগতের রাত্রির অন্ধকার নাশ করিলেন, আকাশের মেঘময় অন্ধকার দূর করিলেন এবং মেঘমালার নিদ্রাজড়তা নষ্ট করিলেন। কেন না, মহাত্মাদিগের শত্রুগণ কোথায় বিনষ্ট না হয়? ॥৪৩॥

अन्वयः—समयः एव शरीरिणां बलाबलं करोति इति प्रणिगदन्तः इव हंसरवाः शरदि परुषीकृत-स्वरमयूरं रमणीयताम् अयुः ॥४४॥

टीका—समय इति। समयः काल एव शरीरिणां बलाबलं बलाबले। विप्रति-षिद्धं चानधिकरणवाचीति विकल्पात् द्वन्द्वैकवद्भावः। करोतीति प्रणिगदन्त प्रतिपादयन्तः इवेत्युत्प्रेक्षा। नेर्गदनदपतेत्यादिना णत्वम्। शरदि हंसरवाः परुषीकृतस्वरा निष्ठुरी-

तनुरुहाणि पुरोविजितध्वनेर्धवलपक्षविहङ्गमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥४५॥
अनुवनं वनराजिवधूमुखे बहलरागजवाधरचारुणि ।
विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥४६॥

---

जातनादा मयूरा यस्मिन् कर्मणि तत् परुषीकृतस्वरमयूरं यथा तथा रमणीयताम् यु: प्राप्ताः । याते लङि लङः शाकटायनस्यैवेति झेर्जुसादेशः उस्य पदान्तादिति पररूपं संहितायां ढ्लोपे पूर्वस्य दीर्घोऽणः । अरत्युत्कर्षो हंसमयूरकूजिते माधुर्यामाधुर्यं विपर्ययदर्शनात् कालः एव प्राणिनां बलावलनिदानं व्यक्तमभूदित्यर्थः ॥४४॥

**टिप्पनी**—समय इति । अत्र उत्प्रेक्षायमकयोः संसृष्टिः । तथा बलाबलम् इत्यतः परमेव स्थितियोग्यस्य इति शब्दस्य प्राणिगदन्त इत्यनन्तरपाठात् अक्रमतादोषः । उदाहृतश्चैदमेव दर्पणे । 'समय एव करोति बलाबलं इति गदन्त इवासुमतां भुवि' इति पाठेनासौ परिहरणीयः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥४४॥

**বাঙ্গালা**—'একমাত্র সময়ই প্রাণিগণের সবলতা ও দুর্বলতা করিয়া থাকে' ইহা বলিতে থাকিয়াই যেন হংসের রব, আপনি মধুরতা লাভ করিয়া, ময়ূরের রবকে কর্কশ করিয়া দিল ॥৪৪॥

**अन्वयः**—पुरः धवलपक्षविहङ्गमकूजितैः विजितध्वनेः शिखण्डिनः तनुरुहाणि अक्षमया इव जगलुः । हि अरिभव परिभवः सुदुःसहः ॥४५॥

**टीका**—तनुरुहाणीति । पुरोऽग्रे धवलपक्षविहङ्गमाः हंसपक्षिणः । हंसास्तु श्वेतगरुत इत्यमरः । तेषां कूजितैर्विजितध्वनेः शिखण्डिनो मयूरस्य तनौ रुहाणि रूढानि तनुरुहाणि बर्हाणि । इगुपधलक्षणः कप्रत्ययः । अक्षमया हंसकूजितेर्ष्ययेव जगलुर्गलन्ति स्म । कालप्रयुक्तस्य बर्हगलनस्याक्षमाहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । युक्तश्चैतदित्याह । अरिभवः परिभवः सुदुःसहः अत्यसह्यो हि । पराजयदुःखितस्याङ्गसादो युज्यत इति भावः । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः स च पूर्वोत्प्रेक्षया सङ्कीर्यते ॥४५॥

**टिप्पनी**—तनुरुहाणीति । अत्र टीकोक्ताभ्यामुत्प्रेक्षार्थान्तरन्यासाभ्यां सह यमकस्य संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥४५॥

**বাঙ্গালা**—প্রথমে হংসের রবে ময়ূরের রব পরাজিত হইল ; তাহাতে ঈর্ষাবশতঃ যেন ময়ূরের লেজ খসিয়া গেল । কেন না, শত্রুকৃত পরাভব, অত্যন্ত দুঃসহ ॥৪৫॥

**अन्वयः**—अनुवनं बहलरागजवाधरचारुणि वनराजिवधूमुखे रुचिरेक्षणविभ्रमाः विकचबाणदलावलयः अधिकं रुरुचिरे ॥४६॥

**टीका**—अनुवनमिति । अनुवनं प्रतिवनं । बहलो रागो यस्याः सा चासौ जवा च । ओड्रपुष्पं जवेत्यमरः । पुष्पेषु जातीप्रभृतित्वात् स्त्रीलिङ्गता । सैवाधरस्तेन चारुणि रम्ये

कनकभङ्गपिशङ्गदलैर्दधे सरजसारुणकेसरचारुभिः ।
प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता ॥४७॥

मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः ।
धृतनवातपमुत्सुकतामतो न कमलं कमलम्भयदम्भसि ॥४८॥

---

वनराजिरेव वधूस्तस्या मुखं प्राग्भागः तदेव मुखं वक्त्रमिति श्लिष्टरूपकं तस्मिन् रुचिराणां शोणानां विभ्रमः इव विभ्रमः शोभा यासां ताः विकचवाणदलावलयो नीलझिण्टीपलाशपङ्क्तयः । बाणोऽस्त्री नीलझिण्ट्यां चेति वैजयन्ती । अधिकं रुरुचिरे शुशुभिरे । उपमारूपकयोः सङ्करः ॥४६॥

**टिप्पनी**—वनवनमिति । अत्र टीकोक्तसङ्करेण सह यमकस्य पुनः संसृष्टिः । गुणरीती पूर्ववत् ॥४६॥

**বাঙ্গালা**—প্রত্যেক বনেই বনশ্রেণীরূপ বধূর মুখখানি, অত্যন্ত রক্তবর্ণ জবাপুষ্পরূপ ওষ্ঠদ্বারা শোভিত হইয়াছিল এবং তাহাতে সুন্দর নয়নের ন্যায় শোভাযুক্ত ফোটা নীল ঝিন্টিকাফুলগুলি বিশেষ শোভা পাইতেছিল ॥৪৬॥

**अन्वयः**—कनकभङ्गपिशङ्गदलैः सरजसारुणकेसरचारुभिः प्रियविमानितमानवतीरुषां निरसनैः असनैः अवृथार्थता दधे ॥४७॥

**टीका**—कनकेति । कनकभङ्गाः स्वर्णखण्डा इव पिशङ्गानि दलानि येषां तैः सह रजसा सरजसं सरजस्का इत्यर्थः । अतएव न अरजसमित्यव्ययीभाव इति वामनः । अथवा सहार्थविप्रयोगप्राचुर्यं दर्शनादव्ययीभावदर्शनं प्रायिकमिति पक्षाश्रयणात् बहुव्रीह्यर्थेऽपि साधुरेव । तथा च सरजसं सरजसा वा ये अरुणकेसराः तैश्चारुभिः तथा प्रियैः विमानिता अवमानिता मानवत्यो मानिन्यः तासां या रुषो रोषास्तासां निरसनैर्निरासकैः । अस्यतेः कर्त्तरि ल्युट् । असनैः प्रियकप्रसूनैः । सर्जकासनबन्धूकपुष्पप्रियकजीवकाः इत्यमरः । अवृथार्थता माननिरासकत्वादस्यन्तीत्यसनानीत्यन्वर्थनामकत्वं दधे दध्रे । दधातेः कर्मणि लिट् ॥४७॥

**टिप्पनी**—कनकेति । अत्र प्रथमतृतीययोः पादयोश्छेकानुप्रासः, द्वितीये वृत्त्यनुप्रासः, चतुर्थे यमकम् तथा अवृथार्थताधारणं प्रति निरसनैरिति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेति सर्वेषां संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥४७॥

**বাঙ্গালা**—যে গুলির পত্র স্বর্ণখণ্ডের ন্যায় পিঙ্গলবর্ণ, রেণুসমন্বিত ও অরুণবর্ণ কেশর দ্বারা যে গুলি বিশেষ মনোহর এবং যে গুলি, পতিকর্ত্তৃক অপমানিত মানিনীরমণীদিগের মাননাশক ; সেই অসন' (বন্ধুক) পুষ্পসমূহ আপননামের সার্থকতা ধারণ করিল ॥৪৭॥

**अन्वयः**—धृतनवातपम् अम्भसि कमलं यतः मदपाटलां चकोरदृशां मुखसरोजरुचम् अनुचकार ; अतः कम् उत्सुकतां न अलम्भयत् ॥४८॥

विगतशस्यजिघत्समघट्टयत् कलमगोपवधूर्न मृगव्रजम्।
श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥४९॥

---

टीका—मुखेति। इतो नवातपो येन तत्, तनवातपं बालातपताम्रमित्यर्थः अम्भसि कमलं अम्भःस्थं कमलम्। अम्भोग्रहणं स्थलकमलनिवृत्त्यर्थम् अम्लानताद्योतनार्थं वा यतो मदपाटलाश्चकोरदृशां स्त्रीणां मुखसरोजरुचं मुखारविन्दशोभामनुचकार। अनु-पराभ्यां कृञ इति परस्मैपदनियमः। अतोऽनुकरणाद्धेतोः कं पुमांसमुत्सुकतां प्रेयसी-मुखावलोकनकौतुकितां नालम्भयत् नागमयत् सर्वं मालम्भयदेव तत्स्मारकत्वादित्यर्थः। एतेनोत्सुक्यवस्तुना कार्य्येण कारणभूता कमलदर्शनोत्था सुखच्छवि, तिर्व्यज्यत इति वस्तुना-लङ्कारध्वनिः। एतेन स्त्रीमुखसादृश्यात् कमलं च ।धारेऽम्भसि पुंस उत्सुकतामलम्भयदिति वङ्गराजव्याख्यानं कोकस्य काण्ड्यादिवल्ल: प्रसाद इतिवदसङ्गतं मन्तव्यमिति। अलम्भयदिति लभेर्ण्यन्ताल्लङ्, लभेश्चेति नुमागमः, लभेश्चात्र प्राप्त्युपसर्जनकगत्यर्थत्वाद्गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वे द्विकर्मता। गत्युपसर्जनकप्राप्त्यर्थत्वे तु वैपरीत्यमित्युक्तं सितं सिति-कण्ठे त्यत्र ॥४८॥

टिप्पनी—मुखेति। अत्र मुखसरोजरुचां चकोरदृशामित्युभयत्रापि लुप्तोपमा, अनुचकारेत्यार्थी-पमा, कं न अलम्भयदित्यर्थापत्तिः, द्वितीयचतुर्थयोः पादयोश्छेकानुप्रासश्चतुर्थे यमकश्चेति सर्वेषां संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥४८॥

বাঙ্গালা—জলের পদ্মগুলি, নবোদিত রবির কিরণে রঞ্জিত হইয়া যেহেতু, চকোরনয়না রমণীদিগের মত্ততানিবন্ধন রক্তবর্ণ মুখ পদ্মশোভার অনুকরণ করিয়াছিল; সেই হেতু সে পদ্ম কোন্ পুরুষকে উৎকণ্ঠিত না করিয়াছিল ॥৪৮॥

अन्वयः—इषे कलमगोपवधूः श्रुततदीरितकोमलगीतकध्वनिम् अग्रतः अनिमिषेक्षणं विगतशस्य-जिघत्सं मृगव्रजं न अघट्टयत् ॥४९॥

टीका—विगतेति। इषे आश्वयुजमासे। स्यादश्विन इषोऽप्याश्वयुज इत्यमरः। कलम-गोपी शालिगोपस्त्री सा चासौ वधूश्च कलमगोपवधूः। स्त्रियाः पुंवदित्यादिना पुंवद्भावः। श्रुत आकर्णितस्तया बध्वा ईरितस्य आलापितस्य कोमलगीतकस्य मधुरगानस्य ध्वनिर्येन तं श्रुततदीरितकोमलगीतकध्वनिम् अतएवाग्रतोऽग्रेन निमिषति विस्मयानन्दाभ्यामित्यनिमि-षम्। इगुपधलक्षणः कप्रत्ययः। तदीक्षणं यस्य तमनिमिषेक्षणम्। घस्तुमत्तुं वेच्छा जिघत्सा। घसेरदादेशाद्धा सनन्तादप्रत्ययादिति स्त्रियामप्रत्ययः। विगता शस्यस्य जिघत्सा यस्य तं विगतशस्यजिघत्सम्। उपसर्जनाद्ध्रस्वः। मृगव्रजं नाघट्टयत् नाताड़यत् सिद्धे साधनाप्रयोगादिति भावः। अत्र दण्डमाध्ये मृगनिवारणे काकतालीयन्यायेन सुखार्थस्य गानस्य कारणत्वकथनात्समाधिरलङ्कारः। कारणान्तरयोगात् कार्य्यसुकरत्वं समाधिरिति सूत्रात् ॥४९॥

कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम्।
ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः॥५०॥
विगतवारिधरावरणाः क्वचिद्ददृशुरुल्लसितासितासिताः।
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः शरदि नीरदिनीर्यदवो दिशः॥५१॥

---

टिप्पनी—विगतेति। अत्र प्रथमे पादे छेकानुप्रासः, चतुर्थे च यमकमिति टीकोक्तयमाधिना सह तयोः संसृष्टिः। गुणरीती पूर्ववत्॥४९॥

বাঙ্গালা—আশ্বিনমাসে কৃষকরমণীরা ধান্যরক্ষা করিবার জন্য ক্ষেত্রে যাইয়া মধুর গীতধ্বনি করিত; তখন হরিণগণ তাহাদের সম্মুখে থাকিয়াই নির্নিমেষ নয়ন হইয়া সেই গীত শ্রবণ করিতে থাকিত, কিন্তু শস্য ভোজন করিবার ইচ্ছা করিত না; সুতরাং সে কৃষকরমণীরাও তাহাদিগকে তাড়াইত না॥৪৯॥

अन्वयः—अयुक्छदगुच्छसुगन्धयः अलिभिः ततगानगिरः सततगाः कृतमदम् आकुलीकृतजगत्त्रयम् ऊर्जं मतङ्गजं निगदन्तः इव ववुः॥५०॥

टीका—कृतेति। अयुजो विषमाश्छदा येषान्ते अयुक्छदाः सप्तपर्णास्तेषां गुच्छैः स्तबकैः सुगन्धयः शोभनगन्धा गजमदगन्धिन इति भावः अलिभिर्भृङ्गैः तता विस्तृता गानगिरो येषान्ते अलिभिर्गीयमाना इत्यर्थः। सततङ्गच्छन्तीति सततगाः सदागतयो वायव इति यावत् कृतमदञ्जनितमदम् अतएवाकुलीकृतजगत्त्रयम् ऊर्जः कार्त्तिकः। बाहुलोर्जौ कार्त्तिकिक इत्यमरः। स एव मातङ्गज इति रूपकम्। तं निगदन्त इव अयमागच्छतीत्यावेदयन्त इव ववुः वान्ति स्म। मत्तमातङ्गगमनेऽप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षा रूपकं त्वङ्गमस्याः॥५०॥

टिप्पनी—कृतेति। अत्र अयुगित्यादौ लुप्तोपमा चतुर्थे च यमकमिति ताभ्यां सह टीकोक्तोत्प्रेक्षारूपकयोः संसृष्टिः। तथा कृतशब्दस्य द्विःपाठात् कथितपदतादोषः, स तु हृतमदमित्यत्र धृतमदमिति पाठेन समाधेयः। गुणरीती पूर्ववत्॥५०॥

বাঙ্গালা—সপ্তপর্ণপুষ্পগুচ্ছের ন্যায় সুগন্ধি এবং ভ্রমরপ্রশংসিত বায়ু, মদস্রাবী এবং ত্রিজগতের আকুলতাজনক কার্ত্তিকমাসরূপ হস্তীর আগমন সূচনা করিয়া বহিত হইতে লাগিল॥৫০॥

अन्वयः—शरदि यदवः क्वचित् विगतवारिधरावरणाः उल्लसितासितासिताः क्वचित् नीरदिनीः इन्द्रगजाजिनकञ्चुकाः इव दिशः ददृशुः॥५१॥

टीका—विगतेति। शरदि यदवो यादवाः यदुशब्देन रघुशब्दवत् तदपत्यलक्षणा जनपदशब्दानामेव तद्राजस्य बहुष्विति लुक्सम्भवादिति। क्वचिद्विगतवारिधरावरणाः निवृत्तमेघावरणाः अतएवोल्लसिता कोशादुद्धृतासिस्तैवासिलता तद्वदसिताः श्यामा इत्युपमा क्वचिन्नीरदिनीर्मेघवतीः शुभ्राभ्रपटच्छन्ना इत्यर्थः अतएवेन्द्रगजाजिनम् ऐरावतचर्म

विलुलितामनिलैः शरदङ्गना नवसरोरुहकेशरसम्भवाम् ।
विकरितुं परिहासविधित्सया हरिवधूरिव धूलिमुदक्षिपत् ॥५२॥
हरितपत्रमयीव मरुद्गणैः स्रगवनद्धमनोरमपल्लवा ।
मधुरिपोरभिताम्रमुखी मुदं दिवि तता विततान शुकावलिः ॥५३॥

---

तदेव कञ्चुकः कूर्पासको यासान्ता इव स्थिता इत्युत्प्रेक्षा । दिशो ददृशुः । उक्तालङ्कारयोः संसृष्टिः ॥५१॥

टिप्पनी—विगतेति ! अत्र प्रथमद्वितीयपादयोः छेकानुप्रासः, चतुर्थे च यमकमिति टीकोक्तोपमोत्प्रेक्षाभ्यां संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥५१॥

বাঙ্গালা—শরৎকালে যদুবংশীয়েরা দেখিলেন—কোন দিকে মেঘের আবরণ না থাকায় সে দিকটী, কোষমুক্ত তরবারির ন্যায় কৃষ্ণবর্ণ ; আবার কোন দিকে মেঘ রহিয়াছে ; সুতরাং সে দিকটা যেন ঐরাবতহস্তিচর্ম্মাবৃত বলিয়া বোধ হইতেছিল ।৫১॥

अन्वयः—शरदङ्गना अनिलैः विलुलितां नवसरोरुहकेशरसम्भवां धूलिं परिहासविधित्सया हरिवधूः विकरितुम् इव उदक्षिपत ॥५२॥

टीका—विलुलितामिति । शरदेवाङ्गना इति रूपकम् अनिलैर्विलुलितां विक्षोभितां नवसरोरुहकेशरसम्भवां धूलिं परागं परिहासविधित्सया नर्मरीतिचिकीर्षया । दधातेः सनन्तात् स्त्रियामप्रत्ययटाप् । हरिवधूः विकरितुं विक्षेप्तुमिव । तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति तुमुन्प्रत्ययः । उदक्षिपत् प्रेरितवती । रूपकोज्जीवितेयमुत्प्रेक्षा । किरतिरयं कीर्य्यमानकर्मा । यथा रजः किरति मारुतः । क्वचित्तत्कारकोद्देश्यकर्मा यथा-ऽस्त्रैवेति विवेकः ॥५२॥

टिप्पनी—विलुलितामिति । अत्र टीकोक्तरूपकोत्प्रेक्षाभ्यां यमकस्य संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥५२॥

বাঙ্গালা—বায়ু, নূতন পদ্মকেশরের রেণুগুলিকে ছড়াইয়া দিতেছিল ; সুতরাং বোধ হইতেছিল—যেন শরৎকামিনী, পরিহাস করিবার ইচ্ছায় শ্রীকৃষ্ণের কামিনীগণের শরীরে ধূলিনিক্ষেপ করিতেছে ॥৫২॥

अन्वयः—अभिताम्रमुखी शुकावलिः मरुद्गणैः दिवि तता हरितपत्रमयी अवनद्धमनोरमपल्लवा स्रक् इव मधुरिपोः मुदं ततान ॥५३॥

टीका—हरितेति । अभिताम्रमुखी अवयमुखी । स्वाङ्गाच्चोपसर्जनादित्यादिना विकल्पात् ङीष् । शुकावलिर्मरुद्गणैः सुमनोगणैर्दिवि तता हरिप्रियार्थमाकाशे वितता हरितानां हरिद्वर्णानां पत्राणां विकारो हरितपत्रमयी । टिड्ढाणञित्यादिना विकल्पात् ङीप् । तथाऽवनद्धाः ग्रथिताः मनोरमाः पल्लवा यस्यां सा स्रगिवेत्युत्प्रेक्षा । मधुरिपोः कृष्णस्य मुदं विततान ॥५३॥

স্মিতসরোরুহনেত্রসরোজলামতিসিতাঙ্গবিহঙ্গহসদ্দিবম্।
অকলয়ন্মুদিতামিব সর্বতঃ স শরদং শরদন্তুরদিঙ্মুখাম্ ॥৫৪॥
গজপতিদ্বয়সীরপি হৈমনস্তুহিনয়ন্ সরিতঃ পৃষতাম্পতিঃ।
সলিলসন্ততিমধ্বগযোষিতামতনুততানুতাপকৃতং দৃশাম্ ॥৫৫॥

---

টিপ্পনী—হরিতেতি। অত্র যমকেন টীকোক্তা তদুৎপ্রেক্ষা সংসৃজ্যতে। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৩॥

বাঙ্গালা—তাম্রবর্ণমুখ শুকপক্ষিশ্রেণী উড়িতেছিল; তাহাতে বোধ হইতেছিল—দেবগণই যেন আকাশে হরিদ্বর্ণ পত্র দ্বারা একটি মালা গাঁথিয়াছেন এবং তাহাতে আবার মনোহর নবপল্লব দিয়া রাখিয়াছেন; সেই মালাটী শ্রীকৃষ্ণের আনন্দ বর্দ্ধন করিয়াছিল ॥৫৩॥

অন্বয়ঃ—সঃ স্মিতসরোরুহনেত্রসরোজলাম্ অতিসিতাঙ্গবিহঙ্গহসদ্দিবং শরদন্তুরদিঙ্মুখাং শরদং মুদিতাম্ ইব অকলয়ত্ ॥৫৪॥

টীকা—স্মিতেতি। স হরিঃ স্মিতানি বিকসিতানি সরোরুহাণ্যেব নেত্রাণি যেষু তানি সরোজলানি যস্যাস্তাং তথোক্তামতিসিতাঙ্গাঃ ধবলপক্ষা যে বিহঙ্গা হংসাস্তৈর্হসন্তী স্ময়মানেব স্থিতা দ্যৌর্যস্যাং তাং তথোক্তাং শরৈস্তৃণবিশেষৈর্দন্তুরাণ্যুন্নতদন্তানি হাসাত্ প্রকাশদশনানীতি যাবত্। দন্ত উন্নত উরজিতুরচ্ প্রত্যয়ো মত্বর্থীয়ঃ। তানি দিঙ্মুখানি যস্যাং তাং শরদন্তুরদিঙ্মুখাং শরদং সর্বতো মুদিতামিবাকলয়ত্ সর্বত্র নেত্রবিকাশাদিলিঙ্গৈর্হৃষ্টামিবামন্যতেত্যর্থঃ। অত্র সরোজহংসশরেষু নেত্রহাসদন্তত্বারোপণাদ্রূপকালঙ্কারঃ। তদ্বশাত্ প্রতীয়মানাঙ্গনাভেদাধ্যবসায়াচ্চরদি মুদিতত্বোত্প্রেক্ষেতি সঙ্করঃ ॥৫৪॥

টিপ্পনী—স্মিতেতি। অত্র প্রথমদ্বিতীয়পাদয়োশ্ছেকানুপ্রাসঃ, চতুর্থে চ যমকমিতি টীকোক্তসঙ্করেণ সহ তয়োঃ সংসৃষ্টিঃ। তথা প্রথমে পাদে একসরঃ শব্দস্য দ্বিঃপাঠাত্ কথিতপদতাদোষঃ, স চ 'স্মিতসরোরুহনেত্রসরিজ্জলাম্' ইতি পাঠেন সমাধেয়ঃ। মাধুর্য্যং গুণঃ, দাক্ষাত্রী চ রীতিঃ ॥৫৪॥

বাঙ্গালা—সরোবরের জলে নয়নরূপ পদ্ম প্রস্ফুটিত ছিল; শুভ্রবর্ণপক্ষ পক্ষিগণ দ্বারা আকাশ হাসিতেছিল এবং দিঙ্মুখে শর সকল জন্মিয়া উন্নত অবনত দন্তস্বরূপ হইয়াছিল; সুতরাং শ্রীকৃষ্ণ শরৎকালকে যেন আনন্দময়ী বলিয়া বোধ করিয়াছিলেন ॥৫৪॥

অন্বয়ঃ—হৈমনঃ পৃষতাং পতিঃ গজপতিদ্বয়সীঃ অপি সরিতঃ তুহিনয়ন্ সন্ অধ্বগযোষিতাং দৃশাম্ অনুতাপকৃতং সলিলসন্ততিম্ অতনুত ॥৫৫॥

টীকা—অথ হৈমন্তং বর্ণয়তি গজপতীতি। গজপতিঃ প্রমাণমাসাং গজপতিদ্বয়সীঃ মহাগজপ্রমাণাঃ। প্রমাণে দ্বয়সচ্ দঘ্নচ্ মাত্রচ্ ইতি প্রমাণার্থে দ্বয়সচ্ প্রত্যয়ঃ, টিড্ঢাণঞিত্যাদিনা ঙীপ্। তা অপি সরিতস্তুহিনয়ন্ হিমীকুর্বন্। তত্করোতি ণ্যন্ত লটঃ শত্রাদেশঃ। হেমন্তে ভবো হৈমনঃ। সর্বত্রাণ্ চ তলোপশ্চেতি হৈমন্তশব্দাচ্ছৈষিকোঽণ্-প্রত্যয়ঃ তকারলোপশ্চ। পৃষতাং বিন্দুনাং পতির্বায়ুঃ। পৃষন্তি বিন্দুপৃষতা ইত্যমরঃ। অধ্বান-

इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा ।
स्मृतसयौवनसोष्मपयोधरान् सतुहिनस्तु हिनस्तु वियोगिनः ॥५६॥
प्रियतमेन यया सरुषा स्थितं न सह सा सहसा परिरभ्य तम् ।
श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥५७॥

---

गच्छन्तीत्यध्वगाः पथिकाः । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । तद्योषितां प्रोषितभर्तृकाणां दृग्भ्यामतनुतापकृतं महासन्तापकारिणीं सलिलसन्ततिम् अतनुत । उष्णमश्रु त्याजयामासेत्यर्थः । हेमन्तमारुतो विरहिणीदुःसहोऽजनीति भावः ॥५५॥

टिप्पनी—गजेति । अत्र यमकमलङ्कारः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—হেমন্তকালের বায়ু, হস্তিদ্বয়পরিমিতজলশালী (একটা বড় হাতীর উপরে আর একটা বড় হাতী উঠিলে, যত বড় প্রমাণ হয়, তত গভীর) নদীগুলিকেও শীতল করিয়া, বিরহিণী রমণীগণের নয়নে অত্যন্ত সন্তাপকারী অশ্রুজল বাহির করিয়াছিল ॥৫৫॥

अन्वयः—अनिलः अन्यदा वियोगिनः वरतनोः यत् स्मरयति, अहो इदं महत् एव अयुक्तम् । तु सतुहिनः [अनिलः] स्मृतसयौवनसोष्मपयोधरान् [वियोगिनः] हिनस्तु ॥५६॥

टीका—सर्वदापि वियोगिनामुद्दीपकवायोर्हेमन्ते वैशिष्ट्यमाचष्टे, इदमिति । अनिलो वायुरन्यदाऽन्यस्मिन् काले ग्रीष्मादावित्यर्थः । सर्वैकान्येत्यादिना दाप्रत्ययः । वियोगिनो वियुक्तान् । गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वम् । वरतनोर्वरतनुमित्यर्थः । अधीगर्थेत्यादिना कर्मणि शेषे षष्ठी । स्मरयतीति यत् स्मरतेराध्याने मित्त्वाद्ध्रस्वत्वम् । इदं स्मारकत्वमपि महदत्यन्तमयुक्तमेव सहकारिविरहादिति भावः । अहो अत्यन्ताकिञ्चित्करत्वाद्विस्मयः । हेमन्ते तु हन्तृत्वमप्यस्य सम्भवतीत्याह । सतुहिनस्तुहिनसहितस्तु सयौवना यौवनयुक्ताः अतएव सोष्माणो ये पयोधराः कुचास्ते स्मृता यैस्तान् स्मृतसयौवनसोष्मपयोधरान् वियोगिनो वियुक्तान् । तथा युक्तं चानीप्सितमिति कर्मत्वम् । हिनस्तु हन्तु । सम्भावनायां लोट् । हेमन्ते हि हिमसहकारात् कुचोष्मैकसाध्यदुःखोत्पादनसामर्थ्याद्वियोगिमारकत्वमपि सम्भाव्यते ग्रीष्मादौ तु तादृक् सहकारिविरहात् स्मारकत्वमप्ययुक्तमित्यर्थः । अमारके मारकसम्बन्धोक्तेरतिशयोक्तिभेदः इह सहजकविप्रौढोक्तिसिद्धयोरभेदाध्यवसाय इति रहस्यम् ॥५६॥

टिप्पनी—इदमिति । अत्र प्रथमे पादे छेकानुप्रासः, चतुर्थे च यमकमित्यनयोः संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥५६॥

বাঙ্গালা—বায়ু অন্য সময়ে যে বিরহিগণকে তাহাদের প্রিয়তমাদিগকে স্মরণ করাইয়া দেয়, ইহাই অত্যন্ত অসঙ্গত কার্য্য। কিন্তু যে সময়ে বিরহীরা আপন আপন প্রিয়তমা যুবতির উষ্ণ স্তনযুগল স্মরণ করিতে থাকে, সেই হেমন্তকালের শীতল বায়ু যে সেই বিরহীদিগকে মারিয়া ফেলে, তাহাও অসঙ্গত নহে ॥৫৬॥

ভৃশমদূয়ত যাধরপল্লবক্ষতিরনাবরণা হিমমারুতৈঃ।
দশনরশ্মিপটেন চ শীৎকৃতৈর্নিবসিতেব সিতেন সুনির্ববৌ ॥৫৮॥

---

অন্বয়ঃ—রুষা যয়া প্রিয়তমেন সহ ন স্থিতম্, সা অঙ্গনা সহসা কৃতবেপথুঃ [সতী] তং সহসা [সতী] সহসা পরিরভ্য ক্ষণম্ [অপি] শ্লথয়িতুং ন অচমত ॥৫৭॥

টীকা—প্রিয়তমেতি। অত্রাদ্যপর্য্যায়ে সহসা ইতি ত্রেধা বিভাগঃ অন্যত্র সহসেত্যেকং পদং রুষা সরোষয়া যয়া স্ত্রিয়া কর্ত্র্যা প্রিয়তমেন সহ ন স্থিতম্। নপুংসকে ভাবে ক্তঃ। সা অঙ্গনা স্ত্রী সহসা মার্গশীর্ষমাসেন। মার্গশীর্ষে সহা মার্গ ইত্যমরঃ। কৃতবেপথুঃ জনিতকম্পা সতী। ট্বিতোঽথুজিত্যথুচ্প্রত্যয়ঃ। তং পূর্বমনথিতমেব প্রিয়ং হসেন সহ বর্ত্তত ইতি সহসা সহাস্যা সতী। অথো হসো হাসো হাস্যং চেত্যমরঃ। স্বনহসোর্বেতি বিকল্পাদপ্প্রত্যয়ঃ। সহসা শীঘ্রম্। স্বরাদিপাঠাদব্যয়ত্বম্। পরিরভ্যাশ্লিষ্য ক্ষণং ক্ষণমপীত্যর্থঃ। অন্যথা বৈরং স্যাত্। অতএব সামর্থ্যলভ্যার্থত্বাদপেরপ্রয়োগঃ শ্লথয়িতুং নাচমত শিথিলীকর্ত্তুং নোৎসহতে চেত্যর্থঃ। মানিনীমানভঞ্জনক্ষমোঽয়ং মাস ইতি ভাবঃ। কলহান্তরিতেয়ং নায়িকা। কোপাৎ কান্তং পরাণুদ্য পশ্চাত্তাপসমন্বিতেতি লক্ষণাৎ ॥৫৭॥

টিপ্পনী—প্রিয়তমেনেতি। অত্র প্রথমে চতুর্থে চ পাদে যমকং তৃতীয়ে তু ছেকানুপ্রাস ইত্যনয়োঃ সংসৃষ্টিঃ। সম্ভোগশৃঙ্গারো রসঃ মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৭॥

বাঙ্গালা—যে রমণী মান করিয়া প্রিয়তমের সহিত একত্র থাকিত না; অগ্রহায়ণ-মাস তাহার কামকম্প জন্মাইয়া দিল; তাই সে হাস্য করিয়া তৎক্ষণাৎ সেই প্রিয়তমকে আলিঙ্গন করিয়া, ক্ষণকালের জন্যও তাহাকে শিথিল করিতে ইচ্ছা করিল না ॥৫৭॥

অন্বয়ঃ—অনবরণা যা অধরপল্লবক্ষতিঃ হিমমারুতৈঃ ভৃশম্ অদূয়ত; [সা] শীৎকৃতৈঃ সিতেন দশনরশ্মিপটেন নিবসিতা ইব (সতী) সুনির্ববৌ ॥৫৮॥

টীকা—ভৃশমিতি। অনাবরণা আবরণরহিতা যা অধরপল্লবস্য ক্ষতির্ব্রণো হিমমারুতৈর্ভৃশমদূয়ত অতপ্যত। দূঙো দৈবাদিকাত্ কর্ত্তরি লঙ্। সা ক্ষতির্যত্তদোর্নিত্যসম্বন্ধঃ। শীৎকৃতৈঃ শীৎকারৈঃ কর্ত্তৃভিঃ সিতেন শুভ্রেণ দশনরশ্ময় এব পটস্তেন করণেন নিবসিতেবাচ্ছাদিতেবেত্যুৎপ্রেক্ষা। বসেরাচ্ছাদনার্থাত্ কর্ম্মণি ক্তঃ ইডাগমঃ। সুনির্ববৌ সুষ্ঠু নির্ববার। শীতালুরাচ্ছাদ্যত ইতি ভাবঃ। হিমহতাধরনির্বাণস্য শীৎকারকারণকস্য দশনরশ্মিপটাচ্ছাদনে হেতুত্বোৎপ্রেক্ষণাদ্রূপকোৎপ্রেক্ষয়োঃ সঙ্করঃ ॥৫৮॥

টিপ্পনী—ভৃশমিতি। অত্র টীকোক্তসঙ্করেণ সহ যমকস্য পুনঃ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ বৈদর্ভী চ রীতিঃ ॥৫৮॥

বাঙ্গালা—ওষ্ঠপল্লবের যে দন্তক্ষত, আবরণ না থাকায় শীতল বায়ুতে অত্যন্ত কষ্ট পাইতেছিল; সেই দন্তক্ষতই শীৎকার করিবার সময় ধবল দন্তকিরণরূপ বস্ত্র দ্বারা আবৃত হইয়াই যেন বিশেষ শান্তি লাভ করিতেছিল ॥৫৮॥

अव्रणभृता सुतनोः कलशीत्कृतस्फुरितदन्तमरीचिमयं दधे ।
स्फुटमिवावरणं हिममारुतैर्मृदुतया दुतयाधरलेखया ॥५९॥
धृततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः ।
पृथु निरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥६०॥
हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥६१॥

---

अन्वयः—मृदुतया हिममारुतैः दुतया अव्रणभृता सुतनोः अधरलेखया कलशीत्कृतस्फुरितदन्तमरीचिमयं स्फुटम् आवरणं दधे इव ॥५९॥

टीका—उक्तमेवार्थं भङ्ग्यन्तरेणाह, अव्रणेति। मृदुतया मार्दवेण हेतुना हिममारुतैर्दुतया पीड़ितया। टुदूञ् उपतापे इति धातोर्भौवादिकात् कर्मणि क्तः। अव्रणभृता दन्तव्रणवत्या सुतनोः स्त्रियाः अधरो लेखेव तया अधरलेखया कर्त्र्या कलशीत्कृतेन हेतुना स्फुरिताः प्रकाशिता ये दन्तमरीचयस्तन्मयं तद्रूपं स्फुटमावरणमाच्छादनं दधे इव धृतमिवेत्युत्प्रेक्षा। दधातेः कर्मणि लिट् ॥५९॥

टिप्पनी—अव्रणेति। अत्र टीकोक्ता उत्प्रेक्षा यमकेन संसृज्यते। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥५९॥

বাঙ্গালা—সুন্দরীর ওষ্ঠযুগলে দন্তক্ষত ছিল এবং তাহা কোমল বলিয়া হেমন্তকালের শীতল বায়ুতে পীড়িত হইতেছিল; কিন্তু মধুর শীৎকার করিবার সময়ে দাঁতগুলি প্রকাশিত হওয়ায় তাহার কিরণরূপস্পষ্ট আবরণই যেন সে ওষ্ঠযুগল ধারণ করিতে লাগিল ॥৫৯॥

अन्वयः—पृथु इष्टभुजान्तरम् निरन्तरम् अनितया वनितया धृततुषारकणस्य नभस्वतः तरुलताङ्गुलितर्जनविभ्रमाः न विषेहिरे ॥६०॥

टीका—धृतेति। धृतास्तुषारकणास्तुहिनशीकरा येन तस्य नभस्वतः पवनस्य सम्बन्धिनः तरुलता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमाः विलासाः पृथु विशालमिष्टस्य दयितस्य भुजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमनितया अप्राप्तया गाढ़ालिङ्गनमलभमानया इत्यर्थः। इणः कर्त्तरि क्तः। वनितया स्त्रिया न विषेहिरे न सोढ़ाः विरहिणस्तर्जिता इव नभस्वतो बिभ्यतीति भावः ॥६०॥

टिप्पनी—धृतेति। अत्र तरुलतासु अङ्गुलित्वारोपात्निरङ्गं केवलरूपकं यमकश्चेत्युभयोः संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—কোন রমণী সর্বদা (আলিঙ্গনের জন্য) প্রিয়তমের বিশাল বক্ষঃস্থল না পাইয়া, হিমকণবাহী বায়ুর তরু-লতারূপ অঙ্গুলীর তর্জন সহ্য করিতে পারিয়াছিল না ॥৬০॥

कुसुमयन् फलिनीरलिनीरवैर्मदविकाशिभिराहितहुङ्कृतिः।
उपवनं निरभर्त्सयत प्रियान् वियुवतीर्युवतीः शिशिरानिलः॥६२॥

---

अन्वयः—स्मरमयम् अकृत्रिमम् अनुरागम् प्रकटयति, (अतएव) सुतराम् उपकारिणि हिमऋतौ अपि भृशखिदः ताः युवतयः विलासिनः रमयन्ति स्म॥६१॥

टीका—हिमेति। स्मरमयं स्मरादागतं स्मरप्रयुक्तमित्यर्थः। तत आगत इति मयट्। अकृत्रिममनुरागं सहजं प्रेम प्रकटयति प्रकटीकुर्वाणे तत्कार्य्येण स्वेदेनेति भावः। अतएव सुतरामुपकारिणि पुंसां रिरंसाजननात्तेभ्यः स्वानुरागप्रकाशनाच्चात्यन्तोपकर्त्तरीत्यर्थः। एवंभूते हिमऋतौ हेमन्तेऽपि स्वेदसम्भावनारहितकालेऽपीत्यर्थः। सांहितऋत्यक् इति प्रकृतिभावः। भृशं खिद्यन्ति रागोष्मणा भृशखिद इति सात्त्विकोक्तिः। क्विप्। हेमन्तोऽपि रागिणां स्वेदहेतुरेव तद्धेतुरागहेतुत्वादिति भावः। तास्तथा धीरा युवतयो विलासिनः प्रियान् रमयन्ति स्म हेमन्तस्योद्दीपकत्वादिति पीड़ाक्षमत्वात् दीर्घरात्रित्वाच्चोभयेच्छासदृशमरमन्तेत्यर्थः॥६१॥

टिप्पनी—हिमेति। अत्र उपकारित्वं प्रति अनुरागप्रकटनं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः विरोधाभासः यमकञ्चेत्येतेषां संसृष्टिः। तथा हिमऋतावित्यत्र सन्धिरकरणात् सन्धिविश्लेषदोषः। न च तस्य वैकल्पिकत्वात् न दोष इति वाच्यम् भिन्नपदे सर्वत्रैव सन्धेर्वैकल्पिकतया वासवाशामुखेभाति इन्दुश्चन्दनविन्दुवत् इति साहित्यदर्पणीयतद्दोषोदाहरणेऽपि तद्दोषप्रसङ्गात्। तेन "अपि हिमे समये स्म भृशखिदः" इति पाठ नाशो परिहरणीयः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीति॥६१॥

বাঙ্গালা—হেমন্তকাল অকৃত্রিম কামানুরাগ জন্মাইতেছিল বলিয়া, সে কামুকদিগের বিশেষ উপকারী ছিল; কিন্তু সেই হেমন্তকালেও অত্যন্ত ঘর্ম্মাক্তকলেবরা যুবতরা বিলাসীদিগের সহিত রমণ করিয়াছিল॥৬১॥

अन्वयः—उपवनं फलिनीः कुसुमयन् मदविकाशिभिः अलिनीरवैः आहितहुङ्कृतिः शिशिरानिलः प्रियान् वियुवतीः युवतीः निरभर्त्सयत॥६२॥

टीका—अथ शिशिरं वर्णयति, कुसुमयन्नित्यादिना। उपवनं वन इत्यर्थः। विभक्त्यर्थेऽव्ययीभावः तृतीयासप्तम्योर्बहुलमिति विकल्पादम्भावः। फलिनीः प्रियङ्गुलताः। प्रियङ्गुः फलिनी फलीत्यमरः। कुसुमयन् कुसुमवतीः कुर्वन्। इत्युद्दीपनसामग्रीवर्णनम्। कुसुमयतेर्मत्वन्तप्रकृतिकात्तत्करोतीति ण्यन्तात् लटः शत्रादेशः, णाविष्ठवद्भावे विन्मतोर्लुक्। मदविकाशिभिर्मदेन विजृम्भमाणैरलिनीरवैः भृङ्गीहुङ्कारैराहितहुङ्कृतिः कृतहुङ्कारः साधर्म्यादुद्दीपकत्वातिशयद्योतनार्थमलिनीति स्त्रीलिङ्गनिर्देशः शिशिरानिलः प्रियान्वियुवतीः कोपाद्वियुञ्जानाः। यौतेः शतरि धातोरुवङादेशः, उगितश्चेति ङीप्। युवतीः वधूः यूनस्तिरिति तिप्रत्ययः। निरभर्त्सयत अतर्जयत। तर्जिभर्त्स्योश्चौरादिक-

उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद् बलवानपि ।
तपसि मन्दगभस्तिरभीषुमान्नहि महाहिमहानिकरोऽभवत् ॥६३॥
अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः ।
क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥६४॥

---

धोरनुदात्तत्वादात्मनेपदम्। अत्र वायौ अचेतने चेतनधर्मौ निर्भर्त्सनमुत्प्रेक्षते सा चालिनीहुङ्कारभङ्गरोव्योविवेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद् गम्या च ॥६२॥

**टिप्पनी**—कुसुमयन्निति। अत्र टीकोक्तयोरुत्प्रेक्षारूपकयोः सङ्करो यमकेन प्रथमपादगतच्छेकानुप्रासेन च संसृज्यते। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६२॥

**বাঙ্গালা**—শীতকালের বায়ু বনের প্রিয়ঙ্গুলতাগুলিতে ফুল ফুটাইয়া, মত্ততাবশতঃ ভ্রমরীর সুস্পষ্ট বররূপ হুঙ্কারধ্বনি করিয়া, মানিনী রমণীদিগকে যেন ভর্ৎসনা করিয়াছিল ॥৬২॥

**अन्वयः**—बलवान् अपि कालवशात् परेषु उपचितेषु (सत्सु) असमर्थतां व्रजति। हि तपसि मन्दगभस्तिः अभीषुमान् महाहिमहानिकरः न अभवत् ॥६३॥

**टीका**—उपचितेष्विति। कालवशाद् बलवानपि परेषु शत्रुषु उपचितेषु प्रवृद्धेषु सत्सु असमर्थतां दौर्बल्यं व्रजति। हि यस्मात्तपसि माघमासे। तपा माघे इत्यमरः। मन्दगभस्तिर्मृदुरश्मिरभीषुमानंशुमान्। अभीषुः प्रग्रहे रश्मावित्यमरः। महत उपचितस्य हिमस्य हानिं नाशं करोतीति महाहिमहानिकरस्तद्धेतुर्नाभवत्। कृञो हेत्वित्यादिना हेत्वर्थे टप्रत्ययः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥६३॥

**टिप्पनी**—उपचितेष्विति। अत्र टीकोक्तार्थान्तरन्यासो यमकेन संसृज्यते। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६३॥

**বাঙ্গালা**—শত্রু, কালক্রমে উন্নতি লাভ করিলে, বলবান্ ব্যক্তিও তাহার দমনে অসমর্থ হইয়া থাকে। যেহেতু, মাঘমাসে মৃদুকিরণ সূর্য্য, গুরুতর শীতের হানি করিতে পারিয়াছিলেন না ॥৬৩॥

**अन्वयः**—क्षुभितसैन्यपरागविपाण्डुरद्युतिः यः लोध्ररजश्चयः भुवनानि अभिषिषेणयिषुं स्मरम् आख्यत इव; अयं दिशः तिरयन् उदभूत् ॥६४॥

**टीका**—अभीति। क्षुभित उद्धतो यः सैन्यपरागः सेनारजः स इव विपाण्डुरद्युतिः शुभ्रवर्णः यो लोध्ररजश्चयः भुवनान्यभिषिषेणयिषुं सेनया अभियातुमिच्छन्तम्। यत् सेनयाभिगमनमरौ तदभिषेणनमित्यमरः। सत्यापपाशेत्यादिना सेनशब्दात् णिचि सनि सनाशंसभिक्षभ्य उरिति उप्रत्ययः। स्थादिष्वभ्यासेनेति धात्वभ्याससकारयोः षत्वम्। स्मरमाख्यतेव ख्यातवानित्युत्प्रेक्षा। चक्षिङः ख्याञ्, अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः।

शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥६५॥
अखिलवङ्गममी रजसाधिकं मलिनिताः सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोऽहसत् सपदि कुन्दलता दलतालिनः ॥६६॥

---

अथ लोध्ररजस्वयो दिशः तिरयन् तिरस्कुर्वन् । तिरःशब्दात्तत्करोतीति ण्यन्ताल्लटः शत्रादेशः, णाविष्ठवद्भावे टिलोपः । उदभूत ॥६४॥

टिप्पनी—अतीति । अत्र क्षुभितेत्यादि पदे लुप्तोपमा, आख्यत इवेति क्रियोत्प्रेक्षा, यमकञ्चेत्येतेषां संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥६४॥

বাঙ্গালা—সৈন্যগণ ক্ষুভিত হইয়া চলিতে লাগিলে, যে ধূলি উঠে ; তাহার ন্যায় শুভ্রবর্ণ যে লোধ্রপুষ্পের রেণুরাশি, 'কামদেব সৈন্য নিয়া ত্রিভুবন আক্রমণ করিবার ইচ্ছা করিতেছেন' এই বৃত্তান্তই যেন বলিয়াছিল ; সেই লোধ্রপুষ্পের রেণুরাশি সমস্ত দিক্ আবরণ করিয়া উঠিয়াছিল ॥৬৪॥

अन्वयः—शिशिरमासम् अपास्य शीतहरस्य नः अस्य कुचोष्मणः कः इव गुणः ? इति धिया अतः प्रियाः अस्तरुषः (सत्यः) नमतः अनुमतान् घनं परिरेभिरे ॥६५॥

टीका—शिशिरेति । शिशिरमासमपास्यापहाय शीतं हरतीति शीतहरस्य । हरतेरनुद्यमनेऽजित्यच् प्रत्ययः । नोऽस्माकमस्य कुचोष्मणः कुचोष्मस्य क इव गुणः किम्फलं सम्प्रति इति शेषः । गम्यमानक्रियापेक्षया क्त्वानिर्देशः । इवशब्दो वाक्यालङ्कारे । इति धिया अतोऽस्मिन् शिशिरमासे । सार्वविभक्तिकस्तसिः । प्रियाः कान्ता अस्तरुषः निरस्तरोषाः सत्यो नमतः प्रणताननुमतान् स्वप्रियान् घनं निविड़ं परिरेभिरे आश्लिष्टवत्यः । इति धियेति सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते व्यञ्जकाप्रयोगाद् गम्यत्वञ्च ॥६५॥

टिप्पनी—शिशिरेति । अत्र को गुणः, अपितु कोऽपि नेत्यर्थान्तरापतनादर्थापत्तिरलङ्कारः यमकेन संसृज्यते । सम्भोगशृङ्गारो रसः माधुर्यं गुणः, वैदर्भी च रीतिः ॥६५॥

বাঙ্গালা—শীতকাল অতীত হইয়া গেলে, আমাদের এই শীতনাশক স্তনোষ্ণতার ফল কি ? ইহা মনে করিয়াই যেন রমণীরা মান পরিত্যাগ করিয়া সেই শীতকালে অবনত প্রিয়তমদিগকে গাঢ় আলিঙ্গন করিয়াছিল ॥৬৫॥

अन्वयः—अखिलवङ्गं सुमनोदल-तालिनः अमी अलिनः रजसा अधिकं मलिनिताः इति पुरः सपदि कुन्दलता दलता प्रसवेन अहसत् स्फुटम् ॥६६॥

टीका—अखीति । लवङ्गेष्वखिलवङ्गम् । विभक्त्यर्थेऽव्ययीभावः । सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्ति इति सुमनोदलतालिनः । ताच्छील्ये आभीक्ष्ण्ये वा णिनिः । अमी अलिनो मधुपाः रजसा परागेणार्त्तवेन च अधिकं मलिनाः मलीमसाः पापिनश्च

**अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः ।**
**तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥६७॥**
**नोज्झितुं युवतिमाननिरासि दक्षमिष्टमधुवासरसारम् ।**
**चूतमालिरलिनामतिरागादक्षमिष्ट मधुवासरसारम् ॥६८॥**

---

कृताः मलिनिताः इति हेतोः पुरोऽग्रे सपदि कुन्दलता माध्यवल्ली । माघ्यं कुन्दमित्यमरः । दलता विकसता प्रसवेन निजकुसुमेन अहसत् जहास स्फुटमित्युत्प्रेक्षायां रजस्वलाङ्गनाया मालिन्यं सपत्नी हसन्तीति भावः । कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा ॥६६॥

**टिप्पनी**—नवीति । अत्र स्फुटमित्यस्यैव उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, तथा द्वितीय चतुर्थपादयोरन्त्ययमकं चतुर्थपादगतयमकान्तरेण एकाश्रयानुप्रवेशविधया सङ्कीर्यते ; तेन च समुदायो उत्प्रेक्षया सह स सृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥६६॥

**বাঙ্গালা**—যে সকল ভ্রমর লবঙ্গকুসুমের দলের উপরে অবস্থান করিতেছিল ; সে গুলি তাহার রেণুতে অত্যন্ত কৃষ্ণবর্ণ হইয়া গিয়াছিল ; এই জন্যই নিকটবর্ত্তিনী কুন্দলতা যেন নিজের প্রস্ফুটিত পুষ্প দ্বারা সেই ভ্রমরগুলিকে (লক্ষ্য করিয়া) হাসিতেছিল ॥৬৬॥

**अन्वयः**—पुष्पश्रियाम् अतनुतरतया अतिसुरभिः सन्तानकः अभाजि इव । (तथा) वसन्तानकः तरुणपरभृतः रागिणां रतये स्वनम् अतनुत ॥६७॥

**टीका**—अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिः श्लोकैः वर्णयन्नादौ ऋतुर्वसन्तं वर्णयति । अतिसुरभिरिति । अतिसुरभिरत्यन्तसुगन्धिः सन्तानकः कल्पवृक्षः पुष्पश्रियां पुष्पसम्पदाम् अतनुतरतया महत्त्वेन । अतनुशब्दात्तरबन्तात्तल् प्रत्ययः । अभाजीवाभञ्जीवेत्युत्प्रेक्षा । तथा नम्र इत्यर्थः । भञ्जेश्चिणीति विभाषा नलोपे उपधावृद्धिः चिणो लुक् । किञ्च वसन्तस्यानको वसन्तानकः दुन्दुभिरिति रूपकं तरुणपरभृतस्तरुणकोकिलो रागिणां कामिनां रतये रागवर्द्धनाय स्वनमतनुत मधुरं चुकूजेत्यर्थः । प्रभावृत्तम् । स्वरशरविरतिर्नौ रौ प्रभेति लक्षणात् ॥६७॥

**टिप्पनी**—अतीति । अत्र पादयमकालङ्कारः टीकोक्तोत्प्रेक्षारूपकाभ्यां संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ॥६७॥

**বাঙ্গালা**—বিপুল পুষ্পসমৃদ্ধি আসিয়া কল্পবৃক্ষকে যেন আশ্রয় করিল এবং বসন্তাগমের ঘোষণাকারী দুন্দুভিস্বরূপ নবীন কোকিল, কামুকদিগের অনুরাগ বৃদ্ধির জন্য রব করিতে লাগিল ॥৬৭॥

**अन्वयः**—अरम् इष्ट-मधु-वास-रसा अलिनाम् आलिः युवतिमाननिरासि दक्षं मधु-वासरसारं चूतम् अतिरागात् उज्झितुं न अक्षमिष्ट ॥६८॥

**टीका**—नोज्झितुमिति । अरमत्यन्तमिष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसो रागो यस्याः सा इष्टमधुवासरसा मधुपानप्रियेत्यर्थः अतएवालिनामालिर्भृङ्गश्रेणिः

जगद्वशीकर्त्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तीः ।
इत्यस्य तेने कदलीर्मधुश्रीः प्रभावनी केतनवैजयन्तीः ॥६९॥
स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवश्यम् ।
प्रियमाप दिवापि कोकिले स्त्री परितस्ताररवे रसत्यवश्यम् ॥७०॥

---

युवतिमाननिरासे दक्षं कुड्मलम् उद्दीपकत्वादिति भावः । मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं मधुवासरसारन्तत्कालस्साध्यमित्यर्थः चूतं सहकारम् अतिरागादतिलौल्यादुज्झितुं त्यक्तुन्नाचमिष्ट नासहिष्ट । चमेर्भौवादिकाल्लुङ् । स्वागता वृत्तम् । स्वागतेति रनभाद्गुरुयुग्ममिति लक्षणात् ॥६८॥

**टिप्पनी**—नेति । अत्र पादयमकमलङ्कारः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६८॥

**বাঙ্গালা**—মধুময় পুষ্পে বাস করিতে যাহাদের বিশেষ অনুরাগ থাকে, সেই ভ্রমরগণ, যুবতিদিগের মানভঞ্জনে নিপুণ এবং বসন্তকালের সারপদার্থ আম্রমুকুলকে, বিশেষ অনুরাগ থাকাতেই পরিত্যাগ করিতে পারিয়াছিল না ॥৬৮॥

**अन्वयः**—प्रभावनी मधुश्रीः जगत् वशीकर्त्तुं प्रभ्वी अस्य स्मरस्य अनीके जयन्तीः केतनवैजयन्तीः तनवै इति (मत्वा इव) इमाः कदलीः तेने ॥६९॥

**टीका**—जगदिति । प्रभावयतीति प्रभावनी सम्पादयित्री । कर्त्तरि ल्युटि ङीप् । मधुश्रीः कर्त्री जगद्वशीकर्त्तुम्प्रभ्वी समर्थे अस्य स्मरस्यानीके सैन्ये जयन्तीर्जित्वरीः केतनवैजयन्तीः ध्वजपताकाः तनवै करवाणि । तनोतेः प्राप्तकाले लोट् टेरैत्वमित्यैकारः अःडुत्तमस्य पिच्चेति आटि आटश्चेति वृद्धिः । इति मनीषयेति शेषः । इमाः कदलीः रम्भातरून् तेने वितस्तार । कदली वारणबुषा रम्भामोचांशुमत्फलेत्यमरः । कदलीषु वाक्यवैजयन्तीत्वोत्प्रेक्षा । वृत्तमुपजातिः ॥६९॥

**टिप्पनी**—प्रभावनीति । अत्र प्रतीयमाना क्रियोत्प्रेक्षा पादयमकस्थानयोः संसृष्टिः । मत्वेति पदस्यानुक्तावपि न न्यूनपदतादोषः सामर्थ्यादेव तदवगतेः "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणोक्तेः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६९॥

**বাঙ্গালা**—'এই কামদেবের সৈন্যগণ জগৎসংসারকেই আয়ত্ত করিতে সমর্থ; সুতরাং ইহাদিগের মধ্যে জয়কারী ধ্বজ ও পতাকা বিস্তার করিয়া দিব' ইহা মনে করিয়াই যেন উৎপাদনশক্তিশালিনী বসন্তলক্ষ্মী এই সকল কদলীবৃক্ষ জন্মাইয়া দিল ॥৬৯॥

**अन्वयः**—असती स्मररागमयी तमिस्रा रवेः वपुः परितस्तार (इति) अवश्यम् । (येन) तारवे कोकिले परितः रसति (सति) दिवा अपि स्त्री अवश्यं प्रियम् आप ॥७०॥

**टीका**—स्मरेति । असती दुष्टा स्मरेण कामेन निमित्तेन यो रागो रक्तिमा स एव तन्मयी तमिस्रा तमस्तोमः । तमिस्रा तिमिरे रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां चेति विश्वः । रवेर्वपुर्मण्डलं परितस्तार आवव्रे अह्नि रजनीभियमजनयामासेत्यर्थः ।

বপুরম্বুবিহারহিমং শুচিনা রুচিরং কমনীয়তরা গমিতা।
রমণীন রমণ্যচিরাংশুলতারুচিরঙ্কমনীয়ত রাগমিতা ॥৭১॥

---

পরিপূর্বাৎ স্তৃণাতের্লিট্। অবশ্যংসত্যমিত্যর্থঃ। কুতঃ পরিতঃ সমন্তাত্তাররবে উচ্চতরধ্বনৌ কোকিলে রসতি কূজতি সতি ইত্যুদ্দীপকোক্তিঃ। স্ত্রী স্ত্রিয় ইত্যর্থঃ। জাতাবেকবচনম্। দিবেতি সপ্তম্যর্থেঽব্যয়ং বশাঙ্গতো বশ্যঃ। বশাঙ্গত ইতি যৎপ্রত্যয়ঃ। ন বশ্যস্তমবশ্যম-বশাঙ্গতমপীত্যর্থঃ। প্রিয়মাপ স্বয়মভিসসারেত্যর্থঃ। যদবগণয্যন্তমপি প্রিয়ং দিবাপি মানমবগণয্য নিষেধঞ্চোল্লঙ্ঘ্য সমগচ্ছন্ তৎ সত্যং রাগতিমিরতিরোহিতমানভানুমণ্ডলা মানিন্য ইতি রূপকানুপ্রাণিতা প্রিয়াপ্তিক্রিয়ানিমিত্তা পরিস্তরণক্রিয়াস্বরূপোৎপ্রেক্ষা অবশ্যমিতি ব্যঞ্জকপ্রয়োগাদ্বাচ্যা। ঔপচ্ছন্দসিকং বৃত্তম্। বিষমে সসজাগুরূ সমে চেৎ সংভরয়াশ্চন্দসিকন্তদৌপপূর্বমিতি লক্ষণাৎ ॥৭০॥

টিপ্পনী—স্মরেতি। অত্র পূর্বার্দ্ধং প্রতি পরার্দ্ধগতবাক্যার্থৌ হেতুরিতি বাক্যার্থহেতুকং কাব্যলিঙ্গং পাদ-যমকঞ্চেতি টীকোক্তোৎপ্রেক্ষারূপকাভ্যাং সহ তয়োঃ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭০॥

বাঙ্গালা—কামানুরাগরূপ দূষিত অন্ধকার, নিশ্চয়ই কামুকী স্ত্রীর পক্ষে সূর্য্যমণ্ডলকে আবৃত করিয়াছিল। যেহেতু, কোকিলগণ উচ্চস্বরে সকল দিকে রব করিতে লাগিলে, সেই সকল কামুকী স্ত্রী, দিনের বেলায়ও অনায়ত্ত প্রিয়তমের নিকট অভিসরণ করিয়া-ছিল ॥৭০॥

অন্বয়ঃ—শুচিনা অম্বুবিহারহিমং রুচিরং বপুঃ গমিতা কমণীয়তরা অচিরাংশুলতারুচিঃ রাগম্ ইতা রমণী রমণেন অঙ্কম্ অনীয়ত ॥৭১॥

টীকা—অথ কৈন গ্রীষ্মমাহ, বপুরিতি। শুচিনা গ্রীষ্মেণ প্রয়োজককর্ত্রা অম্বুবিহা-রেণ জলক্রীড়য়া হিমং শীতলম্ অতএব রুচিরমুজ্জ্বলং বপুর্দেহং গমিতা প্রাপিতা। গতিবুদ্ধী-ত্যাদিনা অণিকর্ত্তুঃ কর্ম্মত্বম্। প্রধানকর্ম্মণ্যাখ্যেয়ে লাদীনাহুর্দ্বিকর্ম্মণামিতি অভিহিতত্বঞ্চ। অতএব কমনীয়তরা রমণীয়তরা অচিরাংশুর্লতেবাচিরাংশুলতা বিদ্যুল্লতা তস্যা রুচি-রিব রুচির্যস্যাঃ সা অচিরাংশুলতারুচিঃ ইত্যুপমাদ্বয়ং তথা রাগমনুরাগমিতা প্রাপ্তা। ইণঃ কর্ত্তরি ক্তঃ। রমণী রমণেন প্রিয়েণাঙ্কমুৎসঙ্গমনীয়ত নীতা। নীহৃকৃষবহাং দ্বিকর্ম্মকত্বমিত্যুক্তেঃ নয়তের্দ্বিকর্ম্মকতা শ্লেষং পূর্ব্ববৎ। তোটকং বৃত্তম্ ॥৭১॥

টিপ্পনী—বপুরিতি। অত্র টীকোক্তোপমাদ্বয়েন সহ পাদযমকস্য সংসৃষ্টিঃ। গুণরীতী পূর্ব্ববৎ ॥৭১॥

বাঙ্গালা—গ্রীষ্মকাল, রমণীদিগকে জলক্রীড়া করাইয়া তাহাদের শরীরটীকে শীতল ও মনোহর করিয়া দিয়াছিল; তাহাতে তাহারা বিশেষ সুন্দরী হইয়াছিল এবং বিদ্যুল্ল-তার ন্যায় তাহাদের শোভা জন্মিয়াছিল; আর তাহারা অনুরাগিণীও হইয়াছিল; তাই প্রিয়তমেরা তাহাদিগকে কোলে নিয়াছিল ॥৭১॥

**মুদমব্দভুবামপাং ময়ূরাঃ সহসায়ন্ত নদী পপাট লাভে।**
**অলিনা রমতালিনী শিলীন্ধ্রে সহ সায়ন্তনদীপপাটলাভে ॥৭২॥**
**কুটজানি বীক্ষ্য শিখিভিঃ শিখরীন্দ্রং সময়াবনৌ ঘনমদভ্রমরাণি।**
**গগনং চ গীতনিনদস্য গিরোচ্চৈঃ সময়া বনৌঘনমদভ্রমরাণি ॥৭৩॥**

---

অন্বয়ঃ—অব্দভুবাম্ অপাং লাভে (সতি) সহসা ময়ূরাঃ মুদম্ আয়ন্ত, নদী পপাট, (তথা) অলিনী অলিনা সহ সায়ন্তন-দীপ পাটলাভে শিলীন্ধ্রে অরমত ॥৭২॥

টীকা—অথ দ্বাভ্যাং বর্ষর্ত্তুং বর্ণয়তি। মুদমিত্যাদি। অব্দভুবাং মেঘপ্রভবাণাম্ অপাং লাভে মেঘে বর্ষতি সতীত্যর্থঃ। সহসা ময়ূরা মুদমানন্দমায়ন্তালভন্ত। অয় গতৌ লুঙি আড়জাদীনামিত্যাড়াগমে বৃদ্ধিঃ। নদী পপাট নদ্যঃ প্রাবহন্নিত্যর্থঃ। অট পট গতৌ লিট্। জাতাবেকবচনম্। অলিনা ভৃঙ্গেণ সহ সায়ন্তনঃ সায়ম্ভবঃ। সায়-শ্চিরমিত্যাদিনা ট্যুপ্রত্যয়ঃ তুড়াগমশ্চ। স চাসৌ দীপশ্চ তদ্বৎ পাটলাভে পাটলপ্রভে ইত্যু-পমালঙ্কারঃ। তস্মিন্ শিলীন্ধ্রে কন্দলীকুসুমে অলিনী অরমত। অত্র ময়ূরমোদপ্রাপ্ত্যা-নেককর্ত্তৃকক্রিয়াযৌগপদ্যাল্লিনাধিকরণাক্রিয়াসমুচ্চয়রূপঃ সমুচ্চয়ালঙ্কারভেদঃ। গুণক্রিয়া-যৌগপদ্যং সমুচ্চয় ইতি সামান্যলক্ষণম্। ঔপচ্ছন্দসিকং বৃত্তম্ ॥৭২॥

টিপ্পনী—মুদমিতি। অত্র সাহিত্যদর্পণমতে ন টীকোক্তঃ ক্রিয়াসমুচ্চয়ালঙ্কারঃ, তত্রাতিশয়োক্তি-মূলত্বনিয়মাৎ। কিন্তু পাদযমকমাত্রম্। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭২॥

বাঙ্গালা—মেঘের জল লাভ করামাত্রই ময়ূরগণ আনন্দ লাভ করিল; নদীসমূহ প্রবাহিত হইতে লাগিল এবং সায়ংকালের প্রদীপের ন্যায় রক্তবর্ণ শিলীন্ধ্রে (ব্যাঙের ছাতীতে) বসিয়া ভ্রমরীরা ভ্রমরদিগের সহিত রমণ করিতে থাকিল ॥৭২॥

অন্বয়ঃ—শিখরীন্দ্রং সময়া অবনৌ ঘনমদভ্রমরাণি কুটজানি বনৌঘনমদস্যং গগনং চ বীক্ষ্য শিখিভিঃ গীতনিনদস্য সময়া গিরা উচ্চৈঃ অরাণি ॥৭৩॥

টীকা—কুটজানীতি। শিখরীন্দ্রং সময়া রৈবতকাদ্রেঃ সমীপে। অভিতঃ পরিতঃ সময়েত্যাদিনা দ্বিতীয়া। অবনৌ প্রদেশে ঘনমদা ভ্রমরা যেষু তানি ঘনমদভ্রমরাণি কুটজানি কুটজকুসুমানি বনৌঘেন পয়ঃপূরেণ নমন্ত্যম্ভাংসি মেঘা যস্মিন্ তৎ বনৌঘনমদভ্রম্। পয়ঃ কীলালমমৃতং জীবনং ভুবনং বনমিত্যমরঃ। গগনঞ্চ বীক্ষ্য শিখিভির্ময়ূরৈর্গীত-নিনদস্য গানধ্বনেঃ সময়া তুল্যয়া। তুল্যার্থৈরিত্যাদিনা বৈকল্পিকী ষষ্ঠী। গিরা বাচা কেকয়েত্যর্থঃ। উচ্চৈররাণি রণিতম্। রণশব্দে ভাবে লুঙ্, চিণো লুক্। কুটজা বৃত্তম্। সজসা ভবেদিহ সগৌ কুটজমিতি লক্ষণাৎ ॥৭৩॥

টিপ্পনী—কুটজানীতি। অত্র গীতনিনদস্য সময়া ইতি আর্থী উপমা পাদযমকঞ্চেত্যনয়োঃ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ বৈদর্ভী চ রীতিঃ ॥৭৩॥

বাঙ্গালা—রৈবতকপর্বতের নিকটবর্ত্তী স্থানে কুটজফুল ফুটিয়াছিল, তাহাতে বিশেষ

अभीष्टमासाद्य चिराय काले समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु समुद्धृताशङ्कमनीचकाशे ॥७४॥
स्तनयोः समयेन याङ्गनानामभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलानामभिनद्धा रसमानसारसेन ॥७५॥

---

মদমত্ত ভ্রমরগণ অবস্থান করিতেছিল; আর জলভারে অবনত মেঘসমূহ আকাশে বিচরণ করিতেছিল; এই সকল দেখিয়া ময়ূরগণ গীতধ্বনির তুল্য আপন কেকারবে উচ্চস্বরে রব করিতেছিল ॥৭৩॥

अन्वयः—कमनी योषित् अनीच-काशे काले मनोजन्मसुखोदयेषु धृताशम् अभीष्टं चिराय समुद्धृताशङ्कम् (यथा स्यात् तथा) आसाद्य समुत् (सती) चकाशे ॥७४॥

टीका—अथ त्रिभिः शरदं वर्णयति । अभीष्टमित्यादि । कामयत इति कमनी कामयित्री । कम्रः कामयिताभीकः कमनः कामनोऽभिक इत्यमरः । कमेः कर्त्तरि ल्युटि ङीप् । योषित् । जातावेकवचनम् । अनीचा उन्नताः काशाः अश्ववाला यस्मिन् अनीचकाशे काले शरदीत्यर्थः । मनोजन्मसुखोदयेषु कामसुखाविर्भावेषु धृता आशा अभिलाषो तेन तम् अभीष्टं प्रियञ्चिराय चिरकालेन । चिराय चिररात्रायेत्यमरः । सम्यगुद्धृता उत्कृष्टा आशङ्का सङ्कोचो यस्मिन् कर्मणि तत्समुद्धृताशङ्कं विस्रब्धं यथा तथा आसाद्य प्राप्य मुदा सह वर्त्तत इति समुत् सानन्दा सती चकाशे विललासेत्यर्थः । अत्र समुच्चकाश इति योषितः प्रियतः प्रियप्राप्तिनिमित्तहर्षाख्यभावनिबन्धनात् प्रेयोऽलङ्कारः । रसभावतदाभासतत्प्रशमानां निबन्धे रसवत्प्रेय ऊर्जस्विसमाहितानीति लक्षणात् । वृत्तमुपजातिः ॥७४॥

टिप्पनी—अभीष्टमिति । अत्र टीकोक्तप्रेयोऽलङ्कारेण सह पादयमकस्य संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥७४॥

বাঙ্গালা—যে কালে কেশেগুলি উঁচু উঁচু হইয়া থাকে; সেই শরৎকালে কামুকী রমণীরা, সম্ভোগসুখের জন্য আশান্বিত পতিদিগকে বহুকালের পরে নিঃশঙ্কচিত্তে লাভ করিয়া, আনন্দিত হইয়া শোভা পাইতে লাগিল ॥৭৪॥

अन्वयः—रसमानसारसेन समयेन अङ्गनानां स्तनयोः या अभिनद्धा, हारसमा सा जलानां ततिः रसेन परिरम्भरुचिं न अभिनत् ॥७५॥

टीका—स्तनयोरिति । रसमानाः कूजनशीलाः । ताच्छील्यवयोवचनशक्तिषु चानशिति ताच्छील्ये चानश् प्रत्ययः । रसतेः परस्मैपदित्वान्न शानच् प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिन् तेन रसमानसारसेन समयेन शरत्कालेनेत्यर्थः सारसानां तदैव सम्भवात् । सारसो मैथुनी कामी गोनर्दः पुष्कराह्वय इति यादवः । अङ्गनानां स्तनयोर्या जलानां ततिः शारदोष्मजन्मा स्वेदोदविन्दुसन्दोहः अभितो नद्धा अभिनद्धा । नह्यतेर्भिः

जातप्रीतिर्या मधुरेणानुवनान्तं कामे कान्ते सारसिकाकाकुरुतेन ।
तत्सम्पर्कं प्राप्य पुरा मोहनलीलां कामिकान्ते सा रसिका का कुरुते न ॥७६॥
कान्ताजनेन रहसि प्रसभं गृहीतकेशे रते स्मरसहासवतोषितेन ।
प्रेम्णा मनःसु रजनीष्वपि हैमनीषु के शेरते स्म रसहासवतोषितेन ॥७७॥

---

पूर्वात् कर्मणि क्तः नद्यो ष इति षत्वम् । हारसमा मुक्ताहारतुल्या कुचमण्डलमण्डनाय-मानेति भावः । सा जलानां ततिः रसेन रागेण हेतुना बलीयसीति भावः । परिरम्भरुचि-मालिङ्गनेच्छां नाभिनत् न बिभेद । शारदस्वेदस्याप्यलङ्कारतया उद्दीपकस्याजुगुप्सित-त्वान्निःसपत्नशृङ्गारा विजयन्त इत्यर्थः । अतएव रसनिबन्धनाद्रसवदलङ्कारः । लक्षणमुक्तं पूर्वश्लोके । औपच्छन्दसिकं वृत्तम् ॥७५॥

**टिप्पनी**—स्तनयोरिति । अत्र हारसमेति आर्थी उपमा टीकोक्तो रसवदलङ्कारः पादयमकञ्चेत्य-नयोः संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥७५॥

**বাঙ্গালা**—যে কালে সারসপক্ষীরা রব করিয়া থাকে, সেই শরৎকাল রমণীদিগের স্তনযুগলে যে ঘর্ম্মজলবিন্দুশ্রেণী জন্মাইয়াছিল ; হারের তুল্য সেই ঘর্ম্মজলবিন্দুশ্রেণী, বিশেষ অনুরাগবশতঃ তাহাদের আলিঙ্গনের অভিলাষ নষ্ট করিয়াছিল না ॥৭৫॥

**अन्वयः**—या अनुवनान्तं मधुरेण सारसिका काकुरुतेन कामे कान्ते जातप्रीतिः (अभूत्) ; रसिका सा का एकान्ते तत्सम्पर्कं प्राप्य पुरा कां मोहनलीलां न कुरुते ? ॥७६॥

**टीका**—जातेति । या स्त्री अनुवनान्तम् । विभक्त्यर्थेऽव्ययीभावः । मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस्य एव सारसिकाः सारसाङ्गनाः । कातपूर्वस्येत्वम् । तासां काकुरुतेन विकृतशब्देन । काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः । काकुश्च तद्रुतञ्च तेन । कामे कामकल्पे । सिंहो देवदत्त इतिवद्गौणप्रयोगः । कान्ते प्रिये जातप्रीतिः जातस्नेहा अभूत् । रसिका रसवती रागवतीत्यर्थः । अत इति ठनाविति ठन् प्रत्ययः । सा का स्त्री एकान्ते रहसि तस्य कान्तस्य सम्पर्कं प्राप्य पुरापुरुषप्रवेशात् पूर्व-मेव कां मोहनलीलां सुरतक्रीड़ां न कुरुते सर्वापि स्त्री सर्वानपि सुरतविशेषान् कामतन्त्र-प्रसिद्धान् विस्रब्धमकारेत्यर्थः । तेन शृङ्गारस्य परा काष्ठा प्राप्तेत्यर्थः । मत्तमयूरं वृत्तम् ॥७६॥

**टिप्पनी**—जातेति । अत्र का न कुरुते अपि तु सर्वैव कुरुते इत्यर्थान्तरापतनादर्थापत्तिरलङ्कारः पादयमकञ्चेत्युभयोः संसृष्टिः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥७६॥

**বাঙ্গালা**—যে রমণী উদ্যানের মধ্যে সুমধুর সারসীপক্ষিণীর বিকৃত রবে কামদেবতুল্য রূপবান্ প্রিয়তমের প্রতি অনুরাগিণী হইয়াছিল ; সেইরূপ রসিকা কোন্ রমণী নির্জনে সেই প্রিয়তমের সম্মেলন লাভ করিয়া প্রথমেই কোন্ রকমের রমণক্রীড়া না করিয়াছিল ॥৭৬॥

**अन्वयः**—स्मर-सहासव-तोषितेन रसहासवता प्रेम्णा मनःसु उषितेन कान्ताजनेन रहसि प्रसभं गृहीतकेशे रते हैमनीषु अपि रजनीषु के शेरते स्म ? ॥७७॥

गतवतामिव विस्मयमुच्चकै रसकलामलपल्लवलीलया ।
मधुकृतामसकृद्गिरमावलीरसकलामलपल्लवलीलया ॥৭৮॥

---

टीका—अथ केन हेमन्तमाह । कान्तेति । सहत इति सहः । पचाद्यच् । स्मरस्य सहः कामोद्दीपक इत्यर्थः । तेनासवेन तोषितः तेन स्मरसहासवतोषितेन अतएव रस-हासावस्य स इति रसहासवता रागहासवता अतएव प्रेमणा मनःसु पुंसां चित्तेषु उषितेन वसता । वसतेः कर्त्तरि क्तः वसतिक्षुधोरिडितीड़ागमः । गतिबुद्धीत्यादिसूत्रे चकाराद्वर्त्तमानार्थता । कान्तैव जनस्तेन कान्ताजनेन । जातावेकवचनम् । प्रसभं रहसि बलाद् गृहीतकेशे आकृष्टशिरोरुहे रते सुरते हैमन्ते भवा हैमन्त्यस्तासु हैमनीषु अपि द्राघीयसीष्वपीति भावः । सर्वत्राण् च तलोपश्चेति हेमन्तशब्दादण् प्रत्ययः तकारलोपश्च टिड्ढाणञित्यादिना ङीप् । रजनीषु के युवानः शेरते स्म स्वपन्ति स्म न केऽपीत्यर्थः । लट् स्मे इति भूते लट् । एतेनाग्निभूमिं गतः शृङ्गार इति व्यज्यते । वसन्ततिलका वृत्तम् ॥৭৭॥

टिप्पनी—कान्तेति । अत्रापि पूर्ववदर्थापत्तिः पादयमकञ्चेत्यनयोः संसृष्टिः । सम्भोगशृङ्गारो रसः, माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥৭৭॥

বাঙ্গালা—রমণীরা নির্জন স্থানে কামোদ্দীপক মদ্য পান করিয়া আনন্দিত হইয়াছিল; তাই তাহাদের হৃদয়ে অনুরাগ এবং মুখে হাস্য ছিল; আর তাহারা প্রেমবশতঃ পুরুষদিগের চিত্তে বাস করিতেছিল; এহেন রমণীরা রমণের সময়ে বলপূর্বক কেশ ধারণ করিলে, কোন্ যুবা হেমন্তকালের দীর্ঘরাত্রিতেও নিদ্রা গিয়াছিল? ॥৭৭॥

अन्वयः—असकलामलपल्लवलीलया विस्मयं गतवताम् इव मधुकृतां लवली-लया आवलिः रसकलां गिरम् उच्चकैः असकृत् अलपत् ॥৭৮॥

टीका—अथ केन शिशिरं वर्णयति । गतवतामिति । असकलामलपल्लवलीलया असकला असमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीला तया नृत्यरूपयेत्यर्थः विस्मयं गतवतामिव स्थितानामिवेत्युत्प्रेक्षा मधुकृतां मधुकराणां सम्बन्धिनी लवलीषु लताविशेषेषु लयो लयनं स्थितिर्यस्याः सा लवलीलया आवलिः पङ्क्तिः रसकलां रसेन मध्वास्वादेन कलामव्यक्तमधुराम् । ध्वनौ तु मधुरास्फुटे कल इत्यमरः । गिरं वाचमसकृदुच्चैरलपत । मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलयाजनितविस्मयहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । द्रुतविलम्बितं वृत्तम ॥৭৮॥

टिप्पनी—गतेति । अत्र टीकोक्तोत्प्रेक्षया सह पादयमकस्य संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥৭৮॥

বাঙ্গালা—যে সকল পল্লব সম্পূর্ণ বাহির হইয়াছিল না, সে গুলির (বায়ুভরে) নৃত্য-

কুর্বন্তমত্যতিভরেণ নগানবাচঃ
পুষ্পৈর্বিরামমলিনাং চ ন গানবাচঃ।
শ্রীমান্ সমস্তমনুসানু গিরা বিহর্ত্তুং
বিভ্রত্যচোদি স ময়ূরগিরা বিহর্ত্তুম্ ॥৭৯॥
ইতি শ্রীমাঘকৃতে শিশুপালবধে মহাকাব্যে
ঋতুবর্ণনং নাম ষষ্ঠঃ সর্গঃ ॥৬॥

---

লীলা দেখিয়া ভ্রমরগণ যেন বিস্ময়াপন্ন হইয়াছিল; তাই তাহারা নোয়াড়ির (নোয়াইলের) পল্লবে বসিয়া, বার বার উচ্চ স্বরে মধুপাননিবন্ধন অব্যক্তমধুর রব করিতেছিল ॥৭৮॥

**অন্বয়ঃ**—ইতি পুষ্পৈঃ অতিভরেণ নগান্ অবাচঃ কুর্বন্তম্ অলিনাং গানবাচশ্চ ন বিরামং কুর্বন্তং সমস্তম্ ঋতুম্ অনুসানু বিভ্রতি ইহ গিরৌ বিহর্ত্তুং ময়ূরগিরা শ্রীমান্ সঃ অচোদি (ইব) ॥৭৯॥

**টীকা**—কুর্বন্তমিতি। ইতীত্থং পুষ্পৈরত্যতিভরেণ মহাভরেণ তত্কর্তৃকেন বা গৌরবেণ নগান্ বৃক্ষানবাচোঽবনম্রান্। অঞ্চেরবপূর্বাদৃত্বিগিত্যাদিনা ক্বিন্প্রত্যয়ঃ। কুর্বন্তম্ অলিনাং গানবাচো গীতধ্বনের্ঝঙ্কারস্য চ ন বিরামমবিরামমসমাপ্তিং কুর্বন্তং সমস্তমৃতুং সর্বানৃতূন্ অনুসানু সানুষ্বিত্যর্থঃ। বিভক্ত্যর্থেঽব্যয়ীভাবঃ। বিভ্রতি বিভ্রাণে ইহ গিরৌ রৈবতকাদ্রৌ বিহর্ত্তুং ক্রীড়িতুং শ্রীমান্ স হরিঃ ময়ূরগিরা কেকয়া অচোদি প্রেরিতঃ। ভগবানিহ বিহর ঋতুগণমনুগৃহাণেতি প্রার্থিত ইবেত্যুৎপ্রেক্ষা। ব্যঞ্জকাপ্রয়োগাদ্গম্যা। বৃত্তমুক্তম্ ॥৭৯॥

ইতি শ্রীমহোপাধ্যায়কোলাচলমল্লিনাথসূরিবিরচিতে
মাঘকাব্যব্যাখ্যানে সর্বঙ্কষাখ্যে
ষষ্ঠঃ সর্গঃ ॥৬॥

—০—

**টিপ্পনী**—কুর্বন্তমিতি। অত্র কুর্বন্তমিত্যেকয়া ক্রিয়য়া নগবিরাময়োঃ কর্ম্মতয়াভিসম্বন্ধাৎ তুল্যযোগিতা প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা পাদান্তযমকঞ্চেত্যেতেষাং সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৯॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশবিরচিতায়াং শিশুপালবধটিপ্পন্যাং
মাধুরীসমাখ্যায়াং ষষ্ঠঃ সর্গঃ ॥০॥

—:০:—

**বাঙ্গালা**—এই রৈবতকপর্বতে বিহার করিবার জন্য, শ্রীকৃষ্ণকে ময়ূরগণ যেন এই বলিয়া প্রণোদিত করিয়াছিল যে, 'এই পর্বতের সানুদেশে সকল ঋতুই বিরাজ করিতেছে এবং সেই ঋতুগণ পুষ্পের ভারে বৃক্ষগুলিকে অবনত করিয়াছে আর ভ্রমরের গীতধ্বনিরও বিরাম করিয়া দিতেছে না (সুতরাং আপনি এখানে বিহার করুন) ॥৭৯॥

---

# सप्तमः सर्गः ।



**अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् ।**
**निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥१॥**

---

**अन्वयः**—अथ सः अनुगिरम् ऋतुभिः वितायमानां वनान्तलक्ष्मीं विलोकयितुं निरगमत् । अभिराद्धुम् आदृतानां प्रयासः महत्सु निष्फलः न भवति ॥१॥

**टीका**—इत्थम् ऋतुगणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहार-लीलावर्णनमारभते । अनुगिरमिति । अथर्त्तुप्रादुर्भावानन्तरं स हरिः गिरमित्यनुगिरम् । विभक्त्यर्थेऽव्ययीभावः । गिरेश्च सेनकस्येति समासान्तः । ऋतुभिर्वितायमानां वितन्यमानाम् । तनोतेः कर्मणि लटः शानजादेशः । तनोतेर्यकीति वैभाषिक आकारादेशः । वनान्तलक्ष्मीं विलोकयितुं निरगमत् निर्गतः । पुषादीत्यादिना गमेर्लुङि च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्त्तुमिति भावः । तथा हि, अभिराद्धुमाराधयितुमादृतानामादरं कुर्वतामास्थावतामित्यर्थः । कर्त्तरि क्तः । प्रयासः सेवायासः महत्सु निष्फलो न भवति न हि भक्तानुकम्पिनो महान्तस्तत्सेवां व्यर्थयन्तीति भावः । अतो हरेरप्यृतुगणानुग्रहणार्थं निर्गमो युक्त इति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यविशेषकार्य्य-कारणभावाभ्यां निर्दिष्टप्रकृतार्थसमर्थनादर्थान्तरन्यास इति सर्वस्वसूत्रम् । अत्र सर्गे पुष्पिताग्रा वृत्तम् । अयुजि न स युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ॥१॥

**टिप्पनी**—अनुगिरमिति । अत्र पूर्वार्द्धवाक्यान्वयिनः अनुगिरमित्येकस्य पदस्य परार्द्धे पाठात् अर्द्धान्तरैकपदता दोषः । "निरागमदृतुभिर्वितायमानाम् अनुभवितुं स गिरौ वनान्तलक्ष्मीम् । अथ चिरमभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥" इति पाठेन तत्परिहारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

**বাঙ্গালা**—তদনন্তর, শ্রীকৃষ্ণ রৈবতকপর্বতের বনশোভা দর্শন করিবার জন্য (শিবির হইতে) নির্গত হইলেন ; কেন না সমস্ত ঋতু একদা আবির্ভূত হইয়া সে শোভাকে বর্দ্ধিত করিয়াছিল । (শ্রীকৃষ্ণ নির্গত হওয়ায় ইহাই বুঝিতে হইবে যে,) প্রধান ব্যক্তিদের সেবা করিবার জন্য যাহারা আগ্রহ করে, তাহাদের সে প্রয়াস ব্যর্থ হয় না ॥১॥

दधति सुमनसो वनानि बह्वीर्युवतियुता यदवः प्रयातुमीषुः।
मनसिशयमहास्त्रमन्यथामी न कुसुमपञ्चकमप्यलं विसोढुम् ॥२॥
अवसरमधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः।
अवनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥३॥

---

अन्वयः—यदवः युवतियुताः (एव सन्तः) बह्वीः सुमनसः दधति वनानि प्रयातुम् ईषुः। अन्यथा अमी मनसिशयमहास्त्रं कुसुमपञ्चकम् अपि विसोढुं न अलम् ॥२॥

टीका—दधतीति। यदवो यादवाः। व्याख्यातं चैतत्। बह्वीर्बह्वीः बहुविधा इत्यर्थः। बह्वादिभ्यश्चेति विकल्पादीकारः। सुमनसः पुष्पाणि। स्त्रियः सुमनसः पुष्पमित्यमरः। दधति दधन्ति। वा नपुंसकस्येति अभ्यस्तात्‌ शतुर्वैकल्पिको नुम्प्रतिषेधः। वनानि युवतियुताः स्त्रीसमेताः एव प्रयातुमीषुरिच्छन्ति स्म। अत्र हेतुमाह। अन्यथा युवतिजनाभावे अमी यदवो मनसि शेते इति मनसिशयः कामः। अधिकरणे शेतेरित्यच् प्रत्ययः, हलदन्तात्सप्तम्याः सञ्ज्ञायामित्यलुक्। तस्य महास्त्रभूतं कुसुमपञ्चकमपि पञ्चकुसुमानीत्यर्थः। पञ्चानां सङ्घः पञ्चकम्। सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कप्रत्ययः। विसोढुं नालं न शक्ताः। सकलसुमनसां सामर्थ्यं तत्रारविन्दादीनामेव पञ्चानां बाणत्वप्रसिद्धत्वादिति भावः। अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनात् वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः। अरविन्दमशोकञ्च चूतञ्च नवमल्लिका नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥२॥

टिप्पनी—दधतीति। अत्र द्वितीयपादे एकस्य यकारस्य असकृत्साम्यात् वृत्त्यनुप्रासः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—যদুবংশীয়েরা যুবতিদিগকে সঙ্গে লইয়াই, বহুতরপুষ্পযুক্ত বনে বিচরণ করিবার ইচ্ছা করিয়াছিলেন। না লইলে, উঁহারা কামদেবের মহাস্ত্রস্বরূপ পাঁচটী পুষ্পকেও সহ্য করিতে পারিতেন না।২॥

अन्वयः—तम् अवसरम् अधिगम्य हृदयं हरन्त्यः अयत्नकृतोज्ज्वलस्वरूपाः अङ्गनाः तदानीम् अवनिषु पदं न्यदधत, विभ्रमसम्पदः (च) अङ्गनासु पदं न्यदधत ॥३॥

टीका—अवसरमिति। तमवसरं सहगमनाकालम् अधिगम्य हृदयं हरन्त्यो हृदयङ्गमा भवन्त्यः सर्वं हि प्रार्थ्यमानमेव प्रियं भवतीत्यर्थः यत्नेन कृतं न भवतीत्ययत्नकृतं तथाप्युज्ज्वलं स्वरूपं यासान्ताः स्वभावसुन्दरमूर्त्तय इत्यर्थः अङ्गनास्तदानीन्तस्मिन्नवसरे अवनिषु पदं न्यदधत निहितवत्यः पादचारेणैव चेलुरित्यर्थः। दधातेर्लङ्‌ भावकर्मणोरिति ... अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत तदानीं विलासाः प्रवृत्ता इत्यर्थः। अत्राङ्गनानां विलाससम्पदां चोभयोनामपि प्रकृतानामेव हृदयहरणादिना धर्मेणासाम्येनौपम्यस्य गम्यमानत्वात् केवलप्रकृतविषया तुल्ययोगितालङ्कारः।

नखरुचिविरचितेन्द्रचापलेखं ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे भुजलतिका मुहुरस्खलत्तरुण्याः ॥४॥
अतिशयपरिणाहवान् वितेने बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थलेऽपरस्या ध्वनिमधिकं कलमेखलाकलापः ॥५॥

---

वाचाभेदेनाप्यङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वावगमादेकावलीभेदो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥३॥

टिप्पनी—अवसरमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

বাঙ্গালা—স্বাভাবিক-উজ্জ্বলাকৃতি এবং মনোহারিণী রমণীরা সেই রূপ সময় পাইয়া তখন ভূতলে পদক্ষেপ করিল (পাদচারেই যাইতে লাগিল); আর বিলাস সমৃদ্ধিও সেই রমণীদিগের উপরে প্রতিষ্ঠা লাভ করিল ॥৩॥

अन्वयः—ललितगतेषु नखरुचिविरचितेन्द्रचापलेखं गतागतं दधाना तरुण्याः भुजलतिका मुखरितवलयं पृथौ नितम्बे मुहुः अस्खलत् ॥४॥

टीका—न्यदधत । विभ्रमसम्पदोऽङ्गनास्वित्युक्तं ता एव प्रपञ्चयति, नखेति । ललितगतेषु मन्दगमनेषु नखानां रुचिभिः प्रभाभिः रचिता इन्द्रचापलेखा यस्मिन् कर्मणि तद्यथा तथा गतागतं यातायाते । विप्रतिषिद्धं चानधिकरणवाचीति वैभाषिको द्वन्द्वैकवद्भावः । दधाना तरुण्याः भुजलतिका मुखराः कृता इति मुखरिताः ध्वनिता वलया यस्मिन् कर्मणि तद् यथा तथा । कटको वलयोऽस्त्रियामित्यमरः । पृथौ नितम्बे मुहुरस्खलत् चस्खाल । अत्र नखरुचीत्यालम्बनगुणा उक्ताः । गतागतं दधाना अस्खलदिति तच्चेष्टा । मुखरितवलयमिति तदलङ्कृतिः । तटस्थास्तूक्ता वसन्तादयः अन्यत्र विस्तारत इति चतुर्विधोऽप्युद्दीपनक्रम उक्तः । उक्तञ्च आलम्बनगुणाश्चैव तच्चेष्टा तदलङ्कृतिः । तटस्थाश्चेति विज्ञेयाः चतुष्कोद्दीपनक्रम इति । तत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्च । तद्गुणो रूपलावण्यादिः । तच्चेष्टा भावहावादिः । अन्यत् सुगमम् । एवमुत्तरत्रापि ॥४॥

टिप्पनी—नखेति । अत्र इन्द्रचापरचनाया असम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिश्छेकानुप्रासश्चानयोः संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥४॥

বাঙ্গালা—কোন যুবতি যখন ধীরে ধীরে গমন করিতেছিল, তখন তাহাদের বাহু-লতা বিশাল নিতম্বদেশে একবার যাইয়া লাগিতেছিল, আবার সরিয়া আসিতেছিল এবং সেই সময়ে তাহাদের নখের কিরণগুলি ইন্দ্রধনুর শোভা জন্মাইতেছিল ; আর হাতের বালা শব্দ করিতেছিল ॥৪॥

अन्वयः—अतिशयपरिणाहवान् बहुतरम् अर्पितरत्नकिङ्किणीकः कलमेखलाकलापः अपरस्याः अलघुनि जघनस्थले अधिकं ध्वनिं वितेने ॥५॥

गुरुनिविडनितम्बबिम्बभाराक्रमणनिपीडितमङ्गनाजनस्य ।
चरणयुगमसुस्रुवत्पदेषु स्वरसमसक्तमलक्तकच्छलेन ॥६॥
तव सपदि समीपमानये तामहमिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञामनृतगिरं गुणगौरि ! मा कृथा माम् ॥७॥

---

**टीका**—अतिशयेति । अतिशयेन परिणाहवानतिविशाल इत्यर्थः । अन्यथा तज्जघनस्यापर्य्याप्तेरिति भावः । परिणाहो विशालतेत्यमरः । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । बहुनरमपि तेना आहितात रत्नानां किङ्किण्यो यस्मिन् सः । नद्युतश्चेति कप् प्रत्ययः । कलो मधुरारावी मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थले अधिकं ध्वनिं वितेने । तदलङ्कृतिरियम् ॥५॥

**टिप्पनी**—अतिशयेति । अत्र चतुर्थपादे छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

**বাঙ্গালা**—অন্য কোন যুবতির বিশাল জঘনদেশে মধুররবকারী বৃহৎ কাঞ্চীদাম গুরুতর শব্দ করিতে লাগিল; কেন না, তাহার মধ্যে বহুসংখ্যক রত্নময়কিঙ্কিণী বসান ছিল ॥৫॥

**अन्वयः**—गुरुनितम्बबिम्बभाराक्रमणनिपीडितम् अङ्गनाजनस्य चरणयुगं पदेषु अलक्तकच्छलेन स्वरसम् असक्तम् असुस्रुवत् ॥६॥

**टीका**—गुर्विति । गुरु गुरुत्वगुणयुक्तं निविडं दृढं च यन्नितम्बबिम्बन्तदेव भारस्तस्याक्रमणेनाधिष्ठानेन निपीडितं निष्पीडितम् अङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेषु अलक्तकच्छलेन लाक्षारसमिषेण स्वरसं स्वद्रवमेव । गुणो रागे द्रवे रसः इत्यमरः । असक्तमविच्छिन्नं यथा तथा असुस्रुवत् स्रवति स्म । स्रवतेः चङ्गणार्थाल्लुङि णिश्रीत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्यकर्तृक एवायमकर्मकः अन्यकर्तृकत्वे तु सकर्मकः । अत्रालक्तकच्छलेनेत्यसत्यापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः ॥६॥

**टिप्पनी**—गुर्विति । अत्र प्रथमचतुर्थपादयोश्छेकानुप्रासस्येति टीकोक्तापह्नुत्यलङ्कारेण सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६॥

**বাঙ্গালা**—গুরুতর নিতম্বমণ্ডলের ভারে নিপীড়িত রমণীদিগের চরণযুগল, অলক্তকের ছলে চরণক্ষেপের স্থানে আপনার রসই যেন পৃথক্ পৃথক্ ভাবে গলিত করিয়াছিল ॥৬॥

**अन्वयः**—अहं तां तव समीपं सपदि आनये इति मया तस्य अग्रतः अभ्यधायि । (हे) गुणगौरि ! अतिरभसकृतालघुप्रतिज्ञां माम् अनृतगिरं मा कृथाः ॥७॥

**टीका**—अथ कस्याश्चित् सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह, तवेत्यादि । तां मत्सखीं सपदि तव समीपमहमानये आनयिष्यामि । भविष्यत्सामीप्ये वर्त्त-

न च सुतनु ! न वेद्मि यन्महीयानसुनिरसस्तव निश्चयः परेषां ।
वितथयति न जातु मद्वचोऽसाविति च तथापि सखीषु मेऽभिमानः ॥৮॥
सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या ।
त्वयि तदिति विरोधनिश्चितायां भवति ! भवत्वसुहृज्जनः सकामः ॥৯॥

---

नानप्रत्ययः, कर्त्तुरभिप्राये आत्मनेपदम्। इति मया तस्याग्रतोऽभ्यधायि अभिहितम्। दधातेः कर्मणि लुङ्, आतो युक् चिण्कृतोरिति युगागमः। हे गुणगौरि ! गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्वतीति रूपकम्। अतिरभसेनातित्वरया कृता अलघुर्मंहती प्रतिज्ञा त्वदानयनार्थां यया तां मामन्तर्गिरमसत्यवाचं मा कृथाः मा कार्षीः मद्वचनं सर्वथा कर्त्तव्यमित्यर्थः। करोतेः लुङि थास्, न माङ्योगे इत्यडागमप्रतिषेधः ॥৭॥

**टिप्पनी**—तवेति। अत्र मानात्मको विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥৭॥

**বাঙ্গালা**—'আমি আমার সখীকে শীঘ্রই আপনার নিকটে আনিয়া দিতেছি' এই কথা আমি তাঁহার সম্মুখে বলিয়াছি। অতএব হে গুণ দ্বারা পার্বতীস্বরূপে! আমি তাড়াতাড়ি গুরুতর প্রতিজ্ঞা করিয়া ফেলিয়াছি; এখন তুমি আমাকে মিথ্যাবাদিনী করিও না ॥৭॥

**अन्वयः**—(हे) सुतनु ! महीयान् तव निश्चयः परेषां यत् असुनिरसः इति न च वेद्मि (इति) न; तथापि असौ जातु मद्वचः न वितथयति इति सखीषु मे अभिमानः (अस्ति) ॥৮॥

**टीका**—ननु मत्प्रतिज्ञापि दुस्त्याज्येति विप्रतिषेधमाशङ्क्याह, न वेति। हे सुतनु ! शुभाङ्गि ! दीर्घान्तोत्तरपदात्सम्बुद्धिः अन्यथा गुणः स्यात्। अहं न वेद्मीति न, किन्तु वेद्म्येवेत्यर्थः। किन्तदित्यत आह। महीयान्महत्तरस्तव निश्चयः त्वदनैक्ये प्रतिज्ञारूपः परेषां जनान्तरैः सुनिरसः सुखमोच्यः। अस्यतेः खल्प्रत्ययः। स न भवतीत्यसुनिरस इति यत् तदित्यर्थलभ्यम्। उद्देश्येन विधेयाच्चेपादाच्छब्दयोत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोग इति निबन्धः। तथापि विदितत्वेऽपि असौ मत्सखी जातु कदाचिदपि मद्वचो न वितथयति नानृतीकरोतीति सखीषु मध्ये मेऽभिमानः स्वप्रतिज्ञाभङ्गेऽपि मत्प्रतिज्ञामेव पालयत्यहङ्कारः स्वाः प्रतिज्ञातमित्यर्थः ॥৮॥

**टिप्पनी**—नचेति। अत्र रसादयः पूर्ववत् ॥৮॥

**বাঙ্গালা**—হে সুন্দরি! তোমার গুরুর প্রতিজ্ঞা যে অন্য ব্যক্তি অনায়াসে ভাঙ্গিয়া দিতে পারে না; ইহা যে আমি জানি না এমন নহে; তথাপি তুমি কখনও আমার কথা মিথ্যা কর না এই বলিয়া সখীদের মধ্যে আমার অহঙ্কার আছে ॥৮॥

**अन्वयः**—भवतीम् अनानयन्त्या मया सततं ते अनभिभाषणं परिपणितम्; (हे) भवति ! त्वयि तत् इति विरोधनिश्चितायां (सत्याम्) असुहृज्जनः सकामः भवतु ॥৯॥

गतधृतिरवलम्बितुं बतासूननलमनालपनादहं भवत्याः ।
प्रणयिनि यदि न प्रसादबुद्धिर्भव मम मानिनि ! जीविते दयालुः ॥१०॥
प्रियमिति वनिता नितान्तमागःस्मरणसरोषकषायितायताक्षी ।
चरणगतसखीवचोऽनुरोधात् किल कथमप्यनुकूलयाञ्चकार ॥११॥

---

**टीका**—सततमिति । भवतीं त्वामनानयन्त्या आनेतुमशक्नुवत्या इत्यर्थः । मया सततं सदा ते तव । कर्मणि षष्ठी । अनभिभाषणमसंभाषणं परिपणितम् । भवतीति भातेर्डवतुरित्यौणादिको डवतुप्रत्ययः, उगितश्चेति ङीप् । तस्याः सम्बुद्धिर्हे भवति ! सुभगे ! त्वयि तदिति तदसम्भाषणमस्तु इति विरोधनिश्चितायां निश्चितविरोधायां सत्याम् । वाहिताग्न्यादिष्विति विकल्पान्निष्ठायाः परनिपातः । असुहृज्जनो विपक्षवर्गः सकामः फलितमनोरथो भवतु भवेत् । प्राप्तकाले लोट् । अस्मद्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥९॥

**टिप्पनी**—सततमिति । अत्रापि रसादयः पूर्ववत् ॥९॥

**বাঙ্গালা**—আমি তোমাকে তোমার প্রিয়তমের নিকট নিয়া যাইতে পারিতেছি না; সুতরাং আমি সর্বদাই তোমার সহিত আলাপ করিব না বলিয়া পণ করিয়াছি; হে সুভগে! এইরূপ আলাপপর্য্যন্ত না থাকায় নিশ্চয়ই তোমার সহিত আমার বিরোধ ঘটিয়াছে, ইহা ভাবিয়া বিপক্ষদের কামনা সফল হইবে ॥৯॥

**अन्वयः**—गतधृतिः अहं भवत्याः अनालपनात् असून् अवलम्बितुम् अनलं बत । (अतएव, हे) मानिनि ! प्रणयिनि यदि न प्रसादबुद्धिः, (तथापि) मम जीविते दयालुः भव ॥१०॥

**टीका**—न केवलमावयोर्विरोधः प्राणहानिरपि मम स्यादित्याह, गतेति । गतधृतिरधीरा अहम्भवत्यास्तवानालपनादसम्भाषणादालपनं विहायेत्यर्थः । ल्यब्लोपे पञ्चमी । असून् प्राणानवलम्बितुन्धारयितुमनलमशक्ता । अलम्भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः । बतेति खेदे अतएव हे मानिनि ! प्रणयिनि प्रिये प्रसादबुद्धिरनुग्रहबुद्धिर्यदि नास्ति चेत्तथापि मम जीविते दयालुर्भव । स्पृहीत्यादिना आलुच् प्रत्ययः । स मृतोऽपि मत्प्राणत्राणार्थमनुग्राह्य इति भावः ॥१०॥

**टिप्पनी**—गतेति । अत्र द्वितीयपादे छेकानुप्रासोऽलङ्कारः ; तथा अनलमित्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावेनाप्राधान्यात् विधेयाविमर्शदोषः ; स च 'न भवदनालपनादहं समर्था' इति पाठेन समाधेयः । रसः पूर्ववत्, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—তুমি আমার সঙ্গে আলাপ না করায় আমার ধৈর্য্য নষ্ট হইয়া যাইবে, এবং হায়! আমি প্রাণই ধারণ করিতে পারিব না। অতএব হে মানিনি! যদিও প্রিয়তমের প্রতি তোমার অনুগ্রহবুদ্ধি না হয়, তথাপি আমার জীবনের প্রতি তুমি দয়ালু হও ॥১০॥

द्रुतपदमिति मा वयस्य ! यासीर्न नु सुतनुं परिपालयानुयान्तीम् ।
न हि न विदितखेदमेतदीयस्तनजघनोद्वहने तवापि चेतः ॥१२॥
इति वदति सखीजनेऽनुरागाद्दयिततमामपरश्चिरं प्रतीक्ष्य ।
तदनुगमवशादनायतानि न्यधित मिमान इवावनिम्पदानि ॥१३॥

---

अन्वयः—इति नितान्तम् आगःस्मरणरोषकषायितायताक्षी वनिता चरणगतसखीवाचोऽनुरोधात् किल, कथमपि प्रियम् अनुकूलयाञ्चकार ॥११॥

टीका—प्रियमिति। इतीत्थं नितान्तमागसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अत-एव कषाये लोहिते कृते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता। नियांसे च कषायोऽथ सौरभे लोहितेऽन्यवदिति विश्वः। वनिता नायिका चरणगतायाः पूर्वोक्त-वाक्यान्ते प्रणतायाः सख्या वचसोऽनुरोधादनुल्लङ्घनात् किल। किलेत्यपरमार्थे। वस्तुतस्तु अनुरागादेवेति भावः। प्रियं कथमपि कथञ्चिदनुकूलयाञ्चकार अभिमुखीचकार अनुजग्राहे-त्यर्थः। एषा खण्डिता नायिका। ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपक-लक्षणात्। अतएव कविना आगःस्मरणरोषकषायिताक्षीत्युक्तम्। एषा चासम्भाषण-चिन्ताखेदाश्रुनिःश्वासाद्यनुभाववती ॥११॥

टिप्पनी—प्रियमिति। अत्र रसः पूर्ववत्, प्रसादो गुणः, वैदर्भी च रीतिः ॥११॥

বাঙ্গালা—নায়কের অপরাধ স্মরণ করায় নায়িকার অভিমান জন্মিয়াছিল; তাহাতে তাহার আয়ত নয়নযুগল অত্যন্ত বিকৃত হইয়াছিল, তথাপি চরণনিপতিত সখীর কথানু-রোধে সে, কোন রকমে নায়কের প্রতি অনুগ্রহ করিয়াছিল ।১১॥

अन्वयः—(हे) वयस्य ! इति द्रुतपदं मा यासीः; ननु ! अनुयान्तीं सुतनुं परिपालय; तव चेतः अपि एतदीयस्तनजघनोद्वहने न विदितखेदम् [इति] न हि ॥१२॥

टीका—अथ काचित् सखी कञ्चिदग्रे शीघ्रगामिनं युग्मेनाह, द्रुतेति। हे वयस्य ! सखे ! इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीः मा गमः। यातेर्लुङि न माङ्योग इत्यट्प्रतिषेधः। अनुयान्तीमनुगच्छन्तीं सुतनुं शुभाङ्गीं प्रियामनुपालय प्रतीक्षस्व। असावपि शीघ्रमायातु तन्नाह, न हीति। तव चेतोऽपि एतदीयस्तनजघनोद्वहने विदित-खेदमनुभूतखेदन्नेति न किन्तु वेत्त्येवेत्यर्थः। अतः कथं शीघ्रमायास्यतीति भावः। सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः ॥१२॥

टिप्पनी—द्रुतेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—সখে! তুমি এই ভাবে দ্রুত পদক্ষেপ করিয়া চলিয়া যাইও না; এই সুন্দরী তোমার পিছনে যাইতেছে, উহার প্রতীক্ষা কর; বিশাল স্তন ও নিতম্ব বহন করায় ইহার যে পরিশ্রম হয়, তাহা তোমার চিত্তও যে জানে না, এমন নহে ।১২॥

यदि मयि लघिमानमागतायान्तव धृतिरस्ति गतास्मि सम्प्रतीयम् ।
द्रुततरपदपातमापपात प्रियमिति कोपपदेन कापि सख्या ॥१४॥

अन्वयः—सखीजने इति वदति (सति), अपरः दयिततमाम् अनुरागात् चिरं प्रतीक्ष्य तदनुगमवशात् अवनिं मिमानः (इव) अनायतानि पदानि न्यधित ॥१३॥

टीका—इतीति। सखीजने इति वदति सति अपरः कश्चिद्दयिततमाम् अनुरागात् स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात् तस्याः प्रियायाः कान्तायाः अनुगमः पश्चाद्गमनं तस्य वशात्तदनुसारादवनिं मिमानः मानं कुर्वाण इवेत्युत्प्रेक्षा। माङो लटः कर्त्तरि शानच्, जुहोत्यादित्वाच्छ्लाविति द्विर्भावः। अनायतान्यनन्तरालानि पदानि न्यधित निहितवान्। धाञो लुङ तङ्, स्थाघ्वोरिच्चेतीकारः सिचः कित्त्वान्न गुणः ह्रस्वादङ्गादिति सकारलोपः। एषा च नायिका स्वाधीनपतिका सा तु या न मुञ्चति वल्लभमिति लक्षणात्। वृष्टा वेयम् ॥१३॥

टिप्पनी—इतीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—সখীজন এইরূপ বলিলে, অন্য কোন নায়ক, অনুরাগবশতঃ বহুকাল যাবৎ প্রিয়তমার প্রতীক্ষা করিয়া, সে পিছনে আসিতেছিল বলিয়া, ভূতল যেন মাপিতে থাকিয়া, এমন ভাবে পদক্ষেপ করিতে লাগিল যে, তাহার ভিতরে ফাঁক ছিল না ॥১৩॥

अन्वयः—मयि लघिमानम् आगतायां (सत्याम्) यदि तव धृतिः अस्ति (तदा) इयं सम्प्रति गता अस्मि इति (वदन्ती) कापि सख्या (सह) कोपपदेन द्रुततरपदपातं प्रियम् आपपात ॥१४॥

टीका—अथ काचित्पुरः प्रयातप्रियमिलनाय शीघ्रानुधावनं प्रार्थयमानां सखीमाह, यदीति। हे सखि! मयि लघिमानमागतायां स्वयङ्गमनेन लाघवं प्राप्तायान्तव धृतिरस्ति यदि सन्तोषो भवति चेत्। धृतिः सन्तोषधैर्ययोरित्यमरः। इयमेतदवस्थैव सम्प्रत्यस्मिन् क्षण एव गतास्मि इति वदन्तीति शेषः। इतिनः गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यादित्यालङ्कारिकाः। सख्या सह कोपपदेन कोपव्याजेन वस्तुतस्तु रागादेवेति भावः। व्याजोऽपदेशो लक्ष्यञ्च निमित्तं व्यञ्जनमन्यदलिति यादवः। काचिन्नायिका द्रुततराः शीघ्रतराः पदपाताः पादन्यासा यस्मिन् कर्मणि तद्यथा तथा प्रियं वल्लभमापपात अनुधावति स्म। एषा च स्वयमप्रवृत्ता स्वलाघवशङ्कितया पूर्वं निर्वासितप्रिया अथेदानीं स्वयम्प्रवृत्तेः पश्चात्तप्ता चेति गम्यते। अतः कलहान्तरिता। कोपात् कान्तं परानुद्य पश्चात्तापसमन्वितेति लक्षणात् ॥१४॥

टिप्पनी—यदीति। अत्र गुणरीती पूर्ववत् ॥१४॥

বাঙ্গালা—"সখি! আমি যদি নিজে নিজেই উঁহার পিছনে যাই, তবে আমার লঘুতা হইবে; ইহাতে যদি তোমার সন্তোষ থাকে, তবে আমি এই এখনই উঁহার পিছনে যাইতেছি" এই কথা বলিতে বলিতে কোন নায়িকা সখীর সহিত কোপচ্ছলে তাড়াতাড়ি পাদক্ষেপ করিয়া প্রিয়তমের পিছনে পিছনে চলিল ॥১৪॥

अविरलपुलकः सह व्रजन्त्याः प्रतिपदमेकतरस्तनस्तरुण्याः।
घटितविघटितः प्रियस्य वक्षस्तटभुवि कन्दुकविभ्रमं बभार ॥१५॥
अशिथिलमपरावसज्य कण्ठे दृढ़परिरम्भवृहद्वहिस्तनेन।
हृषिततनुरुहा भुजेन भर्त्तुर्मृदुमसृदु व्यतिविद्धमेकबाहुम् ॥१६॥

---

अन्वयः—सह व्रजन्त्याः तरुण्याः अविरलपुलकः एकतरस्तनः प्रियस्य वक्षस्तटभुवि प्रतिपदं घटित-विघटितः [सन्] कन्दुकविभ्रमं बभार ॥१५॥

टीका—अविरलेति। सह व्रजन्त्याः पार्श्वमाश्लिष्य गच्छन्त्या इत्यर्थः तरुण्याः सम्बन्धी अविरलपुलकः प्रियाङ्गसङ्गमात्सान्द्ररोमाञ्चः एकतरोऽन्यतरः द्वयोरन्यः सन्निकृष्ट इति भावः। एकाच्च प्राचामिति द्वयोरेकस्य निर्द्धारणे तरच् प्रत्ययः, स्तनः प्रियस्य वक्षस्तटमिव तस्य भूः प्रदेशस्तस्यां वक्षस्तटभुवि प्रतिपदं घटितविघटितः संयुक्तवियुक्तः पतितोत्पतितः सन्निति यावत्। विशेषणयोरपि मिथोगुणप्रधानभावविवक्षया विशेषणं विशेष्येण बहुलमिति समासः। कन्दुकविभ्रमं कन्दुकशोभाम्। गेन्दुकः कन्दुक इत्यमरः। बभार। अन्य-विभ्रमस्यान्यसम्बन्धायोगात्सादृश्याक्षेपे निदर्शना। एषा च प्रियपार्श्वगामिनी। इतः प्रभृति अदनरसेत्यतः प्राग्वक्ष्यमाणा षट् नायिकाः स्वाधीनपतिकाः इष्टाः प्रगल्भाश्चेत्यनुसन्धे-यम् ॥१५॥

टिप्पनी—अविरलेति। अत्र तृतीयपादे छेकानुप्रासश्चेति टीकोक्तनिदर्शनया सह संसृष्टिः। सम्भोगशृङ्गारो रसः, गुणरीती पूर्ववत् ॥१५॥

বাঙ্গালা—কোন যুবতি আপন প্রিয়তমের পার্শ্বে যাইতেছিল; তাহার একটি স্তনে ঘন ঘন রোমাঞ্চ জন্মিয়াছিল এবং প্রত্যেক পদক্ষেপে তাহার সেই স্তনটী প্রিয়তমের বক্ষঃস্থলে লাগিতেছিল, আবার সরিয়া যাইতেছিল; সুতরাং সে স্তনটী কন্দুকের (দোলফুলখেলার গুটির, গেঁড়ুয়ার) শোভা ধারণ করিয়াছিল ॥১৫॥

অন্বয়ः—अपरा दृढ़परिरम्भवृहद्वहिस्तनेन हृषिततनुरुहा भुजेन असृदु व्यतिविद्धं मृदुम् एकबाहुं भर्त्तुः कण्ठे अशिथिलम् अवसज्य [जगाम] ॥१६॥

टीका—अथापरस्या अपरङ्गतिविशेषं विशेषकेणाह, अशिथिलमित्यादि। अपरा स्त्री दृढं परिरब्धौ गृहीतौ वृहद्वहिस्तनौ येन तेन हृषितान्युद्‌ञ्चितानि तनुरुहि रोमाणि यस्य तेन पुलकितेनेत्यर्थः। क्विबन्तोत्तरपदो बहुव्रीहिः हृषेर्लोमस्वितीड़ागमः। भुजेन भर्त्तुर्वाम-बाहुना असृदु गाढ़ं यथा तथा व्यतिविद्धं व्यतिषञ्जितं मृदुङ्कोमलमेकबाहुं निजदक्षिण-बाहुंभर्त्तुः कण्ठे अशिथिलं दृढ़मवसज्यासज्य जगामेति भाविना सम्बध्यते ॥१६॥

टिप्पनी—अशिथिलमिति। अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥१६॥

বাঙ্গালা—অন্য কোন রমণী…আপন দক্ষিণ বাহু প্রিয়তমের কণ্ঠে গাঢ়ভাবে সংলগ্ন করাইয়া যাইতে লাগিল ॥১৬॥

मुहुरसुसममाघ्नती नितान्तं प्रणदितकाञ्चि नितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य्यक्कुचमितरन्तदुरःस्थले निपीड्य ॥१७॥
गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥१८॥
लघुललितपदन्तदंसपीठद्वयनिहितोभयपाणिपल्लवान्या ।
सकठिनकुचचूचुकप्रणोदं प्रियमबला सविलासमन्वियाय ॥१९॥

---

**अन्वयः**—नितम्बमण्डलेन नितान्तं प्रणदितकाञ्चि असुसमं मुहुः आघ्नती (सती) विषमितहारयष्टि इतरं कुचं तदुरःस्थले तिर्य्यक् निपीड्य (अपरा जगाम) ॥१७॥

**टीका**—मुहुरिति । पुनः किं कृत्वा नितम्बमण्डलेन करणेन नितान्तमतिशयेन प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन् कर्मणि तद्यथा तथा । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । मुहुरसुसमं प्राणेशमाघ्नती ताड़यन्ती । हन्तेराङ्पूर्वाल्लटः शत्र ईत्वे ङीप् सकर्मकत्वात् न आङो यमहन इत्यात्मनेपदम् । विषमिता विषमीकृता पृथुर्हारयष्टिर्यस्मिन् कर्मणि तद्यथा तथा इतरं पूर्वश्लोकोक्तवक्षःस्तनादन्यं दक्षिणमित्यर्थः कुच-न्तस्य सत्तुरःस्थले तिर्य्यक् निपीड्य पूर्ववत्सम्बन्धः ॥१७॥

**टिप्पनी**—मुहुरिति । अत्र सम्भोगशृङ्गारो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१७॥

**বাঙ্গালা**—সেই রমণী, আপন নিতম্বের পার্শ্বদ্বারা প্রাণেশ্বরকে বার বার আঘাত করিতেছিল; তখন তাহার চন্দ্রহার ছড়া অত্যন্ত শব্দ করিতেছিল; আর সে, নিজের দক্ষিণ স্তনটী তেরচাভাবে সেই প্রাণেশ্বরের বক্ষঃস্থলে লাগাইতেছিল; তখন তাহার হার ছাড়া বাঁকা হইয়া যাইতেছিল ॥১৭॥

**अन्वयः**—अथ गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा (अपरा) इतरत् पदम् अनतिलोलम् आदधाना (सती) मन्मथमन्थरं जगाम ॥१८॥

**टीका**—गुरुतरेति । पुनर्गुरुतरः सान्द्रतरः कलो मधुरश्च नूपुरस्यानुनादो ध्वनिर्यस्मिन् कर्मणि तद्यथा तथा सललितं सलीलं नर्त्तितं व्यापारितं वामं सव्यम्पादपद्मं यया सा इतरद्दक्षिणम्पदमनतिलोलं मन्दं चरणस्खलनादनतिचपलं यथातथा आदधाना निःक्षिपन्ती सती मन्मथेन मन्थरमलसञ्जगाम । एषा च पार्श्वगामिनी ॥१८॥

**टिप्पनी**—गुरुतरेति । अत्र माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१८॥

**বাঙ্গালা**—সেই রমণী, লীলার সহিত বাম পাদপদ্ম নিক্ষেপ করিতেছিল; তখন তাহার নূপুর হইতে ঘন ঘন মধুর শব্দ হইতেছিল; আর সে, দক্ষিণ চরণখানিকে অচঞ্চল ভাবে ন্যস্ত করিতেছিল; এই ভাবে সেই রমণী কামবশতঃ ধীরে ধীরে যাইতেছিল ॥১৮॥

**अन्वयः**—अन्या अबला तदंसपीठद्वयनिहितोभयपाणिपल्लवा [सती] लघुललितपदं सकठिन-कुचचूचुक-प्रणोदं सविलासं (च) प्रियम् अन्वियाय ॥१९॥

जघनमलघुपीवरोरु कृच्छ्रादुरुनिविरीसनितम्बभारखेदि।
दयिततमशिरोधरावलम्बिस्वभुजलताविभवेन काचिदूहे ॥२०॥

---

टीका—अथान्यासामप्येकैकेन गतिविशेषमाह, लघ्वित्यादि। अन्या अबला स्त्री तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणिपल्लवौ यया सा सती उभाद्दात्तो नित्य-मिति ग्रहणस्येदम्प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत् उभयशब्दस्यैव यथा स्यादित्युभयहस्तेत्यादि भवतीति लघुनी द्रुते ललिते च पादे यस्मिन् कर्मणि तद्यथा तथा कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनन्तेन सह यथा तथा। चूचु-कन्तु कुचाग्रं स्यादित्यमरः। तेन सहेत्यादिना समासे वोपसर्जनस्येति सहशब्दस्य सभावः, णोपदेशत्वात्प्रणोद इति णत्वम्। सविलासं च प्रियमन्वियायानुजगाम। एषा पृष्ठ-गामिनी ॥१९॥

टिप्पनी—लघ्विति। अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः, सम्भोगशृङ्गारो रसः, मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥१९॥

বাঙ্গালা—অন্য কোন রমণী, প্রিয়তমের স্কন্ধদ্বয়ের উপরে আপন হস্তদ্বয় স্থাপন করিয়া, লীলার সহিত তাহার অনুসরণ করিয়াছিল; তখন তাহার চরণযুগল তাড়াতাড়ি সুন্দরভাবে নিক্ষিপ্ত হইতেছিল এবং কঠিন স্তনযুগলের অগ্র দ্বারা প্রিয়তমের পৃষ্ঠে আঘাত লাগিতেছিল ॥১৯॥

अन्वयः—काचित् दयिततमशिरोधरावलम्बिस्वभुजलताविभवेन अलघु-पीवरोरु उरु-निविरीस-नितम्ब-भार-खेदि जघनं कृच्छ्रात् ऊहे ॥२०॥

टीका—जघनमिति। काचित् स्त्री अलघू गुरू पीवरौ पीनौ चोरू यस्य तत् उरुर्म-हान् निविरीसो निविडः। निविडं निविरीसं च दृढं गाढं प्रचक्षते इति वैजयन्ती। नेर्बिड्विरीसचाविति निशब्दाद्विरीसच् प्रत्ययः। स च यो नितम्बः स्त्रीकटिपश्चाद्भागः। पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः। स एव भारस्तेन खिद्यत इति तथो-क्तम्। आभीक्ष्ण्ये णिनिः। जघनं कटीपुरोभागं दयिततमस्य शिरोधरायां ग्रीवायामवल-म्बिनोर्लम्बमानयोः स्वभुजलतयोर्विभवेन सामर्थ्येन कृच्छ्रादूहे उवाह। वहेः स्वरितेत्त्वात् कर्त्रभिप्राये आत्मनेपदम्। इयञ्च पृष्ठगामिनी प्रियकण्ठावलम्बा ॥२०॥

टिप्पनी—जघनमिति। अत्र कृच्छ्रवहनं प्रति पूर्वार्द्धगतविशेषणपदद्वयस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, सम्भोगशृङ्गारो रसः, गुणरीती च पूर्ववत् ॥२०॥

বাঙ্গালা—কোন রমণীর স্তনযুগল, অত্যন্তস্থূল ও অত্যন্ত ভারী ছিল এবং তাহার উরু দুইটীও, বিশাল এবং ঘন নিতম্বযুগলের ভারে নিপীড়িত ছিল; সুতরাং সে, প্রিয়তমের গলদেশস্থ নিজ বাহুলতার সাহায্যেই সেই উরু দুইটীকে বহন করিতে পারিয়াছিল ॥২০॥

अनुवपुरपरेण बाहुमूलप्रहितभुजाकलितस्तनेन निन्ये।
निहितदशनवाससा कपोले विषमवितीर्णपदं बलादिवान्या ॥२१॥
अनुवनमसितभ्रुवः सखीभिः सह पदवीमपरः पुरोगतायाः।
उरसि सरसरागपादलेखाप्रतिमतयानुययावसंशयानः ॥२२॥

---

**अन्वयः**—अनुवपुः बाहुमूलप्रहितभुजाकलितस्तनेन कपोले निहितदशनवाससा अपरेण अन्या विषमवितीर्णपदं बलात् इव निन्ये ॥२१॥

**टीका**—अनुवपुरिति। अन्या स्त्री वपुषः पश्चादनुवपुः स्त्रीपृष्ठभागः। अव्ययं विभक्ती इत्यादिना पश्चादर्थेऽव्ययीभावः। बाहुमूलयोः स्त्रीकक्षयोः प्रहितावधः प्रसारितौ भुजौ ताभ्याम् आकलितस्तनेन गृहीतस्तनेन कपोले निहितदशनवाससा न्यस्ताधरेण किञ्चिदावृत्तमुख्याः सत्याः कपोलं चुम्बतेत्यर्थः अपरेण कामिना विषमम्निम्नोन्नतप्रसङ्गर्षात् श्लिष्टं वितीर्णं पदं न्यस्तं यथा तथा बलादिव निन्ये नीता आरोप्य नीयमानेव लक्ष्यते स्म इत्यर्थः। एषा पुरोगामिनी ॥२१॥

**टिप्पनी**—अन्विति। अत्र हेतूत्प्रेक्षालङ्कारः, सम्भोगशृङ्गारो रसः, गुणरीती पूर्ववत् ॥२१॥

**বাঙ্গালা**—কোন যুবক, প্রিয়তমার পিঠের দিকে থাকিয়া, তাহার বাহুযুগলের নীচ দিয়া আপন বাহুযুগল প্রবেশ করাইয়া, তাহার স্তন দুইটীকে ধরিয়া এবং গণ্ডদেশে আপন ওষ্ঠ স্থাপন করিয়া, সেই প্রিয়তমাকে যেন বলপূর্ব্বক লইয়া চলিল ; তখন সেই রমণী এদিকে ওদিকে পদক্ষেপ করিতেছিল ॥২১॥

**अन्वयः**—अपरः अनुवनं सखीभिः सह पुरः गतायाः असितभ्रुवः पदवीम् उरसि सरस-राग-पादलेखा-प्रतिमतया असंशयानः (सन्) अनुययौ ॥२२॥

**टीका**—अनुवनमिति। अपरः कामी अनुवनं वनं प्रति सखीभिः सह पुरोगताया असितभ्रुवः स्वकान्तायाः पदवीमुरसि वक्षसि सरस आर्द्रः रागो लाक्षारञ्जनं यस्य तस्य पादस्य या रेखा विन्यासः सा प्रतिमा उपमानं यस्याः सा तत्प्रतिमा तस्य भावस्तत्ता तया तत्सदृशतयेत्यर्थः असंशयानोऽसन्दिहानः। शीङो लटः कर्त्तरि शानजादेशः। अनुययौ। अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरतकालीनं पादताडनं वस्तु सरागपदार्थमहिम्ना प्रतीयत इति पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुध्वनिः संलक्ष्यक्रमध्वनिर्भेदः ॥२२॥

**टिप्पनी**—अनुवनमिति। अत्र तस्या एवेमानि पादन्यासचिह्नानि स्वरचोगततत्पादन्यासचिह्नसदृशत्वादित्यनुमानात् कविप्रौढोक्ति वृत्त्यनुप्रासाभ्यां विच्छित्तिविशेषाच्च अनुमानमलङ्कारः। सम्भोगशृङ्गारो रसः, माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२२॥

**বাঙ্গালা**—কৃষ্ণবর্ণভ্রূশালিনী আপন প্রিয়তমা সখীদের সহিত আগেই বনে গিয়াছিল ; তাহার চরণের চিহ্নগুলি, নিজবক্ষঃস্থিত আর্দ্র অলক্তকের পাদচিহ্নেরই তুল্য বলিয়া নিঃসন্দেহ হইয়া, অন্য কোন যুবক সেই পথেরই অনুসরণ করিল ॥২২॥

मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः ।
सरित इव सविभ्रमप्रयातप्रणदितहंसकभूषणा विरेजुः ॥२३॥
श्रुतिपथमधुराणि सारसानामनुनदि शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥२४॥

---

अन्वयः—मदन-रसमहौघ-पूर्णनाभी-ह्रद-परिवाहित-रोमराजयः सविभ्रम-प्रयात-प्रणदित-हंसक-भूषणाः ताः विरेजुः ॥२३॥

टीका—मदनेति । मदनस्य रसः शृङ्गारः अन्यत्र रसो जलं तस्य महौघेन महापूरेण पूर्णा नाभ्य एव ह्रदास्तेषां परिवाहाः कृताः परिवाहिता जलोच्छ्वासीकृताः रोमराजयो यासान्ताः । जलोच्छ्वासाः परीवाहा इत्यमरः । सरिज्जलानि ह्रदानापूर्य परितः उच्छ्वसन्तीति प्रसिद्धिः । सविभ्रमैः सविलासैः प्रयातैः प्रकृष्टगमनैः प्रणदिताः शिञ्जिता ये हंसकाः पादकटकाः । हंसकाः पादकटका इत्यमरः । अन्यत्र हंसा एव हंसकाः मरालास्त एव भूषणानि यासान्ताः स्त्रियः सरित इव विरेजुः । मदनरसपूर्णत्वेन नाभीनां तद्दुर्बोधकत्वं व्यज्यते । परिवाहितरोमराजय इति रोमराजीनां परिवाहत्वरूपणान्नाभ्य एव ह्रदा इति रूपकाश्रयणान्ताः सरित एवेति श्लिष्टविशेषणेयमुपमा । श्लेष एवेत्यन्ये ॥२३॥

टिप्पनी—मदनेति । अत्र समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥२३॥

বাঙ্গালা—মদনরসের মহাপ্রবাহ, রমণীগণের নাভীহ্রদকে পরিপূর্ণ করিয়া, রোমশ্রেণীরূপে বাহির হইয়া যাইতেছিল এবং বিলাসের সহিত গমনের সময় তাহাদের নূপুরগুলির শব্দ হইতেছিল ; এই অবস্থায় তাহারা বিশেষরূপে শোভা পাইতেছিল ॥২৩॥

अन्वयः—अनुनदि ताभिः जनता-मनः शरव्य-व्यध-पटु-मन्मथ-चाप-नाद-शङ्कां विदधति श्रुतिपथ-मधुराणि सारसानां रुतानि शुश्रुविरे ॥२४॥

टीका—श्रुतिपथेति । अनुनदि नदीनां समीपे । समीपार्थेऽव्ययीभावः, अव्ययीभावश्चेति नपुंसकत्वे ह्रस्वत्वम् । ताभिः स्त्रीभिः जनानां समूहो जनता । ग्रामजनेत्यादिना सामूहिकस्तल् प्रत्ययः । तस्याः मनांसि एव शरव्यं लक्ष्यम् । लक्ष्यं शरव्यं चेत्यमरः । तस्य व्यधो वेधः । व्यधजपोरनुपसर्गे इत्यप् प्रत्ययः । तत्र पटुः समर्थो यो मन्मथचापनादः स इति शङ्कां भ्रमं विदधति विदधानानि । वा नपुंसकस्येति वैकल्पिको नुम्प्रतिषेधः । श्रुतिपथमधुराणि श्राव्याणीत्यर्थः सारसानां रुतानि शुश्रुविरे श्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अत्र सारसरुते मन्मथचापनादभ्रमाद् भ्रान्तिमदलङ्कारः । कविसम्मतसादृश्याद्विधेये पिहितात्मनि आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः इति लक्षणात् ॥२४॥

टिप्पनी—श्रुतेति । अत्र माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२४॥

বাঙ্গালা—সেই রমণীরা নদীর নিকটে সুমধুর সারসপক্ষীর রব শুনিয়াছিল ; সে রবগুলি, লোকের হৃদয়রূপ লক্ষ্য বেধ করিতে সমর্থ কামদেবের ধনুর শব্দের ভ্রম জন্মাইতেছিল ॥২৪॥

मधुमथनवधूरिवाह्वयन्ति भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः ॥२५॥
असकलकलिकाकुलीकृतालिस्खलनविकीर्णविकासिकेशराणाम् ।
मरुदवनिरुहां रजो वधूभ्यः समुपहरन् विचकार कोरकाणि ॥२६॥

---

**अन्वयः**—उत्सुकानि भ्रमरकुलानि मधुमथनवधूः आह्वयन्ति इव यत् जगुः, वनानाम् आवलिः नूतनपल्लवाङ्गुलीभिः तदभिनयम् अतनुत इव ॥२५॥

**टीका**—मध्विति । उत्सुकान्युन्मनांसि भ्रमरकुलानि मधुमथनस्य हरेर्वधूराह्वयन्त्या-कारयन्तीवेत्युत्प्रेक्षा । हूतिराकारणाह्वानमित्यमरः । उपन्यवेभ्यो ह्वयतेः इत्युपसर्गात्मनेपदम् । जगुरिति यत् । गायतेर्लिट् । वनानामावलिर्नूतनपल्लवा एवाङ्गुल्य इत्येकदेशवर्ति सावयवरूपकम् अस्यैव वनावली नर्तकीत्वरूपणमकृत्वादिति । ताभिस्तद-भिनयं व्यञ्जकचेष्टामतनुतेव । व्यञ्जकाभिनयौ समावित्यमरः । अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेदिति वचनात् । गीतार्थस्याह्वानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रिया-स्वरूपोत्प्रेक्षा । पूर्वोक्तरूपकानुप्राणिता साह्वानोत्प्रेक्षा सापेक्षेति सजातीयसङ्करो-ऽपीति ॥२५॥

**टिप्पनी**—मधुमथनेति । अत्र पूर्वार्द्धे वृत्त्यनुप्रासः, परार्द्धे च छेकानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२५॥

**বাঙ্গালা**—ভ্রমরগণ উৎকণ্ঠিত হইয়া, যেন শ্রীকৃষ্ণের স্ত্রীগুলিকে ডাকিতে থাকিয়া যে গান করিয়াছিল; বনশ্রেণী আবার নবীন পল্লবরূপ অঙ্গুলী দ্বারা যেন তাহার অভিনয় করিয়াছিল ॥২৫॥

**अन्वयः**—मरुत् असकल-कलिकाकुलीकृतालिस्खलन-विकीर्णविकासिकेशराणाम् अवनिरुहां रजः वधूभ्यः समुपहरन् (इव) कोरकाणि विचकार ॥२६॥

**टीका**—असकलेति । मरुद्वनानिलः असकलाः असमग्राः अर्धविकचा इत्यर्थः ताभिः कलिकाभिः कोरकैराकुलीकृतानां संचोभितानामलिनां स्खलनेन विघट्टनेन विकीर्णा विक्षिप्ताः विकासिनः केशराः किञ्जल्का येषान्तेषामवनिरुहाम् । क्विप् । रजः परागं वधूभ्यः समुपहरन् प्रयच्छन् यथा कश्चित् कामीति भावः । धनलजर्यन्वसतीतिवत् लक्षणहेत्वोः क्रियाया इति हेत्वर्थे शतृप्रत्ययः । कोरकाणि कुड्मलानि । कलिका कोरकः पुमानित्यमर-कोषे पुंस्त्वाभिधानं प्रायिकाभिप्रायम् । कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोरिति विश्वप्रकाशादौ नपुंसकत्वस्याभिधानात् । विचकार विकाशयामासेत्यर्थः । विपूर्वात् किरतेः करोतेर्वा लिट् । अत्र कोरकविकाशकरणस्य समुपहरन्निति हेत्वर्थेन वधूसम्प्रदानकपरागो-पहरणार्थत्वावगमात् फलोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥२६॥

**टिप्पनी**—असकलेति । अत्र प्रथमे पादे वृत्त्यनुप्रासः द्वितीये पादे अर्धे च छेकानुप्रास इति टीकोक्तया प्रतीयमानोत्प्रेक्षया सह संसृष्टिः । मधुरवचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२६॥

उपवनपवनानुपातदक्षैरलिभिरलम्भि यदङ्गनागणस्य।
परिमलविषयस्तदुन्नतानामनुगमने खलु सम्पदोऽग्रतःस्थाः ॥२७॥
रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः।
जगति सुमनसस्तदादि नूनं दधति परिस्फुटमर्थतोऽभिधानम् ॥२८॥

---

**বাঙ্গালা**—ফুলের কলিকাগুলি আধাআধি ফুটিয়াছিল, তাহার মধুর লোভে ভ্রমর সকল আকুল হইয়াছিল এবং সে গুলির সঞ্চালনে ফোটাফুলের কেশরগুলি ছড়াইয়া পড়িতেছিল; সুতরাং বোধ হইতেছিল যেন বনের বায়ু, ফুলের রেণুসকল, স্ত্রীলোকদিগকে উপহার দিতে থাকিয়া কলিকাগুলিকে ফুটাইয়াছিল ॥২৬॥

**अन्वयः**—उपवन-पवनानुपात-दक्षैः अलिभिः अङ्गनागणस्य यत् परिमलविषयः अलम्भि तत् उन्नतानाम् अनुगमने सम्पदः अग्रतःस्थाः खलु [इति बुध्यते] ॥२७॥

**टीका**—उपवनेति। वने उपवनम्। विभक्त्यर्थेऽव्ययीभावः। तत्र यः पवनस्तस्यानुपातेनानुसारेण दक्षैर्विचक्षणैरलिभिर्यत: कारणात् अङ्गनाजनस्य सम्बन्धी परिमलो गन्धविशेषः। विमर्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः। स एव विषयो भोग्यार्थः। रूप स्पर्शौ गन्धरसःशब्दास्य विषया अमी इति। अलम्भि लब्धः। लभेः कर्मणि लुङ्। विभाषा चिण्णमुलोरिति विकल्पान्नुमावः, अत उपधाया इति वृद्धिः। तत् उन्नतानां महताम् अनुगमने पश्चाद्धावने अनुवृत्तौ च सम्पदोऽग्रतःस्थाः पुरोवर्त्तिन्यः खलु। सुपि स्थ इति कप्रत्ययः। अत्र तुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूपः ॥२७॥

**टिप्पनी**—उपवनेति। अत्र प्रथमे पादे यमकम्, द्वितीये छेकानुप्रास इति टीकोक्तमङ्करैण सह पुनः संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥२७॥

**বাঙ্গালা**—বন্য বায়ুর অনুসরণে নিপুণ ভ্রমরগণ যে স্ত্রীলোকদিগের পরিমলরূপ ভোগ্যবস্তু লাভ করিয়াছিল; তাহাতে ইহাই বুঝা গিয়াছিল যে, উন্নতের অনুসরণে সম্পদ সম্মুখবর্ত্তী হইয়া থাকে ॥২৭॥

**अन्वयः**—सुमनसः रथचरण-धराङ्गना-कराब्ज-व्यतिकर-सम्पदुपात्त-सौमनस्याः [सत्यः] तदादि जगति नूनम् अर्थतः परिस्फुटम् अभिधानं दधति ॥२८॥

**टीका**—रथेति। सुमनसः पुष्पाणि रथचरणं चक्रन्तस्य धरो धारयिता हरिः। पचाद्यच्। तस्याङ्गनास्तासां कराब्जैर्व्यतिकरः सम्पर्कः स एव सम्पत् तया उपात्तं लब्धं सौमनस्यं सुमनस्त्वं सन्तुष्टचित्तत्वं याभिस्ताः सत्यः अतएव सौमनस्यलाभ आदिर्यस्मिन् कर्मणि तत्तदादि ततः प्रभृतीत्यर्थः अर्थतः पूर्वोक्तावयवार्थात् परिस्फुटम्प्रसिद्धावयवार्थं न अभिधानं सुमनस इति नामधेयं दधति। पूर्वन्त्वयकर्णकादिवद्रूढामति भावः।

अभिमुखपतितैर्गुणप्रकर्षादवजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः प्रसभमनीयत भङ्गमङ्गनानाम् ॥२९॥
मुदितमधुभुजो भुजेन शाखाश्चलितविशृङ्खलशङ्खकं धुवत्याः ।
तरुरतिशयितापराङ्गनायाः शिरसि मुदेव मुमोच पुष्पवर्षम् ॥३०॥

---

आख्याह्वे चाभिधानं च नामधेयं च नाम चेत्यमरः। स्त्रियः पुष्पाण्यवचेतुमप्रवृत्ता इति फलितोऽर्थः। नूनमित्युत्प्रेक्षायाम्। अत्रोपात्तसौमनस्य इति सौमनस्योपादानस्य पदार्थस्य विशेषणगत्या सुमनःपदान्वर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् तदुत्थापिता चेयन्तदादित्योत्प्रेक्षेति सङ्करः तेन चाङ्गनाकराणामतिश्लाघ्यत्वं व्यज्यते ॥२८॥

टिप्पनी—रथेति। अत्र समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥२८॥

বাঙ্গালা—শ্রীকৃষ্ণের বনিতাগণ ফুল তুলিতে লাগিলে, তাহাদের হস্তপদ্মের সংস্পর্শরূপ সম্পদ উপস্থিত হওয়ায় ফুলগুলি চিত্তসন্তোষ লাভ করিয়াছিল; সুতরাং তদবধি ফুলগুলি নিশ্চয়ই জগতে 'সুমনা' এই সার্থক নাম ধারণ করিতেছে ॥২৮॥

अन्वयः—अभिमुखपतितैः उज्ज्वलाम् उद्धतिं दधानैः अङ्गनानाम् अग्रहस्तैः गुणप्रकर्षात् अवजितं तरुकिसलयजालं प्रसभं भङ्गम् अनीयत ॥२९॥

टीका—अभिमुखेति। अभिमुखपतितैः भञ्जनार्थमभिमुखमागतैः उज्ज्वलामुत्कृष्टामुद्धतिमुपरिप्रसारमौद्धत्यञ्च दधानैरङ्गनानामग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः। अतएव हस्ताग्राग्रहस्तयोर्गुणगुणिनोरभेदादिति वामनः। तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षात् सौकुमार्यादिगुणातिशयादवजितमवधीरितन्तरुकिसलयजालं प्रसभम्बलात् भङ्गं छेदं पराजयञ्चानीयत नीतम्। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति किसलयजालस्य प्राधान्यादभिधानम्। अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य प्रतीतेः समासोक्तिरलङ्कारः ॥२९॥

टिप्पनी—अमीति। अत्र चतुर्थपादे छेकानुप्रास इति टीकोक्तसमासोक्त्या सह तस्य संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—স্ত্রীলোকদিগের হস্তের অগ্রদেশ, তরুপল্লবের সম্মুখে যাইয়া উপস্থিত হইল এবং বিশেষ উন্নতি লাভ করিল; তখন সেই হস্তসমূহের কোমলতা ও লৌহিত্যগুণের আধিক্যে তরুপল্লবগুলি অবজ্ঞাত হইল; পরে সেই হস্তের অগ্রদেশগুলি তরুপল্লবগুলিকে ভগ্ন (পরাজিত) করিল ॥২৯॥

अन्वयः—भुजेन मुदितमधुभुजः शाखाः चलितविशृङ्खलशङ्खकं धुवत्याः अतिशयितापराङ्गनायाः (कस्याश्चित् स्त्रियाः) शिरसि तरुः मुदा इव पुष्पवर्षं मुमोच ॥३०॥

टीका—मुदितेति। मुदिता हृष्टा मधुभुजो मधुपा यासु ताः शाखाः भुजेन हस्तेन चलितानि विशृङ्खलानि अप्रतिहतरवाणि शङ्खकानि वलयानि यस्मिन् कर्मणि तद्यथा तथा

অনবরতরসেন রাগভাজা করজপরিক্ষতিলব্ধসংস্তবেন।
সপদি তরুণপল্লবেন বধ্বা বিগতদয়ং খলু খণ্ডিতেন মম্লে ॥২১॥
প্রিয়মিতি কুসুমোদ্যতস্য বাহ্বোর্নবনখমণ্ডনচারু মূলমন্যা।
মুহুরিতরকরাহিতেন পীনস্তনতটরোধি তিরোদধেঽংশুকেন ॥২২॥

---

ধুবত্যাঃ কম্পয়ন্ত্যাঃ। ধূ বিধূননে ইতি ধাতোস্তৌদাদিকাচ্ছতরি ঙীপ্ ক্ঙিতি চেতি গুণ-বৃদ্ধিপ্রতিষেধাদুবঙাদেশঃ। অতিশয়িতা সৌন্দর্য্যেণাতিক্রান্তা অপরাঙ্গনা যয়া সা তস্যাঃ শিরসি তরবস্তদেব তদভিসরণসন্তোষেণেবেতি গুণহেতূৎপ্রেক্ষা পুষ্পাণ্যেব পুষ্পবৃষ্টিং মুমোচ ॥৩০॥

**টিপ্পনী**—মুদিতেতি। অত্র প্রথমে দ্বিতীয়ে চ পাদে ছেকানুপ্রাসঃ চতুর্থে তু বৃত্ত্যনুপ্রাস ইতি টীকোক্তয়া উৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। মধুররচনাবশাৎ মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩০॥

**বাঙ্গালা**—ভ্রমরগণ যে সকল বৃক্ষের শাখায় সন্তুষ্টচিত্তে বসিয়াছিল ; কোন স্ত্রীলোক হস্তদ্বারা সেই শাখাগুলিকে আকর্ষণ করিল এবং সেই স্ত্রীলোক সৌন্দর্য্যদ্বারা অপর স্ত্রীলোক-দিগকে অতিক্রম করিয়াছিল ; এই সময়ে সেই বৃক্ষ আনন্দবশতই যেন সেই স্ত্রীলোকটীর মস্তকে পুষ্পবৃষ্টি করিল ॥৩০॥

**অন্বয়ঃ**—অনবরতরসেন রাগভাজা করজ-পরিক্ষতি-লব্ধ সংস্তবেন তরুণপল্লবেন বধ্বা বিগতদয়ং খণ্ডিতেন (সতা) সপদি মম্লে খলু ॥২১॥

**টীকা**—অনবরতেতি। অনবরতরসেনানবচ্ছিন্নদ্রবেণ অন্যত্রানুরঞ্জকেণ রাগভাজা বর্ণেন প্রীতিভাজা চ করজপরিক্ষতিষু নখক্ষতেষু লব্ধসংস্তবেন প্রাপ্তপরিচয়েন। সংস্তবঃ স্যাৎ পরিচয় ইত্যমরঃ। বধ্বা বিগতদয়ং নির্দয়ং যথা তথা খণ্ডিতেন ছিন্নেন নিরাকৃতেন চ তরুণপল্লবেন নবকিসলয়েন যুববিটেন চ। পল্লবঃ কিসলয়ে বিটে ইতি বিশ্বঃ। সপদি মম্লে ম্লানং খলু প্রসিদ্ধৌ। ম্লায়তের্ভাবে লিট্। অত্রাভিধায়াঃ প্রকৃতার্থে নিয়ন্ত্রিতত্বাদ-প্রকৃতার্থপ্রতীতেঃ শব্দশক্তিমূলো ধ্বনিঃ ন শ্লেষঃ তেন চোভয়োঃ পল্লবয়োরৌপম্যং গম্যতে ॥২১॥

**টিপ্পনী**—অনবরতেতি। অত্র প্রথমচতুর্থপাদয়োঃ বৃত্ত্যনুপ্রাসোঽলঙ্কারঃ, প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥২১॥

**বাঙ্গালা**—কোন রমণী, একটী তরুপল্লবকে ছিন্ন করিল ; তখন সেই পল্লব হইতে অনবরত রস পড়িতে লাগিল এবং সে পল্লবটী রক্তবর্ণ ছিল ; আর সে পল্লবটী সেই রমণীর নখক্ষতের পরিচয় পাইল ; এবং পরে ম্লান হইয়া গেল ॥৩১॥

**অন্বয়ঃ**—অন্যা প্রিয়ম্ অভি কুসুমোদ্যতস্য বাহ্বোঃ নবনখমণ্ডনচারু মূলং মুহুঃ ইতরকরাহিতেন অংশুকেন পীনস্তনতটরোধি তিরোদধে ॥২২॥

**টীকা**—অথাসাং পুষ্পাবচয়ে শৃঙ্গারচেষ্টাঃ বর্ণয়ন্ কস্যাশ্চিচ্চেষ্টাবিশেষমেকেনাহ, প্রিয়-মিতি। অন্যা স্ত্রী প্রিয়মভি প্রিয়স্যাগ্রত ইত্যর্থঃ। অভিরভাগে ইত্যভের্লক্ষণার্থকর্ম-প্রবচনীয়ত্বাত্তদ্যোগে দ্বিতীয়া। কুসুমেষূদ্যতঃ কুসুমোদ্যতঃ কুসুমগ্রহণার্থমুচ্ছ্রিতম্ ইত্যর্থঃ।

विततवलिविभाव्यपाण्डुलेखाकृतपरभागविलीनरोमराजिः ।
कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखलोचनावलग्नम् ॥३३॥
प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा ।
अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला ॥३४॥

---

प्रकृतिविकारभावाभावान्न तादर्थ्ये चतुर्थीसमासः । तस्य बाहोर्नखं यन्नखं नखक्षतं तदेव मण्डनं तेन चारु सुन्दरं मूलं कक्षभागमित्यर्थः मुहुरितरकरेण सव्यपाणिना आहितेन निहितेनांशुकेनोत्तरीयेण पीनं स्तनतटं रुणद्धीति पीनस्तनतटरोधि तद्यथा भवति तथा तिरोदधे तिरश्चकार । अयञ्चापलाख्यः सञ्चारिभावः । आत्मप्रकाशिनी चेष्टा रागादेश्चापलं मतमिति लक्षणात् । प्रौढ़ा चेयम् ॥३२॥

**टिप्पनी**—प्रियमिति । अत्र सम्भोगशृङ्गारो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३२॥

**বাঙ্গালা**—অন্য কোন রমণী, আপন প্রিয়তমের সম্মুখে ফুল তুলিবার জন্য হাত তুলিল; তখন তাহার কক্ষদেশ বাহির হইয়া পড়িল; সে কক্ষদেশ, নূতন নখক্ষতে শোভিত ছিল; সুতরাং সে, বাম হস্ত দ্বারা বস্ত্র টানিয়া দিয়া সে কক্ষদেশ আবৃত করিল; তাহাতে তাহার স্থূলস্তনদেশও আবৃত হইল ॥৩২॥

**अन्वयः**—विततवलि-विभाव्य-पाण्डु-लेखा-कृत-पर-भाग-विलीन-रोम-राजिः कृशम् अपि अवलग्नं पुनः कृशतां नयन्ती विपुलतरोन्मुखलोचना (काचित् अस्य चेतः सुतराम् अहरत्) ॥३३॥

**टीका**—अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह, विततेत्यादि । काचिद्वितत भिर्गात्रोन्नमनाद्विश्लिष्टाभिर्वलिभिस्त्रिवलिभिर्विभाव्याः संलक्ष्याः पाण्डुरेखाः रेखाकाराः वलीवयान्तरालभागाः ताभिः कृतपरभागा जनितवर्णोत्कर्षाः अतएव विश्लेषेण लीना विलीना रोमराजिर्यस्याः सा तथोक्ता कृशमपि स्वभावत एवेति भावः अवलग्नं मध्यम् । मध्यमं चावलग्नं च मध्योऽस्त्रीत्यमरः । पुनः कृशतां नयन्ती अग्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः तथा विपुलतरे उन्मुखे च लोचने यस्याः सा अग्रपुष्पग्रहणार्थमिति भावः ॥३३॥

**टिप्पनी**—विततेति । अत्र स्वभावोक्ति-वृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः, सम्भोगशृङ्गारो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥३३॥

**বাঙ্গালা**—কোন রমণী ফুল তুলিবার জন্য শরীরটাকে টান করায়, তাহার পেটের থরগুলি বিভক্ত হইয়া গেল; তাহাতে তাহার ভিতরের পাণ্ডুরবর্ণ রেখাগুলি বেশ দেখা যাইতে লাগিল আবার তাহার শরীরের বর্ণটী আরও উজ্জ্বল হইল এবং লোমগুলি লয় পাইয়া গেল; এবং তাহার কটিদেশ স্বভাবতঃ কৃশ হইলেও, আরও কৃশ হইল এবং বিশাল নয়নযুগল উপরে উঠিল ॥৩৩॥

**अन्वयः**—प्रसकल-कुच-बन्धुर-उद्धुर-उरः-प्रसभ-विभिन्न-तनूत्तरीय-बन्धा अवनमदुदरोच्छ्वसद्दुकूल-स्फुट-दर-लक्ष्य-गभीर-नाभि-मूला (काचित् अस्य चेतः सुतराम् अहरत्) ॥३४॥

व्यवहितमविजानती किलान्तर्वणभुवि वल्लभमाभिमुख्यभाजम्।
अधिविटपि सलीलमग्रपुष्पग्रहणपदेन चिरं विलम्ब्य काचित् ॥३५॥
अथ किल कथिते सखीभिरत्र क्षणमपरेव ससम्भ्रमा भवन्ती।
शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी ॥३६॥

---

टीका—प्रसक्तलेति। प्रसक्तलाभ्यामतिसमग्राभ्यां कुचाभ्यां बन्धुरमुन्नतानतम्। बन्धुरं तून्नतानतमित्यमरः। उद्धुरं निर्भरं दृढमिति यावत्। ऋक्पूरित्यादिना समासान्तः। तस्मादुरसः प्रसभाद् बलात्कारात् विभिन्नो विस्रस्तस्तनोत्तरीयबन्धो यस्याः सा गात्रविजृम्भणाद्विस्रस्तकुचावरणेत्यर्थः। किञ्च अननमतीऽवलीयमानादुदरादुच्छ्वसत् विश्लिष्यत् दुकूलं यस्य तत् अतएव स्फुटतरं यथा तथा लक्ष्यं गभीरमगाधं नाभिमूलमन्तरालं यस्याः सा ॥३४॥

टिप्पनी—प्रसक्तलेति। अत्र रसादयः पूर्ववत् ॥३४॥

বাঙ্গালা—(সেই রমণী আপন শরীরটীকে টান করিয়াছিল বলিয়াই) তাহার বক্ষ হইতে উত্তরীয় বস্ত্র পড়িয়া গেল; বিশাল স্তনযুগল দ্বারা তাহার সে বক্ষঃস্থল উন্নত অবনত এবং দৃঢ় ছিল; আর তাহার উদরটী যেন নম্র পাইয়া গেল এবং তথা হইতেও কাপড় খুলিয়া গেল; তাহাতে তাহার গভীর নাভিমূল স্পষ্ট দেখা যাইতে লাগিল ॥৩৪॥

अन्वयः—काचित् अन्तर्वणभुवि व्यवहितम् आभिमुख्यभाजं वल्लभम् अविजानती किल अधिविटपि सलीलम् अग्रपुष्पग्रहणपदेन चिरं विलम्ब्य (अस्य चेतः सुतराम् अहरत) ॥३५॥

टीका—व्यवहितमिति। काचित् पूर्वोक्तविशेषणविशिष्टा अङ्गना अन्तर्वणभुवि वनाभ्यन्तरप्रदेशे। प्रनिरन्तरित्यादिना वननकारस्य णत्वम्। व्यवहितं तिरोहितम् आभिमुख्यभाजम् अभिमुखावस्थितमित्यर्थः तं वल्लभं प्रियम् अविजानती किल जानानाप्यजानानेव अधिविटपि विटपिनि वृक्षे। विभक्त्यर्थेऽव्ययीभावः। सलीलं यथा तथा अग्रे वृक्षाग्रे यानि पुष्पाणि तेषां ग्रहणस्य पदेन मिषेण चिरं विलम्ब्य प्रियाय स्वाङ्गप्रकाशनार्थमिति भावः ॥३५॥

टिप्पनी—व्यवहितमिति। अत्र पूर्ववत् रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३५॥

বাঙ্গালা—প্রিয়তম, বনের ভিতরে লুকাইয়া থাকিয়া, সেই রমণীর অভিমুখ হইয়াই অবস্থান করিতেছিল; ইহা সে জানিয়াও অজানার মতই থাকিয়া, কোন গাছের আগারফুল লইবার ছলে অত্যন্ত বিলম্ব করিল ॥৩৫॥

अन्वयः—अथ सखीभिः अत्र कथिते (सति) किल क्षणं ससम्भ्रमा अपरा इव भवन्ती शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी (सती अस्य चेतः सुतराम् अहरत) ॥३६॥

टीका—अथेति। अथ विलम्बानन्तरम् अत्रास्मिन् प्रिये सखीभिः कथिते सति। किलायमत्रैवास्ते इति निवेदिते सति क्षणं ससंभ्रमा अपरेव पूर्वविपरीतव्यापारकरणादन्येव

जातभयपरितोषसन्निपातं सचकितसस्मितवक्त्रवारिजश्रीः।
मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती ॥३७॥
अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै।
अहरत सुतरामतोऽस्य चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥३८॥

---

भवन्ती बुद्धिपूर्वकारित्वमज्ञाननाटनेन वञ्चयन्तीत्यर्थः। निर्यन्त्रितः पुष्पग्रहणान्निवर्त्तितः कुसुमाकुलः कुसुमव्यापृतोऽग्रपाणिर्यया सा तथोक्ता प्रतिपदं प्रतिस्थानं संयमितेन नियमितेनांशुकेन। अंशुकं सूक्ष्मवस्त्रे स्यादिति विश्वः। वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती ॥३६॥

टिप्पनी—सखीति। अत्र द्रव्योत्प्रेक्षालङ्कारः, पूर्ववत् रसः, समासबाहुल्यात् ओजोगुणः, गौड़ी च रीतिः ॥३६॥

বাঙ্গালা—তাহার পর, সখীরা যখন বলিল যে "তোমার প্রিয়তম এই খানেই আছেন" তখন সেই রমণী ক্ষণকালের মধ্যেই ব্যস্ততার সহিত একেবারেই যেন অন্য ব্যক্তি হইয়া গেল; কেন না, হাতখানি ফুল তুলিতে ব্যস্ত ছিল, তাহা টানিয়া আনিল প্রত্যেক জায়গায় কাপড় টানিয়া দিয়া সমস্ত অঙ্গ আবৃত করিল ॥৩৬॥

अन्वयः—जात-भय-परितोष-सन्निपातं मनसिज-गुरु-तत्क्षणोपदिष्टं किम् अपि रसान्तरं रसेन भजन्ती सचकित-सस्मित-वक्त्र-वारिजश्रीः (सती अस्य चेतः सुतराम अहरत) ॥३७॥

टीका—जातभयेति। किञ्च जातः भयपरितोषयोः भर्त्तृदर्शनोत्थसाध्वसहर्षयोः सन्निपातः सङ्करो येन तत् मनसि जातो मनसिजः स्मरः। सप्तम्यां जनेर्डः हलदन्तात् सप्तम्याः संज्ञायामित्यलुक्। स एव गुरुराचार्य्यस्तेन तत्क्षणे उपदिष्टन्तदेकहेतुकम् इत्यर्थः। किमप्यनिर्वाच्यं रसान्तरं लक्षणया भावान्तरं तच्चेह किलकिञ्चिताख्यं विवक्षितं जातभयेत्यादिविशेषणेन, क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितमिति लक्षणार्थस्य प्रतीतेः। रसेन रागेण हेतुना भजन्ती अतएव सचकिता सभयसंभ्रमा। चकितम्भयसंभ्रम इत्यमरः। सस्मिता हर्षात् समन्दहासा वक्त्रवारिजश्रीर्यस्याः सा सती। अत्र चकितस्मितयोः पूर्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥३७॥

टिप्पनी—जातेति। अत्र पूर्ववत् रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥३७॥

বাঙ্গালা—সেই রমণী, অনুরাগবশতঃ অনির্বচনীয় কোন ভাবান্তর প্রাপ্ত হইল; সে ভাবান্তরে তাহার ভয় ও আনন্দ উভয়েরই সম্মিশ্রণ জন্মাইল এবং সে ভাবান্তর কামদেবাচার্য্যকর্ত্তৃক সেই সময়েই উপদিষ্ট হইয়াছিল; সুতরাং তাহার মুখপদ্ম, চকিত ও ঈষদ্‌হাস্যযুক্ত হইল ॥৩৭॥

अन्वयः—अवनतवदनेन्दुः अधीरतया व्यवधिम् इच्छती इव अस्मै यत् अस्थित: अतः अस्य चेतः सुतराम् अहरत। त्रपा एव स्त्रियः स्फुटम् अभिभूषयति ॥३८॥

किसलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निधेयाः।
नखपदलिपयोऽपि दीपितार्थाः प्रणिदधिरे दयितैरनङ्गलेखाः ॥३९॥

---

टीका—अवनतेति। अवनतवदनेन्दुः लज्जया नम्रमुखीत्यर्थः। अधीरतया अधृष्टतया व्यवधिं किञ्चिद्व्यवधानम्। उपसर्गे घोः किरिति किप्रत्ययः। इच्छती वाञ्छतीव तथा व्याकुला सतीत्यर्थः। आच्छीनद्योर्नुमिति विकल्पान्नुमभावः। अस्मै प्रियाय अस्थित आत्मानं प्रकाशयन्ती स्थितेत्यर्थः। तिष्ठतेः कर्त्तरि लुङ्। प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं, स्थाध्वोरिच्चेति सिचः कित्त्वमिकारश्च धातोरन्तादेशः, कित्त्वान्न गुणः। इति यदतो हेतोरस्य प्रियस्य चेतः सुतरामहरत। तथाहि, त्रपैव स्त्रियोऽभिभूषयति स्फुटं, प्रसिद्धमित्यर्थः। अतोऽस्या अपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः। कुलकार्थान्तरन्यासौ। मध्या चेयं नायिका। लज्जामन्मथमध्यस्था मध्यमोदितयौवनेति लक्षणात् ॥३८॥

टिप्पनी—अवनतेति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३८॥

বাঙ্গালা—সেই রমণীর মুখচন্দ্র অবনত হইল এবং অধৈর্য্যবশতঃ যেন সে কিছু ব্যবধানে যাইবার ইচ্ছা করিয়া, প্রিয়তমকে নিজের ইচ্ছা ব্যক্ত করিয়া যে অবস্থান করিতে লাগিল; ইহাতেই সে, প্রিয়তমের চিত্ত অত্যন্ত আকর্ষণ করিল। কারণ, লজ্জাই স্ত্রীলোকদিগকে অলঙ্কৃত করিয়া থাকে ইহা প্রসিদ্ধ।৩৮।

अन्वयः—दयितैः किसलयशकलेषु अवाचनीयाः केवलं पुलकिनि अङ्गके निधेयाः नखपदलिपयः अपि दीपितार्थाः अनङ्गलेखाः प्रणिदधिरे ॥३९॥

टीका—किसलयेति। किसलयशकलेषु वर्त्तमाना इति शेषः अवाचनीयाः प्रसिद्धलिपिवैलक्षण्याद् वाचयितुमनर्हाः किन्तु केवलं पुलकिनि दयितस्पृष्टत्वात्तत्स्पर्शादेव रोमाञ्चवत्यङ्गके वपुषि निधेया विरहतापशान्त्यर्थेऽर्पणीयाः नखपदानि नखाङ्का एव लिपयोऽक्षराणि येषु ते न तु प्रसिद्धाक्षराः अतोऽवाचनीया इत्यर्थः। नैतावतानुतापकारित्वं चेत्याह तथापि दीपितार्थाः सङ्केतितसन्निवेशवशादेव द्योतिताभिप्रायाः लिख्यन्त इति लेखाः। कर्मणि घञ्प्रत्ययः। अनङ्गस्य लेखाः तत्प्रयुक्ता इत्यर्थः। दयितैः दयिताभिः दयितैश्च। पुमान् स्त्रियेत्येकशेषः। प्रणिदधिरे प्रणिहिता लिखिता इत्यर्थः। दधातेः कर्मणि लिट्। नेर्गदनदेत्यादिना नकारस्य णत्वम्। लोकप्रसिद्धलेख्यवैलक्षण्याद् व्यतिरेकालङ्कारः ॥३९॥

टिप्पनी—किसलयेति। अत्र वृत्त्यनुप्रासश्च शब्दालङ्कार इति टीकोक्तव्यतिरेकेण सह तस्य संसृष्टिः। प्रवासरूपो विप्रलम्भशृङ्गारो रसः, मधुररचनावशात् माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—প্রিয়তম ও প্রিয়তমারা নখদ্বারা পল্লবখণ্ডে লিখিয়া পরস্পর কাম সম্বন্ধী পত্র ব্যবহার করিতে লাগিল; তাহার অক্ষরগুলি পড়া যাইত না এবং সে গুলি কেবল

कृतकृतकरुषा सखीमपास्य त्वमकुशलेति कयाचिदात्मनैव ।
अभिमतमभि साभिलाषमाविष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥४०॥
अभिमुखमुपयाति मा स्म किञ्चित् त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलब्धेरधिकमधित्वदनेन मा निपाति ॥४१॥

---

রোমাঞ্চিত অঙ্গেই দেওয়া উচিত ছিল ; আর সে গুলি নখদ্বারা লিখিত হইলেও ( এবং পড়িতে না পারিলেও) অর্থ প্রকাশ করিতেছিল ॥৩৯॥

**अन्वयः**—कृत-कृतक-रुषा कयाचित् 'त्वम् अकुशला' इति सखीम् अपास्य आत्मना एव अभिमतम् अभि साभिलाषम् आविष्कृतभुजमूलं मूर्ध्नि माला अबन्धि ॥४०॥

**टीका**—कृतेति । कृतकृतकरुषा कृतकृत्रिमरोषया कयाचिन्नायिकया त्वमकुशला माल्यग्रथने कुशला नासीति सखीमपास्य निरस्यात्मना स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषमाविष्कृतभुजमूलं प्रकाशितकक्षप्रदेशं यथा तथा मूर्ध्नि माला अबन्धि बद्धा । अयञ्च स्वाभिप्रायव्यञ्जकचेष्टारूपस्वापलाख्यः सत्त्वाविविशेषः । नायिका प्रौढ़ैव । स्मरमन्दीः कृतव्रीड़ा प्रौढ़ा सम्पूर्णयौवनेति लक्षणात ।४०॥

**टिप्पनी**—कृतेति । अत्र कृतकृतकेति छेकानुप्रासः, तृतीयपदे तु वृत्त्यनुप्रास इत्यनयोः संसृष्टिः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४०॥

**বাঙ্গালা**—কোন রমণী সখীর প্রতি কৃত্রিম ক্রোধ করিয়া, "তুমি মালা বাঁধিয়া দিতে নিপুণ নহ" এই কথা বলিয়া, সখীকে পরিত্যাগ করিয়া, প্রিয়তমের অভিমুখে দাঁড়াইয়া, অনুরাগের সহিত বাহুমূল বাহির করিয়া, নিজে নিজেই আপন মস্তকে মালা বন্ধন করিল ॥৪০॥

**अन्वयः**—मधुव्रतानां पटली अभिमुखम् उपयाति (सति) त्वं किञ्चित् मा स्म अभिदधाः ; मधु सुरभि मुखाब्ज-गन्ध-लब्धेः अधित्वत् अनेन अधिकं मा निपाति ॥४१॥

**टीका**—अथ काञ्चिन्नायिकां प्रति सखीवचनं विशेषकेणाह, अभिमुखमिति । मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रता मधुपाः । कर्मण्यण् प्रत्ययः । तेषां पटले अभिमुखमुपयाति आगते सति त्वं किञ्चिन्मा स्माभिदधाः न किञ्चिदालप मौनं भजेत्यर्थः । अत्तोरि लङ्, न माङ्योग इत्यटप्रनिषेधः । मौनस्य मधुकरबाधनिवृत्तिरेव फलमित्याह, मध्विति । मधुना मद्येन सुरभिमुखं अस्य यो गन्धस्तस्य लब्धेर्लाभात । स्त्रियां क्तिन् । अनेन मधुव्रतपटलेन अधित्वत् त्वयि । विभक्त्यर्थेऽव्ययीभावः त्वमावेकवचन इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदोऽमपर्यन्तस्य त्वादेशः अतएव विभक्त्य-भावाच्च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम् । अधिकमत्यन्तं सर्वतेत्यर्थः मा निपाति मा निपात्यताम् । भवे लुङि चिण्वद्वृद्धिः अत्र निपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥४१॥

**सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहां विरक्तः ।**
**ध्रुवममृतपनामवाञ्छयासावधरममुं मधुपस्तवाजिहीते ॥४२॥**

---

**टिप्पनी**—अभिमुखमिति । अत्र चतुर्थपादे अधिकमधीति च्छेकानुप्रास इति टीकोक्तातिशयोक्त्या सह संसृष्टिः । माधुर्य्यं गुणः, पञ्चाली च रीतिः ॥४१॥

**বাঙ্গালা**—ভ্রমরসমূহ তোমার সম্মুখে আসিলে, তুমি কোন কথা বলিও না ; তোমার মুখপদ্ম খানি মদ্য পান করায় সৌরভময় হইয়াছে ; সুতরাং তাহার সৌরভ লাভ করায়, ঐ ভ্রমর যেন তোমার উপরে বিশেষরূপে না পড়ে ॥৪১॥

**अन्वयः**—असौ मधुपः भूरुहां सरजस-मकरन्द-निर्भरासु प्रसवविभूतिषु विरक्तः (सन्) अमृतप-नाम-वाञ्छया ध्रुवम् अमुं तव अधरं [प्रति] आजिहीते ॥४२॥

**टीका**—सरजसेति । किञ्च मधु पिबतीति मधुपो मधुलिट्, मद्यपश्च । आतोऽनुपसर्गे कः । भुवि रोहन्ति जायन्त इति भूरुहां भूरुहाणां भौमानाञ्च देहिनां सम्बन्धिनीषु सह रजसा सरजसम । अचतुरेत्यादिना साकल्यार्थेऽव्ययीभावः समासान्तनिपातः । तेन सरजस्क इति बहुव्रीह्यर्थो लभ्यः मुख्यो वा महाकविप्रयोगबाहुल्यात् अव्ययीभावदर्शनं तु प्रायिकमित्युक्तं प्राक् । तथाच सरजसं सरजसो वा यो मकरन्दस्तेन निर्भरासु पूर्णासु न तु त्वदधरामृतेन नाप्यरजस्केनेति भावः । अन्यत्र रजः स्त्रीपुष्पम् । स्याद्रजः पुष्पमार्त्तवमित्यमरः । तत्साहचर्य्यान्मकरन्दशब्देन शुक्रप्रतीतिः तेन शुक्रशोणितसन्निपातप्रायास्वित्यर्थः प्रसवविभूतिषु पुष्पसमृद्धिषु जन्मपरम्परासु च विरक्तः निःस्पृहः सन् अमृतं पिबतीति अमृतप इति नाम्नो वाञ्छयासावमुं तवाधरमोष्ठं प्रति आजिहीते आगच्छति ध्रुवं सत्यमित्युत्प्रेक्षायाम् । अन्यत्र तु अमृतपो देव इति नामवाञ्छया देवभूयापेक्षयेत्यर्थः । अथवा निःश्रेयसप्राप्तीच्छयेत्यर्थः । श्रेयो निःश्रेयसामृतमित्यमरः । ध्रुवं शाश्वतम् अधः धन्वरासम्बन्धरहितम् अमुम्परलोकपथम् । शुभमिह चामुत्र चान्वेति इत्यादौ लोके वेदे चेदमदसोर्लौकद्वये रूढ़िप्रदर्शनात् । आजिहीते अन्विष्यतीत्यर्थः ओ हाङ्गताविति धातोर्लुटि श्लाविति द्विर्भावः, ई हल्यघोरितीकारः । इह नायिकावदनसौरभहेतुकस्य मधुपानागमनस्यामृतपनामवाञ्छाहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च ध्रुवमिति व्यञ्जकप्रयोगाद्वाच्या सती मधुपस्याधरोष्ठे शस्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्वोक्ताप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधया प्रकृतार्थनियन्त्रितत्वाच्छब्दशक्तिमूलो ध्वनिरेव न श्लेष इत्यलं विस्तरेणेति ॥४२॥

**टिप्पनी**—सरजसेति । अत्र गुणरीती पूर्ववत् ॥४२॥

**বাঙ্গালা**—রেণু ও মধুদ্বারা পরিপূর্ণ বৃক্ষের পুষ্পসমৃদ্ধিতে বিরক্ত হইয়া, ঐ ভ্রমরটী 'অমৃতপ' এই নাম লাভ করিবার ইচ্ছায় নিশ্চয়ই তোমার এই ওষ্ঠের দিকে আসিতেছে ॥৪২॥

इति वदति सखीजने निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।
अपतदलिभयेन भर्त्तुरङ्कं भवति हि विक्लवता गुणोऽङ्गनानाम् ॥४३॥
मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥४४॥

---

अन्वयः—सखीजने इति वदति सति निमीलद्द्विगुणित-सान्द्रतराक्षि-पक्ष्म-माला काचित् अलिभयेन भर्त्तुः अङ्कम् अपतत् । हि विक्लवता अङ्गनानां गुणः भवति ॥४३॥

टीका—इतीति । इति इत्थं सख्येव जनस्तस्मिन् सखीजने वदति सति निमीलन्त्यौ भयात्मुकुलीभवन्त्यौ अतएव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते । गुणस्त्ववृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती । ते कृते द्विगुणिते अतएव सान्द्रतरे अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा काचिदिति शेषः । अक्षिद्वयस्य पक्ष्मद्वयद्वे गुण्यलक्ष्मीरक्षारेवेति द्योतनार्थत्वान्न पौनरुक्त्यम् । अलिभयेन भर्त्तुरङ्कमुत्सङ्गमपतत् प्राप्तवती । अहो कष्टं यत् कीटकादपि भयमित्याशङ्क्याह । अङ्गनानां न तु पुंसामिति भावः विक्लवता भीरुता गुणो भवति हि न तु दोष इति भावः । अतएव जनसमक्षं भर्त्तुरङ्कारोहणमपि न दोषः पार्श्वस्थालम्बनादीनां भयानुभावत्वात् । कुलकेऽलङ्कारोऽयमर्थान्तरन्यासः ॥४३॥

टिप्पनी—इतीति । अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥४३॥

বাঙ্গালা—সখীজন এইরূপ বলিলে, ভয়ে কোন রমণীর নয়নযুগল মুদ্রিত হইয়া আসিল ; তখন তাহার নয়নের লোমগুলি দ্বিগুণ ঘন হইল ; এই অবস্থায় সে ভ্রমরের ভয়ে ভর্ত্তার ক্রোড়ে যাইয়া পড়িল । কারণ, ভীরুতা রমণীদিগের গুণই হইয়া থাকে ॥৪৩॥

अन्वयः—यूना मुखकमलकम् उन्नमय्य बलात् अभिनवोढवधूः यत् अचुम्बि, बालपल्लवाग्रग्रहपरया विदग्धसख्या तत् अपि किल न विविदे ॥४४॥

टीका—मुखेति । यूना अभिनवोढवधूर्नवोढाङ्गनापि बलात् बलात्कारात् मुखं कमलमिवेत्युपमितसमासः । तदल्पं मुखकमलकम् । अल्पार्थे कन्प्रत्ययः । उन्नमय्य उद्यम्य । ल्यपि लघुपूर्वादित्ययादेशः । अचुम्बि चुम्बितेति यत् तच्चुम्बनं विदग्धसख्या चतुरसख्या बालपल्लवाग्रयोर्ग्रहो ग्रहणम । ग्रहवृद्दनिश्चिगमश्चेत्यप्प्रत्ययः । तत्परया तदासक्तया मया कश्चिद् व्यासङ्गं कल्पयन्त्येत्यर्थः न विविदे अपि किल न प्रकाशितमिति श्रुत वक्तव्यमित्यपिशब्दार्थः । किलेत्यलीके वस्तुनो विदितस्याप्यविदितस्येव स्थितं वैदग्ध्यात् अन्यथा तयोर्विश्रब्धविहारविघातादिति भावः । मुग्धेयं नायिका । उदयद्यौवना मुग्धा लज्जाविदितमन्मथेति लक्षणात् ॥४४॥

टिप्पनी—मुखेति । अत्र चतुर्थपादे छेकानुप्रासोऽलङ्कारः सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

বাঙ্গালা—কোন যুবক, নববিবাহিত বধূটির মুখপদ্মখানি তুলিয়া ধরিয়া যে চুম্বন

व्रततिविततिभिस्तिरोहितायां प्रतियुवती वदनं प्रियः प्रियायाः।
यदधयदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥४५॥
विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः।
रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥४६॥

करियाछिल; ताहा, सुचतुर सखी नूतन पल्लव तुलिते व्यस्त थाकिया जानिते पारियाछिल ना ॥४४॥

अन्वयः—प्रतियुवती व्रततिविततिभिः तिरोहितायां [सत्याम्] प्रियः प्रियायाः वदनं यत् अधयत्; अधरावलोप-नृत्यत्-कर-वलय-स्वनितेन तत् विवव्रे ॥४५॥

टीका—व्रततीति। प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां व्रततिविततयो लताजालानि। वल्ली तु व्रततिर्लतेत्यमरः। ताभिस्तिरोहितायां सत्यां प्रियः प्रियाया वदनमधयत् अपिबदिति यत्। धेटो लौवादिकाल्लङ्। तद्वदनपानम् अधरावलोपेन अधरखण्डनेन तज्जनित व्यथयेत्यर्थः नृत्यतोश्चलतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवव्रे विवृतम् तदेव तस्यास्तदनुमापकमभूदित्यर्थः। अत्र का चेष्टा अपरा त्वीर्ष्या-निर्वेदवतीत्यनुसन्धेयम् ॥४५॥

टिप्पनी—व्रततीति। अत्र छेकानुप्रासोऽलङ्कारः, सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥४५॥

বাঙ্গালা—সপত্নী, লতাকুঞ্জ দ্বারা আবৃত থাকা অবস্থায় প্রিয়তম যে প্রিয়তমার মুখ চুম্বন করিয়াছিল; তাহা বালার শব্দ প্রকাশ করিয়া দিয়াছিল। কেন না, ওষ্ঠদংশনের বেদনায় হাত দুই খানি কাঁপিতেছিল, তাহাতে হাতের বালাও চলিতেছিল ॥৪৫॥

अन्वयः—वधूः पुरस्तात् धरणिरुहाधिरुहः लतायाः विलसितम् अनुकुर्वती [सती] ऋजुतया सखीनां पुरः अकलितचापलदोषं रमणम् आलिलिङ्ग ॥४६॥

टीका—विलसितमिति। वधूः काचित् स्त्री पुरस्तादग्रे धरणिरुहमधिरोहतीति धरणिरुहाधिरुट् वृक्षाधिरूढा। रुहेः क्विप्। तस्या लतायाः विलसितं चेष्टितम्। भावे क्तः। अनुकुर्वती एवमित्यात्मप्रकाररमभिनयन्ती ऋजुतया अकुटिलबुद्धितया सखीनां पुरोऽग्रे अकलितः अविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन् कर्मणि तद्यथा तथा रमणं प्रियमालिलिङ्ग। एषा स्वर्गी मुग्धवती प्रौढ़ा च ॥४६॥

टिप्पनी—विलसितमिति। अत्र अर्थोपमालङ्कारः, सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥४६॥

বাঙ্গালা—সম্মুখে একটি লতা একটি বৃক্ষের উপরে উঠিয়াছিল; (ইহা দেখিয়া) কোন রমণী সেই লতাটির অনুকরণ করিতে প্রবৃত্ত হইয়া, সরলবুদ্ধিবশতঃ চাঞ্চল্যদোষের বিচার না করিয়া, সখীদের সম্মুখেই প্রিয়তমকে আলিঙ্গন করিল ॥৪৬॥

সললিতমবলম্ব্য পাণিনাংসে সহচরমুচ্ছ্রিতগুচ্ছবাঞ্ছয়ান্যা।
সকল-কলভ-কুম্ভ-বিভ্রমাভ্যামুরসি রসাদবতস্তরে স্তনাভ্যাম্ ॥৪৭॥
মৃদুচরণতলাগ্রদুঃস্থিতত্বাদসহতরা কুচকুম্ভয়োর্ভরস্য।
উপরি নিরবলম্বনং প্রিয়স্য ন্যপতদথোচ্চতরোচ্চিচীষয়ান্যা ॥৪৮॥

---

**অন্বয়:**—অন্যা উচ্ছ্রিত-গুচ্ছ-বাঞ্ছয়া পাণিনা অংসে সললিতম্ অবলম্ব্য রসাৎ-সকল-কলভ কুম্ভ-বিভ্রমাভ্যাং স্তনাভ্যাম্ উরসি (তম্) অবতস্তরে ॥৪৭॥

**টীকা**—সললিতমিতি। অন্যা স্ত্রী উচ্ছ্রিতগুচ্ছবাঞ্ছয়া উন্নতস্তবকজিঘৃক্ষয়া সললিতং সবিলাসং যথা তথা সহচরং প্রিয়ম্পাণিনা ঔচিত্যাদ্বামেনেতি শেষঃ অংসে অবলম্ব্যাবষ্টভ্য সকলয়োঃ সমগ্রয়োঃ কলভকুম্ভয়োঃ করিকুম্ভয়োর্বিভ্রম ইব বিভ্রমঃ সৌন্দর্য্যং যয়োস্তাভ্যাং স্তনাভ্যাং রসাদ্রাগাদুরসি অবতস্তরে আচ্ছাদয়ামাস সহচরমিত্যনুষঙ্গঃ। অভিমুখাবস্থানাদিতি ভাবঃ। স্তৃঞাতেঃ কর্ত্তরি লিট্। ঋতশ্চ সংযোগাদের্গুণঃ শর্পূর্ব্বাঃ খয়ঃ ইত্যভ্যাসসকারলোপঃ। ইয়ঞ্চ প্রৌঢ়ৈব ॥৪৭॥

**টিপ্পনী**—সললিতমিতি। অত্র ছেকানুপ্রাসলুপ্তোপময়োঃ সংসৃষ্টিরলঙ্কারঃ, রসাদয়ঃ পূর্ব্ববৎ ॥৪৭॥

**বাঙ্গালা**—অন্য কোন রমণী, উচ্চস্থানস্থ পুষ্পস্তবক গ্রহণ করিবার ইচ্ছা করিয়া, বামহস্ত দ্বারা বিলাসের সহিত প্রিয়তমের স্কন্ধদেশ অবলম্বন করিয়া, করিকুম্ভের সমস্ত সৌন্দর্য্যশালী আপন স্তনযুগল দ্বারা অনুরাগবশতঃ সেই প্রিয়তমের বক্ষঃস্থল আবৃত করিয়া দিল ॥৪৭॥

**অন্বয়:**—অন্যা উচ্চতরোচ্চিচীষয়া মৃদুচরণতলাগ্রদুঃস্থিতত্বাৎ কুচকুম্ভয়োঃ ভরস্য অসহতরা (সতী) অথ নিরবলম্বনং প্রিয়স্য উরসি ন্যপতত ॥৪৮॥

**টীকা**—মৃদ্বিতি। অন্যা স্ত্রী উচ্চতরাণামত্যুন্নতকুসুমানামুচ্চেতুমবচেতুমিচ্ছয়া উচ্চতরোচ্চিচীষয়া। চিনোতেঃ সনন্তাৎ স্ত্রিয়ামপ্রত্যয়ে টাপ্। বিভাষা চেরিতি কুত্ববিকল্পঃ। মৃদুচরণতলাগ্রেণ দুঃস্থিতত্বাৎ দুঃখেন স্থিতত্বাৎ কুচকুম্ভয়োর্ভরস্য। পুংসি সংজ্ঞায়াং ঘঃ প্রায়েণেতি ঘপ্রত্যয়ঃ। ন সহতেঽত্যন্তমিত্যসহতরা। সহেঃ পচাদ্যজন্তান্নঞ্-সমাসাত্তরপ্ প্রত্যয়ঃ। ভরমসহমানেত্যর্থঃ। কৃদ্যোগাৎ কর্ম্মণি ষষ্ঠী। অথাস্মিন্নবসরে নিরবলম্বনং যথা তথা প্রিয়স্যোপরি ন্যপতৎ নিরবলম্বনত্বান্নিপপাতেত্যর্থঃ। এষা চ প্রৌঢ়া। স্বভাবোক্তিরলঙ্কারঃ ॥৪৮॥

**টিপ্পনী**—মৃদ্বিতি। অত্র কুচকুম্ভয়োর্ভরস্য সহতরত্বসম্বন্ধেঽপি তদসম্বন্ধাভিধানাদতিশয়োক্তিঃ চতুর্থচরণস্থচ্ছেকানুপ্রাসেন সংসৃজ্যতে। রসঃ পূর্ব্ববৎ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪৮॥

**বাঙ্গালা**—অন্য কোন রমণী, উচ্চস্থানস্থ পুষ্প চয়ন করিবার ইচ্ছা করিয়া, কোমল চরণের অগ্রদেশ দ্বারা দাঁড়াইয়াছিল বলিয়া কুচকুম্ভযুগলের ভার ধারণ করিতে না পারিয়া, নিরাশ্রয়ভাবে প্রিয়তমের বক্ষের উপরে পড়িয়া গেল ॥৪৮॥

उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः ।
प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥४९॥
इदमिदमिति भूरुहां प्रसूनैर्मुहुरतिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥५०॥

---

अन्वयः—परिरम्भलोलुपः अन्यः उपरिज-तरुजानि याचमानां प्रथितपृथुपयोधरां मुग्धवधूं कुशलतया 'स्वयं गृहाण' इति दोर्भ्याम् उदास ॥४९॥

टीका—उपरिजेति । उपरिजानि उपरि जातानि तरोर्जातानि तरुजानि कुसुमानि तानि याचमानाम् अपचित्य देहीति प्रार्थयमानां प्रथितपृथुपयोधरां प्रशस्तपीवरकुचां मुग्धवधूम् अकुटिलधियं स्त्रियं परिरम्भलोलुपः आश्लेषलालसोऽन्यः कुशलतया वञ्चनापटुतया स्वयं गृहाण त्वमेवापचिनुष्वेत्यर्थः इति गम्यमानार्थत्वादुक्तेति न प्रयुक्तं पौनरुक्त्यात् । दोर्भ्यामुदास उदक्षिपत् स्म । अयञ्च कायत्तत्वादनुकूलनायकः नायिका तु स्वाधीनपतिका प्रौढ़ा च ॥४९॥

टिप्पनी—उपरिजेति । अत्र तृतीयपादे छेकानुप्रासोऽलङ्कारः, सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

বাঙ্গালা—প্রসিদ্ধ বিশালস্তনী সরলচিত্তা রমণী উপরের ফুল তুলিয়া দিবার প্রার্থনা জানাইল ; তখন তাহার আলিঙ্গনাভিলাষী চতুর নায়ক বলিল—"তুমি নিজেই তোল"; ইহা বলিয়া বাহুযুগল দ্বারা সেই রমণীকে তুলিয়া ধরিল ॥৪৯॥

अन्वयः—नायकेन इदम् इदम् इति भूरुहां प्रसूनैः पुरः पुरः मुहुः अतिलोभयता (सता) अन्या अनुरहसम् अनायि ; अहो ! मनोभूः जनं रन्तुं त्वरयति ॥५०॥

टीका—इदमिति । अन्या स्त्री इदमिदमिति इदं ग्राह्यमिदं ग्राह्यमित्युक्त्वेत्यर्थः भूरुहां वृक्षाणां प्रसूनैः पुष्पैः पुरः पुरो मुहुरतिलोभयता प्रलोभयता नायकेन रहोऽनु अनुरहसमेकान्तम् । अन्ववतप्तमित्यव्ययीभावसमासान्तः । अनायि नीता । तथाहि, मनोभूः कामो जनं रन्तुन्त्वरयति देशकालानपेक्षयेति भावः । अतएवाश्चर्य्यमहो इति । पूर्ववन्नायिकानायकविवेकः । अर्थान्तरन्यासः ॥५०॥

टिप्पनी—इदमिति । अत्र "अर्थान्तरन्यासः" इति टीका । सामान्येन विशेषसमर्थनरूप इत्यर्थः, तृतीयचरणे च छेकानुप्रास इति संसृष्टिः । रसादयः पूर्ववत् ॥५०॥

বাঙ্গালা—"এই ফুলটী তোল, এই ফুলটী তোল" এই ভাবে গাছের ফুল দিয়া বার বার প্রলোভন দেখাইয়া, ক্রমে ক্রমে সম্মুখের দিকে নিয়া, কোন নায়ক কোন নায়িকাকে একেবারে নির্জন স্থানে নিয়া গেল । কি আশ্চর্য্য, কামদেব রমণ করিবার জন্য মানুষকে ত্বরা করিয়া থাকেন ॥৫০॥

विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या।
अभिपतितुमना लघुत्वभीतेरभवदमुञ्चति वल्लभेऽतिगुर्वी॥५१॥
अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा स्रजावनद्धः।
पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम्॥५२॥

---

**अन्वयः**—अन्या विजनम् इति अमुं क्षणं बलात् गृहीत्वा, अथ अन्तिके विपक्षं वीक्ष्य लघुत्वभीतेः अभिपतितुमनाः वल्लभे अमुञ्चति [सति] अतिगुर्वी अभवत्॥५१॥

**टीका**—विजनमिति। अन्या स्त्री विजनमेकान्तमिति हेतोरमुं वल्लभं क्षणं बलाद् गृहीत्वा आकृष्य अथान्तिके विपक्षं सपत्नीजनं वीक्ष्य लघुत्वभीतेस्तुच्छत्वभयादभिपतितुं मनो यस्याः सा अभिपतितुमनाः। तुम् काममनसोरपीति मकारलोपः। अपसर्त्तुकामेत्यर्थः वल्लभे अमुञ्चति अत्यजनि सति तस्य विपक्षानवेक्षणादिति भावः। अतिगुर्वी अतिगौरववत्यभवत् स्वयंग्रहलाघवनिरोधानात् भर्त्तृवल्लभत्वप्रकाशनाच्चेति भावः। भाग्यवतां सर्वं श्रेयसे भवतीति रहस्यम्। एषा त्वतिप्रगल्भेव॥५१॥

**टिप्पनी**—विजनमिति। अत्र द्वितीयपादे छेकानुप्रासोऽलङ्कारः, रसादयः पूर्ववत्॥५१॥

**বাঙ্গালা**—অন্য কোন রমণী, নির্জন স্থান বলিয়া, বলপূর্ব্বক ক্ষণকালের জন্য প্রিয়তমকে টানিয়া লইয়া চলিল; পরে সপত্নীকে দেখিয়া, নিজের লঘুতা জন্মিবে এই ভয়ে সরিয়া যাইবার ইচ্ছা করিল; কিন্তু সে প্রিয়তম তাহাকে ছাড়িল না; ইহাতে সে সম্মানের পাত্র হইল॥৫১॥

**अन्वयः**—अधिरजनि तस्याः धाम जगाम इति रुषा प्रियतमया स्रजा अवनद्धः युवा पदम् अपि चलितुं न सेहे। ससाध्वसानां किम् इव न शक्तिहरं [भवति]॥५२॥

**टीका**। अधीति। अधिरजनि रजन्याम्। विभक्त्यर्थेऽव्ययीभावः। तस्याः सपत्न्या इत्यर्थः। बुद्धिस्थत्वान्नामग्रहणासहत्वाच्च तच्छब्देन निर्देशः। धाम गृहं जगामेति रुषा हेतुना प्रियतमया कर्त्र्या स्रजा करणेनावनद्धो युवा पदमपि। अत्यन्तसंयोगे द्वितीया। चलितुं न सेहे न शशाक। तथाहि, ससाध्वसानां भयग्रस्तानां किमिव किं वा। इवशब्दो वाक्यालङ्कार इवेतीवदर्थोपमोत्प्रेक्षावाक्यालङ्कारेष्विति गणव्याख्याने। शक्तिं हरतीति शक्तिहरम्। हरतेरनुद्यमनेऽजित्यच् प्रत्ययः। न भवतीति शेषः। अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीतिवचनात्। भवन्तीति लटः पूर्वाचार्य्याणां संज्ञा। सर्वस्यापि भीरूणां शक्तिहरत्वादत्र कृतः स्रग्बन्धोऽपि यूनः शक्तिहर इति युक्तम् इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। खण्डितेयं नायिका, ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति लक्षणात्। नायकस्तु दक्षिणः, भयसम्बन्धसहनादिभिस्तुल्यो नैकत्र दक्षिण इति लक्षणार्थप्रतीतेरिति॥५२॥

**टिप्पनी**—अधीति। अत्र जगाम धाम इति अन्त्यानुप्रासः टीकोक्तार्थान्तरन्यासेन संसृज्यते। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥५२॥

न खलु वयममुष्यं दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥५३॥
तव कितव ! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥५४॥

---

বাঙ্গালা—প্রিয়তম, গত রাত্রিতে সপত্নীর ঘরে গিয়াছিল বলিয়া প্রিয়তমা ক্রোধে মালা দ্বারা তাহাকে বন্ধন করিল ; সুতরাং সে যুবক এক পদও চলিতে পারিল না। কারণ, ভীতলোকের পক্ষে কোন্ বস্তু শক্তিনাশক না হয় ? ॥৫২॥

अन्वयः—वयम् अमुष्य दानयोग्याः न खलु [भवामः], या असकौ रहः त्वां पिबति च पाति च, तस्यै अमुं विटपं ददस्व, व्रज, यतः चिराय सदृशोः योगः भवतु ॥५३॥

टीका—अथ काचित् खण्डिता निजकान्तमागस्कारिणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सयितुमारभते, नेत्यादि । वयममुष्यं दानयोग्या न भवामः खलु किन्तु या असाविवासकौ त्वत्प्रिया । अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् । रहो रहसि । रहश्चोपांशु चालिङ्गे इत्यमरः । त्वां पिबति पानं करोति । पा पाने भौवादिकात् कर्त्तरि लिट् पाघ्रेत्यादिना पिबादेशः । पाति रक्षति च अन्यतो वारयति चेत्यर्थः । पा रक्षणे अदादित्वाच्छपो लुक् । तस्यै अमुं विटान् पातीति विटपं पल्लवम् । विटपः पल्लवे षिड्गे इति विश्वः । ददस्व प्रयच्छ । दद दाने इति भौवादिकाल्लोट् । व्रज गच्छ यतो दानाच्चिराय चिरकालात् । चिरार्थेऽव्ययं सदृशोरनुरूपयोर्योगो भवतु उभयोरपि विटपत्वादिति भावः । समालङ्कारोऽयम् । स समालङ्कृतिर्योगो वस्तुनोरनुरूपयोरिति लक्षणात् ॥५३॥

टिप्पनी—नेति । अत्र मानरूप शृङ्गारो रसः, प्रसादः गुणः, वैदर्भी च रीतिः ॥५३॥

বাঙ্গালা—আমি তোমার এই পল্লবদানের যোগ্য নহি ; নির্জন স্থানে ঐ যে তোমাকে পান করিয়া থাকে এবং রক্ষা করিয়া থাকে, তাহাকে যাইয়া এই পল্লবটী দান কর, যাও। যে পল্লব দান করায় চিরকালের জন্য এক জাতীয় দুই ব্যক্তির যোগ হইবে ॥৫৩॥

अन्वयः—हे कितव ! वृथा आहितैः तव क्षितिरुहपल्लवपुष्पकर्णपूरैः नः किम् ? ननु ! जनविदितैः भवद्व्यलीकैः कर्णयुग्मं चिरपरिपूरितम् एव ॥५४॥

टीका—तवेति । हे कितव ! धूर्त्त ! वृथा व्यर्थमेवाहितैः तत्कार्य्यस्यान्यथा सिद्धत्वादिति भावः तव सम्बन्धिभिः क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतंसाः । कर्मण्यण् । तैर्नोऽस्माकं किं तत्साध्यं न किञ्चिदस्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया कर्णपूराणां करणत्वात्तृतीया । उक्तञ्च न्यासोद्योते न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य अपि तु गम्यमानापीति । किन्तु नन्वङ्ग जनविदितैर्जनैर्ज्ञातैः प्रसिद्धैः जनेषु विदितैरिति सप्तमीसमासः क्तस्य च वर्त्तमाने इति कृद्योगे षष्ठीप्राप्तिप्रसक्तत्वेऽपि क्तेन च पूजायामिति षष्ठीसमासनिषेधात् जनानामः

मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ ! कलिरेष महांस्त्वयाऽद्य दत्तः ॥५५॥
इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेशरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥५६॥

---

धारत्वावधायां तदप्राप्तेः। भवद्व्यलीकैस्तवाप्रियवचनैः कर्णयुग्मं चिरपरिपूरितं नित्यं पूर्णमेव अतः परिपूरितस्य पूरणायोगादलमेभिरित्यर्थः। अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥५४॥

टिप्पनी—तवेति। अत्र प्रथमपादगतेन छेकानुप्रासेन टीकोक्तं काव्यलिङ्गं संसृज्यते। रसादयः पूर्ववत् ॥५४॥

বাঙ্গালা—ধূর্ত্ত! তুমি গাছের পল্লব ও ফুল অকারণ আমার কাণে দিয়া দিতেছ ; ইহা দ্বারা আমার প্রয়োজন কি ? কারণ, সর্বজনবিদিত তোমার অপ্রিয় বাক্য দ্বারা আমার কর্ণ-যুগল চিরকালই পরিপূর্ণ হইয়া আসিতেছে ॥৫৪॥

अन्वयः—अलिनादैः मुहुः उपहसिताम् इव [स्थिताम्] एनां कलिकां किमर्थं नः वितरसि। हे शठ! तस्याः धाम्नि वसतिम् उपागतेन त्वया अद्य एषः महान् कलिः दत्तः ॥५५॥

टीका—मुहुरिति। अलिनादैर्मुहुरुपहसितां प्रतारणार्थेति प्रहस्यमानामिव स्थितामेनां कलिकां कोरकम् अलङ्कलिङ्गत्वहस्य। कलहे च युगे कलिरिति वैजयन्ती। स्त्रीप्रत्ययस्त्वविवक्षितः श्लेषे। नोऽस्माकं किमर्थं वितरसि हे शठ! गूढविप्रियकारिन्! तस्यास्त्वत्प्रियाया धाम्नि भवने वसतिं स्थितिमुपगतेन त्वयाद्यैष वर्त्तमानो महान् कलिः कलहो दत्तः स्वदत्त एव महति कलौ स्थिते किं कल्यन्तरेणेत्यर्थः। अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् कलिकामिति श्लेषोत्थापितया कोरककलहयोर्भेदे अभेदरूपातिशयोक्त्यानुप्राणितमिति सङ्करः ॥५५॥

टिप्पनी—मुहुरिति। अत्र टीकोक्तसङ्करे श्लेषोत्प्रेक्षयोरपि प्रवेशो बोध्यः। मानाख्यः शृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—ভ্রমরের রব, এই কলিকাটীকে যেন বার বার (প্রতারণার কলিকা বলিয়া) উপহাস করিতেছে ; সুতরাং তুমি ইহা আমাকে কি জন্য দিতেছ। হে ধূর্ত্ত! তুমি সেই রমণীর গৃহে বাস করিয়া আজ এই গুরুতর কলিই (কলহই, কলিকাই) দিয়াছ ॥৫৫॥

अन्वयः—इति गदितवती अन्या रुषा स्फुरित-मनोरम-पक्ष्म-केशरेण श्रवणनियमितेन असिताम्बुरुहेण चक्षुषा च कान्तं समं जघान ॥५६॥

टीका—इतीति। इत्येवं गदितवत्युक्तवती अन्या स्त्री रुषा कान्तं स्फुरितान्युज्ज्वलानि मनोरमाणि च पक्ष्माणीव केशराणि अन्यत्र केशराणीव पक्ष्माणि यस्य तेन श्रवणनियमितेन श्रोत्रं धृतेन निसर्गेण च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगपज्जघान

विनयति सुदृशो दृशः परागम्प्रणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥५७॥
स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम्।
वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥५८॥

---

ताड़यामास। एषा खण्डिता, नायकस्तु धृष्टः। व्यक्ताङ्गोनिर्भयो धृष्ट इति लक्षणात्।' अत्र स्फुरितेत्यादितुल्यधर्मगम्योपमानयोरसिताम्बुरुहचक्षुषोरुभयोरपि ताड़नसाधनतयोपात्तत्वेन प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता। लक्षणं तूक्तम् ॥५६॥

टिप्पनी—इतीति। अत्रापि रसादयः पूर्ववत् ॥५६॥

বাঙ্গালা—এই কথা বলিয়া অন্য কোন রমণী, ক্রোধবশতঃ কর্ণস্থিত নীলপদ্ম এবং কর্ণপর্য্যন্ত বিস্তৃত নয়ন দ্বারা একদাই প্রিয়তমকে তাড়ন করিল; সেই নীলপদ্মের কেশরগুলি চোখের লোমের ন্যায় উজ্জ্বল এবং মনোহর ছিল; আর সেই নয়নের লোমগুলিও নীলপদ্মের কেশরের ন্যায় উজ্জ্বল ও মনোহর ছিল ॥৫৬॥

अन्वयः—प्रणयिनि आननानिलेन सुदृशः दृशः कौसुमं परागं विनयति (सति), तदहितयुवतेः अक्ष्णोः द्वयम् अपि रोषरजोभिः अभीक्ष्णम् आपुपूरे ॥५७॥

टीका—विनयतीति। प्रणयिनि प्रिये सुदृशः प्रियायाः दृशो लोचनात् एकस्मादेवेति भावः कुसुमेषु भवं कौसुमम्परागं रजःकणान्तच्चैकमेवेति भावः, आननानिलेन निजमुखफुत्कारेण विनयत्यपनयति सति तदहितयुवतेः तत्सपत्न्याः अक्ष्णोर्द्वयमपि न त्वेकमेवेति भावः रोषा एव रजांसि तैरभीक्ष्णमापुपूरे नैकेन रजःकणेन किञ्चित् स्पृष्टमात्रमिति भावः। पूरयतेः कर्मणि लिट्। पूर्णमित्यर्थः ॥५७॥

टिप्पनी—विनयतीति। अत्र प्रथमे पादे लाटानुप्रासः तृतीये च छेकानुप्रास इति टीकोक्तरूपेण तयोः संसृष्टिः। रसादयः पूर्ववत् ॥५७॥

বাঙ্গালা—প্রিয়তম, মুখবায়ুদ্বারা সুন্দরীর নয়ন হইতে পুষ্পের রেণু বাহির করিয়া দিতে লাগিলে, তাহার সপত্নীর নয়ন দুইটীই ক্রোধের রেণুতে অত্যন্ত পূর্ণ হইল ॥৫৭॥

अन्वयः—इदं प्रतियुवतेः अभिधानम् अङ्गनानाम् अभिचारमन्त्रः एव स्फुटम्। यत् वरतनुः पत्या अमुना उपहूय मृदुकुसुमेन आहता अपि (सती) अमूर्च्छत् ॥५८॥

टीका—स्फुटमिति। इदम्प्रतियुवतेः सपत्न्याः अभिधानं नामधेयम् अङ्गनानामभिचारः परमारणकर्म यथा श्येनेनाभिचरन् यजेतेति तस्य मन्त्रोऽभिचारमन्त्रः स एव स्फुटमित्युत्प्रेक्षा यद्यस्माद्वरतनुः स्त्री पत्या भर्त्रा अमुना सपत्नीनामधेयेनोपहूय मृदुकुसुमेन मृदुग्रहणमविचारवचितत्वद्योतनाय दैवताभिचारमन्त्रसामर्थ्यात्तद्विस्फुरभावं द्योतयति तेनाप्याहता अमूर्च्छत् यद्व्यापारपूर्वकं कुसुमताड़नमपि मारकं सोऽभिचारमन्त्र एव सत्यम् अन्यथा केवलकुसुमेऽपि तत्प्रसङ्गादित्यर्थः ॥५८॥

সমদনমবতংসিতেঽধিকর্ণং প্রণয়বতা কুসুমে সুমধ্যমায়াঃ।
ব্রজদপি লঘুতাং বভূব ভারঃ সপদি হিরণ্ময়মণ্ডনং সপত্ন্যাঃ ॥৫৯॥
অবজিতমধুনা তবাহমক্ষ্ণোরুচিরতয়েত্যবনম্য লজ্জয়েব।
শ্রবণকুবলয়ং বিলাসবত্যা ভ্রমররুতৈরুপকর্ণমাচচক্ষে ॥৬০॥

---

**টিপ্পনী**—স্ফুটমিদং। অত্রাপি রসাদয়ঃ পূর্ববৎ ॥৫৮॥

**বাঙ্গালা**—সপত্নীর নাম, স্ত্রীলোকদিগের পক্ষে অভিচারের (মারণ উচাটন প্রভৃতি কার্য্যের) মন্ত্র বলিয়াই বুঝা যায়। যেহেতু, পতি এই সপত্নীর নাম দ্বারা কোন সুন্দরীকে আহ্বান করিয়া, কোমল পুষ্পদ্বারা তাড়ন করিল; তথাপি সে মূর্চ্ছিত হইল ॥৫৮॥

**অন্বয়ঃ**—প্রণয়বতা সুমধ্যমায়াঃ অধিকর্ণং কুসুমে সমদনম্ অবতংসিতে (সতি), লঘুতাং ব্রজৎ অপি সপত্ন্যাঃ হিরণ্ময়মণ্ডনং সপদি ভারঃ বভূব ॥৫৯॥

**টীকা**—সমদনমিতি। প্রণয়বতা প্রিয়েণ সুমধ্যমায়াঃ প্রিয়ায়াঃ অধিকর্ণং কর্ণে। বিভক্ত্যর্থেঽব্যয়ীভাবঃ। কুসুমে সমদনং যথা তথা অবতংসিতে অবতংসীকৃতে সতি সপদি লঘুতাং হীনতামগুরুত্বং চ ব্রজদপি সমান একঃ পতির্যস্যাস্তস্যাঃ সপত্ন্যাঃ। নিত্যং সপত্ন্যাদিষ্বিতি ঙীপ্ নকারস্য তস্মাদেব নির্দেশাৎ সমানশব্দস্য সভাবনিপাতঃ। হিরণ্যস্য বিকারো হিরণ্ময়ম্। দাণ্ডিনায়নেত্যাদিনা নিপাতঃ। তন্মণ্ডনং ভারো বভূব। যৎকিঞ্চিদপি প্রেমবতা কান্তেন স্বহস্তদত্তং শ্লাঘ্যং মণ্ডনং ভবতি অন্যৎ মহার্ঘমপি হীনং ভারস্য ন তু মণ্ডনমিত্যর্থঃ। লঘুগুরুত্বয়োর্বিরোধস্য হীনার্থত্বেন পরিহারাদ্ বিরোধাভাসভেদঃ ॥৫৯॥

**টিপ্পনী**—সমদনমিতি। অত্র দ্বিতীয়ে পাদে ছেকানুপ্রাস ইতি টীকোক্তবিরোধাভাসেন সহ সংসৃষ্টিঃ। অত্রাপি রসাদয়ঃ পূর্ববৎ ॥৫৯॥

**বাঙ্গালা**—কোন প্রেমিক, কোন সুন্দরীর কাণে, কামকেলির সহিত ফুল পরাইয়া দিলে, তাহার সতীনের কাণের হাল্‌কা হীরার অলঙ্কারও তৎক্ষণাৎ ভারী হইয়া গেল (ভারীর ভাণ করিয়া সতীন তাহা কাণ হইতে ফেলাইয়া দিল) ॥৫৯॥

**অন্বয়ঃ**—বিলাসবত্যাঃ শ্রবণকুবলয়ং (কর্তৃ), অহম্ অধুনা তব অক্ষ্ণোঃ রুচিরতয়া অবজিতম্ ইতি লজ্জয়া অবনম্য ভ্রমররুতৈঃ উপকর্ণম্ আচচক্ষে ইব ॥৬০॥

**টীকা**—অবজিতমিতি। বিলাসবত্যাঃ স্ত্রিয়ঃ শ্রবণকুবলয়ং শ্রবণোৎপলং কর্তৃ অহমধুনা তবাক্ষ্ণোরুচিরতয়া রুচিরস্য ভাবঃ রুচিরতা। ভাবে তল্। তয়া সৌন্দর্য্যেণাবজিতমিতি বক্ষ্যমাণানুবাদঃ। অতএব লজ্জয়া অবনম্য ভ্রমররুতৈঃ তন্মিষেণেত্যর্থঃ উপকর্ণং কর্ণে। বিভক্ত্যর্থেঽব্যয়ীভাবঃ। আচচক্ষ ইবেত্যুৎপ্রেক্ষা ॥৬০॥

**টিপ্পনী**—অবজিতমিতি। অত্র তৃতীয়চরণে ছেকানুপ্রাস ইতি টীকোক্তয়া বাচ্যোৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬০॥

**বাঙ্গালা**—"বর্ত্তমান সময়ে আমি তোমার নয়নযুগলের সৌন্দর্য্যে পরাজিত হইয়াছি"

अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ॥६१॥
श्लथशिरसिजपाशपातभारादिव नितरां नतिमद्भिरंसभागैः ।
मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण ॥६२॥

---

এই কথা বলিবার জন্য কোন বিলাসিনীর কর্ণের নীলোৎপল, লজ্জাবশতই যেন অবনত হইয়া, ভ্রমরের রবে ঐ কথাগুলি কর্ণের নিকটে বলিল ॥৬০॥

अन्वयः—अलीनां कुलानि अवचितकुसुमाः वल्लीः विहाय कोमलमाल्यमालिनीषु युवतिषु पदम् उपदधिरे मलिनात्मनां परिचयः न प्रधानम् ॥६१॥

टीका—अवचितेति । अलीनां कुलानि अवचितानि युवतिभिरुपात्तानि कुसुमानि यासां ताः रिक्ता इत्यर्थः वल्लीः पुष्पलताः विहाय कोमलानि माल्यानि मलन्ते धारयन्तीति तासु कोमलमाल्यमालिनीषु । मल मल्ल धारणे इति धातोर्णिनिः ऋन्नेभ्यो ङीप् । युवतिषु पदमुपदधिरे निदधुः । तथाहि, मलिनात्मनां कृष्णदेहानां दुष्टचित्तानां च परिचयश्चिरकालसाहचर्यं न प्रधानं न प्रयोजकं किन्तु भुक्तिरेवेति भावः । अतः परिचितलतात्यागो नाश्चर्यमित्यर्थः । अत्र मलिनात्मनामिति कृष्णाङ्गत्वस्य दुष्टचित्तत्वेन सहाभेदाध्यवसायेऽर्थान्तरन्यासस्योत्थापनात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितोऽयमिति सङ्करः ॥६१॥

टिप्पनी—अवचितेति । अत्र च्छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्काराविति टीकोक्तसङ्करेण सह पुनस्तयोः संसृष्टिः । गुणरीती पूर्ववत् ॥६१॥

বাঙ্গালা—রমণীরা যে সকল লতা হইতে ফুল তুলিয়া নিয়াছিল; ভ্রমরগণ সেই লতাগুলিকে পরিত্যাগ করিয়া কোমল পুষ্পমালাধারিণী সেই রমণীগণের উপরেই যাইয়া পদক্ষেপ করিল। কারণ, মলিনস্বভাবদের পরিচয় প্রধান নহে, (ভোগই প্রধান) ॥৬১॥

अन्वयः—श्लथ-शिरसिज-पाश-पात-भारात् इव नितरां नतिमद्भिः अंसभागैः (उपलक्षिताभिः) घन-महतां पक्ष्मणां भरेण इव मुकुलितनयनैः मुखारविन्दैः (उपलक्षिताभिः नितम्बिनीभिः तदा नितराम् अनमि) ॥६२॥

टीका—अथोत्तरसर्गे जलक्रीडावर्णनाय तदुपोद्घातत्वेनासां वनविहारोद्भवं श्रमातिरेकं सप्तभिः कुलकेन दर्शयति । श्लथेत्यादि । शिरसि जाताः शिरोरुहाः । सप्तम्याञ्च जनेर्डः हलदन्तादित्यादिना सप्तम्या अलुक् । तेषां पाशः कलापः श्लथस्य तस्य यः पातः तस्य भारादिवेति हेतूत्प्रेक्षा । न पादादौ खल्वादय इति वामनीयनिषेधेऽपि इवशब्दस्य पादादौ प्रयोगः कवेः दोदंखात् । नितरामतिशयेन । अव्ययादामुप्रत्ययः । नतिमद्भिरंसभागैरुपलक्षिताभिर्नितम्बिनीभिरिति भाविना सम्बन्धः । एवमुत्तरत्रापि योज्यम् । नतांसत्वमुत्तमस्त्रीलक्षणम् । पुनर्घनमहतां सान्द्रदीर्घाणां पक्ष्मणां भरेणेवेति पूर्ववद्धेतूत्प्रेक्षामुकुलितनयनैर्मुखारविन्दैः । अत्रोत्प्रेक्षयोः संसृष्टिः ॥६२॥

अधिकमरुणिमानमुद्वहद्भिर्विकसदशीतमरीचिरश्मिजालैः ।
परिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ॥६३॥
अवसितललितक्रियेण बाह्वोर्ललिततरेण तनीयसा युगेन ।
सरसकिसलयानुरञ्जितैर्वा करकमलैः पुनरुक्तरक्तभाभिः ॥६४॥

---

टिप्पनी—मथीति। अत्र द्वितीयपादगतस्य च्छेकानुप्रासस्यापि टीकोक्तसंसृष्टौ प्रवेशः। गुणरीती पूर्ववत् ॥६२॥

বাঙ্গালা—(বনবিহারের পরিশ্রমে) রমণীগণের কেশকলাপ খুলিয়া পড়িয়াছিল; তাহার ভারেই যেন তাহাদের স্কন্ধদেশগুলিও অবনত হইয়াছিল; আর তাহাদের নয়নের ঘন ও বৃহৎ লোমগুলির ভারেই যেন মুখকমলের নয়নগুলিও মুকুলিত হইয়াছিল ।৬২॥

अन्वयः—परिचित-परिचुम्बनाभियोगात् अपगतकुङ्कुमरेणुभिः विकसदशीतमरीचि-रश्मिजालैः अधिकम् अरुणिमानम् उद्वहद्भिः कपोलैः (उपलक्षिताभिः नितम्बिनीभिः तदा नितराम् अलसि) ॥६३॥

टीका—अधिकमिति। पुनः परिचितानां प्रणयिनां परिचुम्बनैरभियोगान्मर्दनादपगतकुङ्कुमरेणुभिः अतएव विकसन्ति वैमल्यात् प्रतिफलन्ति अशीतमरीचेः सूर्यस्य रश्मिजालानि येषु तैः। असम्बन्धे सम्बन्धोक्त्यातिशयोक्तिः अतएवाधिकमरुणिमानमुद्वहद्भिः कुङ्कुमापायेऽप्यातपलङ्घनादतिलोहितैरित्यर्थः कपोलैर्गण्डस्थलैः ॥६३॥

टिप्पनी—अधिकमिति। अत्र अधिकारुणिमोद्वहनं प्रति विकसदित्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। सम्भोगशृङ्गारो रसः, गुणरीती पूर्ववत् ॥६३॥

বাঙ্গালা—প্রিয়তমেরা বিশেষভাবে চুম্বন করিয়াছিল বলিয়া সেই সংঘর্ষে কামিনীগণের গণ্ডস্থলের কুঙ্কুমরেণুসকল পড়িয়া গিয়াছিল; তাহাতেই গণ্ডস্থলে সূর্য্যের কিরণসমূহ প্রতিবিম্বিত হইয়াছিল; সুতরাং সে গণ্ডস্থলগুলি, পূর্বাপেক্ষা অধিক রক্তবর্ণ ধারণ করিয়াছিল ॥৬৩॥

अन्वयः—अवसित-ललित-क्रियेण ललिततरेण तनीयसा बाह्वोः युगेन (उपलक्षिताभिः), तथा सरसकिसलयानुरञ्जितैः वा पुनरुक्त-रक्त-भाभिः करकमलैः [उपलक्षिताभिः नितम्बिनीभिः तदा नितराम् अलसि) ॥६४॥

टीका—अवसितेति। पुनरवसिताः श्रमेण परिसमाप्ताः ललिताः क्रियाः सुकुमारचेष्टा अपि यस्य तेन ललिततरेण मृदुतरेण तनीयसा तनुतरेण बाह्वोर्युगेन पुनः सरसैरार्द्रैः किसलयैरनुरञ्जितैर्वा अनुरञ्जनं प्रापितैरिव पुनरुक्ता द्विगुणाः रक्ता भासो येषान्तैः पुनरुक्तरक्तभाभिः। हलिसर्वेषामिति यकारलोपः। करकमलैः पाणिपङ्कजैः। अत्रेतरजनकापेक्षया पुनरुक्तरक्तत्वं स्वाभाविकमेव तत्र किसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यते। इवार्थे वाशब्दः तदुत्प्रेक्षायां प्रयुक्तः ॥६४॥

टिप्पनी—अवसितेति। अत्र चतुर्थपादे छेकानुप्रासस्येति टीकोक्तया उत्प्रेक्षया संसृष्टिः। शृङ्गाररसप्राधान्यात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥६४॥

स्मरसरभसमुरःस्थलेन पत्युर्विनिमयसङ्क्रमिताङ्गरागरागैः।
भृशमतिशयखेदसम्पदेव स्तनयुगलैरितरेतरं निषस्ने: ॥६५॥
अतनुकुचभरानतेन भूयः श्रमजनितानतिना शरीरकेण।
अनुचितगतिसादनिःसहत्वं कलभकरोरुभिरूरुभिर्दधानैः ॥६६॥

---

বাঙ্গালা—তাহাদের বাহুযুগলের আলিঙ্গন প্রভৃতি সুকুমার কার্য্যগুলি সমাপ্ত হইয়া গিয়াছিল; সুতরাং তখন সে বাহুযুগল আরও মনোহর এবং অবশ হইয়াছিল। আর তাহাদের পাণিকমলগুলি, নবপল্লবে রঞ্জিত হইয়াই যেন দ্বিগুণ রক্তবর্ণ হইয়াছিল ॥৬৪॥

अन्वयः—स्मर-सरभसं पत्युः उरःस्थलेन विनिमयसंक्रमिताङ्गरागरागैः अतिशयखेदसम्पदा इव भृशम् इतरेतरं निषस्नैः स्तनयुगलैः (उपलक्षिताभिः नितम्बिनीभिः तदा नितराम् अतमि) ॥६५॥

टीका—स्मरेति। पुनः स्मरेण सरभसं सानुरागं यथा तथा पत्युरुरःस्थलेन कर्त्रा विनिमयेन व्यतिहारेण संक्रमितोऽङ्गरागोऽनुलेपनं तेन रागो रञ्जनं येषु तैः अतिशयोऽतिशयितो यः खेदस्तस्य सम्पदा मद्दिम्नेवेत्युत्प्रेक्षा भृशमितरेतरन्निषस्नैः परस्परं संश्रितैः स्तनयुगलैः ॥६५॥

टिप्पनी—स्मरेति। अत्र च्छेकानुप्रासेन टीकोक्ता उत्प्रेक्षा संसृज्यते। सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥६५॥

বাঙ্গালা—নায়কের বক্ষঃস্থল, কামানুরাগের সহিত নায়িকাদিগের স্তনযুগলে বিনিময়ক্রমে অঙ্গরাগের রঞ্জন সঞ্চারিত করিয়া দিয়াছিল এবং সেই সকল স্তনযুগলগুলি অত্যন্ত ঘর্ম্মজলে যেন পরস্পর অত্যন্ত সংলগ্ন হইয়া গিয়াছিল ॥৬৫॥

अन्वयः—अतनु-कुच-भरानतेन भूयः श्रम-जनितानतिना शरीरकेण (उपलक्षिताभिः), अनुचित-गति-साद-निःसहत्वं दधानैः कलभकरोरुभिः ऊरुभिः (उपलक्षिताभिः नितम्बिनीभिः तदा नितराम् अतमि) ॥६६॥

टीका—अतन्विति। पुनः अतनुना महता कुचभरेणावनतेन नम्रेण प्रागेवेति भावः। भूयः पुनश्च श्रमजनिता आनतिर्यस्य तेन शरीरकेण सुकुमारशरीरेण किञ्च अनुचिता अनभ्यस्ता। अभ्यस्तेऽप्युचितं न्याय्यमिति यादवः। तया गत्या पादचारेण यः सादः कार्श्यं तेन यन्निःसहत्वम् अक्षमत्वं तद्दधानैः गन्तुमक्षमैरित्यर्थः। न सहन्त इति निःसहाः। पचाद्यजन्तेनोपसर्गस्य समासे त्वप्रत्ययः। कलभकराः करिहस्ता इवोरवो महान्तस्तैरूरुभिः सक्थिभिः। सक्थि क्लीबे पुमानूरुरित्यमरः ॥६६॥

टिप्पनी—अतन्विति। अत्र द्वितीये पादे छेकानुप्रासः, चतुर्थे तु लुप्तोपमा छेकानुप्रासश्चेति तेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६६॥

অপগতনবযাবকৈশ্চিরায় ক্ষিতিগমনেন পুনর্বিতীর্ণরাগৈঃ ।
কথমপি চরণোৎপলৈশ্চলদ্ভির্ভৃশবিনিবেশবশাৎপরস্পরস্য ॥৬৭॥
মুহুরিতি বনবিভ্রমাভিষঙ্গাদতমি তদা নিতরাং নিতম্বিনীভিঃ ।
মৃদুতরতনবোঽলসাঃ প্রকৃত্যা চিরমপি তাঃ কিমুত প্রয়াসভাজঃ ॥৬৮॥

---

**বাঙ্গালা**—রমণীগণের শরীরটী, বৃহৎ স্তনযুগলের ভারে পূর্বেই ঈষৎ অবনত ছিল, এখন আবার পরিশ্রমে বিশেষরূপে অবনত করিয়া দিয়াছিল ; আর হস্তিশুণ্ডের ন্যায় বিশাল উরুযুগল, অনভ্যস্তগমননিবন্ধন অবসাদে চলিতে অসমর্থ হইয়াছিল ॥৬৬॥

**অন্বয়ঃ**—চিরায় ক্ষিতিগমনেন অপগত-নব-যাবকৈঃ পুনঃ (ক্ষিতিগমনেন এব) বিতীর্ণরাগৈঃ পরস্পরস্য ভৃশ-বিনিবেশ-বশাৎ কথম্ অপি চলদ্ভিঃ চরণোৎপলৈঃ (উপলক্ষিতাভিঃ নিতম্বিনীভিঃ তদা নিতরাম্ অতমি ॥৬৭॥

**টীকা**—অপগতেতি। পুনশ্চিরায় চিরং ক্ষিতিগমনেনাপগতো নবযাবকো নবলাক্ষা-রাগো যেষান্তৈঃ পুনস্তেনৈব বিতীর্ণরাগৈঃ সৌকুমার্য্যাদুৎপাদিতরাগৈঃ পরস্পরস্য ভৃশবিনি-বেশবশাৎ স্থিরন্যাসবলাৎ একং স্থিরং নিবেশ্য তদবষ্টম্ভেনেতরচালনক্রমেণেত্যর্থঃ কথমপি মহতা প্রযত্নেন। কথমাদি তথাত্যন্তং যদ্গৌরবমেদস্বীরিত্যুৎপলঃ। চলদ্ভিশ্চরণো-ৎপলৈঃ ॥৬৭॥

**টিপ্পনী**—অপগতেতি। অত্র চতুর্থপদে ছেকানুপ্রাসোঽলঙ্কারঃ, গুণরীতী পূর্ববৎ ॥৬৭॥

**বাঙ্গালা**—বহুকাল যাবৎ ভূতলে গমন করায় সেই রমণীগণের চরণকমলের নূতন আল্‌তার রসগুলি মুছিয়া গিয়াছিল ; কিন্তু সেই ভূতল গমনই আবার সেই চরণকমলে রক্তিমা জন্মাইয়া দিয়াছিল ; আর দৃঢ়ভাবে পরস্পর বিন্যস্ত করায় সেই চরণকমল, অতি-কষ্টে চলিতেছিল ॥৬৭॥

**অন্বয়ঃ**—নিতম্বিনীভিঃ মুহুঃ ইতি বনবিভ্রমাভিষঙ্গাৎ তদা নিতরাম্ অতমি। মৃদুতর-তনবঃ তাঃ প্রকৃত্যা অলসাঃ, চিরম্ অপি প্রয়াসভাজঃ কিমুত ॥৬৮॥

**টীকা**—মুহুরিতি। নিতম্বিনীভিরুক্তধর্ম্মোপলক্ষিতাভিঃ স্ত্রীভির্মুহুরিত্যেবং বন-বিভ্রমাভিষঙ্গাৎ বনভ্রমণাসঙ্গাত্তদা নিতরামতমি তান্তম্। তমের্ভাবে লুঙ্। নোদা-ত্তোপদেশস্য মান্তস্যানাচমেরিতি বৃদ্ধিপ্রতিষেধঃ। যুক্তঞ্চ তদিত্যাহ। মৃদুতরতনবোঽতি-কোমলাঙ্গ্যস্তাঃ স্ত্রিয়ঃ প্রকৃত্যা অলসাঃ জডাঃ অথ চিরমপি প্রয়াসভাজশ্চেৎ কিমুত সুত-রামলসাঃ স্যুরিত্যর্থঃ। অত্রাপ্রকৃতনৈসর্গিকালস্যস্য কথনেনাগন্তুকস্য কৈমুত্যন্যায়তঃ সিদ্ধত্ববর্ণনাদর্থাপত্তিরলঙ্কারঃ, একস্য বস্তুনো ভাবাদ্যত্র বস্ত্বন্যদাপতেৎ। কৈমুত্যন্যায়তঃ সা স্যাদর্থাপত্তিরলঙ্ক্রিয়েতি লক্ষণাৎ। শ্রমশ্চাত্র সঞ্চারী বাচ্যঃ, শ্রমঃ খেদোঽধ্বরত্যোরিতি লক্ষণাৎ ॥৬৮॥

**টিপ্পনী**—মুহুরিতি। অত্র পরার্দ্ধগতকারণেন পূর্ব্বার্দ্ধগততান্তত্বরূপকার্য্যস্য সমর্থনাদর্থান্তর-

प्रथममलघुमौक्तिकाभमासीत् श्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनकुचतटाग्रपाति पश्चादथ शतशर्करतां जगाम तासाम् ॥६९॥
विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे ।
परिमलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥७०॥

---

न्यासः, द्वितीयपादे वृत्त्यनुप्रासश्छेकानुप्रासश्चेति टीकोक्तार्थापत्त्या सह तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

**বাঙ্গালা**—এই ভাবে বার বার বনবিহার করায় তৎকালে রমণীরা অত্যন্ত ক্লান্ত হইয়া পড়িয়াছিল। কারণ, নিতান্ত কোমলাঙ্গী রমণীরা স্বভাবতই অলস থাকে; তাতে আবার যদি তাহারা (কোন কারণে) অধিক কাল পরিশ্রম করে, তবে যে ক্লান্ত হইবে, সে বিষয়ে আর বক্তব্য আছে কি? ॥৬৮॥

**अन्वयः**—अथ तासां श्रमजलं प्रथमम् उज्ज्वलगण्डमण्डलेषु अलघुमौक्तिकाभम् आसीत्; पश्चात् कठिन-कुच-तटाग्रपाति (सत्) शत-शर्करतां जगाम ॥६९॥

**टीका**—अथ श्रमानुभावं स्वेदं वर्णयति । प्रथममिति । अथ तासां स्त्रीणां श्रमजलं प्रथममुज्ज्वलगण्डमण्डलेषु उज्ज्वलगण्डस्थलेषु अलघुमौक्तिकाभं स्थूलमुक्ताफलसदृशमासीत् । पश्चात्कठिनतरकुचाग्रपाति सत् अथ पतनानन्तरं शतं शर्कराः शतशर्करम् । समाहारे द्विगुरेकवचनं वा टावन्त इति नपुंसकत्वम् । तस्य भावस्तत्ता तां शतशर्करतां शतशकलत्वं जगाम । अत्रैकस्य श्रमजलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात् पर्य्यायालङ्कारभेदः क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथ वानेकम्पर्य्यायालङ्कृतिर्मतेति लक्षणात् ॥६९॥

**टिप्पनी**—प्रथममिति । अत्र द्वितीयपदे छेकानुप्रासश्चेति टीकोक्तपर्य्यायालङ्कारेण सह संसृष्टिः । गुणरीती पूर्ववत् ॥६९॥

**বাঙ্গালা**—তদনন্তর, সেই রমণীগণের ঘর্ম্মজল, প্রথমে উজ্জ্বল গণ্ডস্থলে বড় বড় মুক্তার ন্যায় উৎপন্ন হইয়াছিল; তাহার পর, সে গুলি, কঠিন স্তনের উপরে পতিত হইয়া শত শত বিন্দুতা প্রাপ্ত হইল ॥৬৯॥

**अन्वयः**—यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकम् अपि घनपुलकोदयकोमलं तथा प्रियैः प्रकामं परिमलितम् अपि उज्ज्वलम् एव (सत्) चकाशे ॥७०॥

**टीका**—श्रमेऽपि कुचमण्डलमविकृतशोभमित्याह । विपुलकमिति । यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकं पुलकरहितमपि घनपुलकोदयेन सान्द्ररोमोद्गमेन कोमलं सदिति विरोधः विपुलं विस्तृतं तदेव विपुलकमित्यविरोधः प्रियैः प्रकामम्परितो मलमस्येति परिमलं तत् कृतं परिमलितं मलिनीकृतं तथाप्युज्ज्वलं विमलमेव चकाशे इति विरोधः परिमलवत् कृतं परिमलितमित्यविरोधः । मत्वन्तात्तत्करोतीति णिचि

अविरतकुसुमावचायखेदान्निहितभुजालतयैकयोपकण्ठम् ।
विपुलतरनिरन्तरावलग्नस्तनपिहितप्रियवक्षसा ललम्बे ॥৭১॥
अभिमतमभितः कृताङ्गभङ्गा कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितं क्लमच्छलेन व्यवृणुत वेल्लितबाहुवल्लरीका ॥৭২॥

---

कर्मण्यण् आविष्टवद्भावे विभ्रमाल्लुक् । आर्षविरोधे । विरोधाभासालङ्कारयोः संसृष्टिः ॥৭০॥

**टिप्पनी**—विपुलकमिति । अत्र प्रथमार्द्धे छेकानुप्रासस्येति टीकोक्तविरोधाभासेन सह संसृष्टिः । सम्भोगशृङ्गारो रसः, मधुरवचनावयात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥৭০॥

**বাঙ্গালা**—যৌবনগর্ব্বিতা কামিনীগণের স্তনযুগল পুলকবিহীন হইয়াও ( বিস্তৃত হইয়াও), ঘন ঘন পুলকের আবির্ভাবে মনোহর হইয়া শোভা পাইয়াছিল ; আর প্রিয়তমেরা পর্য্যাপ্তরূপে মলিন (গন্ধদ্রব্যযুক্ত) করিয়া দিলেও, সে স্তনযুগল উজ্জ্বল হইয়াই শোভা পাইয়াছিল ॥৭০॥

**अन्वयः**—अविरत-कुसुमावचायखेदात् उपकण्ठं निहित-भुजालतया विपुलतर-निरन्तरावलग्न-स्तन-पिहित-प्रियवक्षसा एकया ललम्बे ॥৭১॥

**टीका**—अथैकस्याः प्रियकण्ठावलम्बने श्रमानुभावमेकेनाह । अविरतेति । अविरतो यः कुसुमानामवचायो हस्तेन लवनम् । अहस्तादाने चेः स्तेर इति घञ् । तेन यः खेदस्तस्माद्धेतोरुपकण्ठं कण्ठे । विभक्त्यर्थेऽव्ययीभावः । निहिते भुजलते यया तया । दोः प्रकोष्ठौ भुजौ बाहुर्भुजा च समर्थे इति वैजयन्ती । निरन्तरमवलग्नौ संश्लिष्टौ च यौ स्तनौ ताभ्यां पिहितं छादितम्प्रियस्य वक्षो यया तयैकया स्त्रिया ललम्बे लम्बितम् । भावे लिट् ॥৭১॥

**टिप्पनी**—अविरतेति । अत्र सम्भोगशृङ्गारो रसः, समासबाहुल्यात् ओजो गुणः, गौरी च रीतिः ॥৭১॥

**বাঙ্গালা**—অনবরত পুষ্প চয়ন করার পরিশ্রমে কোন রমণী, প্রিয়তমের গলদেশে বাহুযুগল স্থাপন করিয়া এবং স্থূল ও ঘন স্তনযুগল দ্বারা তাহার বক্ষঃস্থল আবৃত করিয়া ঝুলিতে লাগিল ॥৭১॥

**अन्वयः**—तनुः अभिमतम् अभितः उन्नतिवित्तं कुचयुगम् उन्नमय्य कृताङ्ग-भङ्गा वेल्लित-बाहु-वल्लरीका (च सती) क्लम-च्छलेन अभिलषितं व्यवृणुत ॥৭২॥

**टीका**—अथापरस्याः अङ्गभङ्गव्यपदेशमनुभावमाह, अभिमतमिति । तनुः काचित्तन्वी । वोतो गुणवचनादिति विकल्पादनीकारः । अभिमतमभितः प्रियसमीपेऽर्थः उन्नतिवित्तम् औन्नत्येन प्रतीतम् । विदेर्भावार्थाद्वित्तौ भोगप्रत्यययोरिति प्रत्ययार्थे निष्ठान्तत्वाभावनिपातः । कुचयुगमुन्नमय्य उत्तुङ्गीकृत्य कृतोऽङ्गभङ्गो गात्रविजृम्भणं यया सा तथा वेल्लिते मिथः

हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः।
कुचकलशकिशोरकौ कथञ्चित्तरलतया तरुणेन पस्पृशाते ॥७३॥

गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः।
उल्लङ्घ्योच्चैःकुचतटभुवं प्लावयन्रोमकूपान्
स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥७४॥

---

श्लेषिते बाहुवल्लर्यौ भुजलते यया सा। नद्यृतश्चेति कप्। श्रमच्छलेन श्रमापनोदकचेष्टाव्याजेनेत्यर्थः अभिलषितमालिङ्गनाद्यभिलषितं व्यञ्जयत् प्रकटितवती। व्यञ्जेर्लङ्। प्रौढेयमुन्मुक्ता च ॥७२॥

**टिप्पनी**—अभिमतमिति। अत्र छेकानुप्रासोऽलङ्कारः, पूर्ववत् रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥७२॥

**বাঙ্গালা**—অন্য কোন কৃশাঙ্গী, প্রিয়তমের সম্মুখে প্রসিদ্ধ উন্নতি-শালী স্তনযুগল উঁচু করিয়া হাই তুলিল এবং বাহুযুগল দ্বারাও বেষ্টনের আকার দেখাইয়া পরিশ্রমের ছলে আলিঙ্গনের অভিলাষ ব্যক্ত করিল ॥৭২॥

**अन्वयः**—हिम-लव-सदृशः श्रमोदबिन्दून् अपनयता किल तरुणेन तरलतया नूतनोढवध्वाः कुच-कलश-किशोरकौ पस्पृशाते ॥७३॥

**टीका**—अथ कस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वेदोद्गमं प्रकटयति, हिमेति। हिमलवसदृशो हिमकणनिभान् श्रमोदबिन्दून् स्वेदबिन्दूनित्यर्थः। मन्थोदनेत्यादिना उदकस्योदादेशः। अपनयता किल प्रमार्जतेव न तु तत्र तात्पर्यमिति भावः तरुणेन यूना नूतनोढवध्वाः कुचौ कलशाविव तौ च किशोरकाविव उल्ललनसाम्यादश्वशावाविव। अश्वशावः किशोरक इत्यमरः। तौ कुचकलशकिशोरकौ। उभयत्राप्युपमितसमासः। कथञ्चित् क्लेशेन सप्रतिषेधमेवेत्यर्थः तरलतया चपलतया उत्सुकतयेत्यर्थः पस्पृशाते स्पृष्टौ। स्पृशि कर्मणि लिट्। मुग्धेयम् ॥७३॥

**टिप्पनी**—हिमेति। अत्र हिमेत्यादौ आर्थोपमा, कुचेत्यादौ च लुप्तोपमाद्वयं छेकानुप्रासश्चेति तेषां संसृष्टिः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

**বাঙ্গালা**—কোন যুবক, নব বিবাহিত বধূটীর গাত্র হইতে হিমবিন্দুতুল্য ঘর্মজলবিন্দুগুলিকে মুছিয়া দিতে থাকিয়া অশ্বশাবকের ন্যায় উদীয়মান কুচকুম্ভ দুইটীকে চঞ্চলতাবশতঃ স্পর্শ করিল ॥৭৩॥

**अन्वयः**—युवतिसरितां स्वेदापूरः जघनपुलिने उद्रेकं गत्वा, रुद्धमध्य-प्रदेशः ऊरु-द्रुम-भुजलताः क्रामन् पूर्ण-नाभी-ह्रदान्तः उच्चैः-कुच-तट भुवम् उल्लङ्घ्य रोमकूपान् प्लावयन् (सन्) गण्डस्थलानि व्याप ॥७४॥

प्रियकरपरिमार्गाद‌ङ्गनानां यदाभूत् पुनरधिकतरं व स्वेदतोयोदयश्रीः ।
अथ वपुरभिषेक्तुं तास्तदाम्भोभिरीषुर्वनविहरणखेदम्लानमम्लानशोभाः ॥७५॥

टीका—अथ सर्वासामेव स्वेदाद्रेकं वर्णयति, गत्वेति । युवतय एव सरितस्तासां स्वेद एवाम्बुपूरः प्रथमं जघनमेव पुलिनं तत्रोद्रेकं गत्वा तत्र आवृतो मध्यप्रदेशोऽवलग्नभागः प्रवाहदेशश्च येन सः पूर्णं नाभीह्रदान्तः । रेफान्तनकारान्तं वा । पूर्णेति पुरैष्यन्तात् कर्मणि क्तः वा दान्तेत्यादिना निलुगिट् प्रतिषेधनिपातः । उच्चरुन्नतौ कुचावेव तटौ तयोर्मुखप्रदेशसमुल्लङ्घ्य रोमकूपान् रोमाणि रोमरन्ध्राणि तान्येव कूपान् प्लावयन् पूरयन् गण्डस्थलानि कपोलभागान् उन्नतभूभागांश्च प्राप । अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानां च निरूपणात्समवस्तुविषयसावयवरूपकं श्लेषानुप्राणितम् । मन्दाक्रान्ता वृत्तम् । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति लक्षणात् ॥७४॥

टिप्पनी—गत्वेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

বাঙ্গালা—যুবতিরূপ নদীসমূহের ঘর্মজলের জোয়ার, প্রথমে জঘনরূপ পুলিন-দেশে উঠিল, পরে মধ্যদেশ স্পর্শ করিল, তাহার পর উরুরূপ বৃক্ষ এবং বাহুরূপ লতাগুলিকে আক্রমণ করিল, তৎপরে নাভিরূপহ্রদ পূর্ণ করিল, তাহার পর আবার উচ্চ স্তনরূপ তীরভূমি লঙ্ঘন করিয়া এবং রোম-কূপ সকল প্লাবিত করিয়া, গণ্ডস্থলগুলিকেও যাইয়া ব্যাপ্ত করিল ॥৭৪॥

अन्वयः—यदा अङ्गनानां प्रिय-कर-परिमार्गात् स्वेदतोयोदय-श्रीः पुनः अधिकतरा एव अभूत्; तदा अम्लानशोभाः ताः वन-विहरण-खेद-म्लानं वपुः अथ अम्भोभिः अभिषेक्तुम् ईषुः ॥७५॥

टीका—एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जलावगाहेच्छां समासाद्यति, प्रियेति । यदा अङ्गनानां प्रियकरपरिमार्गात् प्रियकरस्पर्शात् । मृजेर्घञ्प्रत्ययः । स्वेदतोयोदयश्रीः स्वेदोद्गमसम्पत् पुनर्भूयोऽप्यधिकतरैवाभूत् तदा अम्लानशोभाः अक्षीणकान्तयः वपुषि म्लानेऽपीति भावः ता अङ्गना वनविहरणखेदेन म्लानम् । म्लायतेः कर्तरि क्तः, संयोगादेरातोधातोर्यण्वत इति निष्ठानत्वम् । वपुरङ्गम् अथ कात्स्न्र्येन । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । अम्भोभिरभिषेक्तुम् ईषुः इच्छन्ति स्म । इषेर्लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थं समर्थं हेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनी वृत्तम् ॥७५॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघ-
काव्यव्याख्याने सर्वङ्कषाख्ये सप्तमः सर्गः ॥७॥

टिप्पनी—प्रियेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७५॥

इति श्रीहरिदास सिद्धान्तवागीश-भट्टाचार्यविरचितायां
शिशुपालवधटीप्पन्यां माधुरीसमाख्यायां
सप्तमः सर्गः ॥७॥

ইতি শ্রীমাঘকৃতৌ শিশুপালবধে মহাকাব্যে
বনবিহারো নাম সপ্তমঃ সর্গঃ॥৭॥

—০—

বাঙ্গালা—ঘর্ম্মজলের উৎপত্তি বশতঃ রমণীগণের শরীরের শোভা, যে সময়ে প্রিয়তমের করস্পর্শে আরও অধিকতর হইয়াছিল; সেই সময়ে পূর্ণকান্তি সেই রমণীরা, বনবিহারের পরিশ্রমে ক্লান্ত আপনাদের শরীরকে জল দ্বারা সম্পূর্ণরূপে সিক্ত করিতে ইচ্ছা করিয়াছিল॥৭৫॥

—০—

## अष्टमः सर्गः ।

—:०:—

आयासादलघुतरस्तनैः स्तनद्भिः श्रान्तानामविकचलोचनारविन्दैः ।
अभ्यम्भः कथमपि योषितां समूहैस्तैरुर्वीनिहितचलत्पदं प्रचेले ॥१॥
यान्तीनां सममसितभ्रुवां नतत्वादंसानां महति नितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतया मिथो नितम्बैः सम्बाधं बृहदपि तद्बभूव वर्त्म ॥२॥

---

अन्वयः—अलघुतरस्तनैः स्तनद्भिः अविकचलोचनारविन्दैः आयासात् श्रान्तानां योषितां तैः समूहैः उर्वीनिहितचलत्पदम् अभ्यम्भः कथमपि प्रचेले ॥१॥

टीका—अथ वपुरभिषेक्तुन्तास्तदाम्भोभिरीषुरित्युक्तं तदेव वर्णयितुमारभते, आयासादिति। अलघुतरस्तनैः पृथुतरकुचैरिति सान्द्राहेतूक्तिः। स्तनद्भिर्भृशाभिः श्वसद्भिर्वा शब्दायमानैः। स्तन शब्द इति धातोर्लटः शत्रादेशः। अविकचलोचनारविन्दैः अर्धनिमीलिताक्षिपद्मैः आयासाद्वनविहारखेदात् श्रान्तानां क्लान्तानां योषितान्तैः समूहैः कर्तृभिः उर्व्यां निहितानि निक्षिप्तानि। डुधाञ् धारणे इति धातोः कर्मणि क्तः। तथैव चलन्ति पदानि यस्मिन् कर्मणि तद्यथा तथा उत्क्षेपणाशक्त्या भुवि बलादाकृष्यमाणचरणमित्यर्थः अभ्यम्भोऽम्भः प्रति कथमपि प्रचेले प्रचलितम्। भावे लिट्। स्वभावोक्तिरलङ्कारः। स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति लक्षणात्। अस्मिन् सर्गे प्रहर्षिणी वृत्तम्। म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥१॥

टिप्पनी—आयासादिति। अत्र छेकानुप्रासस्य शब्दालङ्कार इति टीकोक्तस्वभावोक्त्या सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

বাঙ্গালা—বিশালস্তনী ও মুদ্রিত নয়না সেই রমণীরা বনবিহারের পরিশ্রমে ক্লান্ত হইয়া, ভূতলে পা রাখিয়া টানিয়া টানিয়া, কোন রকমে জলাশয়ের প্রতি চলিল ॥১॥

अन्वयः—समं यान्तीनाम् असितभ्रुवाम् अंसानां नतत्वात् नितान्तं महति अन्तरे (सत्यपि), विपुलतया मिथः संसक्तैः नितम्बैः बृहत् अपि तत् वर्त्म सम्बाधं बभूव ॥२॥

टीका—यान्तीनामिति। समम्युगपद्गच्छन्तीनाम्। आच्छीनद्योर्नुममिति वैकल्पिको नुमागमः। असितभ्रुवां स्त्रीणामंसानान्नतत्वाद्धेतोर्नितान्तं महत्यन्तरे अवकाशे सत्यपि विपुलतया हेतुना मिथः संसक्तैरन्योन्यश्लिष्टैर्नितम्बैर्बृहद्विस्तृतमपि तद्वर्त्म सम्बाध्यत इति सम्बाधः सङ्कटम्। सङ्कटं ना तु सम्बाध इत्यमरः। घञन्तस्यापि विशेष्य-

नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः साशङ्कं मुहुरपि कौतुकात्करैस्ताः ।
पस्पर्श क्षणमनिलाकुलीकृतानां शाखानामतुहिनरश्मिरन्तरालैः ॥३॥

एकस्यास्तपनकरैः करालितायाः बिभ्राणः सपदि सितोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्रीरागत्य प्रियमिव चन्द्रमाश्चकार ॥४॥

---

लिङ्गत्वं सम्बाधमनुवर्त्तत इति भाष्यकारादिप्रयोगादिष्यते। बभूव। नतांसत्वनितम्बवैपुल्योक्त्या सौन्दर्य्यातिशय उक्तः। असम्बाधेऽपि सम्बाधाभिधानादतिशयोक्तिः ॥२॥

टिप्पनी—यान्तीनामिति। अत्र वर्गान्तवर्णसंयोगबाहुल्यात् माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—সেই রমণীরা শ্রেণীক্রমে যাইতেছিল, তাহাদের স্কন্ধদেশ অবনত থাকায় সেই দেশে গুরুতর ফাঁক থাকিলেও, বিশাল নিতম্ব সকল পরস্পর সংলগ্ন হওয়ায়, সেই বৃহৎ পথটীও একেবারে পূর্ণ হইয়া গিয়াছিল ॥২॥

अन्वयः—अतुहिनरश्मिः करैः क्षणम् अनिलाकुलीकृतानां शाखानाम् अन्तरालैः कौतुकात् (इव) नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः ताः साशङ्कं मुहुः अपि पस्पर्श ॥३॥

टीका—नीरन्ध्रेति। नीरन्ध्रैः सान्द्रैर्द्रुमैः शिशिरां भुवं व्रजन्तीर्गच्छन्तीः ताः स्त्रीः अतुहिनरश्मिरुष्णांशुः क्षणमनिलेनाकुलीकृतानां चालितानां शाखानामन्तरालैर्नीरन्ध्रत्वेऽपि मुहुरनिलचालनजनितैरवकाशैर्मुहुः कौतुकादौत्सुक्यादिव साशङ्कम्परदारत्वात् सभयमित्यर्थः करैः पस्पर्श स्पृष्टवान्। अत्र चलच्छाखाहेतुकस्य तपनकरस्पर्शस्यौत्सुक्यहेतुकत्वोत्प्रेक्षणाद् गुणहेतूत्प्रेक्षा ॥३॥

टिप्पनी—नीरन्ध्रेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

বাঙ্গালা—ঘন ঘন বৃক্ষের ছায়ায় সেই স্থানটী শীতল ছিল; রমণীরা সেই স্থান দিয়া যাইতেছিল; এদিকে বায়ু ক্ষণে ক্ষণে সেই বৃক্ষগুলির শাখাগুলিকে সঞ্চালিত করিতেছিল; তাহাতে শাখাগুলির ভিতরে ফাঁক হইতেছিল; সূর্য্য কৌতুকবশতই যেন সেই ফাঁক দিয়া, কর দ্বারা সেই রমণীদিগকে আশঙ্কার সহিত স্পর্শ করিতেছিলেন ॥৩॥

अन्वयः—वदनसरोजनिर्जितश्रीः चन्द्रमाः सेवायै आगत्य तपनकरैः करालितायाः एकस्याः सितोष्णवारणत्वं बिभ्राणः (सन्) सपदि प्रियं चकार इव ॥४॥

टीका—अथ कस्याश्चिद् वृत्तं श्वेतातपत्रस्य चन्द्रत्वेनोत्प्रेक्षते, एकस्या इति। वदनसरोजेन स्त्रीमुखपङ्कजेन निर्जितश्रीश्चन्द्रमाः एतेन वदनसरोजस्य चन्द्रविजयात्सरोजान्तरवैलक्षण्यं चन्द्रस्य निकृष्टत्वञ्चोक्तम्। अतएव सेवायै तत्सेवनार्थम् आगत्य तपनकरैः करालितायाः शोषितायाः पीड़िताया इत्यर्थः। करालो भीषणेऽन्यवदिति विश्वः। एतेन सेवाव काशो दर्शितः। एकस्याः कस्याश्चिदङ्गनायाः सपदि आतपत्रे एव सितोष्णवारः

স্বং রাগাদুপরি বিতন্বতোত্তরীয়ং কান্তেন প্রতিপদবারিতাতপায়াঃ।
সচ্ছত্রাদপরবিলাসিনীসমূহাচ্ছায়াসীদধিকতরা তদাপরস্যাঃ ॥৫॥
সংস্পর্শপ্রভবসুখোপচীয়মানে সর্বাঙ্গে করতললগ্নবল্লভায়াঃ।
কৌশেয়ং ব্রজদপি গাঢ়তামজস্রং সস্রংসে বিগলিতনীবি নীরজাক্ষ্যাঃ ॥৬॥

---

ধাস্ত্ব স্বয়মেব শ্বেতাতপত্রত্বমভ্যুপগতঃ সন্ প্রিয়ঞ্চকারেব ইতি ক্রিয়াস্বরূপোৎপ্রেক্ষা। পরাজিতঃ কয়াচিৎ সেবনয়া শত্রুস্তুষ্টিসন্তোষমুপার্জয়তীতি ভাবঃ ॥৪॥

টিপ্পনী—অন্যস্যা ইতি। অত্র প্রথমপাদে ছেকানুপ্রাসস্যেতি টীকোক্তয়া উৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

বাঙ্গালা—কোন রমণীর মুখপদ্ম চন্দ্রের শোভাকে জয় করিয়াছিল; তাই চন্দ্র পরিচর্য্যা করিবার জন্য তৎক্ষণাৎ আসিয়া, সূর্য্যকিরণ ক্লান্ত সেই রমণীর শ্বেত ছত্র হইয়া, তাহার যেন প্রীতিকর কার্য্য করিয়াছিল ॥৪॥

অন্বয়ঃ—রাগাৎ উপরি স্বম্ উত্তরীয়ং বিতন্বতা কান্তেন প্রতিপদ-বারিতাতপায়াঃ পরস্যাঃ সচ্ছত্রাৎ অপরবিলাসিনীসমূহাৎ অধিকতরা ছায়া তদা আসীৎ ॥৫॥

টীকা—স্বমিতি। রাগাদ্ধেতোরুপরি প্রিয়ায়া মূর্দ্ধনি স্বং স্বকীয়মুত্তরীয়ং বিতন্বতা বিস্তারয়তা কান্তেন প্রিয়েণ প্রতিপদম্পদে পদে বারিতঃ আতপো যস্যাঃ তস্যাঃ অপরস্যাঃ কস্যাশ্চিদঙ্গনায়াঃ সচ্ছত্রাৎ ছত্রযুক্তাদপরবিলাসিনীসমূহাৎ সকাশাৎ। পঞ্চমীবিভক্তে ইতি পঞ্চমী। অধিকতরা ছায়া অনাতপঃ কান্তিশ্চ তদা আসীৎ। ছত্রচ্ছায়াতোঽপি কান্তস্বহস্তধৃতোত্তরীয়চ্ছায়ৈবানন্যসাধারণী জ্যায়সী মুখকান্তিরপি তস্যা এব ভূয়সীতি ভাবঃ। ছায়া ত্বনাতপে কান্তাবিত্যমরঃ। এতেন সচ্ছত্রাদচ্ছত্রস্যাধিকচ্ছায়েতি বিরোধোঽপি নিরস্ত ইতি বিরোধাভাসোঽলঙ্কারঃ ॥৫॥

টিপ্পনী—স্বমিতি। অত্র সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫॥

বাঙ্গালা—কোন পুরুষ, অনুরাগ বশতঃ আপন প্রিয়তমার মস্তকের উপরে নিজের উত্তরীয় বস্ত্র বিস্তৃত করিয়া ধরিয়া, তাহার রৌদ্র নিবারণ করিয়াছিল; তাহাতে তখন ছত্রযুক্ত অন্যান্য রমণী অপেক্ষা সেই রমণীর ছায়া অধিকতর হইয়াছিল ॥৫॥

অন্বয়ঃ—করতল-লগ্ন-বল্লভায়াঃ নীরজাক্ষ্যাঃ সর্বাঙ্গে সংস্পর্শপ্রভব-সুখোপচীয়মানে (সতি), গাঢ়তাং ব্রজৎ অপি বিগলিতনীবি কৌশেয়ম্ অজস্রং সস্রংসে ॥৬॥

টীকা—সংস্পর্শেতি। করতলে লগ্নো বল্লভো যস্যাস্তস্যাঃ স্বহস্তেন তদ্ধস্তং গৃহীত্বা গচ্ছন্ত্যা ইত্যর্থঃ। অতএব নীরজাক্ষ্যাঃ সর্বাঙ্গে সংস্পর্শপ্রভবেণ প্রিয়াঙ্গসঙ্গপ্রভবেণ সুখেনোপচীয়মানে পোষঙ্গমিতে সতি। অতএব গাঢ়তাং দৃঢ়ত্বং ব্রজদপি বিগলিতনীবি সুখপারবশ্যাদ্বিশ্লিষ্টগ্রন্থি কৌশেয়ং দুকূলম্ অজস্রং সস্রংসে স্রস্তম্। ঘণ্টা দৃষ্টা চর্চিতবোলা চ ॥৬॥

गच्छन्तीरलसमवेक्ष्य विस्मयिन्यस्तास्तन्वीर्न विदधिरे गतानि हंस्यः।
बुद्ध्वा वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव ॥७॥
श्रोणीभिर्जितपुलिनानि माधवीनामारोहैर्निविडबृहन्नितम्बबिम्बैः।
पाषाणस्खलनविलोलमाशु नूनं वैलक्ष्याद्ययुरवरोधनानि सिन्धोः ॥८॥

---

टिप्पनी—वसन्तेति। अत्र गाढ़तां व्रजदपि श्लथं इति विरोधाभासोऽलङ्कारः। वृत्तादिकं पूर्ववत् ॥६॥

বাঙ্গালা—পদ্মনয়না কোন রমণী, প্রিয়তমের হাত ধরাধরি করিয়া যাইতেছিল; তখন প্রিয়তমের অঙ্গসংস্পর্শে তাহার সমস্ত অঙ্গ ফুলিয়া উঠিলে, পরিধানের বস্ত্রখানি দৃঢ়তা প্রাপ্ত হইলেও, কটির গ্রন্থি খুলিয়া গিয়াছিল বলিয়া অনবরত পড়িয়া যাইতে লাগিল ॥৬॥

अन्वयः—हंस्यः अलसं गच्छन्तीः ताः तन्वीः अवेक्ष्य विस्मयिन्यः (सत्यः) गतानि न विदधिरे। स्वगुणम् अपरेण जितं बुद्ध्वा कः एव वा अपत्रपः कामम् आविष्कुर्वीत ॥७॥

टीका—गच्छन्तीरिति। हंस्यो हंसाङ्गनाः अलसम्मन्दं गच्छन्तीस्तास्तन्वीः स्त्रीरवेक्ष्य विस्मयिन्यो गतिसौष्ठवाद्विस्मयवत्यः सत्यो गतानि स्वयं लीलागमनानि न विदधिरे न चक्रुः लज्जयेति भावः। तथाहि, परेण जितं स्वगुणं बुद्ध्वा वा बुद्ध्वापीत्यर्थः। क एव को वा अपत्रपः सन् कामम् आविष्कुर्वीत प्रकाशयेत्। न कश्चिदपीत्यर्थः। इदुदुपधस्य चाप्रत्यय-स्येति विसर्जनीयस्य षत्वम्। अत्र तिरश्चां विवेकित्वातिशयोक्त्या गतिकरणनिषेधसमर्थ-नार्थोऽयमर्थान्तरन्यासः ॥७॥

टिप्पनी—गच्छन्तीरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७॥

বাঙ্গালা—সেই কৃশাঙ্গী মহিলারা ধীরে ধীরে গমন করিতেছিল ইহা দেখিয়া হংসীরা বিস্ময়াপন্ন হইয়া গমন করিয়াছিল না। কারণ, নিজের গুণ অন্যে জয় করিয়াছে ইহা জানিয়া, কোন্ নির্লজ্জ ব্যক্তি ইচ্ছানুসারে সেই গুণ প্রকাশ করিয়া থাকে ॥৭॥

अन्वयः—श्रोणीभिः निविड-बृहन्नितम्ब-बिम्बैः माधवीनाम् आरोहैः जितपुलिनानि सिन्धोः अवरोधनानि वैलक्ष्यात् पाषाण-स्खलन-विलोलं नूनम् आशु ययुः ॥८॥

टीका—श्रोणीभिरिति। श्रोणीभिः श्रोणीभागैः निविडा बृहन्तश्च नितम्बबिम्बाः कटि-पश्चाद्भागा येषान्तैः माधवस्येमाः माधव्यः तासां वृष्णिवधूनाम् आरोहैः नितम्बैः कटिपुर-भागैः जघनैः जितपुलिनानि जितसैकतानि सिन्धोरवरोधनानि समुद्रमहिष्यो नद्य इत्यर्थः। वैलक्ष्यात् पराजयकृतमनःसङ्कोचाद्धेतोः पाषाणेषु स्खलनेनाभिघातेन विलोलं यथा तथा आशु ययुः अगुः नूनम्। नदीनां स्वाभाविकस्य पाषाणस्खलितस्य गतेः वैलक्ष्य-हेतुकत्वोत्प्रेक्षणात् गुणहेतूत्प्रेक्षा ॥८॥

टिप्पनी—श्रोणीभिरिति। अत्र माधुर्यं गुणः, वैदर्भी च रीतिः ॥८॥

বাঙ্গালা—কৃষ্ণবনিতাগণের নিতম্বমণ্ডল সকল, ঘন ও বৃহৎ ছিল এবং জঘনদেশ-

मुक्ताभिः सलिलरयात्तशुक्तिपेशीमुक्ताभिः कृतरुचि सैकतं नदीनाम् ।
स्त्रीलोकः परिकलयाञ्चकार तुल्यं पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥९॥
आघ्राय श्रमजमनिन्द्यगन्धबन्धुं निश्वासश्वसनमसक्तमङ्गनानाम् ।
आरण्याः सुमनस ईषिरे न भृङ्गैरौचित्यं गणयति को विशेषकामः ॥१०॥

---

গুলিও মনোহর ছিল; তাহাতে নদীর পুলিনগুলি পরাজিত হইয়াছিল; সেইজন্য নদীগুলি লজ্জাবশতই যেন পাষাণে প্রতিহত হইয়া চঞ্চলভাবে তাড়াতাড়ি গমন করিয়াছিল ॥৮॥

अन्वयः—स्त्रीलोकः सलिलरयात्तशुक्तिपेशीमुक्ताभिः मुक्ताभिः कृतरुचि नदीनां सैकतं विगलितहारचारुभिः स्वैः पल्यङ्कैः तुल्यं परिकलयाञ्चकार ॥९॥

टीका—मुक्ताभिरिति। स्त्रीलोकः स्त्रीजनः कर्त्ता। सलिलरयैरात्ता लूनाः शुक्तयो मुक्तास्फोटास्त एव पेश्यः कोशाः पुटा इति यावत्। मुक्तास्फोटः स्त्रियां शुक्तिरिति, पेशी कोशो द्विहीने इति चामरः। ताभिर्मुक्ताभिर्विमुक्ताभिः मुक्ताभिर्मौक्तिकैः। अथ मौक्तिकं मुक्तेत्यमरः। कृतरुचि कृतशोभं नदीनां सिकतामयं सैकतं पुलिनम्। तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः। सिकताशर्कराभ्याञ्चेत्यण् प्रत्ययः। विगलितैर्विशीर्णैर्हारैः चारुभिः स्वैः पल्यङ्कैः शयनैः। शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समा इत्यमरः। तुल्यं सदृशं परिकलयाञ्चकार मेने। पूर्णोपमेयम् ॥९॥

टिप्पनी—स्त्रीलोक इति। अत्र "पूर्णोपमेयम्" इति मल्लिनाथः। सर्वावयवसादृश्यसत्त्वात् पूर्णाङ्गी उपमेत्यर्थः; न तु दर्पणलक्षिता पूर्णोपमा, सामान्यधर्म्माभावात्। तेन दर्पणमते आर्थोपमा आयासेनैव संलभ्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

বাঙ্গালা—জলের বেগে ঝিনুকগুলিকে ফাঁক করিয়া দিয়াছিল; সুতরাং মুক্তাসকল তাহা হইতে বাহির হইয়া নদীর পুলিনদেশের শোভা জন্মাইয়াছিল; এদিকে হার ছিঁড়িয়া যাইয়া তাহার মুক্তাতেও আপনাদের পর্য্যঙ্কের শোভা জন্মাইয়া থাকে; সুতরাং সেই দুইকেই স্ত্রীলোকেরা সমান মনে করিয়াছিল ॥৯॥

अन्वयः—भृङ्गैः श्रमजम् अनिन्द्यगन्धबन्धुम् अङ्गनानां निःश्वासश्वसनम् असक्तम् आघ्राय आरण्याः सुमनसः न ईषिरे। विशेषकामः कः औचित्यं गणयति ॥१०॥

टीका—आघ्रायेति। भृङ्गैः कर्तृभिः श्रमजमध्वश्रमोत्थम् अनिन्द्यगन्धस्य श्लाघ्यगन्धस्य बन्धुं सहचरं तद्वन्तमित्यर्थः। अङ्गनानां निःश्वासश्वसनं निश्वासमारुतम् असक्तमप्रतिबद्धम् आघ्राय अरण्ये भवाः आरण्याः सुमनसः पुष्पाणि नेषिरे नेष्टाः। इषु इच्छायां कर्मणि लिट्। अनुचितोऽयमकाण्डे परिचितपरित्याग इत्याह। विशेषं कामयते इति विशेषकामः। शीलिकामिभक्ष्याचरिभ्यो ण इति णप्रत्ययः। क औचित्यङ्गणयति न कोऽपीत्यर्थः। अर्थान्तरन्यासः ॥१०॥

আয়ান্ত্যাং নিজযুবতৌ বনাৎ সশঙ্কং বর্হাণামপরশিখণ্ডিনীং ভরেণ।
আলোক্য ব্যবদধতং পুরো ময়ূরং কামিন্যঃ অদধুরনার্জবং নরেষু ॥১১॥
আলাপৈ স্তুলিতরবাণি মাধবীনাং মাধুর্য্যাদমলপতত্রিণাং কুলানি।
অন্তর্দ্ধামুপযযুরুৎপলাবলীষু প্রাদুঃষ্যাৎ ক ইব জিতঃ পুরঃ পরেণ ॥১২॥

---

টিপ্পনী—আঘ্রায়েতি। অত্র ছেকানুপ্রাসস্য শব্দালঙ্কার ইতি টীকোক্তার্থান্তরন্যাসেন সহ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥১০॥

বাঙ্গালা—পরিশ্রমবশতঃ স্ত্রীলোকদিগের নিঃশ্বাসবায়ু নির্গত হইতেছিল এবং তাহার মনোহর গন্ধ ছিল ; ভ্রমরগণ অবাধে সেই নিঃশ্বাসবায়ুর আঘ্রাণ করিয়া, আর বন্য পুষ্পের আঘ্রাণ লইতে ইচ্ছা করিয়াছিল না। কারণ, বিশেষ লাভের অভিলাষী কোন্ ব্যক্তি ন্যায্যের বিবেচনা করে ? ॥১০॥

অন্বয়ঃ—নিজযুবতী বনাৎ আয়ান্ত্যাং (সত্যাং) বর্হাণাং ভরেণ সশঙ্কম্ অপরশিখণ্ডিনীং ব্যবদধতং ময়ূরং পুরঃ আলোক্য কামিন্যঃ নরেষু অনার্জবং অদধুঃ ॥১১॥

টীকা—আয়ান্ত্যামিতি। নিজযুবতৌ বনাদায়ান্ত্যামাগচ্ছন্ত্যাং সত্যাং সশঙ্কং সভয়ম্ অপরশিখণ্ডিনীং জারিণীং বর্হাণাং ভরেণ ব্যবদধতচ্ছাদয়ন্তং ময়ূরং পুর আলোক্য কামিন্যঃ প্রিয়েষ্বনার্জবং কৌটিল্যং অত্ অধুর্বিশ্বস্তবত্যঃ কুটিলাঃ পুরুষা ইতি নিশ্চিক্যুরিত্যর্থঃ। দধাতের্লুঙি গাতিস্থেত্যাদিনা সিচো লুক্ আত ইতি ঝের্জুসাদেশঃ। অদন্তরো-রুপসর্গবদ্বৃত্তিরিষ্যত ইতি অচ্ছন্দস্য ধাতোঃ প্রাক্ প্রয়োগঃ ॥১১॥

টিপ্পনী—আয়ান্ত্যামিতি। অত্র অনার্জবশ্রদ্ধা প্রতি তাদৃশময়ূরালোকনং হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১১॥

বাঙ্গালা—নিজের প্রিয়তমা ময়ূরী বন হইতে আসিতে লাগিলে, ময়ূর সশঙ্কভাবে পুচ্ছ দ্বারা অন্যময়ূরীকে আচ্ছাদন করিল ; সম্মুখে এই ঘটনা দেখিয়া স্ত্রীলোকগণ এইরূপ বিশ্বাস করিল যে, পুরুষজাতিতেই কুটিলতা থাকে ॥১১॥

অন্বয়ঃ—মাধবীনাম্ আলাপৈঃ মাধুর্য্যাৎ তুলিতরবাণি অমলপতত্রিণাং কুলানি উৎপলাবলীষু অন্তর্ধাম্ উপযযুঃ। পরেণ জিতঃ কঃ ইব (তস্য) পুরঃ প্রাদুঃ ষ্যাৎ ॥১২॥

টীকা—আলাপৈরিতি। মাধবীনাং মধুবধূনাম্ আলাপৈঃ কণ্ঠৈঃ মাধুর্য্যাদ্ধেতোঃ স্তুলিতরবাণি তিরস্কৃতরুতানি অমলপতত্রিণাং হংসানাং কুলানি উৎপলাবলীষ্বন্তর্দ্ধাম্। অন্তঃশব্দস্যাঙ্কিবিধিণত্বেষূপসর্গত্বং বাচ্যমিতি অন্তঃশব্দস্যোপসর্গত্বাদাতশ্চোপসর্গে ইত্যঙ্ প্রত্যয়ঃ। উপযযুঃ। যুক্তং চৈতদিত্যাহ। তথাহি, পরেণ জিতঃ ক ইবশব্দো বাক্যালঙ্কারে পুরো জেতুরগ্রে প্রাদুঃ ষ্যাৎ প্রাদুর্ভবেৎ। উপসর্গপ্রাদুর্ভ্যামস্তির্য্যচপর ইতি ষত্বম্। অর্থান্তরন্যাসঃ ॥১২॥

मुग्धायाः स्मरललितेषु चक्रवाक्या निःशङ्कं दयिततमेन चुम्बितायाः ।
प्राणेशानभि विदधुर्विधूतहस्ताः शीत्कारं समुचितमुत्तरं तरुण्यः ॥१३॥
उत्क्षिप्तस्फुटितसरोरुहार्घ्यमुच्चैः सस्नेहं विहगरुतैरिवालपन्ती ।
नारीणामथ सरसी सफेनहासा प्रत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥१४॥

---

टिप्पनी—आलापैरिति । अत्र छेकानुप्रासस्य शब्दालङ्कार इति टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—কৃষ্ণবধূগণের মধুর কণ্ঠরবে হংসগণের রব তিরস্কৃত হইয়াছিল; তাই হংসগণ পদ্মশ্রেণীর ভিতরে যাইয়া অন্তর্দ্ধান পাইয়াছিল। কারণ, অন্যকর্ত্তৃক বিজিত কোন্ ব্যক্তি, সেই জেতার সম্মুখে আবির্ভূত হইয়া থাকে ॥১২॥

अन्वयः—तरुण्यः विधूतहस्ताः (सत्यः) दयिततमेन निःशङ्कं चुम्बितायाः स्मरललितेषु मुग्धायाः चक्रवाक्याः समुचितं शीत्कारम् उत्तरं विदधुः ॥१३॥

टीका—मुग्धाया इति । दयिततमेन निःशङ्कं निर्विचारं चुम्बितायाः दृष्टायाः स्मरललितेषु चुम्बनाद्यनन्तरकृत्येषु शीत्कारादिकामचेष्टितेषु मुग्धाया मूढायाः चक्रवाक्याः समुचितं योग्यं शीत्कारं शीत्काररूपम् उत्तरं कृत्यं तरुण्यः स्वयं प्राणेशान् अभि विधूतहस्ताः सत्यो विदधुः तादात्म्यभावनया स्वयं दष्टा इव शीत्कृर्वन्ति शीत्कारासम्बन्धे तत्सम्बन्धा-तिशयोक्त्या तत्रास्याः सुद्दीपकमासीदित्युक्तम् ॥१३॥

टिप्पनी—मुग्धाया इति । अत्र छेकानुप्रासस्यापि टीकोक्तातिशयोक्त्या सह तस्य संसृष्टिः । तिर्यग्जातिगतत्वात् सम्भोगशृङ्गाररसाभासः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—চক্রবাক নিঃশঙ্কভাবে চক্রবাকীকে চুম্বন করিতেছিল; কিন্তু সে চক্রবাকী তৎপরকর্ত্তব্য কামকেলিতে অনভিজ্ঞ ছিল; তাই যুবতিরা হস্ত কম্পিত করিয়া সেই চক্রবাকীর উপযুক্ত শীৎকাররূপ উত্তর দিল ॥১৩॥

अन्वयः—अथ उत्क्षिप्त-स्फुटित-सरोरुह-अर्घ्यम् उच्चैः विहगरुतैः सस्नेहम् आलपन्ती इव (स्थिता) सफेनहासा सरसी ऊर्मिहस्तैः प्रीत्या इव नारीणां पाद्यं व्यतनुत ॥१४॥

टीका—उत्क्षिप्तेति । अथानन्तरमुत्क्षिप्तं स्फुटितसरोरुहं विकचारविन्दमेवार्घ्यं-मर्घ्यद्रव्यं यस्मिन् तत्तथा सस्नेहं विहगरुतैरालपन्ती स्वागतादिवचनं व्याहरन्तीव स्थिता इत्युत्प्रेक्षा । फेन इव हासस्तेन सहिता सफेनहासा स्मितपूर्वाभिभाषिणीत्यर्थः । सरसी पुष्करिणी नारीणामूर्मिभिरेव हस्तैः पाद्यम्पादोदकम् । पादार्घाभ्यां चेति यत्प्रत्ययः प्रीत्येवेत्युत्प्रेक्षा व्यतनुत रूपकानुप्राणितोत्प्रेक्षाद्वयस्य सापेक्षत्वात् संसृष्टिः ॥१४॥

टिप्पनी—उत्क्षिप्तेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—তদনন্তর সরোবর, আনন্দবশতই যেন ফেনরূপ হাস্য করিয়া, এবং পক্ষিগণের উচ্চ রবে যেন স্বাগত জিজ্ঞাসা করিয়া, প্রস্ফুটিত পদ্মের অর্ঘ্য নিক্ষেপ করিয়া, পরে তরঙ্গরূপ হস্তদ্বারা সেই নারীদিগকে যেন পাদ্য দান করিল ॥১৪॥

নিত্যায়া নিজবসতের্নিরাসিরে যদ্রাগেণ শ্রিয়মরবিন্দতঃ করাগ্রৈঃ।
ব্যক্তত্বং নিয়তমনেন নিন্যুরস্যাঃ সাপত্ন্যং ক্ষিতিসুতবিদ্বিষো মহিষ্যঃ ॥১৫॥
আস্কন্দন্ কথমপি যোষিতো ন যাবদ্ভীমত্যঃ প্রিয়করধার্য্যমাণহস্তাঃ।
ঔৎসুক্যাত্ত্বরিতমমূস্তদম্বু তাবৎসংক্রান্তপ্রতিমতয়া দধাবিবান্তঃ ॥১৬॥
তাঃ পূর্ব্বং সচকিতমাগময্য গাধং জ্ঞাত্বাথো মৃদুপদমন্তরাবিশন্ত্যঃ।
কামিন্যো মন ইব কামিনঃ স্বরাগৈরঙ্গৈস্তজ্জলমনুরঞ্জয়াম্বভূবুঃ ॥১৭॥

---

অন্বয়ঃ—ক্ষিতিসুতবিদ্বিষঃ মহিষ্যঃ করাগ্রৈঃ রাগেণ নিত্যায়াঃ নিজবসতেঃ অরবিন্দতঃ শ্রিয়ং যৎ নিরাসিরে; অনেন অস্যাঃ সাপত্ন্যং ব্যক্তত্বং নিন্যুঃ ॥১৫॥

টীকা—নিত্যায়া ইতি। ক্ষিতিসুতবিদ্বিষো নরকদ্বিষো হরেঃ মহিষ্যঃ করাগ্রৈঃ পাণি-পল্লবৈঃ কর্ত্তৃভিঃ রাগেণ রক্তবর্ণেন ইচ্ছয়া চ শ্রিয়ং শোভাং রমাং চ নিত্যায়াঃ সদাতন্যাঃ নিজ-বসতেঃ স্ববাসাদরবিন্দতোঽরবিন্দান্নিরাসিরে নিষ্কাশয়াঞ্চক্রুঃ নিরস্তবত্য ইতি যাবৎ। উপ-সর্গাদস্যত্যূহ্যোর্ব্বা বচনমিতি বিকল্পাদাত্মনেপদম্। অনেন নিরাসেনাস্যাঃ শ্রিয়ঃ সাপত্ন্যং সপত্নীত্বম্। ব্রাহ্মণাদিত্বাৎ ষ্যঞ্ প্রত্যয়ঃ। ব্যক্তত্বং নিন্যুর্ব্যক্তীচক্রুরিত্যর্থঃ। অত্র শ্রীশব্দেন রমাশোভয়োরভেদাধ্যবসায়েন শ্রীনিবাসস্য সাপত্ন্যব্যক্তীকরণার্থত্বোৎপ্রেক্ষণাৎ শ্লেষপ্রতিভোত্থাপিতাতিশয়োক্ত্যনুপ্রাণিতেয়ং ফলোৎপ্রেক্ষেতি সঙ্করঃ ॥১৫॥

টিপ্পনী—নিত্যায়া ইতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৫॥

বাঙ্গালা—শ্রীকৃষ্ণের মহিষীরা, হস্তাগ্র দ্বারা ইচ্ছানুসারে, সর্বদার জন্য আপন বাস-স্থান পদ্ম হইতে যে শ্রীকে দূর করিয়া দিয়াছিলেন; তাহাতেই শ্রী যে তাঁহাদের সপত্নী ছিলেন, সেই ভাবই তাঁহারা ব্যক্ত করিয়াছিলেন ॥১৫॥

অন্বয়ঃ—ভীমত্যঃ যোষিতঃ প্রিয়করধার্য্যমাণহস্তাঃ (সত্যঃ) যাবৎ কথম্ অপি ন আস্কন্দন্; তাবৎ তদম্বু সংক্রান্তপ্রতিমতয়া ঔৎসুক্যাৎ ত্বরিতম্ অমূঃ অন্তঃ দধৌ ইব ॥১৬॥

টীকা—আস্কন্দন্নিতি। ভীমত্যঃ প্রবেশভীরবো যোষিতঃ প্রিয়করৈর্ধার্য্যমাণহস্তাঃ প্রিয়করাবলম্বাঃ সত্যঃ যাবৎ কথমপি নাস্কন্দন্ ন প্রাবিশন্, তাবৎ সংক্রান্তপ্রতিমতয়া সংক্রান্তপ্রতিবিম্বতয়া তদম্বু কর্ত্তৃ ঔৎসুক্যাদুৎকণ্ঠতয়া ত্বরিতমমূরন্তর্দধাবিব অন্তঃ প্রাবেশয়দিবেত্যর্থঃ। প্রতিবিম্বসংক্রমণাদন্তর্ধানোৎপ্রেক্ষণাৎ ক্রিয়ানিমিত্তা ক্রিয়াস্বরূপোৎ-প্রেক্ষা ॥১৬॥

টিপ্পনী—আস্কন্দন্নিতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

বাঙ্গালা—রমণীরা জলে নামিতে ভীত হইলে, প্রিয়তমেরা তাহাদের হস্ত ধারণ করিল; এঅবস্থাতেও তাহারা যে পর্য্যন্ত কোন রকমেই জলে নামে নাই; তাহার মধ্যেই তাহাদের প্রতিবিম্ব জলে পতিত হওয়ায়, সেই জল যেন উৎকণ্ঠাবশতঃ তাড়াতাড়ি তাহাদিগকে আপনার অন্তরে ধারণ করিল ॥১৬॥

সংক্ষোভং পয়সি মুহুর্মহেভকুম্ভশ্রীভাজা কুচযুগলেন নীয়মানে।
বিশ্লেষং যুগমগমদ্রথাঙ্গনাম্নোরুদ্বৃত্তঃ ক ইব সুখাবহঃ পরেষাম্ ॥১৮॥

---

**অন্বয়ঃ**—তাঃ কামিন্যঃ কামিনঃ মনঃ ইব তৎ জলং পূর্বং সচকিতং গাধম্ আগময্য অথো মৃদু-পদং কৃত্বা অন্তঃ আবিশন্ত্যঃ (সত্যঃ) সরাগৈঃ অঙ্গৈঃ (তজ্জলম্) অনুরঞ্জয়াম্বভূবুঃ ॥১৭॥

**টীকা**—তা ইতি। তাঃ কামিন্যঃ কামিনঃ কামুকস্য মন ইব তজ্জলং পূর্বং প্রথমং সচকিতং সভয়ং যথা তথা গাধমুত্তানমাগময্য গমনেন জ্ঞাত্বা পুরঃপ্রবিষ্টপুরুষমুখেন গাধং তদিতি পরামৃশ্যেত্যর্থঃ। অন্যত্র দূতমুখেন জ্ঞাত্বেত্যর্থঃ। অথো অনন্তরং মৃদু মন্দং পদং কৃত্বা পদং ন্যস্য অন্যত্র তু স্বয়ং সম্ভাষণাদিকং কৃত্বেত্যর্থঃ। অন্তরমভ্যন্তরমাবিশন্ত্যঃ প্রবিষ্টাঃ সত্যঃ অন্যত্র রহস্যকর্মণি প্রবৃত্তা ইত্যর্থঃ। সরাগৈঃ সাঙ্গরাগৈঃ সানুরাগৈশ্চ অঙ্গৈর্গাত্রৈরনুরঞ্জয়াম্বভূবুঃ তদ্বর্ণক্রান্তং চক্রুঃ অন্যত্রত্বনুরক্তং চক্রুরিত্যর্থঃ। শ্লেষসঙ্কীর্ণেয়মুপমা ॥১৭॥

**টিপ্পনী**—তা ইতি। অত্র আগময্য ইত্যনেনৈব তদানন্তর্য্যবোধনাৎ পুনঃ অথো ইতি পদমধিকমিত্যধিকপদতাদোষঃ; স চ 'কৃত্বাথো' ইত্যত্র 'কুর্বত্যঃ' ইতি পাঠেন সমাধেয়ঃ। গুণরীতী পূর্ববৎ ॥১৭॥

**বাঙ্গালা**—সেই কামিনীরা পূর্ব্ব প্রবিষ্ট পুরুষদের নিকট জানিল যে, এ জলে ঠাঁই পাওয়া যাইবে; তাহার পরে ভয়ে ভয়ে আস্তে আস্তে পদক্ষেপ করিয়া, কামী জনের মনের ন্যায় সেই জলের ভিতরে প্রবেশ করিয়া, অঙ্গরাগদ্রব্য দ্বারা সেই জলকে রঞ্জিত করিয়া দিল ॥১৭॥

**অন্বয়ঃ**—মহেভ-কুম্ভ-শ্রী-ভাজা কুচযুগলেন পয়সি মুহুঃ সংক্ষোভং নীয়মানে (সতি), রথাঙ্গনাম্নোঃ যুগং বিশ্লেষম্ অগমৎ। উদ্বৃত্তঃ কঃ ইব পরেষাং সুখাবহঃ (ভবতি) ॥১৮॥

**টীকা**—সংক্ষোভমিতি। মহেভকুম্ভশ্রীভাজা তত্তুল্যশ্রীভাজেত্যর্থঃ। অতএবাসম্ভবদ্বস্তুসম্বন্ধো নিদর্শনালঙ্কারঃ। কুচযুগলেনোল্লাসিতেনেতি ভাবঃ। পয়সি মুহুঃ সংক্ষোভং নীয়মানে প্রাপ্যমাণে সতি রথাঙ্গনাম্নোর্যুগং চক্রবাকযুগলং বিশ্লেষং বিয়োগমগমৎ বিয়োগাবস্থমপীতি ভাবঃ। তথাহি, উদ্বৃত্ত উন্নতো বৃত্তস্য উদ্বর্ত্তনং যস্যেতি বা উদ্বৃত্তঃ অন্যত্রোদ্বৃত্তং দুর্ম্মার্গবর্ত্তীতি যাবৎ স ক ইব কো বা পরেষাং অন্যেষাং সুখাবহঃ সুখকরঃ ন কোঽপীত্যর্থঃ। অয়ঞ্চ শ্লেষমূলাতিশয়োক্তিজীবিতোঽর্থান্তরন্যাসঃ ॥১৮॥

**টিপ্পনী**—সংক্ষোভমিতি। অত্র মুহুর্মহেভেতি ছেকানুপ্রাসশ্চেতি টীকোক্তনিদর্শনাতিশয়োক্ত্যর্থান্তরন্যাসৈঃ সহ সংসৃষ্টিঃ। গুণরীতী পূর্ববৎ ॥১৮॥

**বাঙ্গালা**—মহাহস্তীর কুম্ভের ন্যায় কান্তিশালী স্তনযুগল, জলকে বার বার উদ্বেলিত করিলে, চক্রবাকদম্পতিগণ, পরস্পর বিচ্ছেদ প্রাপ্ত হইল। কারণ, উন্নত কোন্ পদার্থ, অন্যের সুখজনক হইয়া থাকে? ॥১৮॥

आसीना तटभुवि सस्मितेन भर्त्रा रम्भोरूरवतरितुं सरस्यनिच्छुः।
धुन्वाना करयुगमीक्षितुं विलासान् शीतालुः सलिलगतेन सिच्यते स्म ॥१९॥
नेच्छन्ती सममसुना सरोऽवगाढुं रोधस्तः प्रतिजलमीरिता सखीभिः।
आश्लिक्षद्भयचकितेक्षणं नवोढा वोढारं विपदि न दूषिताऽतिभूमिः ॥२०॥

---

अन्वयः—सलिलगतेन सस्मितेन भर्त्रा विलासान् ईक्षितुम्, शीतालुः सरसि अवतरितुम् अनिच्छुः तटभुवि आसीना (जलनिवारणाय) करयुगं धुन्वाना रम्भोरूः सिच्यते स्म ॥१९॥

टीका—आसीनेति। शीतं न सहत इति शीतालुः शीतभीरुः। शीतोष्णाभ्यां तदसहने आलुच् वक्तव्यः। अतएव सरसि अवतरितुं प्रवेष्टुमनिच्छुरनभिलाषुका अतएव तटभुवि आसीना उपविष्टा। आसेः कर्त्तरि शानच् ईदास इतीकारः। रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूः स्त्री। ऊरूत्तरपदादौपम्य इत्यूङ् प्रत्ययः। सलिलगतेन स्वयं सलिलं प्रविष्टेन सस्मितेन भर्त्रा विलासानीक्षितुं करयुगं धुन्वाना कम्पयन्ती। धुनोतेः कर्त्तरि शानच् प्रत्ययः। सिच्यते स्म सिक्ता ॥१९॥

टिप्पनी—आसीनेति। अत्र सरोऽवतरणानिच्छां प्रति शीतालुपदस्यार्थो हेतुरिति काव्यलिङ्गं स्वभावोक्तिश्चेत्यनयोः संसृष्टिः। गुणरीती पूर्ववत् ॥१९॥

বাঙ্গালা—ভর্ত্তা প্রথমেই জলে নামিয়াছিল; কিন্তু তাহার স্ত্রী শীত সহিতে পারিবে না ভাবিয়া, জলে নামিতে অনিচ্ছু থাকিয়া, তীরেই বসিয়াছিল; তখন ভর্ত্তা তাহার বিলাস দেখিবার জন্য, হাসিতে হাসিতে জলনিক্ষেপ করিতে লাগিল; আর সেই রম্ভোরু স্ত্রী হস্ত কম্পন করিয়া (সেই জল নিবারণ করিতে থাকিল) ॥১৯॥

अन्वयः—असुना समं सरः अवगाढुं नेच्छन्ती, सखीभिः रोधस्तः जलं प्रति ईरिता नवोढा भयचकितेक्षणं वोढारम् आश्लिक्षत्। विपदि अतिभूमिः न दूषिता ॥२०॥

टीका—नेति। असुना स्वरमणेन भर्त्रा सह सरोऽवगाढुमवगाहितुम्। स्वरतिसूतिसूयतिधूञूदितो वेति विकल्पान्नेडागमः। नेच्छन्ती लज्जया अनिच्छन्ती। नञर्थस्य नशब्दस्य सुप्सुपेति समासः नञ्समासो वा। अथ सखीभिः प्रतिजलं जलम्प्रति रोधसो रोधसः। पञ्चम्यास्तसिल्। ईरिता नुन्ना नवोढा नववधूः भयेन चकितेक्षणं संभ्रान्तदृष्टि यथा तथा वोढारं भर्त्तारमाश्लिक्षत् आलिङ्गितवती। श्लिष आलिङ्गने इति धातोर्लुङि च्लेः क्सादेशः। न च धार्ष्ट्यदोषापत्तिरित्याह। विपदि विपत्तौ अतिक्रान्ता भूमिरतिभूमिरमर्य्यादा न दूषिता। आपत्काले नास्ति मर्य्यादेति न्यायादिति भावः। अर्थान्तरन्यासालङ्कारः ॥२०॥

टिप्पनी—नेच्छन्तीति। अत्र नवोढा वोढारमिति छेकानुप्रासस्येति टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

তিষ্ঠন্তং পয়সি পুমাংসমংসমাত্রে তদ্দঘ্নং তদবয়তী কিলাত্মনোঽপি।
অভ্যেতুং সুতনুরভীরিয়েষ মৌগ্ধ্যাদাশ্লেষি দ্রুতমমুনা নিমজ্জতীতি ॥২১॥
আনাভেঃ সরসি নতভ্রুবাবগাঢে চাপল্যাদথ পয়সস্তরঙ্গহস্তৈঃ।
উচ্ছ্রায়ি স্তনযুগমধ্যরোহি লব্ধস্পর্শানাং ভবতি কুতোঽথবা ব্যবস্থা ॥২২॥

---

**বাঙ্গালা**—নববিবাহিত বধূ, লজ্জাবশতঃ ভর্ত্তার সহিত সরোবরে অবগাহন করিতে ইচ্ছা করিল না; পরে সখীরা তীর হইতে জলে নামাইয়া দিল; তাহার পর সে ভয়ে চঞ্চল-নেত্রে ভর্ত্তাকে জড়াইয়া ধরিল। কারণ, বিপদের সময়ে মর্য্যাদা লঙ্ঘন করা দূষিত নহে ॥২০॥

**অন্বয়ঃ**—সুতনুঃ অংসমাত্রে পয়সি তিষ্ঠন্তং পুমাংসং (বীক্ষ্য) তৎ আত্মনঃ অপি তদ্দঘ্নম্ অবয়তী কিল মৌগ্ধ্যাৎ অভীঃ [সতী] অভ্যেতুম্ ইয়েষ; অমুনা নিমজ্জতি [এষা] ইতি দ্রুতম্ আশ্লেষি ॥২১॥

**টীকা**—তিষ্ঠন্তমিতি। সুতনুঃ শুভাঙ্গী স্ত্রী অংসঃ প্রমাণমস্যেতি অংসমাত্রে অংস-প্রমাণে। প্রমাণে দ্বয়সজ্দঘ্নঞ্মাত্রচ ইতি মাত্রচ্প্রত্যয়ঃ। পয়সি জলে তিষ্ঠন্তং পুমাংসং বীক্ষ্যেতি শেষঃ। আত্মনোঽপি তৎ পয়ঃ তদ্দঘ্নং তাবন্মাত্রং সমানম্ অবয়তী জানতী কিল তথা সম্ভাবয়ন্তীত্যর্থঃ। বার্ত্তাসম্ভাব্যয়োঃ কিলেত্যমরঃ। অবপূর্বাদিণঃ শতরি ইণো যণিতি যণাদেশঃ উগিতশ্চেতি ঙীপ্। কিলশব্দস্যালীকার্থত্বে মৌগ্ধ্যবিরোধঃ। অতএব মৌগ্ধ্যা-দবিবেকাদভীর্নির্ভীকা সতী অভ্যেতুং পুমাংসমভিগন্তুমিয়েষ ইচ্ছতি স্ম। অমুনা পুংসা নিমজ্জতীতি দ্রুতমাশ্লেষি আশ্লিষ্টা ॥২১॥

**টিপ্পনী**—তিষ্ঠন্তমিতি। অত্র প্রথমে পাদে ছেকানুপ্রাসোঽলঙ্কারঃ। "বীক্ষ্যেতি শেষঃ" ইতি টীকা। বস্তুতস্তু অবয়তীত্যনেনান্বয়াঙ্গীকারাৎ ন ন্যূনপদতাদোষঃ। পুষ্পিতা পূর্ববৎ ॥২১॥

**বাঙ্গালা**—কোন পুরুষ, স্কন্ধপ্রমাণ জলে অবস্থান করিতেছিল; তাহা দেখিয়া তাহার সুন্দরী স্ত্রী মনে করিল যে, ঐ জল নিজেরও সেই প্রমাণই হইবে; তাহার পর সে অবিবেচনাবশতঃ নির্ভয়চিত্তে সেই পুরুষের নিকটে যাইতে ইচ্ছা করিল; তখন সে নিমগ্ন হইতেছে দেখিয়া, সেই পুরুষ তাড়াতাড়ি তাহাকে আলিঙ্গন করিল ॥২১॥

**অন্বয়ঃ**—নতভ্রুবা সরসি আনাভেঃ অবগাঢে [সতি] অথ পয়সঃ চাপল্যাৎ তরঙ্গহস্তৈঃ উচ্ছ্রায়ি স্তন-যুগম্ অধ্যরোহি; অথবা লব্ধস্পর্শানাং কুতঃ ব্যবস্থা ভবতি ॥২২॥

**টীকা**—আনাভেরিতি। নতভ্রুবা স্ত্রিয়া সরসি আনাভের্নাভিপর্য্যন্তম্। আঙ্ মর্য্যাদাভিবিধ্যোরিতি বিভাষাদসমাসঃ। অবগাঢে প্রবিষ্টে সতি। গাহেঃ কর্ম্মণি ক্তঃ। অথ পয়সশ্চাপল্যাচ্চৌর্য্যাৎ। ব্রাহ্মণাদিষু পাঠাৎ ষ্যঞ্প্রত্যয়ঃ। তরঙ্গৈরেব হস্তৈস্তরঙ্গহস্তৈ-রুচ্ছ্রায়োঽস্যাস্তীত্যুচ্ছ্রায়ি উন্নতিমৎ স্তনযুগমধ্যরোহি অধিরূঢ়ম্। ভিক্ষুপাদপ্রসারণ-ন্যায়াদিতি ভাবঃ। রোহতেঃ কর্ম্মণি লুঙ্। অথবা তথা হীত্যর্থঃ। লব্ধস্পর্শানাং লব্ধ-প্রবেশানামিত্যর্থঃ। কুতঃ কুত্র বা। সার্ববিভক্তিকস্তসিল্। ব্যবস্থা মর্য্যাদা ভবতি ন কুত্রাপীতি ভাবঃ, প্রায়েণ সর্বোঽপ্যসম্ভবপ্রচারিণ এবেতি ভাবঃ। অত্র চাপল্যাদিনি

কান্তানাং কুবলয়মপ্যপাস্তমক্ষ্ণোঃ শোভাভির্ন মুখরুচাঽহমেকমেব।
সংহর্ষাদলিবিরুতৈরিতীব গায়ল্লোলোর্ম্মৌ পয়সি মহোৎপলং ননর্ত্ত ॥২৩॥
ত্রস্যন্তী চলশফরীবিঘট্টিতোরূর্বামোরূরতিশয়মাপ বিভ্রমস্য।
ক্ষুভ্যন্তি প্রসভমহো বিনাপি হেতোর্লীলাভিঃ কিমু সতি কারণে রমণ্যঃ ॥২৪॥

---

দ্বয়োরপি লৌল্যয়োরভেদাধ্যবসায়মূলাতিশয়োক্ত্যা তরঙ্গহস্তৈরিতি রূপকেণ চ পয়সি কামিত্ব-প্রতীতিঃ সমাসোক্তিঃ তদুপজীবী চার্থান্তরন্যাস ইতি সঙ্করঃ ॥২২॥

**টিপ্পনী**—যানামিতি। অত্র গুণরীতী পূর্ব্ববৎ ॥২২॥

**বাঙ্গালা**—কোন রমণী, সরোবরের মধ্যে নাভিপর্য্যন্ত মগ্ন হইলে পর, চঞ্চলতাবশতঃ জলের তরঙ্গরূপ হস্ত, তাহার উন্নত স্তনযুগলের উপরে উঠিল। কারণ, যাহারা কামিনীস্পর্শ করে, তাহাদের মর্য্যাদা কোথায় থাকে ? ॥২২॥

**অন্বয়ঃ**—লোলোর্ম্মৌ পয়সি মহোৎপলং, কান্তানাং মুখরুচা একম্ অহম্ এব ন অপাস্তম্, অক্ষ্ণোঃ শোভাভিঃ কুবলয়ম্ অপি অপাস্তম্ ইতি সংহর্ষাৎ অলিবিরুতৈঃ গায়ৎ ননর্ত্ত ইব ॥২৩॥

**টীকা**—কান্তানামিতি। লোলোর্ম্মৌ চপলোর্ম্মিণি। তৃতীয়াদিষু ভাষিতপুংস্কং পুংবদ্গালবস্যেতি বিকল্পাৎ পুংবদ্ভাবঃ। পয়সি মহোৎপলমরবিন্দং কর্ত্তৃ। অরবিন্দং মহোৎপলমিত্যমরঃ। কান্তানাং মুখরুচা অহমেকমেব নাপাস্তং কিন্তু তাসামক্ষ্ণোঃ শোভাভিঃ কুবলয়মপ্যপাস্তম্ ইতি সংহর্ষাৎ সন্তোষাদেবালিবিরুতৈর্গায়ৎ অলিবিরুতরূপং গানং কুর্ব্বদিতি রূপকম্। ইত্থম্ভূতলক্ষণে ইতি তৃতীয়া। ননর্ত্তেব। ন দুঃখম্পঞ্চভিঃ সহেতি ন্যায়ান্নাতি শ। লোলোর্ম্মিচলনহেতুকে মহোৎপলচলনে অলিনাদসংহর্ষহেতুকত্বসমানন্তরোৎপ্রেক্ষণাৎ ক্রিয়ানিমিত্তক্রিয়াস্বরূপোৎপ্রেক্ষা বাচ্যা ॥২৩॥

**টিপ্পনী**—কান্তানামিতি। অত্রাপি গুণরীতী পূর্ব্ববৎ ॥২৩॥

**বাঙ্গালা**—জলে তরঙ্গ সকল চলিতেছিল, তখন পদ্ম মনে ভাবিল যে আমি একাই কেবল কামিনীগণের মুখশোভায় পরাস্ত হই নাই; চোখ দুইটীর শোভাতে নীলোৎপলও পরাস্ত হইয়াছে; এই আনন্দে সে পদ্ম যেন ভ্রমরের রবরূপ গান করতঃ নৃত্য করিতে লাগিল ॥২৩॥

**অন্বয়ঃ**—চল-শফরী-বিঘট্টিতোরুঃ ত্রস্যন্তী বামোরুঃ বিভ্রমস্য অতিশয়ম্ আপ। অহো হেতোঃ বিনা অপি রমণ্যঃ প্রসভং লীলাভিঃ ক্ষুভ্যন্তি কারণে সতি কিমু [বক্তব্যম্] ॥২৪॥

**টীকা**—ত্রস্যন্তীতি। চলাঃ শফর্য্যঃ স্বল্পকায়া মৎস্যাঃ। প্রোষ্ঠী তু শফরী দ্বয়োরিত্যমরঃ। তাভির্বিঘট্টিতৌ বিচালিতৌ ঊরূ যস্যাঃ সা অতএব ত্রস্যন্তী বিভ্যতী। বা ভ্রাশেত্যাদিনা বিকল্পাৎ শ্যনি শতরি ঙীপ্। বামৌ সুন্দরাবূরূ যস্যাঃ সা বামোরূঃ সংহিতশফলক্ষণবামাদেশ্চেত্যূঙ্ প্রত্যয়ঃ। বিভ্রমস্য বিলাসস্যাতিশয়মাপ। তথাহি, রমণ্যো হেতোর্বিনাপি কারণং বিনাপি। পৃথগ্বিনেত্যাদিনা বিকল্পাৎ পঞ্চমী। লীলাভির্বিলাসৈঃ

आकृष्टप्रतनुवपुर्लतैस्तरङ्गैस्तस्यामस्तदथ सरोमहार्णवस्य ।
अक्षोभि प्रसृतविलोलबाहुपक्षैर्योषाणामुरुभिरुरोजगण्डशैलैः ॥२५॥
गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः संक्षोभं जघनविघट्टनेन नीतः ।
अम्भोधिर्विकसितवारिजाननोऽसौ मर्यादां सपदि विलङ्घयाम्बभूव ॥२६॥

---

प्रसभमप्युक्ताः क्षुभ्यन्ति अहो निष्कारणक्षोभादाश्चर्यमित्यर्थः । कारणे सति किमु वक्तव्यम् । अत्र प्रकृतनिष्कारणक्षोभकथनात् सकारणक्षोभस्य कैमुत्यन्यायलब्धत्ववर्णनादर्थापत्तिरलङ्कारः । दण्डापूपिकयार्थान्तरस्यापतनमर्थापत्तिरिति सूत्रम् ॥२४॥

**टिप्पनी**—वसन्तीति । अत्र त्रासं प्रति चलेत्यादिविशेषणपदस्यार्थो हेतुरिति काव्यलिङ्गम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेति टीकोक्तार्थापत्त्या तयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः वैदर्भी च रीतिः ॥२४॥

**বাঙ্গালা**—চঞ্চল পুঁঠীমাছ, কোন সুন্দরীর উরুযুগলে একটু ঠোকরাইয়াছিল ; তাহাতেই সে ভীত হইয়া নানারূপ অঙ্গভঙ্গী করিল। কি আশ্চর্য্য! বিনা কারণেও রমণীরা জোর করিয়া নানারূপ লীলাখেলায় ক্ষুব্ধ হইয়া থাকে ; কারণ থাকিলে আর বলিবার আছে কি ? ॥২৪॥

**अन्वयः**—अथ आकृष्टप्रतनुवपुर्लतैः तरङ्गैः प्रसृतविलोल-बाहु-पक्षैः उरुभिः योषाणाम् उरोज-गण्ड-शैलैः तस्य सरोमहार्णवस्य तत् अम्भः अक्षोभि ॥२५॥

**टीका**—आकृष्टेति । अथानन्तरमाकृष्टाः प्रतनवो वपुष्येव लता यैस्तैस्तरङ्गैः प्रसृतानि प्रसृता आयता विलोलाश्चञ्चला बाहव एव पक्षा गरुतो येषां तैः । गिरिपक्षस्य पक्षवत्त्वस्य तदवयवविशेषप्रचारः । उरुभिर्महद्भिर्योषाणां स्त्रीणाम् उरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलोपलैस्तस्य सर एव महार्णवस्तस्य तदम्भः अक्षोभि । क्षुभ्यतेर्ण्यन्तादण्यन्ताद्वा कर्मणि लुङ् । समस्तवस्तुविषयकं सावयवं रूपकम् ॥२५॥

**टिप्पनी**—आकृष्टेति । अत्र द्वितीयार्द्धे छेकानुप्रासश्चेति टीकोक्तरूपकेण सह तस्य संसृष्टिः । गुणरीती पूर्ववत् ॥२५॥

**বাঙ্গালা**—তদনন্তর, রমণীগণের স্তনরূপ বিশাল গণ্ডশৈলগুলি (পর্বতচ্যুত বৃহৎ পাষাণগুলি) ; সেই সরোবররূপ মহাসমুদ্রের সেই জল মন্থন করিতে লাগিল ; সেই স্তনরূপ গণ্ডশৈল তাহাদের কৃশ দেহলতাগুলিকে আকর্ষণ করিয়া সন্তরণ করিতেছিল এবং চঞ্চল বাহুরূপ পক্ষ বিস্তৃত করিয়াছিল ॥২৫॥

**अन्वयः**—गाम्भीर्यं दधत् अपि रन्तुम् अङ्गनाभिः जघनविघट्टनेन संक्षोभं नीतः विकसितवारिजाननः असौ अम्भोधिः सपदि मर्यादां विलङ्घयाम्बभूव ॥२६॥

**टीका**—गाम्भीर्यमिति । गाम्भीर्यमगाधत्वम् अविकारिचित्तत्वं च दधदपि गम्भीरः सन्नपि रन्तुं विहर्तुं अवतरन्तीभिरङ्गनाभिः जघनस्य विघट्टनेन सङ्घर्षेण प्रक्षोभस्खलनचित्त-

आदातुं दयितमिवावगाढमाराद् ऊर्मीणां ततिभिरभिप्रसार्य्यमाणः ।
कस्याश्चिद्विततचलच्छिखाङ्गुलीको लक्ष्मीवान् सरसि रराज केशहस्तः ॥२७॥
उन्निद्रप्रियकमनोरमं रमण्याः संरेजे सरसि वपुः प्रकाशमेव ।
युक्तानां विमलतया तिरस्क्रियायै नाक्रामन्नपि हि भवत्यलं जलौघः ॥२८॥

---

विकारश्च नीतः अतएव विकसितं वारिजमाननमिव वारिजमिव वाननं यस्य सः अम्भांसि धीयन्तेऽस्मिन्निति अम्भोधिर्जलाशयः कश्चित् पुमांश्च तत्तुल्यो गम्यते। कर्मण्यधिकरणे चेति किप्रत्ययः। सपदि मर्य्यादां सीमानम् औचितीञ्च विलङ्घयाम्बभूव लङ्घितवान्। धीरोऽपि स्त्रीसन्निकर्षाद्विक्रियते इति भावः। अत्र गाम्भीर्य्यादिप्रकृताम्भोधिविशेषणसाम्याद-प्रकृतविशेष्यपुरुषप्रतीतेः समासोक्तिरलङ्कारः। सा च प्रतीयमानाभेदाध्यवसायमूलातिशयोक्त्यानुप्राणितेति सङ्करः ॥२६॥

टिप्पनी—गाम्भीर्य्यमिति। अत्र अम्भोधेरनुरागस्य परनायिकागतत्वात् सम्भोगशृङ्गाररसाभासः; गुणरीती पूर्ववत् ॥२६॥

বাঙ্গালা—জলবিহার করিবার জন্য, রমণীরা উরুসঞ্চালন দ্বারা সরোবরকে উদ্বেলিত করিয়াছিল; তাহাতে ঐ সরোবর গাম্ভীর্য্য ধারণ করিয়াও, মুখপদ্ম প্রফুল্ল করিয়া তৎক্ষণাৎ মর্য্যাদা লঙ্ঘন করিল ॥২৬॥

अन्वयः—सरसि वितत-चलच्छिखाङ्गुलीकः लक्ष्मीवान् कस्याश्चित् केशहस्तः आरात् अवगाढं दयितम् आदातुम् इव ऊर्म्मीणां ततिभिः अभिप्रसार्य्यमाणः (सन्) रराज ॥२७॥

टीका—आदातुमिति। सरसि वितताः प्रसारिताश्चलन्त्यश्च शिखा अग्राण्येवाङ्गुल्यो यस्य सः। नद्यृतश्चेति कप्। लक्ष्मीवान् शोभावान्। मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वत्वम्। कस्याश्चित्केशहस्तः केशपाशः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे इत्यमरः। हस्त इति करश्च ध्वन्यते। आरात् समीपे। आराद् दूरसमीपयोरित्यमरः। अवगाढमन्तर्मग्नं दयितमादातुं ग्रहीतुमिव ऊर्मीणान्ततिभिः समूहैरभिप्रसार्य्यमाणोऽभितो व्यापार्य्यमाणः सन् रराज। अत्रादातुमिव प्रसार्य्यमाण इति प्रसारणस्य दानार्थत्वोत्प्रेक्षणादियं क्रियानिमित्ता क्रियाफलोत्प्रेक्षा। सा च चलच्छिखाङ्गुलीक इति रूपकानुप्राणितया हस्त इति श्लेषमूलया वाच्यस्य केशकलापस्य प्रतीयमानात् करात् भेदे अभेदरूपातिशयोक्त्या निव्यूढेति सङ्करः ॥२७॥

टिप्पनी—आदातुमिति। अत्रापि गुणरीती पूर्ववत् ॥२७॥

বাঙ্গালা—কোন রমণীর সুন্দর কেশকলাপ, সরোবরে শোভা পাইতেছিল; তাহার অগ্রদেশও বিস্তৃত হইয়া চলিতে থাকিয়া, নিকটে জলমগ্ন প্রিয়তমকে ধরিবার জন্যই যেন তরঙ্গশ্রেণীকর্তৃক বিস্তারিত হইয়াছিল ॥২৭॥

अन्वयः—उन्निद्र-प्रियक-मनोरमं रमण्याः वपुः सरसि प्रकाशम् एव संरेजे। हि जलौघः आक्रामन् अपि विमलतया युक्तानां तिरस्क्रियायै अलं न भवति ॥२८॥

किन्तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चिद्विब्वोकैर्बकसहवासिनां परोक्षैः ॥२९॥
शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसन्निधिर्निमासन् नारीणामिति जलकेलिसाधनानि ॥३०॥

---

टीका—उन्निद्रेति। उन्निद्रं यत् प्रियकम् असनकुसुमम्। सर्जकासनबन्धूकपुष्पप्रियकजीवका इत्यमरः। तदिव मनोरमं कनकगौरमित्यर्थः। रमण्याः वपुः शरीरं प्रकाशमेव जलमग्नमपि वैमल्यात् छायामेव संरेजे। तथाहि, जलौघो जलपूरो जड़ौघो मूर्खजनौघश्च डलयोरभेदात्। आक्रामन्नावृण्वन्नपि अन्यत्र अधिक्षिपन्नपि विमलतया वैमल्येन युक्तानां शुद्धानां तिरस्क्रियायै तिरोधानाय परिभवाय च अलं समर्थो न भवति हि। श्लेषमूलया भेदेऽभेदरूपातिशयोक्त्यानुप्राणितोऽयमर्थान्तरन्यासः ॥२८॥

टिप्पनी—उन्निद्रमिति। अत्र लुप्तोपमा छेकानुप्रासोऽपीति समुदाये संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

বাঙ্গালা—ফোটা বান্ধুলীফুলের মত সুন্দর গৌরবর্ণ কামিনীর শরীরটী, সরোবরের ভিতরে মগ্না হইয়াই প্রকাশ পাইতে লাগিল। কারণ, জলসমূহ আবরণ করিয়াও, নির্ম্মল বস্তুকে লুকাইয়া ফেলিতে পারে না ॥২৮॥

अन्वयः—सरसि आरात् एतत् तावत् सरोजं किम? आहोस्वित् युवत्याः मुखम् अवभासते? इति क्षणं संशय्य कश्चित् बकसहवासिनां परोक्षैः विब्वोकैः निश्चिकाय ॥२९॥

टीका—किमिति। सरस्यारात् दूरादेतत् पुरोवर्त्ति तावत् सरोजं किम् आहोस्वित् उत युवत्या मुखम् अवभासते इति क्षणं संशय्य सन्दिह्य। शीङः क्त्वा ल्यप्। अयङ्‌ङिति अयङादेशः। कश्चित् विलासी बकसहवासिनां बकसहचारिणां पद्मानामित्यर्थः। विलासशून्यताद्योतनार्थमित्थन्निर्देशः। परोक्षैरननुभूतपूर्वैरविद्यमानैरिति यावत् विब्वोकैर्विलासैरित्यर्थः यद्यपि विब्वोकोऽनादरक्रियेत्युक्तं तथापि विशेषवाचिनां सामान्ये लक्षणेत्यदोषः। निश्चिकाय विशेषदर्शनान्मुखमेवेति निश्चितवानित्यर्थः। सन्देहालङ्कारोऽयम्। विषयो विषयी यत्र सादृश्यात् कविसम्मतात्। सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सेति लक्षणात्। सोऽप्यन्ते निश्चयोक्तेर्निश्चयान्तः ॥२९॥

टिप्पनी—किमिति। अत्र तृतीयपादे छेकानुप्रासः, तथा चतुर्थचरणेन पद्मापेक्षया मुखस्याधिक्यवर्णनात् व्यतिरेकालङ्कारश्चेति टीकोक्तसन्देहेन संसृष्टिः। गुणरीती पूर्ववत् ॥२९॥

বাঙ্গালা—সরোবরের ভিতরে দূরে এইটী কি পদ্ম? না—কোন যুবতির মুখ শোভা পাইতেছে? ক্ষণকাল এইরূপ সন্দেহ করিয়া কোন ব্যক্তি, বকপক্ষীর সহচর পদ্মের অবিদিত বিলাস দেখিয়া, মুখ বলিয়াই নিশ্চয় করিল ॥২৯॥

अन्वयः—द्रुतकनकोज्ज्वलानि शृङ्गाणि, गन्धाः, पृथुकुचसङ्गि कौसुम्भं वासः, मार्द्वीकम्, प्रियतमसन्निधानं (च) इति नारीणां जलकेलिसाधनानि आसन् ॥३०॥

उत्तुङ्गादनिलचलांशुकास्तटान्ताच्चेतोभिः सह भयदर्शिनां प्रियाणाम्।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्यस्तोयेषु द्रुततरमङ्गना निपेतुः॥३१॥

---

टीका—अथ जलक्रीड़ासम्भारानाह, शृङ्गाणीति। द्रुतेन तप्तनिषिक्तेन कनकेनोज्ज्वलानि लिप्तानीत्यर्थः। शृङ्गाणि क्रीड़ाम्बुयन्त्राणि। शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीड़ाम्बुयन्त्रके इति विश्वः। गन्धाश्चन्दनकुङ्कुमादिगन्धद्रव्याणि। अतएव पुंसि बहुत्वं च। गन्धस्तु सौरभे योगे गन्धके गवलेशयोः। स एव द्रव्यवचनो बहुत्वं पुंसि च स्मृत इत्यभिधानात्। पृथु विशालं कुचकुम्भयोः कुचावरणं कुसुम्भेन रक्तं कौसुम्भम्। तेन रक्तं रागादित्यण् प्रत्ययः। वासो वस्त्रं मृद्वीकाया विकारो मार्द्वीकं द्राक्षामद्यम्। मृद्वीका गोस्तनी द्राक्षेत्यमरः। किञ्च प्रियतमसन्निधानं सर्वसाफल्यकारणमिति भावः। इत्येतानि नारीणां जलकेलिसाधनानि जलक्रीड़ायामासन्। उद्दीपकसम्पत्तिरुक्ता। अत्र शृङ्गादीनां केलिसाधनत्वस्वरूपतुल्यधर्मयोगात् प्रकृतत्वाच्च केवलप्रकृतगोचरा तुल्ययोगिता॥३०॥

टिप्पनी—शृङ्गाणीति। अत्रापि गुणरीती पूर्ववत्॥३०॥

বাঙ্গালা—গলিতস্বর্ণলিপ্ত পিচকারী, গন্ধদ্রব্য, বিশাল স্তনের আবরণ কুসুম্ভরঞ্জিত বস্ত্র, দ্রাক্ষাসব এবং প্রিয়তমের সন্নিধান এই সকল রমণীগণের জলকেলির উপকরণ উপস্থিত ছিল ॥৩০॥

अन्वयः—अनिलचलांशुकाः अङ्गनाः उत्तुङ्गात् तटान्तात् भयदर्शिनां प्रियाणां चेतोभिः सह गुरुभिः श्रोणीभिः अतूर्णम् उत्पतन्त्यः (सत्यः) तोयेषु द्रुततरं निपेतुः॥३१॥

टीका—उत्तुङ्गादिति। अनिलेन वेगानिलेन चलांशुकाः स्खलद्वसना अङ्गनाः उत्तुङ्गात्तटान्ताद्भयदर्शिनां भीतप्रेक्षिणामनर्थाशङ्किनामित्यर्थः। प्रियाणां चेतोभिः सह तेषान्तरे व्यवधानादिति भावः। गुरुभिर्गुर्वीभिः। वोतो गुणवचनादिति विकल्पादनीकारः। श्रोणीभिर्हेतुना अतूर्णं मन्दमुत्पतन्त्यस्तोयेषु द्रुततरं निपेतुः। गुरुत्वस्य पतनहेतुत्वादुत्पतनविरोधित्वाच्च शीघ्रपातो मन्दोत्पतनञ्चेति भावः। अत्र प्रियचेतःपाताङ्गनापातयोः कार्यकारणयोरसहभाविनोः सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविध्वंसनरूपातिशयोक्त्युपजीविता सहोक्तिरलङ्कारः। सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः। कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते इति लक्षणात्। चेतोवत् पेतुरित्यौपम्यकल्पनया काव्यं गताशुभावप्रतीतेश्चमत्कार इति रहस्यम्। तात्कालिकांशुकचलनादिसूक्ष्मस्वभावविशेषप्रकाशनात् स्वभावोक्तिश्चेति सङ्करः॥३१॥

टिप्पनी—उत्तुङ्गादिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः॥३१॥

বাঙ্গালা—রমণীরা বিশাল নিতম্বের ভারে ধীরে ধীরে গাত্রোত্থান করিয়া, অনিষ্টাশঙ্কী প্রিয়তমদিগের চিত্তের সহিত, উচ্চ তীর হইতে তাড়াতাড়ি যাইয়া জলে পড়িল; পড়িবার সময়ে বায়ুভরে তাহাদের বস্ত্র সকল উড়িতেছিল ॥৩১॥

मुग्धत्वादविदितकैतवप्रयोगा गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करैरिताम्बु व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥३२॥
योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्याः ।
कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥३३॥

---

**अन्वयः**—मुग्धत्वात् अविदितकैतवप्रयोगाः सपदि पराजयं गच्छन्त्यः ताः तरुण्यः कान्तैः सह अभिसरणग्लहां करपुष्करैरिताम्बु व्यात्युक्षीम् अदीव्यन् ॥३२॥

**टीका**—मुग्धत्वादिति । मुग्धत्वान्मूढत्वादविदिताः कैतवप्रयोगा मुखसेचनादि-कपटाचरणानि याभिस्ताः अतएव सपदि पराजयङ्गच्छन्त्यस्तास्तरुण्यः कान्तैः सहाभिसरणं स्वयमभिगमनं ग्लहो द्यूतं पणो यस्यास्ताम् । पणोऽक्षेषु ग्लह इत्यमरः । अक्षेषु ग्लह इति ग्रहेरेवाच्पयी लत्वनिपातः । अप्रत्ययस्तु ग्रहवृदृनिश्चिगमश्चेत्येव सिद्ध इति केचित् । अन्ये तु ग्लहिं प्रकृत्यन्तरमङ्गीकृत्याप्रत्ययस्यैव निपातो घञपवादीत्याहुः । करपुष्करैः करकमलैरीरितैरम्बुभिर्यां व्यात्युक्षीं व्यतिहारेणोक्षणं परस्पराभ्युक्षणमित्यर्थः । कर्म-व्यतिहारे णच् स्त्रियामिति णच् प्रत्ययः, णचः स्त्रियामञ् इत्यञ्, टिड्ढाणञित्यादिना ङीप् । तां व्यात्युक्षीमदीव्यन् तया अक्रीडन्नित्यर्थः । दिवः कर्म चेति विकल्पात् कर्मत्वम् । अत्राविदितकैतवप्रयोगस्य विशेषणगत्या पराजयहेतुत्वादर्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥३२॥

**टिप्पनी**—मुग्धत्वादिति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

**বাঙ্গালা**—রমণীরা সরল বলিয়া ছলপ্রয়োগ জানিত না ; তাই তাহারা সহসাই পরা-জিত হইয়া, প্রিয়তমদিগের সহিত, পুনরায় করকমলদ্বারা পরস্পর জলক্ষেপরূপ জলক্রীড়া করিল ; তাহাতে তাহারা পরাজিত হইলে নিজেরাই অভিসার করিবে এই পণ রহিল ॥৩২॥

**अन्वयः**—एकः करकलशोद्यतैः पयोभिः त्रिनयनलोचनानलार्चिर्निर्दग्ध-स्मर-पृतनाधिराज्यलक्ष्म्याः कान्तायाः योग्यस्य वक्त्रेन्दोः महाभिषेकम् अकृत ॥३३॥

**टीका**—योग्यस्येति । त्रिनयनस्त्र्यम्बकः । क्षुभ्नादिषु चेति निषेधात् पूर्वपदात् संज्ञा-यामिति णत्वाभावः । तस्य लोचनानलार्चिषा निर्दग्धस्य स्मरस्य याः पृतनास्तासामधिराज्य-माधिपत्यन्तदेव लक्ष्मीस्तस्याः योग्यस्यार्हस्य त्रैलोक्यविजयिनः स्थाने तादृश्यस्यैव स्थाप्यत्वादिति भावः । कान्तायाः वक्त्रेन्दोः असदृशत्वादस्येति भावः । करावञ्जलिरेव कलशस्तेनोद्यतैरुत्क्षिप्तैः पयोभिर्महाभिषेकमेकः कश्चित् कामी अकृत कृतवान् । करोते-र्लुङि तङ्, तनादिभ्यस्तथासोरिति सिचो लुक् । अत्र जलक्रीडासेके महाभिषेकत्वोत्-प्रेक्षा प्रतीयमानकरकलशेति रूपकानुप्राणितेति सङ्करः ॥३३॥

**टिप्पनी**—योग्यस्येति । अत्र समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥३३॥

**বাঙ্গালা**—মহাদেবের নয়নের অগ্নিতে যে কামদেব দগ্ধ হইয়াছিলেন, তাঁহার সৈন্য-সম্পদ স্বরূপ একটী রমণী ছিল ; তাহার মুখচন্দ্রও তাহার যোগ্যই ছিল ; একটী যুবক

सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य प्रेयांसं मनसिजदुःखदुर्बलायाः।
सौवर्णं वलयमवागलत्कराग्राल्लावण्यश्रिय इव शेषमङ्गनायाः॥३४॥
स्निह्यन्ती दृशमपरा निधाय पूर्णं मूर्तेन प्रणयरसेन वारिणेव।
कन्दर्पप्रवणमनाः सखीसिसिक्षालक्ष्येण प्रतियुवमञ्जलिं चकार॥३५॥

---

আপন অঞ্জলিরূপ কলশদ্বারা জল তুলিয়া, সেই রমণীর মুখচন্দ্রের মহাভিষেক করিতে লাগিল ॥৩৩॥

**अन्वयः**—मनसिज-दुःख-दुर्बलायाः कथम् अपि बाहुम् उन्नमय्य प्रेयांसं सिञ्चन्त्याः अङ्गनायाः कराग्रात् सौवर्णं वलयं लावण्यश्रियः शेषम् इव अवागलत्॥३४॥

**टीका**—सिञ्चन्त्या इति। मनसिजदुःखेन स्मरपीडया दुर्बलाया अतएव कथमपि बाहुमुन्नमय्योद्यम्य प्रेयांसं प्रियतमम्। प्रियस्थिरेत्यादिना प्रादेशः। सिञ्चन्त्याः स्नपयन्त्याः अङ्गनायाः कराग्रात् सौवर्णं हिरण्मयं वलयं कङ्कणम्। कङ्कणं वलयोऽस्त्रियामित्यमरः। लवणमेव लावण्यं कान्तिविशेषः। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः। लवणो रस-दैत्योऽब्धिभेदेषु लवणा त्विषीति विश्वः। यद्वा मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते। तस्य श्रीः सम्पत् तस्याः शेषमतिरिक्तमवशिष्टमिति यावत्। शेषः सङ्कर्षणेऽनन्ते उपयुक्तेतरेऽन्यवदिति विश्वः। तदिवावागलदपतत्। शेषमिति गुणनिमित्तजातिस्वरूपोत्प्रेक्षा॥३४॥

**टिप्पनी**—सिञ्चन्त्या इति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥३४॥

**বাঙ্গালা**—কামপীড়ায় পীড়িত কোন রমণী বাহু উত্তোলন করিয়া, প্রিয়তমকে সিক্ত করিতেছিল; তখন তাহার হস্তাগ্র হইতে সুবর্ণবলয়; লাবণ্যশোভার অবশিষ্টের ন্যায় পড়িয়া গেল ॥৩৪॥

**अन्वयः**—कन्दर्प-प्रवण-मनाः दृशं निधाय स्निह्यन्ती अपरा सखी सिसिक्षा-लक्ष्येण प्रतियुवं मूर्तेन प्रणयरसेन इव वारिणा पूर्णम् अञ्जलिं चकार॥३५॥

**टीका**—स्निह्यन्तीति। कन्दर्पप्रवणमनाः स्मरपरवशचित्ता अतएव दृशं निधाय पुंस्येव दृष्टिं कृत्वा स्निह्यन्ती दृष्टिविशेषेण स्नेहं प्रकाशयन्तीत्यर्थः। अपरा स्त्री सख्याः सिसिक्षा सेक्तुमिच्छा तस्याः लक्ष्येण व्याजेन बद्धाञ्जलिरेव तिष्ठन्ती न तु सिञ्चन्तीति द्योतनाय सिषिचेरीच्छायां सनः प्रयोगः। प्रतियुवं युवानं प्रति। अनश्चेत्यव्ययीभावसमासान्तः। मूर्तेन मूर्तिमता प्रणयरसेनेवेत्युत्प्रेक्षा। पाठादर्थस्य बलीयस्त्वादिवशब्दस्य व्यवहितेनान्वयः वारिणा पूर्णमञ्जलिञ्चकार प्रार्थयामासेत्यर्थः॥३५॥

**टिप्पनी**—स्निह्यन्तीति। अत्रापि रसादयः पूर्ववत्॥३५॥

**বাঙ্গালা**—কাম-পরবশা অন্য কোন রমণী, আপন প্রিয়তমের প্রতি দৃষ্টিবিশেষ

आनन्दं दधति मुखे करोदकेन श्यामाया दयिततमेन सिच्यमाने ।
ईर्ष्यन्त्या वदनमसिक्तमप्यनल्पस्वेदाम्बुस्नपितमजायतेतरस्याः ॥३६॥
उद्वीक्ष्य प्रियकरकुड्मलापविद्धैर्वक्षोजद्वयमभिषिक्तमन्यनार्याः ।
अम्भोभिर्मुहुरसिचद्वधूरमर्षादात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥३७॥

---

দ্বারা প্রণয় প্রকাশ করতঃ, সখীকে সেচন করার ইচ্ছার ছলে সেই যুবকের প্রতি মূর্ত্তিমান্ প্রণয়রসের ন্যায় জল দ্বারা অঞ্জলি পূর্ণ করিল ॥৩৫॥

**अन्वयः**—आनन्दं दधति श्यामायाः मुखे दयिततमेन करोदकेन सिच्यमाने (सति), ईर्ष्यन्त्याः इतरस्याः वदनम् असिक्तम् अपि अनल्पस्वेदाम्बुस्नपितम् अजायत ॥३६॥

**टीका**—आनन्दमिति । आनन्दं दधति प्रियसम्भावनया हर्षं दधाने श्यामाया मध्यमयौवनायाः स्त्रियः । श्यामा यौवनमध्यस्थेत्युत्पलः । मुखे वदने दयिततमेन अतिशयेन दयितः प्रियः । अतिशये तमप् प्रत्ययः । तेन कर्त्रा करोदकेनाञ्जलिजलेन सिच्यमाने सति ईर्ष्यन्त्याः असहमानायाः । परोत्कर्षासहनमीर्ष्या स्यादिति लक्षणात् । इतरस्याः सपत्न्या वदनमसिक्तमपि प्रियेणेति शेषः । अनल्पेन स्वेदाम्बुना स्नपितं सिक्तमजायताभवत् ईर्ष्याकृतकोपकार्य्यत्वात् स्वेदादीनामिति भावः । असिक्तमपि सिक्तमिति विरोधः । तस्य स्वेदाख्यकारणोक्त्याभासत्वम् ॥३६॥

**टिप्पनी**—आनन्दमिति । अत्र विरोधाभासोऽलङ्कारः, सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३६॥

**বাঙ্গালা**—মধ্যমযৌবনা কোন রমণীর হর্ষপ্রফুল্ল মুখ খানিকে হস্ত জল দ্বারা প্রিয়তম সিক্ত করিতে লাগিলে, ঈর্ষ্যাপরায়ণা সপত্নীর মুখখানি অসিক্ত হইলেও, প্রচুর ঘর্ম্মজলে সিক্ত হইয়াছিল ॥৩৬॥

**अन्वयः**—प्रियकरकुड्मलापविद्धैः अम्भोभिः अन्यनार्य्याः वक्षोजद्वयम् उद्वीक्ष्य वधूः अमर्षात् पृथुतर-नेत्र-युग्म-मुक्तैः (अम्भोभिः) आत्मीयं (वक्षोजद्वयं) मुहुः असिचत् ॥३७॥

**टीका**—उद्वीक्ष्येति । प्रियस्य करकुड्मलाभ्यां पाणिपुटाभ्यामपविद्धैः सिक्तैरम्भोभिरभिषिक्तं अन्यनार्य्याः सपत्न्याः वक्षोजद्वयमुद्वीक्ष्य वधूर्नायिका अमर्षादीर्ष्याकृतकोपादात्मीयं वक्षोजद्वयं पृथुतराभ्यां नेत्रयुग्मेन मुक्तैरम्भोभिर्बाष्पैर्मुहुरसिचत् अभिषिक्तवती । तत्सम्बरादिवेति भावः । अतो वस्तुनालङ्कारध्वनिः । लिपिसिचिह्वश्चेति सिचतेर्लुङि च्लेरङादेशः ॥३७॥

**टिप्पनी**—उद्वीक्ष्येति । अत्र सेकं प्रति तादृग्वीक्षणं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, रसादयः पूर्ववत् ॥३७॥

**বাঙ্গালা**—প্রিয়তম, করমুকুল নিক্ষিপ্ত জল দ্বারা সপত্নীর স্তনযুগল সিক্ত করিতেছেন ইহা দেখিয়া, অন্য রমণী, ক্রোধবশতঃ বিশাল নয়নযুগলের জল দ্বারা নিজের স্তন দুইটীকে অনবরত সিক্ত করিতে লাগিল ॥৩৭॥

कुर्वद्भिर्मुखरुचिमुज्ज्वलाममजस्रं यैस्तोयैरसिचत वल्लभां विलासी।
तैरेव प्रतियुवतेरकारि दूरात् कालुष्यं शशधरदीधितिच्छटाच्छैः॥३८॥
रागान्धीकृतनयनेन नामधेयव्यत्यासादभिमुखमीरितः प्रियेण।
मानिन्या वपुषि पतन्निसर्गमन्दो भिन्दानो हृदयमसाहि नोदवज्रः॥३९॥

---

अन्वयः—विलासी मुखरुचिम् उज्ज्वलां कुर्वद्भिः यैः तोयैः अजस्रं वल्लभाम् असिचत, शशधरदीधितिच्छटाच्छैः तैः एव दूरात् प्रतियुवतेः कालुष्यम् अकारि॥३८॥

टीका—कुर्वद्भिरिति। मुखरुचिं मुखकान्तिम् उज्ज्वलां कुर्वद्भिर्यैस्तोयैर्विलासी विलसनशीलः कामी। वौ कषलसेत्यादिना घिनुण् प्रत्ययः। वल्लभामजस्रमसिचत सिक्तवान्। स्वरितेत्त्वादात्मनेपदम् आत्मनेपदेष्वन्यतरस्यामिति सिचतेर्लुङि च्लेरङादेशः। शशधरदीधितिच्छटाच्छैः शशिकरनिकरस्वच्छैः तैरेव तोयैर्दूरात् प्रतियुवतेः सपत्न्याः कालुष्यम् आविलत्वं वैवर्ण्यञ्चाकारि स्वच्छतोयैः कालुष्यं कृतमिति विरुद्धकार्योत्पत्तिरूपो विषमभेदः। तच्चान्यत्वेऽप्यसङ्गतिः वैवर्ण्यकालुष्ययोरभेदाध्यवसायादतिशयोक्तिस्तदुत्थापितेति सङ्करः॥३८॥

टिप्पनी—कुर्वद्भिरिति। अत्र छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। रसादयः पूर्ववत्॥३८॥

বাঙ্গালা—বিলাসী যুবক, মুখকান্তির উজ্জ্বলতাকারী যে জল দ্বারা প্রিয়তমাকে সিক্ত করিতেছিল; চন্দ্রকিরণরাশির ন্যায় নির্ম্মল সেই জলই দূর হইতে সপত্নীর আবিলতা জন্মাইল।৩৮॥

अन्वयः—रागान्धीकृतनयनेन प्रियेण नामधेयव्यत्यासात् अभिमुखम् ईरितः वपुषि पतन् निसर्गमन्दः हृदयं भिन्दानः उदवज्रः मानिन्या न असाहि॥३९॥

टीका—रागेति। रागेण विपक्षानुरागेणान्धीकृतनयनेन प्रियेण नामधेयव्यत्यासात् विपक्षनामपूर्वकमभिमुखमीरितः क्षिप्तो वपुषि पतन् निसर्गमन्दः स्वभावजडः अथापि हृदयम्भिन्दानो विदारयन् उदकमेव वज्रोऽशनिरुदवज्रः। मन्थौदनेत्यादिना विकल्पादुदादेशः। मानिन्या विपक्षनामश्रवणजनितकोपवत्या नायिकया नासाहि न सोढः। तीक्ष्णयोगादतीक्ष्णमपि तीक्ष्णं भवतीति भावः। उदवज्र इति कोपनिरवयवरूपकम्॥३९॥

टिप्पनी—रागेति। अत्र निसर्गमन्दोऽपि हृदयं भिन्दान इति विरोधाभासः छेकानुप्रासश्चेति टीकोक्तरूपकेण सह संसृष्टिः। मानाख्यः शृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः॥३९॥

বাঙ্গালা—অনুরাগে নয়নযুগল অন্ধ হইয়া গিয়াছিল বলিয়া, প্রিয়তম বিপরীত নামে আহ্বান করিয়া সম্মুখের দিকে জলবিন্দু সকল নিক্ষেপ করিতেছিল; স্বভাবতঃ ক্ষুদ্র হইলেও সেই সকল জলবিন্দুরূপ বজ্র শরীরে পতিত হইতে থাকিয়া, হৃদয় বিদারণ করিতেছিল বলিয়া মানিনী তাহা সহ্য করিতে পারিয়াছিল না।৩৯॥

প্রেম্ণোরঃ প্রণয়িনি সিঞ্চতি প্রিয়ায়াঃ সন্তাপং নবজলবিপ্রুষো গৃহীত্বা।
উদ্ভূতাঃ কঠিনকুচস্থলাভিঘাতাদাসন্নাং ভৃশমপরাঙ্গনামধাক্ষুঃ ॥৪০॥
সংক্রান্তং প্রিয়তমবক্ষসোঽঙ্গরাগং সাধ্বস্যাঃ সরসি হরিষ্যতেঽধুনাম্ভঃ।
তুষ্টৈবং সপদি হৃতেঽপি তত্র তেপে কস্যাশ্চিৎ স্ফুটনখলক্ষ্মণঃ সপত্ন্যা ॥৪১॥

---

**অন্বয়ঃ**—প্রণয়িনি প্রেম্ণা প্রিয়ায়াঃ উরঃ সিঞ্চতি সতি কঠিনকুচস্থলাভিঘাতাৎ উদ্ভূতাঃ নবজলবিপ্রুষঃ (তস্যাঃ) সন্তাপং গৃহীত্বা আসন্নাম্ অপরাঙ্গনাং ভৃশম্ অধাক্ষুঃ ॥৪০॥

**টীকা**—প্রেম্ণেতি। প্রণয়িনি প্রেম্ণা প্রিয়ায়া উরঃ সিঞ্চতি সতি কঠিনকুচস্থলাভিঘাতাদুদ্ভূতা উৎপন্নাঃ নবজলস্য বিপ্রুষো বিন্দবঃ। পৃষন্তি বিন্দুপৃষতাঃ পুমাংসো বিপ্রুষঃ স্ত্রিয়ামিত্যমরঃ। তস্যাঃ সিক্তায়াঃ সন্তাপং গৃহীত্বা আদায়াসন্নাং সমীপস্থামপরাঙ্গনাং সপত্নীং ভৃশমধাক্ষুঃ সন্তাপয়ন্তি স্ম। দহতের্লুঙি বদব্রজেত্যাদিনা সিচি বৃদ্ধিঃ ষত্বাদিকার্য্যম্। তৎসংক্রান্ত্যৈবাপরস্যাঃ তাপোদয়াত্তাপস্যৈবাধানমুৎপ্রেক্ষ্যতে সা চ ব্যঞ্জকাপ্রয়োগাদ্গম্যা ॥৪০॥

**টিপ্পনী**—প্রেম্ণেতি। অত্র মানাখ্যঃ শৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪০॥

**বাঙ্গালা**—প্রণয়ী পুরুষ, প্রণয়বশতঃ প্রিয়তমার বক্ষঃস্থল সিক্ত করিতে লাগিলে, তাহার কঠিন স্তনের আঘাতে নূতন জলবিন্দু উৎপন্ন হইয়া, তাহার সন্তাপ লইয়া, নিকট-বর্ত্তিনী সপত্নীকে অত্যন্ত সন্তপ্ত করিতে লাগিল ॥৪০॥

**অন্বয়ঃ**—সরসি অম্ভঃ প্রিয়তমবক্ষসঃ সংক্রান্তম্ অস্যাঃ অঙ্গরাগম্ অধুনা সাধু হরিষ্যতে এবং তুষ্টা সপদি তত্র হৃতে অপি স্ফুটনখলক্ষ্মণঃ কস্যাশ্চিৎ সপত্ন্যা তেপে ॥৪১॥

**টীকা**—সংক্রান্তমিতি। প্রিয়তমবক্ষসঃ সকাশাৎ সংক্রান্তং গাঢ়ালিঙ্গনাৎ কুচতট-লগ্নম্ অস্যাঃ সিক্তায়াঃ অঙ্গরাগমধুনৈব সরসি অম্ভঃ কর্ত্তৃ। সাধু নিঃশেষং হরিষ্যতি প্রমার্ক্ষ্যতি এবন্তুষ্টা হৃষ্টা সতী সপদি তত্র তস্মিন্নঙ্গরাগে হৃতেঽপি স্ফুটনখলক্ষ্মণো ব্যক্তনখ-চিহ্নায়াঃ কস্যাশ্চিন্নায়িকায়াঃ সম্বন্ধিনি সপত্ন্যা তেপে তপ্তম্। ভাবে লিট্। তদিদমাত-পাত্তস্য ছায়ামন্বিষ্যতো দাবদহনবেষ্টনং যদঙ্গরাগমেব দ্রষ্টুমক্ষমায়া নখব্রণস্যাবিষ্কারং ইতি। অত্র সন্তাপপ্রাপ্ত্যর্থেন বিপক্ষাঙ্গনাঙ্গরাগক্ষালনেন তদ্বিরুদ্ধসন্তাপোৎপাদনাদ্বিরুদ্ধ-কার্য্যোৎপত্তিরূপো বিষমালঙ্কারঃ ॥৪১॥

**টিপ্পনী**—সংক্রান্তমিতি। অত্রাপি রসাদয়ঃ পূর্ব্ববৎ ॥৪১॥

**বাঙ্গালা**—ইহার স্তনতটে প্রিয়তমের বক্ষ হইতে যে অঙ্গরাগ লাগিয়াছিল; সরো-বরের জল তাহা এখন সম্পূর্ণরূপে হরণ করিবে; ইহা ভাবিয়া তাহার সপত্নী মনে মনে সন্তুষ্ট হইল; সরোবরের জলও, তৎক্ষণাৎ সে অঙ্গরাগকে হরণ করিল বটে; কিন্তু তাহাতে সেই রমণীর স্তনতটের নখক্ষত গুলি স্পষ্টভাবেই প্রকাশ পাইল; তাহাতে সেই সপত্নী সন্তপ্ত হইল ॥৪১॥

ह्रतायाः प्रतिसखि कामिनान्यनाम्ना ह्रीमत्याः सरसि गलन्मुखेन्दुकान्तेः ।
अन्तर्द्धिं द्रुतमिव कर्त्तुमश्रुवर्षैर्भूमानं गमयितुमीषिरे पयांसि ॥४२॥
सिक्तायाः क्षणमभिषिच्य पूर्वमन्यामन्यस्याः प्रणयवता नवाबलायाः ।
कालिम्ना समधित मन्युरेव वक्त्रं प्रापाक्ष्णोर्गलदपशब्दमञ्जनाम्भः ॥४३॥

---

अन्वयः—कामिना प्रतिसखि अन्यनाम्ना ह्रतायाः गलन्मुखेन्दुकान्तेः ह्रीमत्याः (कस्याश्चित्) सरसि द्रुतम् अन्तर्द्धिं कर्त्तुम् अश्रुवर्षैः सरसि पयांसि भूमानं गमयितुम् ईषिरे इव ॥४२॥

टीका—ह्रताया इति । प्रतिसखि सख्याः समीपे सखीसमक्षमित्यर्थः । समीपार्थेऽव्ययीभावे नपुंसकत्वच्च ह्रस्वत्वं । कामिना प्रियेणान्यस्याः सपत्न्याः नाम्ना अन्यनाम्ना । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । ह्रतायाः अतएव गलन्मुखेन्दुकान्तेः ह्रीमत्याः लज्जितायाश्च कस्याश्चिदिति शेषः । सरसि द्रुतं शीघ्रमन्तर्द्धिं अन्तर्द्धानम् । अदन्तरोरुपसर्गं वद्वृत्तिवचनादुपसर्गे घोः किरिति किप्रत्ययः । कर्त्तुमश्रुवर्षैः कर्त्तृभिः पयांसि सरोजलानि भूमानं गमयितुं वृद्धिमापयितुम् । गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वं प्राधान्यादभिधानञ्च । ईषिरे इव इष्टानि किन्तु इत्युत्प्रेक्षेयमश्रुपातनिमित्ता तथा मरणदुःखादपि दुःसहं सपत्न्याः दुःखमिति वस्तुध्वनिः ॥४२॥

टिप्पनी—ह्रताया इति । अत्रापि रसादयः पूर्ववत् ॥४२॥

বাঙ্গালা—কোন কামুক যুবা, সখী নিকটে থাকিতে সপত্নীর নাম করিয়া কোন রমণীকে আহ্বান করিল ; তাহাতে সেই রমণীর মুখকান্তি নষ্ট হইয়া গেল এবং সে লজ্জিত হইল ; তাহার পর, সরোবরের জলে তাড়াতাড়ি তাহার অন্তর্দ্ধান করিবার জন্যই যেন তাহার অশ্রুপাত সেই সরোবরের জলকে বৃদ্ধি করিতে সমর্থ হইল ॥৪২॥

अन्वयः—प्रणयवता क्षणं पूर्वम् अन्याम् अभिषिच्य सिक्तायाः अन्यस्याः नवबालायाः मन्युः एव कालिम्ना (सह) वक्त्रं समधित ; यावत् अक्ष्णोः अञ्जनाम्भः अपशब्दं प्राप ॥४३॥

टीका—सिक्ताया इति । प्रणयवता प्रियेण क्षणं पूर्वमन्यां सपत्नीमभिषिच्य पश्चात् सिक्ताया अन्यस्या अबलायाः स्त्रिया वक्त्रं कर्म मन्युः कोप एव कर्त्ता कालिम्ना कार्ष्ण्येन वैवर्ण्येन सहेति यावत् समधित सन्दधे वर्तते स्वेदे । सम्पूर्वाद्दधातेः कर्त्तरि लुङि तङ्, स्थाध्वोरितीकारः, सिचः कित्त्वान्न गुणः, ह्रस्वादङ्गादिति सकारलोपः । गलत् स्रवदक्ष्णोः सम्बन्धि अञ्जनाम्भः कज्जलोदकमपशब्दं वर्णस्यापवादमपि कोपकालिमतिरोधानेन स्वकालिम्न एव प्रकाशनादिति भावः । पूर्वस्य वाक्यार्थेनोत्तरवाक्यार्थसमर्थनाद्वाक्यार्थहेतुकाव्यलिङ्गम् ॥४३॥

टिप्पनी—सिक्ताया इति । अत्र द्वितीयपादे छेकानुप्रासोऽपीति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः । रसादयः पूर्ववत् ॥४३॥

উদ্বোঢ়ুং কনকবিভূষণান্যশক্তঃ সধ্রীচা বলয়িতপদ্মনালসূত্রঃ।
আরূঢ়প্রতিবনিতাকটাক্ষভারঃ সাধীয়ো গুরুরভবদ্ ভুজস্তরুণ্যাঃ ॥৪৪॥
আবদ্ধপ্রচুরপরার্ধ্যকিঙ্কিণীকো রামাণামনবরতোদগাহভাজাম্ ।
নারাবং ব্যতনুত মেখলাকলাপঃ কস্মিন্ বা সজলগুণে গিরাং পটুত্বম্ ॥৪৫॥

---

বাঙ্গালা—প্রিয়তম প্রথমে কিছু কাল সতীনের গায়ে জল ছিটাইয়া, পরে অন্য স্ত্রীর গায়ে জল ছিটাইল; তাহাতে তাহার কোপই তাহার মুখ খানাকে কালিমার সহিত যে গ করিয়া দিল; কিন্তু চোখ দিয়া কাজলের জল পড়িতে থাকিয়া, ( সেই কালিমা করার ) নিন্দা ভোগ করিল ॥৪৩॥

অন্বয়:—কনকবিভূষণানি উদ্বোঢ়ুম্ অশক্তঃ সধ্রীচা বলয়িতপদ্মনালসূত্রঃ আরূঢ়প্রতিবনিতাকটাক্ষভারঃ তরুণ্যাঃ ভুজঃ সাধীয়ঃ গুরুঃ অভবৎ ॥৪৪॥

টীকা—উদ্বোঢুমিতি। কনকবিভূষণান্যুদ্বোঢুমশক্তঃ সৌকুমার্য্যাদিতি ভাবঃ। অতএব সহাঞ্চতীতি সধ্র্যঙ্ তেন সহচরেণ কর্ত্রা। ঋত্বিগাদিনা ক্বিন্প্রত্যয়ঃ, সহস্য সধ্রিরিতি সহশব্দস্য সধ্র্যাদেশঃ, অনিদিতামিতি নকারলোপঃ, অচ ইত্যকারলোপে চাবিতি দীর্ঘঃ। বলয়িতানি বলয়ীকৃতানি পদ্মনালসূত্রাণি মৃণালতন্তবো যস্য সঃ মৃণালকঙ্কণ ইত্যর্থঃ। তথাপি আরূঢ়ঃ আরূঢ়বান্ প্রতিবনিতায়াঃ সপত্ন্যাঃ কটাক্ষ এব ভারো যস্য সঃ তথা সাসূয়ং দৃষ্ট ইত্যর্থঃ। অতএব তরুণ্যা ভুজো বাহুঃ সাধীয়ো বাঢ়তরমিতি ক্রিয়াবিশেষণম্। অন্তিকবাঢ়য়োর্নেদসাধাবিতি বাঢ়শব্দস্য সাধাদেশঃ। গুরুর্ভারবান্ শ্লাঘ্যশ্চাভবৎ। অত্র কনকভূষণাভাবেঽপি তৎকার্য্যগুরুত্ববর্ণনাদ্বিভাবনা। সা চ গুরুরিতি শ্লেষপ্রতিভোত্থাপিতাতিশয়োক্ত্যানুপ্রাণিতেতি সঙ্করঃ ॥৪৪॥

টিপ্পনী—উদ্বোঢুমিতি। অত্র সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪৪॥

বাঙ্গালা—কোন যুবতির হস্তযুগল, (নিতান্ত কোমল বলিয়া) স্বর্ণময় অলঙ্কারের ভার বহন করিতে অসমর্থ ছিল; তাই প্রিয়তম তাহার হস্তে মৃণালের বলয় পরাইয়া দিয়াছিল; তাহাতেই সপত্নীর কটাক্ষভার তাহার হস্তে পতিত হইয়াছিল; সুতরাং সে হস্ত ভারী হইয়াছিল ॥৪৪॥

অন্বয়:—অনবরতোদগাহভাজাং রামাণাং (সম্বন্ধী) আবদ্ধ-প্রচুর-পরার্ধ্য-কিঙ্কিণীকঃ মেখলা-কলাপঃ আরাবং ন ব্যতনুত। সজলগুণে কস্মিন্ বা গিরাং পটুত্বং (স্যাৎ) ॥৪৫॥

টীকা—আবদ্ধেতি। উদকস্য গাহোঽবগাহনম্ উদগাহঃ। মন্থৌদনেত্যাদিনা উদাদেশঃ। তমনবরতং ভজন্তি যাস্তাসামনবরতোদগাহভাজাং রামাণাং স্ত্রীণাং সম্বন্ধী আবদ্ধাঃ প্রোতাঃ প্রচুরা ভূয়িষ্ঠাঃ পরার্ধ্যাঃ শ্রেষ্ঠাশ্চ কিঙ্কিণ্যো যস্মিন্ সঃ তথোক্তঃ। নদ্যৃতশ্চেতি কপ্। মেখলাকলাপঃ আরাবং ধ্বনিং ন ব্যতনুত। তথাহি, জলেন সহ সজলো জলার্দ্রো গুণঃ সূত্রং যস্য স তথা ডলয়োরভেদাজ্জড়গুণো জড়ধর্মো জাড্যং তেন সহিতি স

पर्यच्छे सरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुरावपत्रपिष्णोः।
सुश्रोण्या दलवसनेन वीचिहस्तन्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥४६॥
नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकासिवारिजानाम्।
लोलत्वादपहरतां तदङ्गरागं संजज्ञे स कलुष आशयो जलानाम् ॥४७॥

---

जडगुणो जडस्य तस्मिन् काञ्चिद् वा मेखलाकलापे पुंसि वा गिरां वाचां ध्वनीनाञ्च पटुत्वं, सामर्थ्यं न कुत्रापीत्यर्थः। श्लेषमुखाभेदातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥४५॥

**टिप्पनी**—आयत्तेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

**বাঙ্গালা**—যে সকল রমণীরা অনবরত জলে অবগাহন করিতেছিল, তাহাদের চন্দ্রহারে বহুতর উৎকৃষ্ট কিঙ্কিণী বাঁধা ছিল; তথাপি সে চন্দ্রহার কোন শব্দ করিয়াছিল না। কারণ, যাহার গুণ জলসংযুক্ত থাকে, সে রকম কোন্ অলঙ্কারের শব্দ করিবার শক্তি থাকে ॥৪৫॥

**अन्वयः**—पर्यच्छे सरसि पयोभिः अंशुके हृते [सति] सुरतगुरौ [च] लोलाक्षे (सति), अपत्रपिष्णोः सुश्रोण्याः अब्जिनी वीचिहस्तन्यस्तेन दलवसनेन द्रुतं सखीत्वम् अकृत ॥४६॥

**टीका**—पर्यच्छ इति। परि परितोऽच्छं स्वच्छम् अन्तर्गतवस्तुतिरोधायकमित्यर्थः। तस्मिन् सरसि पयोभिरंशुके स्त्रीपरिधाने हृते स्थानादपसारिते सति सुरतगुरौ रमणे च लोलाक्षे श्रोण्यासक्तदृष्टौ सतीत्यर्थः। लोलश्चलसतृष्णयोरित्यमरः। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्। अपत्रपिष्णोरपत्रपमाणायाः। लज्जा सापत्रपान्यत इत्यमरः। अलङ्कृञित्यादिना इष्णुच् प्रत्ययः। सुश्रोण्याः प्रियायाः प्रस्तुतोचितनिर्देशोऽयम् अब्जिनी नलिनी द्रुतं वीचिरेव हस्तस्तेन न्यस्तेन दलं पत्रमेव वसनन्तेन तद्दानेनेत्यर्थः। सखीत्वम् अकृत सखीकृत्यञ्चकारेत्यर्थः। अत्राब्जिन्यादिषु सखीत्वाद्यारोपात् समस्तवस्तुवर्त्ति सावयवरूपकम् ॥४६॥

**टिप्पनी**—पर्यच्छ इति। अत्र वीचिहस्तन्यस्तेनेत्यत्र छेकानुप्रास इति टीकोक्तरूपकेण सह संसृष्टिः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

**বাঙ্গালা**—নির্ম্মল সরোবরের ভিতরে, জলে সুন্দরনিতম্বা রমণীর কাপড় খুলিয়া ফেলিলে, তাহার স্বামী চঞ্চলনয়নে সেই নিতম্বের উপরে দৃষ্টিপাত করিতে লাগিলে; সে রমণী লজ্জিতা হইয়া পড়িল; তখন পদ্মিনী তরঙ্গরূপ হস্ত দ্বারা তাহার নিতম্বের উপরে তাড়াতাড়ি পত্ররূপ বসন তুলিয়া দিয়া তাহার সখীর কার্য্য করিল ॥৪৬॥

**अन्वयः**—नारीभिः गुरुजघनस्थलाहतानाम् आस्यश्री-विजित-विकासि-वारिजानां तदङ्गरागम् अपहरतां जलानां सः आशयः कलुषः सञ्जज्ञे ॥४७॥

**टीका**—नारीभिरिति। नारीभिः कर्त्रीभिः गुरुजघनस्थलैराहतानाम् आस्यश्रीभिर्मुखशोभाभिर्विजितानि विकासीनि वारिजानि पद्मानि येषान्तेषां लोलत्वाच्चञ्चलत्वात् सतृष्ण-

सौगन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्गतमहमाननोपमानम्।
नेदीयो जितमिति लज्जयेव तासामालोले पयसि महोत्पलं ममज्ज ॥४८॥
प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः।
आकल्पैः सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि ॥४९॥

---

त्वाच्च। लोलश्चलसतृष्णयोरित्यमरः। तासामङ्गरागमपहरतां चालयतां च जलानां तोयानां जडानां च स आशयो ह्रदो हृदयं च कलुषोऽप्रसन्नः क्षुभितश्च सञ्जातः। अपहर्त्तुस्ताडन-स्वहरणादिभिराशयः कलुषो भवतीति ध्वनिः। अभिधायाः प्रकृतार्थे नियन्त्रणान्न श्लेषः ॥४७॥

**टिप्पनी**—नारीभिरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४७॥

**বাঙ্গালা**—রমণীরা বিশাল উরু দ্বারা সরোবরের জলকে আঘাত করিয়াছিল এবং তাহাদের মুখশোভা, প্রস্ফুটিত পদ্মগুলিকে জয় করিয়াছিল; এদিকে জলও তাহাদের অঙ্গরাগগুলি হরণ করিয়াছিল; সুতরাং সে জলাশয় আবিল হইয়াছিল ॥৪৭॥

**अन्वयः**—कामं सौगन्ध्यं दधत् अपि अहं दूरत्वात् अङ्गनानाम् आननोपमानं गतम्; तासां नेदीयः (सत्) जितम् इति लज्जया इव महोत्पलम् आलोले पयसि ममज्ज ॥४८॥

**टीका**—सौगन्ध्यमिति। कामं पर्य्याप्तं सौगन्ध्यं सुरभिगन्धित्वं सम्बन्धित्वं च। गन्धो गन्धक आमोदे लेशे सम्बन्धिगर्वयोरिति विश्वः। दधदपि अहं दूरत्वात् पूर्वं दूरस्थ-त्वादङ्गनानामाननोपमानं मुखसादृश्यं गतम्। दूरस्थाः पर्वता रम्या इतिवदिति भावः। सम्प्रति पुनस्तासां नेदीयो नेदिष्ठमन्तिकतमं सत्। अन्तिकबाढयोर्नेदसाधावित्यन्तिकशब्दस्य नेदादेशः। जितं परिभूतमभूवमिति लज्जयेव महोत्पलमरविन्दम् आलोले चले पयसि ममज्ज यथा दूरे साम्येन दृश्यमानः सम्बन्धी सन्निधाववमानितः कश्चिल्लज्जया निलीयते तद्व-दिति। अत्र पयश्चलनकृतेऽब्जमज्जने लज्जाहेतूत्प्रेक्षयोः संसृष्टिः ॥४८॥

**टिप्पनी**—सौगन्ध्यमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

**বাঙ্গালা**—'আমি প্রচুর পরিমাণে সৌরভ ধারণ করতঃ, দূরত্ববশতই রমণীদিগের মুখের উপমানতা লাভ করিয়াছিলাম; কিন্তু এখন তাহাদের নিকটবর্ত্তী হইয়া পরাজিত হইলাম' এই লজ্জাবশতই যেন পদ্ম সকল, চঞ্চল জলে মগ্ন হইতে লাগিল ॥৪৮॥

**अन्वयः**—सरभसम् अम्भसः अवगाहक्रीडाभिः प्रभ्रष्टैः विदलित-यूथिका-पिशङ्गैः हिरण्मयैः वधूनाम् आकल्पैः सरसि और्वाग्निद्युतिशकलैः इव व्यराजि ॥४९॥

**टीका**—प्रभ्रष्टैरिति। सरभसं सत्वरम् अम्भसोऽवगाहा एव क्रीडास्ताभिः प्रभ्रष्टै-र्जलावगाहक्षोभादम्भसि च्युतैर्विदलिता विकसिता यूथिकाः पीतयूथिका हेमपुष्पिका-पर्य्याया विवक्षिताः अन्यथा पिशङ्गत्वायोगात्। गणिका यूथिकाम्बष्ठा सा पीता हेम-पुष्पिकेत्यमरः। तद्वत्पिशङ्गैर्हिरण्मयैः सौवर्णैः। दाण्डिनायनेत्यादिना निपातः। वधू-

আস্মাকী যুবতিদৃশামসৌ তনোতি ছায়ৈব শ্রিয়মনপায়িনীং কিমেভিঃ।
মত্বৈবং স্বগুণপিধানসাভ্যসূয়ৈঃ পানীয়ৈরিতি বিদধাবিরেঽঞ্জনানি ॥৫০॥

---

নামাকল্পভূষণৈঃ সরসি ঔর্ব্বাগ্নিদ্যুতিমকলন্ জলাশয়ত্বাদত্রাপি সন্নিহিতৈর্বড়বানল-জ্বালাখণ্ডৈরিবেত্যুৎপ্রেক্ষা। ব্যরাজি বিরাজিতম্। ভাবে লুঙ্ ॥৪৯॥

টিপ্পনী—প্রভূষ্টৈরিতি। অত্র প্রথমে পাদে ছেকানুপ্রাসো দ্বিতীয়ে লুপ্তোপমাপীতি টীকোক্তয়া উৎপ্রেক্ষয়া সহ তয়োঃ সংসৃষ্টিঃ। গুণরীতী পূর্ব্ববৎ ॥৪৯॥

বাঙ্গালা—সত্বর জলখেলা করিতে থাকায় রমণীগণের সোণার অলঙ্কার গুলি খুলিয়া পড়িয়াছিল; ফোটা যুই ফুলের ন্যায় পিঙ্গলবর্ণ সেই অলঙ্কারগুলি, বড়বানল খণ্ডসমূহের ন্যায় দীপ্তি পাইতে লাগিল ॥৪৯॥

অন্বয়ঃ—আস্মাকী অসৌ ছায়া এব যুবতিদৃশাম্ অনপায়িনীং শ্রিয়ং তনোতি (অতএব) এভিঃ কিম্, এবং মত্বা (ইব) স্বগুণপিধানসাভ্যসূয়ৈঃ পানীয়ৈঃ ইতি অঞ্জনানি বিদধাবিরে ॥৫০॥

টীকা—আস্মাকীতি। অস্মাকমিয়মাস্মাকী অস্মদীয়া অস্মদুক্তারিতীত্যর্থঃ। যুষ্মদস্মদোরন্যতরস্যাং খঞ্চেতি চকারাদণ্ প্রত্যয়ঃ, তস্মিন্নপি চ যুষ্মাকাস্মাকাবিতি প্রকৃতেরস্মাকাদেশঃ টিড্ঢাণঞিত্যাদিনা ঙীপ্। অসৌ ছায়া কান্তিঃ বিমলেতি যাবৎ সৈব যুবতিদৃশাম্ অনপায়িনীং স্থায়িনীং শ্রিয়ং তনোতি এভিরঞ্জনৈঃ কিম্ এতৎ সাধ্যং কিঞ্চিদস্তীত্যর্থঃ। গম্যমানসাধনাপেক্ষয়া করণত্বাৎ তৃতীয়া ইত্যুক্তং প্রাক্। এবং মত্বা উক্তপ্রকারেণাঞ্জনৈর্বৈফল্যং নিশ্চিত্যেত্যর্থঃ। অতএব গম্যোৎপ্রেক্ষেয়ম্। স্বগুণস্য স্বাবিষ্কৃতদৃঙ্নৈর্ম্মল্যগুণস্য পিধানং তিরোধানম্। অপিধানতিরোধানপিধানাচ্ছাদনানি চেত্যমরঃ। বষ্টি ভাগুরিরল্লোপমবাপ্যোরুপসর্গয়োরিত্যকারলোপঃ। তেন সাভ্যসূয়ৈঃ সের্ষ্যৈঃ পাতুমর্হৈঃ পানীয়ৈঃ। অম্ভোঽর্ণস্তোয়পানীয়নীরক্ষীরাম্বুশম্বরমিত্যমরঃ। তব্যত্তব্যানীয়র ইতি পিবতেরনীয়র্ প্রত্যয়ঃ। অঞ্জনানি কজ্জলানি ইতি অনেন স্বগুণপ্রকাশনযোগ্যতয়া বিবক্ষিতেন প্রকারেণ নিঃশেষত্বরূপেণেত্যর্থঃ। বিদধাবিরে বিধৌতানি ক্ষালিতানীত্যর্থঃ। ধাবু গতিশুদ্ধ্যোরিতি ধাতোঃ কর্ম্মণি লিট্ ॥৫০॥

টিপ্পনী—আস্মাকীতি। অত্র অঞ্জনক্ষালনং প্রতি শ্রীতননং হেতুরিতি বাক্যার্থহেতুকং কাব্যলিঙ্গম্, অর্থাপত্তিশ্চেতি টীকোক্তপ্রতীয়মানোৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। গুণরীতী পূর্ব্ববৎ ॥৫০॥

বাঙ্গালা—আমাদের এই নির্ম্মলতাগুণই যুবতিনয়নের স্থায়ী সৌন্দর্য্য বিস্তার করিতেছে; অতএব এই কাজলদিয়া আর কি হইবে; ইহা মনে করিয়াই যেন জল, সেই কাজলগুলিকে ধুইয়া ফেলিল; কেন না কাজল, জলের গুণ নীচে ফেলিয়াছিল বলিয়াই যেন সে জল ঈর্ষ্যান্বিত হইয়াছিল ॥৫০॥

निर्धौते सति हरिचन्दने जलौघैरापाण्डोर्गतपरभागयाङ्गनायाः ।
अङ्गाय स्तनकलशद्वयादुपेये विच्छेदः सहृदययेव हारयष्ट्या ॥५१॥
अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा ।
प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरेव ॥५२॥

---

**अन्वयः**—जलौघैः हरिचन्दने निर्धौते सति, आपाण्डोः अङ्गनायाः स्तनकलशद्वयात् गतपरभागया हारयष्ट्या सहृदयया इव अङ्गाय विच्छेदः उपेये ॥५१॥

**टीका**—निर्धौत इति। हरिचन्दने रक्तचन्दने जलौघैर्निर्धौते क्षालिते सति। धावेः कर्मणि क्तः, च्छ्वोः शूडनुनासिके चेति वकारस्योठादेशः एत्येधत्यूठ्स्विति वृद्धिरौकारः। आपाण्डोः पाण्डुवर्णादङ्गनायाः स्तनकलशद्वयात् गतपरभागया सावर्ण्याद्विगतवर्णोत्कर्षया। अतएव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्। हारयष्ट्या कर्त्रा सहृदयया सचित्तयेवेत्युत्प्रेक्षा। निजपरभागहानिपरिम्लानवत्येवेत्यर्थः। अङ्गाय सपदि। द्राक् झटित्यञ्जसाङ्गाय स्राङ् मङ्क्षु सपदि द्रुत इत्यमरः। विच्छेदस्त्रुटनमुपेये प्राप्तः। हीनजीवनादजीवनमेव वरमिति भावः। उपपूर्वादिणः कर्मणि लिट्। विक्षोभहेतुकस्य हारविच्छेदस्य सहृदयहेतुकत्वोत्प्रेक्षा सा चोक्तसामान्योत्थापितेति सङ्करः ॥५१॥

**टिप्पनी**—निर्धौते इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

**বাঙ্গালা**—জলে রক্ত চন্দন ধুইয়া ফেলিলে, রমণীর কুচকুম্ভ দুইটী পাণ্ডুবর্ণ হইয়া গেল; তাহাতেই মুক্তামালার বর্ণের উৎকর্ষ নষ্ট হইয়া গেল; সুতরাং সে মুক্তামালা যেন মনস্বী ব্যক্তির ন্যায় তাড়াতাড়ি বিচ্ছেদ প্রাপ্ত হইল ॥৫১॥

**अन्वयः**—अन्यूनम् अमृतस्य गुणं धारयन्ती संफुल्ल-स्फुरित-सरोरुहावतंसा प्रेयोभिः सह निषेव्यमाणा सरसी सुरा इव वधूदृशां रक्तत्वं व्यधित ॥५२॥

**टीका**—अन्यूनमिति। अन्यूनं समग्रममृतस्य पीयूषस्य गुणं माधुर्य्यादिकं धारयन्ती। अगन्धमव्यक्तरसं शीतलं च तृषापहम्। अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते। इति। उक्तोदकगुणांश्च धारयन्ती, सरसीपक्षे। अमृतं यज्ञशेषे स्यात् पीयूषे सलिले ध्रुवमिति विश्वः। संफुल्लानि विकचानि। उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानान्निष्ठातस्य लत्वम्। स्फुरितानि उज्ज्वलानि च यानि सरोरुहाण्येकत्र सहजानि अन्यत्र संस्कारार्थं क्षिप्तानि तान्यवतंसो भूषणं यस्याः सा तथोक्ता। प्रेयोभिः सह निषेव्यमाणा स्नानपानाभ्यामिति भावः। सरसी पुष्करिणी वधूदृशां रक्तत्वमारुण्यं व्यधित विधत्ते स्म। तथा सुरा च। व्यधितेति धाञः कर्त्तरि लुङि तङ्। दृष्टोत्साहवर्द्धनाय मुहुः सेव्यत्वाच्छृङ्गाणीति श्लोके सलिलक्रीड़ासम्भारेषु मार्द्वीकमिति परिगणनाच्च सरसीवत् सुराया अपि प्रकृतत्वविवक्षायां तुल्ययोगिता तदविवक्षायान्तु दीपकं सुरेवेति पाठे त्वप्रकृतत्वविवक्षैव कार्य्या अन्यथा उपमानुपमा स्यात्। न च तुल्ययोगितावकाशः इवशब्देन गम्यौपम्यलक्षणभङ्गादिति ॥५२॥

स्नान्तीनां बृहदमलोदबिन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ ।
हाराणां मणिभिरुपाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥५३॥
आरूढः पतित इति स्वसम्भवोऽपि स्वच्छानां परिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचिभिस्तटमनु यन्निरासुरापः ॥५४॥

---

**टिप्पनी**—अन्यूनमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५२॥

**বাঙ্গালা**—সেই সরোবরটী অমৃতের সমস্ত গুণ ধারণ করিতেছিল এবং প্রস্ফুটিত ও উজ্জ্বল পদ্ম সকল তাহার অলঙ্কার ছিল ; আর প্রিয়তমদিগের সহিত বধূরা সেই সরোবরের সেবা করিতেছিল ; সুতরাং মদ্যের ন্যায় সেই সরোবর বধূদিগের নয়নের রক্তবর্ণতা বিধান করিয়াছিল ॥৫২॥

**अन्वयः**—स्नान्तीनां रुचिरदृशां बृहदमलोदबिन्दुचित्रौ उरोजकुम्भौ उत्सूत्रैः हाराणां मणिभिः गुणवदुपघ्नकाम्यया समन्तात् उपाश्रितौ इव (सन्तौ) रेजाते ॥५३॥

**टीका**—स्नान्तीनामिति । स्नान्तीनां जलमवगाहमानानां रुचिरदृशां सुदृशां सम्बन्धिनौ बृहद्भिरमलैरुदबिन्दुभिश्चित्रौ । मन्थौदनेत्यादिना उदकशब्दस्योदादेशः । उरोजकुम्भौ उत्सूत्रैः हाराणां मुक्ताहाराणां मणिभिर्गुटिकाभिरुपघ्नयते उपगम्यते पीड्यते वा उपघ्न आश्रय इति । हन्तेरप्रत्ययान्त उपधालोपीति निपातः । गुणवतः औदार्यादिगुणवतः सूत्रवतश्च उपघ्नस्य काम्या आत्मन इच्छा गुणवदुपघ्नकाम्या तया गुणवदुपघ्नकाम्यया आत्मनो गुणवदाश्रयाकाङ्क्षयेत्यर्थः । काम्यचेति काम्यच्प्रत्ययान्तधातुत्वादप्रत्ययादिति स्त्रियामप्रत्यये टाप् । समन्तादुपाश्रितौ संश्रिताविव रेजाते राजेते स्म । फणाञ्च सप्तानामिति विकल्पादेकाराभ्यासलोपौ । गुणवच्छब्देन सूत्रशब्देन च सूत्रभेदे सूत्रान्तरमाश्रयत इति प्रतीतेः श्लेषानुप्राणितयातिशयोक्त्यानुप्राणितेयमुत्प्रेक्षा ॥५३॥

**टिप्पनी**—स्नान्तीनामिति । अत्र वर्गान्त्यवर्णबाहुल्यं तु माधुर्यं गुणः, वैदर्भी च रीतिः ॥५३॥

**বাঙ্গালা**—সুন্দরনয়না রমণীরা জলে অবগাহন করিতেছিল ; তাহাদের কুচকুম্ভযুগল, বড় বড় নির্ম্মল জলবিন্দুসমূহ দ্বারা বিচিত্র হইয়াছিল ; তাহাতে বোধ হইতেছিল যেন ছিন্নসূত্র হারের মণি সকল, উৎকৃষ্ট আশ্রয়লাভ করিবার ইচ্ছায় সকল দিকে সেই কুচকুম্ভযুগলকে অবলম্বন করিয়া শোভা পাইতেছে ॥৫৩॥

**अन्वयः**—स्वसम्भवः अपि आरूढः पतितः इति स्वच्छानां परिहरणीयताम् उपैति । यत् आपः वीचिभिः तटम् अनु वधूनां कर्णेभ्यः च्युतम् असितोत्पलं निरासुः ॥५४॥

**टीका**—आरूढ इति । स्वसम्भवोऽपि आत्मसम्भवोऽपि आरूढ उच्चस्थानगत उत्तमाश्रयश्च पतितस्तथा भ्रष्ट इति हेतोः आरूढपतितत्वादित्यर्थः । स्वच्छानां निर्मलानां परिहरणीयतां त्याज्यत्वमुपैति । प्रव्रज्यावसितो राज्ञो दास आमरणान्तिक इति स्मरणादिति भावः । वीचीभिस्तटमनु तटं प्रति निरासुश्चिक्षिपुः । कुतः यत् आपः वधूनां कर्णेभ्यः च्युतमसि-

दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपनां नखाङ्काः।
आनिन्युः श्रियमधितोयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति॥५५॥
कस्याश्चिन्मुखमनु धौतपत्त्रलेखं व्यातेने सलिलभराऽवलम्बिनीभिः।
किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः॥५६॥

---

नीत्पलं स्वसम्भवमपीति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः समर्थनवाक्य-गतस्य समुत्थातिशयोक्त्या सङ्कीर्णः॥५४॥

**टिप्पनी**—आरूढ इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः॥५४॥

**বাঙ্গালা**—আরূঢ় হইয়াও যদি কেহ উচ্চস্থানে উঠিয়া আবার পতিত হয়, তবে নির্দ্দোষ ব্যক্তিরা তাহাকে পরিত্যাগ করিয়া থাকে। যেহেতু, জল, বধূদিগের কর্ণ হইতে পতিত নীলোৎপলগুলিকে তরঙ্গদ্বারা তীরের দিকে নিক্ষেপ করিয়াছিল॥৫৪॥

**अन्वयः**—प्रत्यग्राः अङ्गनानां नखाङ्काः अधितोयम् अयावकम् अधरम्, दन्तानां पदानि, अविलेपनां तनुं (च) श्रियम् आनिन्युः; सदाश्रिताः विपदि शोभायै भवन्ति॥५५॥

**टीका**—दन्तानामिति। तोयेष्वधि अधितोयम्। विभक्त्यर्थेऽव्ययीभावः। अङ्गनानामयावकं प्रक्षालितलाक्षारागम् अधरं दन्तानां पदानि दन्तक्षतानि तथा अविलेपनां धौताङ्गरागां तनुं शरीरं प्रत्यग्राः नवा नखाङ्काश्च श्रियमानिन्युः प्रापयामासुः। नीवह्यो-र्हरतेश्चेति वचनात् द्विकर्मकत्वम्। तथाहि, सतः सज्जनान् सुन्दरांश्चाश्रिताः सदाश्रिताः ये केचिदिति शेषः। विपदि विभवाभावकालेऽपि शोभायै वैभवाय भवन्ति। क्लृपि सम्पद्य-माने चतुर्थी वक्तव्येति क्लृपेरर्थनिर्देशाच्चतुर्थी। अर्थान्तरन्यासः॥५५॥

**टिप्पनी**—दन्तानामिति। अत्र अधरमित्यादीनामेकवचनान्तानां मध्ये पदानीति बहुवचननि-र्देशात् प्रक्रमविषयो भग्नप्रक्रमतादोषः; स च पदानीत्यत्र पदञ्चेति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः॥५५॥

**বাঙ্গালা**—রমণীগণের ওষ্ঠের আলক্তা এবং গায়ের অনুলেপন, জলে ধুইয়া গিয়াছিল এবং দন্তক্ষতগুলিও স্পষ্ট দেখা যাইতেছিল; তথাপি তাহাদের শরীরের নূতন নখক্ষত-গুলি শোভাই জন্মাইয়াছিল। কারণ, যাহা কিছু সুন্দর বস্তুতে থাকে; সে সমস্তই বিপৎ-কালেও শোভাই জন্মাইয়া থাকে॥৫৫॥

**अन्वयः**—धौतपत्रलेखं कस्याश्चित् मुखम् अनु सलिलभरावलम्बिनीभिः किञ्जल्क-व्यतिकर-पिञ्जरा-न्तराभिः अलकाग्रवल्लरीभिः अलं चित्रश्रीः व्यातेने॥५६॥

**टीका**—कस्याश्चिदिति। धौतपत्रलेखं क्षालितपत्रावलीकं कस्याश्चिन्मुखमनु मुखेन सम्बद्धं यथा तथा मुखे इति यावत्। तृतीयार्थे इत्यनोः कर्मप्रवचनीयत्वात् द्वितीया। सलिलभरेणावलम्बिनीभिर्लम्बमानाभिः आर्जवं गताभिरित्यर्थः। किञ्जल्कव्यतिकरेण केसर-मिश्रणेन पिञ्जराण्यन्तराणि मध्यभागा यासां ताभिः अलकाग्राणि वल्लर्यो मञ्जर्य इवेत्यु-

वक्षोभ्यो घनमनुलेपनं यदूनामुत्तंसानहरत वारि मूर्द्धजेभ्यः।
नेत्राणामदकचिरच्चतैव तस्थौ चक्षुष्यः खलु महतामपरैरलङ्घ्यः॥५७॥
यो बाह्यः स खलु जलैर्निरासि रागो यश्चित्ते स तु तदवस्थ एव तेषाम्।
धीराणां व्रजति हि सर्व एव नान्तःपातित्वादभिभवनीयतामपरस्य॥५८॥

---

धनितसमासः। वल्लरी मञ्जरी स्त्रियामित्यमरः। ताभिरलकाग्रवल्लरीभिश्चिलश्रीर्मकरिका-पत्रश्रीमा अलं व्यातेने सम्पादिता। तनोतेः कर्मणि लिट्। अत्र चिलस्य श्रीरिव श्रीरिति निदर्शनाभेदः॥५६॥

टिप्पनी—कस्याश्चिदिति। अत्र पराद्धे च्छेकानुप्रासश्चेति टीकोक्तनिदर्शनया सह संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः॥५६॥

বাঙ্গালা—কোন রমণীর মুখের পত্রাবলী (গোন্দানি) ধুইয়া গিয়াছিল এবং তাহার খোলা চুলগুলি জলের ভারে সোজা হইয়া ঝুলিতেছিল; পদ্মের কেশর লাগায় তাহার ভিতরটা পিঙ্গলবর্ণ হইয়াছিল; এহেন খোলা চুল অধিক পরিমাণে মকরপত্র নামক অলঙ্কারের শোভা বিস্তার করিয়াছিল॥৫৬॥

অন্বয়ঃ—वारि यदूनां वक्षोभ्यः घनम् अनुलेपनम्, मूर्द्धजेभ्यः उत्तंसान् (च) अहरत; (किन्तु) नेत्राणां मदरुचिः अच्युता एव तस्थौ। महतां चक्षुष्यः परैः अलङ्घ्यः खलु॥५७॥

टीका—अथ श्लोकद्वयेन पुंसामप्यवस्थाभेदं वर्णयति। वक्षोभ्य इत्यादि। वारि सर उदकं कर्तृ यदूनां यादवानां वक्षोभ्यो घनं सान्द्रमनुलेपनमङ्गरागमहरत। जित्वात्तङ्। अत्र वधूनामिति काचित्कः पाठः वक्षोजानुपेक्ष्य वक्षोमात्रनिर्देशादुत्तरश्लोके तेषामिति पुंलिङ्गपरामर्षाच्च न ग्राह्यः। मूर्द्धजेभ्यः शिरोरुहेभ्यः उत्तंसान् शेखरानहरत नेत्राणां मदरुचिर्मदरागोऽच्युतैव तथैव तस्थौ वारिविहारस्यापि रागजनकत्वादिति भावः। अतएव रागहरणस्याप्यभेदाध्यवसायेन तदवस्थानिर्देशादतिशयोक्तिः। तथाहि, महतामचक्षुषि भव-श्चक्षुष्यः प्रियोऽभिजयश्च। प्रियेऽक्षिजे च चक्षुष्य इति विश्वः। शरीरावयवाच्चेति यत्। परैरलङ्घ्यो दुर्द्धर्षः खलु। चक्षुष्य इति श्लेषमूलातिशयोक्तिः तया पूर्वोक्तया च सङ्कीर्णोऽयमर्था-न्तरन्यासः॥५७॥

टिप्पनी—वक्षोभ्य इति। अत्र अहरतेत्येकया क्रियया अनुलेपनोत्तंसयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता च टीकोक्तसङ्करे प्रविशति। प्रसादो गुणः, वैदर्भी च रीतिः॥५७॥

বাঙ্গালা—সরোবরের জল, যাদবদিগের বক্ষঃস্থল হইতে ঘন অনুলেপন এবং কেশ-কলাপ হইতে ফুলের মালা হরণ করিল; কিন্তু নয়নের মদকান্তি অক্ষতই থাকিল। কেন না, মহাজনের নয়নজাত বস্তুকে অন্যে লঙ্ঘন করিতে পারে না॥৫৭॥

অন্বয়ঃ—तेषां यः बाह्यः, सः खलु जलैः निरासि; यः चित्ते, सः तु तदवस्थः एव। हि धीराणां सर्वः एव अन्तःपातित्वात् परस्य अभिभवनीयतां न व्रजति॥५८॥

ফেনানামুরসিরুহেষু হারলীলা চেলশ্রীর্জঘনতটেষু শৈবলানাম্ ।
গণ্ডেষু স্ফুটরচনাব্জপত্রবল্লী পর্য্যাপ্তং পয়সি বিভূষণং বধূনাম্ ॥৫৯॥
অশ্রাঙ্ক্ষীজ্জলমভি ভূষণৈর্ব্বধূনামঙ্গেভ্যো গুরুভিরমজ্জি লজ্জয়েব ।
নির্ম্মাল্যৈরথ ননৃতেঽবধীরিতানামপ্যুচ্চৈর্ভবতি লঘীয়সাং হি ধার্ষ্ট্যম্ ॥৬০॥

---

টীকা—য ইতি। তেষাং যদূনাং বহির্ভবো বাহ্যঃ; বহিষষ্টিলোপো যঞ্ চেতি বক্তব্যাৎ যঞ্ প্রত্যয়ঃ। যো রাগোঽঙ্গরাগঃ স রাগো জলৈস্তোয়ৈর্জড়ৈশ্চ নিরাস্থি নিরস্তঃ খলু। অস্যতেঃ কর্ম্মণি লুঙ্। চিত্তে যো রাগঃ স তু সৈবাবস্থা যস্য স তদবস্থ এব ন নিরস্ত ইত্যর্থঃ। অত্র রাগয়োরভেদাধ্যবসায়াদতিশয়োক্তিঃ। তথাহি, সর্ব্বোঽপি ধীরাত্মা মহতা-মন্তঃপাতিত্বাদন্তর্গতত্বাদেবেতি যাবৎ পরস্যাভিভবনীয়তাং ন ব্রজতি অন্যথা প্রভবত্যেবে-ত্যর্থঃ। পূর্ব্ববদলঙ্কারঃ ॥৫৮॥

টিপ্পনী—য ইতি। অত্র গুণরীতী পূর্ব্ববৎ ॥৫৮॥

বাঙ্গালা—যাদবদিগের বাহিরে যে রাগ (অঙ্গরাগ) ছিল, তাহা জলে ধুইয়া গেল; কিন্তু চিত্তে যে রাগ (অনুরাগ) ছিল, তাহা সেই অবস্থাতেই থাকিল। কারণ, মনস্বিগণের সকল বস্তুই অন্তঃপাতী বলিয়া অন্যের বিনাশ্য হয় না ॥৫৮॥

অন্বয়:—ফেনানাম্ উরসিরুহেষু হারলীলা [জাতা]; শৈবলানাং জঘনতটেষু চেলশ্রীঃ [জাতা]; গণ্ডেষু [শৈবলা] স্ফুটরচনা অব্জপত্রবল্লী (জাতা)। পয়সি বধূনাং পর্য্যাপ্তং বিভূষণং (জাতম্) ॥৫৯॥

টীকা—ফেনানামিতি। বধূনাং ভ্রষ্টভূষণানামপীতি ভাবঃ পয়সি বিভূষণং পর্য্যাপ্তং সমগ্রমাসীদিত্যর্থঃ। কুতঃ ফেনানাং ডিণ্ডীরাণাম্ উরসি রুহন্তীত্যুরসিরুহাঃ স্তনাঃ। সুপীতি যোগবিভাগাৎ কপ্রত্যয়ঃ হলদন্তাদিত্যলুক্। তেষু হারলীলা মুক্তাবলিশ্রীঃ জাতেতি শেষঃ। শৈবলানাং জঘনতটেষু চেলশ্রীর্বসনশোভা জাতা। গণ্ডেষু কপোলেষু শৈবলা ইতি বিভক্তিবিপরিণামাদনুষঙ্গঃ। স্ফুটরচনা ব্যক্তবিন্যাসাঽব্জপত্রবল্লী পদ্মপত্রলতা জাতেতি শেষঃ। অত্র ফেনানাং হারলীলেব লীলা শৈবলানাং চেলশ্রীরিব শ্রীরিতি নিদর্শনাভ্যাং শৈবলাঃ পত্রবল্লীতি রূপকেণ চ বাক্যার্থৈশ্চতুর্থবাক্যার্থসমর্থনাত্তৈরেবাঙ্গাঙ্গিভাবেন সঙ্কীর্ণং বাক্যার্থহেতুককাব্যলিঙ্গম্ ॥৫৯॥

টিপ্পনী—ফেনানামিতি। অত্র মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৯॥

বাঙ্গালা—রমণীগণের স্তনে ফেন লাগায় হারের শোভা হইয়াছিল কটীদেশে সেওলা লাগায় বস্ত্রের শোভা হইয়াছিল এবং গণ্ডদেশেও সেওলা লাগায় স্পষ্টই পদ্মপত্রের গোন্দানি হইয়াছিল। সুতরাং জলে রমণীগণের পর্য্যাপ্তরূপ অলঙ্কার হইয়াছিল ॥৫৯॥

অন্বয়:—বধূনাম্ অঙ্গেভ্যঃ অশ্রাঙ্ক্ষীঃ গুরুভিঃ ভূষণৈঃ লজ্জয়া ইব জলম্ অভি অমজ্জি; অথ নির্ম্মাল্যৈঃ ননৃতে। হি লঘীয়সাম্ অবধীরিতানাম্ অপি (সতাম্) উচ্চৈঃ ধার্ষ্ট্যং ভবতি ॥৬০॥

টীকা—অশ্রাঙ্ক্ষীরিতি। বধূনামঙ্গেভ্যো অশ্রাঙ্ক্ষিঃ পতদ্ভিঃ গুরুভিঃ গৌরবাদ্গুরুভিঃ

আশ্লিষ্টাস্তিলকরুচঃ স্রজো নিরস্তা নীরক্তং বসনমপাকৃতোঽঙ্গরাগঃ।
কামঃ স্ত্রীরনুশয়বানিব স্বপক্ষব্যাঘাতাদিতি সুতরাঞ্চকার চারূঃ ॥৬১॥
শীতার্ত্তিং বলবদুপেয়ুষেব নীরৈরাসিক্তাচ্ছিশিরসমীরকম্পিতেন।
রামাণামভিনবযৌবনোষ্মভাজোরাশ্লেষি স্তনতটয়োর্নাংশুকেন ॥৬২॥

---

যুক্তৈর্ভূষণৈর্লজ্জয়া অংশপ্রযুক্তয়া ক্রিয়য়েবেত্যুৎপ্রেক্ষা জলমভি অমজ্জি জলে মজ্জনম্। ভাবে লুঙ্। অথানন্তরমেব ন তু বিলম্বেনেতি ভাবঃ নির্মাল্যৈর্ভুক্তোজ্ঝিতমাল্যৈর্নৃত্তে জলে নর্তিতং সংশ্লেঽপি নির্লজ্জৈরিতি ভাবঃ। তথাহি, অবধীরিতানাং তিরস্কৃতানামপি লঘীয়সাং তুচ্ছানামুচ্চৈর্ধাষ্ট্যং নির্লজ্জত্বমেবাধিকং ভবতীতি অর্থান্তরন্যাসঃ। মহান্তঃ পরাভূতা লজ্জিতাঃ ক্বচিন্নিলীয়ন্তে তুচ্ছাস্তু নির্লজ্জা বিজৃম্ভন্ত ইতি ভাবঃ। অপসু গুরুণি লজ্জন্তি লঘূনি প্লবন্ত ইতি পরমার্থঃ ॥৬০॥

টিপ্পনী—মজ্জদ্ভিরিতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬০॥

বাঙ্গালা—ভারী অলঙ্কারগুলি স্ত্রীলোকদিগের অঙ্গ হইতে বিচ্যুত হইয়া জলে মগ্ন হইল; তাহার পরেই মালাগুলি খসিয়া পড়িয়া জলের উপরে নৃত্য করিতে লাগিল। কারণ, অবজ্ঞাত হইলেও, তুচ্ছ বস্তুর গুরুতর ধৃষ্টতাই হইয়া থাকে ॥৬০॥

অন্বয়ঃ—জলৈঃ তিলকরুচঃ আশ্লিষ্টাঃ, স্রজঃ নিরস্তাঃ, বসনং নীরক্তং (কৃতম্) অঙ্গরাগঃ অপাকৃতঃ; ইতি স্বপক্ষব্যাঘাতাৎ অনুশয়বান্ ইব কামঃ স্ত্রীঃ সুতরাং চারূঃ চকার ॥৬১॥

টীকা—আশ্লিষ্টা ইতি। তিলকরুচঃ পত্রশোভাঃ আশ্লিষ্টাঃ স্রজো মালা নিরস্তাঃ বসনং কৌসুম্ভং বাসো নীরক্তমরক্তং নিবস্তরাগমিত্যর্থঃ। কৃতমিতি শেষঃ। অঙ্গরাগোঽপাকৃতঃ সর্বত্র জলৈরিত্যর্থঃ। ইতীত্থং স্বপক্ষব্যাঘাতাৎ স্ববর্গক্ষয়াদনুশয়বাননুতাপবানিবেত্যুৎপ্রেক্ষা। কামঃ স্ত্রীঃ স্ত্রিয়ঃ। বামশসোরিতীয়ঙাদেশবিকল্পাৎপক্ষে সবর্ণদীর্ঘঃ সুতরাং চারূঃ পূর্বতোঽপি রমণীয়াশ্চকার। স্ত্রীণাং কাম এব ভূষণমন্যদ্বৈরূপ্যমেবেতি ভাবঃ ॥৬১॥

টিপ্পনী—আশ্লিষ্টা ইতি। অত্র তিলকাদীনামভাবেঽপি চারুত্বমিতি কিং বিভাবনা? উত নিলজ্জামর্ষাদৌ সত্যপি ন বৈরূপ্যমিতি বিশেষোক্তিরিত্যুভয়োঃ সন্দেহসঙ্করঃ। তথা সর্বত্র জলৈরিতি কর্তৃপদাভাবাৎ বসনং নীরক্তমিত্যতঃ পরং কৃতমিতি ক্রিয়াপদাভাবাচ্চ ন্যূনপদতাদোষঃ; কিঞ্চ দ্বিতীয়পাদে লিঙ্গবৈষম্যাৎ ভগ্নপ্রক্রমতাদোষশ্চ। তয়োঃ পরিহারায় পূর্বার্দ্ধমেবং পঠনীয়ম্ ‘আশ্লিষ্টা তিলকরুচির্জলৈর্হৃতা স্রক্ সুনীতং বসনমুদস্তমঙ্গরক্তম্।’ রক্তং কুঙ্কুমম্, “রক্তং নীল্যাদিরঞ্জিতে। কুঙ্কুমেঽস্রেঽপ্যনুরক্তে প্রাচীনামলকেঽপি চ” ইতি হৈমচন্দ্রীয়াৎ। গুণরীতী পূর্ববৎ ॥৬১॥

বাঙ্গালা—জলে স্ত্রীলোকদিগের তিলকশোভা নষ্ট করিল, মালাগুলি হরণ করিল, কাপড়ের রং এবং অঙ্গরাগ ধুইয়া ফেলিল; এই ভাবে নিজপক্ষের ব্যাঘাত হওয়ায় কামদেব অনুতপ্ত হইয়াই যেন সেই স্ত্রীলোকদিগকে আরও সুন্দর করিলেন ॥৬১॥

অন্বয়ঃ—নীরৈঃ আসিক্তাৎ বলবৎ শীতার্ত্তিম্ উপেয়ুষা ইব শিশিরসমীরকম্পিতেন নবাংশুকেন অভিনবযৌবনোষ্মভাজোঃ রামাণাং স্তনতটয়োঃ আশ্লেষি ॥৬২॥

श्च्योतद्भिः समधिकमात्तमङ्गसङ्गाल्लावण्यं तनुमदिवाम्बु वाससोऽन्तैः।
उत्तेरे तरलतरङ्गरङ्गलीलानिष्णातैरथ सरसः प्रियासमूहैः ॥६३॥
दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥६४॥

---

टीका—शीतेति। नीरैस्तोयैरासेकादासेचनात् शीतार्त्तिं शीतव्यथां बलवत् सुष्ठु उपेयुषेव प्राप्तवतेवेत्युत्प्रेक्षा। अतएव शिशिरसमीरकम्पितेन शीतवातवेपितेन नवांशुकेन कर्त्रा अभिनवो यो यौवनोष्मा उष्णत्वं तद्भाजोः रामाणां स्तनतटयोराश्लेषि आश्लिष्टं संसक्तम्। भावे लुङ्। सेकहेतुकस्यांशुकश्लेषस्य शीतार्त्तिहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा ॥६२॥

टिप्पनी—शीतार्त्तिमिति। अत्रापि गुणरीती पूर्ववत् ॥६२॥

বাঙ্গালা—জলদ্বারা অত্যন্ত সিক্ত হওয়ায় রমণীগণের বস্ত্রগুলি যেন অত্যন্ত শীতার্ত্ত হইয়াছিল; এবং শীতল বায়ুতে কম্পিত হইতেছিল; সুতরাং সেই বস্ত্রগুলি, (সেই শীতের কষ্ট দূর করিবার জন্যই যেন) অভিনব যৌবনের উষ্ণতাযুক্ত রমণীস্তনযুগলকে আলিঙ্গন করিতেছিল ॥৬২॥

अन्वयः—अथ अङ्गसङ्गात् आत्तं समधिकं तनुमत् लावण्यम् इव अम्बु श्च्योतद्भिः तरल-तरङ्ग-रङ्ग-लीला-निष्णातैः वाससः अन्तैः (उपलक्षितैः) प्रियासमूहैः सरसः उत्तेरे ॥६३॥

टीका—इत्थमासां जलक्रीड़ामुक्त्वा जलादुत्तरणं वर्णयति। श्च्योतद्भिरिति। अथ जलक्रीड़ानन्तरमङ्गसङ्गात् गात्रसम्पर्कात् आत्तमुपात्तं संसक्तमिति यावत्। समधिकमतिरिक्तं तनुमत् मूर्त्तिमत् लावण्यमिव कान्तिसारमिवेत्युत्प्रेक्षा अम्बु श्च्योतद्भिः क्षरद्भिः। श्चौतादिकत्वाल्लघूपधगुणः। तरलाश्चपलास्तरङ्गा एव रङ्गा नृत्यस्थानानि तेषु लीलानर्त्तितानि तासु निष्णातैः कुशलैः। निनदीभ्यां स्नातेः कौशले इति षत्वम्। वाससोऽन्तैः वस्त्रस्याञ्चलैरुपलक्षितैः प्रियासमूहैः स्त्रीसङ्घैः सरसो ह्रदादुत्तेरे उत्तीर्णं निर्गतमित्यर्थः। तरतेर्भावे लिट् ॥६३॥

टिप्पनी—श्च्योतद्भिरिति। अत्र छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तया उत्प्रेक्षया सह अस्य संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥६३॥

বাঙ্গালা—তাহার পর, সেই রমণীগণ সরোবর হইতে উঠিল; তাহাদের বস্ত্রাঞ্চলগুলি, চঞ্চল তরঙ্গরূপ নৃত্যস্থানে নৃত্য করিতে নিপুণ ছিল এবং তাহার প্রান্তভাগ হইতে জলবিন্দুসকল পতিত হইতেছিল; তাহাতে বোধ হইতেছিল—তাহাদের অঙ্গসংসর্গবশতঃ যে সকল লাবণ্য সেই বস্ত্রাঞ্চলে লাগিয়াছিল, তাহাই যেন মূর্ত্তিমান্ হইয়া পতিত হইতেছে ॥৬৩॥

अन्वयः—शौरिः दिव्यानाम् अपि कृतविस्मयां स्फुरदरविन्दचारुहस्तां पुरस्तात् अम्भसः उत्तरन्तीम् काञ्चित् श्रियम् इव उद्वीक्ष्य जलनिधिमन्थनस्य अस्मार्षीत् ॥६४॥

स्वच्छं यत्परिहितमेतयोः किलान्तर्धानार्थं तदुदकसेकसक्तमूर्वोः।
नारीणां विमलतरौ समुल्लसन्त्या भासान्तर्दधतुरूरू दुकूलमेव ॥६५॥
वासांसि न्यवसत यानि योषितस्ताः शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव।
अत्याक्षुः स्नपनगलज्जलानि यानि स्थूलाश्रुस्रुतिभिररोदि तैः शुचेव ॥६६॥

---

टीका—दिव्यानामिति। दिवि भवा दिव्यास्तेषामपि जनानां विस्मयं सौन्दर्यातिरेकेण जनिताद्भुतरसां स्फुरदरविन्दाभ्यां चारू हस्तौ यस्यास्तां पद्महस्तामित्यर्थः पुरस्तादग्रतः अम्भसो जलात्। पञ्चम्यास्तसिल्। उत्तरन्तीं निष्क्रामन्तीं काञ्चित् स्त्रियं मथ्यमानात् समुद्रात् सद्यः प्रादुर्भवन्तीं श्रियमिव लक्ष्मीमिवोद्वीक्ष्य जलनिधिमन्थनस्य समुद्रमन्थनमित्यर्थः। मन्थेर्भौवादिकस्येदित्वान्नुमागमः, अधीगर्थेत्यादिना कर्मणि षष्ठी। अस्मार्षीत् स्मृतवान्। अत्र समुद्रमन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्यात् स्मृतेति स्मरणालङ्कार-प्रतीतेरलङ्कारध्वनिः ॥६४॥

टिप्पनी—दिव्यानामिति। अत्र उपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—কোন রমণী, আপনার সুন্দর হস্তে দুইটী প্রস্ফুটিত পদ্ম লইয়া, সম্মুখে জল হইতে উঠিতেছিল; সৌন্দর্য্য দ্বারা সে স্বর্গীয় লোকেরও বিস্ময় জন্মাইতেছিল; লক্ষ্মীদেবীর ন্যায় তাহাকে দেখিয়া শ্রীকৃষ্ণ সমুদ্রমন্থন স্মরণ করিয়াছিলেন ॥৬৪॥

অন্বয়:—एतयोः ऊर्वोः अन्तर्धानार्थं किल स्वच्छं यत् परिहितम्, विमलतरौ नारीणाम् ऊरू एव समुल्लसन्त्या भासा उदकसेकसक्तं तत् दुकूलम् अन्तर्दधतुः ॥६५॥

टीका—स्वच्छमिति। एतयोरूर्वोरन्तर्धानार्थं किल छादनार्थं स्वच्छं स्निग्धं यत् दुकूलं परिहितमाच्छादितमुदकसेकेन संसक्तं संसृष्टं तत् दुकूलं कर्म विमलतरौ नारीणामूरू पीवरौ ऊरू एव कर्त्तारौ समुल्लसन्त्या स्फुरन्त्या भासा निजकान्त्या अन्तर्दधतुः छादितवन्तौ तदेतदद्भुतमिति भावः। अत्र दुकूलस्योरुच्छादकत्वेऽपि तदभावोक्तेरसम्बन्धेऽपि सम्बन्धरूपातिशयोक्तिः। तदपेक्षया पीवरौ दुकूलानां छादकयोराच्छादकत्वोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्त्यानुप्राणितेति सजातीयसङ्करः तदनुप्राणितस्य विषमालङ्कारस्येति विजातीयसङ्करः। तेन पीवरीलोकोत्तरं लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥६५॥

टिप्पनी—स्वच्छमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

বাঙ্গালা—রমণীগণ উরুযুগলের আবরণের জন্য যে সূক্ষ্ম বস্ত্র পরিধান করিয়াছিল; নির্ম্মল উরুযুগলই প্রস্ফুটিত নিজ কান্তিদ্বারা, জলসেকসংলগ্ন সেই সূক্ষ্মবস্ত্রকে আবৃত করিয়াছিল ॥৬৫॥

অন্বয়:—ताः योषितः यानि वासांसि न्यवसत, शुभ्राभ्रद्युतिभिः तैः मुदा अहासि इव; स्नपनगलज्जलानि यानि अत्याक्षुः, स्थूलाश्रुस्रुतिभिः तैः शुचा अरोदि इव ॥६६॥

आर्द्रत्वादतिशयिनीमुपेयिवद्भिः संसक्तिं भृशमपि भूरिशोऽवधूतैः ।
अङ्गेभ्यः कथमपि वामलोचनानां विश्लेषो बत नवरक्तकैः प्रपेदे ॥६७॥
प्रत्यंसं विलुलितमूर्द्धजा चिराय स्नानार्द्रं वपुरुदवापयत् किलैका ।
नाजानादभिमतसन्निकेऽभिवीक्ष्य स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ॥६८॥

---

टीका—वासांसीति। ता योषितो यानि वासांसि न्यवसत निवसितवत्यः। वस आच्छादन इति धातोः कर्त्तरि लुङ्। शुभ्राभ्राणां द्युतिरिव द्युतिर्येषान्तैः वासोभिस्तदा नारीनिवसनानन्देनाहासीव हसितमिव। भावे लुङ्। स्नपनेन गलज्जलानि स्रवत्तोयानि यानि वासांसि अत्याक्षुः त्यक्तवत्यः तैः शुचा स्थूला अश्रुस्रुतिर्येषान्तैः अरोदीव रोदनं कृतमिव। भावे लुङ्। अत्र धावल्यशुभ्रजलगलनक्रियानिमित्तयोर्हासरोदनक्रिययोः सजातीययोरुत्प्रेक्षयोः सङ्करः ॥६६॥

टिप्पनी—वासांसीति। अत्र शुभ्राभ्रद्युतिभिरित्यत्र लुप्तोपमा च्छेकानुप्रासश्चेति समुदायो टीकोक्तसङ्करेण सह संसृष्टिः। तथा तत्रैव दुःश्रवत्वदोषः, श्वेताभ्रच्छविभिरिति पाठेन तत्समाधानम्। गुणरीती पूर्ववत् ॥६६॥

বাঙ্গালা—সেই রমণীরা যে সকল বস্ত্র পরিধান করিয়াছিল, শুভ্র-মেঘবর্ণ সেই সকল বস্ত্র, আনন্দবশতই যেন হাস্য করিতেছিল; আর তাহারা যে সকল বস্ত্র পরিত্যাগ করিয়াছিল, সে গুলি হইতে স্নানের জল পড়িতেছিল; সুতরাং সেই বস্ত্রগুলি বড় বড় অশ্রুবিন্দু সকল পরিত্যাগ করতঃ শোকবশতই যেন রোদন করিতেছিল ॥৬৬॥

अन्वयः—आर्द्रत्वात् अतिशयिनीं संसक्तिम् उपेयिवद्भिः भृशं भूरिशः अवधूतैः अपि नवरक्तकैः वामलोचनानाम् अङ्गेभ्यः कथम् अपि विश्लेषः प्रपेदे बत ॥६७॥

टीका—आर्द्रत्वादिति। आर्द्रत्वाज्जलेन संसृष्ट्या च सरसत्वादतिशयिनीमतिशयवतीं संसक्तिं संश्लेषं परिचयं चोपेयिवद्भिः प्राप्तवद्भिः अतएव भृशं भूरिशो बहुशोऽवधूतैर्निरस्तैरपि अन्यत्र निष्कासितैरपि नवरक्तैरेव नवरक्तकैः नूतनरक्तवस्त्रैर्नवानुरागिभिश्च वामलोचनानां सुदृशामङ्गेभ्यो विश्लेषः बत खेदे कथमपि प्रपेदे प्राप्तः। एकत्रातिश्लेषादन्यत्रातिपरिचयाच्चेति भावः। अन्यासक्ताः कामिनो घनप्रवासयाभिर्वध्वाभिरवधूताः कथञ्चिन्मुञ्चन्तीत्यर्थान्तरप्रतीतिः। इह विशेष्यस्यापि श्लिष्टत्वाच्छब्दशक्तिमूलो ध्वनिरेव ॥६७॥

टिप्पनी—आर्द्रत्वादिति। अत्र नवरक्तवसनेषु वेश्याकामुकव्यवहारसमारोपात् श्लिष्टविशेषणोत्थापिता समासोक्तिरलङ्कारः। गुणरीती पूर्ववत् ॥६७॥

বাঙ্গালা—নূতন রক্তবর্ণ বস্ত্রগুলি আর্দ্র বলিয়া রমণীগণের অঙ্গে অত্যন্ত সংলগ্ন হইয়াছিল; রমণীরাও বার বার সে গুলিকে পরিত্যাগ করিয়াছিল; পরে সেই বস্ত্রগুলি রমণীগণের অঙ্গ হইতে কোন রকমে বিচ্ছেদ প্রাপ্ত হইল ॥৬৭॥

अन्वयः—एका प्रत्यंसं विलुलितमूर्द्धजा (सती) स्नानार्द्रं वपुः चिराय उदवापयत् किल; (किन्तु) सन्निके अभिमतम् अभिवीक्ष्य तत् पुनः स्वेदाम्बुद्रवम् अभवत्तराम् (इति) न अजानात् ॥६८॥

सीमन्तं निजमनुबध्नती कराभ्यामालक्ष्यस्तनतटबाहुमूलभागा ।
भर्त्रान्या मुहुरभिलष्यता निदध्ये नैवाहो विरमति कौतुकं प्रियेभ्यः ॥६९॥

---

टीका—प्रत्यंसामिति । एका स्त्री प्रत्यंसम् अंसयोः । विभक्त्यर्थेऽव्ययीभावः । विलुलितमूर्द्धजा विकीर्णकेशा सती स्नानार्द्रं वपुः चिराय चिरमुदवापर्यान्निरवापयत् अशोषयदिति यावत् । वयतेर्ण्यन्ताल्लङ् । अर्त्तिह्रीत्यादिना पुगागमः । किल खलु पुनस्तद्वपुः अभितः प्रियमन्तिकेऽभिवीक्ष्य स्वेदाम्बुनो द्रवन्द्रवशब्दः शुक्लादिवत् गुणे पुंसि गुणिनि भेद्यलिङ्गः । आपो द्रवाः सर्वाणि द्रवाणि तूदङ्मुखेन जुहोतीत्यादिप्रयोगात् । अभवत्तरामतिशयेनाभवदित्यर्थः । तिङश्चेति तरप्, किमेत्तिङव्ययेत्यादिना तिङन्तादामुप्रत्ययः । तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम् । नाजानात् वाक्यार्थः कर्म तद्द्रवभवनं नाज्ञासीदित्यर्थः अविरतस्नेहार्द्रं तामजानती स्नेहार्द्रं मेवेति मन्यमाना पुनः पुनः वपुरुद्वापयन्त्येवास्त इति तात्पर्य्यार्थः । अत्र वपुस्तत्कर्त्तकस्य वीवयस्य वपुष्युपचारात् द्रवणक्रियायाः समानकर्त्तृकत्वात् पूर्वकालतानिर्वाहः एषा च गर्वौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्त्विकसम्पन्नाजितायनुभाववती चेत्यनुसन्धेयम् । अत्रोद्वापनरूपकारणे सति द्रवत्वानिवृत्तिरूपकार्य्यानुत्पत्तेस्तद्विपक्षद्रवत्वप्रतिपादनमुखेनाभिधानाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥६८॥

टिप्पनी—प्रत्यंसमिति । अत्र सम्भोगश्रृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

বাঙ্গালা—দুই কাঁধের উপরে চুলগুলি এলাইয়া পড়িয়াছিল, এই অবস্থায় কোন রমণী, স্নান করার দরুণ ভিজা দেহ খানিকে বহুকাল ধরিয়া রৌদ্রে শুকাইতে ছিল ; এই সময়ে নিকটে প্রিয়তমকে দেখিয়া তাহার সেই দেহখানি আবার ঘামের জলে ভিজিয়া গেল, তাহা সে বুঝিতে পারিল না ॥৬৮॥

अन्वयः—अभिलष्यता भर्त्रा कराभ्यां निजं सीमन्तम् अनुबध्नती आलक्ष्य स्तनतट बाहु मूलभागा अन्या मुहुः निदध्ये । अहो ! कौतुकं प्रियेभ्यः नैव विरमति ॥६९॥

टीका—सीमन्तमिति । निजमात्मीयं सीमन्तं मूर्द्धजमध्यपद्धतिम् । सीमन्तमस्त्रियां स्त्रीणां केशमध्ये तु पद्धतिरिति वैजयन्ती । कराभ्यामनुबध्नती रचयती विभजन्तीत्यर्थः । अतएव आ समन्तात् लक्ष्या विभाव्याः स्तनतटे बाहुमूले च तेषां भागाः प्रदेशा यस्याः सा अन्या स्त्री अभिलष्यताभिलषता । वा भ्राशेत्यादिना वैकल्पिकः श्यन्प्रत्ययः भर्त्रा मुहुर्निदध्ये ध्याता तां निरीक्षेत्यर्थः । निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणमित्यमरः । अहो आश्चर्य्यं कौतुकमभिलाषः प्रीणन्तीति प्रिया विषयाः । इगुपधज्ञाप्रीकिर इति कः । तेभ्यो न विरमति उपभोगेऽपि न निवर्त्तते इति चाश्चर्य्यम् । न जातु कामः कामानामुपभोगेन शाम्यतीति भावः । जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानमिति पञ्चमी, व्याङ्परिभ्यो रम इति परस्मैपदम् । अर्थान्तरन्यासः ॥६९॥

स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनीनाम्।
वासश्च प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः ॥৭০॥

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे ॥৭১॥

---

**टिप्पनी**—लोमन्तमिति। अत्र स्तनतटादिदर्शनं प्रति अनुबन्धनोत्तपदस्यार्थो हेतुरिति पदार्थहेतुककाव्यलिङ्गेन टीकोक्तार्थान्तरन्यासः सङ्कीर्यते। रसादयः पूर्ववत् ॥৬৯॥

**বাঙ্গালা**—অন্য কোন রমণী হাত দুই খানি উঁচু করিয়া নিজের সীঁতি বাঁধিতেছিল; তখন তাহার স্তনমূল ও বাহুমূল সর্বতোভাবে দেখা যাইতেছিল; তাই তাহার পতি, অনুরাগপূর্বক বার বার তাহাকে দেখিতেছিল। কি আশ্চর্য্য! আকাঙ্ক্ষা অভিলষিত বিষয় হইতে কিছুতেই বিরত হয় না ॥৬৯॥

**अन्वयः**—स्वच्छाम्भःस्नपनविधौतम् अङ्गम्, ताम्बूलद्युतिविशदः ओष्ठः, प्रतनु विविक्तं वासश्च इति इयान् विलासिनीनाम् आकल्पः अस्तु, कुसुमेषुणा शून्यः यदि न स्यात् ॥৭০॥

**टीका**—स्वच्छेति। स्वच्छेनाम्भसा स्नपनेनाभिषेकेण विधौतं विमलितमङ्गं वपुस्ताम्बूलद्युत्या ताम्बूलरागेण विशद उज्ज्वल ओष्ठोऽधरः प्रतनु सूक्ष्मं विविक्तं विमलं च वस्त्रं अथवा विविक्तमेकान्तस्थानञ्च। विविक्तौ पूतविजनावित्यमरः। इत्येवंरूप इयानेतावानेव विलासिनीनामाकल्पो नेपथ्यमस्तु किमन्यैरित्यर्थः। कुसुमेषुणा कामेन शून्यो यदि न स्यात्। अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः। एतेन विच्छित्त्याख्य आलम्बनचेष्टारूप उद्दीपनविभाव उक्तः। स्तोकभूषणयोगोऽपि विच्छित्तिरिति गदित इति लक्षणात्। अत्र स्नानताम्बूलादिपदार्थान्वितविशेषणगत्या अङ्गोष्ठादीनामाकल्प्यत्वप्रतिपादनार्थं हेतुकाव्यलिङ्गमलङ्कारः ॥৭০॥

**टिप्पनी**—स्वच्छेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥৭০॥

**বাঙ্গালা**—নির্ম্মল জলে স্নান করায় ধৌত শরীর, তাম্বুল চর্বণ করায় তাহার রাগে রঞ্জিত ওষ্ঠ; আর সূক্ষ্ম ও পরিষ্কৃত বস্ত্র, এই কয়টীমাত্রই বিলাসিনী দিগের বেশ হইতে পারে, যদি তাহা কামশূন্য না হয় ॥৭০॥

**अन्वयः**—इति सरसि मज्जनेन धौतपुरन्ध्रिमत्सरान् अतिशायिनीं श्रियम् आप्तवतः अपमलाङ्गभासः यादवान् अवलोक्य तदा एव शिशिरेतररोचिषा अपि अपरवारिराशेः अपां ततिषु मङ्क्तुम् ईषे ॥৭১॥

**टीका**—अथोत्तरसर्गं सूर्यास्तमयादिवर्णनं प्रस्तौति। इतीति। इतीत्थं सरसि मज्जनेन स्नानेन धौतपुरन्ध्रिमत्सरान् क्षालितमानिनीमानान् अभीष्टानतिशेते अतिशायिनीम्। आभीक्ष्ण्ये णिनिः। श्रियमाप्तवतः अपमलाङ्गभासो विमलाङ्गकान्तीन् यादवान्-

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये जलविहार-
वर्णनं नामाष्टमः सर्गः ॥८॥

—*—

नवलोक्य तदैव शिशिरेतररोचिषा उष्णांशुनाप्यपरवारिराशेः पश्चिमाब्धेरुपान्तनिम्नेषु पूरेषु मङ्क्तुं प्रवेष्टुमीषे इष्टम्। भावे लिट्। परचेष्टासाक्षात्कारो विषयिणां तादृग्विषयाभिलाषमन्तराधत्त इति भावः। अत्र भानोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते। अतिशायिनी वृत्तम्। ससजाभजतोऽतिशायिनी भवति गौ दिगश्वैरिति छन्दोलक्षणात् ॥७१॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्येऽष्टमः सर्गः ॥८॥

—०—

टिप्पनी—इतीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७१॥

इति श्रीहरिदाससिद्धान्तवागीश-भट्टाचार्य्यविरचितायां
शिशुपालवधटिप्पन्यां माधुरीसमाख्यायाम्
अष्टमः सर्गः ॥०॥

—०—

বাঙ্গালা—এইরূপে সরোবরে স্নান করায় রমণীগণের চিত্ত হইতে প্রণয়কোপ ধুইয়া গেল; যদুবংশীয় যুবকেরাও অত্যন্ত শরীরশোভা লাভ করিয়া নির্ম্মলকান্তি হইলেন; ইহা দেখিয়া সূর্য্যও তখনই পশ্চিম সমুদ্রের জলের ভিতরে মগ্ন হইবার ইচ্ছা করিলেন ॥৭১॥

—০—

# नवमः सर्गः ।

—:०:—

अमितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥१॥
गतया पुरः प्रति गवाक्षमुखं दधती रतेन भृशमुत्सुकताम् ।
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥२॥

---

**अन्वयः**—अथ उष्णरुचिः निजतेजसाम् अमितापसम्पदम् असहमानः इव अपराम्बुनिधेः पयसि प्रपित्सुः अस्तगिरिम् अधिरोढुम् अभ्यपतत् ॥१॥

**टीका**—अथ सूर्य्यास्तमयं वर्णयति । अमितापेति । अथ मिमङ्क्षानन्तरमुष्णरुचिः सूर्य्यो निजतेजसाममितापसम्पदं सन्तापातिरेकमसहमान इवापराम्बुनिधेः पश्चिमाब्धेः पयसि प्रपित्सुः पतितुमिच्छुः । पततेः सनन्तादुप्रत्ययः, सनि मीमेत्यादिना इसादेशः, लोपोऽभ्यासस्येत्यभ्यासलोपः । अस्तगिरिमस्ताद्रिम । अस्तस्तु चरमक्ष्माभृदित्यमरः । अधिरोढुमभ्यपतत् अभ्यधावत् । अत्रासहमान इवेति कालप्राप्तस्य पयसि प्रपातस्य निजतेजोऽसहनहेतुकत्वमुत्प्रेक्ष्यते । अस्मिन् सर्गे प्रमिताक्षरा वृत्तम् । प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥१॥

**टिप्पनी**—अमीति । अत्र तृतीयपादे एकस्य पकारस्य असकृत्साम्यात् वृत्त्यनुप्रासः क्रियास्वरूपोत्प्रेक्षानयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

**বাঙ্গালা**—তদনন্তর, নিজতেজের তাপাধিক্য সহ্য করিতে না পারিয়াই যেন সূর্য্য পশ্চিম সমুদ্রের জলে পড়িতে ইচ্ছা করিয়া, অস্তপর্বতে আরোহণ করিবার জন্য ধাবিত হইলেন ॥১॥

**अन्वयः**—रतेन भृशम् उत्सुकतां दधती योषित् पुरः गवाक्षमुखं प्रति गतया दृशा अस्तगिरेः सवितुश्च अन्तरालभुवं मुहुः अमिमीत ॥२॥

**टीका**—गतयेति । रतेन रत्यर्थं । प्रसितोत्सुकाभ्यां तृतीया चेति सप्तम्यर्थे तृतीया । भृशमुत्सुकतां कालाक्षमत्वलक्षणमौत्सुक्यन्दधती योषित् पुरोऽग्रे गवाक्षमुखं प्रति गवाक्षद्वारम्प्रति गतया अपसृतया दृशा अस्तगिरेः सवितुश्चान्तरालभुवं मध्याकाशप्रदेशं मुहुरमिमीत मातिस्म । हस्तमात्रमवशिष्टमरत्निमात्रमवशिष्टमित्यादिमानकरणेनास्तमयं प्रती-

विरलातपच्छविरनुष्णवपुः परितोविपाण्डु दधदभ्रशिरः।
अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्य्यनयनो दिवसः ॥३॥
अपराह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये।
निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥४॥

---

त्वितवतीत्यर्थः। माङि लुङि स्मावितिं द्विर्भावः, भृशाभिदित्याभ्यासस्यैत्वम्। एतच्चा-त्तनयप्रतीक्षणसमादौत्सुक्यानुभवान्तरोपलक्षणम् अलीत्सुक्यभावचनात् प्रेयोऽ-लङ्कारः ॥२॥

**टिप्पनी**—गतयेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

**बाङ्गाला**—কোন কোন রমণী, রমণের জন্য অত্যন্ত উৎকণ্ঠিত হইয়া সম্মুখের গবাক্ষের দিকে ধাবিত নয়ন দ্বারা, অস্তাচল ও সূর্য্য এই উভয়ের মধ্যস্থানটাকে বার বার মাপিতে লাগিল ॥২॥

**अन्वयः**—परिणतिं गतः विरलातपच्छविः अनुष्णवपुः परितः विपाण्डु अभ्रशिरः दधत् परिमन्दसूर्य्यनयनः दिवसः शिथिलः अभवत् ॥३॥

**टीका**—विरलेति। परिणतिं परिवृत्तिम् अन्यत्र जरावस्थाञ्च गतः अतएव विरला अल्पा आतपस्य छविर्यस्य सः अन्यत्र क्षीणप्रभः अनुष्णवपुः अन्यत्र श्लेष्मोदयादीषदुष्णदेहः। अलवणा यवागूरितिवत् अल्पार्थे नञ्प्रयोगः। परितोविपाण्डु एकत्र शुभ्रपटलच्छन्नत्वादपरत्र पलितश्च पाण्डुरमभ्रमाकाशमेव शिरो दधद्बिभ्रत् परिमन्दं प्रशान्तम् अर्थग्रहणासमर्थञ्च सूर्य्य एव नयनं यस्य स दिवसः शिथिलः शिथिलवृत्तिः शिथिलाङ्गश्चाभवत्। अभ्रशिर इत्याद्यवयवरूपणाद्दिवस एव स्थविर इत्यवयविरूपकसिद्धेस्तदरूपणादेकदेशवृत्तिरूपकं श्लेषानुप्राणितम् ॥३॥

**टिप्पनी**—विरलेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

**बाङ्गाला**—দিনটী পরিণতি প্রাপ্ত হইল, তাহার প্রভা কমিয়া আসিল, শরীর ঈষদুষ্ণ হইল, সকল দিকেই পাণ্ডুবর্ণ মেঘরূপ মস্তক ধারণ করিতে লাগিল, এবং সূর্য্যরূপ নয়ন দুর্ব্বল হইল; এই ভাবে দিনটী শিথিলাঙ্গ হইল ॥৩॥

**अन्वयः**—खगकुलानि अपराह्णशीतलतरेण अनिलेन शनैः लोलितलताङ्गुलये निलयाय आह्वयते इव शाखिने आकुलाः गिरः ददुः इव ॥४॥

**टीका**—अपराह्णेति। अपरोऽपरभागोऽह्नोऽपराह्णोदिनान्तः। पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे इत्येकदेशिसमासः, राजाहःसखिभ्यष्टच्, अह्नोऽह्न एतेभ्य इत्यह्नादेश, अह्नोऽदन्तादिति णत्वम्। तस्मिन्नपराह्णे शीतलतरेणानिलेन शनैर्लोलितास्वालिता लता एवाङ्गुलयो यस्य तस्मै अतएव निलयाय निवासायाह्वयते अङ्गुलिसंज्ञया आह्वानं कुर्वाणाय

উপসন্ধ্যমাস্ত তনু সানুমতঃ শিখরেষু তত্ক্ষণমশীতরুচঃ ।
করজালমস্তসময়েঽপি সতামুচিতং খলূচ্চতরমেব পদম্ ॥৫॥
প্রতিকূলতামুপগতে হি বিধৌ বিফলত্বমেতি বহুসাধনতা ।
অবলম্বনায় দিনভর্তুরভূন্ন পতিষ্যতঃ করসহস্রমপি ॥৬॥

---

ইব স্থিতায়েত্যুত্প্রেক্ষা । শাখিনি দ্রুমায় খগকুলানি পক্ষিসঙ্ঘা আকুলাস্তুমুলাঃ গির ইদ-মাগম্যত ইতি প্রত্যুত্তরাণি দদুরিবেত্যনুষঙ্গাদুত্প্রেক্ষা ॥৪॥

টিপ্পনী—অপরাহ্ণেতি । অত্র বাক্যোত্প্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ, একস্য লকারস্য অসকৃত্সাম্যাত্ বৃত্ত্যনুপ্রাস ইতি সমুদায়ে সংসৃষ্টিঃ । মধুররচনাবশাত্ মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

বাঙ্গালা—দিবসের শেষভাগের শীতল বায়ু ধীরে ধীরে লতারূপ আঙ্গুলগুলিকে সঞ্চালিত করিতেছিল ; সুতরাং বোধ হইতেছিল—বৃক্ষ যেন নিজের উপরে বাস করিবার জন্য পাখীগুলিকে ডাকিতেছে ; আবার পাখীগুলিও যেন 'এই আসিতেছি' ইত্যাদি রূপে তুমুল কলরবরূপ প্রত্যুত্তর দিতেছে ॥৪॥

অন্বয়ঃ—উপসন্ধ্যম্ অশীতরুচঃ তনু করজালং তত্ক্ষণং সানুমতঃ শিখরেষু আস্ত । অস্তসময়ে অপি সতাং পদম্ উচ্চতরম্ এব খলু ॥৫॥

টীকা—উপসন্ধ্যমিতি । উপসন্ধ্যং সন্ধ্যায়াঃ সমীপে । সমীপার্থেঽব্যয়ীভাবে নপুংস-কত্বাদ্ধ্রস্বত্বম্ । অশীতরুচ উষ্ণাংশোঃ তনু করজালন্তত্ক্ষণন্তস্মিন্ ক্ষণে তত্কালেঽপী-ত্যর্থঃ । অত্যন্তসংযোগে দ্বিতীয়া । সানুমতোঽদ্রেঃ শিখরেষ্বাস্তাতিষ্ঠত্ । আসেঃ কর্ত্তরি লঙ্ সতামস্তসময়ে নাশসময়েঽপ্যুচ্চতরমেব পদমুচ্চতস্থানমেবোচিতং খলু । অর্থান্তর-ন্যাসঃ ॥৫॥

টিপ্পনী—উপেতি । অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫॥

বাঙ্গালা—সন্ধ্যার পূর্বে সেই সময়ে সূর্য্যের বিরল রশ্মিজাল, পর্বতের শৃঙ্গে যাইয়া দাঁড়াইল । কেন না, বিনাশের সময়েও সজ্জনের স্থান উচ্চেই থাকে ॥৫॥

অন্বয়ঃ—বিধৌ প্রতিকূলতাম্ উপগতে (সতি) বহুসাধনতা বিফলত্বং হি এতি । পতিষ্যতঃ দিন-ভর্তুঃ করসহস্রম্ অপি অবলম্বনায় ন অভূত্ ॥৬॥

টীকা—প্রতিকূলতামিতি । বিধৌ দৈবে প্রতিকূলতামুপগতে সতি বহুসাধনতা অনেক-সাধনবত্তা বিফলত্বমেতি সত্যপি সাধনসম্পত্তির্নিষ্ফলৈবেত্যর্থঃ । তথাহি, পতিষ্যত আসন্নপাতস্য দিনভর্ত্তুঃ করা অংশবো হস্তাশ্চ । বলিহস্তাংশবঃ করা ইত্যমরঃ । তেষাং সহস্রমপি অবলম্বনায়াবষ্টম্ভনায় নাভূত্ অতো দৈবমেব প্রবলমিতি ভাবঃ । বিশেষেণ সামান্যসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥৬॥

টিপ্পনী—প্রতিকূলতামিতি । অত্র বিধৌ দৈবে চন্দ্রে চেতি বিধিবিধুশব্দয়োরিকারোকারয়োর্বর্ণয়োঃ শ্লেষাত্ বর্ণশ্লেষঃ শব্দালঙ্কার ইতি টীকোক্তেন বিশেষদ্বারা সামান্যসমর্থনরূপার্থান্তরন্যাসেন সহ সঙ্কর-সংসৃষ্টিঃ । গুণরীতী পূর্ববত্ ॥৬॥

नवकुङ्कुमारुणपयोधरया स्वकरावसक्तरुचिराम्बरया ।
अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥७॥
गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् ।
बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥८॥

---

বাঙ্গালা—বিধাতা প্রতিকূল হইলে, বহুতর উপায়ও নিষ্ফলই হইয়া থাকে। কেন না, সূর্য্য যখন অস্ত যাইতেছিলেন, তখন তাঁহার সহস্র করও (কর-কিরণ, হস্ত) নির্ভর করিবার পক্ষে সমর্থ হইল না ॥৬॥

अन्वयः—अतुषारकरः नवकुङ्कुमारुणपयोधरया स्वकरावसक्तरुचिराम्बरया वरुणस्य दिशा (सह) अतिसक्तिम् एत्य भृशम् अन्वरज्यत ॥७॥

टीका—नवेति । अतुषारकर उष्णांशुः नवकुङ्कुमवदरुणपयोधरया नवसन्ध्यारुणमेघया अन्यत्र नवकुङ्कुमारुणकुचया स्वकरावसक्तरुचिराम्बरया स्वकिरणाक्रान्तरुचिराकाशया अन्यत्र स्वहस्तलग्नचारुवस्त्रया वरुणस्य दिशा पश्चिमदिशा सहेत्यर्थः । वरुणसम्बन्धात्परत्वं गम्यते । वृद्धो यूनेति सूत्रादौ सहार्थप्रयोगात्सहार्थानामप्रयोगेऽपि सहयुक्तेऽप्रधाने इति सहार्थे तृतीया । अतिसक्तिमतिसन्निकर्षमत्यासक्तिञ्च एत्य प्राप्य भृशमन्वरज्यत् लोहितवर्णो रक्तवांश्चाभवत् । रञ्जेर्दैवादिकात् कर्त्तरि लङ् । कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्चेति कर्मकर्त्तरि वा । अत्र वारुणीदिनकरादिविशेषणमहिम्नैव तयोर्जारभावप्रतीतेः समासोक्तिरलङ्कारः ॥७॥

टिप्पनी—नवेति । अत्र प्रथमार्द्धे अन्त्यानुप्रासश्चेति टीकोक्तसमासोक्त्या सह संसृष्टिः । तथा सहशब्दस्यानुपादानात् न्यूनपदतादोषः ; स च अतिसक्तिमित्यत्र सह सक्तिमिति पाठेन समाधेयः । अनुरागस्य परस्परपरनायकनायिकागतत्वप्रतीतेः सम्भोगशृङ्गाररसाभासः, मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥७॥

বাঙ্গালা—যে দিকের মেঘগুলি, নূতন কুঙ্কুমের ন্যায় অরুণবর্ণ হইল এবং যে দিকের আকাশ, সূর্য্যের কিরণস্পৃষ্ট হইয়া সুন্দর হইল; সেই পশ্চিম দিকের সহিত অতিসান্নিধ্য লাভ করিয়া, সূর্য্য বিশেষ রক্তবর্ণ হইলেন ॥৭॥

अन्वयः—जपाकुसुमस्तबकद्युतौ दिनकरे अवनतिं गतवति (सति) दिग्वलयं बहलानुराग-कुरुविन्द-दल-प्रतिबद्ध-मध्यम् इव अराजत ॥८॥

टीका—गतवतीति । जपाकुसुमस्तबकद्युतौ लोहितवर्णे दिनकरेऽवनतिमस्ततां गतवति सति लम्बमाने सतीत्यर्थः । दिग्वलयं दिङ्मण्डलं कङ्कणञ्च ध्वन्यते । बहलानुरागैः सान्द्ररागैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तदिवाराजत इत्युत्प्रेक्षा । कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः । हिङ्गुले पद्मरागे च मुकुरेऽपि समीरित इति विश्वः ॥

द्रुतशातकुम्भनिभमंशुमतो वपुरर्द्धमग्नवपुषः पयसि ।
रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥९॥
अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकाशयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥१०॥

---

**टिप्पनी**—गतवतीति । अत्र जपेत्यादिविशेषणे लुप्तोपमेति टीकोक्तोत्प्रेक्षया सहाङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, पाञ्चाली च रीतिः ॥८॥

**বাঙ্গালা**—জবাপুষ্পের গুচ্ছের ন্যায় রক্তবর্ণ সূর্য্য, অস্তগমন করিলে; পশ্চিম দিঙ্মণ্ডলের মধ্যস্থানে যেন অত্যন্ত রক্তবর্ণ একখানি পদ্মরাগমণিখণ্ড বাঁধিয়া রাখা হইয়াছে বলিয়া বোধ হইতে লাগিল ॥৮॥

**अन्वयः**—द्रुत-शातकुम्भ-निभं पयसि अर्द्धमग्नवपुषः-अंशुमतः वपुः विरिञ्चि-नख-भिन्न-बृहज्जगदण्ड-कैक-खण्डम् इव रुरुचे ॥९॥

**टीका**—द्रुतेति । द्रुतन्तप्तं यत् शातकुम्भन्तपनीयम् । तपनीयं शातकुम्भमिति सुवर्णपर्य्यायेष्वमरः । तेन सदृशन्तन्निभमिति नित्यसमासः । पयसि समुद्रोदके अर्द्धं यथा तथा मग्नं वपुर्यस्य तस्यांशुमतोऽर्कस्य मण्डलं विरिञ्चेर्ब्रह्मणो नखेन विभिन्नस्य द्वेधा विदलितस्य बृहतो महतो जगदण्डकस्य जगदाश्रयकोशस्य ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव रुरुचे रराज । अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमालङ्कारः ॥९॥

**टिप्पनी**—द्रुतेति । अत्र प्रथमपादे लुप्तोपमा, चतुर्थपादे छेकानुप्रासश्चेति टीकोक्तोपमया सह तयोः संसृष्टिः । प्रसादो गुणः, पाञ्चाली च रीतिः ॥९॥

**বাঙ্গালা**—সমুদ্রের জলে অর্দ্ধমগ্ন সূর্য্যমণ্ডলটী, অগ্নির তাপে বিগলিত সুবর্ণখণ্ডের ন্যায় হইয়া পড়িল; এবং (প্রথম সৃষ্টির সময়ে) ব্রহ্মার নখের আঘাতে দুই ভাগে বিভক্ত ব্রহ্মাণ্ডের বৃহৎ একখানি খণ্ডের ন্যায় শোভা পাইতে লাগিল ॥৯॥

**अन्वयः**—अपरदिग्गणिका अनुरागवन्तम् अपि लोचनयोः सुखम् अतापकरं वपुः दधतम् अपेतवसुं रविं वियदालयात् निरकाशयत् ॥१०॥

**टीका**—अनुरागवन्तमिति । अपरदिक् पश्चिमा सैव गणिका वेश्या अनुरागो लौहित्यमभिलाषश्च तद्वन्तमपि लोचनयोः सुखयतीति सुखं सुखकरं शान्तत्वादाभिरूप्याच्च दर्शनीयं वपुर्दधतमपीति अतापकरमनौष्ण्यादशठत्वाच्चासन्तापकारिणं सुखस्पर्शं वा तथाप्यपेतवसुन्नीरश्मिं निर्धनञ्च देवभेदे नलौ रश्मौ वसूरत्ने धने वस्वित्यमरः । रविः सूर्य्यो विटश्च गम्यते तं वियदाकाशमेवालयो गृहं तस्मान्निरकाशयत निष्कासितवती । धनपरा हि वेश्या निर्गुणमपि धनिकमासर्वस्वहरणादत्यनुरक्तवदनुवर्त्तते गुणवन्तमपि हृतसर्वस्वं निर्वासयन्ति सद्य एवेति भावः । अस्तङ्गतोऽर्क इति श्लोकार्थः । अत्र वियदालयादपरदिग्गणिकेत्येकदेशरूपणाद्रवेर्विटत्वरूपणावगमादेकदेशविवर्त्तिरूपकं श्लेषोऽपि तदुत्थापितत्वादनुराग एवानुरागो वसव एव च वसूनीति रूपकपर्य्यवसित एवेत्यङ्गम् ॥१०॥

अभितिग्मरश्मि चिरमाविरमादवधानखिन्नमनिमेषतया ।
विगलन्मधुव्रतकुलाम्बुजलं न्यमिमीलदब्जनयनं नलिनी ॥११॥
अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः ।
अवसन्नतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥१२॥

---

**टिप्पनी**—अनुरागवन्तमिति । अत्र समासोक्तिरलङ्कार इति साहित्यदर्पणकाराभिप्रायः । तथा अपरदिगित्येतावतैव व्यञ्जनया गणिकाप्रतीतावपि पुनर्गणिकापदोपादानात् पुनरुक्ततादोषः इति दर्पणकृतामाशयः । स च 'अपरदिग् विकलम्' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—সূর্য্য, রক্তবর্ণ হইলেন এবং নয়নের সুখজনক ও অতাপকারী শরীর ধারণ করিলেন ; আর তাঁহার কিরণও কমিয়াছিল ; এই অবস্থায় পশ্চিমদিক্‌স্বরূপ বেশ্যা. তাঁহাকে আকাশরূপ গৃহ হইতে বাহির করিয়া দিল ॥১০॥

**अन्वयः**—नलिनी अभितिग्मरश्मि चिरम् आविरमात् अनिमेषतया अवधानखिन्नं विगलन्मधुव्रतकुलाम्बुजलम् अब्जनयनं न्यमिमीलत् ॥११॥

**टीका**—अभीति । नलिनी अभितिग्मरश्मि सूर्य्याभिमुखं चिरमाविरमादस्तमयादनिमेषतया अपक्ष्मपाततया । दलसङ्कोच एवात्र निमेषः । अवधानेनाभिमुखावस्थानविवर्त्तनेन खिन्नमलसम् अतएव विगलन्निःसरन्मधुव्रतकुलमेवाम्बुजलं यस्य तदब्जमेव नयनं न्यमिमीलत् मीलयति स्म । भ्राजभासेत्यादिना विकल्पादुपधाह्रस्वः अतएव नाभ्यासदीर्घः । अनुरक्ता हि कान्ता कान्तमनिमेषं पश्यन्ती तदपाये सति निमीलिताक्षी स्यादिति भावः । अत्राप्यब्जनयनमित्याद्यवयवरूपणादवयविनोर्नलिनीतिग्मरश्म्योर्नायिकानायकत्वरूपकसिद्धेरेक-देशविवर्त्ति रूपकम् ॥११॥

**टिप्पनी**—अभीति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥११॥

**বাঙ্গালা**—পদ্মসকল, অস্তগমন পর্য্যন্ত দীর্ঘকাল যাবৎ সূর্য্যের অভিমুখে নির্নিমেষ ভাবে ছিল এবং সেই ভাবে থাকায় পরিশ্রান্ত হইয়াছিল ; এখন সূর্য্য অন্তর্হিত হওয়ায় তাহা হইতে ভ্রমরসমূহরূপ অশ্রুজল পড়িতে লাগিল ; পদ্মিনী ঐরূপ পদ্মনয়ন মুদ্রিত করিল ॥১১॥

**अन्वयः**—अविभाव्यतारकम् अदृष्टहिमद्युतिबिम्बम् अस्तमितभानु अवसन्नतापम् अतमिस्रं नभः अभात् । विगुणस्य अपदोषता एव गुणः ॥१२॥

**टीका**—अविभाव्येति । अविभाव्यतारकमलक्ष्यनक्षत्रम् अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिन् तत् अद्याप्यनुदितचन्द्रतारकमित्यर्थः । अस्तमित्यदर्शनेऽव्ययम् । अस्तमितोऽस्तङ्गतो भानुर्यस्मिन् तत् एतावता निर्गुणत्वमुक्तम् । अथ निर्दोषत्वमाह । अवसन्नतापम् अर्कास्तमयात् प्रशान्तसन्तापम् अतमिस्रमनुदितान्धकारम् नभोऽन्तरीक्षमभात् भाति स्म । भातेर्लङ् । ननु निर्गुणस्य का शोभेति न वाच्यं निर्दोषताया अपि गुणत्वादित्यर्थान्तरन्यासेनाह । विगु-

रुचिधाम्नि भर्त्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥१३॥
विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् ।
चिरमुज्झतापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥१४॥

---

अथ गुणहीनस्यापदोषता निर्दोषत्वमेव गुणः अतो गुणवत्त्वाच्छोभा युक्तेति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥१२॥

टिप्पनी—अविभाव्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—তখন আকাশে নক্ষত্র লক্ষ্য হইতেছিল না ; চন্দ্রমণ্ডল দেখা যাইতে-ছিল না ; সূর্য্য অস্ত গিয়াছিলেন ; তাপ ছিল না এবং অন্ধকারও ছিল না ; তথাপি সে আকাশ শোভা পাইতেছিল । কেন না, গুণহীন ব্যক্তির দোষ না থাকাই গুণ ॥১২॥

अन्वयः—रुचिधाम्नि भर्त्तरि भृशं परलोकम् अभ्युपगते (सति), विमलाः त्विषः ज्वलनं विविशुः । इतरथा अन्यजन्मनि सः एव पतिः कथम् इव सुलभः (भवेत्) ॥१३॥

टीका—रुचीति । रुचिधाम्नि तेजोनिधौ सूर्य्ये भर्त्तरि पत्यौ परलोकं देशान्तर-मभ्युपगते मृते च सति । विमलाः शुद्धास्त्विषो ज्वलनं विविशुः । अग्निं वावादित्यः सायम्प्रविशतीति श्रुतेरिति भावः । अन्यत्र मृते या म्रियते पतौ सा स्त्री ज्ञेया पतिव्रतेति स्मरणादिति भावः । अग्निप्रवेशफलमाह । इतरथा ज्वलनाप्रवेशे अन्यजन्मनि जन्मान्तरे स एव स सूर्य्य एव पतिः अन्यत्र तु योऽसौ जन्मनि पतिः स एव कथं सुलभो न कथञ्चि-दित्यर्थः । उद्यन्तं वावादित्यमग्निरनुसमारोहतीति श्रुतिः । तेनैव सह मोदत इति स्मरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थनाद्वाक्यार्थहेतुकाव्यलिङ्गल-ङ्कारः ॥१३॥

टिप्पनी—रुचीति । अत्रापि गुणरीती पूर्ववत् ॥१३॥

বাঙ্গালা—তেজের আধার ভর্ত্তা সূর্য্য, দীর্ঘকালের জন্য পরলোক গমন করিলে, তাঁহার নির্ম্মল প্রভাসকল, অগ্নিতে প্রবেশ করিল । না হইলে, সেই প্রভাগুলির পক্ষে অন্য জন্মে সেই সূর্য্যরূপ পতি কি প্রকারে সুলভ হইবে ॥১৩॥

अन्वयः—जनतया विहिताञ्जलिः विकसत्कुसुम्भ-कुसुमारुणतां दधती पितृप्रसूः असौ आत्मभुवः तनुः चिरम् उज्झिता अपि (सती) प्रकृतिं न औज्झत् ॥१४॥

टीका—अथ सन्ध्याप्रदुर्भावमाह । विहितेति । जनतया जनसमूहेन । ग्रामजनेत्यादिना समूहार्थे तल्प्रत्ययः । विहिताञ्जलिः कृतप्रणामेत्यर्थः विकसत्कुसुम्भकुसुमवदरुणतां दधती रागसत्त्वादिति भावः । तद्वर्णम्, सर्गाय रक्तं रजसोपबृंहितमिति । प्रसूत इति प्रसूर्माता । जनयित्री प्रसूर्मातेत्यमरः । पितृणां प्रसूः पितृप्रसूः असाविय सन्ध्या-रूपिणी आत्मभुवो ब्रह्मणस्तनुर्मूर्त्तिश्चिरमुज्झिता न विससर्ज । उज्झ विसर्गे उज्,

अथ सान्द्रसान्ध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः ॥
पृथगुत्पपात विरहार्त्तिदलद्धृदयस्रुतास्रगनुलिप्तमिव ॥१५॥
निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥१६॥

---

आङजादीनामित्याडागमः, आटश्चेति वृद्धिः । भूतपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः । पितामहः पितॄन् सृष्ट्वा मूर्त्तिं तामुत्ससर्ज ह । सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यत इत्यादि भविष्यपुराणमत्र प्रमाणम् । अत्र तत्त्यागरूपकारणसत्त्वेऽपि प्रकृतित्याग-रूपकार्य्यानुदयाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥१४॥

टिप्पनी—विहितेति । अत्र द्वितीयपादे लुप्तोपमा, वृत्त्यनुप्रासश्चेति टीकोक्तविशेषोक्त्या सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—তৎকালে জনসাধারণ সন্ধ্যাদেবীকে নমস্কার করিতেছিল এবং তিনি প্রস্ফুটিত কুসুমফুলের ন্যায় রক্তবর্ণ ধারণ করিয়াছিলেন; আর ব্রহ্মার মূর্ত্তি ঐ সন্ধ্যাদেবীকে ব্রহ্মা বহুপূর্ব্বে পরিত্যাগ করিয়া থাকিলেও, তিনি নিজের স্বভাব (জগৎপূজনীয়ত্ব প্রভৃতি) পরিত্যাগ করিয়াছিলেন না ॥১৪॥

अन्वयः—अथ सान्द्र सान्ध्य-किरणारुणितं विरहार्त्ति-दलद्धृदय-स्रुतास्रगनुलिप्तम् इव (स्थितम्) हरि-हेति-हूति पततोः मिथुनं पृथक् उत्पपात ॥१५॥

टीका—अथेति । अथ सन्ध्योदयानन्तरं सान्द्रा ये सान्ध्याः सन्ध्यायाम्भवाः । सन्धि-वेलाद्यृतुनक्षत्रेभ्योऽणित्यण्प्रत्ययः । तैः किरणैररुणितमरुणीकृतमतएव विरहार्त्त्या विरहवेदनया दलतो दीर्य्यमाणात् हृदयात् स्रुतेन क्षरितेनास्रजा रुधिरेणानुलिप्तमिव स्थितमित्युत्प्रेक्षा । हरेर्विष्णोर्हेतिरायुधञ्चक्रमित्यर्थः । हेतिः स्त्रियां तु ज्वालिकशोरिति कोषः । हरिहेतेर्हूतिरिव हूतिराह्वा यस्य तद्धरिहेतिहूति चक्राह्वमित्यर्थः । पततोः पक्षिणोः । पतत्रिपत्रिपतगपतत्पत्ररथाण्डजा इत्यमरः । मिथुनं चक्रवाकद्वन्द्वमित्यर्थः । पृथक् भेदेनोत्पपात उदडीयत ॥१५॥

टिप्पनी—अथेति । अत्र प्रथमार्द्धे छेकानुप्रासश्चेति टीकोक्तोत्प्रेक्षया सह संसृष्टिः । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥१५॥

বাঙ্গালা—তদনন্তর, প্রগাঢ় সন্ধ্যার কিরণ, চক্রবাকদম্পতিকে অরুণবর্ণ করিল; তাহাতে বোধ হইল—যেন বিরহের কষ্টে তাহাদের হৃদয় বিদীর্ণ হইয়া গিয়াছিল; সুতরাং সেই হৃদয় হইতে রক্ত নির্গত হইয়া তাহাদিগকে লিপ্ত করিয়া দিয়াছে; এ হেন চক্রবাক-দম্পতি পৃথক্ পৃথক্ ভাবে উড়িয়া গেল ॥১৫॥

**दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयाऽबलया ।**
**रुचिभर्त्तुरस्य विरहाधिगमादिति सन्ध्ययापि सपदि व्यगमि ॥१७॥**

---

**अन्वयः**—यत् एव जलजन्म एतत् सततं श्रियः निलयः इति प्रथितम् ; अहो ! दिवसात्ययात् तया तत् अपि मुक्तम् । चपलाजनं प्रति अदः न चोद्यम् ॥१६॥

**टीका**—निलय इति । यदेव जले जन्म यस्य तज्जलजन्म जलजमेतदेव सततं श्रियो निलय आलय इति प्रथितं प्रसिद्धम् । निकाय्यनिलयालया इत्यमरः । तदपि नित्यवास-भूतमपीत्यर्थः । तया श्रिया दिवसात्यये सायंकाले मुक्तम् अहो ! दैवानामपि कृतघ्नत्वं यदापदि सद्योपकारित्यागस्याग इत्याश्चर्य्यम् । अथवा चपला चापलवती स्त्री कमला च । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु चेति विश्वः । सैव जनश्चपलाजनः । जातेश्चेति संज्ञापूरण्योश्चेति चोभयथापि पुंवद्भावप्रतिषेधः । तम्प्रति तस्मिन्नित्यर्थः । अद इदं कृतघ्नत्वं चोद्यं चोदनीयं कथमित्याक्षेप्यं न चपलत्वान्नाश्चर्य्यमेतदिति भावः । श्लेषमूलाभिन्नयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥१६॥

**टिप्पनी**—निलय इति । अत्र प्रथमे पादे वृत्त्यनुप्रासः द्वितीये च श्रुत्यनुप्रास इति टीकोक्ताभिन्नयो-रर्थान्तरन्यासाभ्यां सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१६॥

**বাঙ্গালা**—লোকে যাহাকে পদ্ম বলিয়া থাকে, তাহাই সর্বদার জন্য লক্ষ্মীর বাসস্থান ইহা জগতে প্রসিদ্ধ আছে। কিন্তু আশ্চর্যের বিষয় এই যে, দিন অতীত হওয়ায় সে লক্ষ্মীও, সে পদ্মকে পরিত্যাগ করিলেন। অথবা চঞ্চল ব্যক্তির প্রতি এ কৃতঘ্নতার বিষয় জিজ্ঞাস্য হইতে পারে না ॥১৬॥

**अन्वयः**—दिवसः अनुमित्रं विलयम् अगमत् ; बत अबलया मया रुचिभर्त्तुः अस्य विरहाधिगमात् इह किम् आस्यते इति (आलोच्य इव) सन्ध्यया अपि सपदि व्यगमि ॥१७॥

**टीका**—दिवस इति । दिवसो वासरः पुमानिति भावः । मित्रं सूर्यं सुहृदञ्चानु मित्रेण सहेत्यर्थः । तृतीयार्थे इत्यनोः कर्मप्रवचनीयत्वाद् द्वितीया । मित्रं सुहृदि मित्रोऽर्क इति विश्वः । विलयं नाशमगमद्गतः । गमेर्लुङि पुषादित्वाच्च्लेरङादेशः । अब-लया स्त्रिया मया रुचिभर्तुस्तेजोनिधेः प्रभास्पदपतेश्चास्य सूर्य्यस्य विरहाधिगमात् । ल्यब्-लोपे पञ्चमी । विरहज्ञानं प्राप्येत्यर्थः । इहास्मिंल्लोके किमास्यते किमर्थं स्थीयते । आसेर्भावे लट्, बतेति खेदे इतीयमालोच्येवेत्यर्थः । अत एव उत्प्रेक्षा । सन्ध्ययापि सपदि व्यगमि व्यपागामीत्यर्थः । गमेः स्वार्थण्यन्ताद्भावे लुङ्, मित्त्वाद्ध्रस्वः । अण्यन्ते तु यथायुक्तिर्नायं स्यादेतुमण्णिचि । तस्मात् स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यतो भवेत् । विगम-शब्दात्तत्करोतीति ण्यन्ताल्लुङिति केचित् ॥१७॥

**टिप्पनी**—दिवस इति । "अतएव उत्प्रेक्षा" इति मल्लिनाथः । प्रतीयमाना क्रियोत्प्रेक्षा इत्यर्थः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

पतति पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥१८॥
व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि ।
दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥१९॥

---

বাঙ্গালা—'দিনটী মিত্রের সহিত ( সূর্য্যের ও বন্ধুর সহিত ) লয় পাইল ; হায়! আমি অবলা হইয়া, এই তেজোনিধি সূর্য্যের বিরহকষ্ট পাইয়া, এই জগতে আর থাকি কেন ?' এইরূপ আলোচনা করিয়াই যেন সন্ধ্যাও তৎক্ষণাৎ লয় পাইল ॥১৭॥

अन्वयः—पतङ्गमृगराजि निजप्रतिबिम्बरोषिते इव अम्बुनिधौ पतति (सति) अथ नागयूथमलिनानि तमांसि परितः जगत् परितस्तरिरे ॥१८॥

टीका—अथान्धकारं वर्णयति। पततीति। पतङ्गोऽर्क एव मृगराट् सिंह इति रूपकसमासः। तस्मिन्निजेन प्रतिबिम्बेन रोषिते कोपित इवेत्युत्प्रेक्षा। स्वप्रतिबिम्बे प्रतिसिंहभ्रमादिति भावः। अतएवाम्बुनिधौ पतति सति जिघांसयेति भावः। भावलक्षणसप्तमी। अथाप्सु पतनानन्तरं नागयूथानि करिकुलानीव मलिनानि श्यामानि। उपमानानि सामान्यवचनैरिति समासः। तमांसि जगल्लोकम्परितः परितस्तरिरे आच्छादयामासुः। स्तृणातेः कर्त्तरि लिट्। ऋतश्च संयोगादेर्गुणः। अत्र यद्यपि नागयूथमलिनानीत्युत्तरानुशासनसिद्धोपमानुसारात् पतङ्गमृगराजीत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम्। तथाच रूपकानुप्राणितोत्प्रेक्षेयमुपमेति च सङ्करः। तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकस्य व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥१८॥

टिप्पनी—पततीति। अत्र प्रथमार्द्धे छेकानुप्रासः, चतुर्थे पादे च 'परित परित' इति यमकमिति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। उद्धतघटनाव्यञ्जकत्वात् ओजो गुणः, गौड़ी च रीतिः ॥१८॥

বাঙ্গালা—সূর্য্যরূপ সিংহ সমুদ্রের জলের মধ্যে নিজের প্রতিবিম্ব দেখিয়া ক্রুদ্ধ হইয়াই যেন সেই সমুদ্রের জলে পতিত হইলেন, তাহার পর, হস্তিসমূহের ন্যায় কৃষ্ণবর্ণ অন্ধকারসমূহ, চারি দিকে জগৎকে আবরণ করিল ॥১৮॥

अन्वयः—बहलपङ्करुचि दिवसावसाने पटुनः तमसः पटलं भूधरगुहान्तरतः एत्य बहिः व्यसरत् नु ? बहिः (वा) एत्य गुहाः अधिकम् अभक्त च ॥१९॥

टीका—व्यसरदिति। बहलपङ्करुचि सान्द्रकर्दमच्छवि दिवसावसाने दिनान्ते पटुनः समर्थस्य तमसः पटलम्भूधरगुहानामन्तरतोऽभ्यन्तरादित्यागत्य बहिर्बाह्यप्रदेशे व्यसरन् विस्तृतं वा बहिर्बाह्यदेशादेत्य गुहा अधिकम्भृशमभक्त च भजते स्म किम्प्रविष्टं वेत्यर्थः। भजतेर्लुङि तङ्, झरो झरीति सकारलोपः। अत्र व्यापकत्वसादृश्यात्तमसोऽन्तर्बहिरपादानकत्वसन्देहात् सन्देहालङ्कारः ॥१९॥

किमलम्बताम्बरविलग्नमधः किमवर्द्धतोर्ध्वमवनीतलतः।
विससार तिर्य्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥२०॥
स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति।
दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥२१॥

---

टिप्पनी—व्यसरदिवि। अत्र द्वितीयपादे लुप्तोपमा छेकानुप्रासश्च, तृतीये च छेकानुप्रास इति टीकोक्तसन्देहेन सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

বাঙ্গালা—দিবসাবসানে জগৎ আবরণ করিতে সমর্থ এবং গাঢ় কর্দ্দমের ন্যায় কৃষ্ণবর্ণ অন্ধকারসমূহ, পর্বতের গুহার ভিতর হইতে আসিয়া বাহিরে বিস্তৃত হইয়াছিল কি? না, বাহির হইতে আসিয়া পর্বতের গুহাগুলিকে অধিক পরিমাণে আশ্রয় করিয়াছিল? ॥১৯॥

অন্বয়ঃ—প্রচুরীভবত্ তমঃ অম্বরবিলগ্নং (সত্) কিম্ অধঃ অলম্বত? কিং (বা) অবনীতলতঃ ঊর্দ্ধম্ অবর্দ্ধত? অথ দিগ্‌ভ্যঃ তির্য্যক্ বিসসার ইতি ন নিরধারি ॥২০॥

টীকা—কিমিতি। প্রচুরীভবদ্ বহুলীভবত্তমঃ কর্ত্তৃ কিমম্বরবিলগ্নমাকাশস্থং সত্ অধোভূতলমভি অলম্বনাস্রংসত কিমিব অবনীতলতো ভূতলাদূর্ধ্বমুপরিষ্টাদবর্দ্ধত কিম্ অথ দিগ্‌ভ্যস্তির্য্যগ্বিসসার বিস্তৃতমিতি ন নিরধারি অধোলম্বনাদীনামন্যতমন্নাবধারিতমিত্যর্থঃ। ধারয়তেঃ কর্ম্মণি লুঙ্। অত্রাপি পূর্ব্ববত্ সন্দেহালঙ্কারঃ ॥২০॥

টিপ্পনী—কিমিতি। অত্র প্রথমার্দ্ধে ছেকানুপ্রাস ইতি টীকোক্তসন্দেহেন সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২০॥

বাঙ্গালা—ক্রমে বর্দ্ধিষ্ণু অন্ধকার, আকাশে লাগিয়া নীচের দিকে ঝুলিতেছিল? কিম্বা ভূতল হইতে উপরের দিকে উঠিতেছিল? অথবা চারি দিক্ হইতে তেরচাভাবে বিস্তৃত হইতেছিল? ইহার কোনটাই লোকে নিরূপণ করিতে পারিয়াছিল না ॥২০॥

অন্বয়ঃ—স্থগিতাম্বর-ক্ষিতিতলে তিমিরে পরিতঃ জনস্য দৃশম্ অন্ধয়তি (সতি), সুদৃশঃ অপূর্ব্বং রসাঞ্জনং দধিরে; অতঃ প্রিয়বেশ্মবর্ত্ম দদৃশুঃ ॥২১॥

টীকা—স্থগিতেতি। স্থগিতে তিরোহিতে অম্বরক্ষিতিতলে যেন তস্মিন্ তিমিরে পরিতো-জনস্য দৃশমন্ধয়তি অন্ধাং কুর্ব্বতি সতি সুদৃশঃ স্ত্রিয়োঽপূর্ব্বং নূতনং রসাঞ্জনং রসং রাগমেবাঞ্জনং সিদ্ধাঞ্জনঞ্চ দধিরে দধুঃ অতো হেতোঃ প্রিয়বেশ্মবর্ত্ম দদৃশুঃ। অত্র রসাঞ্জনবাক্যার্থেন প্রিয়বেশ্মদর্শনসমর্থনাদ্বাক্যার্থহেতুককাব্যলিঙ্গমলঙ্কারঃ। তেন রসঃ সিদ্ধাঞ্জনমিবেত্যুপমাধ্বননাদলঙ্কারেণালঙ্কারধ্বনিঃ ॥২১॥

টিপ্পনী—স্থগিতেতি। অত্র চতুর্থপাদে ছেকানুপ্রাসশ্চেতি টীকোক্তকাব্যলিঙ্গেন সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২১॥

বাঙ্গালা—অন্ধকার, আকাশ ও ভূতলকে আবৃত করিয়া, লোকের দৃষ্টিকে অন্ধ করিয়া ফেলিলে, সুন্দরনয়না রমণীরা (আপন আপন নয়নে) অপূর্ব্ব রসাঞ্জন (আয়ুর্ব্বেদোক্ত

अवधार्य्य कार्य्यगुरुतामभवन्न भयाय सान्द्रतमसन्तमसम् ।
सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥२२॥
ददृशेऽपि भास्करुचाऽह्नि न यः न तमोन्तमोभिरभिगम्य तताम् ।
द्युतिमग्रहीद् ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥२३॥

---

কজ্জল বিশেষ, অনুরাগরূপ কজ্জল) ধারণ করিয়াছিল এবং তাহাতেই তাহারা প্রিয়তমের বাড়ীর পথ দেখিতে পাইয়াছিল ॥২১॥

**অন্বয়ঃ**—सान्द्रतम-सन्तमसं सुतनोः दयितोपगमे कार्य्यगुरुताम् अवधार्य्य भयाय न अभवत् ; स्तनौ च तनु-रोम-राजि-पथ-वेपथवे (न अभवताम्) ॥२२॥

**টীকা**—अवधार्य्येति । सान्द्रतमं यत् सन्तमसं व्यापकतमः । विष्वक् सन्तमसमित्यमरः । अवसमन्धेभ्यस्तमस इति समासान्तोऽच् प्रत्ययः । तत् कर्त्तृ सुतनोः शुभाङ्ग्या दयितोपगमे प्रियाभिसरणे कार्य्यगुरुतां सम्भोगकार्य्यस्यावश्यकत्वमवधार्य्य निश्चित्य भयाय नाभवत् । स्तनौ कुचौ च तनुः कृशो यो रोमराजिः पन्थाः रोमराजिपथो मध्यभागस्तस्य वेपथवे कम्पाय । ट्वितोऽथुच् जित्यथुच् प्रत्ययः । नाभवतामिति विपरिणामेनानुषङ्गः कार्य्यासक्तस्य तत्रापि कामुकस्य कुतो भयं क्लेशगणना वेति भावः । अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पानुदये कार्य्यगौरवावधारणस्य हेतुकत्वोत्प्रेक्षेयमनेन व्यज्यते ॥२२॥

**টিপ্পনী**—अवधार्य्येति । अत्र द्वितीयचतुर्थपादयोरन्त्ययमकमलङ्कारः । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२२॥

**বাঙ্গালা**—বিশ্বব্যাপী গাঢ় অন্ধকার, প্রিয়তমের নিকট সুন্দরীদিগের অভিসার কার্য্যের গুরুত্ব নিশ্চয় করিয়া, ভয় জন্মাইয়াছিল না এবং তাহাদের স্তনযুগলও, ক্ষীণ কটি-দেশটিকে কম্পিত করিতে পারিয়াছিল না ॥২২॥

**অন্বয়ঃ**—अह्नि भास्कररुचा यः (ग्रहगणः) न ददृशे अपि, (सः) ग्रहगणः तमोभिः तताम् तमीम् अभिगम्य द्युतिम् अग्रहीत् । लघवः मलिनाश्रयतः प्रकटीभवन्ति ॥२३॥

**টীকা**—ददृशे इति । यो ग्रहगणोऽह्नि सवितुस्त्विषा न ददृशे नेक्षितः, स ग्रहगणस्तमोभिस्ततां व्याप्तां ताम्यन्त्यस्यामिति तमीं रात्रिम् । रजनी यामिनी तमीत्यमरः । अधिगम्य प्राप्य द्युतिमग्रहीत् । ग्रहिवृ ञ्‍ ज्ञि ग्रहोऽलिटीति दीर्घः । तथाहि, लघवोऽल्पाः । लिङ्गिष्ठेऽल्पे लघुरित्यमरः । मलिनाश्रयतो निकृष्टाश्रयणात्प्रकटीभवन्ति । अर्थान्तरन्यासः ॥२३॥

**টিপ্পনী**—ददृश इति । अत्र द्वितीयपादे च्छेकानुप्रासस्येति टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

**বাঙ্গালা**—দিনের বেলায় সূর্য্যের কিরণে (অভিভূত থাকায়) বৃহস্পতিপ্রভৃতি যে গ্রহগণ দেখাও যাইত না ; সেই গ্রহগণই অন্ধকারপূর্ণ রাত্রিকে পাইয়া দীপ্তিলাভ করিল। কেন না, ক্ষুদ্রব্যক্তি, নিকৃষ্টের আশ্রয় পাইয়া প্রকাশিত হইয়া থাকে ॥২৩॥

अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपशिखाः ।
समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥२४॥
वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥२५॥

---

अन्वयः—तेन समयेन अनुलेपनानि कुसुमानि पतिषु कृतमन्यवः अबलाः दीपशिखाः [च] चिरसुप्तमनोभवबोधनं समम् अबोधिषत ॥२४॥

टीका—अनुलेपनानीति। तेन समयेन प्रदोषकालेन कर्त्रा अनुलेपनानि कुङ्कुमचन्दनादीनि कुसुमानि माल्यादीनि। तथा पतिषु कृतमन्यवः कृतकोपाः अबलाः स्त्रियः तथा दीपशिखा दीपज्वालाश्चेत्येतानि सर्वाणि चिरं सुप्तस्य पूर्वं स्तब्धस्य मनोभवस्य कामस्य बोधनमुद्दीपनं यस्मिन् कर्मणि तद्यथा तथा तत्पूर्वकमित्यर्थः। इतरथा अनुलेपनादिबोधकत्वस्य दैफल्यापत्तेः सम्भवाच्चेति भावः। समं सहैवाबोधिषत बोधितानि। बुध्यतेर्ण्यन्तात् कर्मणि लुङ्। अत्र गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानामबोधिषतेत्येकेन श्लिष्टशब्देनाभिधानात् श्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरेका। तथा सुप्तमनोभवबोधनमिति क्रियाविशेषणसामर्थ्यात् सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्यकारणभूतयोस्तद्विपर्ययरूपाऽपरा तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात्तुल्ययोगिताभेदश्चेति सङ्करः ॥२४॥

टिप्पनी—अनुलेपनानीति। अत्र पूर्वार्द्धे समुच्चयबोधकश्चकारः अपिशब्दो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः; स च 'कुपिताः पतिष्वपि च दीपशिखाः' इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

বাঙ্গালা—সেই প্রদোষকাল, চন্দন-কুঙ্কুমাদি অনুলেপন এবং পুষ্পমালা সম্পাদন করাইল; পতির প্রতি প্রণয় কুপিতা রমণীদিগের কোপ নিবারণ করিল এবং দীপ শিখা জ্বালাইল; তাহাতে দীর্ঘকাল যাবৎ নিবৃত্তিপ্রাপ্ত কাম আবার উত্তেজিত হইল ॥২৪॥

अन्वयः—अथ वसुधान्तनिःसृतम् अहिपतेः फणामणिसहस्ररुचां पटलम् इव स्फुरत् शीतरुचः अंशुजालं माघवनीं ककुभं समस्कुरुत ॥२५॥

टीका—अथ चन्द्रोदयवर्णनं प्रारभते। वसुधेति। अथ मनःप्रसादानन्तरं वसुधान्तेन भूप्रान्तेन निःसृतं बहिर्निर्गतमहिपतेः शेषस्य फणामणिसहस्राणां रुचां भासां पटलं स्तोम इवेत्युत्प्रेक्षा। शीतरुचश्चन्द्रस्य सम्बन्धि स्फुरदुल्लसदंशुजालं मघोन इमां माघवनीमैन्द्रीम्। मघवा बहुलमिति विकल्पात्त्रादेशः। ककुभन्दिशं समस्कुरुत अभूषयत प्राच्यान्दिशि चन्द्रकिरणजालमलक्ष्यतेत्यर्थः। सम्पर्युपेभ्यः करोतौ भूषणे इति सम्पूर्वस्य सुडागमः अडभ्यासव्यवायेऽपीति नियमात् ॥२५॥

टिप्पनी—वसुधेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२५॥

विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः।
मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः॥२६॥
कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम्।
क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्त्तिरिति॥२७॥

---

বাঙ্গালা—তাহার পর, পৃথিবীর পূর্ব প্রান্ত হইতে নির্গত অনন্তনাগের ফণাস্থিত সহস্রসংখ্যক মণির কিরণরাশির ন্যায় চন্দ্রের কিরণরাশি, প্রকাশিত হইয়া পূর্বদিক্‌কে অলঙ্কৃত করিল॥২৫॥

অন্বয়:—विशदप्रभापरिगतम् उदयाचलव्यवहितेन्दुवपुः शक्रदिशः मुखम् अप्रकाशदशनं सविलासहासम् इव शनकैः विबभौ॥२६॥

টীকা—विशदेति। विशदप्रभापरिगतं शुभ्रकान्तिव्याप्तम्। उदय इति अचलः। उदयः पूर्वपर्वत इत्यर्थः। तेन व्यवहितमिन्दुवपुरिन्दुमण्डलं यस्मिन् तच्छक्रदिशः प्राच्याः मुखमग्रभागः इन्द्राच्च प्रतीयते तदभेदेनोत्प्रेक्ष्यते अप्रकाशदशनमलक्ष्यदन्तं सविलासहासं सविलासस्मितमिव शनकैर्मन्दं विबभौ॥२६॥

টিপ্পনী—विशदेति। अत्र तृतीये पादे छेकानुप्रासः चतुर्थे च वृत्त्यनुप्रास इति टीकोक्तोत्प्रेक्षया सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥२६॥

বাঙ্গালা—চন্দ্রমণ্ডলটী উদয়পর্বতে ব্যবহিত হইয়াছিল; তাহাতে পূর্বদিকের মুখখানি নির্মল শোভায় শোভিত হইয়াছিল; সুতরাং বোধ হইতেছিল—যেন পূর্বদিকের সেই মুখখানি বিলাসের হাস্য করিতেছে; কিন্তু তাহাতে দাঁত বাহির হইতেছে না; এই অবস্থায় সেই পূর্বদিকের মুখখানি ধীরে ধীরে বিশেষ শোভা পাইতেছিল॥২৬॥

অন্বয়:—जनैः पुरः तुषारकिरणस्य कलया परिमन्द-भिन्न-तिमिरौघ-जटं गगनं क्षणं गणाधिपमूर्त्तिः इति मृषा न अभ्यपद्यत॥२७॥

টীকা—कलयेति। पुरः प्राच्यामग्रभागे च तुषारकिरणस्येन्दोः कलया किरणेन अन्यत्रोपलक्षितं परिमन्दमल्पम्भिन्ना विदलिता स्तिमिरौघा एव जटा यस्य तत् गगनं न मृषा सत्यं गणाधिपतेः प्रथमपतेरीश्वरस्य। गणाः प्रथमसङ्घौघा इति वैजयन्ती। मूर्त्तिरिति जनैः क्षणमभ्यपद्यत गगनमष्टानां शिवमूर्तीनामन्यतममिति यत् तत् सत्यमभिपन्नमित्यर्थः। अकालःत्वोदितश्चन्द्र इति फलितार्थः। रूपकालङ्कारः॥२७॥

টিপ্পনী—कलयेति। अत्र पुरः परीति छेकानुप्रासः टीकोक्तरूपकेण संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः। शिवस्य आकाशमूर्त्तित्वे प्रमाणं यथा विष्णुपुराणम्—

"पृथ्वी जलं मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः॥२७॥

বাঙ্গালা—পূর্বদিকে চন্দ্রের কিরণে অন্ধকাররূপ জটাগুলিকে অল্প অল্প ফাঁক করিয়া

नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ।
दहशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥२८॥
प्रथमं कलाऽभवदथार्द्धमथो हिमदीधितिर्महदभूदुदितः ।
दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥२९॥

---

দিয়াছিল ; তাহাতে লোক ক্ষণকালের জন্য আকাশটীকে শিবের মূর্ত্তি বলিয়া সত্যই ধারণা করিয়াছিল ॥২৭॥

অন্বয়:—নব-চন্দ্রিকা-কুসুম-কীর্ণ-তমः-কবরীভৃতः হরেः হরিতः মুখে ললাট-তট-হারি তুহিনরশ্মি-দলং মলয়জার্দ্রম্ ইব দদৃশে ॥২৮॥

টীকা—নবেতি। নবচন্দ্রিকাভিরেব কুসুমৈঃ কীর্ণং তম এব কবরী কেশপাশঃ। জান-পদেত্যাদিনা ঙীপ্। তাম্বিভর্ত্তীতি তদ্ভৃতঃ হরেः শক্রস্য হরিতো দিশো মুখেঽগ্রভাগ এব মুখং বক্ত্রমিতি শ্লিষ্টরূপকবলাৎ তস্যৈব ললাটতটবদ্ধারি মনোহরং হিমরশ্মিদলমিন্দুখণ্ডং মলয়জেন চন্দনেনার্দ্রমিব দদৃশে দ্যাবল্যাদিতি ভাবঃ। অত্র নবচন্দ্রিকাকুসুমেত্যাদ্যৈ কদেশবিবর্ত্তি-রূপকমাহাত্ম্যা হরিবধূত্বপ্রতীতৌ তৎসহকৃতস্যৈবাগতবক্ত্রাদ্যবস্থিতমুখসম্বন্ধপ্রসাদা-ম্বাদিতললাটতটোপমোজ্জীবনেনেন্দুদলস্যানুপাত্তনিজধাবল্যগুণানিমিত্তমলয়জার্দ্রত্বগুণাখ্যরু-পোৎপ্রেক্ষেতি সঙ্করঃ ॥২৮॥

টিপ্পনী—নবেতি। অত্র বৃত্ত্যনুপ্রাসস্য শব্দালঙ্কার ইতি টীকোক্তেন সঙ্করেণ সহ পুনঃ সংসৃষ্টিঃ। মধুররচনাবশাৎ মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥২৮॥

বাঙ্গালা—পূর্ব্বদিকের মুখখানি, অন্ধকাররূপ কবরী (খোপা) ধারণ করিয়াছিল ; সেই কবরীটী আবার নূতন জ্যোৎস্নারূপ পুষ্পে শোভিত হইয়াছিল এবং সেই মুখখানার ললাট-দেশের ন্যায় সুন্দর চন্দ্রখণ্ডটী, শ্বেত চন্দনযুক্তের ন্যায় দেখা যাইতেছিল ॥২৮॥

অন্বয়:—হিমদীধিতিঃ প্রথমং কলা অভবৎ, অথ অর্দ্ধম্ অভবৎ, অথো উদিতঃ (সন্) মহদভূৎ। দ্যুতিশালিনঃ অপি ক্রমশঃ এব উপচয়ং দধতি, ন তু সহসা উপচয়ং দধতি ॥২৯॥

টীকা—প্রথমমিতি। হিমদীধিতিশ্চন্দ্রঃ প্রথমঙ্কলা কলামাত্রমভবৎ। কলা তু ষোড়শো ভাগ ইত্যমরঃ। অথার্দ্ধমাত্রমভবৎ অথো অনন্তরম্। অথো অথেত্যমরঃ। উদিতঃ সাকল্যাদুত্থিতঃ সন্ অমহান্মহান্ সম্পদ্যমানোঽভূন্মহদভূৎ। অভূততদ্ভাবে চ্বিঃ হলন্তত্বাল্ল কার্য্যান্তরপ্রাপ্তিঃ। তথাহি, দ্যুতিশালিনঃ তেজিষ্ঠা অপি ক্রমশঃ ক্রমেণৈব উপচয়ং বৃদ্ধিন্দধতি সহসা ঝটিতি তু ন দধতি ধ্রুবম্। সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥২৯॥

টিপ্পনী—প্রথমমিতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৯॥

বাঙ্গালা—চন্দ্র, প্রথমে এককলামাত্র উদিত হইলেন ; তাহার পর অর্দ্ধ উদিত হই-লেন ; তাহার পর, সম্পূর্ণ উদিত হইয়া বিস্তৃতাকার হইলেন। কারণ, তেজস্বীরাও ক্রম-শঃই বৃদ্ধিলাভ করিয়া থাকেন ; কিন্তু হঠাৎ নহে ॥২৯॥

**उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ।**
**प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥३०॥**
**अथ लक्ष्मणाऽनुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः ।**
**परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥३१॥**

---

अन्वयः—अपनिद्र-पाण्डुर-सरोज-रुचा तुहिनद्युतिना प्रथम-प्रबुद्ध-नदराज सुता-वदनेन्दुना इव कैटभजितः शयनात् उदमज्जि ॥३०॥

टीका—उदमज्जीति । अपनिद्रपाण्डुरसरोजरुचा विकसितसितपुण्डरीकश्रिया तुहिनद्युतिना चन्द्रेण प्रथमं हरेः पूर्वमेव प्रबुद्धायाः अन्यथा तन्मुखं न दृश्येतेति भावः । नदराजसुतायाः सिन्धुकन्यायाः श्रियो वदनेन्दुनेवेत्युत्प्रेक्षा । कैटभजितो हरेः शयनात्समुद्रादित्यर्थः । उक्तोत्प्रेक्षासम्भावनार्थमित्थं निर्देशः । उदमज्जि उन्मग्नम् उत्थितमित्यर्थः ॥३०॥

टिप्पनी—उदमज्जीति । अत्र द्वितीयपादे लुप्तोपमा चेति टीकोक्तोत्प्रेक्षया सह संसृष्टिः । वर्ण्योत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३०॥

বাঙ্গালা—প্রস্ফুটিত শ্বেতপদ্মের ন্যায় শুভ্রবর্ণ চন্দ্র, প্রথম জাগরিত লক্ষ্মীদেবীর মুখচন্দ্রের ন্যায় সমুদ্র হইতে উদয় পাইলেন ॥৩০॥

अन्वयः—अथ लक्ष्मणानुगत-कान्त-वपुः परितः ऋक्षगणैः परिवारितः शशि-दाशरथिः जलधिं विलङ्घ्य तिमिरौघराक्षसकुलं बिभिदे ॥३१॥

टीका—अथेति । अथोदयानन्तरं लक्ष्मणा लाञ्छनेन लक्ष्मणेन सौमित्रिणा चानुगतमनुसृतं कान्तं वपुर्यस्य सः लक्ष्मणानुगतकान्तवपुरिति शब्दश्लेषः वस्तुतः शब्दभेदेनार्थद्वयाभावेऽपि जतुकाष्ठवदेकशब्दप्रतीतेः । परितः समन्तात् ऋक्षगणैः नक्षत्रगणैः जाम्बवदादिभल्लूकसमूहैश्च इत्यर्थश्लेषः एकनालावलम्बिफलद्वयवदखण्डैकशब्दादर्थद्वयप्रतीतेः । नक्षत्रमृक्षमन्तारा इति । ऋक्षाच्छभल्लभल्लूका इति चामरः । परिवारितः शश्येव दाशरथिर्दशरथपुत्रो रामः । अत इञ् । जलधिं विलङ्घ्य तिमिरौघ एव राक्षसकुलन्तत् बिभिदे बिभेदयामास । भिदेः कर्त्तरि लिट् । श्लेषसङ्कीर्णा समस्तवस्तुविवर्त्ति सावयवरूपकालङ्कारः ॥३१॥

टिप्पनी—अथेति । अत्र द्वितीयपादे एकशकारस्य असकृत्पाठात् वृत्त्यनुप्रासः, तृतीये च परिपरीति च्छेकानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

বাঙ্গালা—তাহার পর, নক্ষত্ররূপ ভল্লুকগণে পরিবেষ্টিত হইয়া, চন্দ্ররূপ রাম, সমুদ্র লঙ্ঘন করিয়া, অন্ধকাররূপ রাক্ষসসমূহকে বিনাশ করিলেন; তখন হরিণচিহ্নরূপ লক্ষ্মণ, তাঁহার সুন্দর শরীরের সঙ্গে ছিলেন ॥৩১॥

उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः ।
घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥३२॥
रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अवलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥३३॥

---

अन्वयः—अम्भसां निधिः वणिक् इव सततं परिमुग्धतां दधतः घन-वीथि-वीथिम् अवतीर्णवतः उडुपतेः कलाः उपचयाय उपजीवति स्म ॥३२॥

टीका—उपजीवतीति । अम्भसां निधिः समुद्रो वणिगिव सततं परिमुग्धतां सौन्दर्यम् अन्यत्र मौढ्यं व्यवहारानभिज्ञतामिति यावत् । मुग्ध सुन्दरमूढयोरिति विश्वः । दधतो दधानस्य घनानां वीथिर्घनवीथिरन्तरिक्षं सा वीथिः पण्यवीथिरिवेत्युपमितसमासः । तामवतीर्णवतः प्रविष्टवतः उडुपतेर्नक्षत्रनाथस्य कस्यचिद्धनिकवणिजस्य कलाः षोड़शांशान् मूलधनवृद्धींश्च । कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोड़शांशेऽपि चन्द्रस्येति विश्वः । उपचयाय स्वाम्बुवृद्धये समृद्धये चोपजीवति स्म सेवते स्म अन्यत्र लभते स्मेत्यर्थः । यथा क्रियादिकुशलो ह्यकुशलान्महान्तं लाभमाप्नोति तद्वदिति भावः । श्लेषसङ्कीर्णयमुपमा, उपमासङ्कीर्णः श्लेष इत्यन्ये ॥३२॥

टिप्पनी—उपेति । अत्र साहित्यदर्पणमते पूर्णोपमा, तृतीयचरणे छेकानुप्रासश्चेति संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—বণিকের ন্যায় সমুদ্র, সর্বদার জন্য অত্যন্ত মুগ্ধতাশালী এবং দোকানের ন্যায় আকাশে উপস্থিত চন্দ্রের কণাগুলিকে বৃদ্ধির জন্য অবলম্বন করিয়াছিল ॥৩২॥

अन्वयः—शशी रजनीम् अवाप्य रुचम् आप, असौ अपि सपदि तां व्यभूषयत् । अहो ! महतां चरितम् अवलम्बितक्रमम् इतरेतरोपकृतिमत् ॥३३॥

टीका—रजनीमिति । शशी रजनीमवाप्य रुचं शोभामाप असौ सापि तां रजनीं सपदि व्यभूषयत् महतां सतां चरितमवलम्बितक्रमं यथा तथा इतरेतरोपकृतिमत् अन्योऽन्योपकारवत् अहो इत्यविलम्बादाश्चर्यम् । अत्र रजनीशशिनोर्मिथः शोभाकरत्वादन्योऽन्यालङ्कारः । तदन्योऽन्यं मिथो यत्रोत्पाद्योत्पादकता भवेदिति लक्षणात् । तत्समर्थकश्चायमर्थान्तरन्यास इत्यङ्गाङ्गिभावेन सङ्करः ॥३३॥

टिप्पनी—रजनीमिति । अत्र तृतीयपादे महो महेति छेकानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

বাঙ্গালা—চন্দ্র রাত্রিকে পাইয়া শোভা লাভ করিলেন এবং তিনিও তৎক্ষণাৎ রাত্রিকে ভূষিত করিলেন, কি আশ্চর্য্য! প্রধান লোকের স্বভাবই এই যে, পরস্পর পরস্পরের ক্রমক উপকার করিয়া থাকে ॥৩৩॥

दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत् कुमुदिनीवनिताम् ॥३४॥
प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मघर्मपयसोपचिताम् ।
सुदृशोऽभिभर्तृ शशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥३५॥

---

अन्वयः—मृगधरः दिवसं भृशोष्णरुचि-पाद-हताम् अनवरतालिरुतैः रुदतीम् इव कुमुदिनी-वनिताम् अग्रकरैः मुहुः आमृशन् उदशिश्वसत् ॥३४॥

टीका—दिवसमिति । मृगधरश्चन्द्रो दिवसन्दिवस इत्यर्थः । कालाध्वनोरत्यन्तसंयोगे द्वितीया । भृशम् उष्णरुचेः उष्णांशोः पादेन करेणांघ्रिणा च । पादा रश्म्यङ्घ्रितुर्यांशा इत्यमरः । हतान्ताड़िताम् अतएवानवरतैरविच्छिन्नैरलिरुतैः रुदतीं क्रन्दतीमिव स्थितां कुमुदिन्येव वनिता ताम् । अग्राश्च ते कराश्च इत्यभेदेन समास इति वामनः । तैरग्रकरैरग्रांशुभिरग्रहस्तैः मुहुरामृशन् स्पृशन् उदशिश्वसत उच्छ्वासयति स्म । पराविमृष्टानां पतिभिराश्वासनीयत्वादिति भावः । श्वसधातोर्णौ चङ्युपधाया ह्रस्वः । अत्र पाद एव पादस्तेन हतामिति हननसाधितश्लिष्टरूपकोत्थापितेयमलिरुतैरिति व्यधिकरणपरिणामगर्भा रोदनोत्प्रेक्षेति विजातीयसङ्करः । तथा करैरेव करैः कुमुदिनीवनितेति श्लिष्टाश्लिष्टरूपणान्मृगधरे वल्लभत्वप्रतीतेरेकदेशवर्त्तिरूपकं तत्सापेक्षं यमुदशिश्वसदिति गम्योत्प्रेक्षेत्यपरो विजातीयसङ्करः । रोदनोत्प्रेक्षासापेक्षयमुच्छ्वासनोत्प्रेक्षेति सजातीयसङ्करोऽपि ॥३४॥

टिप्पनी—दिवसमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

বাঙ্গালা—কুমুদিনীরূপ ভার্য্যা, দিনের বেলায় সূর্য্যের কিরণে অত্যন্ত আহত হইয়া, অনবরত ভ্রমরের রবে যেন রোদন করিতেছিল, তাই চন্দ্র, হস্তাগ্র দ্বারা বার বার তাহাকে স্পর্শ করতঃ আশ্বস্ত করিয়াছিলেন ॥৩৪॥

अन्वयः—सुदृशः अभिभर्त्तृ शशि-रश्मि-गलज्जल-बिन्दुम् इन्दुमणिदारुवधूं स्मरजन्म-घर्मपयसा उपचितां प्रतिकामिनी इति (भ्रान्त्या) चकिताः (सत्यः) ददृशुः ॥३५॥

टीका—प्रतीति । सुदृशोऽङ्गनाः अभिभर्तृ भर्त्तारमभि । लक्षणेन अभिप्रती आभिमुख्ये इत्यव्ययीभावः । शशिरश्मिभिर्गलन्तः स्रवन्तो जलबिन्दवो यस्यास्तामिन्दुमणिश्चन्द्रकान्तशिला सैव दारुवधूस्तन्मयीवधूः स्त्रीप्रतिमा तां स्मराज्जन्म यस्य तेन स्मरजन्मना घर्मपयसा स्वेदाम्बुना उपचितां व्याप्तां स्विन्नगात्रामित्यर्थः प्रति प्रतिकूला कामिनी सपत्नीति भ्रान्त्येति शेषः चकिता भीता ददृशुः । अत्र चन्द्रशिलापुत्रिकायां सादृश्यनिबन्धनया प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥३५॥

टिप्पनी—प्रतिकामिनीति । अत्र चतुर्थपादे च्छेकानुप्रासश्चेति टीकोक्तभ्रान्तिमता संसृष्टिः । गुणरीती पूर्ववत् ॥३५॥

বাঙ্গালা—আপন ভর্ত্তার নিকটে চন্দ্রকান্তমণিনির্ম্মিত একটী স্ত্রীমূর্ত্তি ছিল, চন্দ্র-

अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः ।
परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥३६॥
अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः ।
विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥३७॥
उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमहो यदुरागिणाञ्चमनङ्गलघुम् ॥३८॥

---

किरणस्पर्शে তাহা হইতে জলবিন্দু নির্গত হইতেছিল; সুতরাং সেটীকে, কামজাত ঘর্ম-জলে ব্যাপ্ত সপত্নী মনে করিয়া, সুন্দরীরা ভীত হইয়া দেখিতেছিল ॥৩৫॥

अन्वयः—ओषधिपतिः अमृतद्रवैः करैः अब्जदृशाम् अपमार्गं विदधत्, (सन्) परितः विसर्पि भृशं परितापि मानविषं वपुषः अवतारयति स्म ॥३६॥

टीका—अमृतेति । ओषधिपतिश्चन्द्र एवौषधिपतिर्वैद्य इति श्लिष्टरूपकम् अमृतमेवा-मृतमौषधविशेषः । तेन द्रवैरार्द्रैः करैः किरणैरेव करैः हस्तैरब्जदृशामपमार्गं मङ्गपरि-मार्जनं विदधत् कुर्वन् परितो विसर्पि सर्वव्यापि भृशं परितापि सन्तापकारि मानः कोप एव विषन्तत् वपुषः शरीरादवतारयति स्म अवारोपितवान् । अत्र सावयवरूपकेणौषधविस-जाङ्गुलिकहस्तस्पर्शाद्विषमिव निशाकरकरस्पर्शादङ्गनानां वपुषि रोषो न स्पृष्ट इत्यु-पमा व्यज्यते ॥३६॥

टिप्पनी—अमृतेति । अत्र तृतीयपादे च्छेकानुप्रासस्येति टीकोक्तसाङ्गरूपकेण सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३६॥

বাঙ্গালা—চন্দ্র অমৃতময় করদ্বারা পদ্মনয়না রমণীগণের শরীর মার্জন করতঃ, সর্ব-ব্যাপক ও অত্যন্ত সন্তাপজনক মানময় বিষ, তাহাদের শরীর হইতে নামাইয়া দিলেন ॥৩৬॥

अन्वयः—अधिकावभासितदिशाम् इन्दुरुचां निकरः अमलात्मसु तरुणी-कपोल-फलकेषु अभितः मुहुः प्रतिफलन् सान्द्रतरं विससार ॥३७॥

टीका—अमलेति । अधिकमवभासिताः प्रकाशिताः दिशो याभिस्तासामिन्दुरुचान्नि-करोऽमलात्मसु निर्मलमूर्त्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितो मुहुः प्रतिफलन् संक्रामन् सान्द्रतरं प्रचुरतरं विससार दर्पणसंक्रमणादिवेति भावः । अत्रेन्दुरुचां कपोला-संक्रमेऽपि संक्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपातिशयोक्तिः ॥३७॥

टिप्पनी—अमलेति । अत्र प्रथमार्द्धे वृत्त्यनुप्रासः, तृतीयपादे च च्छेकानुप्रास इति टीकोक्तातिशयोक्त्या सह संसृष्टिः । मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥३७॥

বাঙ্গালা—চন্দ্রের রশ্মিসমূহ, সকল দিক্ অধিক প্রকাশিত করিয়া, যুবতিদিগের নির্ম্মল কপোলদেশে সর্বতোভাবে বার বার প্রতিবিম্বিত হইয়া, অধিক পরিমাণে বিস্তৃতি লাভ করিল ॥৩৭॥

ভবনোদরেষু পরিসন্দতয়া শয়িতোঽলসঃ স্ফটিকযষ্টিরুচঃ।
অবলম্ব্য জালকমুখোপগতানুদতিষ্ঠদিন্দুকিরণান্ মদনঃ ॥৩৯॥
অবিভাবিতেষুবিষয়ঃ প্রথমং মদনোঽপি নূনমভবত্তমসা।
উদিতে দিশঃ প্রকটয়ত্যমুনা যদঘর্ম্মধাম্নি ধনুরাচকৃষে ॥৪০॥

---

অন্বয়ঃ—রজনীকরঃ অলঘূর্ম্মিভুজৈঃ উপগূঢ়বেলং সরিতাম্ অধীশম্ অপি অচুক্ষুভৎ, অনঙ্গলঘু যদুরাগিণাং গণম্ [যৎ] অচুক্ষুভৎ, (তৎ) অহো কিম্ ইব চিত্রম্ ॥৩৮॥

টীকা—উপগূঢ়েতি। রজনীকরঃ চন্দ্রঃ অলঘুভিরূর্ম্মিভিরেব ভুজৈরুপগূঢ়া বেলা যেন তং সাবষ্টম্ভমিতি ভাবঃ। সরিতামধীশং সমুদ্রমপি স্বভাবাদক্ষুভ্যমপীতি ভাবঃ। অচুক্ষুভৎ ক্ষোভয়তি স্ম। ক্ষুভ্যতের্ণ্যন্তাল্লুঙি রূপং চঙ্যুপধাহ্রস্বঃ। অনঙ্গেন লঘূকৃতসারং যদব এব রাগিণস্তেষাং গণমচুক্ষুভৎ ইত্যদঃ কিমিব চিত্রং ন কিঞ্চিদিত্যর্থঃ। অক্ষোভ্যমব্ধিং ক্ষোভয়তশ্চন্দ্রস্য দণ্ডাপূপিকন্যায়াদন্যক্ষোভকত্বোক্তেরর্থাপত্তিরলঙ্কারঃ ॥৩৮॥

টিপ্পনী—উপেতি। অত্র চতুর্থপাদে ছেকানুপ্রাস ইতি টীকোক্তার্থাপত্ত্যা সহ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৮॥

বাঙ্গালা—সমুদ্র বিশাল তরঙ্গ-হস্তদ্বারা বেলাকে (তীরকে) আলিঙ্গন করিতেছিল; সুতরাং চন্দ্র, সে সমুদ্রকেও উদ্বেলিত করিয়াছিল; তাহাতে সে কামাবেগে ধৈর্য্যহীন কান্তানুরাগী যাদবদিগকে যে উদ্বেলিত করিবে, সে বিষয়ে আর আশ্চর্য্য কি? ॥৩৮॥

অন্বয়ঃ—পরিসন্দতয়া ভবনোদরেষু শয়িতঃ অলসঃ মদনঃ জালকমুখোপগতান্ স্ফটিকযষ্টিরুচঃ ইন্দুকিরণান্ অবলম্ব্য উদতিষ্ঠৎ ॥৩৯॥

টীকা—ভবনেতি। পরিসন্দতয়া একাকিত্বাদসমর্থতয়া ভবনোদরেষু গৃহাভ্যন্তরেষু শয়িতঃ সুপ্তোঽতএবালসো মদনো জালকমুখোপগতান্ গবাক্ষবিবরপ্রবিষ্টান্ অতএব স্ফটিকযষ্টীনাং রুচিরিব রুক্ শোভা যেষাং তান্ স্ফটিকদণ্ডসন্নিভান্ ইন্দুকিরণানবলম্ব্যাবষ্টভ্যোদতিষ্ঠৎ উত্থিতঃ। অত্রোদ্বোধোত্থানয়োরভেদবিবক্ষয়া উদোঽনূর্দ্ধ্বকর্ম্মণীতি পরস্মৈপদসিদ্ধিঃ। এতন্মদে চাভেদাধ্যবসায়মূলাতিশয়োক্ত্যা স্ফটিকযষ্টিরুচ ইত্যুপময়া চ অবলম্ব্যেত্যত্রাবলম্ব্যেতুত্থানস্যাবলম্বনহেতুকত্বোৎপ্রেক্ষা প্রত্যায্যত ইত্যেতাসাং সঙ্করঃ ॥৩৯॥

টিপ্পনী—ভবনোদরেষ্বিতি। অত্র মদনে শয়িতত্বপুরুষব্যবহারসমারোপাৎ টীকোক্তসঙ্করে সমাসোক্তেরপি প্রবেশঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৯॥

বাঙ্গালা—এযাবৎ কামদেব অসমর্থতানিবন্ধন ঘরের ভিতরে শয়ন করিয়া অলসভাবে অবস্থান করিতেছিলেন; কিন্তু তখন গবাক্ষদ্বারপ্রবিষ্ট এবং স্ফটিকদণ্ডের তুল্য শোভাশালী চন্দ্রকিরণ পাইয়া তাহা ধরিয়া গাত্রোত্থান করিলেন ॥৩৯॥

অন্বয়ঃ—মদনঃ অপি প্রথমং নূনং তমসা অবিভাবিতেষুবিষয়ঃ অভবৎ; যৎ অঘর্ম্মধাম্নি উদিতে দিশঃ প্রকটয়তি (সতি) ধনুঃ আচকৃষে ॥৪০॥

युगपद्विकाशमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥४१॥
ककुभां मुखानि सहसोज्ज्वलयन् दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥४२॥

---

**टीका**—अविभावितेष्विति । मदनोऽपि प्रथमश्चन्द्रोदयात्प्राक् तमसा अविभावितोऽलक्षित इषुविषयो बाणलक्ष्यं येन सोऽभवत् नूनमित्युत्प्रेक्षा । यस्मादयं धाम्नि शीतकरे उदिते दिशः प्रकटयति सति अमुना मदनेन धनुराचकृषे आकृष्टं चन्द्र एव सहानुद्दीपको मदनस्याभूदिति भावः ॥४०॥

**टिप्पनी**—अथेति । अत्रापि गुणरीती पूर्ववत् ॥४०॥

**বাঙ্গালা**—কামদেবও প্রথমে অন্ধকারবশতঃ নিশ্চয়ই বাণের লক্ষ্য দেখিতে পাইয়াছিলেন না। যেহেতু, চন্দ্র উদিত হইয়া, সকল দিক্ প্রকাশ করিলে, তিনি ধনু আকর্ষণ করিয়াছিলেন ॥৪০॥

**अन्वयः**—शिलीमुखगणः पुष्पधनुषः धनुषः द्रुतम् एत्य शशिनः उदयात् युगपत् विकाशं गमिते अङ्गनामनसि कुमुदे च अवसरम् अलभत ॥४१॥

**टीका**—युगपदिति । पुष्पधनुः पुष्पधन्वा । वा संज्ञायामिति विकल्पादनानङादेशः । तस्य धनुः पुष्पचापं पुष्पान्तरं च तस्माच्चलितौ निःसृतः शिली शल्यं मुखं येषां ते शिलीमुखाः बाणा अलयश्च । अलिबाणौ शिलीमुखावित्यमरः । तेषां गणः शशिन उदयाद्विकासमौत्सुक्यमुन्मीलनञ्च युगपदेकदा गमिते प्रापिते अङ्गनानां सुदृशां मनसि हृदये कुमुदे चावसरमवकाशमनायासमलभत उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुदकामिनीहृदययोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्मयोगादौपम्यात्तुल्ययोगिता एकधर्मत्वं चात्र शिलीमुखेति श्लिष्टपदोपात्तयोरलिबाणयोरेकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥४१॥

**टिप्पनी**—युगपदिति । अत्र पुष्पधनुषो धनुष इति लाटानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४१॥

**বাঙ্গালা**—চন্দ্রের উদয়ে একদাই কামিনীগণের হৃদয় উৎকণ্ঠিত হইল এবং কুমুদও (সাপলা—নাইল) প্রস্ফুটিত হইল ; সুতরাং কামদেবের পুষ্পময় ধনু হইতে বাণ ও ভ্রমর তাড়াতাড়ি আসিয়া, যথাক্রমে কামিনীগণের হৃদয়ে ও কুমুদে পড়িল ॥৪১॥

**अन्वयः**—अत्रिनयनप्रभवः अपरः दहनः इन्दुः सहसा ककुभां मुखानि उज्ज्वलयन् रतये अधिकम् आकुलत्वं दधत् (सन्) कुसुमेषुम् अदिदीपत् ॥४२॥

**टीका**—ककुभामिति । ककुभां दिशां मुखानि सहसा झटित्युज्ज्वलयन् उद्भासयन् रतये सुरताय अधिकमाकुलत्वमौत्सुक्यं दधत् यूनामिति शेषः । अन्यत्र रतये कामदेव्यै

इति निश्चितप्रियतमागतयः सितदीधितावुदयवत्यबलाः।
प्रतिकर्म कर्त्तुमुपचक्रमिरे समये हि सर्वमुपकारि कृतम् ॥४३॥
सममेकमेव दधतुः सुतनोरुरु हारभूषणमुरोजतटी।
घटते हि संहततया जनितामिदमेव निर्विवरतां दधतोः ॥४४॥

---

आकुलत्वं भयविह्वलत्वं दधत्। अत्रेरत्रिमुनेर्नयनप्रभवः अत्रिनेत्रसमुद्भव इति पुराणात् त्रिनयनप्रभवो न भवतीत्यत्रिनयनप्रभवः अपरस्त्रिनयनप्रभवादन्यो दहनोऽग्निरिन्दुः कुसुमेषु-ज्वालमदिदीपत् दीपयति स्म। दीप्यतेर्ण्यौ चङि भ्राजेत्यादिना विकल्पान्नोपधाह्रस्वः। अत्र प्रकृतेः कुसुमेषोर्दीपनं नाम प्रवर्द्धनं तस्य तत्र प्रतीयमानेन प्रज्वलनेनाभेदाध्यवसायात्तन्नि-मित्तमिन्दोर्दिङ्मुखोल्लासनादिधर्मसम्बन्धादपरोऽयन्दहन इत्यपरशब्दप्रयोगसामर्थ्याद्दहन-त्वोत्प्रेक्षा न रूपकमिति रहस्यम्। चन्द्रोदयात् कामो ववृधे इति तात्पर्य्यम् ॥४२॥

टिप्पनी—कुकुभामिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

বাঙ্গালা—অত্রিনয়নজাত অন্য অগ্নির ন্যায় চন্দ্র, তৎক্ষণাৎ সমস্ত দিঙ্মণ্ডল প্রকাশিত করিয়া এবং রতির জন্য (রমণের নিমিত্ত এবং রতিদেবীর উদ্দেশে) উৎকণ্ঠাও ভয়বিহ্বলতা জন্মাইয়া, কামকে উদ্দীপিত করিল ॥৪২॥

অন্বয়:—इति सितदीधितौ उदयति (सति) अबलाः निश्चित-प्रियतमा-गतयः (सत्यः) प्रतिकर्म कर्त्तुम् उपचक्रमिरे। हि समये कृतं सर्वम् उपकारि (भवति) ॥४३॥

टीका—एवञ्चन्द्रोदयार्थं स उद्दीपनविभावनमुक्त्वा तत्फलमाह। इतीति। इत्थं सितदीधितावुदयवति अबलाः स्त्रियो निश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः प्रतिकर्म प्रसाधनं कर्तुं उपचक्रमिरे। प्रतिकर्म प्रसाधनमित्यमरः। चन्द्रोदयात् प्रिया-गमनं निश्चित्य अलङ्कर्तुं प्रक्रान्ता इत्यर्थः। तथा हि, समये कार्य्यकाले कृतमनुष्ठितं सर्वं कर्म उपकार्य्यपकारकम्भवति अन्यथा विफलमेवेति भावः। अतो निश्चित्य प्रवृत्ति-रासां युक्तेत्यर्थान्तरन्यासः ॥४३॥

टिप्पनी—इतीति। अत्र प्रथमार्द्धे एकस्य तकारस्य द्वितीयार्द्धे च ककारस्य असकृत् साम्यात् वृत्त्यनुप्रासस्येति टीकोक्तार्थान्तरन्यासेन संसृष्टिः। गुणरीती पूर्ववत् ॥४३॥

বাঙ্গালা—এই ভাবে চন্দ্র উদয় পাইলে, রমণীরা প্রিয়তমের আগমন নিশ্চয় করিয়া বেশবিন্যাস করিতে আরম্ভ করিল। কারণ, যথাসময়ে কৃত সকল কার্য্যই উপকারী হইয়া থাকে ॥৪৩॥

অন্বয়:—सुतनोः उरोजतटी उरु एकम् एव हारभूषणं समं दधतुः। हि संहततया जनितां निर्विवरतां दधतोः इदम् एव घटते ॥४४॥

टीका—अथ प्रसाधनमेव प्रपञ्चयति। सममिति। सुतनोः स्त्रियाः उरोजतटौ उरु श्लाघ्य मेकमेव हारमेव भूषणं सममवैषम्येण दधतुः संहततया संश्लिष्टतया ऐकमत्येन च जनितां

कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन वधूर्मकरध्वजद्विरदमाकलयत् ॥४५॥
अधरेष्वलक्तकरसः सुदृशां विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयोर्विभिदे न शङ्खनिहितात्पयसः ॥४६॥

---

निर्विवरतां निरन्तरालतां नीरन्ध्रत्वञ्च दधतोरिदं समभागित्वमेव घटते । अन्तर्भेदान्तरायाद्धि विषयिणां विषयोपभोगस्तदभावात् सम्भोगाभावे हारधारणं युक्तमिति भावः ॥४४॥

टिप्पनी—सममिति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

বাঙ্গালা—সুন্দরীর দুইটী স্তনতট, বৃহৎ একছড়া হারকেই সমান ভাবে ধারণ করিয়াছিল। যেহেতু, সম্মেলনবশতঃ যে দুইটী পদার্থের মধ্যে ফাঁক্ থাকে না, তাহাদের এইরূপই ঘটিয়া থাকে ॥৪৪॥

अन्वयः—वधूः कदलीप्रकाण्डरुचिरोरुतरौ महति जघनस्थलीपरिसरे रशनाकलापकगुणेन मकरध्वजद्विरदम् आकलयत् ॥४५॥

टीका—कदलीति । वधूः कदलीप्रकाण्डरुचिरः रम्भास्तम्भसुन्दर ऊरुरेव तरुर्बन्धनवृक्षो यस्मिन् । अत्र कदलीकाण्डस्य सौन्दर्यमात्रोपमानत्वान्न बन्धनयोग्यवृक्षत्ववाचिना तरुशब्देन पुनरुक्तिः । महति जघनस्थल्येव परिसरः प्रदेशस्तस्मिन् रशनाकलापक एव गुणस्तेन मकरध्वजो मदनः स एव द्विरदस्तमाकलयदबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्त्ति सावयवरूपकम् ॥४५॥

टिप्पनी—कदलीति । अत्र प्रथमार्द्धे एकस्य रेफस्य असकृत् साम्याद् वृत्त्यनुप्रासश्चेति टीकोक्तरूपकेण संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

বাঙ্গালা—রমণীরা আপনাদের জঘনরূপ স্থানে কদলীস্তম্ভের ন্যায় মনোহর বিশাল উরুরূপ বৃক্ষে চন্দ্রহাররূপ রজ্জুদ্বারা কামরূপ হস্তীকে বন্ধন করিল ॥৪৫॥

अन्वयः—सुदृशाम् अधरेषु अलक्तकरसः, कपोलभुवि विशदं लोध्ररजः, नयनपङ्कजयोः नवम् अञ्जनं (च) शङ्खनिहितात् पयसः न विभिदे ॥४६॥

टीका—अधरेष्विति । सुदृशामधरेष्वोष्ठेषु अलक्तकरसो लाक्षाद्रवः तथा कपोलभुवि गण्डस्थले विशदं शुभ्रं लोध्ररजः तथा नयनपङ्कजयोर्नवमञ्जनञ्च शङ्खनिहितात्पयसः क्षीरात् न विभिदे भिन्नं नाभूत् । कर्मकर्त्तरि लिट् । अधरादिनिहितं लाक्षारागादिकं शङ्खनिहितक्षीरवत्सावर्ण्यादयतोऽभेदेन दुर्ग्रहमभूदित्यर्थः । अत्र यदधरालक्तकरसादिकं तच्छङ्खनिहितं क्षीरमित्येकवाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिष्ठो निदर्शनालङ्कारः तेनाधरालक्तकादीनां शुक्लत एकत्वरूपः सामान्यालङ्कारो गम्यते, सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् ॥४६॥

स्फुरदुज्ज्वलाधरदलैर्विलसद्दशनांशुकेशरभरैः परितः।
धृतमुग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः ॥४७॥
भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः।
मुखमिन्दुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत् ॥४८॥

---

टिप्पनी—अधरेष्विति। अत्र माधुर्यं गुणः, वैदर्भी च रीतिः ॥४६॥

বাঙ্গালা—সুন্দরীদিগের ওষ্ঠে আলতার রস, গালে সাদা লোধফুলের রেণু এবং দুইটী নয়নপদ্মে নূতন কাজল এই গুলি, শঙ্খস্থিত দুগ্ধ হইতে ভিন্ন হইয়াছিল না। ( ঐ গুলি, শঙ্খস্থিত দুগ্ধের তুল্য দেখা যাইতেছিল )॥৪৬॥

अन्वयः—प्रमदाः स्फुरदुज्ज्वलाधरदलैः परितः विलसद्दशनांशुकेशरभरैः धृतमुग्धगण्डफलकैः विकसद्भिः आस्यकमलैः विबभुः ॥४७॥

टीका—स्फुरदिति। प्रमदाः स्त्रियः स्फुरन्तश्चलन्तः उज्ज्वलाश्यामला अधरा ओष्ठा एव दलानि पत्राणि येषान्तैः परितो विलसन्तो दशनांशवो दन्तकान्तय एव केशरभराः किञ्जल्कपुञ्जा येषां तैः। धृतानि मुग्धानि गण्डा एव फलकानि कर्णिका येषान्तैर्विकसद्भिरास्यकमलैर्विबभुः। अत्रास्यकमलैरिति रूपणात् प्रमदा एव सरस्य इति सिद्धैरेकदेशविवर्त्ति सावयवरूपकम्। आस्यकुमुदैरिति पाठे कुमुदस्य मुखोपमानत्वं कविसमयविरुद्धं ज्ञेयम् ॥४७॥

टिप्पनी—स्फुरदिति। अत्र मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥४७॥

বাঙ্গালা—রমণীরা প্রফুল্ল মুখকমলদ্বারা বিশেষরূপ শোভা পাইতেছিল; কেন না, চঞ্চল ও উজ্জ্বল ওষ্ঠ ছিল সেই মুখকমলের পত্র; চারিদিকে বিস্তৃত দন্তের কিরণগুলি হইয়াছিল তাহার কেশর এবং সেই মুখকমল, মনোহর গণ্ডরূপ কর্ণিকা ধারণ করিতেছিল ॥৪৭॥

अन्वयः—अधिकेन जितः विदेशं भजते; अथवा कुशलः तदनुप्रवेशं भजते। अतः इन्दुः प्रतिमाच्छलेन उज्ज्वलकपोलं सुदृशां मुखम् अविशत् ॥४८॥

टीका—भजत इति। अधिकेन प्रबलेन जितो विदेशं देशान्तरं भजते अथवा कुशलः कार्ये चतुरः तदनुप्रवेशं भजते तमेव शरणतया प्रविश्य जीवतीत्यर्थः। अतो हेतोरिन्दुरुज्ज्वलौ कपोलौ यस्य तदिति मुखस्य बिम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकं काव्यलिङ्गम्। सुदृशां मुखं प्रतिमाच्छलेन प्रतिबिम्बव्याजेन अविशत् प्रविष्टः। स चायं चन्द्र एवायं न प्रतिमाचन्द्र इति छलशब्दात् प्रतीतेः छलशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः। पूर्वोक्तकाव्यलिङ्गसापेक्ष इति सङ्करः तेन कपोलयोर्लोकोत्तरलावण्यं दर्पणौपम्यञ्च व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥४८॥

टिप्पनी—भजत इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

ध्रुवमागताः प्रतिहतिङ्कठिने मदनेषवः कुचतटे महति ।
द्युतराङ्कवन्न यदिदं गरिमग्लपितावलग्नमगमत्तनुताम् ॥४९॥
न मनोरमास्वपि विशेषविदां निरचेष्ट योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे सुदृशां वसनाङ्गरागसुमनःसु मनः ॥५०॥

---

বাঙ্গালা—প্রবল ব্যক্তি দুর্বল ব্যক্তিকে জয় করিলে, সে দুর্বল ব্যক্তি বিদেশে চলিয়া যায় ; অথবা চতুর হইলে সেই প্রবলেরই অনুগত হইয়া থাকে। সুতরাং চন্দ্র প্রতিবিম্বচ্ছলে সুন্দরীদিগের সুন্দরগণ্ডযুক্ত মুখমণ্ডলে প্রবেশ করিয়াছিলেন ॥৪৮॥

अन्वयः—मदनेषवः महति कठिने कुचतटे ध्रुवं प्रतिहतिम् आगताः। यत् गरिमग्लपितावलग्नम् इदम् द्युतराङ्कवत् न तनुताम् अगमत् ॥४९॥

टीका—ध्रुवमिति। मदनेषवः कामशरा महति कठिने कुचतटे प्रतिहतिं प्रतिघातमागताः प्राप्ता ध्रुवम्। यद्यस्माद्गरिमया निजभारेण ग्लपितम्लानिं गतम् अवलग्नं मध्यं येन तदिदं कुचतटम्। द्युतराङ्केन तुल्यमितराङ्कवत्। तेन तुल्यमिति वतिप्रत्ययः। तनुतां कार्श्यं नागमत् नाभजत। पुषादिसूत्रेण च्लेरङादेशः। तदा मदनेषुपातात् कुचातिरिक्त-सकलानामङ्गं कृशमासीदित्यर्थः ॥४९॥

टिप्पनी—ध्रुवमिति। अत्र प्रथमार्द्धे ध्रुवपदोपादानात् वाच्या क्रियोत्प्रेक्षालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

বাঙ্গালা—কামের বাণগুলি, বিশাল ও কঠিন যুবতিস্তনে (আঘাত করিয়া) প্রতিঘাত পাইয়া ফিরিয়া আসিয়াছিল ইহা নিশ্চয়। যেহেতু, এই স্তনতট আপন গুরুত্বে মধ্যদেশটীকে ক্লান্ত করিয়া, অন্যান্য অঙ্গের ন্যায় কৃশতাপ্রাপ্ত হইয়াছিল না ॥৪৯॥

अन्वयः—प्रियतमे गृहम् एष्यति [सति] विशेष-विदाम् अपि सुदृशां मनः मनोरमासु वसनाङ्गराग-सुमनःसु इदम् एतत् इदं योग्यम् इति न निरचेष्ट ॥५०॥

टीका—न मनोरमास्विति। प्रियतमे गृहमेष्यति आगमिष्यति सति विशेषविदामपि सुदृशां सम्यक् दर्शनीयानां स्त्रीणां मनः कर्त्तृ, मनोरमास्वपि वसनाङ्गरागसुमनःसु वस्त्र-गन्धमाल्येषु इदमेतदिति इदं पुरोवर्त्ति वस्त्वेतदिति वसनमिति अनुलेपनमिति सुमनसः इति विशेषाकारेण तथा योग्यमस्माकं धारणार्हमिति च न निरचेष्ट न निरधारयत प्रिया-गमनहर्षातिरेकादिति कर्त्तव्यता मूढमभूदित्यर्थः। चिनोतेर्लुङि तङि च्लेः सिच् स्थावर्धातुकार्धधातुकयोरिति गुणः। हर्षोऽत्र सञ्चारिभावः निश्चयसम्बन्धेऽप्यसम्बन्धोक्तेर-तिशयोक्तिः सुमनःसुमन इति यमकविशेषश्चेति संसृष्टिः ॥५०॥

टिप्पनी—नेति। अत्र गुणरीती पूर्ववत् ॥५०॥

বাঙ্গালা—প্রিয়তম নিজের গৃহে আসিতেছেন এই আনন্দে বিশেষজ্ঞ সুন্দরীগণের মনও, মনোহর বস্ত্র, অনুলেপন এবং মালার মধ্যে ইহা এই বস্তু এবং ইহা ধারণ করিবার যোগ্য এরূপ নিশ্চয় করিতে সমর্থ হয় নাই ॥৫০॥

वपुरन्वलिप्तं परिरम्भसुखव्यवधानभीरुकतया न वधूः ।
अममस्य बाढ़मिदमेव हि यत् प्रियसङ्गमेष्वनवलेपमटः ॥५१॥
निजपाणिपल्लवतलस्खलनादभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥५२॥
विधृते दिवा सवयसा च पुरः परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥५३॥

---

अन्वयः—वधूः परिरम्भसुख-व्यवधान-भीरुकतया वपुः न अन्वलिप्त । हि अदः यत् प्रियसङ्गमेषु अनवलेपम्, इदम् एव अस्य बाढ़ं अमनम् ॥५१॥

टीका—वपुरिति । वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गनसुखविच्छेद-भीरुत्वेन । क्रुकनपि वक्तव्य इति क्रुकन्प्रत्ययः । वपुर्नान्वलिप्त नानुलिप्तवती अङ्गराग-जातव्यवधानमपि न सहत इत्यर्थः । लिम्पतेः कर्त्तरि लुङि तङ् । तथाहि, अदो वपुः प्रियसङ्गमेषु अनवलेपमचन्दनमगर्वञ्चेति यत् । अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि चेति विश्वः । इदमनवलेपनत्वमेवास्य वपुषो बाढ़ं भृशं अमं युक्तम् । श्लेषानुप्राणितोऽयमर्था-न्तरन्यासः ॥५१॥

टिप्पनी—वपुरिति । प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

বাঙ্গালা—আলিঙ্গনসুখের ব্যবধান করিবে এই ভয়ে রমণীরা শরীরে অনুলেপন মাখিয়াছিল না। কারণ, প্রিয়সঙ্গমে ইহাদের শরীর যে অনুলেপনবিহীন থাকে ইহাই তাহার একান্ত সঙ্গত ॥৫১॥

अन्वयः—अपरा निज-पाणि-पल्लव-तल स्खलनात् अभिनासिकाविवरम् उत्पतितैः आस्यकमलश्वसनैः मुखवासं शनकैः परीक्ष्य मुमुदे ॥५२॥

टीका—निजेति । अपरा स्त्री निजपाणिपल्लवतलस्य स्खलनादभिघातादभिनासिका-विवरं नासारन्ध्रं प्रति उत्पतितैरास्यकमलस्य श्वसनैर्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष्य मुमुदे । इयं वासकसज्जिका नायिका ॥५२॥

टिप्पनी—निजेति । अत्र आस्यकमलेति लुप्तोपमालङ्कारः । प्रसादो गुण, वैदर्भी च रीतिः ॥५२॥

বাঙ্গালা—অন্য কোন রমণী, মুখপদ্মের বায়ুকে আপন পাণিপল্লবের আঘাতে নাসিকারন্ধ্রের দিকে উঠাইয়া দিল, তাহার পর ধীরে ধীরে সেই মুখের সৌরভ পরীক্ষা করিয়া সে আনন্দিত হইল ॥৫২॥

अन्वयः—दिवा सवयसा च पुरः विधृते परिपूर्णमण्डलविकाशभृति हिमधाम्नि दर्पणतले च मृगदृशः स्वमुखश्रियं मुहुः ददृशुः ॥५३॥

टीका—विधृत इति । दिवा आकाशेन सवयसा वयस्यया च पुरोऽग्रे विधृते निधारिते परिपूर्णमण्डलविकाशं बिम्बशोभां बिभर्त्तीति तद्भृत् तस्मिन् हिमधाम्नि चन्द्रे दर्पणतले च

अधिजानु बाहुमुपधाय नमत्करपल्लवार्पितकपोलतलम् ।
उदकण्ठि कण्ठपरिवर्त्तिकलस्वरशून्यगानपरयापरया ॥५४॥
प्रणयप्रकाशनविदो मधुराः सुतरामभीष्टजनचित्तहृतः ।
प्रजिघाय कान्तमनु मुग्धतरस्तरुणीजनो दृश इवाथ सखीः ॥५५॥

---

मृगदृशः स्त्रियः स्वमुखश्रियं पूर्णोपमानभूतामुत्तरत्रोपमेयभूताञ्चेत्यर्थः । मुहुर्ददृशुः औपम्य-परीक्षार्थमिति भावः । अत्रान्यश्रियोऽन्यत्रासम्भवाच्चन्द्रे तत्सदृशीमिति वाक्यार्थे पदसम्भव-द्वस्तुसम्बन्धा निदर्शना । तथा चन्द्रदर्पणयोर्मुखवयस्योश्च यथासङ्ख्यमन्वयाद्यथासङ्ख्यालङ्का-रश्च । तदुभयापेक्षया चन्द्रदर्पणयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्यत्वा-त्तुल्ययोगितेति सङ्करः ॥५३॥

टिप्पनी—विभ्रत इति । अत्र शेषपादे च्छेकानुप्रासश्चेति टीकोक्तालङ्कारैः सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५३॥

বাঙ্গালা—আকাশ, পূর্ণমণ্ডলশোভাশালী চন্দ্রটীকে সম্মুখে ধরিয়াছিল ; এবং সখীও, পূর্ণগোলাকার দর্পণ সম্মুখে ধরিয়াছিল ; সেই উভয়তেই হরিণনয়না রমণীরা আপনাদের মুখ-শোভা বার বার দেখিয়াছিল ॥৫৩॥

অন্বয়ः—नमत्करपल्लवार्पित-कपोलतलं बाहुम् अधिजानु उपधाय कण्ठ-परिवर्त्ति-कल-स्वर-शून्य-गान-परया अपरया उदकण्ठि ॥५४॥

टीका—अधिजान्विति । नमति कपोलार्पणाय प्रह्वीभवति करपल्लवे अर्पितं निक्षि-प्तं कपोलं गण्डस्थलं यस्य तं बाहुम् अधिजानु जानुनि । विभक्त्यर्थेऽव्ययीभावः । उपधाय निधाय कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्त्तत इति कण्ठपरिवर्त्ति न तु मुखो-च्चारित इत्यर्थः । कलमव्यक्तमधुरं स्वरशून्यन्तारध्वनिहीनं षड्जादिस्वराभिव्यक्तिहीनं वा यद्गानन्तत्परया तदासक्तया मन्दकण्ठेनैव गायन्त्येत्यर्थः । कालक्षेपार्थमिति भावः अयञ्चोत्कण्ठानुभावः । अपरया स्त्रिया उदकण्ठि उत्कण्ठितं प्रियसङ्गमाशीतसुकया स्थितमित्यर्थः । भावे लुङि चिणो लुक् । अत्र कालक्षेपाद्दिष्युत्कलघटनोत्सुक्य-सञ्चारि तन्निबन्धनात्प्रेयोऽलङ्कारः । परयापरयेति यमकविशेषसंसृष्टिः । नायिका विर-होत्कण्ठिता । चिरं पत्युरनालोके विरहोत्कण्ठितोन्मना इति लक्षणात् ॥५४॥

टिप्पनी—अधीति । अत्र तृतीयपादे च्छेकानुप्रास इति तस्यापि टीकोक्तसंसृष्टौ प्रवेशः । प्रवास-रूपो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥५४॥

বাঙ্গালা—অন্য কোন রমণী, হাটুর উপরে কনু রাখিয়া, হাতের উপরে গাল রাখিল ; পরে উচ্চ স্বর শূন্য এবং কণ্ঠের মধ্যেই আবদ্ধ অব্যক্ত মধুর গান করিতে থাকিয়া, (প্রিয়তমের জন্য) উৎকণ্ঠিত হইয়া রহিল ॥৫৪॥

অন্বয়ः—अथ मुग्धतरः तरुणीजनः प्रणय-प्रकाशनविदः मधुराः सुतराम् अभीष्टजन-चित्तहृतः सखीः दृशः इव कान्तम् अनु प्रजिघाय ॥५५॥

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि।
निपुणन्तथैनमुपगम्य वदेरभिदूति काचिदिति सन्दिदिशे ॥५६॥
दयिताय मानपरयापरया त्वरितं ययावगदितापि सखी।
किमु चोदिताः प्रियहिताय कृतः कृतिनोभवन्ति सुहृदः सुहृदाम् ॥५७॥

---

टीका—प्रणयेति। अथ प्रसाधनानन्तरं मुग्धतरोऽत्यन्तकाममोहितस्तरुणीजनः प्रणयप्रकाशनविदोऽनुरागव्यञ्जनचतुरा इत्यर्थः। मधुराः मधुरभाषिणीः अन्यत्र रम्याकृतीः सुतरामभीष्टजनस्य चित्तहृतो मनोहारिणीः सखीः दृश इव कान्तमनु प्रियजनं प्रति प्रजिघाय प्रेषितवान्। हिनोतेर्लिट् इवेन सह समासवचनात् दृश इवेति उपमासमासः। तया सखीनामात्यन्तरङ्गत्वकार्य्यं दर्शित्वादिव्यञ्जनादलङ्कारेण वस्तुध्वनिः ॥५५॥

टिप्पनी—प्रणयेति। अत्र साहित्यदर्पणमते पूर्णोपमालङ्कारः, रसगुणौ पूर्ववत्, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—তাহার পর, অত্যন্ত কামাতুর কোন যুবতি, প্রিয়তমের প্রতি দৃষ্টির ন্যায় সখীকে পাঠাইয়া দিয়াছিল; সেই দৃষ্টি ও সখী উভয়েই প্রণয় প্রকাশ করিতে জানিত, মধুরাকৃতি ছিল এবং অভীষ্টযুবকের মন হরণ করিতে পারিত ॥৫৫॥

অন্বয়ঃ—সঃ যথা চ মযি করুণাং কুরুতে, যথা চ মে লঘুতাং ন অবগচ্ছতি; এনম্ উপগম্য তথা নিপুণং বদেঃ, অভিদূতি ইতি কাচিত্ সন্দিদিশে ॥৫৬॥

टीका—तथा काचिन्नायिका दूतीं वाचिकमनुशशास। न चेति। स मे दयितो यथा मयि करुणां कुरुते यथा लघुतामल्पताञ्च नावगच्छति न मन्यते। एनन्दयितमुपगम्य प्राप्य तथा तेन प्रकारेण निपुणं वदेः। विध्यर्थे प्रार्थने वा लिङ्। इतीत्थं काचिन्नायिका अभिदूति। अभिगच्छतीत्यव्ययीभावे नपुंसकह्रस्वत्वम सन्दिदिशे सन्दिष्टवती। अत्र दिशेः लिट् स्वरितेत्त्वादात्मनेपदम। नायिका तु कलहान्तरिता। कोपात् कान्तं परास्य पश्चात्तापसमन्वितेति लक्षणात् ॥५६॥

टिप्पनी—नचेति। अत्रापि प्रवासाख्यो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—'তিনি যাহাতে আমার প্রতি দয়া করেন এবং যাহাতে আমার লঘুতা মনে না করেন; তুমি তাঁহার নিকট উপস্থিত হইয়া নিপুণভাবে সেইরূপ বলিবে' এইরূপে কোন রমণী দূতীর নিকটে খবর পাঠাইয়া দিল ॥৫৬॥

অন্বয়ঃ—মানপরয়া অপরয়া অগদিতা অপি সখী দয়িতায় ত্বরিতং যযৌ। [তথাহি] সুহৃদঃ চোদিতাঃ [সন্তঃ] সুহৃদাং প্রিয়হিতায় কৃতঃ কৃতিনঃ কিমু ভবন্তি? ॥৫৭॥

टीका—दयितायेति। मानपरया अभिमानवत्या। अतएवापरया नायिकया अगदिता दयितमानयेत्यनुक्ता सखी दयिताय दयितमानेतुम्। क्रियार्थोपपदस्य च कर्मणि

প্রতিভিদ্য কান্তমপরাধকৃতং যদি তাবদস্য পুনরেব ময়া ।
ক্রিয়তেঽনুবৃত্তিরুচিতৈব ততঃ কলয়েদমানমনসং সখি ! মাম্ ॥৫৮॥
অবধীর্য্য ধৈর্য্যকলিতা দয়িতং বিদধে বিরোধমথ তেন সহ ।
তব গোপ্যতে কিমিব কর্ত্তুমিদং ন সহাস্মি সাহসমসাহসিকী ॥৫৯॥

---

মানিন ইতি চতুর্থী । ত্বরিতং শীঘ্রং যযৌ অন্যথা মরণমপ্যস্তীতি ভাবঃ । তথাহি, সুষ্ঠু শোভনং হৃদয়ং যেষান্তে সুহৃদো মিত্রাণি । সুহৃদ্দুর্হৃদৌ মিত্রামিত্রয়োরিতি নিপাতঃ । চোদিতাঃ প্রেরিতাঃ সন্তঃ সুহৃদামিষ্টো হৃদ্য- হিতঃ শ্রেয়স্করস্য যোঽর্থস্তং কুর্ব্বন্তীতি প্রিয়- হিতার্থকৃতঃ কৃতমেষামস্তীতি কৃতিনঃ কৃতকৃত্যা ভবন্তি কিম্ কিন্তু চোদনাং বিনৈবেতি ভাবঃ । অর্থান্তরন্যাসঃ । নায়িকা চ পূর্ব্ববৎ ॥৫৭॥

টিপ্পনী—দয়িতায়েতি । অত্র পরয়া পরেতি যমকম্, দ্বিতীয়ার্দ্ধে চ্ছেকানুপ্রাসঃ অর্থাপত্তিশ্চেত্যে- তেষাং টীকোক্তার্থান্তরন্যাসেন সহ সংসৃষ্টিঃ । মানাখ্যবিপ্রলম্ভশৃঙ্গারো রসঃ, মধুররচনাবশাৎ মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৭॥

বাঙ্গালা—অন্য কোন মানিনী রমণী না বলিলেও তাহার সখী তাহার প্রিয়তমকে আনিবার জন্য তাড়াতাড়ি গেল। কারণ, বন্ধুরা প্রেরিত হইয়াই কি বন্ধুদিগের প্রীতিকর ও হিতকর কার্য্য করিয়া কৃতকৃত্য হইয়া থাকে ? ॥৫৭॥

অন্বয়ঃ—অপরাধকৃতং কান্তং প্রতিভিদ্য যদি পুনঃ এব ময়া অস্য অনুবৃত্তিঃ ক্রিয়তে তাবৎ উচিতা এব, ততঃ সখি ! মাম্ অমানমনসং কলয়েত ॥৫৮॥

টীকা—অথ কাচিৎ কলহান্তরিতা কান্তং প্রতি নির্ভিন্নং তৌ সন্দিশতি । প্রতিভিদ্যে- ত্যাদি । অপরাধকৃতমাগস্কারিণং কান্তম্প্রতিভিদ্য নিরাকৃত্য পুনর্ময়ৈবাস্যানুবৃত্তিরনুসরণং ক্রিয়তে যদি তাবদুচিতৈব পতিব্রতানাং প্রাণেশ্বরচিত্তানুবৃত্তের্ধর্মত্বাদিতি ভাবঃ । কিন্তু হে সখি ! ততোঽনুবর্ত্তনাৎ মামমানমনসমভিমানহীনচিত্তাং কলয়েৎ মন্যেত ॥৫৮॥

টিপ্পনী—প্রতিভিদ্যেতি । অত্র শেষপাদে চ্ছেকানুপ্রাসোঽলঙ্কারঃ । পূর্ব্ববৎ রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৮॥

বাঙ্গালা—অপরাধকারী প্রিয়তমকে আমিই প্রত্যাখ্যান করিয়া, আবার আমিই যদি উঁহার অনুনয় করি ; তবে ( পতিব্রতার পক্ষে ) তাহাও উচিতই হয় বটে ; কিন্তু সখি ! তাহা হইলে, তিনি আমাকে মানশূন্যচিত্ত বলিয়া মনে করিবেন ॥৫৮॥

অন্বয়ঃ—অথ (অহং) ধৈর্য্যকলিতা (সতী) দয়িতম্ অবধীর্য্য তেন সহ বিরোধং বিদধে (চেৎ, তদা) তব কিমিব গোপ্যতে ; অসাহসিকী (অহং) ইদং সাহসং কর্ত্তুং ন সহা অস্মি ॥৫৯॥

টীকা—নম্বাত্মলাঘবায় বিগৃহ্যৈব স্থীয়তামতআহ । অবধীর্য্যেতি ধৈর্য্যকলিতা কলিত- ধৈর্য্যা সতী । বাহিতাগ্ন্যাদিষ্বিতি নিষ্ঠায়াঃ পরনিপাতঃ । দয়িতমবধীর্য্য তিরস্কৃত্য তেন সহ বিরোধং বিদধে করোমীতি চেৎ । দধাতেঃ কর্ত্তরি লট্ । হে সখি ! তব কিমিব

तदुपेत्य मास्म तमुपालभथाः किल दोषमस्य न हि विद्म वयम् ।
इति सम्प्रधार्य्य रमणाय वधूर्विहितागसेऽपि विससर्ज सखीम् ॥६०॥
ननु सन्दिशेति सुदृशोदितया त्रपया न किञ्चन किलाभिदधे ।
निजमैक्षि मन्दमनिशं निश्वसितैः कृशितं शरीरमशरीरशरैः ॥६१॥

---

गोप्यते निगूह्यते न किञ्चिदित्यर्थः किन्तु कथ्यत एवेति कथयति सहसा बलेन वर्त्तत इति साहसिकी। ओजः सहोम्भसा वर्त्तत इति ठक्। सा न भवतीत्यसाहसिकी अहमिति शेषः। इदं साहसं विरोधं विरोधाचरणरूपं साहसकल्यवक्तुम्। शकधृषेत्यादिना तुमुन्। सहत इति सहा समर्था। पचाद्यच्। नास्मि। अत्रासाहसिकत्वस्य विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थहेतुकः काव्यलिङ्गमलङ्कारः ॥५९॥

टिप्पनी—अवधीर्य्येति। अत्र प्रथमे पादे च्छेकानुप्रासः, द्वितीयचतुर्थयोश्च वृत्त्यनुप्रास इति टीकोक्त-काव्यलिङ्गेन सह तयोः संसृष्टिः। पूर्ववत् रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥५९॥

বাঙ্গালা—অথবা সখি! আমি ধৈর্য্য ধারণ পূর্ব্বক প্রিয়তমকে প্রত্যাখ্যান করিয়া, তাঁহার সহিত যদি বিরোধই করিতে থাকি; তবে তোমার নিকট তাহা গোপন করিব কেন? (ঠিক্ বলিতেছি) আমি সেরূপ সাহসশালিনী নই; সুতরাং এইরূপ সাহস করিতে আমি সমর্থ নহি ॥৫৯॥

অন্বয়:—तत् तम् उपेत्य मास्म उपालभथाः; वयम् अस्य दोषं नहि विद्म किल, वधूः इति सम्प्रधार्य्य विहितागसे अपि रमणाय सखीं विससर्ज ॥६०॥

টীকা—तर्हि किमत्र कार्यमत आह। तदिति। तत्तस्मात् वल्लभमुपेत्य मास्मोपालभथाः नोपालभस्व तद्दोषं न गणयेरित्यर्थः। स्मोत्तरे लुङ् चेति उपाङ्पूर्वाल्लभेर्लुङ् न माङ्योगे इत्यट्प्रतिषेधः। ननु सापराधः कथं नोपालभ्यस्तत्राह। वयमस्य दोषमपराधं न विद्म किल अजाना इव तिष्ठाम इत्यर्थः। कार्यार्थिनः कुतो गर्व इति भावः। विदो लटो वेति णलादेशः। इति सम्प्रधार्य निश्चित्य वधूः नायिका विहितागसे कृतापराधायापि रमणाय प्रेयसे। क्रियाग्रहणाच्चतुर्थी। सखीं विससर्ज प्रणिधाय विरहासहिष्णुतयेति भावः। एषा कलहान्तरिता प्रौढ़ा च ॥६०॥

টিপ্পনী—तदिति। अत्र पूर्ववत रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—অতএব সখি! তুমি তাঁহার নিকট উপস্থিত হইয়া তাঁহাকে তিরস্কার করিও না। আমরা তাঁহার দোষ জানি না (এই ভাবেই থাকিব)। স্ত্রীলোকটী এইরূপ স্থির করিয়া, প্রিয়তম অপরাধ করিয়া থাকিলেও তাঁহার নিকট সখীকে পাঠাইল ॥৬০॥

অন্বয়:—ननु सन्दिश इति उदितया सुदृशा त्रपया किञ्चन किल न अभिदधे; (किन्तु) निश्वसितैः अशरीरशरैः अनिशं कृशितं निजं शरीरं मन्दम् ऐक्षि ॥६१॥

ब्रुवते स्म दूत्य उपसृत्य नरान् नरवत् प्रगल्भमतिगर्भगिरः।
सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि ॥६२॥
मम रूपकीर्त्तिमहरद्भुवि यस्तदनुप्रसक्तहृदयेयमिति।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥६३॥

---

टीका—नन्विति। ननु सन्दिश सन्दिश ब्रूहि इत्युदितया दूत्या कथितया सुदृशा नायिकया कर्त्र्या त्रपया हेतुना किञ्चन नाभिदधे किल नाभिहितं खलु। किन्तु निशित-स्मरशरैरनङ्गबाणैरनिशं कृशितं कृशीकृतम्। कृशशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः, 'आविष्ठवद्भावे रभृतो हलादेर्लघोरि'त्यृकारस्य रेफादेशः। निजं शरीरं मन्दमि-ईक्षितम्। एषापि कलहान्तरिता मध्यमा च। त्रपया निजहृदयानभिधानान्निजशरीर-निरीक्षणेन स्वावस्थानिवेदनाच्च तुल्यलज्जास्मरत्वावगमादिति। इयञ्च पञ्चमी कार्श्याख्या कामावस्था। दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥६१॥

टिप्पनी—नन्विति। अत्र प्रथमतृतीयपादयोश्छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इत्यनयोः संसृष्टिः। मानस्य शृङ्गारो रसः, तालव्यशकारबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥६१॥

বাঙ্গালা—"সখি! বক্তব্য বলিয়া দাও" দূতী এই কথা বলিলে, সুন্দরী লজ্জাবশতঃ কোন কথাই বলিতে পারিল না; কিন্তু কামদেবের সুধার বাণে সর্ব্বদা কৃশীকৃত নিজের শরীরটীর দিকে ধীরে ধীরে দৃষ্টিপাত করিল ॥৬১॥

अन्वयः—प्रगल्भमति-गर्भ-गिरः दूत्यः उपसृत्य नरान् नरवत् ब्रुवते स्म। [तथाहि] अजिह्मधियां सुहृदर्थम् ईहितं प्रकृतेः विरुद्धम् अपि (सत्) विराजति ॥६२॥

टीका—दूत्यन्नायिकाभिरुपदिष्टा दूत्यः किमकुर्वन्नित्यत आह। ब्रुवत इति। प्रगल्भाः धृष्टाः मतिगर्भाः प्रतिभासाराश्च गिरो यासां ता दूत्यः नरान् पुरुषानुपसृत्य नरवत् नरैः पुम्भिस्तुल्यम्। तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः। ब्रुवते स्म। न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह। सुहृदर्थमिति। तथाहि, अजिह्मधियामकुटिल-बुद्धीनां सम्बन्धि सुहृदे सुहृदर्थम्। अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यात्। ईहितं चेष्टितं प्रकृतेर्विरुद्धमपि स्वभावविपरीतमपि विराजति शोभते। तस्मान्न धार्ष्ट्यं दोष इत्यर्थः ॥६२॥

टिप्पनी—ब्रुवत इति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः प्रथमचतुर्थपादगत-वृत्त्यनुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥६२॥

বাঙ্গালা—নির্লজ্জা, বুদ্ধিমতী ও বাক্‌পটুতাশালিনী দূতীরা উপস্থিত হইয়া, পুরুষদের নিকট যেমন বলিতে হয়, তেমনই পুরুষদিগকে বলিয়াছিল। কারণ, বন্ধুজনের নিমিত্ত সরলবুদ্ধি লোকদিগের যে চেষ্টা, তাহা স্বভাবের বিপরীত হইলেও শোভা পায় ॥৬২॥

तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्तया या ॥६४॥
उपताप्यमानमलघूष्मभिः श्वसितैः सितेतरसरोजदृशः।
द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलरागरसः ॥६५॥

---

अन्वयः—यः भुवि मम रूपकीर्त्तिम् अहरत्, इयं तदनुप्रसक्तहृदया इति त्वयि मत्सरात् इव मदनः निरस्तदयः (सन्) तां खलु सुतरां क्षिणोति ॥६३॥

टीका—अथ काचिद्दूती कञ्चित्प्रियम्प्रति सप्तभिः प्रार्थयते। ममेत्यादि। यो भुवि मम रूपकीर्त्तिं सौन्दर्यख्यातिमहरत इयं तत्प्रिया तदनुप्रविष्टहृदया तस्मिन्नासक्तचित्तेति अतो हेतोस्त्वयि मत्सरादिव मदनो निरस्तदयो निष्कृपः सन् तां त्वत्प्रियां सुतरां क्षिणोति क्षपयति खलु। एतेन काम्यावस्थोक्ता। अथ साक्षात्प्रतिपक्षभूतनायकपीड़ासमर्थस्य मदनस्य तदीयनायिकापीड़नोक्त्या प्रत्यनीकालङ्कारः। स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित इति सङ्करः। बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे। यस्तदीयतिरस्कारः प्रत्यनीकमलङ्कृतौ इति लक्षणात् ॥६३॥

टिप्पनी—ममेति। अत्र प्रवासाख्यविप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६३॥

বাঙ্গালা—জগতে যে ব্যক্তি আমার সৌন্দর্য্যের যশ অপহরণ করিয়াছে; এই রমণীর চিত্ত তাহাতে আসক্ত; এই জন্য তোমার প্রতি বিদ্বেষবশতই যেন কামদেব নির্দ্দয় হইয়া, তোমার প্রিয়তমাকে অত্যন্ত ক্ষীণ করিতেছেন ॥৬৩॥

अन्वयः—सा तव कथासु अङ्गुलिमुखेन मुहुः यत् श्रवणं परिघट्टयति, तेन भवद्गुणपूगपूरितं (तत्) अतृप्ततया ध्रुवं घनतां नयति ॥६४॥

टीका—तवेति। सा त्वत्प्रिया तव कथासु गुणकीर्त्तनेषु मुहुरङ्गुलिमुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयति स्फालयतीति यत् यद्धट्टनमेतेति शेषः तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणम् अतृप्तया तावद्गुणग्रहणेनासन्तुष्टतया घनतां नयति, बहुगुणग्रहणार्थं प्रस्थादिवद्भूयो गुणप्रवेशाय स्फोषयतीत्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्। अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते ॥६४॥

टिप्पनी—तवेति। अत्र चतुर्थपादे वृत्त्यनुप्रास इति टीकोक्तोत्प्रेक्षया सह संसृष्टिः। नागाख्यविप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—সেই রমণী, তোমার গুণকীর্ত্তনের সময় আঙ্গুলের আগা দিয়া যে বার বার কাণের ভিতর ঘুটায়; তাহা দ্বারা, (তোমার গুণ শুনিয়া) পরিতৃপ্ত না হওয়ার জন্য, তোমার গুণসমূহপূর্ণ সেই কাণকে নিশ্চয়ই সে আরও ফাঁক করে ॥৬৪॥

अन्वयः—नव-नागवल्लि-दल-राग-रसः अलघूष्मभिः श्वसितैः उपताप्यमानं सितेतरसरोजदृशः अधरं द्रवतां नेतुं न क्षमते ॥६५॥

दधति स्फुटं रतिपतेरिषवः शिततां यदुत्पलपलाशदृशः ।
हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥६६॥
कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नापरथा ।
अनिशं निजैरकरुणः करुणं कुसुमेषुरुत्तपति यद्विशिखैः ॥६७॥

---

टीका—उपैति । अलघुरन्तःसन्तापोपाधिकः उष्णिमा उष्णत्वं येषां तैः श्वसितैः निःश्वासैस्तप्यमानं सितेतरसरोजदृशो नीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानां ताम्बूलदलानां रागरसो रञ्जनद्रवो द्रवतामार्द्रतां नेतुं न क्षमते न शक्नोतीति । एतेन ज्वरावस्थोक्ता । अत्र द्रवत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥६५॥

टिप्पनी—उपैति । अत्र रसः पूर्ववत्, यन्मौतृकर्षस्य प्ररोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥६५॥

বাঙ্গালা—গুরুতর-উষ্ণতাশালী ভিতরের নিশ্বাস, নীলোৎপলনয়না রমণীর ওষ্ঠ খানিকে সর্বদাই সন্তপ্ত করিতেছে ; সুতরাং নূতন তাম্বুলের রস তাহাকে আর্দ্র করিতে পারিতেছে না ॥৬৫॥

अन्वयः—रतिपतेः इषवः स्फुटं शिततां दधति ; यत् निरन्तर-बृहत्-कठिन-स्तन-मण्डलावरणम् अपि उत्पल-पलाश दृशः हृदयम् अभिदन् ॥६६॥

टीका—दधतीति । रतिपतेरिषवः शिततां नैशित्यं दधति स्फुटमित्युत्प्रेक्षायाम् । यद्यस्मान्निरन्तरं नीरन्ध्रं बृहत् कठिनञ्च यत् स्तनमण्डलं तदेव वरणं यस्य तद्दपि उत्पलपलाशदृश उत्पलदलाक्ष्याः हृदयमभिदन् भिन्दन्ति स्म । भिदिर्लुङि द्विती येति धृत्वरूपं । संवरणमपि भिन्नमिति विरोधोत्थापितेयं अस्मारं नैशित्योत्प्रेक्षा । तथा च वन्धुन्वेषिण्या कालेन निपीड्यमानायास्तस्यास्त्वद्विरहो जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥६६॥

टिप्पनी—दधतीति । अत्र द्वितीयपादे च्छेकानुप्रासश्चेति टीकोक्तविरोधोत्प्रेक्षासङ्करेण सह पुनः संसृष्टिः । पूर्ववत् रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥६६॥

বাঙ্গালা — কামদেবের বাণগুলি স্পষ্টই সুধারতা ধারণ করে। যেহেতু, পদ্মপলাশলোচনা রমণীর হৃদয় খানি, ঘন, বৃহৎ ও কঠিন স্তনমণ্ডল দ্বারা আবৃত থাকিলেও, সেই বাণগুলি তাহা বিদীর্ণ করিতেছে ॥৬৬॥

अन्वयः—स्मितदृशः अङ्गं कुसुमात् अपि सुतरां सुकुमारम् ; इति अपरथा न । यत् कुसुमेषुः अकरुणः (सन्) निजैः विशिखैः अनिशं करुणम् उत्तपति ॥६७॥

टीका—कुसुमादिति । स्मितदृशः गौराङ्ग्याः अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमितीदमपरथा अन्यथा न किन्तु सत्यमेवेत्यर्थः । यद्यस्मात् कुसुमेषुरकरुणो निष्कृपः सन् निजैर्विशिखैर्बाणैः । पृषत्कबाणविशिखा इत्यमरः । कुसुमैरेवेत्यर्थः । करुणं दीनं यथा तथा अनिशं नित्यमुत्तपति तापयतीत्यर्थः । तपतिरयमौपादिकः सकर्मकः

विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः ।
अमृतस्रुतोऽपि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥६८॥
उदितं प्रियां प्रति सहार्दमिति श्रदधीयत प्रियतमेन वचः ।
विदितेङ्गिते हि पुर एव जने समुदीरिताः खलु लगन्ति गिरः ॥६९॥

---

कुसुमाधिकसौकुमार्याभावे कुसुमैः पीड्यत इति कुसुमाधिकसौकुमार्यं गुणोत्प्रेक्षा नाप-रथेति व्यञ्जकप्रयोगाद्वाच्या ॥६७॥

टिप्पनी—कुसुमादिति । अत्र तृतीयपादे छेकानुप्रासश्चेति टीकोक्तोत्प्रेक्षया सह संसृष्टिः । रसः पूर्ववत्, माधुर्यं गुणः, वैदर्भी च रीतिः ॥६७॥

বাঙ্গালা—স্মেরনয়না রমণীর দেহখানি, পুষ্প অপেক্ষাও অত্যন্ত কোমল; ইহার অন্যরূপ হইতে পারে না। যেহেতু, কামদেব নির্দ্দয় হইয়া, স্বকীয় পুষ্পময় বাণদ্বারা সর্ব্বদা লীনভাবে সেই দেহখানিকে সন্তপ্ত করিতেছেন ॥৬৭॥

अन्वयः—अपक्रियया निषेवितं सर्वं विषतां समुपैति इति अदः सत्यम् । यत् अमृतस्रुतः अपि हिमरश्मिरुचः भवतः विरहात् अमूं दहन्ति ॥६८॥

टीका—विषतामिति । अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वम् अमृत-मपीति भावः । विषतां विषवदाहितत्वं समुपैति इत्यद इदं विषत्वं सत्यं ध्रुवं यद्यस्मात् अमृतस्रुतोऽपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतो विरहात्त्वया विना सेवनादित्यर्थः । अमूं त्वत्प्रियां दहन्ति । याः पूर्वं त्वया सह सेवनादाह्लादयन्निति भावः । एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तर-न्यासः ॥६८॥

टिप्पनी—विषतामिति । अत्र पूर्ववत् रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

বাঙ্গালা—অমৃত প্রভৃতি সকল বস্তুই বিপরীত ভাবে প্রয়োগ করিলে বিষ হইয়া যায়; ইহা সত্য। যেহেতু, চন্দ্রের কিরণগুলি অমৃতস্রাবী হইলেও, তোমার বিরহে তাহাকে দগ্ধ করিতেছে ॥৬৮॥

अन्वयः—प्रियां प्रति सहार्दम् इति उदितं वचः प्रियतमेन श्रदधीयत । हि पुरः एव विदितेङ्गिते जने समुदीरिताः गिरः लगन्ति खलु ॥६९॥

टीका—उदितमिति । प्रियां प्रति प्रियामुद्दिश्य हृदयस्येदं हार्दं प्रेम । प्रेमा ना प्रियता हार्दं प्रेम स्नेह इत्यमरः । तस्येदमित्यण् प्रत्ययः । हृदयस्य हृल्लेखयदण्लासे-ष्विति हृदयस्य हृदादेशः । सहार्दं सस्नेहम् इत्युदितम् । वदेः कर्मणि क्तः, वचिस्वपीत्या-दिना सम्प्रसारणम् । वचो दूतीवाक्यं प्रियतमेन श्रदधीयत विश्वसितम् । दधातेः कर्मणि लङ्, श्रदन्तरोरुपसर्गवद्वचनाच्छ्रच्छब्दस्य प्राक् प्रयोगः । हि यस्मात् पुरः पूर्वमेव विदिते-ङ्गिते विदितपराभिप्राये जने । इङ्गितं हृद्गतो भावः । सुजने समुदीरिताः गिरः अपि

दयिताहृतस्य युवभिर्मनसः परिमूढतामिव गतैः प्रथमम् ।
उदिते ततः सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रयये ॥७०॥
निपपात सम्भ्रमभृतः श्रवणादसितभ्रुवः प्रमदितालिकुलम् ।
दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम् ॥७१॥

---

लगन्ति सज्जाल खलु स्वयं प्रिया हृदयवेदित्वात् । स्वबुद्धेः संवादेन दूतीकथितं प्रियाविरह-दुःखं विश्वश्वासेत्यर्थः । अर्थान्तरन्यासः । एषा कलहान्तरिता अतएव मानाख्यो विप्रलम्भः शृङ्गारः, पूर्वानुरागमानाख्याय प्रवासकरुणात्मना विप्रलम्भश्चतुर्थोऽयमित्युक्तम् ॥६९॥

**टिप्पनी**—उदितमिति । अत्र रसादयः पूर्ववत् ॥६९॥

**বাঙ্গালা**—প্রিয়তমার প্রতি স্নেহের সহিত দূতী এই কথা বলিলে, প্রিয়তম তাহা বিশ্বাস করিল। কারণ, যে ব্যক্তি পূর্ব হইতেই পরের অভিপ্রায় জানে, তাহার নিকটে (সেই পরের সম্বন্ধে) বাক্য বলিলে, তাহা তাহার মনে লাগে ॥৬৯॥

**अन्वयः**—प्रथमं परिमूढतां गतैः इव, ततः क्षणदाकरे उदिते (सति) सपदि लब्धपदैः दयिताहृतस्य मनसः अनुपदिभिः (इव) युवभिः प्रयये ॥७०॥

**टीका**—दयितेति । प्रथमं चन्द्रोदयात् प्राक् परिमूढतां निजमनोऽपहर्तृमार्गान-भिज्ञतां गतैः ततः पश्चात् क्षणदाकरे चन्द्रे उदिते सति सपदि लब्धपदैः दृष्टचोरपदचिह्नैः दयिताभिर्हृतस्याकृष्टस्यापहृतस्य च मनसोऽनुपदिभिरन्वेष्टृभिरन्विष्यद्भिरिवेत्यर्थः अतएव गम्योत्प्रेक्षा प्रागवलम्बितधैर्यत्यागनिमित्ता । अनुपद्यन्वेष्टेति निपातः । अन्वेष्टानुपदी प्रोक्त इति वैजयन्ती । युवभिः प्रयये प्रयातम् । यतेर्भावे लिट् । अत्रोक्तपदान्वेषणो-त्प्रेक्षया यूनां चोरग्राहिरूपकं गम्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥७०॥

**टिप्पनी**—दयितेति । अत्र प्रथमा वाच्या क्रियोत्प्रेक्षा, द्वितीया तु प्रतीयमाना द्रव्योत्-प्रेक्षा, द्वितीयार्द्धे छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रवासाख्यो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७०॥

**বাঙ্গালা**—যুবতিরা যুবকদিগের মন অপহরণ করিয়াছিল; কিন্তু চন্দ্রোদয়ের পূর্বে সে যুবকেরা সে চোর যুবতিদিগের পথ চিনিতে পারিয়াছিল না; তাহার পর, চন্দ্র উদয় পাইলে, তৎক্ষণাৎ তাহারা সে পথ চিনিল; তাই প্রিয়যুবতি কর্তৃক অপহৃত মনের অন্বে-ষণ করিতে করিতেই যেন সেই যুবকরা যাইতে লাগিল ॥৭০॥

**अन्वयः**—सम्भ्रमभृतः असितभ्रुवः प्रमदितालिकुलं वारिरुहं दयितावलोक-विकसन्नयन-प्रसर-प्रणुन्नम् इव [सत्] श्रवणात् निपपात ॥७१॥

**टीका**—अथ यूनां स्वस्वप्राप्त्यनन्तरं वृत्तान्तं वर्णयति । निपपातेति । संभ्रमभृतः प्रत्यु-त्थानसंभ्रमयुजः असितभ्रुवोऽङ्गनायाः प्रमदितालिकुलम् उन्मदालिपुञ्जम् । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । वारिरुहं श्रवणोत्पलं दयितावलोकेन विकसतो विस्तारभाजो

উপনেতুমুন্নতিমতেব দিবং কুচয়োর্যুগেন তরসাকলিতাম্।
রভসোত্থিতামুপগতঃ সহসা পরিরভ্য কশ্চন বধূমরুধৎ ॥৭২॥
অনুদেহমাগতবতঃ প্রতিমাং পরিণায়কস্য গুরুমুদ্বহতা।
মুকুরেণ বেপথুভৃতোঽতিভরাৎ কথমপ্যপাতি ন বধূকরতঃ ॥৭৩॥

---

নয়নস্য প্রসরেণ প্রসারেণ প্রণুন্নমিব। পূর্ববৎ ষত্বম্। নিপপাত তথা সংভ্রান্তমিত্যর্থঃ।
অত্র সংভ্রমহেতুকস্য কর্ণোৎপলপাতস্য নয়নপ্রসারহেতুকত্বমুৎপ্রেক্ষ্যতে। এষা চ হৃষ্টা ॥৭১॥

টিপ্পনী—নিপপাতেতি। অত্র সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ ॥৭১॥

বাঙ্গালা—প্রিয়তম উপস্থিত হইলে, গাত্রোত্থান করার ব্যস্ততায় যুবতির কর্ণোৎপলের ভ্রমরগুলি রব করিয়া উঠিল; এবং প্রিয়তমের প্রতি আনন্দসহকারে দৃষ্টিপাত করায় যুবতির নয়নযুগল বিস্তৃত হইল; তাহাতে সেই নয়নযুগলের আঘাত লাগাতেই যেন তাহার কর্ণ হইতে সে কর্ণোৎপল পড়িয়া গেল ॥৭১॥

অন্বয়ঃ—সহসা উপগতঃ কশ্চন যুবা রভসোত্থিতাম্ উন্নতিমতা কুচয়োঃ যুগেন দিবম্ উপনেতুম্ ইব তরসা আকলিতাং বধূং পরিরভ্য অরুধৎ ॥৭২॥

টীকা—উপনেতুমিতি। সহসোপগতঃ হঠাদাগতঃ কশ্চন যুবা অতএব রভসেনোত্থিতাম্ অতএবোন্নতিমতা কুচয়োর্যুগেন করণেন দিবমাকাশমুপনেতুমিবোর্ধ্বমুৎক্ষেপ্তুমিবেতি ফলোৎপ্রেক্ষা উত্থাননিমিত্তোন্নত্যগুণনিমিত্তা। তরসা বলেনাকলিতাং ব্যাক্ষিপ্তাং বধূং প্রিয়াং পরিরভ্যাশ্লিষ্যারুধৎ রুদ্ধবান্ উপবেশিতবান্ ঊর্ধ্বোৎক্ষেপান্নিবারিতবান্ ইতি ভাবঃ। রুধের্লুঙি ইরিতো বেতি বিকল্পাৎ চ্লেরঙাদেশঃ। এষা হৃষ্টা রোমাঞ্চিতাদ্যনুভাববতী চ ॥৭২॥

টিপ্পনী—উপনেতুমিতি। অত্র সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭২॥

বাঙ্গালা—কোন যুবক হঠাৎ উপস্থিত হইল; (তাহা দেখিয়া) যুবতিও তৎক্ষণাৎ গাত্রোত্থান করিল; তখন উন্নত স্তনযুগল যেন বলপূর্বক তাহাকে আকাশে তুলিয়া নিবার উপক্রম করিল; তখন সেই যুবক আলিঙ্গন করিয়া, সেই যুবতিকে রুদ্ধ করিল ॥৭২॥

অন্বয়ঃ—অনুদেহম্ আগতবতঃ পরিণায়কস্য গুরুং প্রতিমাম্ উদ্বহতা মুকুরেণ বেপথুভৃতঃ অতিভরাৎ বধূকরতঃ কথম্ অপি ন অপাতি ॥৭৩॥

টীকা—অনুদেহমিতি। অনুদেহং দেহস্য পশ্চাৎ। অব্যয়ং বিভক্তীত্যাদিনা পশ্চাদর্থেঽব্যয়ীভাবঃ। আগতবতঃ পরিণায়কস্য পরিণেতুং বোঢ়ুমিত্যর্থঃ। নয়তের্ণ্বুল্প্রত্যয়ঃ। উপসর্গাদসমাসেঽপীতি ণত্বম্। গুরুং পূজ্যাম্ভারবতীঞ্চ প্রতিমাম্প্রতিবিম্বমুদ্বহতা পশ্চাৎ স্থিতস্যাপি তদাভিমুখ্যাদিতি ভাবঃ। মুকুরেণ দর্পণেন কর্ত্রা। দর্পণে মুকুরাদর্শাবিত্যমরঃ। বেপথুভৃতো নবোঢ়তয়া ভয়শৃঙ্গারাভ্যাং কম্পমানাৎ অতি অতিমাত্রো ভরো যস্য তস্মাদতিভারাৎ প্রতিবিম্বগুরুমুকুরবত্ত্বাদিতি ভাবঃ। বধ্বা নবোঢ়ায়াঃ করতঃ পাণিতলাৎ। পঞ্চম্যাস্তসিল্। কথমপি নাপাতি ন পতিতং মহতা প্রযত্নেন ধারিতমিত্যর্থঃ। ভাবে

অবনম্য বক্ষসি নিমগ্নকুচদ্বিতয়েন গাঢ়মুপগূঢ়বতা।
দয়িতেন তৎক্ষণচলদ্রশনাকলকিঙ্কিণীরবমুদাসি বধূঃ ॥৭৪॥
কররুদ্ধনীবি দয়িতোপগতৌ গলিতং ত্বরাবিরহিতাসনয়া।
ক্ষণদৃষ্টহাটকশিলাসদৃশস্ফুরদূরুভিত্তি বসনং ববসে ॥৭৫॥

---

লুঙ্। এষা চ মুগ্ধা। অত্র বধূকরস্থ আদর্শসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিঃ গুণ্যমিতি সঙ্কীর্ণামিতেতি সঙ্করঃ ॥৭৩॥

টিপ্পনী—প্রতিবিম্বিতমিতি। অত্র বেপথুভারেরপকারণত্বেঽপি পতনরূপতৎকার্য্যানুৎপত্তে বিশেষোক্তিরপি টীকোক্তসঙ্করে প্রবিশতি। রসাদয়ঃ পূর্ব্ববৎ ॥৭৩॥

বাঙ্গালা—নববিবাহিত বধূটী হাতে একখানি আয়না ধরিয়া বসিয়াছিল; এমন সময় তাহার পিছনের দিক্ দিয়া তাহার পতি উপস্থিত হইল; অমনি তাহার বৃহৎ প্রতিবিম্ব সেই আয়নার ভিতরে পড়িল; তাহা দেখিয়া বধূটী কাঁপিতে লাগিল এবং তাহার হাতখানিও ভারাক্রান্ত হইল; তথাপি সে আয়না তাহার হাত হইতে পড়িয়া গেল না ॥৭৩॥

অন্বয়ঃ—অবনম্য গাঢ়ম্ উপগূঢ়বতা বক্ষসি নিমগ্ন-কুচ-দ্বিতয়েন দয়িতেন তৎক্ষণ-চলদ্রশনা-কল-কিঙ্কিণী-রবং বধূঃ উদাসি ॥৭৪॥

টীকা—অবনম্যেতি। অবনম্য গাঢ়মুপগূঢ়বতা আশ্লিষ্টবতা অতএব বক্ষসি নিমগ্নকুচদ্বিতয়েন দয়িতেন তৎক্ষণে চলন্ত্ উচ্ছলন্ রশনায়াঃ কলকিঙ্কিণীরবো যস্মিন্ কর্ম্মণি তদ্যথা তথা বধূরঙ্গনা উদাসি উৎক্ষিপ্তা। অস্যতেঃ কর্ম্মণি লুঙ্। এষা চ হৃষ্টা রোমাঞ্চাদ্যনুভাববতী চ। স্বভাবালঙ্কারঃ ॥৭৪॥

টিপ্পনী—অবনম্যেতি। অত্র দ্বিতীয়পাদে ছেকানুপ্রাসস্তেতি টীকোক্তস্বভাবেন তয়া সহ সংসৃষ্টিঃ। রসাদয়ঃ পূর্ব্ববৎ ॥৭৪॥

বাঙ্গালা—যুবক কিঞ্চিৎ অবনত হইয়া…… ॥৭৪॥

অন্বয়ঃ—দয়িতোপগতৌ (সত্যাং) ত্বরাবিরহিতাসনয়া (কয়াচিৎ) গলিতং কররুদ্ধনীবি বসনং ক্ষণ-দৃষ্ট হাটক-শিলা-সদৃশ-স্ফুরদূরু-ভিত্তি ববসে ॥৭৫॥

টীকা—কররুদ্ধেতি। দয়িতোপগতৌ প্রিয়াগমনে সতি অতএব ত্বরয়া বিরহিতম্ত্যক্তমাসনং যয়া তয়া উত্থিতয়েত্যর্থঃ কয়াচিদিতি শেষঃ অতএব গলিতং স্রস্তম্ অতএব কররুদ্ধনীবি কররুদ্ধনীবিবন্ধং বসনং ক্ষণং দৃষ্টা হাটকশিলাসদৃশী হৈমশিলাপ্রতিমা স্ফুরন্তী ঊরুভিত্তিরূরুদেশো যস্মিন্ কর্ম্মণি তদ্যথা তথা। হিরণ্যং হেম হাটকমিত্যমরঃ। ববসে আচ্ছাদিতম্। বস্তেরাচ্ছাদনার্থাৎ কর্ম্মণি লিট্। ঊরুভিত্তিরিবেত্যুপমিতসমাসঃ। স্বভাবোপময়োঃ সংসৃষ্টিঃ ॥৭৫॥

টিপ্পনী—করেতি। অত্র চতুর্থপাদে ছেকানুপ্রাস ইতি তস্যাপি টীকোক্তসংসৃষ্টৌ প্রবেশঃ। রসঃ পূর্ব্ববৎ, সমাসবাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭৫॥

পিদধানমন্বগুপগম্য দৃশৌ ব্রুবতে জনায় বদ কোঽয়মিতি ।
অভিধাতুমধ্যবসসৌ ন গিরা পুলকৈঃ প্রিয়ং নববধূর্ন্যগদৎ ॥৭৬॥
উদিতোরুসাদমতিবেপথুমৎ সুদৃশোঽভিভর্ত্তৃ বিধুরং ত্রপয়া ॥
বপুরাদরাতিশয়শংসি পুনঃ প্রতিপত্তিমূঢ়মপি বাঢ়মভূৎ ॥৭৭॥

---

বাঙ্গালা—প্রিয়তম উপস্থিত হইলে, কোন রমণী তাড়াতাড়ি আসন ছাড়িয়া গাত্রোত্থান করিল ; তখন তাহার কাপড়খানি পড়িয়া যাইতেছিল ; তাই সে হাত দিয়া তাহার গিঁটটী ধরিল ; সেই সময়ে স্বর্ণশলাসদৃশ তাহার কম্পিত উরুযুগল ক্ষণকালের জন্য দেখা গেল ; পরে সে কাপড় পড়িল ॥৭৫॥

অন্বয়ঃ—নববধূঃ অন্বক্ উপগম্য দৃশৌ পিদধানং প্রিয়ম্ 'অয়ং কঃ ইতি বদ' ইতি ব্রুবতে জনায় গিরা অভিধাতুং ন অধ্যবসসৌ ; (কিন্তু) পুলকৈঃ ন্যগদৎ ॥৭৬॥

টীকা—পিদধানমিতি। নববধূর্নবোঢ়া অন্বক্ পশ্চাদুপগম্য দৃশৌ পিদধানং ছাদয়ন্তং প্রিয়ং দৃষ্টিচ্ছাদকঃ কঃ বদ ইতি ব্রুবতে পৃচ্ছতে জনায় গিরা বাচা অভিধাতুং নাধ্যবসসৌ নোৎসেহে লজ্জয়েতি ভাবঃ। অধ্যবপূর্বাৎ স্যতেঃ কর্ত্তরি লিট্। কিন্তু পুলকৈর্ন্যগদৎ। অত্র প্রিয়স্যানস্যার্থস্য লজ্জয়া অসংলক্ষিতস্য পুলকৈঃ প্রকাশনাৎ সূক্ষ্মালঙ্কারঃ, অসংলক্ষিতসূক্ষ্মার্থপ্রকাশঃ সূক্ষ্ম উচ্যতে ইতি লক্ষণাৎ ॥৭৬॥

টিপ্পনী—পিদধানমিতি। অত্র সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৬॥

বাঙ্গালা—কোন যুবক, পিছনের দিক্ দিয়া আসিয়া নব বধূর চোখ দুইটী (হাত দিয়া) চাপিয়া ধরিল ; তখন অন্য কোন সখী জিজ্ঞাসা করিল—"বল দেখি—ইনি কে?" তখন সে নব বধূটী লজ্জাবশতঃ বাক্য দ্বারা বলিতে পারিল না বটে, কিন্তু রোমাঞ্চ দ্বারা বলিল যে—"ইনি প্রিয়তম" ॥৭৬॥

অন্বয়ঃ—অভিভর্ত্তৃ উদিতোরুসাদম্ অতিবেপথুমৎ ত্রপয়া বিধুরং প্রতিপত্তিমূঢ়ম্ অপি সুদৃশঃ বপুঃ বাঢ়ম্ আদরাতিশয়শংসি অভূৎ ॥৭৭॥

টীকা—উদিতেতি। অভিভর্ত্তৃ, ভর্ত্তৃসমক্ষম। লক্ষণেনাভিমুখ্যে দ্বিত্যব্যয়ীভাবঃ। উদিত উৎপন্ন ঊরুসাদঃ ঊর্ব্বোর্নিশ্চেষ্টতা যস্য তৎ অতিবেপথুমৎ অতিকম্পবৎ। এতেন বিশেষণদ্বয়েন প্রত্যুত্থানালিঙ্গনবিরোধি স্তম্ভবেপথু সাত্ত্বিকাবুক্তৌ। ত্রপয়া বিধুরং বিক্লবম। এতেন লজ্জাসঞ্চারিণা প্রিয়বাক্কুণ্ঠত্বমুক্তম। এবং প্রতিপত্তিমূঢ়মপি ইতিকর্ত্তব্যতামূঢ়মপি সুদৃশো বপুর্বাঢ়ং ভৃশম্ আদরাতিশয়শংসি মুখরাগাদিলিঙ্গৈরাদরবিশেষব্যঞ্জকমভূৎ। তস্যাদরে কিমুপচারৈরিতি ভাবঃ ॥৭৭॥

টিপ্পনী—উদিতোরুসাদমিতি। অত্র রসাদয়ঃ পূর্ব্ববৎ ॥৭৭॥

বাঙ্গালা—স্বামী উপস্থিত হইলে, কোন রমণীর উরুযুগলে স্তব্ধতা আসিল, এবং তাহার শরীর কাঁপিতে লাগিল, লজ্জায় অলস হইল এবং কিংকর্ত্তব্যবিমূঢ় হইয়া পড়িল ; তথাপি (মুখরক্তিমাদি দ্বারা) সে শরীর, স্বামীর অত্যন্ত আদর জানাইল ॥৭৭॥

परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः प्रणयातिभूमिमगमन् गतिभिः ॥७८॥
मधुरोन्नतभ्रु ललितञ्च दृशोः सकरप्रयोगचतुरञ्च वचः ।
प्रकृतिस्थमेव निपुणागमितं स्फुटनृत्यलीलमभवत् सुतनोः ॥७९॥
तदयुक्तमङ्ग ! तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम् ।
प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा ॥८०॥

---

अन्वयः—प्रमदाः अधिवेश्म पत्युः उपचारविधौ अलघूरुभरात् परिमन्थराभिः अनुपदं स्खलिताभिः अपि गतिभिः प्रणयातिभूमिम् अगमन् ॥७८॥

टीका—परीति । प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्मणि अलघोर्महत ऊरुभरात् परिमन्थराभिरलसाभिः अनुपदं पदे पदे स्खलिताभिरपि गतिभिः प्रणयातिभूमिं प्रेमप्रकर्षमगमन् परं प्रेमास्पदीभूता इत्यर्थः । प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः ॥७८॥

टिप्पनी—परीति । अत्रापि रसादयः पूर्ववत् ॥७८॥

বাঙ্গালা—আপনাদের ঘরে পতি উপস্থিত হইলে, রমণীরা তাঁহার অভ্যর্থনায় প্রবৃত্ত হইয়াছিল বটে; কিন্তু উরুযুগলের গুরুতর ভারে তাহাদের গতি মন্দ মন্দ হইয়াছিল এবং প্রত্যেক পদক্ষেপে স্খলিত হইতেছিল; তথাপি সেই গতি দ্বারাই তাহারা অতিরিক্ত প্রণয় প্রকাশ করিতে সমর্থ হইয়াছিল ॥৭৮॥

अन्वयः—मधुरोन्नतभ्रु दृशोः ललितञ्च सकरप्रयोगचतुरं वचश्च सुतनोः प्रकृतिस्थम एव सद्यः निपुणागमितं स्फुटनृत्यलीलम् अभवत् ॥७९॥

टीका—मधुरेति । मधुरं मनोहरं यथा तथोन्नते उच्चलिते भ्रुवौ यस्मिन् तन्मधुरोन्नतभ्रु । गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम । दृशोर्ललितं नयनचेष्टा च सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरञ्च तद्वचश्च सुतनोः स्त्रियाः प्रकृतिस्थमेव स्वभावसिद्धमेव सपदि निपुणेन निपुणाचार्य्येणागमितमभ्यासितम् । अनायासं स्फुटं प्रथितं यन्नृत्यं तस्य लीलेव लीला यस्य तत्तथोक्तमभवदिति निदर्शनालङ्कारः । तया नर्त्तक्युपमा गम्यते ॥७९॥

टिप्पनी—मधुरेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७९॥

বাঙ্গালা—নয়নযুগলদ্বারা দৃষ্টিপাত করিবার সময়ে, ভ্রূযুগল সুন্দরভাবে উন্নত হইতেছিল এবং চাতুর্য্যের সহিত বাক্যপ্রয়োগ করিবার সময়ে হস্তের নানাবিধ অভিনয় হইতেছিল; সুতরাং সুন্দরীর এগুলি স্বভাবসিদ্ধ হইলেও, বিচক্ষণ শিক্ষককর্ত্তৃক শিক্ষিত স্পষ্ট নৃত্যলীলার ন্যায় হইয়াছিল ॥৭৯॥

अन्वयः—अङ्ग ! विश्वसृजा तव यत् ईक्षणसहस्रतयं न कृतम्, तत् अयुक्तं (कृतम्) ; येन मयि गोत्रभिदा (त्वया) अद्य स्फुटम् इन्द्रता जगति प्रकटीकृता ॥८०॥

न विभावयत्यनिशमक्षिगतामपि मां भवानतिसमीपतया।
हृदयस्थितामपि पुनः परितः कथमीक्षते वहिरभीष्टतमाम् ॥८१॥
इति गन्तुमिच्छुमभिधाय पुरः क्षणदृष्टिपातविकसद्वदनाम्।
स्वकरावलम्बनविमुक्तगलत्कलकाञ्चि काञ्चिदरुणत्तरुणः ॥८२॥

---

टीका—अथ कस्याश्चित्सपत्नीनामग्रहणाद्धतायाः कान्तोपालम्भं विशेषकेणाह। तदि-त्यादि। श्लोकत्यासन्वयी। विश्वसृजा विधात्रा तव ईक्षणसहस्रतयं नेत्रसहस्रसमूहः। सङ्ख्याया अवयवे तयप्। न कृतं न सृष्टमिति यत् तदयुक्तं कुतः येन कारणेन मयि विषये स्फुटं प्रत्यक्षमेव गोत्रभिदा नामभेदिना च। गोत्रं नाम्नि कुलेऽप्यद्राविति यादवः। त्वयेति शेषः। अद्य इन्द्रता जगति प्रकटीकृता खलु। अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वसुत्प्रेक्ष्यते ॥८०॥

टिप्पनी—तदिति। अत्र मानाख्यविप्रलम्भशृङ्गारो रसः, गुणरीती पूर्ववत् ॥८०॥

বাঙ্গালা—মহাশয়! ব্রহ্মা যে আপনার সহস্রসংখ্যক নয়ন করেন নাই; এটা তিনি অসঙ্গত কাজ করিয়াছেন। কেন না, আপনি আজ আমার বিষয়ে 'গোত্রভিৎ' (নামো-চ্চারণের বৈষম্যকারী, পর্বতবিদারণকারী) হইয়া, জগতে স্পষ্টই নিজের ইন্দ্রতা প্রকাশ করিয়াছেন ॥৮০॥

অন্বয়:—भवान् अनिशम् अक्षिगताम् अपि माम् अतिसमीपतया न विभावयति; पुनः हृदयस्थि-ताम् अपि अभीष्टतमां परितः बहिः कथम् ईक्षते ॥८१॥

टीका—नेति। अनिशमक्षिगतां चक्षुःसन्निकृष्टामपि द्वेष्यामिति च गम्यते। द्वेष्ये-त्वक्षिगत इत्यमरः। मामतिसमीपतया भवान्न विभावयति। शेषे प्रथम इति प्रथमपुरुषः। इन्द्रियसन्निकृष्टमपि न पश्यत इति विरोधाभासनाऽर्थोऽपिशब्दः। परमार्थस्तु द्वेष्यत्वादति-सामीप्याच्च अविभावनं न चित्रमिति भावः। अभीष्टतमां पुनर्हृदयस्थितां हृदयानपेताम् अन्तर्हितामिति च गम्यते। अतएव विरोधाभासकोऽपिशब्दः। बहिः पुरतः कथम्भवान् ईक्षते इदन्तु चित्रम् अतिसामीप्यव्यवधानस्यापि दर्शनप्रतिबन्धकत्वादिति भावः। प्रेमा-स्पदं वस्तु परोक्षमप्यपरोक्षमीक्षते इतरदपरोक्षमपि परोक्षमेवेति तात्पर्यार्थः। विरोधा-भासयोः सङ्करः ॥८१॥

टिप्पनी—नेति। अत्रापि रसादयः पूर्ववत् ॥८१॥

বাঙ্গালা—আমি সর্বদাই আপনার চোখের উপর রহিয়াছি; তথাপি আপনি নিতান্তনিকটে বলিয়া আমাকে দেখিতে পাইতেছেন না; আর আপনার প্রিয়তমা হৃদয়ের ভিতরে রহিয়াছে; তথাপি আপনি তাহাকে কি করিয়া চারি দিকে দেখিতেছেন? ॥৮১॥

অন্বয়:—तरुणः, इति अभिधाय पुरः गन्तुम् इच्छुं-क्षण-दृष्टिपात-विकसद्वदनां काञ्चित् स्वकरावल-म्बन-विमुक्त-गलत्-कल-काञ्चि अरुणत् ॥८२॥

अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ।
कलयन्नपि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥८३॥
आलोक्य प्रियतममंशुके विनीवी यत्तस्थे नमितमुखेन्दु मानवत्या ।
तन्नूनं पदमवलोकयाम्बभूवे मानस्य द्रुतमपयानमास्थितस्य ॥८४॥

---

टीका—इतीति । इत्यभिधाय पुरो गन्तुमिच्छुं चक्षुं दृश्योः पातेन विकसद्वदनां परस्परदृष्टिपातमात्रगतकोपामित्यर्थः । काञ्चिन्नायिकां तरुणो युवा स्वकरावलम्बनं प्रियकरेण ग्रहणं तेन विमुक्ता मुक्तबन्धना अतएव गलन्ती भ्रंशमाना कला मधुरा काञ्ची यस्मिन् कर्मणि तद्यथा तथा अरुणत् रुद्धवान् । रुधादिभ्यः श्नम् । एषा च कलहान्तरिता ॥८२॥

टिप्पनी—इतीति । अत्र स्वभावोक्तिरलङ्कारः, द्वितीयपादेन मानापगमप्रतीतिः सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥८२॥

বাঙ্গালা—এইরূপ বলিয়া কোন রমণী সম্মুখের দিকে যাইতে ইচ্ছা করিল বটে; কিন্তু পরস্পর দৃষ্টিপাত করিবামাত্র তাহার কোপ চলিয়া যাওয়ায় মুখখানি আনন্দে প্রফুল্ল হইল; এই অবস্থায় যুবক তাহার চন্দ্রহার হাত দিয়া ধরায় সে চন্দ্রহারের বন্ধন খুলিয়া গেল এবং চন্দ্রহার মধুর রব করিয়া উঠিল; তখন যুবক সেই রমণীকে ধরিয়া রুদ্ধ করিল ॥৮২॥

अन्वयः—निरस्ते कामिनि अपयाति (सति) सरोषया मृगाक्ष्या कृतकं चुक्षुवे ; इतरः अपि कलयन् अपि अशकुनेन स्खलितः किल सव्यथः अवतस्थे ॥८३॥

टीका—अपयातीति । सरोषया मृगाक्ष्या निरस्ते कामिनि भर्त्तरि अपयाति निर्यति सति कृतकं कृत्रिमं यथा तथा चुक्षुवे तन्निर्गमनप्रतिबन्धार्थं क्षुतं छातमित्यर्थः । क्षुशब्दे भावे लिट् । इतरोऽपि नायकोऽपि कलयन्नपि कृतकोपमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्ध इव सव्यथः सनिर्वेद इवावतस्थे स्थितः न गत इत्यर्थः, उभावपि समानानुरागाविति भावः । एषा च कलहान्तरिता ॥८३॥

टिप्पनी—अपयातीति । अत्र कारणाभावरूपेक्षितेन क्षुते जनकत्वस्य संलक्षणात् सूक्ष्मं नामालङ्कारः अन्यथ इवेति प्रतीयमानोत्प्रेक्षया संसृज्यते । मानप्रवासविप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—কোন মানিনী রমণী, কামুক নায়ককে প্রত্যাখ্যান করায় সে চলিয়া যাইতে লাগিলে, ঐ মানিনী রমণী কৃত্রিম হাঁচি দিল; তখন সেই নায়ক তাহা বুঝিতে পারিয়াও, বাধা পড়ায় যাওয়া স্থগিত রাখিয়া, ব্যথিত হইয়াই যেন অবস্থান করিতে লাগিল ॥৮৩॥

अन्वयः—मानवत्या प्रियतमम् आलोक्य अंशुके विनीवी (सति) नमितमुखेन्दु यत् तस्थे ; तत् द्रुतम् अपयानम् आस्थितस्य मानस्य पदं नूनम् अवलोकयाम्बभूवे ॥८४॥

सुदृशः सरसव्यलीकतप्तस्तरसा श्लिष्टवतः सयौवनोष्मा ।
कथमप्यभवत् स्मरानलोष्णः स्तनभारो न नखम्पचः प्रियस्य ॥८५॥

---

टीका—आलोक्येति। मानवत्या कोपवत्या स्त्रिया। स्त्रीणामीर्ष्याकृतः कोपो मानो-ऽन्यत्रसङ्गिनि प्रिये। प्रियतममालोक्य। स्त्रित्या समानकर्तृकत्वात् क्त्वानिर्देशः। अथ मुखी विनीवी प्रियावलोकनाद्विगलितबन्धे सति नाभिवपुंस्कत्वात् पुंवद्भावः। स्त्रीकटीवस्त्रबन्धे-ऽपि नीविः परिपणेऽपि चेत्यमरः। नमितमुखेन्दु यथा तथा तस्थे स्थितमिति यत् तत्तत्का-लमुखावस्थानाद् द्रुतं शीघ्रं प्रियावलोकनचक्षा एवेत्यर्थः। अपयानमाश्रितस्य प्रयाणशी-लस्य मानस्य कोपस्य पदम्पदचिह्नमवलोकयाम्बभूवे अन्वेषितमित्यर्थः। लज्जानिमित्ताया मुखनतेः अन्वेषणार्थत्वमुत्प्रेक्ष्यते नूनमिति मानगम्योऽप्यत्रानित इति भावः ॥८४॥

टिप्पनी—आलोक्येति। अत्रापि मानापगमात् सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८४॥

বাঙ্গালা—প্রিয়তমকে দেখিবা মাত্র কোন মানিনী রমণীর কাপড়ের গিঁট খুলিয়া গেল ;সেই অবস্থায় সে যে মুখখানি অবনত করিয়া দাঁড়াইয়া রহিল ; তাহাতে বোধ হই-য়াছিল তাহার মান যে চলিয়া গিয়াছিল; তাহার পদচিহ্নগুলি সে নিশ্চয়ই দেখিতেছিল ॥৮৪॥

अन्वयः—सरस व्यलीक-तप्तः सयौवनोष्मा स्मरानलोष्णः सुदृशः स्तनभारः तरसा आश्लिष्टवतः प्रियस्य कथम् अपि नखम्पचः न अभवत् ॥८५॥

टीका—सुदृश इति। सरसमार्द्रं नूतनमिति यावत्। तेन व्यलीकेन प्रियकृतेनाप-राधेन तप्तः तथा यौवनोष्मणा सह वर्त्तत इति सयौवनोष्मा। किञ्च स्मरानलोष्णः कामाग्निसन्तप्तः एवं त्रिविधाग्नितप्तोऽपि सुदृशः स्तनभारस्तरसा वेगेनातिदाढ्र्येनाश्लिषे-त्यर्थः। आश्लिष्टवतः आलिङ्गितवतः प्रियस्य कथमपि कथं वा कुतो हेतोरित्यर्थः। नखं पचति क्वाथयतीति नखम्पचः। पचिरत्र तापवाची। मितनखे चेति खश्प्रत्ययः, अरु-र्द्विषदजन्तस्य मुमिति मुमागमः। नाभवत् तथोष्मणा ईषदुष्णोऽपि नाभूदित्यर्थः। प्रिया-ङ्गस्पर्शप्रतीकाराः खलु कामिनां सन्तापा इति भावः। तादृगोष्णासम्बन्धेऽप्यसम्बन्धोक्तेरति-शयोक्तिः ॥८५॥

टिप्पनी—सुदृश इति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८५॥

বাঙ্গালা—প্রিয়তমের নূতন অপরাধবশতঃ অভিমানে কোন সুন্দরীর স্তনযুগল, তপ্ত ছিল ; আবার যৌবনের উষ্ণতাপেও তপ্ত ছিল, তাহার পর আবার কামানলেও তপ্ত হইয়াছিল ; এই অবস্থায় সেই প্রিয়তম গাঢ় আলিঙ্গন করিয়া নখ দ্বারা স্পর্শ করিলে, সেই স্তনযুগল উক্ত ত্রিবিধভাবে তপ্ত হইয়াও কোন রকমেই প্রিয়তমের নখসন্তাপী হইয়াছিল না ॥৮৫॥

दधतुरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ।
वशी सुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न ॥८६॥

इत्यन्नारीर्घटयितुमलङ्कामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ।
आचार्य्यकं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥८७॥

---

**अन्वयः**—उरु वशीतलम् उरोजद्वयं दधती भुवः तलं गता स्वयम् उर्वशी इव (स्थिता) काचन (स्त्री) अप्रतिमेन मुखेन वशी तां प्रति मेनका च न श्रिया अधिका ॥८६॥

**टीका**—दधतीति । उरु महदशीतलं स्मरयौवनोष्मभ्यामुष्णमुरोजद्वयं कुचद्वयं दधती भुवस्तलङ्गता स्वयं साक्षादुर्वशीव स्थितेत्युत्प्रेक्षा । काचन स्त्री अप्रतिमेन सुखेन वशी तां प्रति मेनका मेनकाख्याप्सरसश्च श्रिया सौन्दर्य्येणाधिका नेत्यतिशयोक्तिः । तयोर्य्यमकेन संसृष्टिः । वंशस्थं वृत्तम् ॥८६॥

**टिप्पनी**—दधतीति । अत्र मधुररचनावशात् माधुर्य्यं गुणः, वदर्भी च रीतिः ॥८६॥

**বাঙ্গালা**—ভূতলাবতীর্ণ স্বয়ং উর্বশীর ন্যায় কোন রমণী, উষ্ণ ও বিশাল স্তনযুগল ধারণ করতঃ অতুলনীয় মুখমণ্ডলদ্বারা শোভা পাইতে লাগিল ; তাহা অপেক্ষা, মেনকানাম্নী অপ্সরাও, সৌন্দর্য্যদ্বারা অধিক ছিল না ॥৮৬॥

**अन्वयः**—इत्थं सपदि शान्तमानान्तरायाः प्रालेयांशोः रुचयः कामिभिः (सह) नारीः घटयितुं कामम् अलम् आसन् । विलसन्मन्मथश्रीविलासाः ह्री-प्रत्यूह-प्रशम-कुशलाः शीधवः आसां रतिषु आचार्य्यकं चक्रुः ॥८७॥

**टीका**—इत्थमिति । इत्थमनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । सपदि शान्तः प्रमितो मानः कोप एवान्तरायो याभिस्ताः । वा दान्तशान्तेत्यादिना शमेर्ण्यन्तात् शान्तेति निपातः । प्रालेयांशोश्चन्द्रस्य रुचयो नारीः कामिभिर्घटयितुम् । मिताङ्ह्रस्वः, पर्य्याप्तिवचनेष्वलमर्थेष्विति तुमुन् प्रत्ययः । कामं प्रकामं समर्थाः आसन् इत्य इवेति भावः विलसन्तो मन्मथश्रीविलासा भवितश्रीत्कारादिमदनातिरेकविकारा याभिस्ताः ह्रीरेव प्रत्यूहो विघ्नस्तस्य प्रशमे निवारणे कुशलाः शीरते आभिरिति शीधवो मदिराः । शीङो धुगित्यौणादिको धुक् प्रत्ययः । आसां रतिषु आचार्य्यकमुपदेशञ्चक्रुः । नर्म्मसख्य इवेति भावः । अत्र प्रथमार्द्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशेषणसाम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिर्द्वितीयार्द्धे तु शीधुष्वारोपितस्याचार्य्यत्वस्य प्रकृतोपयोगात्परिणाम तयोः सापेक्षत्वात्सङ्करः तेन च दूतीनर्म्मसख्युपमाध्वनिः । उत्तरवर्गे मधुपानरतोत्सववर्णनायाश्चायमेव प्रस्तावः । मन्दाक्रान्ता वृत्तम् । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेदिति लक्षणात् ॥८७॥

ইতি শ্রীমাঘকৃতৌ শিশুপালবধে মহাকাব্যে
প্রদোষবর্ণনং নাম নবমঃ সর্গঃ।

—*—

ইতি শ্রীমহোপাধ্যায়কোলাচলমল্লিনাথসূরিবিরচিতে
মাঘকাব্যব্যাখ্যানে সর্বঙ্কষাখ্যে নবমঃ সর্গঃ ॥৯॥

—০—

টিপ্পনী—ইত্থমিতি। অত্র ছেকানুপ্রাসশ্চ শব্দালঙ্কার ইতি টীকোক্তালঙ্কারেণ সহ পুনঃ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৭॥

ইতি শ্রীহরিদাস সিদ্ধান্তবাগীশবিরচিতায়াং
শিশুপালবধটিপ্পন্যাং মাধুরীসমাখ্যায়াং
নবমঃ সর্গঃ ॥৯॥

—০—

বাঙ্গালা—চন্দ্রের কিরণরাশি এইভাবে হঠাৎ রমণীগণের মানরূপ বিঘ্ন নিবারণ করিয়া, তাহাদিগকে কামুকগণের সহিত সম্মিলিত করিতে বিশেষরূপে সমর্থ হইল; তাহার পর, লজ্জারূপ বিঘ্ন নিবারণ করিতে নিপুণ মদ্য, কামকান্তি ও কামবিলাস, প্রকাশ করিয়া, সেই রমণীগণের রমণকার্য্যে শিক্ষকতা করিল ॥৮৭॥

—০—

# दशमः सर्गः ।

—:*:—

सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥१॥
सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ।
ते सुहृत्त्वमथ मूर्त्तमपीप्यन् प्रेम मानमवधूय वधूः स्वाः ॥२॥

---

**अन्वयः**—अथ सज्जितानि सुरभीणि उल्लसन्नयनवारिरुहाणि सुघटितानि प्रियतमावदनानि यूनां सुरायाः पात्रताम् आययुः ॥१॥

**टीका**—आचार्य्यत्वं रतिषु शौघवस्रक् विरुक्तं तत्प्रपञ्चनायास्मिन् सर्गे मधुपानलाघवं दर्शयति । सज्जितानीति । अथ पानगोष्ठीप्रस्तावानन्तरं सज्जितानि यावकाञ्जनादिना संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयनानि वारिरुहाणीव अन्यत्र नयनानीव वारिरुहाणि वासनार्थं क्षिप्तानि तान्युल्लसन्ति येषु तानि तथोक्तानि सुघटितानि सुष्ठु सुखैर्योजितानि शोभनसंस्थानवत्तया निर्म्मितानि वा प्रियतमावदनानि यूनां कामिनां सुरायाः पात्रतां पानभाजनताम् आययुः प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां मुखसुरामेव पपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येन तेषां पानसाधनतापादनेन कृतवदनोपयोगात्परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात् । तेन श्लेषसङ्कीर्णोपमा व्यज्यते । अस्मिन् सर्गे स्वागता वृत्तम् । स्वागतेति रनभाद्गुरुयुग्मम् ॥१॥

**टिप्पनी**—सज्जितानीति । अत्र सुरापदं पैष्टीतरसुरापरम् । तेन क्षत्रियाणां यादवानां तत्पाने न दोषः । तथाच मनुः—

> "कामतोऽपि हि राजन्यो वैश्यो वापि कथञ्चन ।
> मद्यं पीत्वाऽसुरासंज्ञं न कश्चिद्दोषमर्हति ॥"

अत्र मनुवचने सुरापदं पैष्टीपरम् । प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

**বাঙ্গালা**—তদনন্তর, পরিষ্কৃত, সুগন্ধি, নয়নপদ্মশোভিত এবং পরমসুন্দর প্রিয়তমাদিগের মুখমণ্ডলগুলিই, যুবকদিগের মদ্যের পাত্র হইল ॥১॥

**अन्वयः**—अथ ते मानम् अवधूय सोपचारम् उपशान्तविचारं सानुतर्षम् अनुतर्षपदेन मूर्त्तं प्रेम सुहृत्त्वं स्वाः वधूः अपीप्यन् ॥२॥

क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥३॥

---

टीका—सोपचारमिति। अथ पानीकरणानन्तरं ते युवानः सोपचारं सप्रार्थनम् उपशान्तविचारं निवृत्तशङ्कं विवादेति पाठे मानमवधूयेति पुनरुक्तिः चारश्चारमित्यनुप्रास-क्रमभङ्गश्च स्यात्। सानुतर्षं सतृष्णञ्च यथा तथा अनुतर्षं त्वनेनेत्यनुतर्षो मद्यम्। मद्येऽनु-तर्षस्तत्पाने पात्रे तृष्णाभिलाषयोरित्युभयत्रापि विश्वः। तस्य पदेन छलेन मूर्त्तं मूर्त्तिमत् प्रेम स्वाः स्वीया वधूः मुहूर्त्तं यावन्मानं कोपमवधूयापीप्यन् पाययन्ति स्म। पिबतेर्णौ चङि लोपः पिबतेरीच्चाभ्यासस्येति धात्वाकारलोपः ईकारोऽभ्यासस्य। न पादमीत्यादिना निगरणार्थत्वमिति परस्मैपदनिषेधेऽपि णिचश्चेत्यात्मनेपदविकल्पे त्वार्थिकं परस्मैपदम्। गतिबुद्धीत्यादिना वधूनामित्यणिकर्त्तुः कर्मत्वम्। अनुतर्षपदेनेत्यनुतर्षापह्नवेन मूर्त्तप्रेम-त्वोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा ॥२॥

टिप्पनी—सोपचारमिति। अत्र प्रथमे तृतीये च पादे छेकानुप्रासः, द्वितीये यमकम्, चतुर्थे तु वृत्त्यनुप्रास इति टीकोक्तोत्प्रेक्षया सह संसृष्टिः। सम्भोगशृङ्गारो रसः, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—তাহার পর সেই যুবকরা কিছু কালের জন্য মান পরিত্যাগ করিয়া প্রার্থনা-পূর্ব্বক, নিঃশঙ্কভাবে এবং পিপাসার সহিত আপন আপন প্রিয়তমাকে মদ্যচ্ছলে মূর্ত্তিমান্ প্রণয় পান করাইয়া দিল ॥২॥

अन्वयः—क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ स्वादुनि प्रणदितालिनि शीते मधुनि इन्द्रियवर्गः निर्ववार ॥३॥

टीका—क्रान्तेति। क्रान्तं संक्रान्तं कान्तवदनप्रतिबिम्बं यस्मिन् तस्मिन् अतिनिर्वृति-कर इत्यर्थः। भग्नाः छिन्नाः बालसहकाराणां नवीनपल्लवाः। आम्रश्चूतो रसालोऽसौ सह-कारोऽतिसौरभ इत्यमरः। तैः सुगन्धौ सुरभिणि प्राणतर्पणे इत्यर्थः। तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावः। स्वादुनि मधुरे रसनाकर्षिणीत्यर्थः। प्रणदिता-लिनि गुञ्जन्मधुकरे श्रुतिसुख इत्यर्थः। शीते स्पर्शसुखे इत्यर्थः। एवम्पञ्चविषयसमष्टौ मधुनि मद्ये इन्द्रियवर्गश्चक्षुरादिपञ्चकं निर्ववार निर्वृतमभूत्। अत्र रूपरसादिपदार्थानां मधुविशेषणभावेन निर्वृतिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥३॥

टिप्पनी—क्रान्तेति। अत्र प्रथमपादे छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥३॥

বাঙ্গালা—মদ্যের ভিতরে প্রিয়তমের মুখের প্রতিবিম্ব পড়িয়াছিল বলিয়া, তাহা দেখিয়া রমণীদিগের নয়ন নির্বৃতি লাভ করিয়াছিল; নূতন আম্রপল্লব রাখিয়া দেওয়ায় মদ্য সুগন্ধি হইয়াছিল বলিয়া, তাহার আঘ্রাণে নাসিকা তৃপ্তিলাভ করিয়াছিল; সে মদ্য

কাপিশায়নসুগন্ধি বিঘূর্ণন্নুন্মদোঽধিশয়িতুং সমশেত।
ফুল্লদৃষ্টি বদনং প্রমদানামব্জচারু চষকঞ্চ ষড়ঙ্ঘ্রিঃ ॥৪॥
বিম্বিতং ধৃতপরিস্রুতি জানন্ ভাজনে জলজমিত্যবলায়াঃ।
ঘ্রাতুমক্ষি পততি ভ্রমরঃ স্ম ভ্রান্তিভাজি ভবতি ক বিবেকঃ ॥৫॥

---

সুস্বাদু ছিল বলিয়া, রসনা সন্তোষ লাভ করিয়াছিল; ভ্রমরগণ মধুর রব করিতে ছিল বলিয়া, কর্ণ আনন্দ লাভ করিয়াছিল এবং মদ্য শীতল ছিল বলিয়া, ত্বক্‌ও শান্তি লাভ করিয়াছিল; এই ভাবে এক মদ্যে পাঁচটী ইন্দ্রিয়ই নির্বৃতি লাভ করিয়াছিল ॥৩॥

**অন্বয়ঃ**—উন্মদঃ বিঘূর্ণন্ ষড়ঙ্ঘ্রিঃ কাপিশায়নসুগন্ধি ফুল্লদৃষ্টি প্রমদানাং বদনম্ অব্জচারু চষকঞ্চ অধিশয়িতুং সমশেত ॥৪॥

**টীকা**—কাপিশায়নেতি। উন্মদ উদ্রিক্তমদঃ অতএব বিঘূর্ণন্ ভ্রমন্ ষড়ঙ্ঘ্রিঃ ষট্‌পদঃ কাপিশায়নেন সুগন্ধি সুরভি। কপিশ্যং কল্যন্তথা মদ্যং মৈরেয়ং কাপিশায়নমিতি বৈজয়ন্তী। ফুল্লদৃষ্টি বিকাসিতনেত্রং প্রমদানাং বনিতানাং বদনম্ অধিবাসনার্থেন অব্জেন চারু চষকম্পানপাত্রঞ্চ। চষকোঽস্ত্রী পানপাত্রমিত্যমরঃ। অধিশয়িতুমধিষ্ঠাতুং সমশেত ইদমুতাদোদমুতানি বেত্যুভয়লোভাদ্দোলায়মানমানস আসীদিত্যর্থঃ। অত্র প্রকৃতয়োরেব বদনচষকয়োঃ ষট্‌পদাভিলাষাস্পদত্বরূপৈকধর্মযোগাদৌপম্যস্য গম্যতায়াংতুল্যযোগিতাভেদঃ ॥৪॥

**টিপ্পনী**—কাপীতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

**বাঙ্গালা**—মদ্যপানে রমণীগণের মুখমণ্ডল সুগন্ধি হইয়াছিল এবং নয়নযুগলও বিকসিত হইয়াছিল; আবার পদ্ম নিক্ষিপ্ত থাকায় পানপাত্রটীও মনোহর হইয়াছিল; সুতরাং গন্ধোন্মত্ত ভ্রমর, নিকটে ঘুরিতে থাকিয়া, 'এইটীতে বসি, না—এইটাতে বসি' এই রূপ সংশয় করিতেছিল ॥৪॥

**অন্বয়ঃ**—ধৃতপরিস্রুতি ভাজনে বিম্বিতং অবলায়াঃ অক্ষি জলজম্ ইতি জানন্ ভ্রমরঃ ঘ্রাতুং পততি স্ম। ভ্রান্তিভাজি বিবেকঃ ক ভবতি ॥৫॥

**টীকা**—বিম্বিতমিতি। ধৃতা পরিস্রুত্ সুরা যস্মিংস্তস্মিন্। পরিস্রুৎ স্যাদ্বারুণীত্যমরঃ। ভাজনে পানপাত্রে বিম্বিতম্প্রতিবিম্বিতম্। অবলায়াঃ অক্ষি জলজমিতি জানন্ সাদৃশ্যাত্তথা মন্যমান ইত্যর্থঃ। ভ্রমরঃ ঘ্রাতুং পততি স্ম। তথাহি, ভ্রান্তির্মিথ্যা বিপরীতজ্ঞানঞ্চ তদ্ভাজি বিবেকো বিচারঃ ক ভবতি ন কাপীত্যর্থঃ। অত্র ভ্রমরস্যাক্ষিজলজভ্রান্তের্ভ্রান্তিমদলঙ্কারঃ তৎসমর্থকত্বাৎ সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসঃ। তেন সহাঙ্গাঙ্গিভাবেন সঙ্করঃ ॥৫॥

**টিপ্পনী**—বিম্বিতমিতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫॥

**বাঙ্গালা**—মদ্যপূর্ণপাত্রে কোন রমণীর নয়নের প্রতিবিম্ব পড়িয়াছিল; সেই প্রতি-

दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम्।
यत् सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥६॥
स्वादनेन सुतनोरविचारादोष्ठतः समचरिष्ट रसोऽत्र।
अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥७॥

---

বিম্বটিকে পদ্ম মনে করিয়া একটী ভ্রমর আঘ্রাণ করিবার জন্য তাহার উপরে পড়িয়াছিল। ভ্রান্তিশালী ব্যক্তিতে বিবেচনা থাকে কোথায়? ॥৫॥

अन्वयः—इष्टतमया दत्तं मधु पिबतः पत्युः रसवत्तां बाढम् आप। यत् चेतनाविरहितैः सुवर्णमुकुटांशुभिः अपि पीतम् आसीत् ॥६॥

टीका—दत्तमिति। इष्टतमया दत्तं मधु मद्यं कर्तृ पिबतः पत्युः रसवत्तां प्रेयसीकरस्पर्शादतिस्वादुतामाप। अतिशायने मतुप्। बाढं ध्रुवमित्युत्प्रेक्षा। कुतः यद्यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपि मधुनि प्रसृतैरिति भावः। पीतं पीतवर्णं पीतत्वमासीत्। अत्र पीतमिति श्लेषमूलातिशयोक्त्या पीतिमतः क्रियाभेदाध्यवसायेनाचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्तेत्युत्प्रेक्षा। तथा च यदचेतनानामपि पेयन्तच्चेतनानाङ्किं वक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥६॥

टिप्पनी—दत्तमिति। अत्रापि गुणरीती पूर्ववत् ॥६॥

বাঙ্গালা—প্রিয়তমা যে মদ্য দান করিয়াছিল; পানকারী পতির নিকট তাহা অত্যন্ত সুস্বাদু হইয়াছিল, ইহা নিশ্চয়। যেহেতু, চৈতন্যবিহীন স্বর্ণমুকুটের কিরণগুলিও তাহা পান করিয়াছিল ॥৬॥

अन्वयः—सुतनोः स्वादनेन ओष्ठतः रसः अत्र अविचारात् समचरिष्ट। यत् तत् एव मधु अन्यत् इव अन्यम् इष्टं यूनः स्वादम् अतनिष्ट ॥७॥

टीका—स्वादनेनेति। सुतनोः कान्तायाः स्वादनेनास्वादनेन ओष्ठतः ओष्ठात् रसः स्वादोऽत्र मधुनि अविचारादसंशयात् समचरिष्ट सङ्क्रान्तः। सम्पूर्वाच्चरतेर्लुङ्। समस्तृतीयायुक्तादित्यात्मनेपदम्। कुतः यद्यस्मात्तदेव पूर्वभुक्तमेव मधु अन्यदिवापूर्वमिव अन्यमपूर्वमिष्टं प्रियं स्वादं रसं यूनोऽतनिष्ट। तनोतेर्लुङि तङ्। ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावादनन्तरन्यायात्तद्रससङ्क्रमणोत्प्रेक्षा सा चाविचारादिति व्यञ्जकप्रयोगाद्वाच्या ॥७॥

टिप्पनी—स्वादनेनेति। अत्र च्छेकानुप्रासस्य शब्दालङ्कार इति टीकोक्तवाच्योत्प्रेक्षया सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७॥

বাঙ্গালা—সুন্দরী যখন মদ্য পান করিয়াছিল; তখন নিশ্চয়ই তাহার ওষ্ঠ হইতে রস নিঃসৃত হইয়া ঐ মদ্যের ভিতরে প্রবেশ করিয়াছিল। যেহেতু, সেই মদ্যই, অন্য মদ্যের ন্যায় হইয়া যুবকদিগের নিকট অভীষ্ট আস্বাদ বিস্তার করিয়াছিল ॥৭॥

बिभ्रती मधुरतामतिमात्रं रागिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥८॥
पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदद्गी ।
लभ्यते स्म परिरक्ततयात्मा यावकेन वियतापि युवत्याः ॥९॥

---

अन्वयः—रागिभिः विकसद्भिः आननैः (विकसन्तीभिः) नासिकाभिः (च) अतिमात्रं मधुरतां बिभ्रतौ मधुरसः असितोत्पलगन्धः (च) युगपत् एव पपाते ॥८॥

टीका—बिभ्रताविति । रागिभिः कामिभिरतिमात्रं मधुरतां स्वादुतां प्रियत्वं वा बिभ्रतौ । मधुरं रसवत् स्वादु प्रियेषु मधुरोऽन्यवदिति विश्वः । तस्य भावस्तां । विकसद्भिर्विकसन्तीभिश्च विकसद्भिः तृष्णया विजृम्भमाणैः । नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामिति नपुंसकैकशेषः । आननैः मधुरसो मद्यरसः नासिकाभिर्घ्राणैरसितोत्पलगन्धश्च युगपदेव पपाते पीतौ । भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत् स्वेन्द्रियसम्बन्धात युगपद्गृहीतावित्यर्थः । अत्र मनस आशुसञ्चाराद्यौगपद्याभिमानः । शतपत्रशतव्यतिभेदवदित्यणुपरिमाणवादिनः । वास्तवमेव यौगपद्यमिति मध्यमपरिमाणवादिनः । सार्वपथीनास्तु कवय इत्यलमतिपल्लवेन । अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात्तुल्ययोगिताभेदः ॥८॥

टिप्पनी—बिभ्रताविति । अत्रापि गुणरीती पूर्ववत् ॥८॥

বাঙ্গালা—কামুক যুবকগণ, প্রফুল্ল মুখ ও বিস্ফারিত নাসিকা দ্বারা একদাই মদ্যের রস ও নীলোৎপলের গন্ধ পান করিল ; কেন না, সেই দুইটী বস্তুই অত্যন্ত মাধুর্য্য ধারণ করিতেছিল ॥৮॥

अन्वयः—विदद्गी अभिमते मधुतुल्यस्वादम् ओष्ठरुचकं पीतवति (सति), वियता अपि युवत्याः यावकेन परिरक्ततया आत्मा लभ्यते स्म ॥९॥

टीका—पीतवतीति । विदद्गी विदशतिच्छौ उपदंशेच्छावतीत्यर्थः । दशेः सनन्तादुप्रत्ययः । अभिमते वल्लभे मधुना तुल्यस्वादं तुल्यरसस्तुल्यगन्धश्च हृद्यतामात्रेण नान्यथा विलक्षणरसस्य अनुपदंशत्वात् ओष्ठौ रुचकमाभरणमिवेत्युपमितसमासः । यौवनायान्तु रुचकमस्त्राभरणमाल्ययोरिति विश्वः । तमोष्ठरुचकम ओष्ठश्रेष्ठं पीतवति सति वियता अपगच्छतापि । इणो लटः शत्रादेशे इणो यणिति यणादेशः । युवत्याः युवतेः । ङिति ह्रस्वश्चेति वा नदीत्वादडागमः । यावकेनालक्तकेन परिरक्ततया दन्तनिष्पीडनकृतेन रागेण हेतुना आत्मा स्वरूपं लभ्यते स्म लब्धः पुनरुद्भूतमित्यर्थः । अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भावनिमित्ता विरोधगर्भा पुनरुद्भवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या च ॥९॥

टिप्पनी—पीतवतीति । अत्र मधुतुल्यस्वादमिति समासगता आर्थीउपमा, चतुर्थपादे वृत्त्यनुप्रास इति टीकोक्तप्रतीयमानोत्प्रेक्षया सह संसृष्टिः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

कस्यचित्समदनम्मदनीयप्रेयसीवदनपानपरस्य।
स्वादितः सकृदिवासव एव प्रत्युत क्षणविदंशपदेऽभूत् ॥१०॥
पीतशीधुमधुरैर्मिथुनानामाननैः परिहृतं चषकान्तः।
व्रीड़या रुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥११॥

---

বাঙ্গালা—চুম্বনাভিলাষী প্রিয়তম যখন মদ্যের তুল্য সুস্বাদু ওষ্ঠদেশ পান করেন; তখন যুবতির ওষ্ঠের আল্‌তা মুছিয়া গেলেও, সে স্থান অত্যন্ত রক্তবর্ণ হইল বলিয়া পুনরায় সে আল্‌তা স্বরূপ লাভ করিল ॥৯॥

অন্বয়:—समदनं मदनीय-प्रेयसी-वदन-पान-परस्य कस्यचित् सकृत् इव स्वादितः आसवः एव प्रत्युत क्षणविदंशपदे अभूत् ॥१०॥

टीका—कस्यचिदिति। समदनं यथा तथा मदयतीति मदनीयं मदकारि। कृत्यल्युटो बहुलमिति कर्त्तर्यनीयर् प्रत्ययः। तस्य प्रेयसीवदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात् प्रियामुखपानासक्तस्य कस्यचित् कामिनः सकृदिव स्वादितः अवाच्छुल्येन पीतः। इवशब्दो वाक्यालङ्कारे। आसव एव प्रत्युत वैपरीत्ये इति गणव्याख्याने। क्षणं विदंशपदे उपदंशस्थानेऽभूत्। अन्येषां मधुपानलोलुपानामधरस्वाद उपदंशः अस्य त्वधरपानैकपरस्य मद्यं वोपदंश इत्यर्थः। अधरपानस्योपदंशत्वसम्बन्धेऽप्यसम्बन्धः आसवस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात् संसृष्टिः ॥१०॥

टिप्पनी—कस्यचिदिति। अत्र प्रथमपादगतच्छेकानुप्रासस्यापि टीकोक्तसंसृष्टौ प्रवेशः। रसादयः पूर्ववत् ॥१०॥

বাঙ্গালা—কামাবেগের সহিত কোন যুবা, কামোদ্দীপক প্রিয়তমার মুখমণ্ডল পানে প্রবৃত্ত হইল; তখন পূর্বে একবার মাত্র পীত মদ্যই ক্ষণকালের জন্য তাহার উপকরণস্থানপাতী হইল ॥১০॥

অন্বয়:—पीतशीधुमधुरैः मिथुनानाम् आननैः चषकान्तः परिहृतं नीलनीरजं व्रीड़या अलिविरावैः रुदत् इव अधस्तात् अगच्छत ॥११॥

टीका—पीतेति। पीतशीधूनि पीतमद्यानि। अतएव मधुराणि मनोज्ञानि तैर्मिथुनानां स्त्रीपुंसानामाननैः चषकान्तः पानपात्राभ्यन्तरे। चषकोऽस्त्री पानपात्रमित्यमरः। परिहृतं त्यक्तं नीलनीरजं वासनार्थं निःक्षिप्तं नीलोत्पलं व्रीड़या परिहारलज्जया अलिविरावैः रुददिवाधस्तादगच्छत्। अत्र मद्यापगमनिमित्तस्य नीलनीरजाधोगमनस्य रोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा। सा चालिविरावैरिति व्यधिकरणकारिपरिणामोज्जीवितेति सङ्करः ॥११॥

टिप्पनी—पीतेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥११॥

বাঙ্গালা—মদ্য পান করায় দম্পতিদিগের মুখমণ্ডলগুলি বড়ই মনোহর হইয়াছিল;

प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥१२॥
हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥१३॥

---

কিন্তু সেই মুখমণ্ডলগুলি পানপাত্রের ভিতরে নীলোৎপলগুলিকে পরিত্যাগ করায় সে নীলোৎপলগুলি লজ্জাবশতঃ ভ্রমরের রবে রোদন করিতে থাকিয়াই যেন নীচে গিয়াছিল ॥১১॥

**अन्वयः**—त्रिसरकेण प्रातिभं गतानां सुभ्रुवां वक्र-वाक्य-रचना-रमणीयः गूढ-सूचित-रहस्य-सहासः परिहासः प्रववृते ॥१२॥

**टीका**—अथ मदानुभावान् वर्णयति । प्रातिभमित्यादि । त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानम् । सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनीति विश्वः । तद्धितार्थेत्यादिना समाहारे द्विगुः, पात्रादित्वान्नपुंसकत्वम् । तेन त्रिसरकेण त्रिपानं मदातिभूमिरिति पानप्रसिद्धिः । प्रतिभैव प्रातिभम्प्रतिभाविशेषः । प्रज्ञादित्वात् स्वार्थेऽण्-प्रत्ययः । यद्वा ज्ञानबीजभूतः संस्कारविशेषः प्रतिभा इति काव्यप्रकाशकारः । तत्र भवं प्रातिभं ज्ञानप्रभावविशेष एव । भवार्थेऽण्प्रत्ययः । तत्प्रातिभङ्गतानां त्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कारप्रभावितप्रगल्भमतीनामित्यर्थः । सुभ्रुवां स्त्रीणां वक्रवाक्यरचनारमणीयः प्रतिकूलवाक्यप्रयोगरम्यः । गूढानि पूर्वं लज्जया संवृतानि सूचितानि सम्प्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टाप्रलपितानि यस्मिन् स गूढसूचितरहस्यः स चासौ सहासश्चेति विशेषणसमासः वैवक्षिकविशेषणविशेष्यभावात् । हासो हास्यमित्यमरः । परिहासो नर्मकेलिरुपहासक्रीडेति यावत् । द्रवकेलिपरीहासा इत्यमरः । प्रववृते प्रवृत्तः । इतः परम्मदसञ्चारी ॥१२॥

**टिप्पनी**—प्रातिभमिति । अत्र पदार्द्धे अन्त्यानुप्रासोऽलङ्कारः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—তিন বার মদ্য পান করায় সুন্দরীরা প্রত্যুৎপন্ন মতি লাভ করিল; তাহাতে (নায়কদিগের সঙ্গে) তাহাদের পরিহাস চলিতে লাগিল; ব্যঞ্জক বাক্য প্রয়োগ করিতে থাকায় সে পরিহাসগুলি বড়ই মনোহর হইতে থাকিল এবং পূর্ব্বে যে সকল রহস্য গুপ্ত ছিল, এখন তাহা প্রকাশ পাইতে লাগিল, আর মধ্যে মধ্যে হাসাহাসি হইতে লাগিল ॥১২॥

**अन्वयः**—तरुणेन मदेन कामिना इव ऋजोः अपि वध्वाः हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः भृशं चक्रिरे ॥१३॥

**टीका**—हावेति । तरुणेनोत्कटेन यूना च मदेन कामिनेव ऋजोर्मुग्धाया अपि

अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्य्यम्।
क्षालितन्नु शमितन्नु वधूनान्द्रावितन्नु हृदयन्मधुवारैः ॥१४॥
सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे।
विभ्रमन्मधुमदः प्रमदानान्धातुलीनमुपसर्ग इवार्थम् ॥१५॥

---

बध्वाः किमुत प्रौढ़ानामिति भावः। हावहारि विलासमनोहरं हसितं हासः वचनानां कौशलं प्रागल्भ्यं दृशि विकारविशेषाः विलासविशेषाश्चक्रिरे कृतानि। पुंसेव मौग्ध्य न्त्याजयित्वा प्रौढ़ं नीतेत्यर्थः। अत्र हसितकौशलविकाराणां यौगपद्योक्त्या समुच्चयः। गुणक्रियायौगपद्यं समुच्चय इति लक्षणम्। तस्यौपम्ययोगेन सङ्करः तेन नवोढ़ानामपि इत्यत्र किमुत प्रौढ़ानामित्यर्थापत्तिर्व्यज्यते ॥१३॥

टिप्पनी—हावेति। अत्र चक्रिरे इत्येकया क्रियया हसितादीनां त्रयाणां कर्मतयाभिसम्बन्धात् तुल्ययोगिता च टीकोक्तसङ्करे प्रविशति। रसादयः पूर्ववत् ॥१३॥

बाङ्गाला—কামী জনের ন্যায় নূতন মত্ততা, মুগ্ধ বধূরও অধিকভাবে লীলামনোহর হাস্য, বাক্যের কৌশল এবং নয়নে বিকারবিশেষ জন্মাইয়া দিল ॥১৩॥

अन्वयः—अपराद्धरि पत्यौ अप्रसन्नं कोपदीप्तम् उररीकृत-धैर्य्यं वधूनां हृदयं मधुवारैः क्षालितं नु, शमितं नु, द्रावितं नु ॥१४॥

टीका—अप्रसन्नमिति। अपराद्धरि आगस्कारिणि। राधेस्तृच् प्रत्ययः। पत्यौ विषये अप्रसन्नं कलुषं क्षुभितमित्यर्थः। कोपदीप्तं कोपेन ज्वलितम् उररीकृतधैर्य्यम् अङ्गीकृतकाठिन्यम्। उरीकृतमुररीकृतमित्यमरः। ऊर्य्यादिच्विडाचश्चेति गतित्वात् कुगतिप्रादय इति समासः। वधूनां हृदयं मधुवारैः मद्यपर्य्यायैः। मधुवारा मधुक्रमा इत्यमरः। क्षालितं धौतं नु। शमितं निर्वापितं नु द्रावितं द्रवीकृतं नु। अन्यथा कथमेषाम् अप्रसन्नतादीप्तताकठिनतानां हठान्निवृत्तिरिति भावः। अत्र क्षालितत्वादीनामेकत्राविरोधात् असादृश्याच्च न संशयालङ्कारः। सति सादृश्ये विरुद्धानेककोटिगोचरत्वात्तस्य; किन्त्वप्रसन्नतादिनिरासनिमित्तकं क्षालितत्वाद्युत्प्रेक्षणत्रयं नुशब्दानुवृत्तेः तथाप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्युद्देश्यिभिर्यथासङ्ख्येनान्वयमपेक्षत इति यथासङ्ख्यालङ्कारेण सङ्कीर्य्यते ॥१४॥

टिप्पनी—अप्रसन्नमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

बाङ्गाला—রমণীগণের মন, অপরাধী পতির প্রতি কলুষিত (ময়লা), কোপপ্রজ্বলিত এবং ধৈর্য্যবশতঃ কঠিন হইয়া রহিয়াছিল; কিন্তু মদ্যপানে সে মন যেন প্রক্ষালিত হইল, যেন নির্বাপিত হইল এবং যেন গলিয়া গেল ॥১৪॥

अन्वयः—मधुमदः प्रमदानाम् अङ्गे चिरं सन्तम् एव अप्रकृतत्वात् अप्रकाशितं विभ्रमम्, उपसर्गः धातुलीनम् अर्थम् इव अदिद्युतत् ॥१५॥

टीका—सन्तमिति। मधुमदः प्रमदानामङ्गे वपुषि अन्यत्र यस्मात् प्रत्ययविधिः

সাবশেষপদমুক্তমুপেক্ষা স্রস্তমাল্যবসনাভরণেষু।
গন্তুমুত্থিতমকারণতঃ স্ম দ্যোতয়ন্তি মদবিভ্রমমাসাম্ ॥১৬॥
মদ্যমন্দবিগলত্ত্রপমীষচ্চক্ষুরুন্মিষিতপক্ষ্ম দধত্যা।
বীক্ষ্যতে স্ম শনকৈর্নববধ্বা কামিনো মুখমধোমুখয়ৈব ॥১৭॥

---

ত্যুক্তলক্ষণে প্রকৃত্যাখ্যে শব্দরূপে চিরং সর্বদা সন্তমেব একত্র স্বভাবাৎ অন্যত্র ত্বনেকার্থ-ত্বাদ্ধাতূনামিতি ভাবঃ। কিন্ত্বপ্রকৃতত্বাদপ্রস্তুতত্বাৎ অপ্রসক্তত্বাদিতি ভাবঃ। অপ্রকা-শিতমব্যঞ্জিতং বিভ্রমং বিলাসম্বাতো ভূবাদিকে লীনং গূঢ়ম্ অর্থমভিধেয়ম্ উপসর্গঃ প্রাদি-রিবাদিদ্যুতৎ দ্যোতয়তি স্ম। দ্যুতের্লুঙি পুষাদ্যঙ্। দ্যুতিস্বাপ্যোঃ সম্প্রসারণমিতি অভ্যাসস্য সম্প্রসারণমিকারঃ। উপসর্গস্য ধাতুলীনার্থদ্যোতকত্বমাদানসন্দানাদাবনুসন্ধে-য়ম্। উপমালঙ্কারঃ ॥১৫॥

টিপ্পনী—সন্তমিতি। অত্র তৃতীয়পাদে ছেকানুপ্রাস ইতি টীকোক্তোপময়া সহ সংসৃষ্টিঃ। গুণরীতী পূর্ববৎ ॥১৫॥

বাঙ্গালা—সমস্ত অর্থই ভূপ্রভৃতি ধাতুর ভিতরে লীন থাকে; তার পর প্রাদি উপসর্গ যেমন সেই সকল অর্থকে প্রকাশ করে; সেইরূপ নানাপ্রকার বিলাস, রমণীগণের অঙ্গে চির-কালই বিদ্যমান ছিল; কিন্তু প্রকাশক না থাকায় এযাবৎ তাহা প্রকাশিত হইয়াছিল না; এখন মদ্যপানের মত্ততা আসিয়া সে সকল বিলাসকে প্রকাশিত করিল ॥১৫॥

অন্বয়ঃ—সাবশেষপদম্ উক্তম্, স্রস্ত-মাল্য-বসনাভরণেষু উপেক্ষা, অকারণতঃ গন্তুম্ উত্থিতং (চ) আসাং মদবিভ্রমং দ্যোতয়ন্তি স্ম ॥১৬॥

টীকা—সাবশেষমিতি। সাবশেষাণ্যর্দ্ধোক্তানি পদানি যস্মিন্ তদুক্তমুক্তির্বাক্যং স্রস্তেষু মাল্যবসনাভরণেষু উপেক্ষা অনাদরঃ অকারণতোঽকস্মাদেব গন্তুমুত্থিতমুত্থানঞ্চ আসাং স্ত্রীণাং মদবিভ্রমং মদবিকারং দ্যোতয়ন্তি স্ম। এতৈরনুভাবৈরাসাং মদসঞ্চারো জাত ইত্যর্থঃ। অত্রা-র্দ্ধোক্তাদীনাং খলেকপোতিকয়া মদদ্যোতনে প্রবৃত্তত্বাৎ পরাখ্যো দ্বিতীয়সমুচ্চয়ঃ। খলেকপোত-ন্যায়েন বহূনাং কার্য্যসাধনে। কারণানাং সমুদ্যোগঃ স দ্বিতীয়ঃ সমুচ্চয় ইতি লক্ষণাৎ ॥১৬॥

টিপ্পনী—সাবশেষেতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

বাঙ্গালা—রমণীরা যে সকল বাক্য উচ্চারণ করিল, তাহাতে অনেক পদ অবশিষ্ট রহিল; যে সকল মালা, বস্ত্র ও অলঙ্কার খুলিয়া পড়িয়া গিয়াছিল, সে গুলির প্রতি তাহাদের উপেক্ষা দেখা যাইতে লাগিল এবং বিনা কারণে তাহারা যাইবার জন্য গাত্রোত্থান করিল; এই সকল ঘটনাই তাহাদের মদ্যপানজনিত মত্ততাকে প্রকাশ করিয়া দিল ॥১৬॥

অন্বয়ঃ—মদ্যমন্দবিগলত্ত্রপম্ ঈষৎ উন্মিষিতপক্ষ্ম চক্ষুঃ দধত্যা নববধ্বা অধোমুখয়া এব (সত্যা) শনকৈঃ কামিনঃ মুখং বীক্ষ্যতে স্ম ॥১৭॥

টীকা—মদ্যেতি। মদ্যেন মদ্যপানেন মন্দমল্পং বিগলন্তী ত্রপা যস্য তৎ। অতএবেষ-

या कथञ्चन सखीवचनेन प्रागभिप्रियतमम्प्रजगल्भे ।
व्रीडजाड्यमभजन्मधुपा सा स्वाम्मदात् प्रकृतिमेति हि सर्वः ॥१८॥
छादितः कथमपि त्रपयान्तर्यः प्रियम्प्रति चिराय रमण्याः ।
वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥१९॥

---

दुन्मिषितानि पक्ष्माणि लोमानि यस्य तच्च दधत्या नवबध्वा नवोढया कामिनः प्रियस्य मुख-मधोमुखयैव नमितवदनयैव। स्वाङ्गाच्चोपसर्जनादिति विकल्पादनीकारः। मनकैरसंमेया वीच्यते स्म निर्व्यवीचितमित्यर्थः। अत्रापि मदमानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः। समुद्यद्यौवना मुग्धा लज्जाविजितमन्मथा ॥१७॥

टिप्पनी—नयेति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—মদ্য পান করায় নববধূর নয়নযুগল হইতে ধীরে ধীরে লজ্জা সরিয়া গেল এবং তাহার লোমগুলি একটু একটু উচু হইল ; এই অবস্থায় সেই নববধূ অধোমুখী হইয়াই কামীজনের মুখ ধীরে ধীরে দেখিতে লাগিল ॥১৭॥

अन्वयः—या प्राक् सखीवचनेन अभिप्रियतमं कथञ्चन प्रजगल्भे, मधुपा सा व्रीडजाड्यम् अभजत्। हि सर्वः मदात् स्वां प्रकृतिम् एति ॥१८॥

टीका—येति। या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राक्मदात् पूर्वम् अभिप्रियतमं प्रियतमसमक्षम्। आभिमुख्येऽव्ययीभावः। प्रजगल्भे प्रगल्भते स्म। सा स्त्री मधु पिबतीति मधुपा। आतोऽनुपसर्गे कः। व्रीडं जाड्यं मौग्ध्यमभजत् विहायागन्तुकं धर्मं स्वभावमभजन्मदेनेत्यर्थः। तथाहि, सर्वो जनो मदाद्धेतोः स्वां स्वकीयां प्रकृतिमेति स्वभावं गच्छति स्वाभाविकधर्मप्रकाशनं मदधर्मः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥१८॥

टिप्पनी—येति। अत्रापि रसादयः पूर्ववत् ॥१८॥

বাঙ্গালা—যে রমণী পূর্ব্বে কোন রকমে সখীর বাক্যে প্রিয়তমের নিকট প্রগল্ভতা করিয়াছিল ; সে এখন মদ্য পান করিয়া লজ্জাসঙ্কোচ অবলম্বন করিল। কারণ, সকলেই মত্ততানিবন্ধন আপন স্বভাব লাভ করিয়া থাকে ॥১৮॥

अन्वयः—प्रियं प्रति रमण्याः यः (रागः) चिराय कथम् अपि त्रपया अन्तः छादितः, असौ रागः अथ वारुणीमदविशङ्कं चक्षुषः आविः अभवत् इव ॥१९॥

टीका—छादित इति। रमण्या यः प्रियम्प्रति रागो विषयाभिलाषः चिराय त्रपया व्रीडयान्तश्छादितः संवृतः असावयमेव रागोऽथास्मिन्नवसरे वारुणीमदविशङ्कं मद्यमदेन निःशङ्कञ्चक्षुषो नेत्रादाविरभवदिवाविर्भूतः किम्। अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतो रागः स एव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाट्याः चक्षुर्द्वारा बहिरुन्निन्ये इत्युत्प्रेक्ष्यते। आविर्भूतोऽध्यवसानं कविख्यातत्वात् ॥१९॥

आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम् ।
प्रापि चेतसि सविप्रतिसारे सुभ्रुवामवसरः सरकेण ॥२०॥
मा पुनस्तमभिसीसरमागस्कारिणम्मदविमोहितचित्ता ।
योषिदित्यभिललाष न हालान्दुस्त्यजः खलु सुखादपि मानः ॥२१॥

---

टिप्पनी—छादित इति । अत्र रसादयः पूर्ववत् ॥१९॥

বাঙ্গালা—প্রিয়তমের প্রতি রমণীগণের যে রাগ (অনুরাগ) চিরকালই লজ্জাতে অন্তরে কোন রকমে আবৃত রাখিয়াছিল; সেই রাগ (রক্তিমা) সেই সময়ে নয়ন হইতে মদমত্ততা-বশতঃ নিঃশঙ্কভাবে আবির্ভূত হইল ॥১৯॥

अन्वयः—आगतान् अगणितप्रतियातान् वल्लभान् अभिसिसारयिषूणां सुभ्रुवां चेतसि सविप्रतिसारे (सति) सरकेण अवसरः प्रापि ॥२०॥

टीका—आगतानिति । आगतान् स्वयमागतान् तथाप्यगणितास्ते प्रतियाताश्चेति । स्नातानुलिप्त इतिवत् पूर्वकाले समासः । तान्वल्लभानभिसिसारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्त्तुमिच्छूनाम् । अभिसारयतेः स्वार्थण्यन्तात् सनन्तादुप्रत्ययः । सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्य्यं कृतमिति पश्चात्तापयुक्ते सति । पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपीत्यमरः । सरकेण मधुना मधुपानेन वा । सरकं शीधु-पात्रे स्याच्छीधुपाने च शीधुनीति विश्वः । अवसरः प्रापि प्राप्तः स्वयङ्गमनसौकर्य्याय शीधु-पानमकृतेत्यर्थः । अत्राभिसारणस्य पश्चात्तापकरणकस्य मदयोगात् सौकर्य्योक्तेः समाध्य-लङ्कारः । समाधिः सुकरं कार्य्यं कारणान्तरयोगत इति काव्यप्रकाशे ॥२०॥

टिप्पनी—आगतानिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—প্রিয়তমেরা সঙ্কেতস্থানে আসিয়া, ফিরিয়া যাওয়াটা ভুলিয়া গিয়াছিল; তাহাদের নিকটে যে সকল রমণী অভিসারে যাইবার ইচ্ছা করিল, তাহাদের চিত্তে অনুতাপ উপস্থিত হইলে, মদ্যপান অবসর লাভ করিল ॥২০॥

अन्वयः—मदविमोहितचित्ता (सती अहम्) आगस्कारिणं तं पुनः मा अभिसीसरम् इति (आलोच्य) योषित् हालां न अभिललाष । सुखात् अपि मानः दुस्त्यजः खलु ॥२१॥

टीका—मा पुनरिति । मदेन विमोहितचित्ता भ्रमितचित्ता सती अहमिति शेषः । आगस्कारिणमपराधकृतम् । अतः कृकमोत्यादिना विसर्जनीयस्य सत्वम् । तं पुनर्भूयो नाभिसीसरं नाभिसारयाणि । सरतेः स्वार्थे णौ चङ्युपधाया ह्रस्वः, दीर्घो लघोरित्यभ्या-सस्य दीर्घः । इति इत्यालोच्येत्यर्थः । गम्यमानार्थत्वादप्रयोगः । अन्यथा पौनरुक्त्य-मित्यालङ्कारिकाः । योषित्काचित् स्त्री हालां सुराम् । सुरा हलिप्रिया हालेत्यमरः । नाभि-ललाष । तथाहि, सुखादपि मानो दुस्त्यजः खलु अतोऽल्पकारणादधिकार्थहानिरिति वाग्यर्जनीयमित्यर्थान्तरन्यासः ॥२१॥

क्लीविमोहमहरद्दयितानामन्तिकं रतिसुखाय निनाय।
सप्रसादमिव सेवितमासीत् सद्य एव फलदं मधु तासाम् ॥२२॥
दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन।
सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि ॥२३॥

---

**टिप्पनी**—मीति। अत्र मानव्यावप्रलम्भश्रृङ्गारो रसः, गुणरीती पूर्ववत् ॥२१॥

**বাঙ্গালা**—আমি মদমোহিতচিত্ত হইয়া আর সে অপরাধকারীর নিকট যাইব না, এইরূপ মনে মনে আলোচনা করিয়া কোন রমণী মদ্য পান করিতে ইচ্ছা করিল না। কারণ; সুখ অপেক্ষাও মান পরিত্যাগ করা দুষ্কর ॥২১॥

**अन्वयः**—सप्रसादम् इव सेवितं मधु तासां सद्यः एव फलदम् आसीत्। (यतः) क्लीविमोहम् अहरत् रतिसुखाय दयितानाम् अन्तिकं निनाय (च) ॥२२॥

**टीका**—क्लीति। सप्रसादं मनःप्रसादपूर्वकं ममेदं श्रेयस्करमिति भावनापूर्वकमित्यर्थः। अन्यथा फलोदय एव न स्यात्। देवज्ञे भेषजे गुराविति वचनादिति भावः। सेवितमुपभुक्तमिति हेतोर्मधु तासां सद्य एव फलदमासीत्। कुतः क्लीविमोहं व्रीडाजाड्यम् अहरत् रतिसुखाय सुरतसुखाय दयितानामन्तिकं निनाय। अत्र क्लीहरणान्तिकनयनवाक्याभ्यां फलप्रदानवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥२२॥

**टिप्पनी**—क्लीति। अत्र अहरदिति लङा प्रक्रम्य निनायेति लुट्प्रयोगात् प्रत्ययविषयो भग्नप्रक्रमत्व-दोषः; तथा द्वितीयपादे समुच्चयार्थकचकारानुपादानात् वाच्यानभिधानदोषश्च। तयोः परीहाराय द्वितीयपादे एवं पाठः—'अन्तिकञ्च रतयेऽनयदेताः।' गुणरीती पूर्ववत् ॥२२॥

**বাঙ্গালা**—রমণীরা মনের প্রসন্নতার সহিতই যেন মদ্য পান করিয়াছিল; তাই মদ্য, সদ্যই তাহাদের পক্ষে ফলদাতা হইয়াছিল। যেহেতু, তাহাদের লজ্জাসঙ্কোচ দূর করিয়াছিল এবং তাহাদিগকে প্রিয়তমের নিকট নিয়া গিয়াছিল ॥২২॥

**अन्वयः**—दयितेन आत्तमदनं दत्तम् आतिशयिकेन रसेन व्याप्तं मुखसुरं प्रमदाभ्यः सस्वदे; रूढम् अपि च नाम व्युदपादि ॥२३॥

**टीका**—दत्तमिति। आत्तमदनमाहितमदनं यथा तथा दयितेन दत्तम् अतएवातिशयिकेनातिशयप्रचुरेण। विनयादिभ्यष्ठक्। रसेन स्वादेन व्याप्तं स्वादुतरमित्यर्थः। मुखस्य सुरा मुखसुरं गण्डूषमद्यम्। विभाषा सेनासुराच्छायाशालानिशानामिति नपुंसकत्वम्। प्रकृष्टो मदो यासां ताभ्यः प्रमदाभ्यः स्त्रीभ्यः। रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञा। सस्वदे रुरुचे प्रीतिकरमभूदित्यर्थः। कर्त्तरि लिट्। अतएव तदैव तासां मदकार्य्यमासीदित्याह। नामेति। रूढं प्रागप्रकृत्यर्थ्यां देवदत्तव्युत्पन्नं नामापि प्रमदेति नामधेयञ्च व्युदपादि व्युत्पन्नं जातम्। यथा प्रकृष्टमदयोगात् प्रमदेत्यन्वर्थनामत्वं भवेत् तथा

लब्धसौरभगुणो मदिराणामङ्गनास्यचषकस्य च गन्धः ।
मोदितालिरितरेतरयोगादन्यतामभजतातिशयन्नु ॥२४॥
मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता हृदि रागम् ।
लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥२५॥

---

तासां नामार्थान्वित्यर्थः। पद्यतेरण्यन्तात् कर्त्तरि लुङ्, चिण् ते पद इति चिण्प्रत्यये चिणो लुक्। प्रमदाभिरिति पाठे अस्वदे स्वदयाञ्चक्रे इत्यर्थः। स्वादनमशनं भक्षणमाहारो भोजनं स्वदनमिति हलायुधः। स्वदिस्वदारेकार्थत्वाभिधानात् कर्मणि लिट्। अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थं हेतुत्वात् काव्यलिङ्गम् ॥२३॥

टिप्पनी—दत्तमिति। अत्र प्रथमपादे च्छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—অত্যন্ত সুস্বাদুরসযুক্ত এবং কামোৎপাদনপূর্বক ভর্তৃদত্ত মুখের মদ্য, রমণীদের নিকট বড়ই ভাল লাগিল ; আর পূর্ব রমণীদের 'প্রমদা' এই নামটী কেবল রূঢ় ছিল ; এখন তাহাদের প্রকৃষ্টরূপ মদ (মত্ততা) উৎপন্ন হওয়ায় সে নামটী অন্বর্থ হইল ॥২৩॥

अन्वयः—लब्धसौरभगुणः मोदितालिः मदिराणां गन्धः अङ्गनास्यचषकस्य गन्धश्च इतरेतरयोगात् अतिशयम् अन्यताम् अभजत नु ॥२४॥

टीका—लब्धेति। लब्धसौरभगुणो मेलनात् प्राप्तसौरभोत्कर्षः अतएव मोदितालिः आनन्दितभृङ्गः मदिराणां मद्यानाम् अङ्गनास्यमेव चषकस्तस्य च गन्धो गन्धगुणः इतरेतरस्य योगान्मिश्रणादन्यतामपूर्वतामतिशयन् अनेपोत्कर्षं वा अभजत। यथा कर्दमादौ घृताक्तकुङ्कुमादौ चोभयथा इत्यं नादयं संशय इति भावः। अतएव संशयालङ्कारः ॥२४॥

टिप्पनी—लब्धेति। अत्र प्रसादो गुणः वैदर्भी च रीतिः ॥२४॥

বাঙ্গালা—মদ্যের গন্ধ এবং রমণীগণের মুখরূপ পানপাত্রের গন্ধ এই উভয়ই ঘ্রাণের তৃপ্তিকারিতাগুণ লাভ করিয়া এবং ভ্রমরদিগকে আনন্দিত করিয়া, পরস্পর সম্মেলনবশতই কি অতিশয় অপূর্বতা প্রাপ্ত হইয়াছিল ? ॥২৪॥

अन्वयः—मानभङ्गपटुना, सुरतेच्छां तन्वता, हृदि रागं प्रथयता, अन्तः भावयता मदेन प्रणयिना इव सपदि योषितः लेभिरे ॥२५॥

टीका—मानेति। मानभङ्गपटुना कोपशमनसमर्थेन सुरतेच्छां तन्वता मदनोद्दीपकेन हृदि रागमनुरागं लौहित्यञ्च प्रथयता प्रकाशयता अन्तरन्तःकरणमावयता रञ्जयता मदेन प्रणयिनेव योषितः स्त्रियो लेभिरे प्राप्ताः। रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥२५॥

टिप्पनी—मानेति। अत्रापि गुणरीती पूर्ववत् ॥२५॥

বাঙ্গালা—প্রণয়ী জনের ন্যায় মত্ততা, (রমণীগণের) মান ভঙ্গ করিয়া, রমণের ইচ্ছা

पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वञ्जिलाधरमुपालि ररञ्जुः ॥२६॥
अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥२७॥

---

অস্মাইয়া, নয়নে রক্তিমা উৎপাদন করিয়া এবং চিত্তকে অনুরঞ্জিত করিয়া, রমণীগণকে আশ্রয় করিল ॥২৫॥

**অন্বয়ঃ**—उपालि निभृतचुम्बनदक्षाः सुभ्रुवः दान-धौत-नव-यावक-रागं स्वम् अधरं प्रेयसाम् अधर-राग-रसेन ररञ्जुः किल ॥२६॥

**টীকা**—पानेति। उपालि आल्याः समीपे। समीपार्थेऽव्ययीभावः। आली सखी वयस्या चेत्यमरः। अतएव निभृतचुम्बनदक्षाः गूढचुम्बनचतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरेषु यो रागरसस्ताम्बूलरागद्रवस्तेन ररञ्जुः किल। अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः। किलेत्यपरमार्थे तेन पानधौतरागेषु स्वाधरेषु प्रेयोऽधररागसंक्रमणनाटितकेन सखीसमक्षमेव प्रियाश्चुम्बनञ्चारयामासुरित्यर्थः। अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनान्मीलनालङ्कारभेदः। मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् ॥२६॥

**টিপ্পনী**—पानेति। अत्र सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥२६॥

**বাঙ্গালা**—মদ্য পান করায় রমণীগণের ওষ্ঠের আলতার রক্তিমা ধুইয়া গিয়াছিল; কিন্তু তথাপি তাহারা সখীর নিকটেই গুপ্তভাবে প্রিয়তমদিগের ওষ্ঠচুম্বনে সমর্থ হইয়া, তাহাদের ওষ্ঠের রক্তিমায় আপনাদের ওষ্ঠকে রঞ্জিত করিল ॥২৬॥

**অন্বয়ঃ**—दयितेन अन्ययुवतेः नामग्राहम् अर्पितं मद्यं रसितवती अपि (काचित्) मदम् उज्झति स्म। इतरा तु मद्यम् अपिबन्ती अपि वीक्ष्य ममाद ॥२७॥

**টীকা**—अर्पितमिति। दयितेनान्ययुवतेः सपत्न्याः नामग्राहं नाम गृहीत्वा। नाम्न्यादिशिग्रहोरिति णमुल् प्रत्ययः। अर्पितन्दत्तं मद्यं रसितवती आस्वादितवत्यपि। रसतेरास्वादनार्थात् क्तवता उगितश्चेति ङीप्। काचिदिति शेषः। मदमुज्झति स्म न ममादेत्यर्थः। इतरा तु सपत्नी तु मद्यमपिबन्त्यपि वीक्ष्य दृष्ट्वैव ममाद मत्ता। मनोनिर्वृतिरेव मदहेतुरिति भावः। अत्र पूर्वार्द्धे रसितवत्यपि न ममादेति विशेषोक्तिः, उत्तरार्द्धे त्वपिबन्त्यपि ममादेति विभावना। कारणेन विना कार्य्योत्पत्तिः स्याद्विभावना। तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते। तयोः सङ्करः ॥२७॥

**টিপ্পনী**—अर्पितमिति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

**বাঙ্গালা**—প্রিয়তম সপত্নীর নাম উচ্চারণ করিয়া মদ্য দিয়াছিল; কোন রমণী তাহা পান করিয়াও মাতিল না; কিন্তু তাহার সপত্নী সে মদ্য পান না করিয়াও তাহা দেখিয়াই মাতিল ॥২৭॥

अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥२८॥
कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाहितमोहा ।
कोपितं विरहखेदितचित्ता कान्तमेव कलयन्त्यनुनिन्ये ॥२९॥
कुर्वता मुकुलिताक्षियुगानामङ्गसादमवसादितवाचाम् ।
ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥३०॥

---

**अन्वयः**—चित्तनाथम् अन्यवनितागतचित्तम् अभिशङ्कितवत्या अन्यया (स्त्रिया) पीतभूरिसुरया अपि (सत्या) न मेदे । हि मनसः निर्वृतिः मदहेतुः (स्यात्) ॥२८॥

**टीका**—अन्ययेति । चित्तनाथम्भर्त्तारमन्यवनितागतचित्तं सपत्नीसंक्रान्तचेतसमभिशङ्कितवत्या तस्मिन्नविश्वसत्या अन्यया कयाचित् स्त्रिया पीतभूरिसुरयापि न मेदे न मत्तम् । माद्यतेर्भावे लिट् । तथाहि, मनसो निर्वृतिर्मदहेतुर्हि । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । एषा नवोढ़ा भीरुश्च । अन्यथा साशङ्कायाः पानाघटनादिति ॥२८॥

**टिप्पनी**—अन्ययेति । अत्र चित्तचित्तेति शब्दार्थयोः पौनरुक्त्यात् तात्पर्य्यमात्रतो भेदाच्च लाटानुप्रासः ; तथा भूरिसुरापानरूपे कारणे सत्यपि मत्तारूपकार्य्यानुत्पत्तेर्विशेषोक्तिश्चानयोः टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । मानाख्यविप्रलम्भशृङ्गारो रसः, गुणरीती पूर्ववत् ॥२८॥

**বাঙ্গালা**—অন্য কোন রমণী, প্রাণেশ্বরকে অন্য স্ত্রীতে অনুরক্ত মনে করিয়া, প্রচুর মদ্য পান করিয়াও মত্ত হইল না। কারণ, মনের প্রসন্নতাই মত্ততার হেতু ॥২৮॥

**अन्वयः**—प्राक् कोपवती अनुनयान् अगृहीत्वा, अथो विरहखेदितचित्ता (काचित्) मधुमदाहितमोहा (सती) कान्तम् एव कोपितं कलयन्ती (सती) अनुनिन्ये ॥२९॥

**टीका**—कोपवतीति । प्राक् प्रथमं कोपवती सरोषा अतएवानुनयान् प्रियप्रार्थनान्यगृहीत्वा अनादृत्य । अथो सम्प्रति विरहखेदितचित्ता पश्चात्तापतप्ता काचिन्मधुमदेनाहितमोहा कृतचित्तविभ्रमा सती कान्तमेव कोपितमात्मना रोषितं कलयन्ती जानती अनुनिन्ये । सापराधाहं क्षमस्वेति प्रार्थितवती मत्तेषु किन्न सम्भावितमिति भावः । एषा कलहान्तरिता ॥२९॥

**टिप्पनी**—कोपवतीति । अत्र द्वितीयचतुर्थपादयोः एक-मकार-हकार-ककाराणां सकृत्साम्यात् वृत्त्यनुप्रासोऽलङ्कारः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

**বাঙ্গালা**—কোন রমণী পূর্ব্বে স্বামীর প্রতি কুপিত থাকিয়া তাহার অনুনয় গ্রাহ্য করিয়াছিল না; এখন তাহার মনে বিরহের কষ্ট উপস্থিত হইয়াছিল এবং মদ্য পানের মত্ততায় তাহার ভ্রম জন্মাইয়াছিল; তাই সে, স্বামীকেই কুপিত মনে করিয়া, অনুনয় করিতে লাগিল ॥২৯॥

**अन्वयः**—मुकुलिताक्षियुगानाम् अवसादितवाचाम् आसाम् अङ्गसादं कुर्वता ह्रियं हरता मदेन ईर्ष्यया इव तद्गुणः स्वयम् अकारि ॥३०॥

गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नान्वितदृशामतिमेन्दुः।
पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ॥३१॥
उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः।
योषितामतिमदेन जघूर्णुर्विभ्रमातिशयपुंषि वपूंषि ॥३२॥

---

टीका—कुर्वतेति। मुकुलितताक्षियुगानाम् अवसादितवाचाङ्गशिथिलगिरामासां स्त्रीणा-मङ्गसादमङ्गसादरूपशरीरनिश्चेष्टतां कुर्वता ह्रियं हरता मदेन ईर्ष्ययेवेत्युत्प्रेक्षा। तयोः ह्रियो गुणस्तनुयः अक्षिनिमीलनवाक्सादाङ्गसादरूपः क्षयमकारि कृतः ह्रीमदयोस्तुल्या-नुभाविकत्वादिति भावः ॥३०॥

टिप्पनी—कुर्वतेति। आत्मना कर्त्तुं शक्यस्य कार्य्यस्य अन्येन करणसम्भवे ईर्ष्या स्यादेवेति ह्रियं प्रति मदस्य ईर्ष्येति भावः। अत्र च्छेकानुप्रासश्चेति टीकोक्तेन प्रेक्षया सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥३०॥

বাঙ্গালা—(মদ্যপানে) রমণীগণের নয়নযুগল মুদ্রিত হইল এবং বাক্শক্তিও প্রায় লোপ পাইল; এই অবস্থায় মত্ততা, তাহাদের অঙ্গের অবসাদ জন্মাইয়া এবং লজ্জা অপ-হরণ করিয়া, ঈর্ষাবশতই যেন সেই লজ্জার কার্য্য নিজে করিল ॥৩০॥

अन्वयः—प्रतिमेन्दुः सदृशीषु अन्वितदृशां गण्डभित्तिषु पुरा न व्याञ्जि। पश्चात् पानपाटलितकान्तिषु लोध्रचूर्णतिलकाकृतिः आसीत् ॥३१॥

टीका—गण्डेति। प्रतिमेन्दुः प्रतिबिम्बचन्द्रः सदृशीषु स्वसमानवर्णासु अन्वितदृशां सुदृशां गण्डभित्तिषु पुरा सुरापनात् पूर्वं न व्याञ्जि नाभेदि। तदेकतापत्त्या तद्विविक्ततया न गृहीत इत्यर्थः। अतएव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैक-तेति लक्षणात्। विपूर्वादञ्जेः कर्मणि लुङ्, आडजादीनामित्याड़ागमः। पश्च त्पानान-न्तरम् पानेन पानमदेन पाटलिता पाटलीकृता कान्तिर्यासान्तासु गण्डभित्तिषु लोध्रचूर्णस्य लोध्रपरागस्य तिलकश्चित्रकम्। तमालपत्रतिलकचित्रकाणि विशेषकाः। द्वितीयञ्च तुरी-यञ्च न स्त्रियामित्यमरः। तस्याकृतिरिवाकृतिर्य्यस्य स आसीत्। वैवर्ण्याद्विविक्त एवासी-दित्यर्थः। तिलकाकृतिरिति निदर्शना पूर्वोक्तसामान्यसंसृष्टा ॥३१॥

टिप्पनी—गण्डेति। अत्र माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३१॥

বাঙ্গালা—মদ্যপানের পূর্ব্বে রমণীগণের গণ্ডদেশ, চন্দ্রের সমানবর্ণ ছিল; সুতরাং চন্দ্রের প্রতিবিম্ব, সেই গণ্ডদেশে ব্যক্ত হইয়াছিল না; তাহার পর, যখন মদ্য পান করায় সেই গণ্ডদেশের কান্তি ঈষৎ রক্তবর্ণ হইল; তখন চন্দ্রের প্রতিবিম্ব, লোধ্রচূর্ণের তিলকের ন্যায় তাহাতে স্পষ্ট দৃষ্ট হইল ॥৩১॥

अन्वयः—उद्धतैः इव कुचकुम्भैः परस्परसङ्गात् उभयतः ईरितानि विभ्रमातिशयपुंषि योषितां वपूंषि अतिमदेन जघूर्णुः ॥३२॥

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तम्पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥३३॥
चीवतासुपगतास्वनुवेलं तासु रोषपरितोषवतीषु ।
अग्रहीन्नु समरेष्वनुकम्पामास नूज्झितनिषङ्गमनङ्गः ॥३४॥

---

टीका—उद्धतैरिति । उद्धतैः दृप्तैरिव कुचकुम्भैः परस्परसङ्गादन्योऽन्यसङ्घर्षादुभयत ईरितान्याकृष्टानि तथा विभ्रमातिशयं विलासविशेषं पुष्यन्ति तानि । नपुंसकस्य झलच इति नुमागमः । योषितां वपूंषि । पूर्ववन्नुमागमः, सान्तमहतः संयोगस्येति दीर्घः । अतिमदेन जुघूर्णुः भ्रेमुः दृप्तसङ्घर्षस्तटस्थपीडाकरः यथा वृषभकलहाद्वृक्षपादभङ्ग इति भावः ॥३२॥

टिप्पनी—उद्धतैरिति । अत्र उद्धतैरिवेति क्रियोत्प्रेक्षा, चतुर्थपादे च्छेकानुप्रासस्य तुल्ययोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—কুচকুম্ভগুলি দর্পিত হইয়াই যেন পরস্পর সংঘর্ষ করিয়া, রমণীগণের শরীরগুলিকে দুই দিকে টানিতেছিল ; তাহাতে শরীরগুলি অত্যন্ত শোভা ধারণ করিতেছিল ; এহেন শরীরগুলি অত্যন্ত মত্ততাবশতঃ ঘুরিতে লাগিল ॥৩২॥

अन्वयः—चारुता आसां वपुः अभूषयत् ; अनून-नवयौवनयोगः ताम् अभूषयत् ; मकरकेतन-लक्ष्मीः तम् अभूषयत्, दयितसङ्गमभूषः मदः पुनः ताम् अभूषयत् ॥३३॥

टीका—चारुतेति । आसां योषितां वपुश्चारुता सौन्दर्यमभूषयत् । तां चारुतामनून-नवयौवनयोगः सम्पूर्णयौवनसम्पत्तिरभूषयत् । तं पुनर्नवयौवनयोगन्तु मकरकेतनलक्ष्मी-र्मदनसम्पत्तिरभूषयत् । तां मकरकेतनलक्ष्मीं दयितसङ्गम एव भूषा यस्य स मदोऽभूषयत् । तां मदः तस्य दयितसङ्गम इत्यर्थः प्रक्रमानुसारात्तां मदस्तमपि वल्लभसङ्ग इति प्रयोक्तव्ये विशेषणत्वेन प्रयोगो महाकवीनामनुद्वेगात् । यथा भारवेः प्रयोगः, शुचि भूषयतीत्यादौ श्लोके स नयाङ्गः स च श्रुतिभूषण इति वक्तव्ये स नयापादितसिद्धिभूषण इति । अत्रोत्तरो-त्तरस्य पूर्वपूर्वविशेषकत्वादेकावली । यत्रोत्तरोत्तरेषां स्यात् पूर्वपूर्वं प्रति क्रमात् । विशेष-णत्वकथनमसावेकावली मतेति लक्षणात् ॥३३॥

टिप्पनी—चारुतेति । अत्र द्वितीयपादे वृत्त्यनुप्रास इति टीकोक्तया एकावल्या सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

বাঙ্গালা—সৌন্দর্য্য, রমণীগণের শরীরগুলিকে অলঙ্কৃত করিয়াছিল ; পরিপূর্ণরূপে নবযৌবনাগম, আবার সেই সৌন্দর্য্যকে অলঙ্কৃত করিয়াছিল ; কামকৃত কান্তি, আবার সেই নবযৌবনাগমকে অলঙ্কৃত করিয়াছিল ; মত্ততা, আবার সেই কামকৃত কান্তিকে অল-ঙ্কৃত করিয়াছিল ; এবং প্রিয়তমের সহিত সম্মেলন আবার সেই মত্ততাকে অলঙ্কৃত করিয়া-ছিল ॥৩৩॥

शङ्कयाऽन्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव।
न क्षमम्भवति तत्त्वविचारे मत्सरेण हतसंवृति चेतः ॥३५॥
आननैर्विचकसे हृषिताभिर्वल्लभानभि तनूभिरभावि।
आर्द्रतां हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥३६॥

---

अन्वयः—अनङ्गः क्षीवताम् उपगतासु अनुवेलं रोषपरितोषवतीषु तासु सशरं धनुः अग्रहीत नु, उज्झितनिषङ्गं (धनुः) उज्झामास नु ॥३४॥

टीका—क्षीवतामिति। क्षीवतां मत्तताम्। मत्तशौण्डोत्कटक्षीबा इत्यमरः। क्षीव मदे इत्यस्माद्धातोरनुपसर्गात् फुल्लक्षीबकृशोल्लाघा इति निष्ठान्तो निपातितः। उपगतासु प्राप्तासु अतएवानुवेलम्प्रतिक्षणं रोषपरितोषवतीषु तासु स्त्रीषु विषये अनङ्गः सशरन्धनुरग्रहीन्नु, उज्झितनिषङ्गमस्ततूणीरं यथा तथा उज्झामास नु तत्याज किम्। उज्झतेर्लिट्, इजादेश्च गुरुमतोऽनृच्छ इत्याम्प्रत्ययः रुष्टासु धनुर्ग्रहणं परितुष्टासु त्यागश्च रोषपरितोषाभ्यामुत्प्रेक्ष्यते। अन्यथा रोषानन्तरं परितोषः परितोषानन्तरं रोषश्च न स्यादिति भावः। रोषपरितोषयोर्धनुर्ग्रहणत्यागाभ्यां यथासङ्ख्यं नान्वयाद्यथासङ्ख्यालङ्कारभेदः तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥३४॥

टिप्पनी—क्षीवतामिति। अत्र द्वितीयपादे वृत्त्यनुप्रासः, चतुर्थे च छेकानुप्रास इति टीकोक्तयथासंख्येन सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

বাঙ্গালা—রমণীরা মদ্যপানে মত্ত হইয়া যখন প্রিয়তমের প্রতি রুষ্ট হইয়াছিল; তখন কামদেব বাণের সহিত ধনু ধারণ করিয়াছিলেন কি? আবার যখন তাহারা তাদের প্রতি তুষ্ট হইয়াছিল; তখন [illegible] তূণীর ত্যাগপূর্ব্বক ধনুও ত্যাগ করিয়াছিলেন কি? ॥৩৪॥

अन्वयः—वनिताभिः अन्ययुवतौ शङ्कया दयितः स्फुटम् एव प्रत्यभेदि। मत्सरेण हतसंवृति चेतः तत्त्वविचारे क्षमं न भवति ॥३५॥

टीका—शङ्कयेति। वनिताभिरन्ययुवतौ सपत्न्यां शङ्कया तत्सङ्गशङ्कामालम्ब्य दयितः स्फुटमेव निश्चितवदेव प्रत्यभेदि भिन्नवत्कृत्वोद्घाटित इत्यर्थः अनुचितोऽयमविमृश्य मिथ्याभियोग इति शङ्कां परिहरति। नेति। मत्सरेण वैरेण हता संवृतिर्गोप्यगोपनं यस्य तच्चेतस्तत्त्वविचारे भूतार्थचिन्तायां क्षमं सहिष्णु न भवति मत्सरग्रस्तचेतसामेव स्वभाव इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥३५॥

टिप्पनी—शङ्कयेति। अत्र मानाख्यो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३५॥

বাঙ্গালা—প্রিয়তম সপত্নীর সহিত সংসর্গ করিয়াছেন এই আশঙ্কা হওয়া মাত্রই স্ত্রীলোকেরা স্পষ্ট করিয়াই সে কথা সে প্রিয়তমকে বলিয়া ফেলিতে লাগিল। কারণ, বিদ্বেষ যে চিত্তের আবরণ নষ্ট করিয়া ফেলে; সে চিত্ত, তত্ত্ব বিচার করিতে সমর্থ হয় না ॥৩৫॥

रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकासि ।
चाटु चाकृतकसम्भ्रममासां कार्मणत्वमगमन्रमणेषु ॥३७॥
लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन ।
मानवञ्चनविदा वदनेन क्रीतमेव हृदयन्दयितस्य ॥३८॥

---

**अन्वयः**—वल्लभान् अभि वधूनाम् आननैः विचकसे, तनूभिः हर्षिताभिः अभावि, हृदयम् आर्द्रताम् आप, रोषश्च वचनेषु लोलति स्म ॥३६॥

**टीका**—आननैरिति । वल्लभानभि वल्लभसमक्षमित्यर्थः । अभिभाग इति लक्षणार्थ-कर्मप्रवचनीयत्वात् द्वितीया । वधूनामाननैर्विचकसे विकसितम् । भावे लिट् । तनूभिरङ्गैर्हर्षिताभिः पुलकिताभिः । हृषेर्लोमस्वितीड़ागमः । अभावि भूतम् । भावे लुङ् । हृदयञ्चार्द्रतामपि काठिन्यं जहावित्यर्थः । वचनेषु रोषो लोलति चलति स्म वचनगतो रोषो वक्रतापि निवृत्तेत्यर्थः । अत्र वधूष्वाननविकासाद्यनेकक्रियायौगपद्यात् समुच्चया-लङ्कारः । गुणक्रियायौगपद्यं समुच्चय इति लक्षणात् ॥३६॥

**टिप्पनी**—आननैरिति । अत्र द्वितीयपादे वृत्त्यनुप्रासश्चेति टीकोक्तसमुच्चयेन सह संसृष्टिः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३६॥

**বাঙ্গালা**—প্রিয়তমদিগের সমক্ষে রমণীগণের মুখ প্রফুল্ল হইল; শরীর রোমাঞ্চিত হইল; হৃদয় অনুরাগে গলিয়া গেল এবং বাক্যের রোষ নিবৃত্তি পাইল ।৩৬।

**अन्वयः**—अप्रतिविधानमनोज्ञं रूपम्, कार्यम् अनपेक्ष्य विकासि प्रेम, अकृतकसम्भ्रमं चाटु च आसां रमणेषु कार्मणत्वम् अगमन् ॥३७॥

**टीका**—रूपमिति । अप्रतिविधानमप्रतियत्नमेव मनोज्ञं स्वभावसुन्दरमित्यर्थः रूपमा-कृतिः कार्यं प्रयोजनमनपेक्ष्य विकासि वर्द्धमानम् अनौपाधिकमित्यर्थः । प्रेम अकृतक-सम्भ्रममकृत्रिमसंरम्भञ्चाटु प्रियवचनञ्चासां स्त्रीणां रमणेषु विषये कार्मणत्वं वशीकरण-कर्मत्वम् । वशक्रिया संवननं मूलकर्म तु कार्मणमित्यमरः । तद्युक्तात् कर्मणोऽण् । अगमन् प्रापानि । गमेर्लुङ् ऌदित्वादङ् । अत्र रूपादिष्वारोप्यमाणस्य कार्मणत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥३७॥

**टिप्पनी**—रूपमिति । अत्रापि रसादयः पूर्ववत् ॥३७॥

**বাঙ্গালা**—রমণীগণের স্বভাবসুন্দর রূপ, কোন প্রয়োজন অপেক্ষা না করিয়া স্বভা-বতই প্রকাশিত প্রণয় এবং কৃত্রিম আড়ম্বরশূন্য প্রিয় বাক্য এই গুলি প্রিয়তমদিগের বিষয়ে একেবারে বশীকরণক্রিয়াস্বরূপ হইল ।৩৭।

**अन्वयः**—लावणिकेन मान-वञ्चन-विदा सुतनोः वदनेन गौरवाढ्यम् अपि दयितस्य हृदयं लीलया एव तुलयित्वा क्रीतम् एव ॥३८॥

**टीका**—लीलयेति । लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकं लावण्यवत् । अत

स्पर्शभाजि विशदच्छविचारौ कल्पिते सुगदृशां सुरताय।
सन्नतिन्दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥३९॥
यूनि रागतरलैरपि तिर्यक्पातिभिः श्रुतिगुणेन युतस्य।
दीर्घदर्शिभिरकारि वधूनां लङ्घनन्न नयनैः श्रवणस्य ॥४०॥

---

इनठनाविति ठन्प्रत्यये ठस्येकः यस्येति चेत्यल्लोपे हलस्तद्धितस्येति यकारलोपः। अन्यत्र तु लवणं पण्यमस्यास्तीति लावणिको लवणव्यवहारी। लवणाट्ठञ्प्रत्ययः। तेन लावणिकेन मानवञ्चनविद्या अहङ्कारहरणदक्षेण। अन्यत्र परिमाणप्रतारणपटुना। सुतनोः स्त्रियाः वदनेन कर्त्रा गौरवाढ्यं गाम्भीर्यसम्पन्नमपि। अन्यत्र गुरुत्वयुक्तमपि दयितस्य हृदयं लीलया विलासेनैव तुलयित्वा। अन्यत्रानायासेनैव उन्माय गुर्वपि लघुतया नीत्वेत्यर्थः। क्रीतं वशीकृतमेव। अन्यत्र दानेन स्वीकृतमेव। अत्र विशेषणमहिम्नैव वदने लावणिकत्वस्य हृदये पण्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः। हृदयस्य प्रतीयमानपण्याभेदेन क्रीतत्वोक्तेरलौकिकहृदयावर्जने लौकिकक्रयव्यवहारसमारोपः ॥३८॥

टिप्पनी—लीलयेति। अत्र च्छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तसमासोक्त्या सह संसृष्टिः। सम्भोगशृङ्गारो रसः, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥३८॥

বাঙ্গালা—লাবণ্যযুক্ত এবং মান হরণ করিতে নিপুণ রমণীর মুখখানি, পতির হৃদয় গাম্ভীর্য্যশালী হইলেও অবলীলাক্রমে তাহা হাল্কা করিয়া, একেবারে কিনিয়াই ফেলিল ॥৩৮॥

अन्वयः—मृगदृशां दृष्टयः स्पर्शभाजि विशदच्छविचारौ सुरताय कल्पिते सन्नतिं दधति प्रियतमे शयने च अजस्रं पेतुः ॥३९॥

टीका—एवं मदानुभवं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति। तत्र सुरतं द्विविधं बाह्यमाभ्यन्तरञ्चेति। बाह्यं च प्रेक्षणभाषणाश्लेषणचुम्बनाद्यनेकभेदभिन्नम्। तत्र दृष्टिविशेषन्तावदाह। स्पर्शेति। स्पर्शभाजि सुखस्पर्शे विशदा विमला शुभ्रा च या छविः कान्तिस्तया चारौ रम्ये सुरताय कल्पिते रतिसुखदानाय सृष्टे विहारयोग्यतया सज्जीकृते च सन्नतिमानुकूल्यं सर्वतः साम्यञ्च दधति दधाने प्रियतमे शयने मृगदृशां दृष्टयोऽजस्रमविच्छिन्नं पेतुः पतिताः युगपदुभयावलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः। अत्र प्रियतमशयनयोः प्रकृतयोरेव धर्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता ॥३९॥

टिप्पनी—स्पर्शेति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—স্পর্শসুখদাতা, নির্ম্মলকান্তিবশতঃ মনোহর, রমণের জন্য নির্ম্মিত এবং অনুকূল্যকারী প্রিয়তম ও শয্যার প্রতি অনবরত রমণীগণের দৃষ্টি পতিত হইতে লাগিল ॥৩৯॥

सङ्कथेच्छुरभिधातुमनीशा सम्मुखी न च बभूव दिदृक्षुः ।
स्पर्शनेन दयितस्य नतभ्रूरङ्गसङ्गचपलापि चकम्पे ॥४१॥

---

**अन्वयः**—रागतरलैः अपि यूनि तिर्यक्पातिभिः दीर्घदर्शिभिः वधूनां नयनैः श्रुतिगुणेन युतस्य श्रवणस्य लङ्घनं न अकारि ॥४०॥

**टीका**—यूनीति । रागेण तरलैश्चपलैरपि दर्शनोत्सुकैरपीत्यर्थः । यूनि प्रिये तिर्यक्पातिभिस्त्रपया साचि विप्रसारिभिः दीर्घदर्शिभिरायतान्तैः आलोकनव्यापारपरैरित्यर्थः । अन्यत्र रागद्वेषचपलैः अतएव तिर्यक्पातिभिः कुटिलवृत्तिभिरपि दीर्घदर्शिभिरागामिकार्यज्ञैरित्यर्थः वधूनां नयनैः श्रुतिगुणेन शब्दग्रहणपाटवेन युतस्य । श्रूयतेऽनेनेति श्रवणं श्रोत्रन्तस्य लङ्घनमतिक्रमो नाकारि न चक्रे । कर्णान्ते विश्रान्तमित्यर्थः अन्यत्र तु श्रुतिः श्रवणम् अभ्यास इति यावत् । सैव गुणस्तेन युतस्य श्रूयत इति श्रवणं शास्त्रं तस्य लङ्घनं नाकारि रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्रातिक्रमात् बिभेतीति भावः । अयञ्च व्यवहारो नयनेषु रागतरलैरित्यादिश्लिष्टविशेषणसहिम्ना गम्यत इति समासोक्तिभेदः । इयञ्च रागदृष्टिरौत्सुक्यानुभावः ॥४०॥

**टिप्पनी**—यूनीति । अत्रापि रसादयः पूर्ववत् ॥४०॥

**বাঙ্গালা**—রমণীগণের আয়ত নয়নগুলি, অনুরাগে চঞ্চল হইলেও, যুবকদিগের প্রতি তেরচা ভাবেই পতিত হইতেছিল এবং শব্দশ্রবণসমর্থ আপন আপন কর্ণের অতিক্রম করিয়াছিল না ॥৪০॥

**अन्वयः**—नतभ्रूः सङ्कथेच्छुः अभिधातुम् अनीशा बभूव, दिदृक्षुश्च सम्मुखी न बभूव, अङ्गसङ्गचपला अपि दयितस्य स्पर्शनेन चकम्पे ॥४१॥

**टीका**—सङ्कथेति । नतभ्रूः स्त्री सङ्कथायां सम्भाषणे इच्छुरिच्छावत्यपि । विन्दुरिच्छुरित्युप्रत्ययान्तौ निपातः । अभिधातुं सम्भाषयितुमनीशा अक्षमा बभूव । अप्यर्थश्चशब्दः दिदृक्षुर्द्रष्टुमिच्छुरपि । दृशेः सनन्तादुप्रत्ययः । सम्मुखी अभिमुखी न बभूव । अङ्गसङ्गे चपला गात्रस्पर्शचपलापि दयितस्य स्पर्शनेन चकम्पे कम्पितवती । एते कम्पादयो लज्जासाध्वसानुभावाः । लज्जाविजितमन्मथेयं मुग्धा ॥४१॥

**टिप्पनी**—सङ्कथेच्छुरिति । अत्र प्रथमार्द्धे सङ्कथेच्छादिदृक्षारूपे कारणद्वये सत्यपि अभिधानसामर्थ्यसम्मुखवर्त्तित्वरूपकार्यद्वयानुत्पत्तेर्विशेषोक्तिः ; तथा द्वितीयार्द्धे कारणाभावेऽपि कम्पोत्पत्तेः किं विभावना ? उत अङ्गसङ्गाभिलाषरूपे कारणे सत्यपि अङ्गसङ्गानुत्पत्तेर्विशेषोक्तिरित्युभयोः सन्देहसङ्करः ; चतुर्थपादे च्छेकानुप्रास इति समुदाये संसृष्टिः । रसादयः पूर्ववत् ॥४१॥

**বাঙ্গালা**—কোন রমণী আলাপ করিতে ইচ্ছুক হইয়াও কিছুই বলিতে পারিল না এবং দেখিতে ইচ্ছুক হইয়াও প্রিয়তমের সম্মুখী হইতে পারিল না ; আর প্রিয়তমের অঙ্গের সহিত সম্মিলিত হইবার ইচ্ছা থাকিলেও, তাহার স্পর্শমাত্রেই কাঁপিয়া উঠিল ॥৪১॥

उत्तरीयविनयात्त्रपमाणा रुन्धती किल तदीक्षणमार्गम्।
आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या ॥४२॥
अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा।
भिन्नशङ्खवलयम्परिणेत्रा पर्यरम्भि रभसादचिरोढा ॥४३॥
सञ्जहार सहसा परिरब्धप्रेयसीषु विरहय्य विरोधम्।
संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणेषु महेषुम् ॥४४॥

---

अन्वयः—अन्या उत्तरीयविनयात् त्रपमाणा (सती) तदीक्षणमार्गं रुन्धती किल विकटेन विवोढुः वक्षसा एव कुचमण्डलम् आवरिष्ट ॥४२॥

टीका—अथालिङ्गनं वर्णयति। उत्तरीयेति। अन्या स्त्री उत्तरीयविनयात् कुचांशुकाकर्षणात्। त्रपमाणा तदीक्षणमार्गन्तस्य वोढुः दृष्टिपथं रुन्धती किल आवृण्वतीव न तु वस्तुत इति किलार्थः। विकटेन विशालेन। विशङ्कटं विशालं स्यात् करालं विकटन्तथेति वैजयन्ती। सम्प्रोदश्च कटजिति चकाराद्वेः कटच् प्रत्ययः। विवोढुः परिणेतुः वक्षसैव कुचमण्डलम् आवरिष्ट आवृतवती कुचावरणव्याजेनालिङ्गितवती। वृञो लुङि तङ् इडागमः। अत्र कुचसंवरणेनालिङ्गनेच्छानिगूहनान्मीलनभेदः। एषा लज्जान्मथमध्यस्था मध्यमा ॥४२॥

टिप्पनी—उत्तरीयेति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

বাঙ্গালা—অন্য কোন রমণী, উত্তরীয় বসন অপহরণ করায় লজ্জিত হইয়া, পতির দৃষ্টিপথ রুদ্ধ করিবার জন্য, তাহার বিশাল বক্ষঃস্থল দ্বারাই নিজের স্তনমণ্ডল আবৃত করিল ॥৪২॥

अन्वयः—अंशुकं हृतवता परिणेत्रा तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा अचिरोढा रभसात् भिन्नशङ्खवलयं पर्यरम्भि ॥४३॥

टीका—अंशुकमिति। अंशुकमुत्तरीयं हृतवता परिणेत्रा भर्त्रा तन्वोः कृशयोः बाह्वोः स्वस्तिको बन्धविशेषः तेनापिहिते आच्छादिते मुग्धे सुन्दरे कुचाग्रे यस्याः सा तथोक्ता, अचिरोढा नवोढा भिन्नानि शङ्खस्य वलयानि यस्मिन् कर्मणि तद्यथा तथा रभसाद्वेगात्पर्यरम्भि गाढमाश्लिष्टेत्यर्थः। रभेर्ण्यन्तात् कर्मणि लुङ्। रभेरशब्लिटोरिति नुमागमः। एषा तिरोहितमुग्धा ॥४३॥

टिप्पनी—अंशुकमिति। अत्र "तन्वोः कृशयोः बाह्वोः स्वस्तिको बन्धविशेषः" इति मल्लिनाथः। बाह्वोरचिरोढाया एव बाहुद्वयस्य कथनात्; स्वस्तिकः परिणेतुरेव कौशीक्रतहस्तः स एव बन्धविशेष इत्यर्थः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः; पाञ्चाली च रीतिः ॥४३॥

বাঙ্গালা— ... ... ... ... ... ॥৪৩॥

अन्वयः—तरुणेषु विरोधं विरहय्य सहसा परिरब्धप्रेयसीषु (सत्सु) रतिपतिः संहितं महेषुं स्मितभिन्नक्रोधम् आशु सञ्जहार ॥४४॥

स्वं समानमुपयन्तरि बध्वाः श्लिष्टवत्युपसपत्नि रसेन।
आत्मनैव रुरुधे कृतिनेव स्वेदसङ्गि वसनञ्जघनेन ॥४५॥
पीडिते पुर उरःप्रतिपेषं भर्त्तरि स्तनयुगेन युवत्याः।
स्पष्टमेव दलतः प्रतिनार्य्यास्तन्मयत्वमभवद्धृदयस्य ॥४६॥

---

टीका—सञ्जहारेति। तरुणेषु युवसु विरोधं प्रणयकलहं विरहय्य विहाय। रहयतेः स्वार्थण्यन्तात् क्त्वा तस्य ल्यप्, ल्यपि लघुपूर्वादित्ययादेशः। सहसा परिरब्धाः प्रेयस्यो यैस्तेषु परिरब्धप्रेयसीषु आश्लिष्टवधूकेषु सत्सु। ईयसश्चेति कपोऽभावः, ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्य इत्युपसर्जनस्य ह्रस्वनिषेधः। रतिपतिः कामः संहितमारोपितं महेषुं महान्तं शरं स्मितभिन्नक्रोधं स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्वरोषं च यथा तथा आशु सञ्जहार। सिद्धेऽर्थे साधनानवकाशादित्यर्थः परिरम्भान्तो यूनां विरह इति भावः ॥४४॥

टिप्पनी—सञ्जहारेति। अत्र द्वितीये पादे छेकानुप्रासः, तृतीये च वृत्त्यनुप्रास इत्यनयोः संसृष्टिः। रसः पूर्ववत्, प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

বাঙ্গালা—যুবকগণ বিরোধ পরিত্যাগ করিয়া হঠাৎ প্রিয়তমদিগকে আলিঙ্গন করিলে, কামদেব ঈষৎ হাস্য করিয়া, ক্রোধ পরিত্যাগ পূর্ব্বক, আরোপিত মহাবাণকে শীঘ্রই উপসংহার করিলেন ॥৪৪॥

अन्वयः—उपयन्तरि रसेन उपसपत्नि श्लिष्टवति (सति) स्वं समानं स्वेदसङ्गि बध्वाः वसनं कृतिना इव जघनेन आत्मना एव रुरुधे ॥४५॥

टीका—स्वं समानमिति। उपयन्तरि भर्त्तरि रसेन रागान्ध्येनेत्यर्थः। उपसपत्नि सपत्नीसमीपे। समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम्। श्लिष्टवति आश्लिष्टवति सति स्वं समानं स्वमंशुकापारवश्याद् भ्रश्यमानं तथापि स्वेदसङ्गि स्वेदेन सात्त्विकेन सक्तं बध्वा वसनं कृतिना कुशलेन स्वयेदं लाघवमिति जानतेवेत्यर्थः। जघनेन कर्त्रा आत्मनैव स्वयमेव रुरुधे रुद्धम्। सा तु न वेत्तीति भावः। स्वेदहेतुकस्य वसनरोधस्य स्वलाघवज्ञान-हेतुकत्वमुत्प्रेक्ष्यते ॥४५॥

टिप्पनी—स्वं समानमिति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

বাঙ্গালা—পতি, রাগান্ধতানিবন্ধন সপত্নীর নিকটেই প্রিয়তমাকে আলিঙ্গন করিলে, তাহার কাপড়খানি পড়িতে পড়িতে ঘামে লাগিয়া রহিল; তাহাতে বোধ হইল কার্য্যপটু কটীদেশই যেন সেই কাপড় খানিকে নিজেই রুদ্ধ করিল ॥৪৫॥

अन्वयः—युवत्याः स्तनयुगेन पुरः भर्त्तरि उरःप्रतिपेषं पीडिते (सति) दलतः प्रतिनार्य्याः हृदयस्य स्पष्टमेव तन्मयत्वम् अभवत् ॥४६॥

टीका—पीडित इति। युवत्याः युवतेः स्तनयुगलेन भर्त्तरि प्रतिनार्य्याः पुरोऽग्रे समक्षं

दीपितस्मरमुरस्युपपीड़ं वल्लभे घनमभिष्वजमाने ।
वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥४७॥
सम्प्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् ।
आत्मनः सततमेव तदन्तर्वर्त्तिनो न खलु नूनमजानन् ॥४८॥

मेव उरः प्रतिपिष्य उरःप्रतिपेषम् । परिक्लिश्यमाने चेति णमुल्, क्रमेजन्त इत्यव्ययसंज्ञा । वक्षः प्रतिपीड्येत्यर्थः पीड़िते सति दलत ईर्ष्यया दीर्य्यमाणस्य प्रतिनार्य्याः सपत्न्याः हृदयस्य तन्मयत्वं भर्त्तृतादात्म्यं स्पष्टमभवदेव । अन्यथा कथमन्यपीड़नादन्यदलनमिति भावः । अतएवेयमसङ्गत्यलङ्कारोपजीविनी तन्मयत्वोत्प्रेक्षेति सङ्करः, कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः ॥४६॥

टिप्पनी---पीड़ित इति । इयं नायिका आरान्धा । अत्रापि रसादयः पूर्ववत् ॥४६॥

बाङ्गाला—কোন যুবতির স্তনযুগল, সপত্নীর সম্মুখেই ভর্ত্তার বক্ষঃস্থল নিষ্পেষণ করিয়া তাহাকে পীড়িত করিলে, সে সপত্নীর হৃদয় বিদীর্ণ হইতে লাগিল ; সুতরাং সে সপত্নীর হৃদয় স্পষ্টই ভর্ত্তার হৃদয়ের সহিত এক হইয়া গিয়াছিল ॥৪৬॥

अन्वयः—वल्लभे दीपितस्मरम् उरसि उपपीड़ं घनम् अभिष्वजमाने (सति) सुभ्रुवः कुचकुम्भौ कठिनतातिशयेन वक्रतां न ययतुः ॥४७॥

टीका—दीपितेति । वल्लभे दीपितस्मरम् उद्दीपितकामं यथा तथा उरस्युपपीड़म् । उरस्युपपीड्य सप्तम्यां चोपपीड़रुधकर्ष इति णमुल् । तत्पुरुषे कृति बहुलमित्यलुक् । घनङ्गाढ़मभिष्वजमाने परिरभमाणे सति । परिरम्भः परिष्वङ्गः संश्लेष उपगूहनमित्यमरः । सुभ्रुवः कुचकुम्भौ कठिनतातिशयेन वक्रताम्परिमलतां न ययतुर्न प्राप्तौ । अत्र गाढ़ालिङ्गनात् कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥४७॥

टिप्पनी—दीपितेति । रसादयः पूर्ववत् ॥४७॥

बाङ्गाला— ... ... ... ... ॥৪৭॥

अन्वयः—योषितः श्लिष्यताम् इष्टतमानां हृदयं सम्प्रवेष्टुम् ईषुः इव ; (किन्तु) नूनम् आत्मनः सततम् एव तदन्तर्वर्त्तिनः न खलु अजानन् ॥४८॥

टीका—सम्प्रवेष्टुमिति । योषितः श्लिष्यतामालिङ्गतामिष्टतमानां हृदयं संप्रवेष्टुमीषुरिच्छन्ति स्मेव इति गाढालिङ्गननिमित्ता क्रियास्वरूपोत्प्रेक्षा गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात् । अतएवात्मनः स्वान् सततमेव तदन्तर्वर्त्तिनस्तेषामिष्टतमानाम् अन्तर्हृदयेष्वेव स्थितान्नाजानन् नूनम् अन्यथा कथं पुनःप्रवेशेच्छेति भावः । इयमज्ञानोत्प्रेक्षा पूर्वोत्प्रेक्षा सापेक्षेति सजातीयसङ्करः ॥४८॥

टिप्पनी—सम्प्रवेष्टुमिति । अत्रापि रसादयः पूर्ववत् ॥४८॥

बाङ्गाला—প্রিয়তমেরা আলিঙ্গন করিলে, রমণীরা যেন তাহাদের হৃদয়ের ভিতরে

स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन ॥४९॥
न स्म माति वपुषः प्रमदानामन्तरिष्टतमसङ्गमजन्मा ।
यद् बहुर्बहिरवाप्य विकाशं व्यानशे तनुरुहाण्यपि हर्षः ॥५०॥

---

প্রবেশ করিতে ইচ্ছা করিয়াছিল ; কিন্তু নিজেরা যে সর্বদাই সেই প্রিয়তমদিগের হৃদয়ে বাস করিত, তাহা তাহারা নিশ্চয়ই বুঝিয়াছিল না ॥৪৮॥

**अन्वयः**—स्नेहनिर्भरं वधूनां वपुः असंशयम् अन्तः आर्द्रताम् अधत्त । यत् यूनि गाढपरिरम्भिणि (सति) अनेन वस्त्रक्नोपम् अम्बु ववृषे ॥४९॥

**टीका**—स्नेहेति । स्नेहनिर्भरं प्रेमरसपूर्णं तैलादिकद्रवद्रव्यपूर्णञ्च । स्नेहोऽस्त्री द्रवहार्दयोरिति वैजयन्ती । अतएव वधूनां वपुरन्तरार्द्रतामार्द्रत्वमधत्त स्नेहद्रव्यसम्पूर्णमन्तरार्द्रम्भवतीति भावः । असंशयं संशयस्याभावः । अर्थाभावेऽव्ययीभावः । कुतो यद्यस्मात् यूनि पुंसि गाढम्परिरम्भत इति परिरम्भिणि गाढाश्लेषिणि सति अनेन वपुषा कर्त्रा वस्त्रं क्नोपयित्वा परिषिच्य वस्त्रक्नोपम् । क्नूयधातोर्ण्यन्तादर्त्तिह्रीत्यादिना पुगागमे चेले क्नोपेरिति णमुल् । अम्बु ववृषे । वृषिः कर्मणि लिट् । अन्तरार्द्रस्य निष्पीडनाद्बहिरम्बुस्रावसम्भवात् तन्निमित्तेयमन्तरार्द्रत्वोत्प्रेक्षा प्रियाङ्गसङ्गात्ताः स्विन्ना इति सात्त्विकोदयोक्तिः ॥४९॥

**टिप्पनी**—स्नेहेति । अत्रापि रसादयः पूर्ववत् ॥४९॥

**বাঙ্গালা**—রমণীদিগের স্নেহপূর্ণ শরীরটী, নিশ্চয়ই ভিতরেও আর্দ্রতা ধারণ করিত ; যেহেতু, যুবক গাঢ় আলিঙ্গন করিলে, সেই শরীরটী কাপড়খানিকে ভিজাইয়া জল বর্ষণ করিয়াছিল ॥৪৯॥

**अन्वयः**—प्रमदानाम् इष्टतमसङ्गमजन्मा बहुः हर्षः वपुषः अन्तः न माति स्म । यत् बहिः विकाशम् अवाप्य तनुरुहाणि अपि व्यानशे ॥५०॥

**टीका**—न स्मेति । प्रमदानामिष्टतमसङ्गमेन जन्म यस्य सः । जन्माद्युत्तरपदत्वाद्व्यधिकरणबहुव्रीहिरिति वामनः । बहुर्विपुलः । विपुलानेकयोर्बहुरिति वैजयन्ती । हर्षो वपुषोऽन्तर्न माति स्म अत्युद्रेकादन्तःसम्मिन्न इत्युत्प्रेक्षा । कुतः यद्यस्माद्बहिर्वपुषो बहिर्विकाशं वृद्धिमवाप्य तनुरुहाणि रोमाण्यपि व्यानशे व्याप । अश्नोतेर्लिट् । अश्नोतेश्चेति नुडागमः । अत्र बहिर्विकाशनिमित्तकान्तरामानोत्प्रेक्षा आनन्दरोमाञ्चयोः श्लेषमूलाभेदाध्यवसायातिशयोक्त्यनुप्राणितेति सङ्करः ॥५०॥

**टिप्पनी**—नेति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५०॥

**বাঙ্গালা**—রমণীগণের প্রিয়তমসঙ্গমজাত প্রচুর হর্ষ (আনন্দ, উদগম) শরীরের ভিতরে ধরিয়াছিল না। যেহেতু, সে হর্ষ বাহিরেও প্রকাশ পাইয়া লোমগুলিতেও গিয়াছিল ॥৫০॥

यत् प्रियव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे।
प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥५१॥
क्षौमभरादवनतम्परिरम्भे रागवानवटुजेष्ववकृष्य।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥५२॥
पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥५३॥

---

अन्वय—व तानां प्रियव्यतिकरात् यत् अङ्गजेन पुलकेन बभूवे; तेन भृशम् उच्छ्वसिताभिः नीविभिः सपदि बन्धनमोक्षः प्रापि ॥५१॥

टीका—यदिति। वनितानां स्त्रीणां प्रियस्य भर्त्तुर्व्यतिकरात्सम्पर्कादङ्गमाच्चाङ्गजेनाङ्गव्यापिना पुत्रेण च पुलकेन बभूवे भूतमिति यत्। भावे लिट्। तेन पुलकोदयेन पुत्रोदयेन च भृशमुच्छ्वसिताभिरुच्छ्रिनाभिर्मोचाशया आश्वसिताभिश्च नीविभिः लक्षणया कटिवस्त्रैः अन्यथा बन्धनशब्देन पौनरुक्त्यात्। सपदि बन्धनमोक्षो ग्रन्थिभेदो निगड़मोचनं च प्रापि प्राप्तः। कर्मणि लुङ्। अभ्युदयेषु राजानो बद्धान् मोचयन्तीति भावः। अत्र प्रकृतपुलकनीविगताङ्गजत्वोच्छ्वसितत्वादिविशेषणसाम्याद् बन्धनमोक्षणसम्बन्धाच्च अप्रकृतपुत्रकारागतिप्रतीतेः समासोक्तिरलङ्कारः ॥५१॥

टिप्पनी—यदिति। अत्र रसादयः पूर्ववत् ॥५१॥

বাঙ্গালা—প্রিয়তমদিগের সহিত সম্মিলিত হওয়ায় রমণীগণের অঙ্গ হইতে যে রোমাঞ্চ জন্মিয়াছিল; তাহাতে কোমরের কাপড় অত্যন্ত ফুলিয়া হঠাৎ বন্ধনমুক্তি লাভ করিল ॥৫১॥

अन्वयः—रागवान्, परिरम्भे क्षौमभरात् अवनतम् अर्पितोष्ठदलं योषितः आननपद्मम् अवटुजेषु अवकृष्य मुकुलिताक्षम् अधासीत् ॥५२॥

टीका—अथ चुम्बनक्रीड़ां वर्णयति। क्षौमेति। परिरम्भे आलिङ्गने क्षौमेव भरस्तस्मादवनतं भाराक्रान्तं नमतीति भावः। अर्पितं स्वमुखे निहितमोष्ठ एव दलं पत्रं यस्य तद्योषित आननमेव पद्मं रागवान् रागी अवटुजेषु चरमशिरोरुहेषु। अवटुर्घाटा कृकाटिकेत्यमरः। अवकृष्य अवटुजाकर्षणेनोन्नमय्येत्यर्थः मुकुलिताक्षं निमीलितनेत्रं यथा तथा। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच्प्रत्ययः। अधासीत् पपौ। धेटो लुङ् आदेच इत्यात्वम् अस्तिसिचोऽपृक्ते इतीड़ागमः। अत्राननोष्ठस्य पद्मदलत्वरूपणात्तत्तानुरागिणो मधुपत्वं च गम्यत इत्येकदेशविवर्त्ति रूपकम् ॥५२॥

टिप्पनी—क्षौमेति। अत्रापि रसादयः पूर्ववत् ॥५२॥

বাঙ্গালা— ... ... ... ... ।৫২।

अन्वयः—अभीष्टे पल्लवोपमिति-साम्य-सपक्षम् अधरबिम्बं दष्टवति (सति), सरुजा इव तार-लोल-वलयेन तरुण्याः करेण पर्यकूजि ॥५३॥

--- ---

केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥५४॥
रेचितम्परिजनेन महीयः केवलाभिरतदम्पति धाम ।
साम्यमाप कमलासखविष्वक्सेनसेवितयुगान्तपयोधेः ॥५५॥

---

टीका—पल्लवेति । पल्लवेन उपमित्या सादृश्येन तत्साम्यत्वेन सम्बन्धेन उभयोरपि पल्लवै-कोपमानत्वसाधर्म्यात् सुहृद्भूतम् अधरो बिम्बमिव तदधरबिम्बम् अभीष्टे प्रियतमे दष्टवति सति । सह रुजा सरुक् । तेन सरुजेति बहुव्रीहिः, सहस्य सः । तेन सरुजेव सख्यर्थे-नेव । स्त्रीरुग्रुजा चोपताप इत्यमरः । तारारवमुच्चैः क्रोशन्ति ; कुतः लोलानि चलानि वलयानि कङ्कणानि यस्य तेन तरुण्याः करेण पर्यकूजि परिकूजितम् । भावे लुङ् । सुहृद्दुःखात् दुःखायन्ते सुहृद इति भावः । अत्र कङ्कणाद्यारवस्य करकूजनविधूननहेतुकस्य सरुजेवेति फलहेतुकत्वमुत्प्रेक्ष्यते ॥५३॥

टिप्पनी—पल्लवेति । अत्र द्वितीयपादे छेकानुप्रासयोरिति टीकोक्तहेतूत्प्रेक्षया सह संसृष्टिः । सम्भोगशृङ्गारो रसः, मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥५३॥

বাঙ্গালা—হস্তের উপমানও পল্লব এবং ওষ্ঠবিম্বের উপমানও পল্লব, এইভাবে এক পদার্থ উভয়ের উপমান হওয়ায় যে সাদৃশ্য ছিল, তাহাতে যুবতির হস্ত ও ওষ্ঠবিম্ব, পরস্পর পরস্পরের বন্ধু ছিল ; সুতরাং প্রিয়তম সেই ওষ্ঠবিম্বকে দংশন করিলে, সেই যুবতির হাত-খানি, সেই ওষ্ঠবিম্বের ব্যথায় ব্যথিত হইয়াই যেন অব্যক্ত রব করিতে লাগিল ; কেন না সে হাতের কঙ্কণগুলি চলিতে থাকিয়া উচ্চ রব করিয়াছিল ॥৫৩॥

अन्वयः—केनचित् मधुरम् उल्बणरागं विरहेषु अधिकं बाष्पतप्तम् ओष्ठपल्लवम् अपास्य मुहूर्त्तं सरसं सुभ्रुवः अक्षि चुचुम्बे ॥५४॥

टीका—केनचिदिति । केनचिद्रागिणा मधुरं रसवन्तमुल्बणरागमतिरक्तं तथापि विरहेष्वधिकं बाष्पेण विरहोष्मणा तप्तं सुभ्रुव ओष्ठपल्लवमपास्य सरसं सान्द्रस्नेहम् अक्षि चुचुम्बे चुम्बितम् । अत्र तप्तत्वरसवत्त्वयोर्विशेषणगत्याधरत्यागाक्षिचुम्बनहेतुत्वाद्वाक्यार्थलिङ्ग-द्वयं सापेक्षत्वात् सङ्कीर्य्यते ॥५४॥

टिप्पनी—केनचिदिति । अत्र चुचुम्ब इति व्यतीहारे आत्मनेपदम् । परस्परं चुचुम्ब इति तदर्थः । रसः पूर्ववत्, प्रसादो गुणः, वैदर्भी च रीतिः ॥५४॥

বাঙ্গালা—কোন যুবক মধুর, অত্যন্ত রক্ত এবং বিরহকালীন অত্যন্ত বাষ্পসন্তপ্ত ওষ্ঠ-খানিকে পরিত্যাগ করিয়া, কিছুকাল সুন্দরীর সুশীতল নয়নমণ্ডলকে চুম্বন করিল ॥৫৪॥

अन्वयः—परिजनेन रेचितं केवलाभिरत-दम्पति महीयः धाम कमलासख-विष्वक्सेन-सेवित-युगान्त पयोधेः साम्यम् आप ॥५५॥

टीका—एवं बाह्यसुरतमुक्त्वाभ्यन्तरसुरतवर्णनमस्तौति । रेचितमित्यादि । परिजनेन

आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन ।
रागिणामित इतो विसृमद्भिः पाणिभिर्जगृहिरे हृदयानि ॥५६॥
कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः ।
अक्रियन्त कठिनेषु कथञ्चित् कामिनीकुचतटेषु पदानि ॥५७॥

---

रैचितं विक्रीडितम् । अतएव केवलाविकाकिनावभिरतौ दम्पती जायापती यस्मिन् तत् । दम्पती जम्पती जायापती भार्य्यापती समावित्यमरः । राजदन्तादिषु जायाशब्दस्य जम्भावो दम्भावश्च विकल्पान्निपातितः । महीयो महत्तरं धाम केलिगृहं कमलासखेन लक्ष्मीभर्त्रा विष्वक्सेनेन जनार्द्दनेन विष्णुना सेवितस्याधिष्ठितस्य युगान्तपयोधेः साम्यमापेत्युपमालङ्कारः । युगान्तविशेषणं विविक्ततायोतनार्थम् । एतेनेच्छाविहारतोक्ता ॥५५॥

टिप्पनी—रैचितमिति । अत्र द्वितीयार्द्धे वृत्त्यनुप्रास इति टीकोक्तार्थोपमया सह संसृष्टिः । पूर्ववत् रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥५५॥

বাঙ্গালা—যে ঘরে কোন পরিজন ছিল না ; কিন্তু সর্বপ্রকার রমণে প্রবৃত্ত কেবল যুবক ও যুবতি ছিল ; সেই বৃহৎ ঘরখানি প্রলয়কালে কেবল লক্ষ্মীর সহিত নারায়ণের আশ্রয় সমুদ্রের সাদৃশ্য লাভ করিয়াছিল ॥৫৫॥

अन्वयः—इतः इतः विसृमद्भिः रागिणां पाणिभिः उच्चैः उरसिजद्वितयेन निरन्तरम् आवृतानि अपि योषितां हृदयानि जगृहिरे ॥५६॥

टीका—अथ विस्रम्भविहारानेवाह । आवृतानीति । उच्चैरुन्नतेनोरसिजद्वितयेन निरन्तरं नीरन्ध्रमावृतानि संवृतान्यपि योषितां हृदयानि वक्षांसि चेतांसि च इत इतो विसृमद्भिर्वितस्ततः परामृशद्भिः रागिणामभिपाणिभिर्जगृहिरे गृहीतानि । निगूढं वस्तु हस्तपरामर्शाल्लभ्यत इति एकत्र भावः, अन्यत्र लब्धलक्ष्यः प्रियकरस्पर्शस्तासां हृदयग्राह्योऽभूदिति भावः । नैरन्तर्य्येण प्रतिबध्नतोरपि कुचयोः कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति वाक्यार्थः । अत्र चित्तयानामपि हृदयानां प्रकृतत्वात् केवलप्रकृतश्लेषः ॥५६॥

टिप्पनी—आवृतानीति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—উন্নত স্তনযুগলে রমণীগণের হৃদয়গুলি ঘনভাবে আচ্ছাদিত থাকিলেও, কামুকদিগের হস্ত, ইতস্ততঃ আমর্শন করিয়া, সে হৃদয়গুলি গ্রহণ করিল ॥৫৬॥

अन्वयः—स्वेदवारिमृदुभिः विभुग्नैः कामिनां करजाग्रैः कठिनेषु कामिनीकुचतटेषु असकलानि पदानि कथञ्चित् अक्रियन्त ॥५७॥

टीका—कामिनामिति । स्वेदवारिणा सात्त्विकेनाङ्गलोस्वेदेन मृदुभिः कोमलताङ्गतैरतएव विभुग्नैर्विनम्रैः कामिनां करजाग्रैः नखाग्रैः कठिनेषु कामिनीकुचतटेषु असकलान्यसमग्राणि पदानि क्षतानि कथञ्चिदक्रियन्त कृतानि । कठिनेषु मृदूनां पदलाभो दुःस-

सोष्मणः स्तनशिलाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् ।
उच्छलत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥५८॥
आमृशद्भिरभितो वलिवीचीर्लोलमानविततागुलिहस्तैः ।
सुभ्रुवामनुभवात् प्रतिपेदे सुष्ठिमेयमिति मध्यमभीष्टैः ॥५९॥

---

स्यात् इति भावः । नखक्रिया प्रवृत्तेत्यर्थः । अत्र कुचानामौद्धत्याकाठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥५७॥

टिप्पनी—कामिनामिति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५७॥

বাঙ্গালা—কামুকদিগের বক্র নখাগ্রগুলি ঘর্ম্মজলে কোমল হইয়া গিয়াছিল ; তাই তাহারা সেই নখদ্বারা কোন রকমে কঠিন···চিহ্ন করিয়াছিল ॥৫৭॥

अन्वयः—सोष्मणः स्तनशिलाशिखराग्रात् आत्तघर्मसलिलैः तरुणानां हस्तैः उच्छलत्कमलचारुषु निम्ननाभिसरसीषु निपेते ॥५८॥

टीका—सोष्मण इति । सोष्मणो यौवनोष्मयुक्तात् स्तनावेव शिलाशिखरे तयोरग्रादुपरिभागादात्तघर्मसलिलैर्व्यायामविहारात् प्राप्तस्वेदैस्तरुणानां हस्तैरुच्छलत्कमलवद्विकचकमलवच्च चारुषु निम्ननाभिष्वेव सरसीषु निपेते निपतितम् । उष्मखिन्नानां कुतश्चित् उन्नतात् पयसि पातो युक्त इति भावः । प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमस्पृशन्नित्यर्थः । अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसीत्वेन च रूपणाद्धस्तानाम् आपातितुरुषत्वरूपणाङ्गम्यत इति एकदेशविवर्त्ति रूपकम् ॥५८॥

टिप्पनी—सोष्मण इति । अत्र रसादयः पूर्ववत् ॥५८॥

বাঙ্গালা—যুবকদিগের হাতগুলি, রমণীগণের উষ্ণ স্তনরূপ প্রস্তরশৃঙ্গের উপর হইতে ঘর্ম্মজলে সংসিক্ত হইয়া, প্রস্ফুটিত পদ্মের ন্যায় মনোহর গভীর নাভীসরোবরে যাইয়া পড়িতে লাগিল ॥৫৮॥

अन्वयः—वलिवीचीः अभितः आमृशद्भिः लोलमान-विततागुलिहस्तैः अभीष्टैः सुभ्रुवां मध्यं सुष्ठिमेयम् इति अनुभवात् प्रतिपेदे ॥५९॥

टीका—आमृशद्भिरिति । वलयो वीचय इव वलिवीचीरभित आमृशद्भिः लोलमानाः चञ्चलनशीलाः । ताच्छील्यवयोवचनशक्तिषु चानशिति चानश् प्रत्ययः न तु शानच् लोलतेः परस्मैपदित्वात् । अत एव लोलमानादयश्चानश इति वामनः । लोलमाना वितताः प्रसारिताश्चाङ्गुलयो येषान्ते तथाविधा हस्ता येषान्तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं सुष्ठिमेयमिति मुष्ट्या मातुं शक्यमिति अनुभवात प्रत्यक्षेण मुष्ट्या मानं कृत्वैव प्रतिपेदे प्रतिबुद्धं न तु प्रसिद्धिमात्रादिति भावः । असुष्ठिमेयस्य सुष्ठिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥५९॥

टिप्पनी—आमृशद्भिरिति । अत्र चतुर्थपादे छेकानुप्रासवृत्त्यनुप्रासाविति टीकोक्तातिशयोक्त्या सह तयोः संसृष्टिः । अत्रापि रसादयः पूर्ववत् ॥५९॥

প্রাপ্য নাভিনদমজ্জনমাশু প্রস্থিতং নিবসনগ্রহণায়।
ঔপনীবিকমরুন্ধ কিল স্ত্রী বল্লভস্য করমাত্মকরাভ্যাম্ ॥৬০॥
কামিনঃ কৃতরতোৎসবকালক্ষেপমাকুলবধূকরসঙ্গি।
মেখলাগুণবিলগ্নমসূয়াং দীর্ঘসূত্রমকরোৎ পরিধানম্ ॥৬১॥

---

বাঙ্গালা—প্রিয়তমেরা চঞ্চল হস্তের অঙ্গুলীগুলিকে বিস্তৃত করিয়া, সেই হস্ত দ্বারা সুন্দরীগণের বলিতরঙ্গসমূহের (পেটের থরগুলির) চারিদিকে আমর্শন করিয়া, তাহাদের কটীদেশ যে মুষ্টিমেয় ইহা প্রত্যক্ষতই বুঝিতে পারিল ॥৫৯॥

অন্বয়ঃ—স্ত্রী আত্মকরাভ্যাং নাভি-নদ-মজ্জনং প্রাপ্য আশু নিবসনগ্রহণায় ঔপনীবিকং বল্লভস্য করম্ অরুন্ধ কিল ॥৬০॥

টীকা—প্রাপ্যেতি। নাভিরেব নদো হ্রদ ইতি রূপকম্। তত্র মজ্জনং প্রাপ্যাশু নিবসনগ্রহণায় বস্ত্রাকর্ষণার্থমিত্যর্থঃ। স্নাতস্য বস্ত্রগ্রহণং যুক্তমিতি ভাবঃ। প্রস্থিতং প্রবৃত্তম্। উপনীবি নীবিসমীপে প্রার্থিতা তত্র ভবমৌপনীবিকং তত্র ব্যাপৃতমিত্যর্থঃ। উপজানূপকর্ণোপনীবেষ্ঠক্। বল্লভস্য করং স্ত্রী আত্মকরাভ্যাম্ অরুন্ধ কিল রোধং নাটিতবতীত্যর্থঃ ॥৬০॥

টিপ্পনী—প্রাপ্যেতি। অত্র একস্য বল্লভকরস্য অনেকস্থানগতত্বাৎ পর্যায়ো নামালঙ্কারঃ। সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬০॥

বাঙ্গালা—প্রিয়তমের হস্ত, স্ত্রীলোকটীর নাভিহ্রদের ভিতরে অবগাহন করিয়া যখন তাড়াতাড়ি তাহার পরিধানের বস্ত্র খুলিবার জন্য কটিদেশে গমন করিল; তখন স্ত্রীলোকটী নিজ হস্তদ্বারা প্রিয়তমের সেই হস্ত রোধ করিবার ভাণ করিল ॥৬০॥

অন্বয়ঃ—আকুল-বধূ-কর-সঙ্গি মেখলাগুণবিলগ্নং দীর্ঘসূত্রং কৃতরতোৎসব-কাল-ক্ষেপং পরিধানং কামিনঃ অসূয়াম্ অকরোৎ ॥৬১॥

টীকা—কামিন ইতি। আকুলৈ প্রিয়করনিবারণাত্যগ্রৈ বধূকরৈ সঙ্গি সক্তং মেখলৈব গুণস্তত্র বিলগ্নং দীর্ঘসূত্রম্ আতততন্তুকম্ অত্যায়তত্বাৎ বহুধা বেষ্টিতমিত্যর্থঃ। চিরক্রিয়শ্চ। দীর্ঘসূত্রশ্চিরক্রিয় ইত্যমরঃ। এবং কৃতো রতস্যোৎসবস্য কালক্ষেপঃ কালবিলম্বো যেন তৎ পরিধানমধোংশুকং কামিনোঽসূয়ামকরোৎ। স্বেচ্ছাবিঘাতাদীর্ষ্যাঞ্জনয়ামাসেত্যর্থঃ। অত্র করস্বঙ্গাদিপদার্থানাং বিশেষণগত্যা, অসূয়াহেতুত্বাদনেকপদার্থহেতুকঞ্চ কাব্যলিঙ্গমলঙ্কারঃ ॥৬১॥

টিপ্পনী—কামিন ইতি। অত্রাপি রসাদয়ঃ পূর্ববৎ ॥৬১॥

বাঙ্গালা—কামিনীর হাতখানি, পরিধানের কাপড়খানি ধরিয়া রাখিবার জন্য ব্যস্ত ছিল এবং সে কাপড়খানি চন্দ্রহারের গুণে সংলগ্ন ছিল, তাহার লম্বা লম্বা সূতা ছিল, আর সেই কাপড়খানিই রমণোৎসবের বিলম্ব জন্মাইতেছিল; সুতরাং সেই কাপড়খানিই কামুক যুবকের অসূয়া জন্মাইয়াছিল ॥৬১॥

अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे ॥६२॥
ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः ।
भ्रूयुगेण सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥६३॥

---

**अन्वयः**—अम्बरं विनयतः प्रियपाणेः योषितः करयोश्च कलहस्य वारणां विधातुम् इव कक्ष्यया च वलयैश्च अभीक्ष्णं शिशिञ्जे ॥६२॥

**टीका**—अम्बरमिति । अम्बरं विनयतोऽपसारयतः प्रियपाणेर्योषितः करयोश्च तस्मिन् रोधकयोरिति भावः । कलहस्य वारणां विधातुं निवारणं कर्त्तुमिवेति फलोत्प्रेक्षा । कक्ष्यया काञ्च्या । कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोरिति विश्वः । कक्षयेति क्षान्तपाठे तु कक्षा ग्रहाणिकाकाञ्चीप्रकोष्ठगजरज्जुष्विति क्षान्तेषु विश्वः । वलयैः कङ्कणैश्च अभीक्ष्णं शिशिञ्जे चुकूजे । भावे लिट् । भूषणानां तु शिञ्जितमित्यमरः । द्वयोः कलहायमानयोः पार्श्वस्थाः साक्रोशं निवारयन्तीति भावः । शिञ्जतिरयन्तात्मव्यादिनं दन्त्यादिः शोषेव शिञ्जे इति स्मृतेः ॥६२॥

**टिप्पनी**—अम्बरमिति । अत्र कक्ष्यायां वलयेषु च कलहवारणप्रवृत्तमानुषस्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिरित्ति टीकोक्तोत्प्रेक्षया सहाङ्गाङ्गिभावेन सङ्करः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६२॥

**বাঙ্গালা**—পতির হাতখানি পত্নীর কাপড় খুলিয়া ফেলিতে প্রবৃত্ত হইল ; পত্নীর হাত দুই খানিও আবার তাহাতে বাধা দিতে লাগিল ; সুতরাং দুই জনের হাতে হাতে বিবাদ উপস্থিত হইল ; সেই বিবাদ নিবৃত্তি করিবার জন্যই যেন পত্নীর চন্দ্রহার ও বালা অনবরত শব্দ করিতে লাগিল ।৬২॥

**अन्वयः**—हृदयेशे उद्ग्रथयितुं वाससः ग्रन्थिं स्पृशति (सति) मानधनायाः भ्रूयुगेन रोमभिश्च सपदि समम् एव विभेदः प्रतिपेदे ॥६३॥

**टीका**—ग्रन्थिमिति । हृदयेशे प्रिये वाससो ग्रन्थिमुद्ग्रथयितुं विस्रंसयितुम् । ग्रथ-यतेश्चौरादिकात्तुमुन् । स्पृशति सति मानधनाया मानवत्याः कामिन्या इति शेषः । भ्रूयुगेण रोमभिश्च । कर्त्तरि तृतीयेति तृतीया । सपदि समं युगपदेव विभेदो भङ्गो हर्षश्च प्रतिपेदे प्राप्तः । अत्र मानवत्त्वात् कामिनो विस्रम्भेषु युगपदमर्षहर्षयोरुदयात्तदनुभावयो-रपि युगपदाविर्भाव इति भावः । अत्र भ्रूभङ्गरोमाञ्चक्रिययोः समुच्चयात् समुच्चयभेदः स च विभेद इति श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति सङ्करः ॥६३॥

**टिप्पनी**—ग्रन्थिमिति । अत्र तृतीयचरणे च्छेकानुप्रासश्चेति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । रसादयः पूर्ववत् ॥६३॥

**বাঙ্গালা**—পতি যখন কাপড়ের গিঁট খুলিবার জন্য সেই গিঁট স্পর্শ করিল ; তখন

आशु लङ्घितवतीष्टकराग्रे नीविमर्द्धमुकुलीकृतदृष्ट्या।
रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥६४॥
आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां कृशिमशालिनि मध्ये।
श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥६५॥

---

मानिनी রমণীর ভ্রূযুগল এবং রোম সকল তৎক্ষণাৎ একদাই কুটিলতা ও উদ্গম প্রাপ্ত হইল ॥৬৩॥

अन्वयः—इष्टकराग्रे आशु नीविं लङ्घितवति (सति) अर्द्धमुकुलीकृतदृष्ट्या रक्त-वैणिक-हताधर-तन्त्री-मण्डल-क्वणित-चारु चुकूजे ॥६४॥

टीका—आश्विति। इष्टस्य प्रियस्य कराग्रे नीविं वस्त्रग्रन्थिम् आशु झटात् लङ्घितवति अतिक्रान्तवति जघमूलं गते सतीत्यर्थः। अर्द्धमुकुलीकृतदृष्ट्या सुखपारवश्यादर्द्धनिमीलिताक्ष्या स्त्रिया रक्तो रक्तकण्ठः स्वयङ्गानकुशलः वीणा शिल्पमस्य वैणिको वीणावादनिपुणः। शिल्पमिति ठक्। रक्तेन वैणिकेन यन्त्रगानकुशलेन हतं वादितं यदधरं तन्त्रीणां मण्डलं समूहः बहुतन्त्रीकस्वरमण्डलादिभेदः तस्य क्वणितमिव चारु यथा तथा चुकूजे कूजितम्। भावे लिट्। अधरग्रहणं तन्त्रमाधुर्य्यातिशयात्। स्पर्शसुखातिरेकात् तन्त्रीकण्ठस्वरव्यतिकरमनोहरः कोऽपि रससर्वस्वभूतः कण्ठकूजितविशेषः जात इत्यर्थः। अतएव रक्तवैणिकहतेति विशेषणम्। क्वणितचार्विति उपमालङ्कारः ॥६४॥

टिप्पनी—आश्विति। अत्र सम्भोगशृङ्गारो रसः, समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥६४॥

বাঙ্গালা—প্রিয়তমের হাতের আগা যখন তাড়াতাড়ি কাপড়ের গিঁট অতিক্রম করিয়া নীচে গেল, তখন সেই রমণী নয়নযুগলকে অর্দ্ধ মুদ্রিত করিল এবং সুস্বরবীণা-বাদক-বাদিত নিম্নতাঁর সমূহের রবের ন্যায় সুন্দর কণ্ঠের রব করিল ॥৬৪॥

अन्वयः—आयताङ्गुलिः प्रियकरः कृशिमशालिनि सुभ्रुवां मध्ये अतिरिक्तः अभूत्; (किन्तु) पृथुलासु श्रोणिषु सकलेन तलेन स्पर्शम् आप ॥६५॥

टीका—आयतेति। आयताः अङ्गुलयो यस्य स प्रियकरः कृशस्य भावः कृशिमा कार्श्यम्। पृथ्व्यादिभ्य इमनिच्, रऋतो हलादेर्लघोरिति रेफादेशः। तेन शालते शोभते तस्मिन् सुभ्रुवां मध्ये अतिरिक्तोऽधिकोऽभूत मध्यस्यातिकार्श्यादस्यैकदेशोऽभूदित्यर्थः। पृथुलासु श्रोणिषु कटिषु। बहिर्ग्रिस्थुयुद्रुभ्यो लेति सूत्रेण पृथोः निप्रत्ययः। सकलेन पृथुलासु श्रोणिषु कटिषु। अतएव मध्यातिरेकलक्षेन तलेन स्पर्शमाप अन्तर्भागेन कृत्स्नेन श्रोणिमस्पर्शदित्यर्थः। अतएव मध्यातिरेकोक्तेरतिशयोक्तिः ॥६५॥

टिप्पनी—आयतेति। अत्र शेषपादे च्छेकानुप्रासश्चेति टीकोक्तातिशयोक्त्या सह संसृष्टिः। सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् ।
कामिनामनिभृतान्यपि रम्भास्तम्भकोमलतलेषु नखानि ॥६६॥
ऊरुमूलचपलेक्षणमघ्नन् यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥६७॥

---

বাঙ্গালা—প্রিয়তমের প্রসারিত হস্ত, রমণীর কৃশ কটীদেশে অতিরিক্ত হইল; কিন্তু বিশাল নিতম্বদেশে তাহার সকল তলই স্পর্শ লাভ করিল ।৬৫।

अन्वयः—स्पर्श-लोभ-वश-लोल-कराणां कामिनाम् अनिभृतानि अपि नखानि रम्भा-स्तम्भ-कोमल-तलेषु ललनोरुषु राजीः चक्रुः एव ॥६६॥

टीका—चक्रुरेवेति। स्पर्शलोभवशेनोरुस्पर्शतृष्णापारतन्त्र्येण लोलकराणां चपलपाणीनां कामिनामनिभृतान्यनर्पितान्यपि नखानि करजाः। पुनर्भवः करजो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः। रम्भास्तम्भकोमलतलेषु कदलीप्रकाण्डपेलवस्वरूपेषु ललनानामूरुषु राजीः रेखाश्चक्रुरेव ऊरुपरामर्शानन्तरीयनखस्पर्शमात्रादेव रेखा जाता इत्यर्थः। अत्र कोमलतायाः विशेषणगत्या राजीकरणहेतुत्वात् काव्यलिङ्गभेदः ॥६६॥

टिप्पनी—चक्रुरिति। अत्र छन्द्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ इति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। रसः पूर्ववत्, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥६६॥

বাঙ্গালা—স্পর্শলোভবশতঃ চঞ্চলহস্ত কামুকদিগের নখগুলি স্থাপন না করিলেও, সে গুলি, কামিনীদিগের কদলীস্তম্ভের ন্যায় কোমল উরুদেশে রেখা করিয়াই ফেলিল ।৬৬।

अन्वयः—एताः यैः वतंसकुसुमैः ऊरुमूलचपलेक्षणं प्रियम् अघ्नन्, तानि सपदि मन्मथस्य कुसुमायुधनाम यथार्थं चक्रिरे ॥६७॥

टीका—ऊर्विति। एताः स्त्रियः ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः। अघ्नन् अताडयन्। हन्तेर्लङ्। गमहनेत्यादिना उपधालोपः, हो हन्तेरिति कुत्वम्। तानि वतंसकुसुमानि। मनो मथ्नातीति मन्मथः। पृषोदरादित्वात्साधुः। तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुध इति यन्नाम तद्यथार्थं चक्रिरे चक्रुः तदा तेषामन्वर्थकारित्वादिति भावः। अत्र वतंसेष्वारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥६७॥

टिप्पनी—ऊरुमूलेति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

বাঙ্গালা—যুবকগণ চঞ্চল দৃষ্টি দ্বারা যুবতিদিগের উরুমূল দেখিতেছিল; তখন যুবতিরা যে কর্ণকুসুম দ্বারা সেই যুবকদিগকে তাড়ন করিল, সেই কুসুমগুলি তখনই কামদেবের 'কুসুমায়ুধ' এই নামটীকে সার্থক করিল ।৬৭।

धैर्यमुल्बणमनोभवभावा वामताञ्च वपुरर्पितवत्यः।
व्रीडितं ललितसौरतधार्ष्ट्यास्तेनिरेऽभिरुचितेषु तरुण्यः॥६८॥
पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि॥६९॥

---

अन्वयः—तरुण्यः उल्बण-मनोभव-भावाः (अपि) अभिरुचितेषु धैर्यं तेनिरे, वपुः अर्पितवत्यः (अपि) वामतां तेनिरे, ललित-सौरत-धार्ष्ट्याः (अपि) व्रीडितम् तेनिरे॥६८॥

टीका—धैर्यमिति। तरुण्यः रमण्यः उल्बण उद्रिक्तो मनोभवभावो रतिरागो यासान्ता अपि अभिरुचितेषु प्रियेषु धैर्यं मौदासीन्यन्तेनिरे। वपुः स्व ङ्गमर्पितवत्यो यथेष्टकरणाय दत्तवत्योऽपि वामतां वक्रताञ्च तेनिरे। ललितं मनोहरं सुरतं सुरतसम्बन्धि धार्ष्ट्यं प्रागल्भ्यं यासान्तास्तथापि व्रीडितं व्रीडान्तेनिरे। इत्थं स्त्रीणां रत्नादि राग ङ्गापं धाधार्ष्ट्यादिगुणा अप्यागन्तुकतया सहजधैर्यं वक्रताव्रीडितैः पुनः पुनः प्रतिबध्यन्त एवेति भावः। अत्र रागादीनां धैर्यादिभिः सह समावेशविरोधस्य सहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासोलङ्कारः धैर्यादिगुणसमुच्चयात्समुच्चयालङ्कारश्चेति सङ्करः॥६८॥

टिप्पनी—धैर्यमिति। अत्र प्रथमपादे च्छेकानुप्रासश्चेति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। रसादयः पूर्ववत्॥६८॥

বাঙ্গালা—যুবতিরা কামভাবে মত্ত হইয়াও, যুবকদিগের নিকটে ধৈর্য্যই প্রকাশ করিতে লাগিল; আপন দেহটীকে সর্বপ্রকারে সমর্পণ করিয়াও, প্রতিকূলতা দেখাইতে থাকিল এবং রমণ বিষয়ে সুন্দর ধৃষ্টতা ব্যক্ত করিয়াও লজ্জা প্রকাশ করিতে লাগিল॥৬৮॥

अन्वयः—करभोरूः अविरोधितवाञ्छं कामिनः पाणिरोधम्, मधुरस्मितगर्भाः भर्त्सनाश्च, सुखे अपि हारि शुष्करुदितञ्च कुरुते स्म॥६९॥

टीका—पाणीति। मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः। करभ इव ऊरू यस्याः सा करभोरूः स्त्री। ऊरूत्तरपदादौपम्ये इत्यूङ् प्रत्ययः। अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा कामिनः पाणिरोधं नीविमोक्षणे व्यापृतस्य प्रियपाणेर्निवारणं कुरुते स्म। तथा मधुरं मनोहरं स्मितङ्गर्भमन्तर्वर्त्ति यासु ता मन्दहासमिश्राः भर्त्सनास्तर्जनाश्च कुरुते स्म। तथा सुखेऽपि अधरपीडनादौ सुखातिरेके सत्यपि हारि मनोहारि शुष्करुदितमनश्रुत्वादनार्द्रं कृत्रिमरोदनञ्च कुरुते स्म। स्त्रीणामेष स्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इत्यर्थः। अत्र सुखेऽपि दुःखवदुपचारात् कुट्टमिताख्योऽनुभावो द्रष्टव्यः। केशाधराद्यिग्रहणे मोदमानेऽपि मानसे। दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तदिति लक्षणात्॥६९॥

टिप्पनी—पाणीति। अत्र कुरुते इत्येकया क्रियया पाणिरोधादीनां कर्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारश्छेकानुप्रासेन संसृज्यते। रसादयः पूर्ववत्॥६९॥

वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥৭০॥
अन्यकालपरिहार्यमजस्रं तद्‌द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥৭১॥

---

**বাঙ্গালা**—কোন সুন্দরী প্রিয়তমের ইচ্ছার ব্যাঘাত না করিয়াও হস্তরোধ করিল ; এবং ভর্ৎসনা করিল বটে, তাহার মধ্যেও সুমধুর হাস্য থাকিল ; আবার সুখের বিষয়েও মনোহর শুষ্ক রোদন করিল ॥৬৯॥

**अन्वयः**—युवानः प्रातिकूलिकतया एव ईर्ष्यया अपत्रपया च मुहुः वारणार्थपद-गद्गद-वाचां सुदृशाम् अनुकूलं कुर्वते स्म ॥৭০॥

**टीका**—वारणार्थेति । ईर्ष्यया आतपीडनासहिष्णुतया अपत्रपया च रहस्यप्रकाशन-वैलक्ष्येण च मुहुर्वारणार्थपदेषु मा मैत्यादिनिषेधवाचकशब्दप्रयोगेषु गद्गदवाचां स्खलद्गिरां सुदृशाम्प्रतिकूलं वर्त्तन्त इति प्रातिकूलिकाः प्रातिकूलचारिणः । तत् प्रत्यनुपूर्वमीपलोम-कूलमिति ठक् । तत्तया प्रातिकूलिकतयैव प्रतिकूलाचरणेनैव युवानोऽनुकूलमिष्टं कुर्वते स्म ललनानिवारणानप्रतिकूलमिवाचरितमधरपीडनादिकन्तत्तासामिष्टत्वादनुकूलमेवेति प्रतिकूलाचरणमेवानुकूलमभवतीत्यर्थः । अतएव प्रतिकूलमप्यनुकूलमिति विरोधाभासोऽल-ङ्कारः ॥৭০॥

**टिप्पनी**—वारणार्थेति । अत्रापि रसादयः पूर्ववत् ॥৭০॥

**বাঙ্গালা**—সুন্দরীরা ঈর্ষ্যা ও লজ্জাবশতঃ বার বার নিষেধবোধক অস্পষ্ট বাক্য উচ্চারণ করিতে লাগিলে, যুবকরা প্রতিকূলতা আচরণ করিয়াই তাহাদের অনুকূল কার্য্য করিতে লাগিল ॥৭০॥

**अन्वयः**—द्वयेन अजस्रम् अन्यकालपरिहार्यं तत् द्वयम् एव विदधे ; रहसि ताभिः भर्त्तृषु धृष्टता, इतरैः (च) अबलासु निर्दयत्वम् ॥৭১॥

**टीका**—अन्येति । अजस्रन्नित्यम् अन्यकालपरिहार्यं सुरतेतरकाले त्याज्यन्तद्द्वयं कर्म द्वयेन कर्त्रा विदधे विहितमेव । धाञः कर्मणि लिट् । एतदेव व्यनक्ति, रहसि ताभिरबलाभिर्भर्त्तृषु विषये धृष्टता विदधे इतरैर्भर्त्तृभिरबलासु स्त्रीषु निर्दयत्वञ्च विदधे । अन्यदा यथा पुंसां स्त्रीषु दया तासान्त्वप्रागल्भ्यमलङ्कारस्तद्वत् सुरतेषु तद्वि-पर्ययमेवालङ्कार इति भावः । अत्र स्त्रीपुंसधाष्टर्यनिर्दयत्वयोः प्रकृतयोर्विधानक्रियायौग-पद्यं गम्यत इति तुल्ययोगिताभेदः ॥৭১॥

**टिप्पनी**—अन्येति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥৭১॥

**বাঙ্গালা**—অন্য সময়ে সর্বদার জন্যই যে দুইটী কার্য্য যে দুই জনের পরিত্যাজ্য ছিল ; সেই সময়ে সেই দুইটী কার্য্যই সেই দুই জনে করিতে লাগিল। কেন না, অবলারা সেই

बाहुपीड़नकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः।
बोधितस्तनुभयस्तरुणीनामुन्मिमील विशदं विषमेषुः ॥७२॥
कान्तया सपदि कोऽप्युपगूढ़ः प्रौढ़पाणिरपनेतुमियेष।
संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥७३॥

---

নির্জন স্থানে ভর্ত্তাদের প্রতি ধৃষ্টতা প্রকাশ করিতে লাগিল; আবার ভর্ত্তারাও সেই অবলাদের প্রতি নির্দ্দয় ব্যবহার করিতে থাকিল ॥৭১॥

**अन्वयः**—तरुणीनां तनुभयः विषमेषुः बाहुपीड़न-कच-ग्रहणाभ्याम् आहतेन नख-दन्त-निपातैः (च) बोधितः (सन्) विशदम् उन्मिमील ॥७२॥

**टीका**—बाह्विति। तरुणीनान्तनौ शरीरे इति तनुभयः तनुषु सुप्तः। अधिकरणे प्रीतेरित्यव्प्रत्ययः। विषमेषुः कामः बाहुपीड़नं निर्दयास्लेषः। कचग्रहणं केशकर्षणं ताभ्यामाहतेन सुष्टिघातेन। नपुंसके भावे क्तः। नखानान्दन्तानाञ्च निपातैः घातैश्च बोधितः सन विशदं निर्व्याजं यथा तथा उन्मिमील उद्बुद्धः सर्व्वमेतत् कामस्योद्दीपकमासीदित्यर्थः। अत्र प्रकृतविशेषणसामर्थ्यादप्रस्तुतसुप्तप्रबुद्धपुरुषप्रतीतेः समासोक्तिरलङ्कारः। एवमेव प्रबोध्यते खलु निद्रालुरित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः ॥७२॥

**टिप्पनी**—बाह्विति। अत्रापि रसादयः पूर्ववत् ॥७२॥

**বাঙ্গালা**—যুবতিদিগের শরীরসুপ্ত কাম, যুবকদিগের বাহুপীড়ন, কেশধারণ, নখাঘাত ও দন্তাঘাত দ্বারা উদ্বুদ্ধ হইয়া ক্রমে স্পষ্টরূপে জাগরিত হইল ॥৭২॥

**अन्वयः**—कान्तया सपदि उपगूढ़ः कः अपि प्रौढ़पाणिः (सन्) (दुकूलम्) अपनेतुम् इयेषः; (किन्तु) संहत-स्तन-तिरस्कृत-दृष्टिः (सन्) भ्रष्टम् एव दुकूलं न अपश्यत् ॥७३॥

**टीका**—कान्तयेति। कान्तया सपदि वस्त्राकर्षणाच्छया एवोपगूढ़ आश्लिष्टः कोऽपि युवा कामी प्रौढ़पाणिर्व्यग्रहस्तः सन् अपनेतुन्दुकूलमाक्रष्टुमियेष संहताभ्यां निरन्तरश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टिस्तिरोहिताचः सन् भ्रष्टमेव प्रागेव स्रस्तन्दुकूलं नापश्यत। अत्र दृष्टितिरस्कारस्य विशेषणगत्या अदर्शनहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम्। तच्च दृष्टेः स्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति सङ्करः। तेन च कुचयोर्लोकोत्तरसौन्दर्य्यं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः ॥७३॥

**टिप्पनी**—कान्तयेति। रसादयः पूर्ववत् ॥७३॥

**বাঙ্গালা**—কোন কামিনী তাড়াতাড়ি প্রিয়তমকে আলিঙ্গন করিল; তখন সে তাহার কাপড় খুলিবার জন্য হাত বাড়াইল বটে; কিন্তু তাহার কাপড় যে পূর্ব্বেই পড়িয়া গিয়াছিল, তাহা সে দেখিয়াছিল না; কারণ কামিনীর ঘন স্তনযুগল তাহার দৃষ্টি রোধ করিয়া রাখিয়াছিল ॥৭৩॥

आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात।
त्रुट्यतः प्रियतमोरसि हारात् पुष्पवृष्टिरिव मौक्तिकवृष्टिः॥७४॥
सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि।
हासभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः॥७५॥
उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव॥७६॥

---

**अन्वयः**—तरुण्याः कुचतटेन आहतम् अमुना साधु सोढम् इति त्रुट्यतः हारात् मौक्तिकवृष्टिः पुष्पवृष्टिः इव प्रियतमोरसि पपात॥७४॥

**टीका**—आहतमिति। तरुण्याः सम्बन्धिना कुचतटेनाहतमाहतिरमुना उरसा साधु सोढमिति हेतोस्त्रुट्यतः शीर्यमाणाद्धारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपात इत्युत्प्रेक्षा। विक्रान्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः॥७४॥

**टिप्पनी**—आहतमिति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः वैदर्भी च रीतिः॥७४॥

**বাঙ্গালা**—যুবকের বক্ষঃস্থল, যুবতির স্তনতটের আঘাতটাকে সম্পূর্ণরূপেই সহ্য করিতে পারিল বলিয়া সেই বক্ষঃস্থলে ছিন্ন হার হইতে পুষ্পবৃষ্টির ন্যায় মুক্তাবৃষ্টি পড়িতে লাগিল ॥৭৪॥

**अन्वयः**—रमण्याः सीत्कृतानि मणितं करुणोक्तिः स्निग्धम् उक्तम् अलमर्थवचांसि हास-भूषण-रवाश्च कामसूत्रपदताम् उपजग्मुः॥७५॥

**टीका**—सीत्कृतानीति। रमण्याः सीत्कृतानि सीत्काराः। दन्तनिष्पीडनायां सीदिति शब्दप्रयोगः। मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः। मणितं रतिकूजितमित्यभिधानात्। करुणोक्तिः त्रायस्वेत्यादिदीनोक्तिः। स्निग्धं स्नेहार्द्रमुक्तमुक्तिः त्वं मे प्राणा इति प्रियवाद इत्यर्थः। अलमर्थानि निषेधार्थानि वचांसि मा मेत्यादिनिवारणवचनानि। हासानां भूषणानां च रवाः स्वनाश्च कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदतां व्यवहृत इति पदमर्थः प्रमेयलक्षणमिति यावत्तत्तामुपजग्मुः इति गम्योत्प्रेक्षा। यद्वा कामेनैव कृतं सूत्रं तस्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव॥७५॥

**टिप्पनी**—सीत्कृतानीति। अत्र उपजग्मुरित्येकया क्रियया सीत्कृतादीनां कर्तॄणां तथाभिसम्बन्धात् तुल्ययोगिता चेति टीकोक्तोत्प्रेक्षया सह सङ्करः। रसादयः पूर्ववत्॥७५॥

**বাঙ্গালা**—রমণীগণের সীৎকার, কণ্ঠরব, করুণবাক্য, স্নেহসূচক বাক্য, নিবারণবোধক বাক্য, হাস্যের রব ও অলঙ্কারের শব্দ এই গুলি কামশাস্ত্রের পদ হইল ॥৭৫॥

**अन्वयः**—निभृतम् एकं छेदवत् मृगदृशां मणितम् उद्धतैः अनेकैः अविरामैः कल-काञ्ची-नूपुर-ध्वनिभिः अक्षतम् एव श्रूयते स्म॥७६॥

ईदृगस्य भवतः कथमेतल्लाघवम्मुहुरतीव रतेषु।
चिह्नमायतमदश्यद्युर्व्या काञ्चिदामजघनस्य महत्त्वम् ॥७७॥
प्राप्यते स्म गतचित्रकचित्रैः श्चित्रमार्द्रनखलक्ष्म कपोलैः।
दध्रिरेऽथ रभसच्युतपुष्पाः स्वेदविन्दुकुसुमान्यलकान्ताः ॥७८॥

---

टीका—उन्नतेति। निभृतमनुच्चैत सूक्ष्ममित्यर्थः। एकमेकाकि छेदवत विच्छेद-युक्तम। मृगदृशां मणितं रतिकूजितम् उन्नतैः स्थूलैरनेकैर्बहुभिरविरामैरविच्छेदैः कलरवकलमधुरैः काञ्चीनां नूपुराणाञ्च ध्वनिभिरचतमतिरस्कृतमेव श्रूयते स्म श्रुतम। मणितस्य तिरोधायकशब्दान्तरसङ्गाविऽपि तादृप्यानापत्तेरतद्गुणालङ्कारः। सङ्गिति चेदतद्रूपस्वीकारः आदतद्गुण इति लक्षणात् ॥७६॥

टिप्पनी—उन्नतेति। अत्रापि रसादयः पूर्ववत् ॥७६॥

বাঙ্গালা—রমণীগণের কণ্ঠরব—কোমল, এক এবং মধ্যে মধ্যে বিরত হইতেছিল; আর তাহাদের চন্দ্রহার ও নূপুরের শব্দ উৎকট, অনেক ও অবিরত চলিতেছিল; তথাপি সে চন্দ্রহার ও নূপুরের শব্দ, তাহাদের সে কণ্ঠরবকে তিরোহিত করিয়াছিল না; তাই তাহা শুনা গিয়াছিল ॥৭৬॥

अन्वयः—रतेषु उर्व्या चिह्नम् आयतं काञ्चिदाम, 'ईदृशस्य भवतः मुहुः अतीव एतत् लाघवं कथम्' (इति) जघनस्य महत्त्वम् अदर्शयत् (इव) ॥७७॥

टीका—ईदृगस्येति। रतेषु उर्व्या चिह्नं रतिसंभ्रमात्पतितम् आयतन्दीर्घं धृतञ्च काञ्चिदाम रसनागुणः कर्त्तृ, ईदृशस्येति काञ्चिदाम्नः स्वायामदृष्टान्तेन जघनपरिमाणप्रदेशेन इत्थं महत्तरस्यातिमहतस्तव जघनस्य रतेषु प्रविसुरतेषु मुहुः कथमेतल्लाघवं मुहुरुन्नपतन-पाटवं यस्येत्यनायतत्वलक्षणमपि कवेष्टनपर्याप्तमिति भावः। इति जघनस्य महत्त्वदर्शनादिव इत्थं विभितस्येति शेषः। गम्यमानार्थत्वादप्रयोगः। अतोव्यामायत्तत्वनिमित्तकाञ्चिदामकार्त्तकं विस्मयपूर्वकजघनमहत्त्वदर्शनमुत्प्रेक्ष्यते ॥७७॥

टिप्पनी—ईदृगस्येति। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। रसादयः पूर्ववत् ॥७७॥

বাঙ্গালা— ... ... ... ॥৭৭॥

अन्वयः—गत-चित्रक-चित्रैः कपोलैः आर्द्रनख-लक्ष्म चित्रं प्राप्यते स्म। अथ रभस-च्युत-पुष्पाः अलकान्ताः स्वेद-विन्दु-कुसुमानि दध्रिरे ॥७८॥

टीका—प्राप्यत इति। गतानि विमर्द्दात् प्रमृष्टानि चित्रकचित्राणि तमालपत्ररचनानि येषान्तैः कपोलैः आर्द्रं यन्नखलक्ष्म तदेव चित्रमिति रूपकम्प्राप्यते स्म प्राप्तम्। किञ्च रभसेन रतिसंभ्रमेण च्युतपुष्पाः अलकान्ताश्चूर्णकुन्तलाग्राणि स्वेदविन्दूनेव कुसुमानीति रूपकं दध्रिरे दधुः। धरतेर्भौवादिकाल्लिटि लित्वादात्मनेपदम्। स्वेदोऽत्र श्रमानुभवः। श्रमः स्वेदोऽध्वरत्यादेः श्वासखेदादिभूमिकृत् ॥७८॥

यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् ।
आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥७९॥
प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥८०॥

---

टिप्पनी—प्राप्यत इति । अत्र उभयाङ्गगतयोर्निरङ्गकेवलरूपकयोर्वृत्त्यनुप्रासस्य च संसृष्टिः । रसा-द्यः पूर्ववत् ॥७८॥

বাঙ্গালা—রমণীগণের গণ্ডদেশের চিত্রগুলি মুছিয়া গিয়াছিল ; তথাপি সেগুলি নূতন নখক্ষতরূপ চিত্র আবার পাইয়াছিল এবং চুলের ফুলগুলি সজ্ঘর্ষবশতঃ পড়িয়া গিয়াছিল ; তথাপি সেগুলি ঘর্ম্মবিন্দুরূপ ফুল সকল পুনরায় ধারণ করিয়াছিল ।৭৮॥

अन्वयः—रुचिरेभ्यः यत् यत् एव रुरुचे, सुभ्रुवः रहसि तत् तत् अकुर्वन् । हि तरुण्यः आनु-कूलिकतया नराणां हृदयानि आक्षिपन्ति ॥७९॥

टीका—यद्यदेवेति । रुचिरेभ्यो रमणेभ्यो यद्यदेव चेष्टितं रुरुचे रोचते स्म प्रियमभू-दित्यर्थः । रुच दीप्तावभिप्रीतौ चेति धातोर्लिट् । रुच्यर्थानां प्रीयमाण इति सम्प्रदानत्वम् । सुभ्रुवो रहसि तत्तदकुर्वन् । तथाहि, तरुण्यः अनुकूलं वर्त्तन्त इत्यानुकूलिकाः । तत्-प्रत्यनुपूर्वमीपलोमकूलमिति ठक् । तासाम्भावस्तत्ता तया आनुकूलिकतया अनुकूलवर्त्ति-तयैव नराणां पुंसां हृदयान्याक्षिपन्त्यावर्जयन्तीत्यर्थान्तरन्यासः ॥७९॥

टिप्पनी—यदिति । अत्र प्रथमपादे छेकानुप्रासस्येति टीकोक्तार्थान्तरन्यासेन सह संसृष्टि । सम्भोग-शृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७९॥

বাঙ্গালা—যুবকদিগের যেরূপ যেরূপ রুচি হইল, সুন্দরীরা সেই নির্জনস্থানে তাহা তাহাই করিল। কারণ, যুবতিরা অনুকূলভাবে চলিয়াই পুরুষদিগের হৃদয় আকর্ষণ করিয়া থাকে ॥৭৯॥

अन्वयः—दुर्वहस्तनभराः असितायतकेश्यः मन्मथरसात् सुरतस्य अतिभूमिं प्राप्य श्रम-जलार्द्र-ललाट-श्लिष्ट-केशं शश्रमुः ॥८०॥

टीका—प्राप्येति । दुर्वहः स्तनभरो यासान्ता एतेनोपरिसुरतं व्यज्यते । अन्यथा विपरीतवैयर्थ्यात् । असिता आयताश्च केशा यासान्ता असितायतकेश्यः स्त्रियः । स्वाङ्गा-च्चेत्यादिना ङीप् । मन्मथरसात् अनुरागात् सुरतस्यातिभूमिम्परां काष्ठाम्प्राप्येत्यर्थः । श्रमजलेन खेदाम्बुना आर्द्रे ललाटे श्लिष्टाः केशा यस्मिन् कर्म्मणि तद्यथा तथा शश्रमुः इति सानुभावस्य श्रमभावोक्तिः भावनिबन्धनात् प्रेयोऽलङ्कारः ॥८०॥

टिप्पनी—प्राप्येति । अत्र तृतीयपादे छेकानुप्रासस्येति टीकोक्तप्रेयोऽलङ्कारेण सह संसृष्टिः । रसः पूर्ववत्, प्रसादो गुणः, पाञ्चाली च रीतिः ॥८०॥

বাঙ্গালা— ... ... ... ॥৮০॥

सङ्गताभिरुचितैश्चलितापि प्रागमुच्यत चिरेण सखीव।
भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥८१॥
प्रेक्षणीयकमिव क्षणमासन् ह्रीविभङ्गुरविलोचनपाताः।
संभ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥८२॥
अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु।
क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥८३॥

---

अन्वयः—उचितैः सङ्गताभिः वधूभिः प्राक् चलिता अपि ह्रीः सखी इव चिरेण अमुच्यत, विरहस्य असहा (ह्रीः) रतान्ते भूयः एव वधूभिः समगंस्त ॥८१॥

टीका—अथ सुरतावसानं वर्णयति। सङ्गताभिरिति। उचितैः परिचितैः प्रियतमैः सह सङ्गताभिर्वधूभिः प्राक् सुरतादौ चलिता गन्तुं प्रचलितापि ह्रीः सखीव चिरेणामुच्यत मुक्ता। न सहत इत्यसहा। पचाद्यजन्तेन नञ्समासः। विरहस्यासहा विरहमसहमाना सतीत्यर्थः। कर्तृकर्मणोः कृतीति कर्मणि षष्ठी। रतान्ते भूय एव वधूभिः समगंस्त सङ्गता सखीवेत्येव। समो गम्यृच्छिभ्यामित्यात्मनेपदं वागम इति सिचः पक्षे कित्त्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपो न। सुरतेतरकाले स्त्रीणां लज्जैव भूषणमिति भावः। उपमालङ्कारः ॥८१॥

टिप्पनी—संगताभिरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥८१॥

বাঙ্গালা—পূর্ব্বে যুবতিরা যুবকদিগের সহিত সম্মিলিত হইলে, সখীদের ন্যায় তাহাদের লজ্জাও যাইতে লাগিয়াছিল; তাহারাও সখীদের ন্যায়ই সে লজ্জাকে বহুকালে ত্যাগ করিয়াছিল; রমণের পরে, সেই সখীদের মতই সে লজ্জা যেন তাহাদের বিরহ সহ্য করিতে না পারিয়া, পুনরায় সেই যুবতিদিগের সহিত সম্মিলিত হইয়াছিল ॥৮১॥

অन्वयः—ह्री-विभङ्गुर-विलोचन-पाताः संभ्रम-द्रुत-गृहीत-दुकूल-च्छाद्यमान-वपुषः सुरतान्ताः क्षणं प्रेक्षणीयकम् इव आसन् ॥८२॥

टीका—प्रेक्षणीयकमिति। ह्रिया विभङ्गुराः स्खलिताः विलोचनपाता दृष्टिपाता येषु ते सम्भ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते सुरतान्ताः सुरतावसानानि क्षणं प्रेक्षणीयकं दृश्यमिवासन् इत्युपमा। नाटकादिरूपकेष्वाश्चर्यकं वस्तु तद्दृश्यं प्रेक्षणीयकमिति घोष्यते इह विभावितरोधानादिना तत्तुल्यत्वम् ॥८२॥

टिप्पनी—प्रेक्षणीयकमिति। अत्र प्रथमपादे छेकानुप्रास इति टीकोक्तोपमया सह संसृष्टिः। समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥८२॥

বাঙ্গালা—রমণের পরে, লজ্জাবশতঃ রমণীগণের দৃষ্টি, সঙ্কুচিতভাব ধারণ করিল এবং ব্যস্ততাবশতঃ তাহারা তাড়াতাড়ি কাপড় তুলিয়া লইয়া গাত্র আবৃত করিতে লাগিল। সুতরাং তাহাদের সেই অবস্থাটা ক্ষণকালের জন্য নাটকের ন্যায় দ্রষ্টব্য হইল ॥৮২॥

মৃষ্টচন্দনবিশেষকভক্তিভ্রষ্টভূষণকদর্থিতমাল্যঃ।
সাপরাধ ইব মণ্ডনমাসীদাত্মনৈব সুদৃশামুপভোগঃ ॥৮৪॥

---

**অন্বয়ঃ**—তন্বী আকুলকরা (সতী) অভীষ্টতমেন ক্রান্তপল্লবম্ অতনীয়সি কাঞ্চিধাম্নি অপ্রভূতং পিহিতৈকতরোরু ক্ষৌমং বিচকর্ষ ॥৮৩॥

**টীকা**—অপ্রভূতমিতি। তন্বী কৃশাঙ্গী অভীষ্টতমেন প্রেয়সা ক্রান্তপল্লবং গৃহীতাঞ্চলম্ অতএবাতনীয়সি কাঞ্চিধাম্নি জঘনে অপ্রভূতমাচ্ছাদয়িতুম্ অপর্য্যাপ্তম্ অতএব পিহিত-স্থগিত একতর একোরুর্যেন তৎ ক্ষৌমং দুকূলম্ আকুলকরা ব্যগ্রপাণিঃ সতী বিচকর্ষ জঘনস্যাপিধানার্থমাচকর্ষ। তন্ব্যা অনুভাবোঽয়ম্। অত্র ক্ষৌমবিশেষণানামাকর্ষণহেতুত্বাৎ পদার্থহেতুককাব্যলিঙ্গমলঙ্কারঃ ॥৮৩॥

**টিপ্পনী**—অপ্রভূতমিতি। অত্রাভীষ্টতমেন পুনর্বস্ত্রাঞ্চলকর্ষণেন স্থায়িভাবস্য রতেঃ সমুদ্দীপনাৎ সম্ভোগশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৩॥

**বাঙ্গালা**—কোন কৃশাঙ্গী রমণী, বিশাল উরুযুগলকে আবৃত করিবার জন্য বস্ত্র আকর্ষণ করিল ; তখন তাহার প্রিয়তম সে বস্ত্রের অঞ্চল টানিয়া ধরিল ; তাহাতে সে বস্ত্র তাহার একটি মাত্র উরু আবৃত করিল ; কিন্তু অন্য উরুতে সে বস্ত্র গেল না ; সুতরাং সে রমণী ব্যস্তহস্তে সেই বস্ত্র আকর্ষণ করিতে লাগিল ॥৮৩॥

**অন্বয়ঃ**—মৃষ্ট-চন্দন-বিশেষক-ভক্তিঃ ভ্রষ্ট-ভূষণ-কদর্থিত-মাল্যঃ সাপরাধঃ ইব উপভোগঃ আত্মনা এব সুদৃশাং মণ্ডনম্ আসীৎ ॥৮৪॥

**টীকা**—মৃষ্টেতি। মৃষ্টা প্রমৃষ্টা চন্দনানাং বিশেষকাণাং তিলকানাং পত্রাবল্যাশ্চ ভক্তীরচনা যেন সঃ। তমালপত্রতিলকচিত্রকাণি বিশেষক ইত্যমরঃ। ভ্রষ্টানি ভূষণানি যস্মিন্ স ভ্রষ্ট-ভূষণঃ কুৎসিতোঽর্থঃ কদর্থঃ। তীকাতী বিশেষ্যলিঙ্গত্বম্। কোঃ কত্তৎপুরুষেঽচীতি কুশব্দস্য কদাদেশঃ। কদর্থানি কৃতানি কদর্থিতানি দূষিতানি মাল্যানি যেন সঃ। ততস্তয়োর্বৈ-বক্ষিকবিশেষ্যবিশেষণভাবাদ্বিশেষণসমাসঃ। এবম্ভূত উপভোগঃ সাপরাধ ইব পূর্বমণ্ডনা-পহারাৎ কৃতাপরাধ ইব সুদৃশামাত্মনৈব স্বয়মেব। প্রকৃত্যাদিত্বাৎ তৃতীয়া। মণ্ডনমাসীৎ। প্রতিনিধিকরণেন সাপরাধনিরাসার্থমিবেত্যুৎপ্রেক্ষা। স্ত্রীণাং সম্ভোগ এব মণ্ডনন্তদভাবে মণ্ডনান্তরস্যাপ্যমণ্ডনত্বাদিতি ভাবঃ ॥৮৪॥

**টিপ্পনী**—মৃষ্টেতি। অত্র চন্দনবিশেষকাদীনাং মৃষ্টত্বাদিনা সাপরাধত্বমিতি পদার্থহেতুকং কাব্য-লিঙ্গমিতি টীকোক্তোৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৪॥

**বাঙ্গালা**—সম্ভোগের সময় সুন্দরীদিগের চন্দনের তিলক মুছিয়া গিয়াছিল, অলঙ্কার-গুলি খুলিয়া পড়িয়াছিল এবং ফুলের মালা মর্দ্দিত হইয়াছিল ; সুতরাং সে সম্ভোগ যেন অপ-রাধী হইয়া, (সেই অপরাধ মার্জনের জন্য) নিজেই তাহাদের অলঙ্কার হইয়াছিল ॥৮৪॥

যোষিতঃ পতিতকাঞ্চনকাঞ্চী মোহনাতিরভসেন নিতম্বে।
মেখলেব পরিতঃ স্ম বিচিত্রা রাজতে নবনখক্ষতলক্ষ্মীঃ ॥৮৫॥
ভাতু নাম সুদৃশান্দশনাঙ্কঃ পাটলো ধবলগণ্ডতলেষু।
দন্তবাসসি সমানগুণশ্রীঃ সম্মুখোঽপি পরভাগমবাপ ॥৮৬॥
সুভ্রুবামধিপয়োধরপীঠং পীড়নৈস্ত্রুটিতবত্যপি পত্যুঃ।
মুক্তমৌক্তিকলঘুর্গুণশেষা হারযষ্টিরভবদ্ গুরুরেব ॥৮৭॥

---

অন্বয়ঃ—মোহনাতিরভসেন পতিতকাঞ্চনকাঞ্চী যোষিতঃ নিতম্বে পরিতঃ বিচিত্রা নব-নখ-ক্ষত-লক্ষ্মীঃ মেখলা ইব রাজতে স্ম ॥৮৫॥

টীকা—যোষিত ইতি। মোহনাতিরভসেন সুরতসম্ভ্রমেণ পতিতা কাঞ্চনী কাঞ্চনস্য বিকারা কাঞ্চির্যস্যাস্তস্যা নির্মেখলে যোষিতো নিতম্বে পরিতঃ সর্বতো বিচিত্রা বিবিধরচনা নবনখক্ষতলক্ষ্মীর্মেখলেব রাজতে স্ম। উৎপ্রেক্ষালঙ্কারঃ ॥৮৫॥

টিপ্পনী—যোষিত ইতি। অত্র প্রথমচতুর্থপাদয়োশ্ছেকানুপ্রাস ইতি টীকোক্তয়া উৎপ্রেক্ষয়া সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৫॥

বাঙ্গালা—রমণসঙ্ঘর্ষে রমণীদের নিতম্ব হইতে স্বর্ণের চন্দ্রহার পড়িয়া গিয়াছিল; তথাপি সেখানে সকলদিকে নানা রকমের নূতন নূতন নখক্ষতগুলিই মেখলার তুল্য শোভা পাইয়াছিল ॥৮৫॥

অন্বয়ঃ—পাটলঃ সুদৃশাং দশনাঙ্কঃ ধবলগণ্ডতলেষু ভাতু নাম, দন্তবাসসি (তু) সমানগুণশ্রীঃ সম্মুখঃ অপি পরভাগম্ অবাপ ॥৮৬॥

টীকা—ভাত্বিতি। সুদৃশাং সম্বন্ধী পাটলোঽরুণো দশনাঙ্কো দন্তক্ষতং ধবলগণ্ডতলেষু কপোলেষু ভাতু নাম বৈবর্ণ্যাদভেদেন প্রকাশতাং নামেত্যঙ্গীকারে। দন্তবাসসি অধরে তু সমানগুণশ্রীস্তুল্যবর্ণোঽপি তথা সম্মুখোঽপি সন্ পরভাগং গুণোৎকর্ষং তথা পশ্চাদ্ভাগঞ্চাবাপ ইতি সাবর্ণ্যবৈবর্ণ্যয়োঃ সম্মুখপরাঙ্মুখত্বয়োশ্চ বিরোধঃ অপরিভাগমবাপেত্যুভয়ত্র পরিহারাদ্বিরোধাভাসদ্বয়সংসৃষ্টিঃ তত্রাদ্যঃ শ্লেষনিমিত্তিকাভেদাধ্যবসায়মূলস্তদ্গুণোত্থাপিত ইতি সঙ্করঃ ॥৮৬॥

টিপ্পনী—ভাত্বিতি। অত্র প্রথমে পাদে ছেকানুপ্রাসশ্চেতি টীকোক্তসঙ্করেণ সহ পুনঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৬॥

বাঙ্গালা—ঈষৎ রক্তবর্ণ দন্তক্ষতগুলি, সুন্দরীদিকের ধবল গণ্ডস্থলে প্রকাশ পাউক; কিন্তু ওষ্ঠে যে দন্তক্ষত ছিল, সেগুলি ওষ্ঠের সমানবর্ণ ছিল বলিয়া সম্মুখবর্তী হইয়াও প্রকাশ পাইয়াছিল না ॥৮৬॥

অন্বয়ঃ—সুভ্রুবাম্ অধিপয়োধরপীঠং পত্যুঃ পীড়নৈঃ ত্রুটিতবতী অপি মুক্তমৌক্তিকলঘুঃ গুণশেষা (অপি) হারযষ্টিঃ গুরুঃ এব অভবৎ ॥৮৭॥

विश्रमार्थमुपगूढमजस्रं यत्प्रियैः प्रथमरत्यवसाने ।
योषितामुदितमन्मथमादौ तद्द्वितीयसुरतस्य बभूव ॥८८॥
आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतरताभिरताभ्यः ।
दीयते स्म शयितुं शयनीये न क्षणः क्षणदयापि वधूभ्यः ॥८९॥

---

टीका—सुभ्रुवामिति। सुभ्रुवां पयोधरपीठे कुचतटे अधिपयोधरपीठम्। विभक्त्यर्थेऽव्ययीभावः। पत्युः पीड़नैः परिरम्भादिविमर्दैः स्खलितवती छेदं गतापि। अतएव मुक्तमौक्तिका सा च सा लघुश्च अतएव गुणशेषा सूत्रमात्रशेषापि हारयष्टिर्गुरुः श्लाघ्यैवाभवत्। लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥८७॥

टिप्पनी—सुभ्रुवामिति। अत्र छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तविरोधाभासेन सह संसृष्टिः। गुणरीती पूर्ववत् ॥८७॥

बाङ्गाला—পতির পীড়নে সুন্দরীদিগের স্তনমণ্ডলের হার ছিন্ন হইলেও, এবং তাহার মুক্তাগুলি পড়িয়া যাওয়ায় তাহা হাল্কা হইলেও, এবং তাহার গুণমাত্র অবশিষ্ট রহিলেও, সে হার গুরুই (গৌরবশালীই) হইয়াছিল ॥৮৭॥

अन्वयः—योषितां प्रथमरत्यवसाने प्रियैः अजस्रं यत् उपगूढम्, उदितमन्मथं तत् द्वितीयसुरतस्य आदौ बभूव ॥८८॥

टीका—विश्रमेति। योषितां प्रथमरत्यवसाने विश्रमार्थं श्रमापनोदार्थम्। श्राम्यतेर्घञ् प्रत्ययः, नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्ध्यभावः। अजस्रं प्रियैर्यदुपगूढम् उपगूढनम्। नपुंसके भावे क्तः, न लोकेत्यादिना षष्ठीप्रतिषेधः। उदितमन्मथमुत्पादितकामम् अतएव तदुपगूहनं द्वितीयसुरतस्यादौ बभूव। श्रमापनोदमन्मथोद्बोधाभ्याम् उभयोपयोगादुभयार्थमभूत् संयोगपृथक्त्वन्यायादित्यर्थः। अत्र लब्धवर्त्तिन उपगूढस्यैकस्य पूर्वोत्तरसुरतशेषत्वेन विशेषणगत्या विश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात् काव्यलिङ्गद्वयन्तदङ्गभावेन सङ्कीर्य्यते ॥८८॥

टिप्पनी—विश्रमार्थमिति। अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८८॥

बाङ्गाला— ... ... ... ॥৮৮॥

अन्वयः—क्षणदया अपि अनारत-रताभिरताभ्यः वधूभ्यः अभिनव-पल्लव-पुष्पैः आस्तृते शयनीये शयितुं क्षणः न दीयते स्म ॥८९॥

टीका—आस्तृत इति। अनारतमश्रान्तं रते सुरते अभिरताभ्य आसक्ताभ्यो वधूभ्यः क्षणमुत्सवसुखन्ददातीति क्षणदा रात्रिस्तयापि अभिनवैः पल्लवैः पुष्पैश्चास्तृते आच्छादितेऽपि सुखशयनार्हेऽपीत्यर्थः। शेतेऽस्मिन्निति शयनीये तल्पे। कृत्यल्युटो बहुलमित्यधिकरणेऽनीयरम्। शयितुं शयनं कर्त्तुं क्षणोऽल्पकालोऽपि न दीयते स्म न दत्तः किन्तु प्रभातमरमयत् क्षणदात्वादेवेति भावः। क्षणदयापि क्षणो न दत्त इति विरोधस्योत्सवार्थत्वेन परिहाराद्विरोधाभासोऽलङ्कारः। निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः ॥८९॥

यौषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम्।
क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूनाम् ॥९०॥
इति सदमदनाभ्यां रागिणः स्पष्टरागाननवरतरतश्रीसङ्गिनस्तानवेक्ष्य।
अभजत परिवृत्तिं साथ पर्यस्तहस्ता रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥९१॥

---

**टिप्पनी**—मात्तेति। अत्र द्वितीये पादे वृत्त्यनुप्रासः, तृतीये चतुर्थे च च्छेकानुप्रास इति ताभ्यां सह टीकोक्तविरोधाभासस्य संसृष्टिः। रसादयः पूर्ववत् ॥८९॥

**बाङ्गाला**—... ... ... ॥८९॥

**अन्वयः**—अतितरां नख-लूनम् उज्ज्वलतया न ऊनम् आशु हृदयं क्षोभं नयत् योषितां गात्रम्; यदूनां रागवृद्धिम् ऊनां न अकरोत् खलु ॥९०॥

**टीका**—यौषितामिति। नखलूनं न खलु ऊनं नयत् ऊनां नयदूनाम् इति पदच्छेदः। अतितरामतिमात्रम्। अव्ययादामुप्रत्ययः। नखैर्लूनं छतं नखलूनम्। लूञादिभ्यश्चेति निष्ठानत्वम्। तथाप्युज्ज्वलतया औज्ज्वल्येन न ऊनं न न्यूनं किन्तु समग्रमेवेत्यर्थः। नखक्षतानां कामिनीगात्रमण्डनत्वादिति भावः। अतएवाशु हृदयं प्रियचित्तं क्षोभं विकारं नयत् प्रापयत्। नयतेर्लटः शत्रादेशः। योषितां गात्रं यदूनां यादवानां रागवृद्धिं ऊनां न्यूनां नाकरोत् खलु किन्तु भूयोऽपि समग्रमेवाकरोदित्यर्थः। अत्र यमकं शब्दालङ्कारः औज्ज्वल्यस्य विशेषणगत्या रागवृद्धिहेतुत्वात् काव्यलिङ्गमर्थालङ्कारः ॥९०॥

**टिप्पनी**—योषितामिति। अत्र सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥९०॥

**বাঙ্গালা**—নখের আঘাতে অত্যন্ত ক্ষত-বিক্ষত এবং উজ্জ্বলতাপরিপূর্ণ রমণীগণের শরীরগুলি, যদুবংশীয়দিগের (পুনরায়) শীঘ্র শীঘ্র কামবিকার জন্মাইয়া, অল্প অনুরাগবৃদ্ধি করিয়াছিল না ॥৯০॥

**अन्वयः**—इति सद-मदनाभ्यां स्पष्टरागान् अनवरत-रत-श्री-सङ्गिनः तान् रागिणः अवेक्ष्य, अथ पर्यस्तहस्ता अवनतेन्दुः सा रजनिः लज्जया अधोमुखी इव (सती) परिवृत्तिम् अभजत ॥९१॥

**टीका**—इतीति। इतीत्थं सदमदनाभ्यां स्पष्टरागान् सर्वदा रागिण्वेऽपि तदा ताभ्यामपि व्यञ्जितरागानित्यर्थः अनवरतरतश्रीसङ्गिनः अविच्छिन्नसुरतसम्पत्सम्पटान् तान् रागिणो रागिणश्च रागिण्यश्च तान् रागिणः। पुमान् स्त्रियेत्येकशेषः। अवेक्ष्य अथावेक्षणानन्तरं पर्यस्तः परिवृत्तो हस्तो नक्षत्रविशेषः करश्च यस्याः सा। "हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपीत्युभयत्रापि विश्वः। अवनतेन्दुः लम्बचन्द्रा अतएव सा रजनिर्लज्जया स्वचेष्टादर्शनजनितयेति भावः अधोमुखी नम्रमुखीवेत्युत्प्रेक्षा। परिवृत्तिं निवृत्त्युन्मुखतामभजत प्रभातप्रायाभूदित्यर्थः। स्त्रियो हि परकीयरास्यचेष्टादर्शने लपावनतमुख्यो हस्तेन

ইতি শ্রীমাঘকৃতৌ শিশুপালবধে মহাকাব্যে সুরতবর্ণনো
নাম দশমঃ সর্গঃ সমাপ্তঃ ॥১০॥

—০—

---

দৃষ্ট্বান্তর্ধায় দ্রাগপসরন্তীতি ভাবঃ। অতএবানন্তরসর্গে প্রভাতবর্ণনায় প্রস্তাবঃ। মালিনী-বৃত্তমেতৎ, তদ্যথা তুল্যং বধ্যতি চোত্তরসর্গাদৌ ॥৯১॥

ইতি শ্রীমহোপাধ্যায়কোলাচলমল্লিনাথসূরিবিরচিতে
মাঘকাব্যব্যাখ্যানে সর্বঙ্কষাখ্যে
দশমঃ সর্গঃ সমাপ্তঃ ॥১০॥

—০—

টিপ্পনী—ইতীতি। অত্র চ্ছেকানুপ্রাসস্য শব্দালঙ্কার ইতি টীকোক্তোত্প্রেক্ষয়া সহ সংসৃষ্টিঃ। মধুররচনাবশাৎ মাধুর্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৯১॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশবিরচিতায়াং
শিশুপালবধটিপ্পন্যাং মাধুরীসমাখ্যায়াং
দশমঃ সর্গঃ ॥১০॥

—০—

বাঙ্গালা—এইরূপ মত্ততা এবং কামব্যবহারে যদুবংশীয়দিগের সম্ভোগানুরাগ স্পষ্টরূপেই প্রকাশ পাইয়াছিল এবং তাহারা সর্বদাই রমণকান্তিশালী ছিল; এইরূপ তাহাদিগকে দেখিয়া, সেই রাত্রির হস্ত (হস্তানক্ষত্র এবং হাত) সরিয়া গেল এবং চন্দ্র অবনত হইল; সুতরাং সেই রাত্রি যেন লজ্জাবশতঃ অধোমুখী হইয়া নিবৃত্তি পাইতে লাগিল ॥৯১॥

# एकादशः सर्गः ।

—:*:—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः परिणतिमिति रात्रेर्मागधा माधवाय ॥१॥

---

अन्वयः—अकाकु-श्रावक-स्निग्ध-कण्ठाः मागधाः श्रुतिसमधिकं षड्जं भिन्नकीकृत्य पञ्चमं पीडयन्तः (सन्तः) सततम् ऋषभहीनं (च यथा तथा) रात्रेः परिणतिम् इति उच्चैः माधवाय प्रणिजगदुः ॥१॥

टीका—अथ प्रस्तुतं प्रभातवर्णनं प्रारभते । श्रुतीति । नास्ति काकुर्येषां त्यकाकुः अविकृतध्वनिः । "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः । श्रावयतीति श्रावको दूरध्वनिः । स्निग्धो मधुरः कण्ठः स्वरो येषान्ते अकाकुश्रावकस्निग्धकण्ठा रक्त-कण्ठा इत्यर्थः । मागधा वैतालिकाः, श्रुतयो नाम षड्जादिस्वरारम्भकावयवाः शब्द-विशेषाः । तदुक्तम्, 'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रिकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति । ताभिः श्रुतिभिः समधिकं बहुलं षड्जविशेषणं पञ्चमविशेषणं वा उभयोरपि तथात्वात् । तदुक्तम्, "चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषाद-गान्धारौ त्रींस्त्रीनृषभधैवताविति । षड्जो मयूरस्य कूजितानुकारी स्वरविशेषः । "षड्जं मयूरो वदतीति लक्षणात् । तं षड्जं भिन्न एव भिन्नकस्तं कृत्वा भिन्नकीकृत्य तत्काल-निषिद्धस्वरासङ्कीर्णं कृत्वेत्यर्थः । पञ्चमो नाम कोकिलकूजितानुकारी स्वरविशेषः । पिकः कूजति पञ्चममिति लक्षणात् । तं पञ्चमं पीडयन्तः तत्कालनिषेधात् परित्यजन्त इत्यर्थः । सततं वीणादिवाद्ययुक्तम् । 'ततं वीणादिकं वाद्यमित्यमरः । ऋषभोऽपि वृषभनर्दितानु-कारी स्वरभेद एव । "गावस्त्वृषभमाषिरा इति लक्षणात् । तेन हीनं तस्यापि तत्काल-निषिद्धत्वादित्यर्थः सततम् ऋषभहीनञ्च यथा तथा रात्रेः परिणतिं परिवृत्तिमित्यर्थः, इति वचनमात्रप्रकारेण उच्चैर्यथा तथा माधवाय कृष्णाय । क्रियाग्रहणात् सम्प्रदानत्वम् । प्रणिजगदुर्गानेनाचख्युरित्यर्थः । नेर्गदनदेत्यादिना णत्वम् । पञ्चमादिनिषेधे भरतः । 'प्रभाते सुरतो निन्द्य ऋषभः पञ्चमोऽपि च । जनयेन्मन्मथं श्रुत्वा पञ्चत्वं पञ्चमोऽपि च । पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः । प्रगे प्रगीतो जनयेद्ध्यानस्य विपर्ययमिति । वृत्त्यनुप्रासोऽलङ्कारः । अस्मिन् सर्गे मालिनी वृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥१॥

রতিরভসবিলাসাভ্যাসতান্তং ন যাবন্নয়নযুগমমীলত্তাবদেবাহতোঽসৌ।
রজনিবিরতিশংসী কামিনীনাং ভবিষ্যদ্বিরহবিহিতনিদ্রাভঙ্গমুচ্চৈর্মৃদঙ্গঃ ॥২॥
স্ফুটতরমুপরিষ্টাদল্পমূর্ত্তের্ধ্রুবস্য স্ফুরতি সুরমুনীনাং মণ্ডলং ব্যস্তমেতৎ।
শকটমিব মহীয়ঃ শৈশবে শার্ঙ্গপাণেশ্চপলচরণকাব্জপ্রেরণোত্তুঙ্গিতাগ্রম্ ॥৩॥

---

**টিপ্পনী**—স্তুবতীতি। অত্র বৃত্ত্যনুপ্রাসোঽলঙ্কার ইতি মল্লিনাথঃ। চতুর্থপাদে একস্য মকারস্য অসকৃৎসাম্যাদিত্যাশয়ঃ। কিঞ্চ পীড়য়ন্ত ইতি ত্যাগার্থস্য অবাচকমিত্যবাচকত্বদোষঃ; তথা পীড়য়ন্ত ইতি শতৃপ্রত্যয়েন প্রক্রান্তস্য ভিন্নকীকৃত্যেতি ক্ত্বাচ্‌ প্রত্যয়করণাৎ ভগ্নপ্রক্রমতাদোষশ্চ। তয়োঃ সমাধানায় "পঞ্চমং পীড়য়ন্ত" ইত্যত্র 'পঞ্চমং সন্ত্যজন্তঃ' ইতি "ভিন্নকীকৃত্য ষড়্‌জম্" ইত্যত্র চ 'বর্জয়ন্তশ্চ ষড়্‌জম্' ইতি পঠনীয়ম্। প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ ॥১॥

**বাঙ্গালা**—স্তুতিপাঠকগণ, বহুতর 'শোরৎ' যুক্ত ষড়্‌জস্বর বর্জন করিয়া এবং পঞ্চম স্বর পরিত্যাগ করিয়া, এই ভাবে উচ্চ স্বরে গান করিয়া, শ্রীকৃষ্ণকে রাত্রির অবসান জানাইতে লাগিল; তৎকালে তাহাদের সে স্বর দূরগামী ও সুমধুর ছিল এবং সে স্বরের মধ্যে কোন রূপ বিকৃতি ঘটিয়াছিল না; আবার সেই গানের সঙ্গে বীণা প্রভৃতির বাদ্য চলিতেছিল এবং তাহাতে ঋষভ স্বর ছিল না ॥১॥

**অন্বয়ঃ**—রতি-রভস-বিলাসাভ্যাস-তান্তং নয়নযুগং যাবৎ ন অমীলৎ, তাবৎ এব রজনি-বিরতি-শংসী উচ্চৈঃ মৃদঙ্গঃ কামিনীনাং ভবিষ্যদ্বিরহ-বিহিত-নিদ্রা-ভঙ্গম্ আহতঃ ॥২॥

**টীকা**—অথ পূর্বশ্লোকে স্তুতিশব্দপরামৃষ্টানপরানপি প্রভৃত্যুত্তরোত্তরক্রমভাবিনঃ প্রভাতবৃত্তান্তানাসর্গসমাপ্তি বর্ণয়ন্নাহ। রতীতি। রতিরভসবিলাসানাং সুরতসম্ভ্রমলীলানাম্ অভ্যাসেনাবর্ত্তনেন তান্তং ক্লান্তং নয়নযুগং কর্তৃ কামিনামিতি শেষঃ। যাবৎ ন অমীলৎ মুকুলীভবতি তাবদেব অসৌ রজনিবিরতিশংসী নিশাবসানসূচকঃ উচ্চৈর্মৃদঙ্গঃ কামিনীনাং ভবিষ্যতা উত্তরক্ষণভাবিনা বিরহেণ বিহিতঃ কৃতো নিদ্রাভঙ্গো যস্মিন্ কর্মণি তদ্ যথা তথা আহতস্তাড়িতঃ। অত্র বিরহশব্দেন সামর্থ্যাত্তচ্চিন্তা লক্ষ্যতে অন্যথা অসতঃ সাম্প্রতিকনিদ্রাভঙ্গহেতুত্বাযোগাদিতি। অত্র রতিতান্তত্বরজনিবিরতিশংসনয়োর্বিশেষণগত্যা নেত্রনিমীলননিদ্রাভঙ্গহেতুত্বাৎ পদার্থহেতুকং কাব্যলিঙ্গম্ ॥২॥

**টিপ্পনী**—রতীতি। অত্র বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসয়োঃ শব্দালঙ্কারাবিতি টীকোক্তকাব্যলিঙ্গস্য সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥২॥

**বাঙ্গালা**—কামুকদিগের নয়নযুগল, বার বার রমণের সঙ্ঘর্ষে ক্লান্ত হইয়া যে পর্য্যন্ত মুদ্রিত হইতেও পারিয়াছিল না; তাহার মধ্যেই রাত্রির অবসানসূচক উচ্চনাদী মৃদঙ্গ বাজিয়া উঠিল; সেই ধ্বনিই ভাবী বিরহের চিন্তায় কামিনীগণের নিদ্রাভঙ্গ করিয়া দিল ॥২॥

**অন্বয়**—অল্পমূর্ত্তেঃ ধ্রুবস্য উপরিষ্টাৎ স্ফুটতরং ব্যস্তম্ এতৎ সুরমুনীনাং মণ্ডলম্, শার্ঙ্গপাণেঃ শৈশবে চপলচরণকাব্জ-প্রেরণোত্তুঙ্গিতাগ্রং মহীয়ঃ শকটম্ ইব স্ফুরতি ॥৩॥

প্রহরকমপনীয় স্বং নিদিদ্রাসতোচ্চৈঃ প্রতিপদমুপহূতঃ কেনচিজ্জাগৃহীতি।
মুহুরবিশদবর্ণাং নিদ্রয়া শূন্যশূন্যাং দদদপি গিরমন্তর্বুধ্যতে নো মনুষ্যঃ ॥৪॥

টীকা—স্ফুটেতি। অল্পমূর্ত্তিত্বাৎ সূক্ষ্মবিম্বস্য ধ্রুবস্য ঔত্তানপাদেঃ। "ধ্রুব ঔত্তানপাদিঃ স্যাদিত্যমরঃ। উপরিষ্টাৎ স্ফুটতরম্ উজ্জ্বলতরং ব্যস্তং পর্য্যস্তম্ এতৎ মুনীনাং সপ্তর্ষীণাং মণ্ডলং শাঙ্গপাণেঃ কেশবস্য কৃষ্ণস্য তবেত্যর্থঃ শৈশবে চপলস্য প্রচলিতস্য চরণকোভস্য অল্পচরণারবিন্দস্য। অল্পে হ্রস্বত্বার্থে কন্ প্রত্যয়ঃ। প্রেরণায়া নোদনেন উৎতুঙ্গিতমুত্তুঙ্গীকৃতমগ্রং যস্য তৎ বিপর্য্যাসিতাগ্রমিত্যর্থঃ। মহীয়ো মহত্তরং শকটমিব শকটাকারং শকটাসুরশরীরমিব স্ফুরতি দীপ্যতে। উপমালঙ্কারঃ। পুরা কিল বাল্যে কৃষ্ণঃ শকটরূপধারিণং শকটাসুরং পাদঘাতেন পাতয়ামাসেতি পৌরাণিকী কথাত্রানুসন্ধেয়া ॥৩॥

টিপ্পনী—স্ফুটতরমিতি। অত্র প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ ॥৩॥

বাঙ্গালা—শ্রীকৃষ্ণের বাল্যকালে তাঁহার ক্ষুদ্র পাদপদ্মের আঘাতে, শকটাসুরের বিশাল শরীর উল্টিয়া পড়িয়াছিল ; তাহারই তুল্য এই সপ্তর্ষিমণ্ডল (একত্র সাতটী নক্ষত্র) উল্টা ভাবে থাকিয়া, ক্ষুদ্র ধ্রুবনক্ষত্রের উপরিভাগে স্পষ্ট শোভা পাইতেছে ॥৩॥

অন্বয়ঃ—স্বং প্রহরকম্ অপনীয় নিদিদ্রাসতা কেনচিৎ 'জাগৃহি' ইতি প্রতিপদম্ উচ্চৈঃ উপহূতঃ মনুষ্যঃ মুহুঃ নিদ্রয়া অবিশদবর্ণাং শূন্যশূন্যাং গিরং দদৎ অপি অন্তঃ নো বুধ্যতে ॥৪॥

টীকা—প্রহরকমিতি। স্বং স্বকীয়ং স্বপাল্যমিত্যর্থঃ প্রহর এব প্রহরকো যামঃ। "দ্বৌ যামপ্রহরৌ সমাবিত্যমরঃ। তমপনীয় নীত্বা নিদিদ্রাসতা নিদ্রাতুমিচ্ছতা। নিদ্রাতেঃ সনন্তাল্লটঃ শত্রাদেশঃ। কেনচিৎ অতীতপ্রহরপালেনেত্যর্থঃ। জাগৃহি প্রবুধ্যস্বেতি প্রতিপদং পদে পদে উচ্চৈঃ উপহূতো মনুষ্যঃ অনন্তরযামিকঃ মুহুর্নিদ্রয়া অবিশদবর্ণাম্ অস্পষ্টাক্ষরাম্ অতএব শূন্যশূন্যাং শূন্যপ্রকারামনর্থপ্রায়ামিত্যর্থঃ "প্রকারে গুণবচনস্যেতি দ্বির্ভাবঃ "কর্মধারয়বদুত্তরেষ্বিতি কর্মধারয়বদ্ভাবাদ্বস্যসুপো লুক্। গিরম্ অয়মহঞ্জাগর্মীতি প্রতিবাচং দদদপি প্রযচ্ছন্নপি। "নাভ্যস্তাচ্ছতুরিতি নুমাগমপ্রতিষেধঃ। অন্তরন্তঃকরণে নো বুধ্যতে ন জাগর্ত্তি। বুধ্যতের্দৈবাদিকাৎ কর্ত্তরি লট্। অত্রাপ্রবোধপ্রতিবচনদানয়োর্বিরোধে অপিশব্দঃ নিদ্রাজ্ঞানাভ্যাং তৎ সমাধানাদ্বিরোধাভাসোঽলঙ্কারঃ ॥৪॥

টিপ্পনী—প্রহরকমিতি। অত্র যথাবদ্বস্তুবর্ণনাৎ স্বভাবোক্তিরলঙ্কারোঽপীতি টীকোক্তবিরোধাভাসেন সঙ্কীর্য্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

বাঙ্গালা—কোন প্রহরী আপন প্রহর অতিবাহিত করিয়া, নিদ্রা যাইতে ইচ্ছুক হইয়া, 'জাগ জাগ' এইরূপ উচ্চ স্বরে বার বার অন্য প্রহরীকে ডাকিতেছে ; তাহাতে সেই অন্য প্রহরী নিদ্রাবশতঃ অস্পষ্টাক্ষরে অর্থশূন্যভাবে বার বার উত্তর দিয়াও, অন্তরে জাগিতেছে না ॥৪॥

विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छन् जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चिन्नमयति शयनीये शर्वरीं किङ्करोतु ॥५॥
चणशयितविबुद्धाः कल्पयन्तः प्रयोगानुदधिमहति राज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥६॥

---

अन्वयः—रमण्याः विपुलतर-नितम्बाभोग-रुद्धे शयनीये शयितुम् अवकाशम् अनधिगच्छन् जीवितेशः रति-परिचय-नश्यन्नैद्र-तन्द्रः (सन्) कथञ्चित् शर्वरीं गमयति ; (अन्यत्) किं करोतु ॥५॥

टीका—विपुलेति । रमण्या विपुलतरस्य नितम्बस्याभोगेन विस्तारेण रुद्धे आक्रान्ते शयनीये शयितुमवकाशमनधिगच्छन् अलभमानो जीवितेशः प्रेयान् रतिपरिचयेन पुनः पुनः सुरतावृत्त्या नश्यन्ती निवर्त्तमाना निद्राया इयं नैद्री निद्राप्रयुक्ता तन्द्रा आलस्यं यस्य स तथाभूतः सन् शर्वरीं कथञ्चित् गमयति कृच्छ्रेण नयति किं करोतु किमन्यत् कुर्यात् । शयनानवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्ये-दृग्रोधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । तादृग्रोधस्य विशेषणगत्या शयना-वकाशानधिगमहेतुत्वात् काव्यलिङ्गमेद इति सङ्करः ॥५॥

टिप्पनी—विपुलेति । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥५॥

बाङ्गाला—কোন রমণীর অত্যন্ত বিশাল নিতম্বস্থল, শয্যাখানিকে একে বারে রুদ্ধ করিয়া রাখিয়াছে ; সুতরাং তাহার স্বামী তাহাতে শয়ন করিবার স্থান না পাইয়া··· ··· কোন রকমে রাত্রি অতিবাহিত করিতেছে ; তদ্ভিন্ন সে বেচারি আর কি করিবে ॥৫॥

अन्वयः—चण-शयित-विबुद्धाः महीपाः कवयः इव अप-ररात्र-प्राप्त-बुद्धि-प्रसादाः (सन्तः) उदधि-महति दुर्विगाहे राज्ये काव्यवत् प्रयोगान् कल्पयन्तः (सन्तः) गहनम् अर्थजातं चिन्तयन्ति ॥६॥

टीका—चणेति । चणं शयिताः सुरतश्रमापनोदाय विश्रान्ताः विबुद्धाः तदैव प्रबुद्धाः यथाकालं प्रबुद्धत्वादिति भावः चणशयितविबुद्धाः । स्नातानुलिप्तवत् पूर्वकालेति समासः । महीपाः कवय इव अपररात्रे रात्रेः पश्चिमयामे इत्यर्थः । पूर्वापरेत्यादिना एकदेशिसमासे समासान्तः अच् । "रात्राह्नाहाः पुंसीति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादा लब्धबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे एकत्र रागादिभिरपरत्र रसभावादिभि-श्चेति भावः । अतएव दुर्विगाहे दुष्प्रवेशे राज्ये काव्ये इव काव्यवत् । "तत्र तस्येवेति वतिप्रत्ययः । प्रयोगान् सामाद्युपायानुष्ठानानि । अन्यत्रार्थगुणसाधुशब्दगुम्फान् कल्पयन्त-स्तर्कयन्तः । "ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितमिति स्मरणादिति भावः । गहनं दुष्प्रापमन्यत्र दुर्दर्शमर्थजातं पुरुषार्थजातं त्रिवर्गमित्यर्थः अन्यत्र वाच्यलक्ष्यव्यङ्ग्यरूप-मभिधेयजातं चिन्तयन्ति विचारयन्ति । इवशब्दस्योपलक्षणत्वात् काव्यवदिति वतिप्रत्य-येऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा काव्यवदिति तद्धितगता कवय इति समास-गता वेति सङ्कीर्णा ॥६॥

छितितटशयनान्तादुत्थितं दानपङ्कप्लुतबहुलशरीरं शाययत्येष भूयः ।
मृदुचलदपरान्तोदीरितान्दूनिनादं गजपतिमधिरोहः पक्षकव्यत्ययेन ॥७॥
द्रुततरकरदक्षाः क्षिप्रवैशाखशैले दधति दधनि धीरानारवान्वारिणीव ।
शमिनमिव सुरौघाः सारमुद्वर्त्तयन्ते कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति ॥८॥

---

**टिप्पनी**—चयेति । अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥६॥

**বাঙ্গালা**—কবিরা যেমন ক্ষণকাল শয়ন করিয়াই জাগরিত হন, তাহার পর শেষরাত্রে বুদ্ধির নির্ম্মলতা লাভ করিয়া, সমুদ্রের ন্যায় বিশাল কাব্য বিষয়ে গুণ ও সাধুশব্দ সংগ্রহ করতঃ, দুর্গম শব্দার্থগুলির চিন্তা করিয়া থাকেন ; সেইরূপ রাজারাও, ক্ষণকালমাত্র শয়ন করিয়াই জাগরিত হইয়া, শেষরাত্রে বুদ্ধির নির্ম্মলতা লাভ করিয়া, সমুদ্রের ন্যায় বিশাল রাজ্য বিষয়ে সাম-দানাদি উপায় নির্বাচন করতঃ, দুর্গম ত্রিবর্গের চিন্তা করিতেছেন ॥৬॥

**अन्वयः**—एषः अधिरोहः छितितटशयनान्तात् उत्थितं दान-पङ्क-प्लुत-बहुल-शरीरं गजपतिं पक्षक-व्यत्ययेन भूयः-मृदु-चलदपरान्तोदीरितान्दू निनादं शाययति ॥७॥

**टीका**—छितीति । छितितटं भूतलमेव शयनान्तः शयनस्थानं तस्मादुत्थितं समुत्थितमित्यर्थः । अतएव दानपङ्कप्लुतबहुलशरीरं मदकर्दमोक्षितमहाकायं गजपतिम्, एषः अधिरोहतीत्यधिरोहः आरोहकः । पचाद्यच् । मृदु मन्दं चलता अपरान्तेन पश्चिमपादेन उदीरित उत्पादितः अन्दूनिनादः शृङ्खलारवो यस्मिन् कर्म्मणि तद्यथा तथा पक्ष एव पक्षकः पार्श्वः । "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती । तस्य व्यत्ययेन पार्श्वान्तरेणेत्यर्थः । भूयः शाययति शयनं कारयति । "गतिबुद्धीत्यादिना अणिकर्त्तुः कर्म्मत्वम् । स्वभावोक्तिरलङ्कारः ॥७॥

**टिप्पनी**—छितीति । अत्र माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥७॥

**বাঙ্গালা**—একটা বড় হাতী, ভূমিশয্যা হইতে উঠিয়াছিল এবং মদজলে তাহার বিশাল শরীরটাকে প্লাবিত করিয়াছিল ; এই অবস্থায় এই মাহুত পার্শ্ব পরিবর্ত্তন করাইয়া উহাকে শোয়াইয়া দিল ; অমনি উহার পিছনের পা দু'খানা আস্তে আস্তে চলিয়া শিকলের শব্দ করিল ॥৭॥

**अन्वयः**—द्रुततर-कर-दक्षाः सुरौघाः इव एते बल्लवाः धीरान् आरवान् दधति क्षिप्रवैशाखशैले वारिणि इव दधनि शमिनम् इव सारम् उद्वर्त्तयन्ते उदधिगुर्वीं कलशिं लोडयन्ति ॥८॥

**टीका**—द्रुतेति । द्रुततरकारा अतिलघुहस्ताश्च ते दक्षाश्च बल्लवाः गोपालाः । "आभीरः आभ्रशूद्री गोपालो बल्लवस्तथेति वैजयन्ती । विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्डः । "वैशाखमन्थमन्थानमन्थानो मन्थदण्डके इत्यमरः । "विशाखाषाढ़ादण् मन्थदण्डयोरित्यण् प्रत्ययः । वैशाखः शैल इवेत्युपमितसमासः साहचर्य्यात् क्षिप्तो वैशाखशैलो यस्मिन् । धीरान् गम्भीरान् आरवान् दधति दधनि दध्नि । "विभाषा ङिश्योरिति विक-

अनुनयमगृहीत्वा व्याजसुप्ता पराची रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥९॥
गतमनुगतवीणैरेकतां वेणुनादैः कलमविकलतालं गायकैर्बोधहेतोः ।
असकृदनवगीतं गीतमाकर्णयन्तः सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः ॥१०॥

---

त्यादृशोपायाः। वारिधीव सुरौघाः मथनमिव सारं नवनीतमुद्धर्तुम् उत्कृष्टमुदधिमिव गुर्वीम्। "उपमानानि सामान्यवचनैरिति समासः। तां कलशीं कुम्भीमिति लोड़यन्ति मथ्नन्ति। एषापि पूर्ववत् पूर्णा वाक्यार्थोपमा वाक्यसमासस्थीया च ॥८॥

टिप्पनी—इतीति। अत्र छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्कारावित्ति टीकोक्तोपमाभिस्तयोः संसृष्टिः। कर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥८॥

বাঙ্গালা—পূর্বকালে মন্থননিপুণ দেবতারা যেমন গম্ভীরনাদী সমুদ্রজলের ভিতরে মন্দরপর্বত নিক্ষেপ করিয়া, চন্দ্রকে উদ্ধার করিবার জন্য লঘুহস্তে সেই সমুদ্রকে মন্থন করিয়াছিলেন; সেইরূপ মন্থননিপুণ এই গোপালগণও, গম্ভীরনাদী দধির ভিতরে চড়াক দিয়া, ননী তুলিবার জন্য লঘুহস্তে বৃহৎ কোলাগুলিকে মন্থন করিতেছে ॥৮॥

अन्वयः—अनुनयम् अगृहीत्वा पराची व्याजसुप्ता स्त्री अथ कल्ये कृकवाकोः तारं रुतम् आकर्ण्य कथम् अपि परिवृत्ता निद्रया अन्धा किल मुकुलितनयना एव (सती) प्राणनाथम् आश्लिष्यति ॥९॥

टीका—अनुनयमिति। अनुनयं प्रियप्रार्थनामगृहीत्वा नाङ्गीकृत्य पराची पराङ्मुखी व्याजेन कपटेन सुप्ता स्त्री। अथ कल्ये प्रभाते। "प्रत्यूषोऽहर्मुखं कल्यमित्यमरः। कृकवाकोः कुक्कुटस्य। "कृकवाकुस्ताम्रचूड़ः कुक्कुटश्चरणायुधः" इत्यमरः "कृके वचः कश्च" इत्युण् प्रत्ययः। तारमुच्चैः रुतं कूजितमाकर्ण्य कथमपि [illegible] परिवृत्ता सम्मुखीभूता निद्रया अन्धा किल अजानतीव मुकुलितनयनैव मीलिताक्षी सत्येव प्राणनाथमाश्लिष्यति। एषा कलहान्तरिता ॥९॥

टिप्पनी—अनुनयमिति। अत्र स्वभावोक्तिरलङ्कारः, सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

বাঙ্গালা—কোন রমণী, প্রিয়তমের অনুনয় গ্রাহ্য না করিয়া, ছলপূর্বক পিছন ফিরিয়া ঘুমাইয়াছিল; তাহার পর প্রভাতকালে বনকুক্কুটের উচ্চ রব শুনিয়া, কোন রকমে পার্শ্ব পরিবর্ত্তন করিয়া; নিদ্রার অজ্ঞানভাব জানাইতে থাকিয়া, মুদ্রিত নয়নেই সেই প্রিয়তমকে আলিঙ্গন করিতেছে ॥৯॥

अन्वयः—अनुगतवीणैः वेणुनादैः एकतां गतं कलम् अविकलतालं बोधहेतोः गायकैः अनवगीतम् असकृत् गीतम् आकर्णयन्तः नरेन्द्राः सुख-मुकुलित-नेत्राः (सन्तः) निद्रां यान्ति ॥१०॥

टीका—गतमिति। अनुगतवीणैरनुसृतवीणैर्वीणासंवादिभिः वेणुनादैर्वंशस्वनैः एकतामेकरूपतां गतं कलमव्यक्तमधुरम् अविकलोऽविसंवादी तालः कांस्यादितालो यस्य

परिशिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्द्ध्वज्ञुरेव।
विरचयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥११॥
उदयमुदितदीप्तिर्याति यः सङ्गतौ मे पतति न वरमिन्दुः सोऽपरामेष गत्वा।
स्मितरुचिरिव सद्यः साभ्यसूयम्प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः॥१२

तद् बोध एव हेतुस्तस्य बोधहेतोः बोधकारणेन बोधनार्थमित्यर्थः। फलस्यापि कारणत्वमि-च्छाद्वारा स्वर्गादिवत् फलरागस्य तत्साधनप्रवृत्तिहेतुत्वात् षष्ठी। गायकैर्वैतालिकैरनव-गीतमगर्हितम्। "अवगीतं तु निर्वादे मुहुर्दृष्टेऽपि गर्हिते" इति विश्वः। गीतं गेय-ज्ञानं वस्तु आवृत्तिर्वा गीतशब्दस्य गीतं गानं समाकर्णयन्तो नरेन्द्राः सुखेन गानसुखेन मुकुलितनेत्रा निमीलिताक्षाः सन्तः निद्रां यान्ति भजन्ति। वृत्त्यनुप्रासोऽलङ्कारः॥१०॥

**टिप्पनी**—गतमिति। अत्र मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः॥१०॥

**বাঙ্গালা**—বৈতালিকগণ, সকলকে জাগাইবার জন্য বার বার অব্যক্তমধুর ও অনি-ন্দিত গান করিতেছে; বাঁশীর রব তাহার সঙ্গে মিশিয়াছে; বীণার রবও তাহার পিছনে চলিতেছে এবং করতালও অবিকলভাবে তাহার সঙ্গে মিশিতেছে; রাজারা এ হেন গান শুনিতে শুনিতে, সুখে নয়ন মুদ্রিত করিয়াই নিদ্রা যাইতেছেন॥১০॥

**अन्वयः**—अयम् अश्वः परिशिथिलितकर्ण-ग्रीवम् आमीलिताक्षः ऊर्द्ध्वज्ञुः एव क्षणं स्वप्नम् अनुभूय भूयः पटुतर-चपलौष्ठः (सन्) प्रस्फुरत्प्रोथम् अग्रे विकीर्णं शष्पं विरचयिषति॥११॥

**टीका**—परीति। अयमश्वः परिशिथिलितं संस्रस्तं कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन् कर्मणि तद्यथा तथा आमीलिताक्षः ऊर्द्ध्वे जानुनी यस्य स ऊर्द्ध्वज्ञुः ऊर्द्ध्वजानु-र्भवन्नित्यर्थः। "ऊर्द्ध्वज्ञुरूर्द्ध्वजानुः स्यादित्यमरः। ऊर्द्ध्वाद्विभाषेति जानुशब्दस्य ज्ञुरादेशः। क्षणं स्वप्नं निद्रामनुभूय उत्तमाश्वलक्षणमेतत्। भूयः पुनरपि पटुतरौ ग्रासग्रहणसमर्थौ चपलौ चञ्चलौ ओष्ठौ यस्य स सन्, प्रस्फुरत्प्रोथं प्रस्फुरमाणघोणं यथा तथा। "घोणा तु प्रोथमस्त्रियामित्यमरः। अग्रे विकीर्णं क्षिप्तं शष्पं घासम्। "शष्पं बालतृणं घास इत्य-मरः। विरचयिषति रचयितुमास्वादयितुमिच्छति। रसयतेः सनन्ताल्लट्। स्वभावोक्तिर-लङ्कारः। स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्॥११॥

**टिप्पनी**—परीति। अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः॥११॥

**বাঙ্গালা**—এই ঘোড়াটা, কাণ দুই খানা ও গলাটাকে ঝুলাইয়া, চোখ দুইটাকে বুজিয়া এবং হাঁটু দুইটাকে একটু উচু করিয়া, ক্ষণকালমাত্র নিদ্রা যাইয়া, পুনরায় সম্মুখস্থ ঘাস খাইতে ইচ্ছা করিতেছে; এখন উহার ওষ্ঠ দুইখানা চলিতে থাকিয়া ঘাস লই-তেছে এবং নাকটা কাঁপিতেছে॥১১॥

**अन्वयः**—यः मे सङ्गतौ उदितदीप्तिः (सन्) उदयं याति, सः एषः इन्दुः अपरां गत्वा पतति न वरम्; इति सद्यः साभ्यसूयं पूर्वकाष्ठाङ्गनायाः स्मितरुचिः इव एषा प्रभा विशदं स्फुरति॥१२॥

चिररतिपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥१३॥
कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चिन्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम् ।
हिमरुचिररुचिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥१४॥

---

टीका—उदयमिति । य इन्दुः मे मम सङ्गतौ उदितदीप्तिः प्रवृद्धद्युतिः सन् उदय-मुदयाद्रिम् अभ्युदयञ्च याति स इन्दुरेव अपरां पश्चिमाशां पराङ्गनाञ्च गत्वा पतति अस्तमेति पातित्यञ्च गच्छति न वरमनर्हमित्यर्थः । इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राची सैवाङ्गना पूर्वनायिका च गम्यते तस्याः स्मितदर्पिमन्दहासकान्तिरिव एषा प्रभा विशदं निर्मलं स्फुरति प्रकाशते प्राच्यामौषद्विशदा प्रभा प्रादुरभूदित्यर्थः । अत्र प्राचीगतप्रभायाः इन्दोः पराङ्गनासङ्गपातित्यनिमित्ता चेतनधर्मस्मितत्वोत्प्रेक्षा पूर्वकाष्ठाङ्गनाया इति बहिर्व्यूढ़त्वनयोरङ्गाङ्गिभावेन सङ्करः ॥१२॥

टिप्पनी—उदयमिति । अत्र प्रथमपादे च्छेकानुप्रासयोति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—যিনি আমার সহিত সম্মেলনের সময়ে পূর্ণদীপ্তি হইয়া, উদয় পাইয়া থাকেন ; এই সেই চন্দ্র অপরা গমন করিয়া পতিত হইতেছেন ; ইহা ইহার পক্ষে উচিত নহে ; এইরূপ মনে মনে আলোচনা করিয়া পূর্ব্বদিকরূপ রমণীর অসূয়ার সহিত হাস্যদীপ্তির ন্যায় এই প্রভাতালোক নির্ম্মলভাবে প্রকাশ পাইতেছে ॥১২॥

अन्वयः—चरमम् अपि शयित्वा पूर्वम् एव प्रबुद्धाः तरुण्यः अपरिचलितगात्राः (सत्यः) चिर-रति-परिखेद-प्राप्त-निद्रा-सुखानां प्रियाणाम् अशिथिल-भुज-चक्रा-श्लेष-भेदं न कुर्वते ॥१३॥

टीका—चिरेति । चरममपि शयित्वा पश्चात् सुप्तापि पूर्वमेव प्रबुद्धाः । "सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते । नान्यच्चालयते चित्तं सा स्त्री ज्ञेया पतिव्रतेति स्मरणादिति भावः । तथापि तरुण्यः अपरिचलितगात्राः असञ्चलद्वपुष्काः सत्यः चिररतिपरिखेदेन प्राप्त-निद्रासुखानां प्रियाणाम् अशिथिलो गाढ़ौ यौ भुजचक्रेण परस्परभुजवलयेन आश्लेषः तस्य भेदं विश्लेषं विस्रंसनं न कुर्वते किन्तु आश्लिष्यैव स्थिताः । अन्यथा तन्निद्राभङ्गः स्यात् । शयानं न प्रबोधयेदिति निषेधात्स्पन्दनभयादिति भावः । रतिश्रमोऽत्र सञ्चारी तदनुभावो निद्रा ॥१३॥

टिप्पनी—चिरेति । अत्र प्रथमपादे एकस्य रेफस्य असकृत्साम्यात् वृत्त्यनुप्रासोऽलङ्कारः ; सम्भोग-शृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—যুবতিরা শেষে ঘুমাইয়া, অথচ আগে জাগিয়া, অল্পমাত্রও দেহসঞ্চালন না করিয়া, বহুকাল যাবৎ রমণের পরিশ্রমে নিদ্রাসুখপ্রাপ্ত পতিদিগের গাত্র হইতে গাঢ় বাহু-বন্ধনের বিশ্লেষণ করিতেছে না ॥১৩॥

दधदसकलमेकं खण्डितामानमद्भिः श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्तः कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥१५॥

---

**अन्वयः**—हिमरुचिः अरुणिम्ना रज्यमानैः जरठ-कमल-कन्द-च्छेद-गौरैः मयूखैः कुङ्कुमेन किञ्चित् कृतशबलिमभेदैः मलयरुहरजोभिः इव पश्चिमाशां भूषयन् राजते ॥१४॥

**टीका**—कृतेति। हिमरुचिश्चन्द्रः अरुणिम्ना अस्तमयरागेण हेतुना रज्यमानैर्लोहितायमानैः। रञ्जेर्दैवादिकात् कर्त्तरि शानच्, अनिदितामिति नलोपः। लोहि रज्यति राजति लोहितायति चालन इति भट्टमल्लः। जरठस्य परिणतस्य कमलकन्दस्य छेदा इव गौराः शुभ्राः। छेदग्रहणमन्तर्धावल्यार्थम्। “गौरः पीते सितेऽरुणे” इति विश्वः। तैर्मयूखैः कुङ्कुमेन किञ्चित्कृतो शबलिमभेदो धावल्यभङ्गो येषां तैरीषद्गलद्धावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशां प्रेयसीमिवेति भावः। भूषयन् राजते। उपमालङ्कारः ॥१४॥

**टिप्पनी**—कृतेति। अत्र कार्य्येण लिङ्गेन च हिमरुचिपश्चिमाशयोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिः चतुर्थपादे लुप्तोपमा चेति टीकोक्तश्रौतोपमया सह अङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, पाञ्चाली च रीतिः ॥१४॥

**বাঙ্গালা**—পরিপক্ক পদ্মমূলখণ্ডের ন্যায় শুভ্রবর্ণ চন্দ্রের কিরণগুলি, অস্তকালীন রক্তিমায় রঞ্জিত হইয়াছে ; সুতরাং কুঙ্কুমমিশ্রণে যাহার ধবলতার কিঞ্চিৎ বৈষম্য জন্মায়, সেইরূপ চন্দনরেণুর ন্যায় এখন ঐ কিরণগুলিকে দেখা যাইতেছে ; চন্দ্র তাদৃশ কিরণদ্বারা পশ্চিম দিক্‌কে অলঙ্কৃত করতঃ শোভা পাইতেছেন ॥১৪॥

**अन्वयः**—एकम् आनमद्भिः पलाशैः असकलं खण्डितां श्रियं दधत्, अपरम् उच्छ्वसद्भिः पलाशैः अपूर्णां श्रियं दधत्, षट्पदौघेन कलरवम् उपगीते कुमुदकमलषण्डे तुल्यरूपाम् अवस्थां धत्तः ॥१५॥

**टीका**—दधदिति। एकं कुमुदषण्डम् आनमद्भिः सङ्कुचीभवद्भिः पलाशैर्दलैः असकलं खण्डितां क्षीयमाणामित्यर्थः श्रियं दधत्, अपरं कमलषण्डम् उच्छ्वसद्भिः विकसद्भिः पलाशैः अपूर्णां वर्द्धमानां श्रियं दधत् षट्पदौघेन कलरवं यथा तथा उपगीते उभे अपीत्यर्थः। कुमुदकमलषण्डे कुमुदानां कमलानां च षण्डे कदम्बे। “कदम्बे षण्डमस्त्रियाम्” इत्यमरः। तुल्यरूपामवस्थां धत्तः दधाते। अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्ये कस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः। अत्रोभयविशेषणानां तुल्यावस्थाधारण-हेतुकत्वात् काव्यलिङ्गम्। तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ॥१५॥

**टिप्पनी**—दधदिति। अत्र धत्त इत्येकया क्रियया प्रभातवर्णनाङ्गत्वेन प्रस्तुतयोरेव द्वयोः कुमुदकमलषण्डयोः कर्त्तृतया अभिसम्बन्धात् तुल्ययोगिता, चतुर्थपादे च्छेकानुप्रासश्चेति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

**বাঙ্গালা**—পাতাগুলি ক্রমে বুজিয়া আসিতেছে বলিয়া, কুমুদসমূহ ক্ষীয়মাণ শোভা ধারণ করিতেছে ; আবার পাতাগুলি ক্রমে ফুটিয়া উঠিতেছে বলিয়া, পদ্মসমূহ বর্দ্ধমান

**मदरुचिमरुणेनोद्गच्छता लम्भितस्य त्यजत इव चिराय स्थायिनीमाशु लज्जाम् ।**
**वसनमिव मुखस्य स्रंसते सम्प्रतीदं सितकरकरजालं वासवाशायुवत्याः ॥१६॥**
**अविरतरतलीलायासजातश्रमाणामुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम् ॥**
**पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥**

---

শোভা ধারণ করিতেছে এবং দুইয়ের উপরেই ভ্রমরগণ কলরবে গান করিতেছে ; সুতরাং (বর্ত্তমান সময়) কুমুদসমূহ ও পদ্মসমূহ দুই সমান অবস্থা ধারণ করিতেছে ॥১৫॥

**अन्वयः**—सम्प्रति इदं सितकरकरजालम् उद्गच्छता अरुणेन मदरुचिं लम्भितस्य चिराय स्थायिनीं लज्जाम् आशु त्यजतः इव वासवाशायुवत्याः मुखस्य वसनम् इव स्रंसते ॥१६॥

**टीका**—मदेति । सम्प्रति सितकरस्य इन्दोः इदं करजालं कर्तृ उद्गच्छता उद्यता अरुणेन अनूरुणा मदरुचिं तत्तुल्यां रुचिम् अरुणिमानमित्यर्थः अतएव निदर्शनालङ्कारः । लम्भितस्य प्रापितस्य । लभेर्ण्यन्तात् कर्मणि क्तः, लभेश्च लिटोरिति नुमागमः । अतएव चिराय स्थायिनीं लज्जामाशु त्यजत इव मुखप्रकाशनादित्युत्प्रेक्षा । वासवाशा प्राची तस्या एव युवत्या मुखस्य प्राग्भागस्य आननस्य च वसनमिव अवगुण्ठनपट इव स्रंसते गलति । मत्ताः स्त्रियः पाटलमुखा निर्लज्जाः स्रस्तवस्त्राश्च भवन्तीति भावः । अत्र मुखस्येति प्राग्भाग-वदनयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः तया पूर्वोक्तनिदर्शनोत्प्रेक्षाभ्यां चानुगृहीता वसनमिवेत्युत्प्रेक्षेति सङ्करः ॥१६॥

**टिप्पनी**—मदेति । अत्र सितकरकरेति शब्दार्थयोः पौनरुक्त्यात् तात्पर्यमात्रतो भेदाच्च लाटानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१६॥

**বাঙ্গালা**—উদয়মান অরুণ, পূর্ব দিকরূপ যুবতীর মুখখানিতে মত্ততার রক্তিমা জন্মাইয়া দিয়াছে ; তাহাতে বোধ হইতেছে—যেন সে মুখখানি, চিরস্থায়ী লজ্জা পরিত্যাগ করিতেছে এবং সেই মুখের অবগুণ্ঠনবস্ত্রের ন্যায় এই চন্দ্রের কিরণগুলি এখন পড়িয়া যাইতেছে ॥১৬॥

**अन्वयः**—मातरिश्वा विविक्तैः मालतीनां रजोभिः अवचूर्ण्य अविरत-रत-लीलायास-जात-श्रमाणाम् अङ्गनानां निःसहे अङ्गे उपशमम् उपयान्तं मदनाग्निम् उषसि पुनः ज्वलयति ॥१७॥

**टीका**—अविरतेति । अविरतरतलीलायासेन अविच्छिन्नसुरतक्रीडाप्रयासेन जात-श्रमाणामङ्गनानां सम्बन्धिनि निःसहत इति निःसहे अक्षमे । पचाद्यच् । अङ्गे उपशममुपयान्तं शाम्यन्तं मदन एवाग्निस्तं पुनरुषसि मातरि अन्तरीक्षे श्वयति वर्द्धते इति मातरिश्वा । श्वन्नुक्षन्नित्यादिना औणादिको निपातः । विविक्तैरमलैरनार्द्रैश्च माल-तीनां जातीकुसुमानाम् । "सुमना मालती जातिरित्यमरः । रजोभिः परागैः करीषैरिवेति भावः । अवचूर्ण्य अवध्वस्य संयुज्येति भावः । ज्वलयति उद्दीपयति प्राभातिकमारुती-वातस्पर्शात् पुनरुद्बुद्धो मदन इत्यर्थः ॥१७॥

**टिप्पनी**—अविरतेति । अत्र मदनाग्निमिति निरङ्गं केवलरूपकमलङ्कारः पूर्वार्धगतच्छेकानुप्रासेन संसृज्यते । मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥१७॥

अनिमिषमविरामा रागिणां सर्वरात्रं नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसम्पन्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥१८॥
विकचकमलगन्धैरन्धयन् भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमद-मदन-माद्यद्यौवनोद्दाम-रामा-रमण-रभस-खेद-स्वेद-विच्छेददक्षः ॥१९॥

---

বাঙ্গালা—অনবরত রমণলীলার ব্যাপারে রমণীগণের অঙ্গসকল শ্রান্ত ও অলস হইয়া পড়িয়াছিল; সুতরাং তাহাতে কামাগ্নি নির্বাণ পাইয়াছিল; কিন্তু প্রভাতকালের বায়ু, মালতীকুসুমের রেণুসকল নিক্ষেপ করিয়া আবার সেই অঙ্গে সেই কামাগ্নিকে জ্বালাইয়া তুলিয়াছে ॥১৭॥

अन्वयः—इदम् अस्फुटालोकसम्पत् दैपम् अर्चिः सर्वरात्रम् अविरामाः रागिणां नवनिधुवनलीलाः कौतुकेन अनिमिषम् अतिवीक्ष्य सनिद्रम् उदवसितानां नयनम् इव घूर्णते ॥१८॥

टीका—अनिमिषमिति । इदं पुरोवर्त्ति अस्फुटा सूर्य्यतेजोऽभिभवान्मन्दायमाना आलोकसम्पत् प्रकाशसम्पत्तिर्यस्य तत्, अन्यत्र निद्राभिभवादनुद्बुद्धविषयावधानशक्तिकं दीपस्येदं दैपम् अर्चिर्ज्वाला । "ज्वालाभासोर्न पुंस्यर्चिरि"त्यमरः । सर्वस्यां रात्राविति सर्वरात्रम् । पूर्वकालेत्यादिना समासः, "अहः सर्वे"त्यादिना समासान्तः "रात्राह्नाहाः पुंसी"ति पुंलिङ्गता, अत्यन्तसंयोगे द्वितीया । अविरामाः अविच्छिन्नाः रागिणां कामिनां कामिनीनां च । "पुमान् स्त्रिये"त्येकशेषः । नवा निधुवनलीलाः सुरतविलासान् । "व्यवायो ग्राम्यधर्मस्य रतं निधुवनञ्च स" इत्यमरः । कौतुकेन न निमिषतीत्यनिमिषं यथा तथा । पचाद्यच्, कुटादित्वान्न गुणः । अतिवीक्ष्य अतएव सनिद्रम् उदवसितानां गृहाणां सम्बन्धि । "गृहं गेहोदवसितं वेश्म सद्म निकेतनमि"त्यमरः । नयनमिवेत्युत्प्रेक्षा । घूर्णते भ्रमति ॥१८॥

टिप्पनी—अनिमिषमिति । अत्र प्रथमार्द्धे वृत्त्यनुप्रास इति टीकोक्तोत्प्रेक्षया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—এই দীপশিখার আলোক, ক্রমে অস্পষ্ট হইয়া যাইতেছে; সুতরাং সমস্ত রাত্রি ধরিয়া, কামুক ও কামিনীগণের অবিশ্রান্ত নূতন নূতন রমণলীলাগুলিকে কৌতুকবশতঃ নির্নিমেষ ভাবে সাতিশয়রূপে দর্শন করিয়া, এখন নিদ্রাতুর হইয়া, গৃহের নয়নের ন্যায় এই দীপশিখা ঘুরিতেছে ॥১৮॥

अन्वयः—प्रमद-मदन-माद्यद्यौवनोद्दाम-रामा-रमण-रभस-खेद-स्वेद-विच्छेद-दक्षः वातः विकच-कमल-गन्धैः भृङ्गमालाः अन्धयन् सुरभितमकरन्दं मन्दम् आवाति ॥१९॥

टीका—विकचेति । प्रमदमदनाभ्यां हर्षमन्मथाभ्यां माद्यन्तीनां यौवनेनोद्दामानां च रामाणां स्त्रीणां रमणरभसखेदेन सुरतसंरम्भश्रमेण यः स्वेदः तस्य छेदे हरणे दक्षो वातः प्रभातमारुतः विकचकमलगन्धैर्भृङ्गमालाः अन्धयन् अन्धाः ज्ञप्तं मोहयन् ! सुरभि-

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥२०॥
शिशिरकिरणकान्तं वासरान्तेऽभिसार्य्य श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव।
व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमिलितमनिन्द्यैरम्बरान्तं वहन्ती ॥२१॥

---

यतिस्तत् करोतीति ण्यन्ताल्लटः शत्रादेशः। सुरभितः सुरभीकृतो मकरन्दो यस्मिन् कर्मणि तद्यथा तथा मन्दमावाति प्रवहति। अत्र वृत्त्यनुप्रासोऽलङ्कारः। "श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः"। इति आचार्य्योक्ता दश गुणाः प्रायेणात्र सम्भवन्तीति निपुणैर्बोध्याः ॥१९॥

टिप्पनी—विकचेति। अत्र साहित्यदर्पणमते पूर्वार्द्धे छेकानुप्रासः, परार्द्धे तु वृत्त्यनुप्रासश्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तथा प्रथमार्द्धे माधुर्य्यं गुणः, वैदर्भी च रीतिः; द्वितीयार्द्धे च समासबाहुल्यात् बन्धस्य प्रगाढ़त्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥१९॥

বাঙ্গালা—যৌবনগর্বিত যুবতিরা আমোদ ও কামবেগে মত্ত হইয়া, যে উদ্দাম রমণ করিয়াছে, তাহার পরিশ্রমে তাহাদের শরীরে যে সকল ঘর্ম্মবিন্দু বাহির হইয়াছে, তাহা দূর করিতে নিপুণ প্রভাতবায়ু, প্রস্ফুটিত পদ্মের গন্ধে ভ্রমরদিগকে মোহিত করিয়া, ধীরে ধীরে বহিত হইতেছে; তাহাতে পুষ্পরসের সৌরভও ছুটিতেছে ॥১৯॥

अन्वयः—लुलित-नयन-ताराः क्षाम-वक्त्रेन्दु-बिम्बाः निद्राक्लान्तनीलोत्पलाक्ष्यः तिमिरम् इव स्रंसिनः केशपाशान् दधानाः रजनयः इव (स्थिताः) अमूः वारवध्वः अवनिपतिगृहेभ्यः यान्ति ॥२०॥

टीका—लुलितेति। लुलितनयनताराः निद्राकलुषिताश्चञ्चलकनीनिका अन्यत्राप्रसन्नलक्षत्राः। 'तारकाक्षिमध्ययोस्तारेति विश्वः। वक्त्राण्येवेन्दुबिम्बानीत्युपमितसमासः। तिमिरमिवेत्यादिलिङ्गात्, अन्यत्र वक्त्राण्येवेन्दुबिम्बानि तानि क्षामाणि सुरतप्रभाताभ्यां म्लानानि यासां ताः निद्रया स्वप्नेन मुकुलीभावेन क्लान्तानि नीलोत्पलानि अक्षीणीव नीलोत्पलानीव चाक्षीणि यासान्ताः स्रंसिनः केशपाशान् तिमिरमिवान्यत्र तु तानिव तिमिरं दधानाः अतएव रजनय इव स्थिताः। अमूर्वारवध्वो वेश्याः। 'वारस्त्री गणिका वेश्ये'त्यमरः। अवनिपतिगृहेभ्यो यान्ति निर्य्यान्ति। श्लिष्टविशेषणेयमुपमेत्येके श्लेष एवायमुभयविषयः उपमा तु प्रतिभामात्रसारा इत्यन्ये ॥२०॥

टिप्पनी—लुलितेति। अत्र वारवध्व इत्यत्र पदांशे दुःश्रवत्वदोषः; स च वारवामा इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—রাত্রির ন্যায় এই বারবনিতারা রাজভবন হইতে চলিয়া যাইতেছে; ইহাদের নয়নের তারাগুলি (নিদ্রার অভাবে) ঢল ঢল করিতেছে; মুখচন্দ্রগুলি ক্ষীণ হইয়া গিয়াছে; নয়নেন্দীবরগুলি নিদ্রায় ক্লান্ত হইতেছে এবং ইহারা অন্ধকারের ন্যায় খোলা চুলগুলি ধারণ করিতেছে ॥২০॥

नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥

अन्वयः—एषा रजनिः वासरान्ते शिशिरकिरण-कान्तम् अभिसार्य साम्प्रतं श्वसन-सुरभि गन्धिः (सती) अनिन्द्यैः तन्मयूखाङ्गरागैः परिमिलितम् अम्बरान्तं वहन्ती सत्वरा इव व्रजति ॥२१॥

टीका—शिशिरेति । एषा रजनिः वासरान्ते रात्रौ शिशिरकिरणश्चन्द्रः तमेव कान्तम् अभिसार्य्य अभिसृत्य । स्वार्थे णिच् । साम्प्रतं श्वसनैः तत्कालवातैः निःश्वासैश्च सुरभिगन्धिः सुगन्धिः अनिन्द्यैः मनोहरैःमयूखैरेवाङ्गरागैः परिमिलितं व्याप्तं वासितञ्च अम्बरान्तं नभःप्रान्तं वस्त्रान्तञ्च वहन्ती भजन्ती सत्वरेव व्रजति । अत्रेन्दुतन्मयूखादीनां कान्तत्वाङ्गरागत्वादिरूपत्वावगमादेकदेशविवर्त्तिरूपकम् ॥२१॥

टिप्पनी—शिशिरेति । अत्र सत्वरेवेति गुणोत्प्रेक्षा च्छेकानुप्रासश्चेति टीकोक्तरूपकेण सह संसृष्टिः । वर्गान्त्यवर्णसंयोगबाहुल्यात् माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२१॥

বাঙ্গালা—এই রাত্রি, দিবসের (পূর্ব দিনের) শেষ ভাগে চন্দ্ররূপ পতির নিকটে আসিয়া, বর্ত্তমান সময়ে বায়ুর সৌরভযুক্ত হইয়া, মনোহর চন্দ্রের কিরণরূপ অঙ্গরাগ দ্রব্যে রঞ্জিত অম্বরের প্রান্ত ভাগ আশ্রয় করতঃ সত্বরই যেন চলিয়া যাইতেছে ॥২১॥

अन्वयः—अधिकरुचिः अयम् इन्दुः नव-कुमुद-वन-श्री-हास-केलि-प्रसङ्गात् अशेषाम् अपि उषां जागरित्वा शिशयिषुः इव स्रस्तहस्तः (सन्) अपरदिशः अङ्के पाण्डुं म्लानं (च) आत्मानं मुञ्चति ॥२२॥

टीका—नवेति । अधिकरुचिरयमिन्दुः नवकुमुदवनश्रियो विकाशः परिहासस्य स एव केलिस्तस्यां प्रसङ्गादासङ्गात् अशेषामप्युषां सकलामपि रात्रिम् । 'विभावरी नक्तमुषा शर्वरी'ति विश्वः । अत्यन्तसंयोगे द्वितीया । जागरित्वा जागरणं कृत्वा शिशयिषुः शयितुमिच्छुरिव । शीतः सन् उप्रत्ययः । स्रस्तो हस्तो नक्षत्रविशेषः करश्च यस्य स सन् अपरदिशः पश्चिमदिशोऽङ्के समीपे उत्सङ्गे च पाण्डुं पाण्डुवर्णं म्लानं क्लान्तमात्मानं स्वशरीरं मुञ्चति । दक्षिणनायकः कयाचिच्च विहृत्य श्रान्तः कस्याश्चिदङ्के शेते तद्वदिति भावः । अत्र प्रहासकेल्यङ्करस्य सनादिव्यवहारादिन्दुकुमुदवनश्रीपश्चिमानां नायकत्वप्रतीतेः समासोक्तिरलङ्कारः । विशेषणसाम्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः सा चोत्प्रेक्षासङ्कीर्णा ॥२२॥

टिप्पनी—नवेति । अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः शब्दालङ्कारावित्ति टीकोक्तसमासोक्त्या सह संसृष्टिः । मधुररचनावशान्माधुर्य्यं गुणः, पाञ्चाली च रीतिः ॥२२॥

বাঙ্গালা—অত্যন্তকান্তিসম্পন্ন এই চন্দ্র, নবীন কুমুদবনশোভার হাস্যকেলিতে আসক্তিবশতঃ, সমস্ত রাত্রিই জাগরণ করিয়া, বর্ত্তমান সময়ে শয়ন করিতে ইচ্ছা করিয়াই যেন অলসহস্ত হইয়া, পশ্চিম দিকের ক্রোড়ে পাণ্ডুবর্ণ এবং পরিশ্রান্ত শরীরটীকে স্থাপন করিতেছেন ॥২২॥

सरभसपरिरम्भारम्भसंरम्भभाजा यदधिनिशमपास्तं वल्लभेनाङ्गनायाः ।
वसनमपि निशान्ते नेष्यते तत्प्रदातुं रथचरणविशालश्रोणिलोलेक्षणेन ॥२३॥
सपदि कुमुदिनीभिर्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥२४॥
व्रजति विषयमक्ष्णामंशुमाली न यावत् तिमिरमखिलमस्तं तावदेवारुणेन ।
परपरिभवि तेजस्तन्वतामाशु कर्त्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥२५॥

---

**अन्वयः**—अधिनिशं सरभस-परिरम्भारम्भ-संरम्भ-भाजा वल्लभेन अङ्गनायाः यत् अपास्तम्, निशान्ते रथ-चरण-विशाल-श्रोणि-लोलेक्षणेन [तेन] तत् वसनं प्रदातुं न इष्यते ॥२३॥

**टीका**—सेति। अधिनिशं निशायाम्। विभक्त्यर्थेऽव्ययीभावः। सरभसः सत्वरः परिरम्भ एवारम्भो व्यापारस्तत्र संरम्भस्तद्भाजा वल्लभेन अङ्गनायाः सम्बन्धि यद्वसनम् अपास्तं तद्वसनं निशान्ते प्रभातेऽपि रथचरणं चक्रं तद्वद्विशालायां श्रोण्यां लोलं सतृष्णम् ईक्षणं यस्य तेन वल्लभेन प्रदातुं नेष्यते। अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात् काव्यलिङ्गम् ॥२३॥

**टिप्पनी**—सरभसेति। अत्र शब्दालङ्कारो वृत्त्यनुप्रासः टीकोक्तकाव्यलिङ्गेन संसृज्यते। सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२३॥

**বাঙ্গালা**—রাত্রিতে প্রিয়তম, সত্বর আলিঙ্গন করিবার উদ্দাম প্রবৃত্তিবশতঃ, রমণীর যে কাপড় খানি খুলিয়া নিয়াছিল; রাত্রি প্রভাত হইলেও, রথচক্রের ন্যায় বিশাল (সেই রমণীর) নিতম্বমণ্ডলে সতৃষ্ণ নয়নে দৃষ্টিপাত করিতে থাকিয়া সে প্রিয়তম সে কাপড় দিতে ইচ্ছা করিতেছে না ॥২৩॥

**अन्वयः**—हा! कुमुदिनीभिः सपदि मीलितम्, क्षपा अपि क्षयम् अगमत्, ताः समस्ताः तारकाः अपेताः इति शुचा चिन्तयन् इव दयितकलत्रः इन्दुः कृशम् अशेषं भ्रष्टशोभम् अङ्गं वहति ॥२४॥

**टीका**—सपदीति। सपदि सद्यः कुमुदिनीभिर्मीलितम्। भावे क्तः। हा कष्टं क्षपा रात्रिरपि क्षयमगमत्, ताः समस्तास्तारकाः अपेता इति शुचा शोकेन चिन्तयन्निव दयितकलत्रः प्रियभार्य्यः इन्दुः कृशमशेषं निःशेषं यथा तथा भ्रष्टशोभं नष्टप्रभम् अङ्गं वहति। कलत्रप्रियस्य युगपत्कलत्रनाशे महान् शोको भवतीति भावः। अत्रेन्दोः प्रभातप्रयुक्ताङ्गकार्श्यशोभाभ्रंशयोर्युगपत् कुमुदिन्यादिसकलकलत्रनाशनिमित्तहेतुकत्वमुत्प्रेक्ष्यते ॥२४॥

**टिप्पनी**—सपदीति। अत्र पूर्वार्द्धे छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्कार इति टीकोक्तहेतूत्प्रेक्षया सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

**বাঙ্গালা**—হায়! কুমুদিনীরা সকলেই মুদ্রিত হইল (অচেতন হইল); রাত্রিও ক্ষয় পাইল এবং সেই সকল তারাগুলিও চলিয়া গেল! শোকে এইরূপ চিন্তা করতই যেন প্রিয়পত্নীক চন্দ্র, ক্ষীণ ও শোভাশূন্য সমস্ত অঙ্গ বহন করিতেছেন ॥২৪॥

“अलिकृतश्रीलेनाम्ना” इतिसम्यक्



विगततिमिरपङ्कं पश्यति व्योम यावत् धुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना सरिदपरतटान्तादागता चक्रवाकी ॥२६॥

---

अन्वयः—अंशुमाली यावत् अक्ष्णां विषयं न व्रजति, तावत् एव अरुणेन अखिलं तिमिरम् अस्तम् । हि पर-परिभवि तेजः तन्वताम् अग्रेसरः अपि आशु विपक्षोच्छेदं कर्त्तुं प्रभवति ॥२५॥

टीका—व्रजतीति । अंशुमाली सूर्य्यः । व्रीह्यादित्वादिनिप्रत्ययः । यावदक्ष्णां विषयं भूमिं न व्रजति न दृश्यत इत्यर्थः तावदेव अरुणेन अनूरुणा अखिलं तिमिरम् अस्तम् अपास्तं परेषां परिभवि तिरस्कारकम् । जिदृक्षीत्यादिना इनिप्रत्ययः । तेजः प्रतापं तन्वतां प्रथयताम् अग्रे सरतीत्यग्रेसरः पुरःसरोऽपि । “पुरोऽग्रतोऽग्रेषु सर्त्तेरिति टप्रत्ययः । विपक्षस्य शत्रोरुच्छेदं कर्त्तुम् आशु प्रभवति शक्नोति हि । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥२५॥

टिप्पनी—व्रजतीति । अत्र तृतीयपादे च्छेकानुप्रासश्चेति टीकोक्तार्थान्तरन्यासेन सह तस्य संसृष्टिः । तथा अक्ष्णामित्यत्र पदांशे दुःश्रवत्वदोषः ; स च ‘व्रजति विषयमक्ष्णोर्लोचनानां न यावत्’ इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः अस्यानुरूपः श्लोको यथा रघुवंशे पञ्चमसर्गे ॥२५॥

“यावत् प्रतापनिधिराक्रमते न भानुः अह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर ! याते किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥

বাঙ্গালা—সূর্য্য যে পর্য্যন্ত দৃষ্টিগোচর না হন, তাহার মধ্যেই অরুণ সমস্ত অন্ধকার দূর করিয়াছেন। কারণ, যাঁহারা পরবিজয়ী তেজ প্রকাশ করিয়া থাকেন তাঁহাদের অগ্রবর্ত্তী (সাধারণ) লোকও, সত্বরই বিপক্ষের উচ্ছেদ করিতে পারে ॥২৫॥

अन्वयः—विरहखिन्न रथचरण समाह्वः यावत् विगततिमिरपङ्कं व्योम पश्यति, यावत् एव (च) पक्षती धुवति, तावत् औत्सुक्यनुन्ना चक्रवाकी सरिदपरतटान्तात् आगता ॥२६॥

टीका—विगतेति । विरहेण खिन्नः रथचरणेन चक्रेण समाह्वस्तुल्याख्यः तस्यैव समाह्वा समाख्या यस्येति वा रथचरणसमाह्वश्चक्रवाक इत्यर्थः । “कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः” इत्यमरः । तिमिरं पङ्कमिवेत्युपमितसमासः । तद्विगतं यस्मात्तद्व्योम यावत्पश्यति यावदेव पक्षती पक्षमूले । “स्त्री पक्षतिः पक्षमूलमित्यमरः । “पक्षात्तिरिति तिप्रत्ययः । धुवति उत्पतितुं धुनोति । धू विधूनन इति धातोस्तौदादिकत्वाद्गुणाभावः । तावदेव उत्पतनात् प्रागेव चक्रवाकी चक्रवाकस्य स्त्री । “जातेरस्त्रीविषयादयोपधादिति ङीप् । औत्सुक्येन उत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात् परभूमेः सकाशात् आगता एतेनानयोरन्योन्यमनस्कता समश्चानुराग इत्युक्तम् । अत्र रागौत्सुक्ययोरभावयोस्तिर्य्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामालङ्कारः । “रसभावतदाभासप्रशमानां निबन्धने । रसवत्प्रेय ऊर्जस्वि समाहितानीति” लक्षणात् ॥२६॥

मुदितयुवमनस्कास्तुल्यमेव प्रदोषे रुचमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥२७॥
विलुलितकमलौघः कीर्णवल्लीवितानः प्रतिवनमवधूताशेषशाखिप्रसूनः ।
क्वचिदयमनवस्थः स्थास्नुतामेति वायुर्वधूकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥२८॥

---

टिप्पनी---विगतेति। अत्र रथचरणसमाह्व इति पूर्वार्द्धान्वयेन एकपदस्य परार्द्धे पतितत्वात् अर्द्धान्तरैकपदता दोषः। 'अतिमिरमिह चक्रः पश्यति व्योम यावत्' इति प्रथमचरणपाठेन 'दिवसविहित-कृर्पा तावदौत्सुक्यनुन्ना' इति तृतीयचरणपाठेन वासौ परिहरणीयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—বিরহতুঃখে তুঃখিত চক্রবাক, যাবৎ আকাশটীকে অন্ধকারশূন্য দেখিতেছে এবং উড়িবার জন্য যাবৎ পক্ষযুগল কম্পিত করিতেছে ; তাহার মধ্যেই চক্রবাকী, উৎকণ্ঠা-প্রেরিত হইয়া, নদীর অপর তীরের প্রান্ত হইতে আসিয়া উপস্থিত হইতেছে ॥২৬॥

अन्वयः—प्रदोषे मुदित-युव-मनस्काः कल्पिताः भूषिताश्च उभय्यः तुल्यम् एव रुचम् अदधुः ; प्रभाते तु परिमल-रुचिराभिः युवतिभिः उपभोगात् नीरुचः पुष्पमालाः न्यक्कृताः ॥२७॥

टीका—मुदितेति। प्रदोषे रात्रौ मुदितानि यूनां मनांसि याभिस्ताः मुदितयुवमनस्काः। उरःप्रभृतिभ्यः कप्। कल्पिताः उपभोगाय सम्पादिताः भूषिता वलयवसनादिभिरुपस्कृताश्च उभय्यः उभयविधाः युवतयः पुष्पमालाश्च। उभादुदात्तो नित्यमिति उभस्य अयजादेशः, टिड्ढाणञिति पादिना ङीप्। तुल्यमेवाविशेषं यथा तथा रुचं शोभामदधुर्धृतवत्यः। धाञो लिट्। प्रभाते तु उपभोगान्नीरुचो निष्प्रभाः पुष्पमालाः परिमलेन विमर्दगन्धेन रुचिराभिरुपभोगादधिकसुरभिभिर्युवतिभिःन्यक्कृतास्त्यक्ताः अवधीरिताश्च। अत्र पुष्पमालाभ्यो युवतीनां साम्योक्तिपूर्वकविमर्दसहत्वेनाधिक्योक्त्या व्यतिरेकः ॥२७॥

टिप्पनी—मुदितेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—প্রদোষ কালে যুবতিগণ ও পুষ্পের মালা এই তুই সম্ভোগের জন্য সংগৃহীত ও অলঙ্কৃত হইয়াছিল, যুবকদিগের চিত্ত আনন্দিত করিয়াছিল এবং সমানভাবেই সৌন্দর্য্য ধারণ করিয়াছিল, কিন্তু প্রভাতকালে সম্ভোগ সৌরভে মনোহরা যুবতিরা, সম্ভোগ-বশতই কান্তিহীন পুষ্পের মালাগুলিকে অবজ্ঞা করিল ॥২৭॥

अन्वयः—प्रतिवनं विलुलित-कमलौघः कीर्ण-वल्ली-वितानः अवधूताशेष-शाखि प्रसूनः क्वचित् अनवस्थः अयं वायुः वधू-कुसुम-विमर्दोद्गन्धि-वेश्मान्तरेषु स्थास्नुताम् एति ॥२८॥

टीका—विलुलितेति। वने वने प्रतिवनम्। याथार्थ्येऽव्ययीभावः। विलुलिताः व्यालोलिताः कमलौघा येन सः कीर्णा विक्षिप्ता वल्लीनां मालत्यादीनां वितानाः विस्तारा येन सः अवधूतानि अशेषशाखिनां वकुलचम्पकादीनां प्रसूनानि येन सः तथापि क्वचित् पूर्वोक्तकमलवनादौ कुत्रापि नास्त्यवस्था स्थितिरस्येत्यनवस्थः स्थितिमप्राप्तोऽयं वायुः वधूनां कुसुमानाञ्च विमर्देन सङ्घर्षेण उद्गन्धिषु उद्गतगन्धेषु। गन्धस्येत्वम्। वेश्मान्तरेषु

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः क्षतिषु च दशनानामङ्गनायाः सशेषः ॥
अपि रहसि कृतानां वाग्विहीनोऽपि जातः सुरतविलसितानां वर्णको वर्णकोऽसौ
प्रकटमलिनलक्ष्मा स्पष्टपत्रावलीकैरधिगतरतिशोभैः प्रत्युषः प्रोषितश्रीः ।
उपहसित इवासौ चन्द्रमाः कामिनीनां परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥

---

गृहान्तरेषु स्थास्नुतां स्थायित्वम् एति पूर्वोक्तसर्वोत्कृष्टसौरभलोभादिति भावः ग्लाजिस्थश्चेति
ग्स्नुच् प्रत्ययः, बधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा मधुकुसुमेति पाठः । मधुयुक्तानि
कुसुमानि तेषां विमर्दनेत्यर्थः । अत्र वायोरस्थायित्वेऽपि स्थायित्वसम्बन्धोक्तेरतिशयोक्तिः ।
तथा विमर्दगन्धस्य कमलादिगन्धादाधिक्यरूपव्यतिरेकप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥२८॥

टिप्पनी—विलुलितेति । अत्र तृतीयपादे दुःश्रवत्वदोषः ; स च 'क्वचिदपि नहि तिष्ठन् स्थायितां
सेति वायुः" इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

বাঙ্গালা—এই বায়ু প্রত্যেক বনে পদ্মগুলিকে সঞ্চালিত করিয়া, লতাসমূহকে
আন্দোলিত করিয়া এবং সকল বৃক্ষের কুসুম গুলিকে কাঁপাইয়া, কোথাও না থাকিয়া,
গৃহের ভিতরে আসিয়া স্থায়িত্ব লাভ করিতেছে ; কেন না, সেই গৃহের ভিতর হইতে
রমণীগণ ও কুসুম সমূহের পরিমল বাহির হইতেছিল ॥২৮॥

अन्वयः—नख-पद-वलि-नाभी-सन्धि-भागेषु दशनानां क्षतिषु च सशेषः लक्ष्यः अङ्गनायाः असौ
वर्णकः वाग्विहीनः अपि सन् रहसि कृतानाम् अपि सुरतविलसितानां वर्णकः जातः ॥२९॥

टीका—नखपदेति । नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु नाभ्यां सन्धिभागेषु
कूर्परादिदेहसन्धिस्थानेषु तथा दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावशेषः किञ्चिद्विद्य-
मानः अतएव लक्ष्यो दृश्यः अङ्गनायाः सम्बन्धी असौ वर्णयति वर्णंकरोति रञ्जयतीति
वर्णकोऽङ्गरागः वाग्विहीनो वागिन्द्रियरहितोऽपि सन् रहसि कृतानामपि सुरतविलसि-
तानां सुरतचेष्टितानां वर्णयति वक्तीति वर्णको वक्ता व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल्-
प्रत्ययः । वर्णक्रियायां विस्तारे गुणोक्तौ वर्णनेऽप्यद इति भट्टमल्लः । जातनखक्षतादि-
ष्वेव लक्ष्यमाणोऽङ्गरागोऽन्यत्र स्वविलोपाच्चेष्टाविशेषानुमापको जात इत्यर्थः । अत्र
वाग्विहीनोऽपि रहस्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहारा-
द्विरोधाभासोऽलङ्कारः ॥२९॥

टिप्पनी—नखेति । अत्र चतुर्थपादे वर्णको वर्णक इति यमकं टीकोक्तविरोधाभासेन संसृज्यते ।
प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—কুঙ্কুম ও চন্দন প্রভৃতি অঙ্গরাগ দ্রব্য সকল, রমণীগণের শরীরের নখক্ষত,
পেটের থর, নাভি, সংলগ্ন স্থান এবং দন্তক্ষত স্থানে কিছু কিছু অবশিষ্ট রহিয়াছে ; সুতরাং
তাহা দেখা যাইতেছে ; অতএব সে গুলি বাক্‌শক্তিশূন্য হইয়াও, নির্জনকৃত রতিকেলীর
বর্ণয়িতা হইয়াছে ॥২৯॥

**সকলমপি নিকামঙ্কামলীলান্যনারীরতিরভসবিমর্দৈর্ভিন্নবত্যঙ্গরাগে।**
**ইদমতিমহদেবাশ্চর্য্যমাশ্চর্য্যধাম্নস্তব খলু মুখরাগো যন্ন ভেদম্প্রযাতঃ ॥৩১॥**

---

**অন্বয়ঃ**—প্রত্যুষঃ প্রোষিতশ্রীঃ প্রকট-মলিন-লক্ষ্মা অসৌ চন্দ্রমাঃ মৃষ্টপত্রাবলীকৈঃ অধিগত-রতি-শোভৈঃ পরিণত-শরকাণ্ড-পাণ্ডুভিঃ কামিনীনাং গণ্ডভাগৈঃ উপহসিতঃ ইব ॥৩০॥

**টীকা**—প্রকটেতি। "উষসি প্রত্যুষঃ। বিভক্ত্যর্থেঽব্যয়ীভাবঃ। যদ্বা প্রত্যুষঃ প্রভাতম্। উষঃপ্রত্যুষসী অপীত্যমরঃ। তত্র প্রোষিতশ্রীর্নষ্টশোভঃ অতএব প্রকটম্মলিনলক্ষ্মা অস্পষ্টকলঙ্কঃ অসৌ চন্দ্রমাঃ মৃষ্টাঃ প্রমৃষ্টাঃ পত্রাবল্যঃ পত্রভঙ্গা যেষান্তৈঃ। নদ্যৃতশ্চেতি কপ্। তথাপ্যধিগতা রতিশোভা সম্ভোগশ্রীর্যৈস্তৈঃ পরিণতাঃ পরিপক্কাঃ শরকাণ্ডা বাণাখ্যতৃণকাণ্ডিকাঃ। শরো বাণো বাণতৃণ ইতি শব্দার্ণবে। তদ্বৎ পাণ্ডুভিঃ কামিনীনাং গণ্ডভাগৈর্গণ্ডস্থলৈরুপহসিত ইবেত্যুৎপ্রেক্ষা। পাণ্ডিমগুণনিমিত্তা নিষ্কলঙ্কাঃ সকলঙ্কং সমানমানিনমুপহসন্তীতি ভাবঃ ॥৩০॥

**টিপ্পনী**—প্রকটেতি। অত্র চতুর্থপাদে লুপ্তোপমা চছেকানুপ্রাসশ্চেতি টীকোক্তোৎপ্রেক্ষয়া সহ তয়োঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩০॥

**বাঙ্গালা**—প্রভাতকালে চন্দ্রের শোভা চলিয়া গিয়াছে এবং তাহার কৃষ্ণবর্ণ চিহ্নটা বিশেষ ভাবে প্রকাশ পাইয়াছে; এদিকে কামিনীগণের গণ্ডদেশের পত্ররচনা (গোন্দানি) গুলি মুছিয়া গিয়াছে এবং সে গণ্ডদেশ রতিশোভা লাভ করিয়াছে, আর পরিপক্ক শরদণ্ডের ন্যায় বিশেষ পাণ্ডুবর্ণ হইয়াছে; সুতরাং কামিনীগণের সে গণ্ডদেশ গুলি যেন ঐ চন্দ্রকে উপহাস করিতেছে ॥৩০॥

**অন্বয়ঃ**—কাম-লীলান্য-নারী-রতি-রভস-বিমর্দৈঃ অঙ্গরাগে সকলং নিকামং ভিন্নবতি (সতি) আশ্চর্য্যধাম্নঃ তব মুখরাগঃ যৎ ভেদং ন প্রযাতঃ, ইদম্ এব অতিমহৎ আশ্চর্য্যং খলু ॥৩১॥

**টীকা**—অথ কাচিৎ খণ্ডিতা নায়িকা সাগসং প্রেয়াংসং প্রাতরাগতং প্রত্যভিদধাতি। সকলমিত্যাদি। কামেন লীলায়া অন্যনার্য্যাঃ সপত্ন্যাঃ রতিরভসেষু সুরতসম্ভ্রমেষু বিমর্দৈঃ পীড়নৈঃ রজ্যতেঽনেনেতি রাগঃ অঙ্গস্য রাগোঽঙ্গরাগঃ বিলেপনম্ অঙ্গবিকারশ্চ তস্মিন্ অঙ্গরাগে সকলমপি নিঃশেষং যথা তথা নিকামং ভিন্নবতি বিশ্লিষ্টবতি সতি আশ্চর্য্যধাম্নঃ সর্বাদ্ভুতনিধানস্য তব মুখরাগো মুখবিকারো ভেদং বিশ্লেষং ন প্রযাতঃ ইতি যৎ ইদমেব অতিমহদাশ্চর্য্যং খলু মুখস্যাপ্যঙ্গত্বেন তদ্রাগস্যাঙ্গরাগত্বাদিতি ভাবঃ। অত্র বিলেপনবিকারাখ্যয়োরঙ্গরাগয়োরেকত্বাধ্যবসায়েন বিরোধঃ ভেদানুসন্ধানত্বেনাবিরোধ ইতি শ্লেষমূলাতিশয়োক্ত্যুত্থাপিতো বিরোধাভাসোঽলঙ্কারঃ ॥৩১॥

**টিপ্পনী**—সকলমিতি। অত্র প্রথমপাদে ছেকানুপ্রাসঃ, তৃতীয়ে চ লাটানুপ্রাসঃ, ইতি টীকোক্তোৎপ্রেক্ষাবিরোধাভাসাভ্যাং সহ তয়োঃ সংসৃষ্টিঃ। মানো নাম বিপ্রলম্ভশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩১॥

प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः ।
चरणतलसरोजाक्रान्तिसंक्रान्तयासौ वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥३२॥
तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलन्दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन ॥३३॥

---

বাঙ্গালা—কামবেগে অস্থিরা অন্যরমণীর রমণ সংঘর্ষে তোমার অঙ্গরাগ গুলি নিঃশেষ ভাবে একে বারে মুছিয়া গেলেও, মুখের রাগ যে মুছিয়া যায় নাই, ইহাই গুরুতর আশ্চর্য। সুতরাং বলিতে হইবে যে, তুমি সর্বপ্রকার আশ্চর্য্যের আধার ॥৩১॥

अन्वयः—अन्याः रमण्यः प्रकटतरम् इमं स्फुटं मा द्राक्षुः इति कान्तया सविशङ्कं चरणतल-सरोजा-क्रान्तिसंक्रान्तया लाक्षया ते वपुषि तुल्यवर्णः असौ नखविलेखः रक्षितः ॥३२॥

टीका—प्रकटेति । किञ्च प्रकटतरमतिस्फुटम् इममेनं नखविलेखम् अन्याः रमण्यो निजसपत्न्यः स्फुटं मा द्राक्षुः न पश्यन्तु । दृशेर्लुङ् न दृश इति क्सामावपक्षे सिचि वृद्धिः । इति बुद्ध्या कान्तया सविशङ्कं यथा तथा तुल्यवर्णो लाक्षासमानवर्णः शिवर्णस्य क्षुरपक्षवत्त्वादिति भावः । असौ ते तव वपुषि नखविलेखो नखव्रणः चरणतलं सरोजमिवेत्युपमितसमासः आक्रान्तिलिङ्गात्तस्याक्रान्त्या आघातेन संक्रान्तया लाक्षया रक्षितो गुप्तः आच्छादित इत्यर्थः । हन्त सा तु पापीयसी लाक्षा स्वयमेव सर्वं वृत्तं तत्पिशुनेति भावः । अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालङ्कारः । "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता" इति लक्षणात् ॥३२॥

टिप्पनी—प्रकटतरमिति । अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः शब्दालङ्कार इति टीकोक्तसामान्यालङ्कारैण सह संसृष्टिः । पूर्ववत् रसः माधुर्यं गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—নিজের সপত্নীরা এই সুস্পষ্ট নখচিহ্নগুলিকে না দেখে এইরূপ ভাবিয়া আশঙ্কার সহিত তোমার প্রিয়তমা, তোমার শরীরে পাদপদ্মের আঘাত দ্বারা আল্‌তা লাগাইয়া দিয়া, সেই আল্‌তারই তুল্যরঙের ঐ নখচিহ্নগুলিকে আবৃত করিয়া দিয়াছে ॥৩২॥

अन्वयः—"त्वं मम प्रिया" इति (त्वम्) यत् अवादीः, तत् अवितथम्, यत् प्रियजन परिभुक्तं दुकूलं दधानः (त्वं) मदधिवसतिम् आगाः । कामिनां मण्डनश्रीः वल्लभालोकनेन सफलत्वं व्रजति हि ॥३३॥

टीका—तदिति । किञ्च मम त्वमेव प्रियेति यदवादीरवोचः । वदेर्लुङ् वदव्रजेत्यादिना वृद्धिः । तदवितथं सत्यं कुतः यद् यस्मात् प्रियजनेन परिभुक्तं दुकूलं तदीयमित्यर्थः दधानः धारयन्नित्यर्थः । दधान इत्यत्र वसान इति पाठे वसान आच्छादयन् । वस आच्छादनार्थाल्लटः शानजादेशः । स त्वं मदधिवसतिं मम निवासमागाः प्राप्तः । इणो गा लुङि । युक्तञ्चैतदित्याह । कामिनां मण्डनश्रीर्वल्लभानां प्रेयसीनामालोकनेन सफलत्वं व्रजति हि । अप्रिया चेत् कथमीदृशी मे सम्भावनेति भावः । अर्थान्तरन्यासः ॥३३॥

टिप्पनी—तदिति । अत्र पूर्ववत् रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥३४॥
इति कृतवचनायाः कश्चिदभ्येत्य बिभ्यद्गलितनयनवारेर्याति पादावनामम् ।
करुणमपि समर्थं मानिनां मानभेदे रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥३५॥

বাঙ্গালা—"তুমি আমার প্রিয়া" এইরূপ যে বলিয়া থাক, তাহা সত্য। যেহেতু, তোমার প্রিয়তমা যে কাপড়খানি পরিয়া থাকে, তুমি সেই কাপড় খানিই পরিয়া, আমার ঘরে আসিয়াছ। কারণ, কামুদিগের অলঙ্কারশোভা, প্রিয়ার দর্শনেই (প্রিয়া দেখিলেই) সফলতা লাভ করিয়া থাকে ॥৩৩॥

अन्वयः—अंशुकेन नव नख पदम् अङ्गं गोपयसि, पाणिना पुनः दन्तदष्टम् ओष्ठं स्थगयसि, प्रतिदिशं विसर्पन् अपरस्त्री सङ्ग शंसी नव परिमल गन्धः केन वरीतुं शक्यः ॥३४॥

टीका—नवेति। किञ्च नवानि नखपदानि यस्मिन् तदङ्गं वपुः अंशुकेन गोपयसि छादयसि। गुपिधूपेत्यादिनाय स्वार्थे णिच्। दन्तेन दष्टमोष्ठं पुनरोष्ठन्तु पाणिना स्थगयसि छादयसि। स्थगिरपि चौरादिकः। दिशि दिशि प्रतिदिशम्। विभक्त्यर्थेऽव्ययीभावः, अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तः टच् प्रत्ययः। विसर्पन् प्रसर्पन् अपरस्त्रीसङ्गशंसी त्वदन्तःकरणसूचकः अन्याप्रभवत्वात्तस्येति भावः। नवः परिमलाख्यो गन्धः परिमलगन्धः। "विमर्दोत्थे परिमलः" इत्यमरः। केन केनोपायेन वरीतुमाच्छादयितुम्। वृतो वेति वृटो दीर्घः। शक्यः न केनापि शक्य इत्यर्थः। अत्र नखदन्तक्षतयोरङ्गोष्ठाच्छादने विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात् काव्यलिङ्गद्वयं सजातीयसङ्करः ॥३४॥

टिप्पनी—नवेति। अत्रापि रसादयः पूर्ववत् ॥३४॥

বাঙ্গালা—যে যে অঙ্গে নূতন নখচিহ্ন রহিয়াছে, সে সকল অঙ্গকে বস্ত্র দ্বারা আচ্ছাদন করিতেছ; আবার দন্তক্ষত ওষ্ঠখানিকে হস্ত দ্বারা আবৃত করিতেছ; কিন্তু অন্য স্ত্রীর সঙ্গসূচক নূতন বিমর্দ্দগন্ধ চারিদিকে ছুটিতেছে; সুতরাং কোন্ উপায়ে সে গন্ধকে বারণ করিতে সমর্থ হইবে? ॥৩৪॥

अन्वयः—इति कृतवचनायाः गलित नयन वारेः बिभ्यत् कश्चित् अभ्येत्य पादावनामं याति। विग्रहेषु योषितां करुणम् अपि रुदितम्, मानिनां मानभेदे समर्थम् अस्त्रम् उदितम् ॥३५॥

टीका—इतीति। इति पूर्वोक्तश्लोकचतुष्टयरीत्या कृतवचनायाः कृतोपालम्भायाः गलितनयनवारेरश्रुधर्ष्यात् सुक्तायाः प्रेयस्या इति शेषः कश्चिन्नायको बिभ्यत् लसन्। "जाभ्यस्ताच्छतुरिति नुमभावः। अभ्येत्यागत्य पादयोरवनाममवनतिं याति प्रणामेन प्रसादयतीत्यर्थः। ननु कथमीदृक्प्रादं तथाहङ्कारिणस्तस्य रोदनमात्रेण तत्राह। करुणमिति। तथाहि, विग्रहेषु प्रणयकलहेषु योषितां करुणं दीनमपि रुदितमश्रुमोचनं मानिनामहङ्कारिणां पुंसां मानभेदे अहङ्कारनिरासे समर्थं शक्तमस्त्रं साधनम् उदितमुक्तम्। वदेः

मदमदनविकाससस्पष्टधार्ष्ट्योदयानां रतिकलहविकीर्णैर्भूषणैरर्चितेषु ।
विदधति न गृहेषूत्फुल्लपुष्पोपहारं विफलविनययत्नाः कामिनीनां वयस्याः ॥३६॥

---

कर्मणि क्तः, वचिस्वपीत्यादिना सम्प्रसारणम् । दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः । अर्थान्तरन्यासः । एषा च खण्डिता नायिका ।" नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यासम्भोगचिह्नैस्तु खण्डितेर्ष्याकषायितेति लक्षणात् ।" नायकस्तु धृष्टः । व्यक्ताङ्गो निर्भयो धृष्ट इति लक्षणात् । न चेह विध्यद्विशेषणविरोधः आगमनकालेऽति-निर्भीकताया एव लक्षणोपयोगात् अन्यथा वैरं स्यादिति भावः अयन्त्व सहृदयः अन्यथा रसा-भास इत्याहुः ॥३५॥

टिप्पनी—इतीति । अत्र रुदिते अस्त्रत्वारोपात् निरङ्गं केवलरूपकं छेकानुप्रासश्च इत्यनयोः टीकोक्तार्थान्तरन्यासेन सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३५॥

বাঙ্গালা—প্রেয়সী এইরূপ তিরস্কার করিয়া চোখের জল ফেলাইতে লাগিলে, কোন নায়ক ভীত হইয়া, তাহার নিকটে যাইয়া, তাহার চরণে অবনত হইল। কারণ, প্রণয়কলহে রমণীগণের করুন রোদনও, অহঙ্কারী যুবকদিগের অহঙ্কার নষ্ট করিবার পক্ষে অস্ত্রস্বরূপ বলিয়া কথিত হয় ॥৩৫॥

अन्वयः—मद मदन विकास स्पष्ट धार्ष्ट्योदयानां कामिनीनां रति कलह विकीर्णैः भूषणैः अर्चितेषु गृहेषु वयस्याः विफल-विनय-यत्नाः (सत्यः) उत्फुल्ल-पुष्पोपहारं न विदधति ॥३६॥

टीका—मदेति । मदमदनयोर्विकासेन विजृम्भणेन स्पष्टो धार्ष्ट्यस्योदय आविर्भावो यासां तासां कामिनीनां रतिरेव कलहस्तस्मिन् विकीर्णैरितस्ततो विक्षिप्तैर्भूषणैरर्चितेषु गृहेषु वयस्याः स्निग्धपरिचारिकाः विनीयन्तेऽस्मिन्निति विनयोऽधिकारः तत्र यत्नो विफलो यासान्ताः विफलविनययत्नाः निष्फलस्वाधिकारोद्योगाः सत्यः उत्फुल्लैः पुष्पैरुपहारं पूजां न विदधति न कुर्वन्ति । अत्र समृद्धवस्तुवर्णनादुदात्तालङ्कारः । "तदुदात्तमभेदत्र समृद्धं वस्तु वर्ण्यते" इति लक्षणात् । तेन तासान्तेषु आभरणेषु भुक्तवस्त्रमाल्यादिवन्निर्माल्यत्वं ध्वन्यते ॥३६॥

टिप्पनी—मदेति । अत्र उत्फुल्लपुष्पोपहारविधानाभावं प्रति विफलविनययत्नपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् प्रथमपादे छेकानुप्रासश्चेति टीकोक्तोदात्तेन सह संसृष्टिः । तथा प्रथमपादे दुःश्रवतादोषः ; स च 'मदमदनविकासोदीतवैमात्यभाजाम्' इति पाठेन समाधेयः । बन्धोत्कर्षस्यारोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३६॥

বাঙ্গালা—মত্ততা ও কামবিকার প্রকাশ পাওয়ায় স্পষ্টতই কামিনীগণের ধৃষ্টতা প্রকাশ পাইয়াছিল ; তাই তাহাদের অলঙ্কারগুলি রমণসংঘর্ষের সময়ে চারিদিকে বিক্ষিপ্ত হইয়া, গৃহের শোভা জন্মাইয়া রথিয়াছে ; সুতরাং সখীগণের গৃহসজ্জা করা নিষ্প্রয়োজন হইয়া পড়িয়াছে বলিয়া, তাহারা আর সে সকল গৃহে প্রস্ফুটিত পুষ্প নিক্ষেপ করিতেছে না ॥৩৬॥

करजदशनचिह्नं नैशमङ्गेऽन्यनारीजनितमिति सरोषामीर्ष्यया शङ्कमानाम् ।
स्मरसि न खलु दत्तं मत्तयैतत् त्वयैव स्त्रियमनुनयतीत्थं व्रीड़मानां विलासी ॥
क्षतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥३८

---

**अन्वयः**—विलासी अङ्गे नैशं करज-दशन-चिह्नम् अन्यनारीजनितम् इति शङ्कमानाम् ईर्ष्यया सरोषां स्त्रियं 'मत्तया त्वया एव एतत् दत्तं न खलु स्मरसि' इत्थं व्रीड़मानाम् अनुनयति ॥३७॥

**टीका**—करजेति । विलसनशीलो विलासी । वौ कषलसेत्यादिना घिनुण् प्रत्ययः। अङ्गे निजाङ्गे निशायांभवं नैशम् । निशाप्रदोषाभ्यां चेत्यण् प्रत्ययः। करजदशनचिह्नं नखदन्तव्रणम् अन्यनारीजनितं सपत्नीकृतमिति शङ्कमानां विश्वसतीम् अतएव ईर्ष्यया अक्षमया सरोषां स्त्रियं निजवधूं मत्तया मदमूढया त्वयैव एतद्दत्तमेवं कृतं खलु न स्मरसि नाभिजानासि किमिति काकुः इत्थमनेन प्रकारेण व्रीड़मानां स्वकृतत्वप्रत्यभिज्ञानाल्लज्जितां सतीमनुनयति अङ्गीकारयति स्वमौग्ध्यव्याघाती निर्वेदश्च लज्जया व्यज्यते ॥३७॥

**टिप्पनी**—करजेति । अत्र स्त्रीया व्रीड़ाख्यभावोदयात् भावोदयनामा अलङ्कारः तृतीयचरणगत-च्छेकानुप्रासेन संसृज्यते । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३७॥

**বাঙ্গালা**—নায়কের অঙ্গে রাত্রিতে যেসকল নখক্ষত ও দন্তক্ষতের চিহ্ন হইয়া রহিয়াছিল, সেগুলিকে সপত্নীকৃত মনে করিয়া, কোন রমণী ঈর্ষায় নায়কের প্রতি ক্রুদ্ধ হইয়া উঠিয়াছিল; তাহাতে নায়ক বলিয়াছে যে—"তুমিই মত্ত হইয়া এই সকল চিহ্ন করিয়া দিয়াছিলে, তাহা কি স্মরণ করিতেছ না" ইহাতে সে রমণী লজ্জিতা হইয়া পড়িলে নায়ক তাহাকে তাহা স্বীকার করাইতেছে ॥৩৭॥

**अन्वयः**—क्षत-गुरुतर-हार-च्छेदम् आलिङ्ग्य परिशिथिलित-गात्रे पत्यौ गन्तुम् आपृच्छमाने (सति) तत्क्षणम् अबलायाः स्तनयुगलम्, विगलित-नव-मुक्ता-स्थूल-बाष्पाम्बु-बिन्दु रोदिति इव ॥३८॥

**टीका**—क्षतेति । क्षतो गुरुतरस्य हारस्य छेदो यस्मिन् तत्तथा आलिङ्ग्य परिशिथिलितगात्रे शिथिलकृताङ्गे पत्यौ भर्त्तरि गन्तुमापृच्छमाने आमन्त्रयमाणे सति । आङि नुप्रच्छोरुपसंख्यानादात्मनेपदं कर्त्तरि लटः शानजादेशः । तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । अबलायाः स्तनयुगं कर्तृ विगलिता निःसृता नवमुक्ता नूतनमौक्तिकान्येव स्थूलबाष्पाम्बुबिन्दवो यस्मिन् कर्मणि तत्तथा रोदितीव विरहासहिष्णुतया रोदनं करोतीवेत्युत्प्रेक्षारूपकसङ्कीर्णा । रुदादिभ्यः सार्वधातुके इतीडागमः ॥३८॥

**टिप्पनी**— न । अत्र सम्भोगशृङ्गारो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥३८॥

**বাঙ্গালা**—নায়ক গাঢ় আলিঙ্গন করিলে, নায়িকার বিশাল হার ছিড়িয়া গেল ; তার পর, নায়ক আপন শরীর শিথিল করিয়া যাইবার জন্য বিদায় চাহিলে সেই সময়ে নায়িকার স্তনযুগল হইতে সেই ছিন্ন হারের নূতন মুক্তারূপ বৃহৎ বৃহৎ অশ্রুবিন্দু পতিত হইতে থাকায় সে স্তনযুগল যেন রোদন করিতে লাগিয়াছে বলিয়া বোধ হইতেছে ॥৩৮॥

बहु जगद पुरस्तात्तस्य मत्ता किलाहं चकार च किल चाटु प्रौढयोषिद्वदस्य।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य व्यपगतमदयाह्नि व्रीड़ितम्मुग्धवध्वा॥
अरुण-जलज-राजी-मुग्ध-हस्ताग्र-पादा बहुल-मधुप-माला-कज्जलेन्दीवराक्षी।
अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिमचिरजाता पूर्वसन्ध्या सुतेव॥४०॥

---

अन्वयः—अह्नि व्यपगत-मदया मुग्धवध्वा सखीभ्यः विदितं 'मत्ता अहं तस्य पुरस्तात् बहु जगद किल, प्रौढ़योषिद्वत् च अस्य चाटु चकार किल' इति रात्रिवृत्तं विचिन्त्य व्रीड़ितम्॥३९॥

टीका—वह्विति। अह्नि दिवसे व्यपगतमदया मुग्धवध्वा सखीभ्यो विदितं रात्रौ त्वयैवं कृतमिति सखीभिराख्यातमित्यर्थः। रात्रिवृत्तं रात्रौ कृतं स्वचेष्टितमित्यर्थः। मत्ता मदमूढ़ा अहन्तस्य प्रियस्य पुरस्तादग्रे बहु अनेकं जगद किल गदामि स्म किलेति ऐतिह्ये। अतएव परोक्षे लिट्, "वालु तमो वेति पक्षे चित्ताभावाद्रूद्वाद्यभावः। च पुनः प्रौढ़योषिता तुल्यं प्रौढ़योषिद्वदित्युपमा "तेन तुल्यमिति वतिप्रत्ययः। अस्य प्रियस्य चाटु प्रियवचनं चकार किल अकार्षं किल। लिङादिपूर्ववत् गुणी विशेषः। इति विचिन्त्य विमृश्य व्रीड़ितं लज्जितम्। भावे क्तः। निजकार्यं प्रकाशेन लज्जाख्य सञ्चारी भावः। भाव-निबन्धनात् प्रेयोऽलङ्कारः॥३९॥

टिप्पनी—वह्विति। अत्र रसगुणौ पूर्ववत्, वैदर्भी च रीतिः॥३९॥

বাঙ্গালা—প্রাতঃকালে মদের নেশা ছুটিয়া গেলে পর, বালিকা বউটী সখীদের নিকট জানিল যে,—রাত্রিতে আমি মত্ত হইয়া, তাঁহার সম্মুখে বহু কথা বলিয়াছি এবং পরিণতবয়স্ক স্ত্রীলোকের ন্যায় ইঁহার নিকট বহুতর চাটূক্তি করিয়াছি এইরূপ রাত্রির বৃত্তান্ত চিন্তা করিয়া সে লজ্জিত হইল॥৩৯॥

अन्वयः—अरुण-जलज-राजी-मुग्ध-हस्ताग्र-पादा बहुल-मधुप-माला-कज्जले-न्दीवराक्षी पत्रिणां विरावैः व्याहरन्ती अचिरजाता पूर्वसन्ध्या सुता इव रजनिम् अनुपतति॥४०॥

टीका—अरुणेति। अरुणजलजराज्येव रक्तकमलश्रेण्येव मुग्धं सुन्दरं हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा बहुलं मधुपमालाः कज्जलं कज्जलमिव मधुपमाला ययोस्ते अक्षिणी इन्दीवरे इव यस्याः सा बहुलमधुपमालाकज्जलेन्दीवराक्षी पत्रिणां पक्षिणां विरावैर्व्याहरन्ती आलपन्ती। "व्याहार उक्तिर्लपितमित्यमरः। अचिरजाता सद्योभवा बाला च पूर्वसन्ध्या प्रातःसन्ध्या सुतेव पुत्रीव रजनिमनुपतति अनुधावति जननीमिवेत्यर्थः। इह विरावैर्व्याहरन्तीति ध्वनिकरणपरिणामः। तत्सङ्कीर्णेयमुपमा॥४०॥

टिप्पनी—अरुणेति। अत्र वत्सलो रसः, मधुररचनाश्रयात् माधुर्यं गुणः, पाञ्चाली च रीतिः॥४०॥

বাঙ্গালা—অচিরজাতা প্রাতঃসন্ধ্যা, বালিকা কন্যার ন্যায় রাত্রির অনুসরণ করিতেছে; রক্তবর্ণ পদ্মশ্রেণীই উহার সুন্দর পাণিতল ও পদতল; নীলোৎপলগুলিই উহার

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥४१॥

---

নয়ন ; বহুতর ভ্রমরশ্রেণীই আবার সেই নয়নের কাজল এবং ঐ প্রাতঃসন্ধ্যা, পক্ষীর কলরবে আলাপ করিতেছে ॥৪০॥

अन्वयः—अग्न्याहितानां प्रतिशरणम् अशीर्णज्योतिः अयम् अग्निः विधि-विहित-विरिब्धैः अध्वर्यु-वर्यैः सामिधेनीः अधीत्य कृत-गुरु-दुरितौघ-ध्वंसं साधु हुतं सान्नाय्यम् उपलीढे ॥४१॥

टीका—प्रतीति । अग्निराहितो यैस्तेषामग्न्याहितानाम् । "आहिताग्न्यादिष्विति निष्ठायाः परनिपातः । प्रतिशरणं प्रतिगृहम् । "शरणं गृहरक्षित्रोरित्यमरः । अशीर्णज्योतिरक्षतार्चिः अयमग्निः आहवनीयः विधिना "यज्ञकर्मण्यजपन्यूङ्खसामस्वि"त्यादिशास्त्रोक्तरीत्या विहिता यथायोगमुच्चारिता विरिब्धाः स्वरा एकश्रुत्यादयस्त्वरा यैस्तैः । "क्षुब्धस्वान्तेत्यादिना रेभृशब्दे इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेन निपातितः । अध्वर्युवर्यैः ऋत्विक्श्रेष्ठैः ऋत्विग्विशेषवाचिना अध्वर्युशब्देन ऋत्विज्ञातलक्षणात् । यद्वा अध्वर्युर्वर्यो मुख्यो येषां तैः अध्वर्युप्रमुखैश्चतुर्भिर्ऋत्विग्भिरित्यर्थः । तथाहुश्च पौर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विज इति श्रवणात् । दर्शश्चायं सर्वत्रैव सान्नाय्यविधानादिति सामिधेनीः 'प्रवोवाजा' इत्यादिका अग्निसमिन्धनीरृचोऽधीत्य पठित्वा । "ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने" इत्यमरः । सामिधेनीग्रहणं याज्यापुरोऽनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणम् । कृतो गुरुतरदुरितानामोघस्य ध्वंसो यस्मिन् कर्मणि तद्यथा तथा साधु सम्यक् हुतं दैवतोद्देशेन त्यक्तं सन्नीयत इति सान्नाय्यं हविर्विशेषम् "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्याया"मिति विहिते दधिपयसी इत्यर्थः "पाय्यसान्नाय्यनिकाय्ये"त्यादिना हविर्विशेषे सम्पूर्वान्नयतेर्ण्यन्तादायादेशोपसर्गदीर्घनिपातः । उपलीढे आस्वादयति । लिह आस्वादन इति धातोः स्वरितेत्त्वाल्लटि तङि टेरेत्वं ढत्वधत्वष्टुत्वढलोपदीर्घाः । अत्राग्नेः सान्नाय्योपलेहनस्योत्तरकालभावित्वेऽपि तदुपलक्षितस्य कर्मण उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रयुक्तम् अतिप्रागुदयादमावास्याया इति शास्त्रे न तत्कालप्रक्रान्तस्य वर्त्तमानत्वात्तस्यापि वर्त्तमानताव्यपदेशः । एतच्चाहिताग्निलक्षणमात्रेण कालविशेषानादरेणोक्तमिति पूर्वोक्तचन्द्रोदयाद्यविरोधः, अथवा "उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्रं तत्कालत्वात्, सामिधेनीसान्नाय्यशब्दयोर्मन्त्रहविर्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेन व्याख्येयम् । तस्याग्निहोत्रस्य यज्ञक्रतोः एक ऋत्विगित्येकाध्वर्युकत्वे वर्य्यैरिति बहुवचनं यजमानबहुत्वादुपपद्यत इत्याहुरित्यलं छान्दसगोष्ठीप्रसङ्गेन । वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव ॥४१॥

टिप्पनी—प्रतीति । एतेन प्रातःसन्ध्याया धर्मकर्मकालत्वमपि दर्शितम् । "वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव" इति मल्लिनाथः । द्वितीये चरणे एकस्य 'व' इत्यस्य असकृत् साम्यादित्यभिप्रायः । किञ्च तृतीये चरणे छेकानुप्रासोऽपीति वृत्त्यनुप्रासेनास्य संसृज्यते । बन्धस्य प्रगाढत्वात् ओजो गुणः, गौड़ी च रीतिः ॥४१॥

प्रक्रान्तजपविधीनामास्यमुद्भासिदन्तं मुहुरपिहितमोष्ठ्यैरक्षरैर्लक्ष्यमन्यैः ।
अनुकृतिमनुवेलं घट्टितोद्घट्टितस्य व्रजति नियमभाजां मुग्धमुक्तापुटस्य ॥४२॥
नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणेर्भाति भासां वितानम् ।
जनितभुवनदाहारम्भमम्भांसि दग्ध्वा ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥

---

বাঙ্গালা—এই অগ্নি, সাগ্নিক দ্বিজাতিগণের প্রত্যেক গৃহে অক্ষত তেজে জ্বলিতেছে; তাহাতে পুরোহিতশ্রেষ্ঠ ব্রাহ্মণগণ, শাস্ত্রানুসারে উদাত্তপ্রভৃতি স্বর উচ্চারণপূর্ব্বক অগ্নিপ্রজ্বালনের মন্ত্র পাঠ করিয়া, সম্যগ্‌ভাবে হবি (ঘৃতপ্রভৃতি) নিক্ষেপ করিতেছেন এবং অগ্নি তাহা আস্বাদন করিতেছেন; আবার সেই আস্বাদনে গুরুতর পাপসমূহ নষ্ট করিতেছে ॥৪১॥

অন্বয়ঃ—प्रक्रान्त-जप-विधीनां नियमभाजाम् ओष्ठ्यैः अक्षरैः मुहुः अपिहितम् अन्यैः अक्षरैः लक्ष्यम् उद्भासिदन्तम् आस्यम् अनुवेलं घट्टितोद्घट्टितस्य मुग्धमुक्तापुटस्य अनुकृतिं व्रजति ॥४२॥

টীকা—प्रक्रान्तेति । प्रक्रान्तजपविधीनां प्रक्रान्तजपकर्मणां नियमभाजां तपस्विनां सम्बन्धि ओष्ठे भवैरोष्ठ्यैः । शरीरावयवाच्चेति यत्प्रत्ययः । अक्षरैर्वर्णैः उपूपध्मानीयैरित्यर्थः । उपूपध्मानीयानामोष्ठाविति स्मरणात् । मुहुरपिहितमावृतम् अन्यैरनोष्ठ्यैरक्षरैर्लक्ष्यं दृश्यमीयम् अतएवोद्भासिन उद्गतांशवो दन्ता यस्य तदास्यं मुखम् अनुवेलं प्रतिक्षणं घट्टितोद्घट्टितस्य प्राग्श्लिष्टपश्चाद्विघटितविघटितस्य । विशेषणसमासः । मुग्धं सुन्दरं यन्मुक्तानां मुक्ताफलानां पुटं कोटिः शुक्तिरिति यावत् तस्यानुकृतिं साम्यं व्रजति । उपमालङ्कारः । एतेन श्लोकद्वयेन बहवः कर्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भवन्तमनुयान्तीति कथितम् ॥४२॥

টিপ্পনী—प्रक्रान्तेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

বাঙ্গালা—তপস্বীরা জপ করিতে আরম্ভ করিয়াছেন; সুতরাং তাঁহারা যখন ওষ্ঠ্য বর্ণ উচ্চারণ করিতেছেন, তখন তাঁহাদের মুখের ভিতরটা বার বার আবৃত হইয়া যাইতেছে; আবার যখন অন্যবর্ণ উচ্চারণ করিতেছেন, তখন মুখের ভিতরটা দেখা যাইতেছে এবং দন্তের রশ্মিগুলি বাহির হইতেছে; এইরূপ মুখগুলগুলি, একবার বোজে আবার ফাঁক হয় এই জাতীয় সুন্দর ঝিনুকগুলির সর্ব্বদা অনুকরণ করিতেছে ॥৪২॥

অন্বয়ঃ—कुलिशपाणेः ककुभि नव-कनक-पिशङ्गं वासराणां विधातुः भासां वितानम्, महाब्धेः अम्भांसि दग्ध्वा जनितभुवनदाहारम्भं (सत्) ऊर्ध्वं ज्वलितम् और्वानलार्चिः इव भाति ॥४३॥

টীকা—নবেতি । कुलिशं पाणौ यस्य स कुलिशपाणिरिन्द्रः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति पाणेः परनिपातः । एतदेवात्र व्यधिकरणबहुव्रीहेश्च ज्ञापकम् । तस्य ककुभि प्राच्यां दिशि नवकनकवत् पिशङ्गं वासराणां विधातुर्दिनकरस्य भासां वितानं करजालं महाब्धेरम्भांसि दग्ध्वा जनितभुवनदाहारम्भं कृतजगद्दाहोद्योगं सत् ऊर्ध्वमब्धेरुपरि ज्वलितम् और्वानलार्चिर्वडवानलज्योतिरिव भातीत्युत्प्रेक्षा ॥४३॥

টিপ্পনী—নবেতি । अत्र नवकनकपिशङ्गमिति लुप्तोपमा, तृतीयपादे च्छेकानुप्रासश्चेति टीका उत्प्रेक्षया सह संसृष्टिः । समासबाहुल्यस्य उद्रेकेणाप्रयोजनप्रयोगार्थम् ओजो गुणः, गौडी च रीतिः ॥४३॥

विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥४४॥
पयसि सलिलराशेर्नक्तमन्तर्निमग्नः स्फुटमनिशमतापि ज्वालया वाड़वाग्नेः ।
यदयमिदमिदानीमङ्गमुद्यन्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥४५॥

---

বাঙ্গালা—পূর্ব্বদিকে নূতন স্বর্ণের ন্যায় পিঙ্গলবর্ণ সূর্য্যের কিরণগুলি যে রূপ প্রকাশ পাইতেছে; তাহাতে বোধ হইতেছে—বাড়বানলের শিখা যেন সমুদ্রের জল দগ্ধ করিয়া, তাহার পর, জগৎ দগ্ধ করিতে প্রবৃত্ত হইয়া, সমুদ্রের উপরে জ্বলিতেছে ॥৪৩॥

अन्वयः—कृतचपलविहङ्गालापकोलाहलाभिः दिग्भिः विततपृथुवरत्रातुल्यरूपैः मयूखैः आकृष्यमाणः गरीयान् कलशः इव एषः अर्कः जलनिधिजलमध्यात् उत्तार्यते (इव) ॥४४॥

टीका—विततेति। विततामिः प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिः तुल्यरूपैस्तुल्याकारैर्मयूखैः किरणैर्गरीयान् कलश इव आकृष्यमाणः सन् एषोऽर्कः कृतस्सपत्वः सत्वरो विहङ्गालाप एव कोलाहलः कलकलो याभिस्ताभिः दिग्भिर्जलनिधेः जलमध्यादुत्तार्यते उद्ध्रियते। तरतेर्ण्यन्तात् कर्मणि लट्। यथा कुतश्चित् कूपात् कुम्भः पार्श्ववाकृष्य सकलकलं बहुभिः स्त्रीभिरुद्ध्रियते तद्वदिति भावः। अत्र वरत्रातुल्यरूपैः कलश इवेति चोपमाभ्यां विहङ्गालापकोलाहलेति रूपकेण चोज्जीवितार्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा व्यञ्जकाप्रयोगात् प्रतीयमानेति सङ्करः ॥४४॥

टिप्पनी—विततेति। अत्र तृतीयपादे एकस्य लकारस्य असकृदावृत्त्या छेकानुप्रासः, चतुर्थे च जलेतिशब्दार्थयोः पौनरुक्त्येऽपि तात्पर्यमात्रतो भेदाच्च लाटानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। प्रसादो गुणः, पाञ्चाली च रीतिः ॥४४॥

বাঙ্গালা—সমস্তদিক্ একত্র হইয়া, চঞ্চল পক্ষিগণের কলরবরূপ কোলাহল করিয়া, বিস্তৃত বৃহৎ রজ্জুর ন্যায় কিরণদ্বারা আকর্ষণ করতঃ বৃহৎ একটা কলসের ন্যায়, সূর্য্যকে যেন সমুদ্রের জলমধ্য হইতে উত্তোলন করিতেছে ॥৪৪॥

अन्वयः—अयं विवस्वान् नक्तं सलिलराशेः पयसि अन्तः निमग्नः (सन्) वाड़वाग्नेः ज्वालया अनिशम् अतापि स्फुटम्। यत् इदानीम् उद्यन् ज्वलितखदिरकाष्ठाङ्गारगौरम् अङ्गं दधाति ॥४५॥

टीका—पयसीति। अयञ्च विवस्वान् नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्वाड़वाग्नेर्ज्वालया अनिशमतापि तप्तः स्फुटमित्युत्प्रेक्षा। कुतः यदिदानीमुद्यन् इदं ज्वलितः प्रज्वलन् यः खदिरकाष्ठस्याङ्गारस्तद्वद् गौरमरुणमङ्गं दधाति। "गौरोऽरुणे सिते पीते" इति विश्वः ॥४५॥

टिप्पनी—पयसीति। अत्र तृतीयपादे छेकानुप्रासः, चतुर्थे च लुप्तोपमेति टीकोक्तोत्प्रेक्षया सह तयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

বাঙ্গালা—এই সূর্য্য রাত্রিতে সমুদ্রের জলের ভিতরে মগ্ন হইয়া, নিশ্চয়ই বাড়বা-

**मुदितैस्तदेति दितिजन्मनां रिपावविनीयसम्भ्रमविकाशिभक्तिभिः ।**
**उपसेदिवद्भिरुपदेष्टरीव तैर्वव्रते विनीतमविनीतशासिभिः ॥२४॥**

---

शरीरातिरिक्तदेशकालादिसाधनापेक्षः सन्ध्योपासनजपादिः । यमः शरीरमात्रसाधनापेक्षोऽहिंसादिः शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः । नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।" स च यथा यमनियमाविवेत्यर्थः । "इववद्वायथाशब्दा इति दण्ड्यभिधानात् । विजयश्रिया युतः स सन्नविजयं विजिगीषुं रिपुमित्यर्थः अर्कमारुताविव दस्रयोरश्विनोः सुतौ नकुलसहदेवौ । "नासत्यावश्विनौ दस्रावित्यमरः । तं हरिमनुसस्रतुरनुवेरतुः पृष्ठोपसर्पणं चक्रतुरित्यर्थः । इष्ट सर्वकार्यं मनोरथानुकूलव्यापारवत्त्वमनुसरणम् । इयं मालोपमा ॥२३॥

**टिप्पनी**—पश्चिमामिति । अत्र द्वितीये चतुर्थे च पादे छन्दोनुप्रास इति टीकोक्तमालोपमया सह संसृष्टिः । तथा दस्रयो सुतौ अनुसस्रतुः, अयनयादौ द्वौ द्वौ तु अनुसरत इति कालभेदाश्रयप्रक्रमभङ्गदोषः, "काप्यभिख्या तयोरासीत्—" इत्यादिदर्पणोदाहरणवत् । स च नियतौ यमौऽनुसरतो यतिं यथा" इति पाठेन समाधेयः । अन्वार्थस्य गाढत्वात् ओजो गुणः, गौड़ी च रीतिः ॥२३॥

**বাঙ্গালা**—তদনন্তর, দৈব ও পুরুষকার যেমন ব্যসনবিহীন রাজার, যম ও নিয়ম যেমন আচারনিষ্ঠ জিতেন্দ্রিয়ের এবং সূর্য্য ও বায়ু যেমন বিজিগীষুর অনুসরণ করে ; সেইরূপ নকুল ও সহদেব শ্রীকৃষ্ণের অনুসরণ করিতে লাগিলেন ॥২৩॥

**अन्वयः**—तदा इति मुदितैः अविनीय-सम्भ्रम-विकाशि-भक्तिभिः अविनीतशासिभिः तैः दितिजन्मनां रिपौ उपसेदिवद्भिः उपदेष्टरि इव विनीतं वव्रते ॥२४॥

**टीका**—मुदितैरिति । तदा तस्मिन् समये इति मुदितैर्हृष्टैरविनीयोऽवाच्योऽकापट इति यावत् यः संभ्रम आदरस्तेन विकाशिनी स्फुटीभवन्ती भक्तिर्येषां तैः । "विपूयविनीयजित्यामुञ्जकल्कहलिष्विति कल्कार्थे निपातः । नपुंसकपूर्वपदः स्त्रीलिङ्गपूर्वपदो वा बहुव्रीहिः । अविनीतं शासतीत्यविनीतशासिभिः दुष्टशिक्षकैः पाण्डवैः दितिजन्मनां रिपौ कार्यविषये उप समीपे सीदन्ति स्मेत्युपसेदिवांसोऽन्तेवासिनः । "भाषायां सदवसश्रुवः इति सदेर्लिटः क्वसुरादेशः । तैरुपसेदिवद्भिरुपदेष्टरि गुराविवेत्युपमा । विनीतमनुद्धतत्वं वव्रते वृत्तम । भावे लिट् । ननु विकाशिभक्तिभिरिति अत्र कथं पूर्वपदस्य पुंवद्भावः भक्तिशब्दस्य प्रियादिपाठात् "स्त्रियाः पुंवदिति पुंवद्भावसूत्रे प्रियादिष्विति निषेधादिति विकाशिशब्दस्याविकाशिनिवृत्तिमात्रपरतयाऽस्त्रीत्वस्य विवक्षितत्वान्नपुंसकपूर्वपदो बहुव्रीहिरिति केचित् तदेतदभिप्रेत्यो"ं वृत्तिकारेण दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धिरिति एतदेव स्पष्टीकृतं गणव्याख्याने । दृढं भक्तिर्यस्येति नपुंसकं पूर्वपदम् । धात्वर्थविशेषणमात्रपरे दृढशब्दे लिङ्गविशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षितमिति । भोजराजस्तु भक्तौ कर्मसाधनायामित्यनेन सूत्रेण भज्यते सेव्यते इति कर्मार्थत्वेन दृढा भक्ति-

गतयोरभेदमिति सैन्ययोस्तयोरथ भानुजह्नुतनयाम्भसोरिव ।
प्रतिनादितामरविमानमानकैर्नितरां मुदा परमयेव दध्वने ॥२५॥
मखमीक्षितुं क्षितिपतेरुपेयुषां परितः प्रकल्पितनिकेतनं बहिः ।
उपरुध्यमानमिव भूभृतां बलैः पुटभेदनं दनुसुतारिरैक्षत ॥२६॥

त्यादि भवति । भावसाधनायां तु दृढभक्तिमंवत्येवेत्याह । तदेतत् सर्वमस्माभिः कालिदासत्रयसञ्जीविन्यां दृढभक्तिरिति ज्येष्ठे इत्यादिषु विवेचितं तत्राधिकाग्निभक्तिरित्यत्रापि जतभेदेन पूर्वपदस्य स्त्रीत्वे नपुंसकत्वे च रूपस्थितिरस्तीति स्थितम् ॥२४॥

टिप्पनी—मुदितैरिति । अत्र प्रथमे पादे हत्त्यनुप्रासः, चतुर्थे च च्छेकानुप्रास इति टीकोक्तोपमयः सह संसृष्टिः । तथा वहते इत्यन्तेन वाक्यसमाप्तावपि पुनस्तैरित्यस्य विशेषणतया अविनीतैत्यादिपदोपादानात् समाप्तपुनरात्ततादोषः ; स च आदौ द्वितीयं पादम्, ततश्चतुर्थम्, परञ्च प्रथमतृतीयौ पादौ पठित्वा समाधेयः । गुणरीती पूर्ववत् ॥२४॥

বাঙ্গালা—ছাত্রগণ যেমন অধ্যাপকের নিকট বিনীতভাবে অবস্থান করে ; সেইরূপ দুষ্টগণের শাস্তা ও হৃষ্টচিত্ত পাণ্ডবগণ শ্রীকৃষ্ণের নিকটে বিনীতভাবে অবস্থান করিতে লাগিলেন ; তখন এইরূপ অকপট আদর করায় শ্রীকৃষ্ণের প্রতি তাঁহাদের ভক্তি প্রকাশ পাইতে লাগিল ॥২৪॥

अन्वयः—भानु-जह्नु-तनयाम्भसोः इव तयोः सैन्ययोः इति अभेदं गतयोः (सतोः) अथ आनकैः परमया मुदा इव प्रतिनादितामरविमानं नितरां दध्वने ॥२५॥

टीका—गतयोरिति । इति इत्थं गतयोः सैन्ययोः भानुजह्नुतनये यमुनाजाह्नव्यौ तयोरम्भसी प्रवाहौ तयोरिव अभेदमैक्यं गतयोः सतोः । "यस्य च भावेन भावलक्षणमिति सप्तमी एतेन सैन्ययोरवाच्यंत्वमुक्तम । अथ सैन्यमेलनानन्तरम आनकैर्मङ्गलदुन्दुभिभिः परमया मुदेव हर्षेणेव इवेत्युत्प्रेक्षा । प्रतिनादितानि प्रतिध्वनितानि अमरविमानानि द्रष्टुमागत्याम्बरस्थितानि विमानानि देवयानानि यस्मिन् कर्मणि तद्यथा तथा नितरां दध्वने ध्वनितम् । भावे लिट् ॥२५॥

टिप्पनी—गतयोरिति । अत्र द्वितीये पादे श्रौतोपमा, तृतीये च च्छेकानुप्रास इति टीकोक्तोत्प्रेक्षया सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२५॥

বাঙ্গালা—যমুনাজলও গঙ্গাজলের ন্যায় সেই কৃষ্ণসৈন্য ও পাণ্ডবসৈন্য এইভাবে সম্মিলিত হইলে, তাহার পর দুন্দুভিসমূহ অত্যন্ত আনন্দবশতই যেন গুরুতর শব্দ করিতে লাগিল (বাজিতে লাগিল) ; তাহাতে আকাশে দেবতাদের বিমানে যাইয়া তাহার প্রতিধ্বনি হইতে থাকিল ॥২৫॥

अन्वयः—दनुसुतारिः क्षितिपतेः मखम् ईक्षितुम् उपेयुषां भूभृतां बलैः बहिः परितः प्रकल्पितनिकेतनम् (अतएव) उपरुध्यमानम् इव पुटभेदनम् ऐक्षत ॥२६॥

প্রতিনাদপূরিতদিগন্তরঃ পতন্ পুরগোপুরং প্রতি স সৈন্যসাগরঃ।
রুরুচে হিমাচলগুহামুখোন্মুখঃ পয়সাং প্রবাহ ইব সৌরসৈন্ধবঃ ॥২৭॥
অসকৃদ্গৃহীতবহুদেহসম্ভবস্তদসৌ বিভক্তনবগোপুরান্তরম্।
পুরুষঃ পুরং প্রবিশতি স্ম পঞ্চভিঃ সমমিন্দ্রিয়ৈরিব নরেন্দ্রসূনুভিঃ ॥২৮॥

---

টীকা—মখমিতি। ক্ষিতিপতের্ধর্মরাজস্য মখং ক্রতুমীক্ষিতুমুপেয়ুষাং ততস্তত আগতানাং ভূভৃতাং রাজ্ঞাং বলৈঃ সৈন্যৈঃ বহিঃ পরিতঃ প্রকল্পিতানি নির্মিতানি নিকেতনানি নিবাসা যস্য তৎ অতএবোপরুধ্যমানং ম্রক্ষু সেনাবেষ্ট্যমানমিব স্থিতমিত্যুৎপ্রেক্ষা। পুটভেদনং পত্তনং ময়কৃতমিন্দ্রপ্রস্থম্। "পত্তনং পুটভেদনমিত্যমরঃ। দনুসুতারির্দানবারিঃ পুরোঽগ্রে ঐক্ষত দদৃশ্যত ॥২৬॥

টিপ্পনী—মখমিতি। অত্র উপরোধসম্ভাবনা প্রতি বহিঃ পরিতঃ প্রকল্পিতনিকেতনমিতি পদার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, প্রথমপাদে ছেকানুপ্রাসশ্চেতি টীকোক্তোৎপ্রেক্ষয়া সহ তয়োঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৬॥

বাঙ্গালা—শ্রীকৃষ্ণ দেখিলেন—যুধিষ্ঠিরের যজ্ঞ দর্শন করিবার জন্য যে সকল রাজারা উপস্থিত হইয়াছেন, তাঁহাদের সৈন্যেরা যেন সেই ইন্দ্রপ্রস্থনগরীটীকে অবরুদ্ধ করিয়া রাখিয়াছে; কেন না সেই নগরীর বাহিরে সকল দিকেই তাহাদের থাকিবার জন্য পটমণ্ডপ সকল নির্ম্মাণ করিয়া রাখা হইয়াছিল ॥২৬॥

অন্বয়ঃ—প্রতিনাদ-পূরিত-দিগন্তরঃ পুরগোপুরং প্রতি পতন্ সঃ সৈন্যসাগরঃ হিমাচল-গুহামুখোন্মুখঃ সৌরসৈন্ধবঃ পয়সাং প্রবাহঃ ইব রুরুচে ॥২৭॥

টীকা—প্রতীতি। প্রতিনাদৈঃ প্রতিধ্বানৈঃ পূরিতং ব্যাপ্তং দিশাম্ অন্তরমন্তরালং যেন সঃ পুরগোপুরং পুরদ্বারম্প্রতি। "গোপুরং তু পুরদ্বারি দ্বারমাত্রে নপুংসকমিতি বিশ্বঃ। এবং চ ন পুরশব্দস্য পৌনরুক্ত্যশঙ্কা। পতন্ ধাবন্ স সৈন্যসাগরঃ সেনাসমুদ্রঃ হিমাচলগুহামুখস্যোন্মুখোঽভিমুখঃ সুরসিন্ধোর্গঙ্গায়া অয়ং সৌরসৈন্ধবঃ। "হৃদ্ভগসিন্ধ্বন্তে পূর্বপদস্য চেত্যুভয়পদবৃদ্ধিঃ। পয়সাং প্রবাহ ইব রুরুচে রেজে। উপমালঙ্কারঃ ॥২৭॥

টিপ্পনী—প্রতীতি। অত্র দ্বিতীয়ে তৃতীয়ে চ পাদে ছেকানুপ্রাস ইতি টীকোক্তোপমযা সহ সংসৃষ্টিঃ। বন্ধোৎকর্ষস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৭॥

বাঙ্গালা—পূর্ব্বকালে গঙ্গাজলের প্রবাহ যেমন হিমালয়ের গুহামুখের অভিমুখ হইয়া শোভা পাইতেছিল; সেইরূপ সেই সৈন্যসমুদ্র প্রতিধ্বনিতে সমস্ত দিগন্তর পরিপূর্ণ করতঃ ইন্দ্রপ্রস্থনগরীর দ্বারের দিকে ধাবিত হইয়া শোভা পাইতে লাগিল ॥২৭॥

অন্বয়ঃ—অসকৃদ্গৃহীত-বহু-দেহ-সম্ভবঃ অসৌ পুরুষঃ পঞ্চভিঃ ইন্দ্রিয়ৈঃ ইব নরেন্দ্রসূনুভিঃ সমং বিভক্ত-নব-গোপুরান্তরং তৎ পুরং প্রবিশতি স্ম ॥২৮॥

টীকা—অসকৃদিতি। অসকৃদ্ বহুশো গৃহীতো লোকধারণায় স্বীকৃতো বহুষু দেহেষু

तनुभिस्त्रिनेत्रनयनानवेक्षितस्मरविग्रहद्युतिभिरद्युतन्नराः।
प्रमदाश्च यत्र खलु राजयक्ष्मणः परतो निशाकरमनोरमैर्मुखैः॥२९॥

मत्स्यकूर्मादिषु शरीरेषु सम्भवः प्रादुर्भावो येन सः। अन्यत्र स्वकर्मणा प्राक्तनयोनिसम्बन्धरूप सम्भव इत्यर्थः। पुरुषः पुराणपुरुषो हरिर्जीवश्च विभक्तानि नवानि प्रत्यग्राणि गोपुरान्तराणि द्वारविशेषा यस्य तत् अन्यत्र नवसङ्ख्याकानि गोपुरान्तराणि इन्द्रियद्वारभेदा यस्मिन् तत् पुरं पत्तनं शरीरञ्च। "पुरं पुरि शरीरे चेति विश्वः। पञ्चभिरिन्द्रियैः समनिव पञ्चभिर्नरेन्द्रसूनुभीराजपुत्रैः पाण्डवैः सह असौ हरिस्तत्पुरं प्रविशति स्म। जीवो हि देहाद्देहान्तरं पूर्वेन्द्रियैः सह प्रविशति लिङ्गशरीरस्यानपायादिति भावः। श्लेषवक्रोक्त्युपमा॥२८॥

**टिप्पनी**—सम्भवादिति। अत्र साहित्यदर्पणमते पूर्णोपमा, तृतीयचतुर्थपादयोश्छेकानुप्रासश्चेति तयोः संसृष्टिः। बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः॥२८॥

**বাঙ্গালা**—জীবাত্মা যেমন আপন কর্ম্মানুসারে বার বার বহু দেহে জন্মগ্রহণ করিয়া, পঞ্চ জ্ঞানেন্দ্রিয়ের সহিত আবার নবদ্বারযুক্ত নূতন দেহে প্রবেশ করে; সেইরূপ আদিপুরুষ শ্রীকৃষ্ণ, মৎস্য-কূর্ম্ম প্রভৃতি বহুদেহে বার বার আবির্ভূত হইয়া, তখন পঞ্চ পাণ্ডবের সহিত, নূতন দ্বারযুক্ত ইন্দ্রপ্রস্থ নগরীতে প্রবেশ করিলেন॥২৮॥

**अन्वयः**—यत्र नराः त्रिनेत्र-नयनानवेक्षित-स्मर-विग्रह-द्युतिभिः तनुभिः अद्युतन्; प्रमदाश्च राजयक्ष्मणः परतः निशाकर-मनोरमैः मुखैः खलु (अद्युतन्)॥२९॥

**टीका**—तनुभिरिति। यत्र पुरे नराः पुरुषाः त्रिनेत्रस्त्र्यम्बकः। "पूर्वपदात् संज्ञायाम्" इति णत्वं तु रघुनाथादिवत् णत्वरहितस्य संज्ञात्वे न प्रवर्त्तते। तस्य नयनेनानवेक्षितस्य अविग्रहस्य द्युतिरिव द्युतिर्यासान्ताभिस्तनुभिः मूर्त्तिभिः। "स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः। अद्युतन्द्योतन्ते स्म। द्युत दीप्तौ द्युद्भ्यो लुङीति विकल्पात् परस्मैपदम्, पुषादिसूत्रेण च्लेरङादेशः। प्रमदाः स्त्रियश्च राज्ञश्चन्द्रस्य यक्ष्मा राजयक्ष्मा क्षयरोगः "राजानं यक्ष्मा आरदिनि श्रवणात्। "राजयक्ष्मा क्षयः शोषः" इत्यमरः। तस्मात्परतः पूर्वमित्यर्थः निशाकरवन्मनोरमैरक्षीणेन्दुसुन्दरैरित्यर्थः मुखैरद्युतन् तत् पुरं प्रविष्ट इति पूर्वेणान्वयः। उपमयोः संसृष्टिः॥२९॥

**टिप्पनी**—तनुभिरिति। अत्र अद्युतन्नित्येकया क्रियया नराः प्रमदा इत्यनयोः कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता, द्वितीयपादे छेकानुप्रासश्चेति तयोरपि टीकोक्तसंसृष्टौ प्रवेशः। बन्धस्य गाढ़त्वात् समासबाहुल्याच्च ओजो गुणः, गौड़ी च रीतिः॥२९॥

**বাঙ্গালা**—যে পর্য্যন্ত মহাদেব তৃতীয় নয়ন দ্বারা কামদেবকে না দেখিয়াছিলেন, সে পর্য্যন্ত কামদেবের যেরূপ দেহকান্তি ছিল, সেই রূপ কান্তিযুক্ত দেহ দ্বারা পুরুষগণ যে ইন্দ্রপ্রস্থ নগরীতে শোভা পাইত এবং যক্ষ্মারোগ হইবার পূর্ব্বে চন্দ্র যেমন সুন্দর ছিলেন, সেইরূপ সুন্দর মুখদ্বারা রমণীরাও যে নগরীতে শোভা পাইত॥২৯॥

अवलोकनाय सुरविद्विषां द्विषः पटहप्रणादविहितोपहूतयः ।
अवधीरितान्यकरणीयसत्वराः प्रतिरथ्यमीयुरथ पौरयोषितः ॥३०॥
अभिवीक्ष्य सामिकृतमण्डनं यतीः कररुद्धनीविगलदंशुकाः स्त्रियः ।
दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तयः ॥३१॥

---

अन्वयः—अथ पटह-प्रणाद-विहितोपहूतयः (इव) पौरयोषितः सुरविद्विषां द्विषः अवलोकनाय अव-धीरितान्य-करणीय-सत्वराः (सत्यः) प्रतिरथ्यम् ईयुः ॥३०॥

टीका—अवलोकनायेति । अथ हरेः पुरप्रवेशानन्तरं पटहप्रणादैर्दुन्दुभिध्वनिभिः विहितोपहूतयः कृताह्वाना इवेत्यर्थः पुरे भवाः पौर्यस्ता योषितः पौरयोषितः । स्त्रियः पुंवद्भावः । सुरविद्विषाम् असुराणां द्विषो हरेरवलोकनाय दर्शनार्थमवधीरितान्यकरणीयाः त्यक्तान्यकार्य्याः ताश्च ताः सत्वराश्च ताः सत्यः रथ्यां प्रति प्रतिरथ्यम् । यथार्थेऽव्ययीभावः । ईयुः प्राप्ताः । एतेन स्त्रीणां हरिविलोकने कालाक्षमत्वलक्षणमौत्सुक्यमुक्तम् । अत्र पौराङ्गना-नाम्नः प्रवेशवाद्यश्रवणानन्तर्यात्तदुपह्वानोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥३०॥

टिप्पनी—अवेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३०॥

বাঙ্গালা—তদনন্তর, দুন্দুভিধ্বনি যেন পুরবাসিনী রমণীদিগকে আহ্বান করিতে লাগিল ; তাই তাহারা শ্রীকৃষ্ণকে দেখিবার জন্য, অন্য কার্য্য পরিত্যাগ করিয়া, সত্বর হইয়া, প্রত্যেক রাস্তায় উপস্থিত হইতে লাগিল ॥৩০॥

अन्वयः—सौधपङ्क्तयः सामिकृतमण्डनं यतीः कर-रुद्ध-नीवि-गल-दंशुकाः स्त्रियः अभिवीक्ष्य अधिभित्ति पटहप्रतिस्वनैः स्फुटम् अट्टहासम् इव दधिरे ॥३१॥

टीका—अथाष्टादशभिः पौराङ्गनाश्टङ्गारचेष्टां वर्णयति । अभीति । सामिकृतमण्डनं अर्द्धविरचितसाधनं यथा तथा यतीर्गच्छन्तीः । इणः शतरि ङीप् । कररुद्धनीवीनि करगृहीतग्रन्थीनि गलदंशुकानि स्रंसमानपरिधानानि यासां ताः लसदिति पाठान्तरं तदा स्रसदुल्लसदित्यर्थः । "अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोरिति शब्दार्णवे । स्त्रियः स्त्रीः अभिवीक्ष्य सौधपङ्क्तयः अधिभित्तिषु । विभक्त्यर्थेऽव्ययीभावः । पटहप्रतिस्वनैस्तुर्य्यप्रतिध्वनिभिः स्फुटमुद्गतम् अट्टहासम् उच्चैर्हसितमिव दधिरे इवेत्युत्प्रेक्षा । विकृतिदर्शनाद्धासो भवतीति भावः । अत्र कुतूहलाख्या चेष्टोक्ता । "कुतूहलं रम्यदृष्टौ चापल्यं परिकीर्त्तितमिति लक्षणात् ॥३१॥

टिप्पनी—अभीति । अत्र बन्धस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३१॥

বাঙ্গালা—স্ত্রীলোকেরা আধা-আধি বেশ-ভূষা করিয়াই চলিয়াছিল ; তখন তাহাদের পরিধেয় কাপড়গুলি খুলিয়া পড়িতেছিল, তাই তাহারা হাত দিয়া সে গুলির গিঁট ধরিয়া রুদ্ধ রাখিয়াছিল ; ইহা দেখিয়া অট্টালিকাগুলি যেন দেওয়ালে দুন্দুভির প্রতিধ্বনিরূপ সুস্পষ্ট অট্টহাস্য করিতে লাগিল ॥৩১॥

रभसेन हारपददत्तकाञ्चयः प्रतिमूर्द्धजं निहितकर्णपूरकाः।
परिवर्त्तिताम्बरयुगाः समापतन् वलयीकृतश्रवणपूरकाः स्त्रियः ॥३२॥
व्यतनोदपास्य चरणं प्रसाधिकाकरपल्लवाद्रसवशेन काचन।
द्रुतयावकैकपदचित्रितावनिं पदवीं गतेव गिरिजा हरार्द्धताम् ॥३३॥

---

अन्वयः—रभसेन हार-पद-दत्त-काञ्चयः प्रतिमूर्द्धजं निहितकर्णपूरकाः परिवर्त्तिताम्बरयुगाः वलयीकृतश्रवणपूरकाः स्त्रियः समापतन् ॥३२॥

टीका—रभसेनेति। रभसेन त्वरया हारपदे मुक्तादामस्थाने कण्ठे दत्तकाञ्चयो न्यस्तरशनाः प्रतिमूर्द्धजं मूर्द्धजेषु केशेषु। विभक्त्यर्थेऽव्ययीभावः। निहिताः कर्णपूरकाः कर्णावतंसा याभिस्ताः। परिवर्त्तितं विपर्य्यासेन धृतम् अम्बरयुगं वाससी याभिस्ताः। परिधानीकृतमुत्तरीयं कुचांशुकञ्च जघने दत्तमित्यर्थः। वलयीकृताः कङ्कणीकृताः श्रवणपूरकाः कुण्डलानि याभिस्ताः स्त्रियः समापतन् अधावन्। एतेन विभ्रमाख्या चेष्टोक्ता। "विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः" इति लक्षणात्। स च भ्रममूल इति भ्रान्तिमदलङ्कारो व्यज्यते ॥३२॥

टिप्पनी—रभसेनेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः। एतदनुरूपश्लोको यथा साहित्यदर्पणे तृतीयपरिच्छेदे—

"अलक्तकं वहिः कान्तम् असमाप्तविभूषया।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः" ॥३२॥

বাঙ্গালা—কতকগুলি স্ত্রীলোক ত্বরাবশতঃ মুক্তামালার জায়গায় (গলায়) চন্দ্রহার পরিয়া, চুলের উপরে কাণের অলঙ্কার রাখিয়া, পরিধেয় বস্ত্রকে উত্তরীয় করিয়া এবং উত্তরীয় বস্ত্রকে পরিধান করিয়া, আর কাণের কুণ্ডল হাতে দিয়া, আসিতে লাগিল ॥৩২॥

अन्वयः—काचन रसवशेन प्रसाधिकाकरपल्लवात् चरणम् अपास्य हरार्द्धतां गता गिरिजा इव द्रुतयावकैक-पद-चित्रितावनिं पदवीं व्यतनोत् ॥३३॥

टीका—व्यतनोदिति। काचन स्त्री रसवशेन हरिवीक्षणपारतन्त्र्येण। "गुणे द्रवे रसः" इत्यमरः। प्रसाधिकायाः अलङ्कर्त्र्याः करपल्लवाच्चरणमपास्य असमाप्यैवाक्षिप्य। हरार्द्धतां हरस्यार्द्धाङ्गतां गता अन्वर्थं कपाटालक्तकासम्भवादिति भावः। गिरिजा गौरीव। यावकेनार्द्रालक्तकेन एकपदेन चित्रिता चित्रवर्णीकृता अवनिर्यस्याः तां पदवीं व्यतनोदकरोत्। उपमालङ्कारः। एषा कुतूहलाख्या चेष्टा रसाद्दिदृक्षाजनितचापलरूपत्वादिति ॥३३॥

टिप्पनी—व्यतनोदिति। अत्र प्रसादो गुणः, पाञ्चाली च रीतिः। एतदनुरूपश्लोको यथा रघुवंशे सप्तमसर्गे—

"प्रसाधिकालम्बितमग्रपादम् आक्षिप्य काचित् द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षात् अलक्तकाङ्कां पदवीं ततान" ॥३३॥

ব্যচলন্ বিসঙ্কটকটীরকস্থলীশিখরস্খলন্মুখরমেখলাকুলাঃ ।
ভবনানি তুঙ্গতপনীয়সংক্রমক্রমণক্বণৎকনকনূপুরাঃ স্ত্রিয়ঃ ॥৩৪॥
অধিরুক্মমন্দিরগবাক্ষমুল্লসৎ সুদৃশো ররাজ মুরজিদ্দিদৃক্ষয়া ।
বদনারবিন্দমুদয়াদ্রিকন্দরাবিবরোদরস্থিতমিবেন্দুমণ্ডলম্ ॥৩৫॥

---

বাঙ্গালা—কোন রমণী শ্রীকৃষ্ণকে দে'খবার আগ্রহে, বেশ-ভূষাকারিণীর হাত হইতে আপনার পা'খানিকে টানিয়া লইয়া, শিবের অর্দ্ধাঙ্গিনী পার্বতীর ন্যায় একখানি পায়ের তরল আলতার চিহ্ন করিয়া করিয়া, পথটীকে চিত্রিত করিয়া দিল ॥৩৩॥

অন্বয়ঃ—বিসঙ্কট-কটীরক-স্থলী-শিখর-স্খলন্মুখরমেখলাকুলাঃ তুঙ্গ-তপনীয়-সংক্রম-ক্রমণ ক্বণৎ-কনক-নূপুরাঃ স্ত্রিয়ঃ ভবনানি ব্যচলন্ ॥৩৪॥

টীকা—ব্যচলন্নিতি। বিসঙ্কটানাং বিশালানাং কটীরকস্থলীনাং কটিভাগানাং শিখরেষু অগ্রেষু স্খলন্ত্যো লুঠন্ত্যোঽতএব মুখরাঃ শব্দায়মানাঃ তাভির্মেখলাভিরাকুলাঃ তুঙ্গেষু তপনীয়সংক্রমেষু কনকসোপানেষু ক্রমণেন ক্বণন্তঃ কনকনূপুরা যাসান্তাঃ স্ত্রিয়ঃ ভবনানি হর্ম্যাণি ব্যচলন্ তত্র গত্বারোহন্নিত্যর্থঃ। চলের্গত্যর্থাল্লঙ্। এতদপি পূর্ববদতিকুতূহলমেব। বৃত্ত্যনুপ্রাসোঽলঙ্কারঃ ॥৩৪॥

টিপ্পনী—ব্যচলন্নিতি। অত্র "বৃত্ত্যনুপ্রাসোঽলঙ্কারঃ" ইতি মল্লিনাথঃ। বস্তুতস্তু পূর্বার্দ্ধে কটকটীতি খরখরেতি ব্যঞ্জনসঙ্ঘস্য সকৃদনেকধা সাম্যাৎ যথা ছেকানুপ্রাসঃ, তথা তত্রত্যখকারমেকমাদায় স্খলদিতি খকারান্তরাবস্থিতেঃ একস্য সকৃৎসাম্যাৎ বৃত্ত্যনুপ্রাসোঽপীতি তয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ; পরার্দ্ধে তু ক্রমক্রমেতি পূর্ববদেব ছেকানুপ্রাস ইতি সমুদায়ে সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥৩৪॥

বাঙ্গালা—রমণীরা যখন অট্টালিকায় উঠিতেছিল, তখন তাহাদের চন্দ্রহারগুলি কটীদেশের উপরে চলিতে থাকিয়া 'ঝাৎ' 'ঝাৎ' শব্দ করিতেছিল এবং তাহাদিগকে আকুল করিয়া তুলিতেছিল; আবার উঁচু উঁচু সোণার সীঁড়িগুলি যখন অতিক্রম করিতেছিল, তখন সোণার নূপুরগুলি বাজিতেছিল ॥৩৪॥

অন্বয়ঃ—মুরজিদ্দিদৃক্ষয়া অধিরুক্মমন্দিরগবাক্ষম্ উল্লসৎ সুদৃশঃ বদনারবিন্দম্ উদয়াদ্রি-কন্দরা-বিবরোদরস্থিতম্ ইন্দুমণ্ডলম্ ইব ররাজ ॥৩৫॥

টীকা—অধীতি। মুরজিতো হরের্দিদৃক্ষয়া দ্রষ্টুমিচ্ছয়া। দৃশেঃ সনন্তাদপ্রত্যয়াদিতি স্ত্রিয়ামপ্রত্যয়ে টাপ্। রুক্মমন্দিরস্য কনকহর্ম্যস্য গবাক্ষে অধিরুক্মমন্দিরগবাক্ষম্। বিভক্ত্যর্থেঽব্যয়ীভাবঃ। উল্লসৎ প্রকাশমানং সুদৃশঃ স্ত্রিয়া বদনারবিন্দম্ উদয়াদ্রিকন্দরাবিবরোদরস্থিতং তত্র স্থিতমিন্দুমণ্ডলমিব ররাজেত্যুপমা। অত্রাপি সুদৃশো গবাক্ষাক্রমণস্য রম্যদর্শনার্থং চাপলরূপত্বাৎ কুতূহলমেব মুরজিদ্দিদৃক্ষয়েত্যাদিনা ব্যক্তমেব ॥৩৫॥

টিপ্পনী—অধীতি। অত্র দ্বিতীয়ে তৃতীয়ে চ পাদে ছেকানুপ্রাস ইতি টীকোক্তয়োপময়া সহ সংসৃষ্টিঃ। মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ। এতদনুরূপশ্লোকৌ যথা রঘুবংশকুমারসম্ভবয়োঃ সপ্তমসর্গে—

अधिरूढ़या निजनिकेतमुच्चकैः पवनावधूतवसनान्तयैकया ।
विहितोपशोभमुपयाति माधवे नगरं व्यरोचत पताकयेव तत् ॥३६॥
करयुग्मपद्ममुकुलापवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् ।
अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥३७॥

---

"तासां मुखैरासवगन्धगर्भैः व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन्" ॥३५॥

বাঙ্গালা—সুন্দরীরা শ্রীকৃষ্ণকে দেখিবার জন্য স্বর্ণময় গৃহের গবাক্ষের নিকট যাইতে লাগিল; তখন উদয়াচলের গুহার ভিতরে স্থিত চন্দ্রমণ্ডলের ন্যায়, তাহাদের মুখপদ্ম সকল সেই গবাক্ষের ভিতরে শোভা পাইতে লাগিল ॥৩৫॥

অন্বয়:—উচ্চকৈঃ নিজনিকেতম् अधिरूढ़या पवनावधूतवसनान्तया एकया तत् नगरं माधवे उपयाति (सति) पताकया विहितोपशोभम् इव व्यरोचत ॥३६॥

টীকা—अधीति । उच्चकैर्निजानिकेतं स्वसौधमधिरूढ़या आरूढ़वत्या पवनेनावधूतः कम्पितः वसनान्तो वस्त्राञ्चलो यस्यास्तया एकया कयाचिदङ्गनया हेतुना तन्नगरम् इन्द्रप्रस्थं माधवे उपयात्यागच्छति । यातेर्लटः शत्रादेशः । पताकया वैजयन्त्या विहितोपशोभं कृतशोभमिवालङ्कृतमित्युत्प्रेक्षा । व्यरोचत व्यराजत । अत्रस्त्रस्यापि नगरस्य स्वयं पताकेव बभावित्युत्प्रेक्षा । तस्याः सकलपौराङ्गनातिशायि लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । अत्रापि प्रासादारोहणं पूर्ववत् कुतूहलमेव ॥३६॥

টিপ্পনী—अधीति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३६॥

বাঙ্গালা—একটী রমণী স্বকীয় অত্যুচ্চ অট্টালিকার উপরে আরোহণ করিয়াছিল; তখন বায়ু তাহার বস্ত্রাঞ্চল কম্পিত করিতেছিল; তাহাতে বোধ হইতেছিল যে শ্রীকৃষ্ণ আসিতেছিলেন বলিয়া সেই ইন্দ্রপ্রস্থনগর যেন পতাকা দ্বারা অলঙ্কৃত হইয়া শোভা পাইতেছে ॥৩৬॥

অন্বয়:—प्रतिवेश्म अङ्गनाः करयुग्म-पद्ममुकुलापवर्जितैः लाजकुसुमैः अवदीर्ण-शुक्तिपुट-मुक्त-मौक्तिकप्रकरैः इव (स्थितैः) प्रियरथाङ्गम् अवाकिरन् ॥३७॥

টীকা—करेति । प्रतिवेश्म वेश्मनि । विभक्त्यर्थेऽव्ययीभावः । अङ्गनाः पुरस्त्रियः । करयुग्मान्यञ्जलयस्तानि पद्ममुकुलानीवेत्युपमितसमासः । तैरपवर्जितैस्त्यक्तैरवदीर्णैर्विभिन्नैः शुक्तिपुटैः शुक्तिकोशैः मुक्ता उत्सृष्टा ये मौक्तिकप्रकरा मुक्तानिकरास्तैरिव स्थितैरित्युत्प्रेक्षा । लाजाः कुसुमानीव तैः लाजकुसुमैः आचारलाजैरित्यर्थः । प्रियं रथाङ्गं चक्रं यस्य तं प्रियरथाङ्गं चक्रिणं हरिमित्यर्थः । अवाकिरन् छादयामासुः ॥३७॥

টিপ্পনী—करेति । अत्र तृतीयपादे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, चतुर्थपादे पुनश्छेकानुप्रास इति टीकोक्तलुप्तोपमोत्प्रेक्षाभ्यां संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ॥३७॥

हिममुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ॥३८॥
धरणीधरेन्द्रदुहितुर्भयादसौ विषमेक्षणः स्फुटममून् पश्यति ।
मदनेन वीतभयमित्यधिष्ठिताः क्षणमीक्षते स्म स पुरो विलासिनीः ॥३९॥

---

**বাঙ্গালা**—কোন মন্দিরে থাকিয়া, রমণীরা পদ্মকলিকার ন্যায় করযুগল দ্বারা পুষ্প-তুল্য খই নিক্ষেপ করিয়া শ্রীকৃষ্ণকে আবৃত করিল; তখন শুক্তি (ঝিনুক) হইতে নির্গত মুক্তাসমূহের ন্যায় সেই খইগুলি শোভা পাইতে লাগিল ॥৩৭॥

**अन्वयः**—हिम-मुक्त-चन्द्र-रुचिरः सपद्मकः द्विजान् मदयन् जनितमीनकेतनः प्रसादितसुरः सः माधवः प्रमदाजनस्य चिराय महोत्सवः अभवत् ॥३८॥

**टीका**—हिमेति। हिममुक्तः शिशिरापगमाद्धिमान्निर्मुक्तो यश्चन्द्रः स इव रुचिरः। अन्यत्र तेन रुचिरः। पद्मेन पद्मया च सह वर्त्तत इति सपद्मः स एव सपद्मकः। पद्महस्तः श्रीकश्च। शैषिकः स्वार्थिको वा कप्प्रत्ययः। अन्यत्र सपङ्कजः। शैषिकः कप्रत्ययः। द्विजान् ब्राह्मणान् अन्यत्र पक्षिगणान् कोकिलादीन् मदयन् हर्षयन् जनितमीनकेतनः प्रद्युम्नजनकः अन्यत्र मदनोद्दीपकः। प्रसादिता अनुगृहीताः सुरा देवा येन। अन्यत्र प्रसादिता निर्मलीकृता सुरा मदिरा यस्मिन् स माधवो हरिर्वसन्तश्च। "माधवस्तु वसन्ते स्याद्वैशाखे गरुड़ध्वजे" इति विश्वः। प्रमदैव जनस्तस्य प्रमदाजनस्य। जातावेकवचनम्। चिराय महोत्सवोऽभवत्, तद्वदानन्दकरोऽभूदित्यर्थः। इष्टानन्दकरत्वसाम्येन माधवे महोत्सवरूपणात् रूपकसिद्धिः। श्लेषस्तु हरिवसन्तयोरिह नास्त्येव। प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात्। किन्तु शब्दशक्तिमूलो ध्वनिरेव ॥३८॥

**टिप्पनी**—हिमेति। अत्र हिमेत्यादिविशेषणे लुप्तोपमा। "शब्दशक्तिमूलो ध्वनिरेव" इति मल्लिनाथः। ध्वनिरुपमालङ्कारध्वनिरित्यर्थः, "एकः शब्दार्थशक्त्युत्थे" इत्यत्र दर्पणकृता तथैवाभिहितत्वात्। प्रसादो गुणः, वैदर्भी च रीतिः ॥३८॥

**বাঙ্গালা**—হিমের সময় অতীত হইলে চন্দ্র যেমন সুন্দর হন, সেইরূপ সুন্দর, পদ্মধারী, ব্রাহ্মণগণের আনন্দজনক, কামদেবের উৎপাদক এবং দেবগণের প্রতি অনুগ্রহকারক সেই শ্রীকৃষ্ণ বহুকাল যাবৎ রমণীগণের মহোৎসবস্বরূপ হইয়াছিলেন ॥৩৮॥

**अन्वयः**—असौ विषमेक्षणः धरणीधरेन्द्रदुहितुः भयात् अमूः स्फुटं न पश्यति (इव); इति मदनेन वीतभयम् अधिष्ठिताः पुरः विलासिनीः सः क्षणम् ईक्षते स्म ॥३९॥

**टीका**—धरणीति। असौ रुद्राख्यो विषमेक्षणस्त्र्यक्षः धरणीधरेन्द्रदुहितुः पार्वत्याः सपत्नीशङ्किन्या इति भावः। "भीत्रार्थानां भयहेतुरिति पञ्चमी। भयात् स्फुटम् अमूः पौरयोषितः न पश्यतीति हेतोरिति विश्वासादित्यर्थः। अतएव गम्योत्प्रेक्षा। मदनेन वीतभयमधिष्ठिता आक्रान्ता अत्यारूढमदना इत्यर्थः पुरो विलासिनीः स हरिः क्षणमीक्षते स्म सविभ्रममिति भावः ॥३९॥

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥४०॥
अधिकोन्नमद्घनपयोधरा मुहुः प्रचलत्कलापिकलशिञ्जकस्तना।
अभिकृष्णमङ्गुलिमुखेन काचन द्रुतमेककर्णविवरं व्यघट्टयत् ॥४१॥

---

टिप्पनी—धरणीति। अत्र प्रथमे अन्तिमे च पादे छेकानुप्रास इति टीकोक्तप्रतीयमानोत्प्रेक्षया सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—ঐ মহাদেব পার্বতীর ভয়ে স্পষ্টভাবে ঐ রমণীগণকে যেন দেখেন না; তাই কামদেব নির্ভয়ে উঁহাদের উপরে অধিষ্ঠান করেন; এহেন পৌররমণীগণকে শ্রীকৃষ্ণ কিছু কাল দেখিলেন ।৩৯॥

अन्वयः—युगक्षये सागरशयस्य यस्य विपुलेन कुक्षिणा भुवनानि पपिरे; एकतमया पुरस्त्रिया मद-विभ्रमासकलया एकया दृशा सः पुनः पपे ॥४०॥

टीका—विपुलेति। युगक्षये कल्पान्ते। सागरे शेते इति सागरशयस्य। अधिकरणे शेतेरित्यच् प्रत्ययः, "शयवासवासिष्वकालादिति विकल्पादलुगभावः। यस्य हरेर्विपुलेन कुक्षिणा भुवनानि पपिरे पीतानि। पिबतेः कर्मणि लिट्। स हरिरेकतमया पुरस्त्रिया पुनः कयाचित् पौराङ्गनया मदविभ्रमेण मदविकारेणासकलया असमग्रया एकया दृशा पपे पीतः सतृष्णं दृष्ट इत्यर्थः। कुक्षिकोणनिविष्टनिखिलविष्टपस्य हरेरंहतः आधेयस्यात्यल्पतरं कन्याकटाक्षकोणाधारत्वोक्त्या चमत्कारादधिकालङ्कारः। "आधाराधेययोरानुरूप्याभावोऽधिको मत" इति लक्षणात्। अयञ्च तात्कालिकविकारात्मा विलासाख्यो भावो यत्कटाक्षवीक्षणम्। "तात्कालिकविकारः स्याद्विलासोऽङ्गक्रियादिष्विति दशरूपकात् ॥४०॥

टिप्पनी—विपुलेनेति। अत्र चतुर्थपादे छेकानुप्रास इति टीकोक्ताधिकालङ्कारेण सह तस्य संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४०॥

বাঙ্গালা—প্রলয়কালে সমুদ্রে শয়ন করিয়া থাকা অবস্থায় যাঁহার বিশাল উদর, সমস্ত জগৎকে পান করিয়াছিল; সেই শ্রীকৃষ্ণকেই কিন্তু ইন্দ্রপ্রস্থের কোন স্ত্রীলোক, মদবিলাস-বশতঃ অসম্পূর্ণ একটি নয়ন দ্বারাই পান করিতে লাগিল ।৪০॥

अन्वयः—काचन अभिकृष्णम् अधिकोन्नमद्घन-पयोधरा मुहुः प्रचलत्कलापि-कल-शिञ्जक-स्तना (च सती) अङ्गुलिमुखेन द्रुतम् एककर्णविवरं व्यघट्टयत् ॥४१॥

टीका—अधिकेति। काचन कान्ता अभिकृष्णं कृष्णाभिमुखम्। आभिमुख्येऽव्ययीभावः। अधिकं भुजोन्नमनादुद्गच्छन्नमन् घनः कठिनः पयोधरः स्तनो यस्याः सा मुहुः प्रचलती नृत्यतः कलापिनो बर्हिण इव कलो मधुरः शिञ्जकस्वनो वलयध्वनिर्यस्याः सा सती। "शिञ्जकं वलये वाद्याविति विश्वः। अङ्गुलिमुखेनाङ्गुल्यग्रेण कस्य कर्णस्य विवरं

পরিপাটলাজদলচারুণাসকৃচ্চলিতাঙ্গুলীকিসলয়েন পাণিনা।
সশিরঃপ্রকম্পমপরা রিপুং মধোরনুদীর্ণবর্ণনিভৃতার্থমাহ্বয়ৎ ॥৪২॥
নলিনান্তিকোপহিতপল্লবশ্রিয়া ব্যবধায় চারু মুখমেকপাণিনা।
স্ফুরিতাঙ্গুলীবিবরনিঃসৃতোল্লসদ্দশনপ্রভাঙ্কুরমজৃম্ভতাপরা ॥৪৩॥

---

রন্ধ্রং দ্রুতং শীঘ্রং ব্যঘট্টয়ৎ। কণ্ডূবিনোদার্থমিবাতাড়য়ৎ। বস্তুতস্তু ভাবাবিষ্করণার্থমে-বেতি ভাবঃ। অয়ঞ্চ পূর্ববদ্বিলাস এব। কণ্ডূয়িকেত্যুপমা ॥৪১॥

**টিপ্পনী**—অধিকেতি। অত্র দ্বিতীয়পাদে ছেকানুপ্রাসোঽলঙ্কারঃ টীকোক্তোপময়া সংসৃজ্যতে। মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥৪১॥

**বাঙ্গালা**—কোন রমণী শ্রীকৃষ্ণের অভিমুখে থাকিয়া অঙ্গুলীর অগ্র দ্বারা একটি কর্ণ-বিবরকে দ্রুত ঘট্টিত করিতে লাগিল; তখন হস্ত উত্তোলন করায় তাহার নিবিড় স্তন-যুগল আরও অধিক উন্নত হইল এবং অনবরত সঞ্চালিত হস্তশঙ্খ হইতে, ময়ূরের রবের ন্যায় অব্যক্ত মধুর রব হইতে থাকিল ॥৪১॥

**অন্বয়ঃ**—অপরা পরিপাটলাজ-দল-চারুণা অসকৃচ্চলিতাঙ্গুলী-কিসলয়েন পাণিনা সশিরঃকম্পম্ অনুদীর্ণ-বর্ণ-নিভৃতার্থং মধোঃ রিপুম্ আহ্বয়ৎ ॥৪২॥

**টীকা**—পরীতি। অপরা স্ত্রী। পরিপাটলাজদলচারুণা রক্তাজপত্রমনোহরেণ অসকৃচ্চলিতান্যঙ্গুল্যঃ কিসলয়ানীবাঙ্গুলীকিসলয়ানি যস্য তেন পাণিনা সশিরঃপ্রকম্পং শিরঃকম্পযুক্তং যথা তথা মধোরিপুং হরিম্ অনুদীর্ণবর্ণম্ অনুচ্চারিতাক্ষরম্ অতএব নিভৃ-তার্থং পরৈরবিদিতার্থং যত্তদনুদীর্ণবর্ণনিভৃতার্থং যথা তথা আহ্বয়ৎ পরপ্রকাশনভয়াদ-ব্যাহরন্তী চেষ্টয়ৈবাহ্বানং কৃতবতীত্যর্থঃ। অত্রাপি পূর্ববদ্বিলাসোপমে ভাবালঙ্কারৌ ॥৪২॥

**টিপ্পনী**—পরীতি। অত্র প্রথমপাদদ্বয়ে বৃত্ত্যনুপ্রাসঃ শেষপাদে চ ছেকানুপ্রাস ইতি টীকোক্তোপমাভ্যাং সংসৃষ্টিঃ। মধুররচনাবশাচ্চ মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥৪২॥

**বাঙ্গালা**—অন্য কোন রমণী, কোন বাক্য উচ্চারণ না করিয়া, অন্যের অবিদিত ভাবে হস্ত দ্বারা শ্রীকৃষ্ণকে আহ্বান করিতে লাগিল; তখন তাহার হস্তখানি, রক্ত পদ্মদলের ন্যায় মনোহর দেখা যাইতেছিল, পল্লবের ন্যায় অঙ্গুলীসমূহ অনবরত চলিতেছিল এবং মস্তকও কম্পিত হইতেছিল ॥৪২॥

**অন্বয়ঃ**—অপরা নলিনান্তিকোপহিত-পল্লব-শ্রিয়া একপাণিনা চারু মুখং ব্যবধায় স্ফুরিতাঙ্গুলী-বিবর-নিঃসৃতোল্লসদ্দশনপ্রভাঙ্কুরম্ অজৃম্ভত ॥৪৩॥

**টীকা**—নলিনেতি। অপরা স্ত্রী নলিনান্তিকে উপহিতস্য পল্লবস্য শ্রীরিব শ্রীর্যস্য তেন সুখ-সন্নিধানাদিতি ভাবঃ। একপাণিনা চারু নিসর্গসুন্দরং মুখং ব্যবধায় তিরোধায় স্ফুর-দঙ্গুলীবিবরান্নিঃসৃতা উজ্জ্বলাঙ্গুল্যন্তরালনির্গতা অতএবোল্লসন্ত উল্লসন্তো দশনপ্রভা এবা-ঙ্কুরা যস্মিন্ কর্মণি তদ্যথা তথা অজৃম্ভত জৃম্ভণমকরোৎ বিবরস্য তচ্ছ স্ববস্তুসাক্ষাৎকারচ্ছলেন

वलयार्पितासितमहोपलप्रभावहुलीकृतप्रतनुरोमराजिना ।
हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बरं दधे ॥४४॥
निजसौरभभ्रमितभृङ्गपक्षतिव्यजनानिलक्षयितघर्मवारिणा ।
अभिशौरि काचिदनिमिषदृष्टिना पुरदेवतेव वपुषा व्यभाव्यत ॥४५॥

---

जाद्यानुभावः । अत्र नलिनपल्लवयोरसम्बन्धयोः सम्भावनया सम्बन्धाभिधानादति-शयोक्तिः ॥४३॥

टिप्पनी—नलिनेति । अत्रापि गुणरीती पूर्ववत ॥४३॥

বাঙ্গালা—একটি পদ্মের নিকটে একটি পল্লব রাখিলে তাহার যেমন শোভা হয়, সেই রূপ শোভাযুক্ত একখানি হস্তদ্বারা মনোহর মুখ খানিকে ব্যবধান করিয়া, অপর কোন রমণী হাঁই তুলিতে লাগিল; তখন তাহার কম্পিত অঙ্গুলীসমূহের বিবর হইতে ক্ষুদ্র ক্ষুদ্র দন্তের প্রভা সকল নির্গত হইয়া শোভা পাইতে থাকিল ॥৪৩॥

अन्वयः—हरिवीक्षणाक्षणिकचक्षुषा अन्यया वलयार्पितासितमहोपल-प्रभा-बहुलीकृत-प्रतनु-रोम-राजिना करपल्लवेन गलत् अम्बरं दधे ॥४४॥

टीका—वलयेति । हरिवीक्षणे अक्षणिकचक्षुषा स्थिरदृष्ट्या विस्मयादराभ्यां स्तिमित-नेत्रयेत्यर्थः । अन्यया स्त्रिया गलत् सुखपारवश्यात् स्रंसमानमम्बरं वलयेष्वर्पिताः खचिता ये असितमहोपला नीलमहामणयः । "उपलो मणिपाषाणाविति विश्वः । तेषां प्रभाभिर्बहुली-कृता सान्द्रीकृता प्रतनुः सूक्ष्मा रोमराजिर्यस्य तेन करपल्लवेन दधे धृतम् । अयञ्च तात्कालिक-विहारलक्षणविलासः । अत्रेन्द्रनीलप्रभायां रोमावलीबहुलीकरणोक्त्या प्रभास्वपि रोमराजित्व-प्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः ॥४४॥

टिप्पनी—वलयेति । अत्र द्वितीयपादे वृत्त्यनुप्रासोऽलङ्कारः । गुणरीती पूर्ववत् । एतत्तुल्यश्लोको यथा रघुवंशसप्तमसर्गे—

"जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥४४॥

বাঙ্গালা—অন্য কোন রমণী, বিস্ময় ও আদরবশতঃ স্থিরদৃষ্টিতে শ্রীকৃষ্ণকে দেখিতেছিল; তখন তাহার পরিধানের কাপড়খানি খুলিয়া পড়িতেছিল; সুতরাং সে তাহা হাত দিয়া ধরিয়া রাখিয়াছিল; তাই তাহার বালাতে যে নীলমণি বসান ছিল, তাহার কিরণে হাতের লোমগুলিকে আরও বেশী করিয়াছিল ॥৪৪॥

अन्वयः—काचित् निज-सौरभ-भ्रमित-भृङ्ग पक्षति-व्यजनानिल-क्षयित-घर्मवारिणा अभिशौरि अनि-मिष-दृष्टिना वपुषा पुरदेवता इव व्यभाव्यत (लोकैः) ॥४५॥

टीका—निजेति । काचित् स्त्री निजेनात्मीयेन सौरभेण सौगन्ध्येन भ्रमितानां भ्रमणं कारितानां भृङ्गाणां पक्षतयः पक्षमूलानि । "स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षा-

अभियाति नः सतृष एष चक्षुषो हरिरित्यखिद्यत नितम्बिनीजनः।
न विवेद यः सततमेनमीक्षते न वितृष्णतां व्रजति खल्वसावपि ॥४६॥

---

त्विषिति तिप्रत्ययः। ता एव व्यजनानि इति रूपकं स्वेदहरणलिङ्गात्। तासामनिलेन च्युतितं नाशितं धर्मवारि स्वेदो यस्य तेन अभिमुखी शौरिरभिमुखम्। आभिमुख्येऽव्ययीभावः। अनिमेषा दृष्टिर्यस्य तेन वपुषा निमित्तेन पुरदेवतेव इन्द्रप्रस्थाधिदेवतेव व्यभाव्यत विभाविता तर्किंतेति यावत्। अनिमेषत्वञ्चेदं तज्जन्यजाड्यसञ्चार्य्यनुभावः। "अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः। अनिमेषनयननिरीक्षणतूष्णींभावादयस्तत्रे"ति लक्षणात्। इत्थाङ्गसौरभानिमेषत्वाभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्षते इत्युपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षा तया चास्या जात्याः पद्मिनीत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः निजसौरभेत्यनेन। "कमलमुकुलमृद्वी फुल्लराजीवगन्धिः सुरतपयसि यस्याः सौरभं दिव्यमङ्ग" इत्यादिपद्मिनीलक्षणोपलक्षणादिति। विपुलेनेत्यादिश्लोकोक्ताः षडपि नायिकाः प्रौढ़ाः साधारणस्त्रः तत्र तासामसम्भवात् अन्यथासां स्रुतचेष्टावर्णनानौचित्यादित्यलं अतिप्रपञ्चेन ॥४५॥

**टिप्पनी**—त्विषीति। अत्र समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥४५॥

**বাঙ্গালা**—অন্য কোন রমণী, শ্রীকৃষ্ণের অভিমুখে নির্নিমেষ নয়নে দাঁড়াইয়া রহিয়াছিল; তখন তাহার নিজের শরীরের সৌরভে কতকগুলি ভ্রমর আসিয়া ঘুরিতেছিল; সে গুলির পক্ষরূপ ব্যজনের বায়ুতে সেই রমণীর ঘর্ম্মজল দূর করিয়াছিল; সুতরাং জনসাধারণ সেই রমণীটীকে ইন্দ্রপ্রস্থনগরীর অধিষ্ঠাত্রী দেবীর ন্যায় মনে করিতেছিল ॥৪৫॥

**अन्वयः**—एषः हरिः सतृषः नः चक्षुषः अभियाति इति नितम्बिनीजनः अखिद्यत; (किन्तु) यः एनं सततम् ईक्षते, असौ अपि खलु न वितृष्णतां व्रजति (इति) न विवेद ॥४६॥

**टीका**—अभियातीति। असौ नितम्बिनीजनः स्त्रीजनः नोऽस्माकं चक्षुषः सतृषः सतृष्णस्यैव सतश्चक्षुषि सतृष्णे सत्येव अनादृत्येत्यर्थः। "षष्ठी चानादर" इति षष्ठी। एष हरिरभियात्यभिगच्छतीत्यखिद्यत खेदङ्गतः। खिदेर्दैवादिकात् कर्त्तरि लङ्। अतीतमीक्षतेति। यो जन एनं हरिं सततमीक्षते असावपि खलु वितृष्णतां न व्रजतीति न विवेद नित्यदर्शनेऽप्यपूर्ववदेव भवतीति नाबुध्यतेत्यर्थः। वेद चेन्नाखिद्यतेति भावः। अत्राखिद्यतेति स्त्रीणां प्रारब्धहरिवीक्षणसुखविच्छेदकृतविषादाख्यसञ्चारिभावनिबन्धनात् प्रेयोऽलङ्कारः तदुत्थापिता चेयमुक्तावेदनोत्प्रेक्षेति सङ्करः। "प्रारब्धकार्य्यासिद्ध्यादेर्विषादः सत्त्वसङ्क्षय" इति दशरूपके। सत्त्वसङ्क्षयश्चित्तभङ्गः ॥४६॥

**टिप्पणी**—अभीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

**বাঙ্গালা**—শ্রীকৃষ্ণকে দেখিবার জন্য আমাদের নয়ন তৃষ্ণাকুল থাকা সত্ত্বেই তিনি চলিয়া গেলেন এই বলিয়া স্ত্রীলোকেরা খেদ করিতে লাগিল; কিন্তু তাহারা জানে নাই যে, যে ব্যক্তি সর্বদাই ইঁহাকে দেখে, সেও বিতৃষ্ণতা প্রাপ্ত হয় না ॥৪৬॥

अकृतस्वसद्मगमनादरः क्षणं लिपिकर्मनिर्मित इव व्यतिष्ठत ।
गतमच्युतेन सह शून्यतां गतः प्रतिपालयन्मन इवाङ्गनाजनः ॥४७॥
अलसैर्मदेन सुदृशः शरीरकैः स्वगृहान् प्रति प्रतिययुः शनैः शनैः ।
अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ॥४८॥

---

अन्वयः—अङ्गनाजनः अच्युतेन सह गतं मनः प्रतिपालयन् इव शून्यतां गतः अकृतस्वसद्मगमनादरः (सन्) लिपिकर्मनिर्मितः इव क्षणं व्यतिष्ठत ॥४७॥

टीका—अकृतेति । अङ्गनाजनः अच्युतेन सह गतं मनः प्रतिपालयन् प्रतीक्षमाण इवेत्युत्प्रेक्षा । शून्यतां नीरजस्कतां गतः । अकृतस्वसद्मगमनादरः निवृत्तनिजगृहप्राप्त्यपेक्षः सन् लिपिकर्मनिर्मितः चित्रलिखित इव इत्युत्प्रेक्षा । क्षणं व्यतिष्ठत विस्पन्दमास्तेत्यर्थः । "व्यवप्रविभ्यः स्थ" इत्यात्मनेपदम् । अतः शून्यतानुभावाच्चिन्तावगम्यते । "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृदिति दशरूपके । अनयोरुत्प्रेक्षयोः सापेक्षत्वात् सङ्करः ॥४७॥

टिप्पनी—अकृतेति । अत्र द्वितीये पादे छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४७॥

বাঙ্গালা—আপন আপন মন শ্রীকৃষ্ণের সঙ্গে চলিয়া গিয়াছিল ; স্ত্রীলোকেরা যেন সেই মনগুলির প্রতীক্ষা করিতে থাকিয়া শূন্য অবস্থায় দাঁড়াইয়া রহিয়াছিল, কিন্তু আপন আপন গৃহে যাইবার জন্য একেবারেই আগ্রহ প্রকাশ করিতেছিল না ; তাই তাহারা ক্ষণ-কাল যেন চিত্রিতের ন্যায় অবস্থান করিতেছিল ॥৪৭॥

अन्वयः—अलघु-प्रसारित-विलोचनाञ्जलि-द्रुत-पीत-माधव-रसौघ-निर्भरैः मदेन अलसैः शरीरकैः (उपलक्षिताः) सुदृशः स्वगृहान् प्रति शनैः शनैः प्रतिययुः ॥४८॥

टीका—अलसैरिति । । अलघु अधिकं प्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतं सत्वरम् । "लघु क्षिप्रमरं द्रुतमित्यमरः । पीतो यो माधवो हरिरेव रसोऽमृतम् अन्यत्र मधु मद्यं तत्सम्बन्धि रसो माधुर्यं माधवरसः । "रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोरिति वैजयन्ती । तस्यौघः समूहस्तेन निर्भरैर्दुर्भरैः गुरुभिरिति यावत् अतएव मदेनालसैर्मन्थरैः शरीरकाल्पशरीरैरित्यर्थः । "अल्प इति परिमाणे कन्प्रत्ययः । तैरुपलक्षिताः सुदृशः शनैः शनैः स्वगृहान् प्रतिययुः प्रतिनिर्गताः स्वयं लघून्यपि द्रव्याणि रसद्रवभरणाद्गुरूभवन्तीति भावः । अत्र माधवरसौघनिर्भरत्वविशेषणगत्या शनैः शनैः प्रतियानहेतुत्वात् काव्यहेतुकं काव्यलिङ्गं तच्च माधवरसेनेति श्लेषमूलातिशयोक्त्युत्थापितमिति सङ्करः ॥४८॥

टिप्पनी—अलसैरिति । अत्र विलोचनाञ्जलीति निरङ्गं केवलरूपकम्, द्वितीयपादे छेकानुप्रासोऽपीति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । तथा प्रथमार्द्धेन वाक्यसमाप्तावपि पुनस्तदन्तर्गतस्य शरीरकैरित्यस्य विशेषणतया द्वितीयार्द्धोपादानात् समाप्तपुनरात्तत्वदोषः ; द्वितीयार्द्धस्य प्राक् पाठेनास्य परिहार्यः । समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥४८॥

नवगन्धवारिविरजीकृताः पुरो घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोच्छ्रितध्वजविलम्बिवाससः पुरवीथयोऽथ हरिणातिपेतिरे ॥४९॥
उपनीय बिन्दुसरसो मयेन या मणिदारु चारु किल वार्षपर्वणम् ।
विदधेऽवधूतसुरसद्मसम्पदं समुपासदत्सपदि संसदं स ताम् ॥५०॥

---

বাঙ্গালা—সুন্দরীরা আস্তে আস্তে আপন আপন গৃহের দিকে ফিরিয়া যাইতে লাগিল ; কারণ, তাহারা অত্যন্ত বিস্তৃত নয়নরূপ অঞ্জলি দ্বারা তাড়াতাড়ি প্রচুর পরিমাণে মাধবরস (কৃষ্ণমন্ত) পান করিয়াছিল কিনা ; তাই তাহাদের শরীরগুলি ভারী হইয়াছিল এবং ; মত্ততায় অলস হইয়াছিল ।৪৮।

अन्वयः—अथ हरिणा पुरः नव-गन्ध-वारि-विरजीकृताः घन-धूप-धूम-कृत-रेणु विभ्रमाः प्रचुरोच्छ्रित-ध्वज-विलम्बि-वाससः पुरवीथयः अतिपेतिरे ॥४९॥

टीका—नवेति । अथ पुरप्रवेशानन्तरं हरिणा पुरः पूर्वं नवगन्धवारिभिर्गन्धवासितोदकैः विरजीकृता अविरजसो विरजसः सम्पद्यमानाः कृताः । "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चे"त्यभूततद्भावे च्विप्रत्यये सलोपः अस्य च्वावितीकारः घनैः सान्द्रैर्धूपानामगुरुधूपानां धूमैः कृतो रेणुविभ्रमो रजोभ्रमो याभिस्ताः प्रचुरं बहुलमुच्छ्रितेषु उच्छ्रितेषु ध्वजेषु ध्वजस्तम्भेषु विलम्बीनि विलम्बमानानि वासांसि पताका यासु ताः पुरवीथयोऽतिपेतिरेऽतिपातिताः अतिक्रान्ता इत्यर्थः । पतेः कर्मणि लिट् एत्वाभ्यासलोपौ । अत्र सादृश्याद्भूरेणुभ्रान्त्या भ्रान्तिमदलङ्कारः रेणुविभ्रमशब्देन रजोविलासस्यापि प्रतीतेस्तस्य विरजीकरणेन विरोधाद्विरोधाभासश्चेति अनयोरेकवाचकानुप्रवेशलक्षणः सङ्करः ॥४९॥

टिप्पनी—नवेति । अत्र प्रथमे पादे छेकानुप्रासः, द्वितीयचतुर्थयोस्तु वृत्त्यनुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः । समासबाहुल्यान् गुणरीती पूर्ववत् ॥४९॥

বাঙ্গালা—তদনন্তর, শ্রীকৃষ্ণ প্রথমে ইন্দ্রপ্রস্থের অনেক রাস্তা অতিক্রম করিলেন ; নূতন গন্ধজল দ্বারা সেই রাস্তা গুলির ধূলি দূর করিয়াছিল ; নিবিড় ধূপের ধূমে আবার সেই ধূলির ভ্রম জন্মাইতেছিল এবং বহুতর ধ্বজের উপরে বহু পরিমাণে পতাকা ঝুলাইয়া দিয়াছিল ॥৪৯॥

अन्वयः—मयेन बिन्दुसरसः वार्षपर्वणं चारु मणिदारु उपनीय या किल विदधे ; सः अवधूत-सुर-सद्म-सम्पदं तां संसदं सपदि समुपासदत् ॥५०॥

टीका—उपनीयेति । मयेनासुरशिल्पिना वृषपर्वा नाम कश्चिदसुरेश्वरः वृषपर्वण इदं वार्षपर्वणम् । तस्येदमित्यण् । चारु मनोहरं मणिरेव दारु काष्ठं मणिमयं स्तम्भादिकलापमित्यर्थः । तद्बिन्दुसरसो हैमवतात्सरोविशेषात् उपनीय समीपमानीय किलेत्यैतिह्ये या संसत् विदधे निर्मिता । अवधूता अधरीकृता सुरसद्मसम्पत् इन्द्रभवनलक्ष्मीर्यया सा तां संसदं सभाम् । "सभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः" इत्यमरः ।

अधिरात्रि यत्र निपतन्नभोलिहां कलधौतधौतशिलवेश्मनां रुचौ ।
पुनरप्यवापदिव दुग्धवारिधिक्षणगर्भवासमनिदाघदीधितिः ॥५१॥
लयनेषु लोहितकनिर्मिता भुवः शितिरत्नरश्मिहरितीकृतान्तराः ।
जमदग्निसूनुपितृतर्पणीरपो वहति स्म या विरलशैवला इव ॥५२॥

---

स हरिः समुपासदत् प्रापत् । सदेर्लुङ् पुषादित्वात् च्लेरङादेशः । पुरा किल खाण्डवदाहे पाण्डवेनाग्निदाहान्मोचितेन मयेन प्रत्युपकारार्थं पूर्वमाहृतेनैव बिन्दुसरसि गुप्तेन वृषपर्वप्रहनिर्माणावशिष्टेन मणिशिलाकलापेन काञ्चनसभा धर्मराजाय निर्मितेति भारती । सभावर्णनाङ्गत्वेनाजुंनमयचरितवर्णनादुदात्तालङ्कारः । "प्रभूतमहापुरुषचिन्तनं चेति सूत्रम् ॥५०॥

टिप्पनी—उपेति । अत्र द्वितीये तृतीये च पादे वृत्त्यनुप्रासः चतुर्थे च्छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्कर इति टीकाकृतोदात्तेन सह संसृष्टः । मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥५०॥

বাঙ্গালা—বৃষপর্বাসুরের ভবননির্ম্মাণাবশিষ্ট মণিময় মনোহর শুভ্র সকল বিন্দুসরোবর হইতে আনয়ন করিয়া ময়দানব, যে সভাগৃহ নির্ম্মাণ করিয়াছিল এবং যে সভা ইন্দ্রভবনের শোভাকেও অবজ্ঞা করিত ; শ্রীকৃষ্ণ শীঘ্র সেই সভাগৃহে উপস্থিত হইলেন ॥৫০॥

अन्वयः—यत्र अधिरात्रि नभोलिहां कलधौत-धौत-शिल-वेश्मनां रुचौ निपतन् अनिदाघदीधितिः पुनः अपि दुग्ध वारिधि-क्षण-गर्भ-वासम् अवापत् इव ॥५१॥

टीका—अथ दशभिः सभां वर्णयति । अधीत्यादि । अधिरात्रि रात्रिषु । विभक्त्यर्थेऽव्ययीभावः । यत्र सभायां नभोलिहामभ्रंलिहाम् । क्विप् । कलधौतं रौप्यम् । "कलधौतं रूप्यहेम्नोरित्यमरः । तद्वद्धौताः धवलाः शिला येषान्तानि वेश्मानि स्फटिकभवनानीत्यर्थः तेषां रुचौ प्रभायां निपतन् प्रविशन् अनिदाघदीधितिरनुष्णरश्मिर्हिमांशुः पुनरपि दुग्धवारिधौ क्षीराब्धौ क्षणं गर्भवासं न तु मथनात् प्रागिव चिरगर्भवासमिति भावः अवापत् प्रापदिवेत्युत्प्रेक्षा । तया वेश्मनां चन्द्रमण्डलातिक्रमो व्यज्यते ॥५१॥

टिप्पनी—अधीति । अत्र द्वितीयपादे लुप्तोपमा च्छेकानुप्रास इति टीकोक्तक्रियोत्प्रेक्षया सह संसृष्टिः । बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५१॥

বাঙ্গালা—যে সভাভবনে রাত্রিকালে রৌপ্যের ন্যায় শুভ্রবর্ণ ও অত্যুচ্চ স্ফটিকময় গৃহগুলির কিরণের মধ্যে পতিত হইয়া চন্দ্র, আবারও যেন ক্ষণকালের জন্য ক্ষীরোদসাগরের গর্ভে বাস করিতেছেন বলিয়া বোধ হইত ॥৫১॥

अन्वयः—या लयनेषु लोहितकनिर्मिताः शिति-रत्न-रश्मि-हरितीकृतान्तराः भुवः, विरलशैवलाः जमदग्नि-सूनु-पितृ-तर्पणीः, अपः इव वहति स्म ॥५२॥

· टीका—लयनेष्विति । लीयते एष्विति लयनानि तेषु गृहेषु शितिरत्नानां नील-

विशदाश्मकूटघटिताः क्षपाकृतः क्षणदासु यत्र च रुचैकतां गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनैस्तमसीव हस्तपरिमर्शसूचिताः ॥५३॥
निलयेषु नक्तमसिताश्मनां चयैर्विसिनीवधूपरिभवस्फुटागसः ।
मुहुरत्रसद्भिरपि यत्र गौरवाच्छशलाञ्छनांशव उपांशु जघ्निरे ॥५४॥

---

मणीनां रश्मिभिर्हरितीकृतानि हरितवर्णीकृतानि अन्तराणि मध्यानि यासां ताः लोहितमणयो लोहितकाः पद्मरागाः। "लोहितान्मणौ" इति कन्प्रत्ययः। तैर्निर्मिताः भुवो भूमीर्विरलाः शैवला यासु ताः जमदग्निसूनोः परशुरामस्य पितॄणां तर्पणीः तृप्तिकरीरपः ह्रदा इवेत्युपमा या सभा वहति स्म। जामदग्न्यः क्षत्रियास्रैः पञ्च ह्रदानुत्पाद्य ताभिरद्भिः पितॄनतर्पयत् तासां रुधिरप्रकृतिकत्वाद्रक्तवर्णा एवेति पुराणम् ॥५२॥

**टिप्पनी**—शयनेष्विति। अत्र वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥५२॥

**বাঙ্গালা**—গৃহসকলের তলদেশগুলি (মেঝেগুলি), পদ্মরাগমণিনির্ম্মিত ছিল এবং নীলমণির কিরণ পতিত হইয়া সেগুলির ভিতরটাকে হরিতবর্ণ করিয়াছিল ; ওদিকে পরশুরাম ক্ষত্রিয়রক্তে পাঁচটী হ্রদকে পূর্ণ করিয়া, তাহা দ্বারা পিতৃলোকের তর্পণ করিয়াছিলেন এবং সেই রক্তময় হ্রদে অল্প অল্প সেওলা ভাসিয়া বেড়াইত। সুতরাং যে সভাভবন পরশুরামের সেই পিতৃতর্পণের জলের ন্যায়, ঐ পদ্মরাগময় স্থানগুলিকে ধারণ করিত ॥৫২॥

**अन्वयः**—यत्र जनैः विशदाश्म-कूट-घटिताः क्षणदासु क्षपाकृतः रुचा एकतां गताः (अतएव) तमसि इव हस्त-परिमर्श-सूचिताः गृहपङ्क्तयः चिरम् अतीयिरे ॥५३॥

**टीका**—विशदेति। क्षिप्तेति पाठः। यत्र सभायां विशदाश्मकूटघटिताः स्फटिकशिलासङ्घातनिर्मिताः अतएव क्षणदासु क्षपाकृतो निशाकरस्य रुचा चन्द्रिकयैकतां सावर्ण्याभेदङ्गताः अतएव तमसीव हस्तपरिमर्शसूचिताः पाणिस्पर्शैकगम्या इत्यर्थः। गृहपङ्क्तयः जनैश्चिरमतीयिरे अतिक्रान्ताः पुरोगतान्यपि स्फाटिकभवनानि चान्द्रिकाभ्रमादतीत्य गत्वा पश्चात् करपरामर्शैः कथञ्चित्प्राप्यन्त इत्यर्थः। अत्र प्रकृतानां स्फाटिकवेश्मनां गुणसाम्यादप्रस्तुतचन्द्रिकैक्योक्त्या सामान्यालङ्कारः। "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् ॥५३॥

**टिप्पनी**—विशदेति। अत्रापि गुणरीती पूर्ववत् ॥५३॥

**বাঙ্গালা**—যে সভার গৃহসমূহের দেওয়ালগুলি স্ফটিক দ্বারা নির্ম্মিত ছিল বলিয়া, রাত্রিতে চন্দ্রের কিরণের সঙ্গে মিলিয়া যাইত ; সুতরাং লোকে অন্ধকারে যেমন হাত বুলাইয়া দেওয়াল জানিয়া যায় ; সেইরূপ জ্যোৎস্নার রাত্রিতেও হাত বুলাইয়া জানিয়াই, দেওয়ালগুলিকে অতিক্রম করিয়া যাইত ॥৫৩॥

**अन्वयः**—यत्र निलयेषु नक्तम् अत्रसद्भिः अपि असिताश्मनां चयैः गौरवात् बिसिनी-वधू-परिभव-स्फुटागसः शशलाञ्छनांशवः उपांशु मुहुः जघ्निरे ॥५४॥

सुखिनः पुरोऽभिमुखतामुपागतैः प्रतिमासु यत्र गृहरत्नभित्तिषु ।
नवसङ्गमैरविभदः प्रियाजनैः प्रमदं त्रपाभरपराङ्मुखैरपि ॥५५॥

टीका।—निलयेष्विति। यत्र सभायां निलयेषु नक्तं रात्रौ विसन्तो दीर्घकापद्मि-न्यस्ता एव बध्वस्तासां परिभवेन निमीलनेन दूषणेन च स्फुटागसः स्पष्टापराधाः प्रमया-च्छनांशवः चन्द्रपादाः अत्रसाझिरत्नस्थाझैरपि निर्दोषैरपि इति चार्थः। "लासो भीमणि-दोषयारिति विश्वः। "वा स्वाग्नेत्यादिना स्यनभावपक्षे प्रत्ययः। असिताश्मनाम् इन्द्र-नीलमणीनां चयैः स्वैर्गौरवात् स्वयं प्रभूतत्वात् सम्भावितत्वाच्च उपांशु अंशुसमीपे वहश्च। "रहस्योपांशु चालिङ्गे" इत्यमरः। मुहुर्ज्मरे तिरोहिता मारिताश्च। हन्तेः कर्मणि लिट्। समीपगताश्चन्द्रांशवः प्रभूतैरिन्द्रनीलांशुभिस्तिरस्कृता इत्यर्थः अन्यत्रान्तः-पुरद्रोहिणो निर्भीकैरपि सम्भावितैर्दुष्कीर्त्तिभयाद्गूढं हन्यन्त इति भावः। अत्र विसिनीनां वधूत्वरूपणात्तत्परिभाविनां चन्द्रांशूनां धूर्त्तकामुकत्वरूपणप्रतीतिः एकदेश-विवर्ति रूपकं तच्च गौरवादुपांशु अघ्निर इति च स्वश्रेणालसझिरपीति विरोधेन च सङ्कीर्यते ॥५४॥

टिप्पनी—निलयेष्विति। अत्र तृतीयपादे च्छेकानुप्रास इति टीकोक्तसङ्करेण सह पुनः संसृष्टिः। पदस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५४॥

বাঙ্গালা— পদ্মিনীরূপ বধূগণের উৎফুল্লতা নষ্ট করায় চন্দ্রকিরণের অপরাধ স্পষ্টই হইয়া থাকে ; সুতরাং যে সভার ঘরগুলির ভিতরে নির্দ্দোষ নীলকান্তমণি সকল, আপন কিরণের গুরুত্বে সেই চন্দ্রকিরণগুলিকে নির্জনে বার বার প্রতিহত করিত ॥৫৪॥

অন্বয়:—যত্র সুখিনः नवसङ्गमैः त्रपाभरपराङ्मुखैः अपि गृहरत्नभित्तिषु प्रतिमासु पुरः अभि-मुखताम् उपागतैः प्रियाजनैः प्रमदम् अविभदः ॥५५॥

टीका—सुखिन इति। यत्र सभायां नवः सङ्गमो येषां तैर्नवसङ्गमैरतएव त्रपाभरेण पराङ्मुखैर्विमुखैरपि गृहस्थां रत्नभित्तिषु प्रतिमासु ततस्त्यान्तःप्रतिविम्बेषु पुरोऽग्रेऽभि-मुखतामुपागतैः प्रियाजनैः कान्ताजनैः सुखिनो भोगिनः प्रमदं हर्षं न अबिभरः बिभ्रति स्म। भृञो लुङि "श्नाविति" द्विर्भावे "सिजभ्यस्तविदिभ्यश्चेति" झेर्जुसादेशः। स्त्रीणां वैमुख्येऽपि तत्प्रतिबिम्बाभिमुख्यात् पुंसां सुखमेव स्त्रीणां तु उभयथापि क्लिष्टमित्यर्थः। अत्र वैमु-ख्यप्यभिमुख्यमिति विरोधस्य प्रतिमास्विति निरासाद्विरोधाभासोऽलङ्कारः ॥५५॥

टिप्पनी—सुखिन इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—যে সভাভবনে প্রিয়তমদিগের সহিত নব সম্মেলনের সময় নব বধূরা অত্যন্ত লজ্জাবশতঃ পিছন ফিরিয়া দাঁড়াইয়া থাকিলেও, গৃহের রত্নময় দেওয়ালে তাহাদের প্রতিবিম্ব পতিত হইলে, তাহারা প্রকারান্তরে প্রিয়তমদিগের অভিমুখতাই প্রাপ্ত হইত, তাহাতে সেই প্রিয়তমগণ বিশেষ আনন্দ লাভ করিত ॥৫৫॥

तृणवाञ्छया मुहुरवाञ्चिताननान् निचयेषु यत्र हरिताश्मवेश्मनाम् ।
रसनाग्रलग्नकिरणाङ्कुरान् जनो हरिणान् गृहीतकवलानिवैक्षत ॥५६॥
विपुलालवालभृतवारिदर्पणप्रतिमागतैरभिविरेजुरात्मभिः ।
यदुपान्तिकेषु दधतो महीरुहः सपलाशराशिमिव मूलसंहतिम् ॥५७॥

---

अन्वयः—यत्र जनः हरिताश्मवेश्मनां निचयेषु तृणवाञ्छया मुहुः अवाञ्चिताननान् (अतएव) रस-नाग्र-लग्न-किरणाङ्कुरान् हरिणान् गृहीतकवलान् इव ऐक्षत ॥५६॥

टीका—तृणेति । यत्र सभायां हरिताश्मवेश्मनां मरकतमणीनां गृहाणाम् । "गारुत्मतं मरकतमश्मगर्भो हरिन्मणिरित्यमरः । निचयेषु संघेषु तृणवाञ्छया तृणाशया मुहुरवाञ्चिताननानवनमितमुखान् अतएव रसनाग्रेषु लग्नाः किरणाः अङ्कुरा इव येषान्ते तान् । अतएव गृहीतकवलान् उपात्ततृणग्रासानिव स्थितान् हरिणान् जन ऐक्षत ईक्षितवान् । ईक्षतेर्लङि "आडजादीनामित्याट्, आटश्चेति वृद्धिः । अत्र तृणवाञ्छयेति हरिणानां मरकतेषु तृणभ्रान्तेर्भ्रान्तिमदलङ्कारः तन्मूला चेयं गृहीतकवलत्वोत्प्रेक्षेति सङ्करः॥५६॥

टिप्पनी—तृणेति । अत्र हरिताश्मवेश्मनामिति च्छेकानुप्रासः । तेन च टीकोक्तसङ्करेण सह पुनः संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—যে সভামণ্ডপে লোকে দেখিত যে,—মরকতমণিময় গৃহসমূহের নিকটে হরিণগণ তৃণ ভক্ষণের আশায় যাইয়া মুখ নোয়াইত ; তখন সেই মরকতমণির কিরণ যাইয়া সেই হরিণগুলির রসনাগ্রে লাগিত ; তাহাতে সেই হরিণগুলি যেন ঘাসের গ্রাস মুখে লইয়াছে বলিয়া তাহাদের ধারণা হইত ।৫৬॥

অন্বয়ঃ—यदुपान्तिकेषु महीरुहः विपुल-आलवाल-भृत वारि-दर्पण-प्रतिमागतैः आत्मभिः सपलाश-राशिं मूलसन्ततिं दधत इव अभिविरेजुः ॥५७॥

टीका—विपुलेति । यदुपान्तिकेषु यस्याः सभायाः उपान्तिकेषु समीपेषु महीरुहो वृक्षाः विपुलेष्वालवालेषु मूलजलाधारेषु । "स्यादालवालमावालमित्यमरः । भृतानि संभृतानि वारीण्येव दर्पणास्तेषु प्रतिमां प्रतिबिम्बनाङ्गतैःप्रतिबिम्बितैरित्यर्थः । आत्मभिः स्वमूर्त्तिभिरित्यर्थः सपलाशराशिं सपत्रसन्ततिं मूलसंहतिं दधत इव दधाना इवाभिविरेजुः आलवालेषु स्वप्रतिबिम्बितैरधोमुखैः मूलेष्वपि सपत्रा इव रेजुरित्युत्प्रेक्षा ॥५७॥

टिप्पनी—विपुलेति । अत्र मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥५७॥

বাঙ্গালা—যে সভার নিকটে বহুসংখ্যক বৃক্ষ ছিল ; সে গুলির মূলস্থ বিশাল জলাধার সকল, দর্পণতুল্য নির্ম্মল জলে পরিপূর্ণ থাকিত; সেই জলে ঐ বৃক্ষসমূহের প্রতিবিম্ব পতিত হইত; তাহাতে ঐ বৃক্ষসমূহ যেন পত্রসমন্বিত মূলসমূহ ধারণ করিতেছে বলিয়া বোধ হইত ।৫৭।

उरगेन्द्रमूर्द्धरुहरत्नसन्निधेर्मुहुरुन्नतस्य रसितैः पयोमुचः ।
अभवन् यदङ्गनभुवः समुच्छ्वसन्नवबालवायजमणिस्थलाङ्कुराः ॥५८॥
नलिनी निगूढसलिला च यत्र सा स्थलमित्यधः पतति या सुयोधने ।
अनिलात्मजप्रहसनाकुलाखिलक्षितिपक्षयागमनिमित्ततां ययौ ॥५९॥

---

अन्वयः—उरगेन्द्र-मूर्द्धरुह-रत्न सन्निधेः मुहुः उन्नतस्य पयोमुचः रसितैः यदङ्गनभुवः समुच्छ्वसन्नव-बालवायज-मणिस्थलाङ्कुराः अभवन् ॥५८॥

टीका—उरगेन्द्रेति । उरगेन्द्राणां मूर्द्धसु रुहाणि रूढ़ानि । इगुपधलक्षणः कः । तेषां रत्नानां सन्निधेः सन्निधानात् मुहुरुन्नतस्य यदा यदा तत्सन्निधिस्तदा तदोदितस्येत्यर्थः पयोमुचो मेघस्य रसितैः स्तनितैर्यदङ्गनभुवो यस्याः प्राङ्गणप्रदेशाः समुच्छ्वसन्तः प्रादुर्भवन्तो नवाः प्रत्यग्राः बालवायजमणिस्थलाङ्कुराः वैदूर्य्यभूप्ररोहा यासु तास्तथोक्ता अभवन् । "वैदूर्य्यं बालवायजमित्यमरः । बालवायो नाम वैदूर्य्यप्रभवो देशविशेषः । उरगेन्द्रमूर्द्धन्य-रत्नाङ्कुरैः सद्योदितमेघध्वनेर्विदूरभूमिरङ्कुराङ्कुरा भवतीति प्रसिद्धिः । तदुक्तम् "उरगमूर्द्धन्य-रत्नसन्निधानादकालेऽपि मेघा गर्जन्तीति वार्त्ता । केचित्तु यत्रैवोरगरत्नमेघरसितं च तत्रैव वैदूर्य्यभूमिः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः । तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते इति लक्षणात् ॥५८॥

टिप्पनी—उरगेन्द्रेति । अत्र तृतीयपादे भव-भुव इति छेकानुप्रासेन टीकोक्तोदात्तालङ्कारः संसृज्यते । बन्धस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५८॥

বাঙ্গালা= যখন যখন সর্পশ্রেষ্ঠগণের মস্তকের মণি নিকটবর্ত্তী হয়; তখন তখনই আকাশে মেঘ উঠিয়া থাকে (ইহাই প্রসিদ্ধি); সুতরাং তৎকালে সেই মেঘের শব্দে যে সভার প্রাঙ্গণভূমিতে নূতন 'বালবায়জ' নামক মণির অঙ্কুর সকল জন্মিত ।৫৮।

अन्वयः— यत्र च निगूढसलिला सा नलिनी (वर्त्तते स्म), या सुयोधने स्थलम् इति अधः पतति (सति) अनिलात्मज-प्रहसना कुलाखिल-क्षितिप-क्षयागम निमित्ततां ययौ ॥५९॥

टीका—नलिनीति । यत्र सभायां निगूढसलिला दलच्छन्नत्वाददृश्यसलिला नलिनी वर्त्तत इति शेष । या नलिनी सुष्ठु युद्ध्यत इति सुयोधने दुर्य्योधने । "भाषायां शासि-युधिदृशिधृषिमृषिभ्यो युच् वक्तव्यः । स्थलमिति भ्रान्त्या अधः पतति सति अनिलात्मजस्य भीमसेनस्य प्रहसनेनाट्टहासेनाकुलानां क्षुभितानामखिलक्षितिपानां क्षयागमे नाशप्राप्तौ निमित्ततां ययौ । नलिनीदलच्छन्नत्वात् सुयोधनस्य जले स्थलभ्रान्तिः तया तस्य पातस्तेन भीमसेनप्रहासस्तेन राज्ञां क्षोभस्ततस्तेषां भारतो रणः प्रवृत्त इति परम्परया तत्क्षयकारणत्वं गतेत्यर्थः । अत्र सभावर्णनाङ्गतया भीमसेनादिचरितवर्णनादुदात्तालङ्कारभेदः, लक्षणं चोक्तम् ॥५९॥

टिप्पनी— नलिनीति अत्र चतुर्थपादे क्षितिप-क्षयेति छेकानुप्रासेन टीकोक्तोदात्तालङ्कारः संसृज्यते समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥५९॥

হসিতুং পরৈঃ পরিতঃ পরিস্ফুরৎকরবালকোমলরুচাবুপেক্ষিতৈঃ।
উদকর্ষি যত্র জলশঙ্কয়া জনৈর্মুহুরিন্দ্রনীলভুবি দূরমম্বরম্ ॥৬০॥
অভিতঃ সদোঽথ হরিপাণ্ডবৌ রথাদমলাংশুমণ্ডলসমুল্লসত্তনূ।
অবতীরতুর্নয়ননন্দনৌ নভঃ শশিভার্গবাবুদয়পর্বতাদিব ॥৬১॥

---

বাঙ্গালা— যে সভামণ্ডপে সেইরূপ বহুতর পদ্মিনী ছিল; যে পদ্মিনীগুলি কুরুক্ষেত্র-যুদ্ধে সমস্ত রাজগণের বিনাশের কারণ হইয়াছিল; কেন না, সেই পদ্মিনীর পত্রে জল আবৃত থাকায় দুর্য্যোধন স্থল মনে করিয়া জলের নীচে পড়িয়া গেলে, ভীম অট্টহাস্য করিয়াছিলেন; তাহাতে দুর্য্যোধনের ক্ষোভ জন্মিয়াছিল এবং তাহাতেই ঘটনাপরম্পরায় কুরুক্ষেত্রযুদ্ধ সংঘটিত হইয়াছিল ॥৫৯॥

অন্বয়ঃ—যত্র পরিতঃ পরিস্ফুরৎ-করবাল-কোমল-রুচৌ ইন্দ্রনীলভুবি হসিতুং পরৈঃ উপেক্ষিতৈঃ জনৈঃ জলশঙ্কয়া মুহুঃ অম্বরং দূরম্ উদকর্ষি ॥৬০॥

টীকা— হসিতুমিতি। যত্র সভায়াং পরিতঃ পরিস্ফুরন্তী করবালকোমলা অভিখ্যাসা রুচিয়স্যাস্তস্যাম্ ইন্দ্রনীলভুবি হসিতুং পরৈঃ জানদ্ভিরন্যৈর্জনৈরুপেক্ষিতৈঃ স্থলমেতন্ন জলমিতি অনুপদিষ্টৈর্জনৈর্বস্ত্রৈরাগন্তুকজনৈর্জলশঙ্কয়া জলভ্রান্ত্যা মুহুর্দূরমম্বরং বস্ত্রম্ উদকর্ষি নিতম্বাদুদ্ধৃতম্। অত্রেন্দ্রনীলসাদৃশ্যাৎ সলিলভ্রান্তের্ভ্রান্তিমদলঙ্কারঃ ॥৬০॥

টিপ্পনী—হসিতুমিতি। অত্র প্রথমে পাদে লুপ্তোপমা হস্যনুপ্রাসশ্চেতি টীকোক্তভ্রান্তিমতা সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬০॥

বাঙ্গালা—যে সভামণ্ডপে সকল দিকেই তরবারির ন্যায় নির্ম্মল ও কোমল ইন্দ্রনীলমণিময় স্থান ছিল; কিন্তু জানা অন্যলোকেরা পরিহাস করিবার জন্য সে স্থানগুলির পরিচয় দিত না; তাহাতে আগন্তুক লোকেরা স্থলকেই জল মনে করিয়া পরিধানের কাপড় টানিয়া বহুদূর পর্য্যন্ত তুলিত ॥৬০॥

অন্বয়ঃ— অথ অমলাংশুমণ্ডলসমুল্লসত্তনূ নয়ন-নন্দনৌ শশিভার্গবৌ নভঃ অভিতঃ উদয়পর্বতাৎ ইব, অমলাংশুমণ্ডলসমুল্লসত্তনূ নয়ননন্দনৌ হরিপাণ্ডবৌ সদঃ অভিতঃ রথাৎ অবতেরতুঃ ॥৬১॥

টীকা—অভিত ইতি। অথামলাংশুমণ্ডলেন তেজঃপুঞ্জেন সমুল্লসন্ত্যৌ ভাসমানে তনূ মূর্ত্তী যয়োস্তৌ নয়ননন্দনৌ নেত্রানন্দকরৌ হরিপাণ্ডবৌ সদোঽভিতঃ সভাভিমুখম্। "অভিতঃ পরিত" ইতি দ্বিতীয়া। রথাৎ শশিভার্গবৌ অমলত্বাদিবিশেষণবিশিষ্টৌ চন্দ্রশুক্রৌ নভোঽভিতো নভোঽভিমুখম্ উদয়াখ্যপর্বতাদুদয়াচলাদিবাবতেরতুঃ অবতীর্ণবন্তৌ। তরতের্লিট্, তৃফলভজত্রপশ্চেতি এত্বাভ্যাসলোপৌ। উপমা ॥৬১॥

টিপ্পনী—অভিত ইতি। শশিভার্গবৌ উদয়পর্বতাৎ অবতরতঃ, হরিপাণ্ডবৌ তু অবতেরতুরিতি কালভেদাদপ্রক্রমতাদোষঃ; "কাপ্যভিখ্যা তয়োরাসীৎ" ইত্যাদিদর্পণোদাহরণবৎ। 'অবরোহতঃ' ...

तदलक्ष्यरत्नमयकुड्यमादरादभिधातरीत इत इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावितप्रतिहारमाविशदसौ सदः शनैः ॥६२॥
नवहाटकेष्टकचितं ददर्श सः क्षितिपस्य वस्त्यमथ तत्र संसदि ।
गगनस्पृशां मणिरुचां चयेन यत् सदनान्युदस्मयत नाकिनामपि ॥६३॥

---

सुखदौ दृशोर्नभः' इति तृतीयचरणपाठेन तु तद्दोषपरिहारः। तत्पाठे च शशिभार्गवौ अवरोहतः; हरियुधिष्ठिरौ तु अवरोहतः स्म इत्यन्वयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६१॥

বাঙ্গালা—তদনন্তর, নির্ম্মল তেজে দীপ্তশরীর এবং নয়নের সুখজনক চন্দ্র ও শুক্র যেমন উদয়পর্বত হইতে আকাশের দিকে অবতীর্ণ হইয়া থাকেন; সেইরূপ নির্ম্মল তেজে দীপ্তশরীর এবং নয়নের আনন্দজনক শ্রীকৃষ্ণ ও যুধিষ্ঠির রথ হইতে সভার দিকে অবতীর্ণ হইলেন ॥৬১॥

अन्वयः—अथो नृपे आदरात् इतः इतः इति अभिधातरि (सति), असौ तत् अलक्ष्य-रत्नमय-कुड्यम् धवलाश्म-रश्मि पटलाविभावित-प्रतिहारं सदः शनैः आविशत् ॥६२॥

टीका—तदिति। अथो रथावतरणानन्तरम् असौ हरिर्नृपे युधिष्ठिरे आदरादित इत इत्यभिधातरि सति इत इत आगम्यतामित्यभिदधाने सतीत्यर्थः। तत् पूर्वोक्तमलक्ष्यरत्नमयकुड्यम् अदृश्यरत्नभित्तिकम् धवलेन शुभ्रेण रश्मिपटलेन मणिप्रभापुञ्जेनाविभावितप्रतिहारमलक्ष्यद्वारम्। "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः। सदः सभां शनैराविशत् प्रविष्टवान्। अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥६२॥

टिप्पनी—तदिति। अत्र तृतीयपादे धवलाश्मरश्मीतिच्छेकानुप्रासेन टीकोक्तातिशयोक्तिः संसृज्यते। समासबाहुल्यात् बन्धस्य गाढ़त्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥६२॥

বাঙ্গালা—তাহার পর, যুধিষ্ঠির আদর করিয়া, "এই দিকে আইস, এই দিকে আইস" এইরূপ বলিতে লাগিলে, শ্রীকৃষ্ণ ধীরে ধীরে সেই সভামণ্ডপে প্রবেশ করিলেন; সেই সভামণ্ডপের দেয়ালগুলি মণিময় ছিল বলিয়া লক্ষ্য করা যাইতেছিল না এবং স্ফটিকের কিরণে দ্বারও দেখা যাইতেছিল না ॥৬২॥

अन्वयः—अथ सः तत्र संसदि नव-हाटकेष्टक-चितं क्षितिपस्य वस्त्यं ददर्श; यत् गगनस्पृशां मणिरुचां चयेन नाकिनां सदनानि अपि उदस्मयत ॥६३॥

टीका—नवेति। अथ प्रवेशनानन्तरं स हरिस्तत्र संसदि सभायां नवाभिर्हाटकेष्टकाभिः हिरण्येष्टकाभिश्चितम्। "हिरण्यं हेम हाटकमित्यमरः। "इष्टकेषीकामालानाच्चितततूलभारिष्विति ह्रस्वः। पक्वमृत्तिकाविशेषवाचकस्य इष्टकाशब्दस्य तादृश्य सुवर्णविकारे सुवर्णघटवदुपचारात् प्रयोगः। क्षितिपस्य युधिष्ठिरस्य वस्त्यं सदनम्। "निशान्तवस्त्यसदनमित्यमरः। ददर्श। यत् सदनं गगनस्पृशाम् उच्चैस्तराणां मणिरुचां चयेन समूहेन नाकिनां देवानामपि सदनानि उदस्मयत अहसत्। स्मयतेरुत्पूर्वात् कर्त्तरि लङ्। अत्रापि नृपसदनस्य सुरसदनादाधिक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥६३॥

उदयाद्रिमूर्ध्नि युगपच्चकासतोर्दिननाथपूर्णशशिनोरसम्भवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रतावलघुन्यथ न्यषदतां नृपाच्युतौ ॥६४॥
सुतरां सुखेन सकलक्लमच्छिदा सनिदाघमङ्गमिव मातरिश्वना ।
यदुनन्दनेन तदुदन्वतः पयः शशिनेव राजकुलमाप नन्दथुम् ॥६५॥

---

टिप्पनी—नवेति । अत्र बन्धस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥६३॥

বাঙ্গালা—তাহার পর, শ্রীকৃষ্ণ সেই সভামণ্ডপে স্বর্ণময় ইষ্টক-নির্ম্মিত রাজভবন দর্শন করিলেন; যে রাজভবন, আকাশস্পর্শী মণিকিরণ দ্বারা দেবভবনসমূহকেও পরিহাস করিত ॥৬৩॥

अन्वयः—अथ उदयाद्रि-मूर्ध्नि युगपत् चकासतोः दिननाथ-पूर्णशशिनोः असम्भवां रुचिं बिभ्रतौ नृपाच्युतौ अलघुनि रुचिरधाम्नि आसने न्यषदताम् ॥६४॥

टीका— उदय इति । अथ नृपसदनदर्शनानन्तरम् उदयाद्रेर्मूर्ध्नि शिखरे युगपच्चकासतोः प्रकाशमानयोः । चकासृ दीप्ताविति धातोर्लटः शत्रादेशः । दिननाथपूर्णशशिनोः सूर्य्यपूर्णचन्द्रमसोरसम्भवां सम्भवरहितां तयोस्तथाभूतयोर्युगपद्यायोगादभूतपूर्वामित्यर्थः रुचिं शोभां बिभ्रतौ नृपाच्युतौ रुचिरधाम्नि उज्ज्वलतेजसि । अलघुनि विपुले आसने सिंहासने न्यषदतामुपविष्टौ । सदेर्लङि प्रषादित्वात् षत्वादेशः "सदिरप्रतेरिति षत्वम । अत्र सम्भावनया अर्कपूर्णेन्दुशोभासम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥६४॥

टिप्पनी—उदयेति । अत्र तृतीयपादे रुचि-रुचीति छेकानुप्रासइति टीकोक्तातिशयोक्त्या सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—তদনন্তর, উদয়পর্বতের উপরে এক সময়েই সূর্য্য ও পূর্ণচন্দ্র প্রকাশ পাইলে, তাঁহাদেরও যেরূপ শোভা না হইতে পারে, সেইরূপ শোভাশালী যুধিষ্ঠির ও কৃষ্ণ, বিশাল ও উজ্জ্বল একখানি সিংহাসনে উপবেশন করিলেন ॥৬৪॥

अन्वयः—सनिदाघम् अङ्गं मातरिश्वना इव, उदन्वतः पयः शशिना इव, तत् राजकुलं सुतरां सुखेन सकलक्लमच्छिदा यदुनन्दनेन नन्दथुम् आप ॥६५॥

टीका— सुतरामिति । तद्राजकुलं कुरुकुलं सकलक्लमच्छिदा सकलदुःखच्छेदिना यदुनन्दनेन कृष्णेन सनिदाघं ससन्तापमङ्गं मातरिश्वा वायुस्तेनेव । उदकान्यस्य सन्तीति उदन्वान् उदधिः । "उदन्वानुदधौ चे"ति निपातः । तस्य पयो जलं शशिनेव सुतरामत्यन्तम् । "अव्ययादाम्वक्तव्य इति आमुप्रत्ययः । सुखेनाक्लेशेन नन्दथुम् आनन्दमाप । "स्यादानन्दथुरानन्द" इत्यमरः । "ट्वितोऽथुजित्यथुच्प्रत्ययः । मालोपमा ॥६५॥

टिप्पनी— सुतरामिति । अत्र तृतीयपादे 'दु' 'दु' इति एकव्यञ्जनस्य सकृत्साम्यात् छेकानुप्रास इति टीकोक्तमालोपमया सह संसृष्टिः । बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥६५॥

अनवद्यवाद्यलयगामि कोमलं नवगीतमप्यनवगोततां दधत् ।
स्फुटसात्त्विकाङ्गिकमनृत्यदुज्ज्वलं सविलासलासिकविलासिनीजनः ॥६६॥
सकले च तत्र गृहमागते हरौ नगरेऽप्यकालमहमादिदेश सः ।
सततोत्सव तदिति नूनमुन्मुदा रभसेन विस्मृतमभून्महीभृतः ॥६७॥

---

বাঙ্গালা— গ্রীষ্মসন্তপ্ত অঙ্গ যেমন বায়ু দ্বারা এবং সমুদ্রের জল যেমন চন্দ্র দ্বারা আনন্দ লাভ করে; সেইরূপ সেই রাজকুল, অত্যন্ত সুখজনক এবং সর্বপ্রকারক্লান্তিনাশক কৃষ্ণদ্বারা আনন্দ লাভ করিয়াছিল ॥৬৫॥

অন্বয়:— সবিলাস-লাসিক-বিলাসিনীজনः अनवद्य-वाद्यलय गामि नवगीतम् अपि अनवगीततां दधत् स्फुट-सात्त्विकाङ्गिकं कोमलम् उज्ज्वलं (च) अनृत्यत ॥६६॥

टीका—अनवद्येति । सविलासो विलासयुक्तो लासिकविलासिनीजनः नर्त्तकस्त्रीजनः सविलासलासिकविलासिनीजनः । "नर्त्तकीलासिके समे" इत्यमरः अनवद्यमगर्ह्यं वाद्यं वंशादि तस्य लयः साम्यं गीतस्य समकालत्वं तद्गामि द्रुतविलम्बादिमानानुवर्त्तीत्यर्थः । "तालः कालक्रियामानं लयः साम्यमित्यमरः । नवं गीतं यस्य तन्नवगीतं तथाप्यनवगीततां दधदिति विरोधेऽपिशब्दः अगर्हितत्वं दधदित्यविरोधाद्विरोधाभासः । "अवगीतं तु निर्वादे मुहुर्गीते च गर्हिते" इति विश्वः । सत्त्वमन्तःकरणं तेन निर्वृत्तं सत्त्वं सात्त्विकम् अङ्ग इत्यादि तेन निर्वृत्तमाङ्गिकम् । "निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके" इत्यमरः । ते स्फुटे यस्मिंस्तत्तथोक्तम् । वाचिकस्याप्युपलक्षणमेतत् । यथाह भगवान् भरतः । "पदार्थाभिनयो नाम त्रेधा वागङ्गसत्त्वज" इति । अतएव कालिदासोऽपि "अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः" इति । कोमलं मधुरनृत्यमुज्ज्वलमुद्धतं चानृत्यत् । तथोक्तं दशरूपके । "भावाश्रयन्तु नृत्यं स्यान्नृत्यं ताललयाश्रयम् । आद्यं पदार्थाभिनयो मार्गादेशी तथापरः । मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः । लास्यताण्डवरूपेण नाटकाद्युपकारकमिति ॥६६॥

टिप्पनी—अनवद्येति । अत्र प्रथमे तृतीये च पादे छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति टीकोक्तविरोधाभासेन सह तयोः संसृष्टिः । मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥६६॥

বাঙ্গালা— বিলাসিনী নর্ত্তকী রমণীরা, কোমল ও উদ্ধত এই দুই প্রকার নৃত্যই করিতে লাগিল; তাহার সঙ্গে অনিন্দনীয় বাদ্যের লয় চলিতেছিল; নূতন ধরণের গান হইতেছিল এবং মানসিক, শারীরিক ও বাচনিক ভাব প্রকাশ পাইতেছিল; সুতরাং সে নৃত্য অনিন্দনীয়তাই ধারণ করিয়াছিল ॥৬৬॥

অন্বয়:—सः च हरौ गृहम् आगते (सति) सकले तत्र नगरे अपि अकालमहम्-आदिदेश । नूनम् उन्मुदः महीभृतः तत् सततोत्सवम् इति रभसेन विस्मृतम् अभूत् ॥६७॥

हरिराकुमारमखिलाभिधानवित् स्वजनस्य वार्त्तमयमन्वयुङ्क्त च ।
महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किञ्चन ॥६८॥
मत्यलोकदुरवापमवाप्तरसोदयं नूतनत्वमतिरिक्ततयानुपदं दधत् ।
श्रीपतिः पतिरसाववनेश्च परस्परं सङ्कथामृतमनेकमसिस्वदतामुभौ ॥६९॥

---

टीका--सकल इति । किं चेति चार्थः । स राजा हरौ कृष्णे गृहमागते सकले तत्र नगरे इन्द्रप्रस्थे । अकाले प्रसिद्धवसन्ताद्यतिरिक्ते काले । महमुत्सवम । "मह उद्धव उत्सव" इत्यमरः । आदिदेश आज्ञापयामास । नूतमत्वात् भ्राति उन्मुदः कृष्णागमनात् हृतकठानन्दस्य महीभृतो धर्मनन्दनस्य नवगरं सततम उत्सवा यस्मिन् तत् सततोत्सवमिति इत्येतद्भ्रमेन त्वरया विस्मृतमभूत् अन्यथा कथं कृतकरणोपदेश इति भावः ॥६७॥

टिप्पनी—सकल इति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

বাঙ্গালা— শ্রীকৃষ্ণ বাটীতে আসিলে, যুধিষ্ঠির সমগ্র ইন্দ্রপ্রস্থনগরেই অকাল মহোৎসব করিবার জন্য আদেশ করিলেন ; কিন্তু তখন সর্বদার জন্যই যে সেই নগরে উৎসব হইতেছিল, তাহা তিনি অত্যন্ত আনন্দের ত্বরায় নিশ্চয়ই বিস্মৃত হইয়াছিলেন ॥৬৭॥

अन्वयः—अखिलाभिधानवित् अयं हरिः आकुमारं स्वजनस्य वार्त्तम् अन्वयुङ्क्त । महतीं श्रियम् अवाप्य अपि विस्मयः सुजनः जातु किञ्चन न विस्मरति ॥६८॥

टीका— हरिरिति । किञ्चेति चार्थः । अखिलान्यभिधानानि नामानि वेत्तीति अखिलाभिधानवित् सकलनामप्रपञ्चाभिज्ञः । "नामरूपे व्याकरवाणीति श्रुतेरिति भावः । "आख्याह्वे चाभिधानं च नामधेयं च नाम च"त्यमरः । अयं हरिः कृष्णः कुमारमारभ्येत्याकुमारम् । "आङ्मर्यादाभिविध्योरित्यभिधानादव्ययीभावः । स्वजनस्य बन्धुजनस्य । "बन्धुस्वस्वजनाः समा" इत्यमरः । वार्त्तमनामयम् आरोग्यमित्यर्थः । "वार्त्तं फल्गुन्यरोगे चे"त्यमरः । "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयमिति मनुस्मरणात् । अन्वयुङ्क्त अपृच्छत् । "प्रश्नोऽनुयोग पृच्छा चे"त्यमरः । युजेः कर्त्तरि लङ् । तथाहि, महतीं श्रियं सम्पदमवाप्यापि विस्मयः निरहङ्कारः सुजनः अतएव जातु कदाचिदपि किञ्चन किमपि न विस्मरति । सुजनः सम्पन्नोऽप्यहङ्कारं न करोतीति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥६८॥

टिप्पनी—हरिरिति । अत्र परार्द्धे विस्मयो विस्मरतीति च्छेकानुप्रासेन टीकोक्तार्थान्तरन्यासः संसृज्यते । बन्धस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥६८॥

বাঙ্গালা—সকলেরই নামাভিজ্ঞ ঐ শ্রীকৃষ্ণ, বালকটী হইতে আরম্ভ করিয়া সমস্ত বন্ধুজনের আরোগ্যের বিষয় জিজ্ঞাসা করিতে লাগিলেন । কারণ, অত্যন্ত সমৃদ্ধি লাভ করিবার পরেও যাঁহাদের অহঙ্কার জন্মে না ; সেইরূপ সজ্জনগণ কখনও কোন বিষয়ই বিস্মৃত হন না ॥৬৮॥

इति श्रीशिशुपालवधे महाकाव्ये श्रीशब्दालङ्कृत-
सर्गान्ते श्रीकृष्णसमागमो नाम
त्रयोदशः सर्गः॥१३॥

—०—

---

अन्वयः—श्रीपतिः अवनेः पतिश्च (एतौ) उभौ मर्त्यलोकदुरवापम् अवाप्तरसोदयम् अतिरिक्ततया अनुपदं नूतनत्वं दधत् अनेकं वङ्गथामृतं परस्परम् अस्विदताम्॥६९॥

टीका—मर्त्येति। उभौ श्रीपतिः कृष्णः असावनेः पतिः धर्मसुतश्च परस्परं मर्त्य-लोके मनुष्यलोके दुरवापं दुर्लभम् अवाप्तरसोदयं प्राप्तरसोत्कर्षं स्वादूभवदित्यर्थः अति-रिक्ततया अतिस्निग्धतया अनुपदमनुवाक्यं प्रतिवाक्यं च नूतनत्वमपूर्वतां दधत् अनेकं बहुलं सङ्कथा संभाषा चेदिराजजरासन्धादिकार्यचिन्तारूपं तदेवामृतं तदस्विदतां स्वादित-वन्तौ। "आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः" इति भावः। स्वदतेर्णौ घङुपधायाः ह्रस्वः। सङ्कथामृतमिति रूपकालङ्कारः स्वादनलिङ्गात्॥६९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये त्रयोदशः
सर्गः॥१३॥

—०—

टिप्पनी—मर्त्येति। अत्र श्रीपतिः पतिरिति पतिशब्दार्थयोः पौनरुक्त्यात् तात्पर्यमात्रतो भेदाच्च लाटानुप्रास इति टीकोक्तरूपकेण सह संसृष्टिः। वर्ण्योत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः॥६९॥

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां
शिशुपालवधटीप्पन्यां माधुरीसमाख्यायां
त्रयोदशः सर्गः।

—०—

বাঙ্গালা—শ্রীকৃষ্ণ ও যুধিষ্ঠির ইঁহারা দুইজনে পরস্পর অনেক কথোপকথনরূপ অমৃত পান করিলেন; সে অমৃত মর্ত্ত্যলোকের পক্ষে দুর্লভ ছিল, এবং তাহাতে উৎকৃষ্ট রস ছিল, আর অতিমধুর বলিয়া তাহার প্রত্যেক পদেই নূতনত্ব ছিল॥৬৯॥

---

# चतुर्दशः सर्गः ।

—:०:—

तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकाशया दृशा ।
यज्ञकर्मणि मनः समादधद्वाग्विदां वरमकद्वदो नृपः ॥१॥
लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाधिका ।
व्रीडमेति न तव प्रियं वदन् ह्रीमतामभवतैव भूयते ॥२॥

---

**अन्वयः**—अकद्वदः नृपः यज्ञकर्मणि मनः समादधत् (सन्) आहितविकाशया दृशा स्नेहम् उद्गिरन् इव वाग्विदां वरं तं जगाद ॥१॥

**टीका**—तमिति । वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः कद्वदः गर्ह्यवादी । "गर्ह्यवादी तु कद्वद" इत्यमरः । "रथवदयोश्चे"ति कोः कदादेशः । स न भवतीत्यकद्वदः साधुवादी नृपो युधिष्ठिरः यज्ञकर्मणि यज्ञानुष्ठाने मनः समादधत् सम्यगादधत् तदेव हृदि निधायेत्यर्थः । आहितविकाशया जातप्रसादया दृशा दृष्ट्या स्नेहमुद्गिरन्नुद्वमन्निवेत्युत्प्रेक्षा । दृष्टिविकाशात् प्रकटितस्नेहः सन्नित्यर्थः । वाचो विन्दन्ति वक्तुं विवेक्तुं च जानन्तीति वाग्विदः वाक्यकोविदाः । "सत्सूद्विषे"त्यादिना क्विप् । तेषां वरं श्रेष्ठं तं हरिं गिरं जगाद । ब्रूतेरर्थग्रहणात् दुह्यादीत्यादिना गदेर्द्विकर्मकत्वम् । अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः । अस्मिन् सर्गे रथोद्धतावृत्तम्, "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥१॥

**टिप्पनी**—तमिति । अत्र "उत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः" इति मल्लिनाथः । वस्तुतस्तु दर्पणमते छेकानुप्रास एव 'गिरमुद्गिरन्' इति व्यञ्जनसंघस्य सकृदनेकधासाम्यात् अनेकस्य अनेकधा असकृत्साम्य एव वृत्त्यनुप्रासाङ्गीकारात् "असकृद्वाप्यनेकधा" इति तत्रोक्तत्वात् वाशब्दस्य च एकधापक्षे वक्ष्यमाणत्वात् । प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

**বাঙ্গালা**—শিষ্টভাষী রাজা যুধিষ্ঠির যজ্ঞকার্য্যে মনোনিবেশ করতঃ, প্রীতিবিস্ফারিত নেত্রে স্নেহই যেন প্রকাশ করিতে থাকিয়া, বাগ্মি-শ্রেষ্ঠ শ্রীকৃষ্ণকে বলিতে লাগিলেন ॥১॥

**अन्वयः**—परः प्रियं गदितः (सन्) न लज्जते । (किन्तु) वक्तुः एव अधिका त्रपा भवति । तव (तु) प्रियं वदन् (जनः) व्रीडं न एति ; (अथच) अत्रभवता एव ह्रीमता भूयते ॥२॥

**टीका**—गिरं जगादेत्युक्तामेव गिरं दशभिः प्रपञ्चयति लज्जत इत्यादिभिः । परः अन्यः कश्चित् पुमान् प्रियं गदितः प्रियवाक्यमुक्तः सन्नित्यर्थः । गदेर्दुहादित्वादप्रधाने कर्मणि क्तः । "अप्रधाने दुहादीनामिति वचनात् । न लज्जते तस्योत्सुकत्वादिति भावः ।

तोषमेति वितथैः स्तवैः परस्ते च तस्य सुलभाः शरीरिभिः ।
अस्ति न स्तुतिवचोऽनृतं तव स्तोत्रयोग्य ! न च तेन तुष्यसि ॥३॥
बह्वपि प्रियमयं तव ब्रुवन् न व्रजत्यनृतवादितां जनः ।
सम्भवन्ति यददोषदूषिते सार्व ! सर्वगुणसम्पदस्त्वयि ॥४॥

---

किन्तु वक्तुः स्तोतुरेवाधिका त्रपा भवति । भयादिना मिथ्यावाचकत्वादिति भावः । प्रकृते तु नैवमित्याह । तव प्रियं वदन् त्वां स्तुवन्नित्यर्थः व्रीड़ं न एति अनन्तगुणाधारे त्वयि बह्वोरपि प्रियस्य अमिथ्यात्वादिति भावः । किन्तु स्तवनेन अत्रभवता पूज्येनैव ह्रीमता भूयते प्रत्युत त्वमेवात्र जिह्रेषीत्यर्थः महतामनुत्सुकत्वादिति भावः । "पूज्यस्तत्रभवानिति सज्जनः । "इतराभ्योऽपीति सार्वविभक्तिके त्रल्प्रत्यये सुप्सुपेति समासः ॥२॥

टिप्पनी—लज्जत इति । अत्र परः क्रमार्थ्यनयोर्विरूपयोः सङ्घटनाविषमालङ्कारयेति परश्लोकीय-टीकोक्तव्यतिरेकेण सहाङ्गाङ्गिभावेन सङ्करः । एवं परत्रापि । वाच्यानां भेदबोधकानां तुशब्दादीनामनभि-धानेऽपि न वाच्यानभिधानदोषः, तेषां तात्पर्य्यादेवावगतेः "न दोषो न गुणः क्वचित्" इति साहित्यदर्पणात् वाच्यानभिधानन्यूनपदयोः समानन्यायत्वात् । प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—অন্ত লোকের প্রীতিকর বাক্য বলিলে, সে লজ্জিত হয় না ; বরং বক্তা-রই অত্যন্ত লজ্জা হয় । কিন্তু তোমার প্রীতিকর বাক্য বলিতে লোকে লজ্জা পায় না ; অথচ মাননীয় তুমিই লজ্জিত হইয়া থাক ॥২॥

अन्वयः—परः वितथैः स्तवैः तोषम् एति ; तस्य च ते शरीरिभिः सुलभाः । (किन्तु हे) स्तुति-योग्य ! तव अनृतं स्तुतिवचः न अस्ति, (अथच) तेन (त्वं) न च तुष्यसि ॥३॥

टीका—तोषमिति । परस्त्वन्यः वितथैरसत्यभूतैः स्तवैः स्तोत्रैः । "स्तवः स्तोत्रं नुतिः स्तुतिरित्यमरः । तोषमुत्सुकतामेति ते च तस्य परस्य ते मिथ्यास्तवाः शरीरिभिः प्राणिभिः सुलभाः असम्बद्धप्रलापानामनिरर्गलत्वादिति भावः । त्वयि तु नैवमित्याह । अस्तीति । हे स्तोत्रयोग्य ! गुणाकरादिति भावः । अतएव तव सम्बन्धि स्तुतिवचोऽनृतं नास्ति न भवति तेन स्तुतिवचसा न तुष्यसि न प्रसीदसि गम्भीरत्वादिति भावः अत्र । श्लोक-द्वये पुरुषान्तरादुपमानभूतादाधिक्यकथनाद् व्यतिरेकालङ्कारः ॥३॥

टिप्पनी—तोषमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

বাঙ্গালা—অন্য লোক মিথ্যা স্তবেও সন্তোষ লাভ করিয়া থাকে এবং তাহার পক্ষে সেরূপ মিথ্যা স্তব জনসাধারণ দ্বারা সুলভও হইয়া থাকে । কিন্তু হে স্তবযোগ্য ! তোমার পক্ষে মিথ্যা স্তুতিবাক্য নাই ; অথচ তুমি সে স্তব দ্বারা সন্তুষ্ট হও না ॥৩॥

अन्वयः—अयं जनः बहु अपि तव प्रियं वदन् [सन्] अनृतवादितां न व्रजति । यत् (हे) सार्व ! अदोष-दूषिते त्वयि सर्वगुणसम्पदः सम्भवन्ति ॥४॥

टीका—बह्वपीति । अयं जनः स्वयमित्यर्थः परात्मज्ञते बह्वपि तव प्रियं ब्रुवन्

सा विभूतिरनुभावसम्पदां भूयसी तव यदायतायति।
एतदूढ़गुरुभार! भारतं वर्षमद्य मम वर्त्तते वशे॥५॥
सप्ततन्तुमधिगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम।
मूलतामुपगते खलु त्वयि प्रापि धर्ममयवृक्षता मया॥६॥

---

सन् अनृतवादितां मिथ्यावादित्वं न व्रजति न गच्छति यद्यस्मात् हे सार्वं! सर्वहितत्वात् सार्वः तत्सम्बोधने। यद्दोषदूषितो न भवतीत्यदोषदूषिते सर्वाऽगुणवर्जिते त्वयि सर्वगुणसम्पदः सम्भवन्ति। अनारोपितगुणवादो भूयानपि न विपर्यतीति भावः। अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम्॥४॥

टिप्पनी—वक्तीति। अत्र सार्वसर्वेति छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥४॥

বাঙ্গালা—এই ব্যক্তি (আমি), বহু পরিমাণে তোমার প্রিয়বাক্য বলিয়াও মিথ্যাবাদিতার দোষ প্রাপ্ত হইবে না। হে সর্বজনহিতৈষী! যেহেতু, সর্বপ্রকারদোষবিহীন তোমাতে সর্বপ্রকার গুণসম্পদই সম্ভবপর হয়॥৪॥

अन्वयः—(हे) ऊढ़गुरुभार! एतत् भारतं वर्षम् अद्य आयतायति (यथा तथा) मम यत् वशे वर्त्तते; सा तव अनुभावसम्पदां भूयसी विभूतिः॥५॥

टीका—सेति। हे ऊढ़गुरुभार! विश्वम्भरत्वादिति भावः। एतत् भरतस्य राज्ञ इदं भारतम्। भारतनामाख्यं वर्षम्। "वर्षोऽस्त्री भारतादौ चेति हेमः। "लोकोऽयं भारतं वर्षमित्यमरः। अद्येदानीमायतायति बहुतरकालस्थिरं यथा तथेत्यर्थः। "उत्तरः काल आयतिरित्यमरः। मम वशे आयत्ततायां वर्त्तत इति यावत्। "वश आयत्ततायाञ्चेति विश्वः। सा मद्वशवर्त्तनं विधेयप्राधान्यात् स्त्रीलिङ्गता। तवानुभावसम्पदां सामर्थ्यातिशयानां भूयसी महती विभूतिर्महिमा कार्यमिति यावत्। त्वत्प्रसादलब्धमिदमैश्वर्यमित्यर्थः। अत्र निजैश्वर्यस्य भगवदनुभावसम्पदं विना सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः॥५॥

टिप्पनी—सेति। अत्र प्रथमे पादे विभू-भावेति वृत्त्यनुप्रासः, द्वितीयतृतीययोस्तु पादयोः यतायतीति भारभारतमिति च छेकानुप्रास इति टीकोक्तातिशयोक्त्या सह संसृष्टिः। पञ्चोत्कर्षस्य पारोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः॥५॥

বাঙ্গালা—হে গুরুতরভারধারী! এই ভারতবর্ষ আজ স্থায়ী ভাবে যে আমার অধীনে রহিয়াছে; তাহা তোমারই প্রভাবের মহামহিমা॥৫॥

अन्वयः—सप्ततन्तुम् अधिगन्तुम् इच्छतः मम अनुज्ञया अनुग्रहं कुरु। (हे प्रभो!) त्वयि खलु मूलताम् उपगते (सति) मया धर्ममयवृक्षता प्रापि॥६॥

टीका—तदेवं स्तुत्या हरिमभिमुखीकृत्य कृत्यमावेदयति। सप्तेति। सप्त तन्तवः

सम्भृतोपकरणेन निर्मलां कर्त्तुमिष्टिमभिवाञ्छता मया।
त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजान् पुपूषता ॥७॥

संख्या यस्य तं सप्ततन्तुं क्रतुम्। "सप्ततन्तुर्मखः क्रतुरित्यमरः। अधिगन्तुं प्राप्तुमिच्छतो ममानुज्ञयानुज्ञादानेनानुग्रहं प्रसादं कुरु साहाय्यं कुर्वित्यर्थः। ननु समर्थस्य किं मदनुग्रहेणेत्याह, हे प्रभो! त्वयि मूलतां मुख्यकारणतामङ्घ्रित्वं चोपगते सति। मया धर्मं-मयद्रुमता धर्मात्मकद्रुमता प्रापि प्राप्ता। प्राप्नोतेः कर्मणि लुङ्। प्रागपि त्वदनुग्रहादेव धर्ममर्जयन् धर्मराजोऽहमस्मीति भावः। अत्र नृपस्य धर्मद्रुमत्वेन हरेस्तन्मूलत्वेन रूपणात् सावयवरूपकं तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्यं व्यज्यते।६॥

टिप्पनी---सर्वेति। अत्र प्रथमे पादे च्छेकानुप्रास इति टीकोक्तरूपकेण सह संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः। उत्तरार्द्धे प्रति प्रमाणं यथा महाभारते—

"युधिष्ठिरो धर्म्ममयो महाद्रुमः, स्कन्धोऽर्जुनः, भीमसेनोऽस्य शाखा, माद्रीसुतौ पुष्पफले, समृधे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च।"

तेन च ये नाम शिक्षितम्मन्या मन्यन्ते शिशुपालवधादिकाव्यरचनातः परमेव महाभारतादिरचनेति; तेषामिदमेव पद्यं मुखपिधानम् ॥६॥

বাঙ্গালা—আমি রাজসূয় যজ্ঞ করিতে ইচ্ছা করিতেছি; সুতরাং তুমি তাহার অনুমতি দিয়া আমার প্রতি অনুগ্রহ কর। তুমি মূলতা প্রাপ্ত হইলেই আমি ধর্ম্মময় বৃক্ষতা লাভ করিয়াছি ॥৬॥

अन्वयः---निर्म्मलाम् इष्टिं कर्त्तुम् अभिवाञ्छता सम्भृतोपकरणेन मया, वलजान् पुपूषता कर्षकेण समीरणः इव त्वं प्रतीक्षितः ॥७॥

टीका—सम्भृतेति। निर्मलां निर्दोषाम् इष्टिं यागम्। यजेः स्त्रियां क्तिन्, "वचिस्वपियजादीनां किति" इति सम्प्रसारणम्। कर्त्तुमभिवाञ्छता अतएव सम्भृतोपकरणेन सम्पादितसाधनेन मया वलजान् धान्यराशीन्। "वलजौ धान्यराशिः स्यादिति वैजयन्ती। पुपूषता पवितुं शोधयितुं निर्बुसीकर्त्तुम् इच्छता। पुनातेः सनन्ताल्लटः शत्रादेशः, "सनि ग्रहगुहोश्च" इति चकारादिटः प्रतिषेधः। कर्षकेण कृषीवलेन समीरणो वायुरिव प्रतीक्षितः। प्रवाति सूर्पादिना धान्यक्षेपणः पवनं तद्वातं विनेव त्वां विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भावः ॥७॥

टिप्पनी—सम्भृतेति। अत्र श्रौतोपमालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७॥

বাঙ্গালা—কৃষক যেমন ধান্যরাশি পরিষ্কার করিতে ইচ্ছা করিয়া বায়ুর প্রতীক্ষা করে; আমিও তেমন নির্দ্দোষ যজ্ঞ করিতে ইচ্ছা করিয়া, সমস্ত উপকরণ সংগ্রহপূর্ব্বক তোমার প্রতীক্ষা করিতেছিলাম ॥৭॥

वीतविघ्नमनघेन भाविता सन्निधेस्तव मखेन मेऽधुना।
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ ॥८॥
स्वापतेयमधिगम्य धर्मतः पर्य्यपालयमवीवृधञ्च यत्।
तीर्थगामि करवै विधानतस्तज्जुषस्व जुहवानि चानले ॥९॥

---

अन्वयः—अधुना तव सन्निधेः मे मखेन वीतविघ्नम् अनघेन भाविता। (तथाहि) अशीतदीधितौ आस्थितोदये (सति) कः वासरश्रियं विहन्तुम् अलम् ? ॥८॥

टीका—वीतविघ्नमिति। अधुना तव सन्निधेर्हेतोर्मे मखेन क्रतुना कर्त्रा वीतविघ्नमविघ्नम् अनघेन निर्दोषेण भाविता भविष्यत इत्यर्थः। भावे लुट् "स्यसिच्सीयुट्तास्यादिना लुटि चिण्वद्भावात् वृद्धिः। तथाहि, अशीतदीधितावुष्णांशावास्थितोदये प्राप्तोदये सति को वासरश्रियन्दिनशोभां विहन्तुमलं शक्तः न कोऽपीत्यर्थः। अत्र रविमरीचिमालिनोर्वाक्यभेदात् बिम्बप्रतिबिम्बतया सन्निहितद्योतितया समानधर्मतया निर्दोषो दृष्टान्तालङ्कारः। "यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते। सामान्यधर्मं वाक्योक्तः स दृष्टान्तो निगद्यते" इति लक्षणात् ॥८॥

टिप्पनी—वीतेति। अत्र को विहन्तुमलम् अपि तु कोऽपि नेत्यर्थान्तरापत्तनादर्थापत्तिरपीति टीकोक्तदृष्टान्तेनासौ सङ्कीर्य्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥८॥

বাঙ্গালা—এখন তোমার সন্নিধানবশতঃ আমার যজ্ঞ নির্বিঘ্নে নির্দোষ হইয়া সম্পন্ন হইবে। কেন না, সূর্য্য উদিত হইলে, কোন্ ব্যক্তি দিনের শোভা নষ্ট করিতে পারে ? ॥৮॥

अन्वयः—यत् स्वापतेयं धर्मतः अधिगम्य पर्य्यपालयम् अवीवृधञ्च, तत् विधानतः तीर्थगामि करवै, तत् जुषस्व, अनले तत् जुहवानि च ॥९॥

टीका—स्वापतेयमिति। यत् स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम्। "पथ्यतिथिवसतिस्वपतेर्ढञ्"। "द्रव्यं वित्तं स्वापतेयमित्यमरः। धर्मतः "चत्रियस्य विजितमिति शास्त्रोक्तप्रकारादित्यर्थः अधिगम्य लब्ध्वा। यत्नेन पर्य्यपालयं पालितवान् अवीवृधं वृद्धिं च प्रापितवान्। तत्तीर्थगामि विप्राधीनं करवै कारिष्यामि। विधानतः। "पलिनं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निर्वपेदिति स्मरणात्। तच्च पात्रं त्वमेवेत्याह। तत् सर्वं जुषस्व सेवस्व सदैव भुङ्क्ष्वेत्यर्थः। जुषी प्रीतिसेवनयोरिति धातोर्लोट्। अनले जुहवानि च जुहुयां तन्मुखेनापि तवैव भोक्तृत्वादिति भावः। जुहोतेः सम्प्रश्नलोटिमेनिर्देशः ॥९॥

टिप्पनी—स्वापतेयमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

বাঙ্গালা—যে ধন ধর্ম্মানুসারে লাভ করিয়া, রক্ষা করিয়া আসিতেছি এবং বৃদ্ধি করিয়াছি ; তাহা শাস্ত্রানুসারে পাত্রস্থ করিব ; তুমিও তাহার কিছু ভোগ কর ; আবার আমিও তাহার কিছু অগ্নিতে হোম করি ॥৯॥

पूर्वमङ्ग ! जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनि भविष्यति मया वाञ्छितोत्तमवितानयाजिना ॥१०॥
किं विधेयमनया विधीयतां त्वत्प्रसादजितयार्थसम्पदा ।
शाधि शासक ! जगत्त्रयस्य मामाश्रवोऽस्मि भवतः सहानुजः ॥११॥

---

अन्वयः—वा अङ्ग ! त्वम् एव पूर्वं जुहुधि, ततः सोमपायिनि त्वयि अवभृथे स्नातवति (सति) मया वाञ्छितोत्तमवितानयाजिना भविष्यति ॥१०॥

टीका—पूर्वमिति । वेति पक्षान्तरे अथवेत्यर्थः । अङ्ग ! हे कृष्ण ! "अथ सम्बोधनार्थकाः स्युः प्याट् पाडङ्ग हे है भोः" इत्यमरः । पूर्वं त्वमेव जुहुधि यजस्वेत्यर्थः । "हुझल्भ्यो हेर्धिः" इति हेर्धिरादेशः । सोमपायिनि त्वयि अवभृथे यज्ञे । "दीक्षान्तोऽवभृथो यज्ञे" इत्यमरः । स्नातवति सति ततोऽनन्तरं मया वाञ्छित उत्तमो वितानो राजसूयाख्यः । "क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके" इत्यमरः । तेन तथा याजिना भविष्यते । भावे लृट् । त्वयि इष्टवति पश्चादहं यक्ष्ये इत्यर्थः । अत्र श्लोकद्वयेन हरेर्यागासम्बन्धे तत्सम्बन्धोक्तेरतिशयोक्तिः ॥१०॥

टिप्पनी—पूर्वमिति । अत्र गुणरीती पूर्ववत् ॥१०॥

বাঙ্গালা—অথবা, কৃষ্ণ ! তুমিই আগে যজ্ঞ কর ; তাহার পর, তুমি সোম পান করিয়া যজ্ঞান্তে স্নান করিলে পর, আমি অভীষ্ট উৎকৃষ্ট রাজসূয় যজ্ঞ করিব ॥১০॥

अन्वयः—त्वत्प्रसादजितया अनया अर्थसम्पदा किं विधेयं विधीयताम् ; (हे) जगत्त्रयस्य शासक ! मां शाधि, सहानुजः (अहं) भवतः आश्रवः अस्मि ॥११॥

टीका—किमिति । अथवा त्वत्प्रसादेन त्वदनुग्रहेण जितया जयलब्धया अनयार्थसम्पदा धनसम्पदा किं विधेयं किमनुष्ठेयं विधीयतां त्वयैव क्रियताम् अहं तु अस्वतन्त्र इत्याह । हे जगत्त्रयस्य शासक ! नतु मनवेति मां शाधि शिक्षयेत्यर्थः । शासेर्लोटि "हुझल्भ्यो हेर्धिः" इति धिरादेशः, झलोझलीति सकारलोपः । सहानुजः सानुजः सन् । "वोपसर्जनस्येति सहशब्दस्य सभावविकल्पः । भवतः तवाश्रवो विधेयोऽस्मि । "विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः । अत्रानाश्रवस्याश्रवत्वसम्बन्धोक्तेरतिशयोक्तिरिति । दशश्लोक्यामाचार्यमतेऽतिप्रियतराख्यानात् प्रेयोऽलङ्कारः । "प्रेयः प्रियतराख्यानमिति लक्षणात्, आधुनिकास्तु भावनिबन्धने प्रेयोऽलङ्कार इति लक्षयन्ति । स चोक्तौस्तत्र तत्रोन्नेष्यते च ॥११॥

टिप्पनी—किमिति । अत्र धेय-धीयेति च्छेकानुप्रासश्येति टीकोक्तातिशयोक्तिप्रेयोभ्यां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥११॥

বাঙ্গালা—এই অর্থসম্পদ তোমার অনুগ্রহেই লাভ করিয়াছি ; সুতরাং ইহা দ্বারা কি যে করিতে হইবে, তাহা তুমিই কর । হে ত্রিভুবনশিক্ষক ! আমাকে শিক্ষা দাও ; কনিষ্ঠ ভ্রাতৃগণের সহিত আমি তোমার আজ্ঞাধীন ॥১১॥

तं वदन्तमिति विष्टरश्रवाः श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डलव्याजहारशबलं दधद्वपुः ॥१२॥
साधिताखिलनृपं महन्महः सम्प्रति स्वनयसम्पदैव ते ।
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यद्यरोगिताम् ॥१३॥

---

अन्वयः—अथ विष्टरश्रवाः इति वदन्तं तं समस्त-भूभृतः श्रावयन् दशनांशुमण्डल-व्याज-हार-शबलं वपुः दधत् व्याजहार ॥१२॥

टीका—तमिति । अथानन्तरं विष्टराविव श्रवसी यस्य स विष्टरश्रवाः । "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवा" इत्यमरः । इति एतादृशं तं वदन्तं नृपम् । समस्तभूभृतः सर्वान् नृपान् श्रावयन् दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन हारेण मुक्ताहारेण शबलं श्यामं वपुर्दधत् व्याजहार व्याहृतवान् । अत्र दशनांशुमण्डलस्य व्याजशब्देनासत्यत्वप्रतिपादनात् अपह्नवभेदः ॥१२॥

टिप्पनी—तमिति । अत्र पूर्वार्द्धे श्रव श्रावेति च्छेकानुप्रासः, परार्द्धे तु व्याजहार-व्याजहारेति आद्य-यमकमिति टीकोक्तापह्नुत्या सह तयोः संसृष्टिः । मधुररचनावशात् माधुर्यं गुणः, पाञ्चाली च रीतिः ॥१२॥

বাঙ্গালা—যুধিষ্ঠির এইরূপ বলিতে লাগিলে, তাহার পর, শ্রীকৃষ্ণ সমস্ত রাজগণকে শুনাইয়া তাঁহাকে বলিতে লাগিলেন ; তৎকালে দন্তের কিরণচ্ছলে মুক্তার মালা, তাঁহার শরীরটীকে বিচিত্র করিয়াছিল ; তিনি সেই শরীর ধারণ করিতেছিলেন ॥১২॥

अन्वयः—सम्प्रति ते महत् महः स्वनयसम्पदा एव साधिताखिल-नृपम् । (तथाहि) पथ्यवृत्तिः अपि यदि अरोगितां समश्नुते, सः किं परस्य गुणः ? ॥१३॥

टीका—यदुक्तं सा विभूतिरित्यादि तत्रोत्तरमाह । साधितेति । सम्प्रति ते तव महन्महस्तेजः स्वनयसम्पदैव निजनीतिसम्पत्त्यैव साधिताखिलनृपं विजितसमस्तराजकं न तु मद्बलादिति भावः । तथाहि, पथ्या हिता वृत्तिरन्नपानादिक्रिया यस्य सोऽपि अरोगितामारोग्यं समश्नुते यदि प्राप्नोतीति चेत् सोऽपि तदारोग्यमित्यर्थः । विधेयप्राधान्यात् पुंलिङ्गता । परस्य भिषजस्य गुणः किं नेत्यर्थः । पथ्यवृत्तेरारोग्यमौषधसाध्यत्वाद्भिषजो गुणोऽस्तु हितसेव्याभिनो न तथेत्यर्थः स्वयत्नसमर्थः पराधीनसिद्धिरित्युपचार इति भावः । दृष्टान्तालङ्कारः स्फुटः ॥१३॥

टिप्पनी—साधितेति । अत्र महन्मह इति च्छेकानुप्रास इति टीकोक्तदृष्टान्तेन सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—বর্ত্তমান সময়ে আপনার গুরুতর তেজ, নিজের নীতিপ্রভাবেই সকল রাজগণকে জয় করিয়াছে। (তাহাতে আমার কোন আনুকূল্য নাই)। দেখুন—পথ্যসেবী লোক যদি আরোগ্য লাভ করে ; সেটা কি চিকিৎসকের গুণ ? ১৩॥

तत् स्वराजि भवति स्थिते पुरः कः क्रतुं यजतु राजलक्षणम् ।
उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता ॥१४॥
शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।
त्वत्प्रयोजनधनं धनञ्जयादन्य एष इति माऽस्म मावगाः ॥१५॥

---

अन्वयः—तत् स्वराजि भवति पुरः स्थिते (सति) कः राजलक्षणं क्रतुं यजतु ?। श्रीवराहम् अपहाय कस्य वा भुवः उद्धृतौ योग्यता भवति ? ॥१४॥

टीका—यदुक्तं पूर्वमङ्ग ! जुहुधि त्वमेवेति तत्राप्याह। तदिति। यत्तस्मादुक्तरीत्या तवैवाधिकारित्वादित्यर्थः। स्वराजि विजयप्रजारक्षणादिगुणयोगात् शुद्धक्षत्रिये। "न पूजनादिति समासान्तप्रतिषेधः। भवति त्वयि पुरःस्थिते सति कस्त्वदन्यः क इत्यर्थः। राज्ञः क्षत्रियस्य लक्षणं चिह्नमसाधारणं यस्य तं क्रतुं राजसूयमित्यर्थः यजतु न कोऽपीत्यर्थः। "राजा राजसूयेन यजेतेति राजाधिकारताश्रवणाद्राजा त्वमेवेति भावः। संभावनायां लोट्। अत्र दृष्टान्तमाह। भुव उद्धृतौ भुव उद्धरणे श्रीवराहम् आदिवराहम् अपहाय कस्य पुनर्योग्यता सामर्थ्यं भवति न कस्यापीत्यर्थः। योगाय प्रभवतीति योग्यः। "योगाच्चेति यत्प्रत्ययः। अत्र राजवराहयोः वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥१४॥

टिप्पनी—तदिति। अत्र उभयार्द्धेऽपि अर्थापत्तिरिति टीकोक्तदृष्टान्तेन सह तयोः सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—অতএব উৎকৃষ্ট রাজা আপনি সম্মুখে থাকিতে অন্য কোন্ ব্যক্তি রাজার কর্ত্তব্য রাজসূয়যজ্ঞ করিবে ?। আদিবরাহ ভিন্ন অন্য কোন্ ব্যক্তির পৃথিবী উদ্ধারে ক্ষমতা আছে ? ॥১৪॥

अन्वयः—गुरुणि अपि शासने व्यवस्थितं मां कृत्यवस्तुषु कामतः नियुङ्क्ष्व। त्वत्प्रयोजनधनं मां धनञ्जयात् एषः अन्यः इति मा अवगाः ॥१५॥

टीका—यच्चोक्तं संभृतोपकरणेनेत्यादिना तत्राह। शासन इति। गुरुण्यतिदुष्करेऽपि शासने नियोगे व्यवस्थितं त्वदाज्ञाकरमित्यर्थः। मां कृत्यवस्तुषु कर्त्तव्यार्थेषु कामतो यथेच्छं नियुङ्क्ष्व प्रेषय। अनुचितमेतन्निग्रन्तरीति सङ्कोचं वारयन्नाह। त्वदिति। त्वत्प्रयोजनमेव धनं यस्य तं त्वदर्थैकनिष्ठमित्यर्थः। मां धनानि जयतीति धनञ्जयोऽर्जुनः। "संज्ञायां भृतृवृजिधारिसहितपिदम" इति खच्प्रत्यये मुमागमः। तस्मादेषोऽन्यः कृष्ण इति मां मावगाः मावेहि च। नियोगसमुच्चयार्थः मकारः। अवपूर्वादिणो माङि लुङ्, "इणो गा लुङीति गादेशः, नमाङ्योग इत्यट्प्रतिषेधः। उभयोस्तत्कार्यं निबन्धनान्तरनारायणात्मत्वाच्च नावयोर्भेदप्रतिपत्तिः कार्येत्यर्थः। तथाच तद्वदेव नियोगेऽप्यसङ्कोच

যস্তবেহ সবনে ন ভূপতিঃ কর্ম কর্মকরবৎ করিষ্যতি।
তস্য নেষ্যতি বপুঃ কবন্ধতাং বন্ধুরেষ জগতাং সুদর্শনঃ ॥১৬॥
ইত্যুদীরিতগিরং নৃপস্ত্বয়ি শ্রেয়সি স্থিতবতি স্থিরা মম।
সর্বসম্পদিতি শৌরিমুক্তবানুদ্বহন্ মুদমুদস্থিত ক্রতৌ ॥১৭॥

---

উচিত ইতি ভাবঃ, অতএবানয়োর্বাক্যার্থয়োর্হেতুহেতুমদ্ভাবাদ্বাক্যার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ স চ কৃষ্ণয়োর্ভেদাভেদরূপাতিশয়োক্তিমূল ইতি অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ ॥১৫॥

টিপ্পনী—শাসন ইতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৫॥

বাঙ্গালা—আমি আপনার অতিতুচ্ছ আদেশেও অবস্থিত রহিয়াছি; সুতরাং আপনি কর্ত্তব্য বিষয়ে ইচ্ছানুসারে আমাকে নিযুক্ত করুন। আপনার প্রয়োজন সাধন করাই আমার একমাত্র ধন; অতএব 'ইনি অর্জ্জুন হইতে ভিন্ন' এরূপে আমাকে আপনি মনে করিবেন না ॥১৫॥

অন্বয়ঃ—যঃ ভূপতিঃ ইহ তব সবনে কর্ম্মকরবৎ কর্ম্ম ন করিষ্যতি, জগতাং বন্ধুঃ এষঃ সুদর্শনঃ তস্য বপুঃ কবন্ধতাং নেষ্যতি ॥১৬॥

টীকা—যদুক্তং বীতবিঘ্নমিত্যাদি তত্রাভয়দানপ্রতিজ্ঞানীতে। য ইতি। যো ভূপতিঃ তবেহাস্মিন্ সবনে যজ্ঞে। "সবনং যজনে স্নানে সোমে নির্দলনেঽপি চেতি বিশ্বঃ।" কর্মকরবদ্ভৃত্যবৎ কর্ম ন করিষ্যতি তস্য ভূপতেঃ বপুঃ জগতাং বন্ধুঃ ক্ষেমঙ্করত্বাদিতি ভাবঃ এষ সুদর্শনো মচ্চক্রম্। "শঙ্খো লক্ষ্মীপতেঃ পাঞ্চজন্যশ্চক্রং সুদর্শন" ইত্যমরঃ। কবন্ধতাং শিরঃশূন্যতাং নেষ্যতি প্রাপয়িষ্যতি ছেৎস্যামি চক্রেণাস্য শির ইত্যর্থঃ। "কবন্ধং সলিলে প্রোক্তমপমূর্দ্ধকলেবর" ইতি বিশ্বঃ। অতো বিঘ্নশঙ্কা ন কার্য্যেতি ভাবঃ। অত্র সুদর্শনে বন্ধুত্বরূপণাৎ রূপকালঙ্কারঃ ॥১৬॥

টিপ্পনী—য ইতি। অত্র কর্ম্মশব্দার্থয়োঃ পৌনরুক্ত্যেঽপি তাৎপর্য্যতো ভেদাৎ লাটানুপ্রাস ইতি টীকোক্তরূপকেণ সহ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

বাঙ্গালা—যে রাজা আপনার এই যজ্ঞে ভৃত্যের ন্যায় কার্য্য না করিবেন; জগতের বন্ধু এই সুদর্শনচক্র তাঁহার দেহকে মস্তকশূন্য করিয়া দিবে ॥১৬॥

অন্বয়ঃ—নৃপঃ ইতি উদীরিতগিরং শৌরিং 'ত্বয়ি শ্রেয়সি স্থিতবতি সতি মম সর্বসম্পৎ স্থিরা' ইতি উক্তবান্ মুদম্ উদ্বহন্ (সন্) ক্রতৌ উদস্থিত ॥১৭॥

টীকা—ইতীতি। ইতীত্থম্ উদীরিতগিরমুপন্যস্তবাচং শৌরিং নৃপো যুধিষ্ঠিরঃ ত্বয়ি শ্রেয়সশ্রেয়সী-বিষয়ে স্থিতবতি ত্বয়ি ক্ষেমঙ্করে সতীত্যর্থঃ মম সর্বসম্পৎ স্থিরেত্যুক্তবান্। মুদম্ উদ্বহন্ সহায়সম্পত্ত্যা সন্তুষ্যন্ সন্। ক্রতাবুদস্থিত ক্রতুং কর্ত্তুম্ উদ্যুক্তবানিত্যর্থঃ। তিষ্ঠতের্লুঙি "উদোঽনূর্দ্ধ্বকর্মণি" ইত্যাদিনাত্মনেপদম্, "স্থাঘ্বোরিচ্চেতি সিচঃ কিত্ত্বাদি-কারঃ, "হ্রস্বাদঙ্গাদিতি সকারলোপঃ ॥১৭॥

আননেন শশিনঃ কলাং দধদ্দর্শনক্ষয়িতকামবিগ্রহঃ।
আপ্লুতঃ স বিমলৈর্জলৈরভূদষ্টমূর্ত্তিধরমূর্ত্তিরষ্টমী ॥১৮॥
তস্য সাঙ্খ্যপুরুষেণ তুল্যতাং বিভ্রতঃ স্বয়মকুর্বতঃ ক্রিয়াঃ।
কর্ত্তৃতা তদুপলম্ভতোঽভবদ্বৃত্তিভাজি করণে যথর্ত্বিজি ॥১৯॥

---

টিপ্পনী—ইতীতি। অত্র স্থিত-স্থিরেতি মুদমুদেতি চ ব্যঞ্জন-সংঘস্য সকৃদনেকধা সাম্যাত্ ছেকানুপ্রাসঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৭॥

বাঙ্গালা—শ্রীকৃষ্ণ এইরূপ বলিলে, যুধিষ্ঠির বলিলেন—"তুমি আমার মঙ্গল সম্পাদনে প্রবৃত্ত থাকিলে, আমার সমস্ত সম্পদই স্থির থাকিবে" এই কথা বলিয়া তিনি চিত্তে আনন্দ বহন করতঃ যজ্ঞে উদ্যোগী হইলেন ॥১৭॥

অন্বয়ঃ—আননেন শশিনঃ কলাং দধৎ, দর্শন-ক্ষয়িত-কাম-বিগ্রহঃ, বিমলৈঃ জলৈঃ আপ্লুতঃ সঃ অষ্টমী অষ্টমূর্ত্তিধরমূর্ত্তিঃ অভূৎ ॥১৮॥

টীকা—অথ পঞ্চবিংশতা শ্লোকৈরনেকধা ক্রতুং বর্ণয়তি। আননেনেত্যাদি। আননেন শশিনঃ কলামিব কলাং কান্তিং দধৎ। নিদর্শনালঙ্কারঃ। শশিমুখ ইত্যর্থঃ। অন্যত্র শশিখণ্ডধরেত্যর্থঃ। দর্শনেন ক্ষয়িতৌ নাশিতৌ কামবিগ্রহৌ কামক্রোধৌ যেন সঃ। অন্যত্র দৃষ্টিদগ্ধস্মরশরীরঃ বিমলৈর্জলৈরাপ্লুতঃ স্নাতঃ "নদ্যাং স্নাতীতি দীক্ষায়াং স্নানবিধানাদিতি ভাবঃ। অন্যত্র গঙ্গোদকক্লিন্নঃ গঙ্গাধরেত্যর্থঃ। স নৃপঃ অষ্টানাং পূরণী অষ্টমী। "তস্য পূরণে ডড়িতি ডট্ প্রত্যয়ঃ, "নান্তাদসঙ্খ্যাদের্মড়িতি মড়াগমঃ, "টিড্ঢাণঞিত্যাদিনা ঙীপ্। অষ্টানাং মূর্ত্তীনাং সমাহারোঽষ্টমূর্ত্তিঃ। "তদ্ধিতার্থ ইত্যাদিনা সমাহারে দ্বিগুরেকবচনং নপুংসকত্বঞ্চ। তস্য ধরো ধারয়িতাঽষ্টমূর্ত্তিধরঃ শিবঃ তস্য অষ্টমী মূর্ত্তিরভূত্ সোমদীক্ষিতোঽভূদিত্যর্থঃ তস্যাপ্যাগমে শিবমূর্ত্তিত্বপ্রসিদ্ধেঃ। অত্র প্রকৃতাপ্রকৃতয়োর্নৃপশিবয়োঃ শিবশব্দমাত্রসাধর্ম্যাত্ শ্লেষালঙ্কারঃ ॥১৮॥

টিপ্পনী—আননেতি। অত্র চতুর্থচরণে মূর্ত্তিশব্দার্থয়োঃ পৌনরুক্ত্যেঽপি তাৎপর্য্যভেদাত্ লাটানুপ্রাস ইতি টীকোক্তনিদর্শনাশব্দশ্লেষাভ্যাং সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৮॥

বাঙ্গালা—যুধিষ্ঠির মুখ দ্বারা চন্দ্রের শোভা ধারণ করিয়া, জ্ঞান দ্বারা কাম ও ক্রোধ নষ্ট করিয়া এবং নির্ম্মল জলে স্নান করিয়া, অষ্টমূর্ত্তিধারী শিবের অষ্টমী মূর্ত্তি (যজমান—যজ্ঞে ব্রতী) হইলেন ॥১৮॥

অন্বয়ঃ—স্বয়ং ক্রিয়াঃ অকুর্বতঃ অতএব সাংখ্যপুরুষেণ তুল্যতা বিভ্রতঃ তস্য, করণে যথা (তথা) ঋত্বিজি বৃত্তিভাজি সতি তদুপলম্ভতঃ কর্ত্তৃতা অভবত্ ॥১৯॥

টীকা—তস্যেতি। ক্রিয়াঃ কর্ম্মাণি হোমাদীনি, অন্যত্র পুণ্যপাপকর্ম্মাণি স্বয়মকুর্বতোঽননুতিষ্ঠতঃ অন্যত্র উদাসীনস্য। অতএব সাঙ্খ্যপুরুষেণ সাঙ্খ্যশাস্ত্রোক্তেনাত্মনা তুল্যতাং বিভ্রতস্তস্য রাজ্ঞঃ করণে অন্তঃকরণে যথা বুদ্ধাবিত্যর্থঃ। ঋতৌ যজতীতি ঋত্বিক্,

शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥२०॥

---

याजकः । "ऋत्विजो याजकाश्च ते इत्यमरः ।" ऋत्विग्दधृगिति निपातः । तस्मिन् वृत्तिभाजि होमादिव्यापारं कुर्वतीत्यर्थः । अन्यत्र पुण्यपापकारिणि सति तदुपलम्भतः तस्य ऋत्विग्-वृत्तेरुपलम्भान्ममेदमित्यनुसन्धानादेव कर्त्तृता क्रियानुष्ठातृत्वमभवत् तथैव विधिसामर्थ्यादिति भावः । अतएवाह भगवान् जैमिनिः, "अन्यो वा स्यात्परिक्रिया आम्नानात्तथाप्यात्मनेपदम्" इति । अन्यत्र तदुपलम्भतस्तस्या बुद्धिवृत्तेरुपलम्भात् साक्षित्वेनानुसन्धानादेव कर्त्तृत्वमभवत् स्वयं क्रियाभोगरहितोऽपि आत्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः । उपमालङ्कारः ॥१९॥

**टिप्पनी**—तस्येति । अत्र "उपमालङ्कारः" इति मल्लिनाथः । तुल्यतां विभ्रत इत्यार्थोपमा, करणे यथेति च श्रौतोपमेत्यनयोरङ्गाङ्गिभावेन सङ्कर इत्यर्थः । प्रसादोगुणः, वैदर्भी च रीतिः ।

स्वयं क्रिया अकुर्वत इत्यत्र प्रमाणं यथा—"असङ्गो ह्ययं पुरुषः" इति साङ्ख्यसूत्रम् । पुरुषस्य साक्षित्वेन कर्त्तृत्वे प्रमाणं यथा—"अकर्त्तापि कर्त्तेव भवत्युदासीनः" इति सांख्यकारिका । बुद्धिरूपस्य करणस्य वृत्तिसाधकत्वे प्रमाणं यथा—"भोगं साधयति बुद्धिः" इति च सांख्यकारिका ॥१९॥

**বাঙ্গালা**—সাংখ্যমতে যেমন পুরুষ নিজে পুণ্য-পাপপ্রভৃতি কোন কার্য্য করেন না ; বুদ্ধিই সেই সকল কার্য্য করিয়া থাকে ; তথাপি পুরুষ সেই সকল কার্য্যের সাক্ষী বলিয়া তিনিই কর্ত্তা হন ; সেইরূপ যুধিষ্ঠির নিজে দান-হোমাদি কোন কার্য্যই করিতেছিলেন না, পুরোহিতরাই তাহা করিতেছিলেন ; তথাপি তিনি সে কার্য্যগুলির পর্য্যবেক্ষণ করিতেছিলেন বলিয়া তিনিই কর্ত্তা ছিলেন ॥১৯॥

**अन्वयः**—वाक्यलक्षणविदः यजनकर्म्मिणः अनुवाक्यया अनपशब्दम् उच्चकैः शब्दितां देवताम् अपदिश्य याज्यया द्रव्यजातम् अत्यजन् ॥२०॥

**टीका**—शब्दितामिति । वाक्यलक्षणविदो मीमांसाशास्त्रज्ञाः । यजनकर्मिणो यजनव्यापारवन्तः ऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनूच्यत इति अनुवाक्या तया अनुवाक्यया । "अनूच्यया याज्यया जुहोतीति श्रुतेः सा च प्रशास्तृपाठ्या तदभावे होतृपाठ्या । देवताह्वानी ऋक् । वचेः "ऋहलोर्ण्यत्" "चजोः कु घिण्ण्यतोरिति कुत्वं शब्दसंज्ञत्वा-दपोपशब्दसंज्ञायामिति न प्रतिषेधः । उच्चकैः अनपशब्दं यथा तथा शब्दितां मन्त्रवर्णैः-नोच्चैः प्रकाशितामित्यर्थः ""उच्चैः ऋचा क्रियत इति विधानात् । "शब्द सं शब्दने" इति धातोश्चौरादिकात् कर्मणि क्तः । देवतामिन्द्रादिकामपदिश्य द्रव्यजातं पशुपुरोडाशादि हविःसमूहम् इज्यतेऽनयेति याज्या सा च होतृपाठ्या यागाङ्गसाधनमृक् "याज्यया जुहोतीति श्रुतेः । पूर्ववत् "ऋहलोर्ण्यदिति कर्णेण्यत् यजयाचरुचप्रवचर्चश्चेति कुत्वप्रतिषेधः । तया अत्यजन्नित्यर्थः । "देवतोद्देशेन द्रव्यत्यागो याग इति लक्षणात् । स च

সপ্তভেদকরকল্পিতস্বরং সাম সামবিদসঙ্গমুজ্জগৌ।
তত্র সূনৃতগিরশ্চ সূরয়ঃ পুণ্যমৃগ্যজুষমধ্যগীষত ॥২১॥

ত্যাগঃ সামান্যত আহবনীয়ে জুহোতীতি তদাহবনীয় ইতি সামান্যন্যায়াত্ বিধানাদন্যত্রেতি ধ্যেয়ম্। দ্রব্যত্যাগস্যাধ্বর্য্যুমাত্রকর্ত্তৃত্বেঽপি যাজ্যা পুরোঽনুবাক্যদ্বারা হোতৃপ্রশাস্ত্রোরপি সাহিত্যাদত্যজন্নিতি বহুত্বব্যপদেশঃ। তথাচ মৈত্রাবরুণেন পুরোঽনুবাক্যায়ামনুক্তায়াং তত্প্রকাশিতদেবতোদ্দেশেনাধ্বর্য্যুর্হোতৃপঠিতযাজ্যান্তে বষট্কারেণ সোমাদিকং হবিরত্যজদিত্যর্থঃ। স্বভাবোক্তিরলঙ্কারঃ ॥২০॥

টিপ্পনী—শব্দিতামিতি। অত্র শব্দ শব্দেতি বাক্যবাক্যেতি ব্যঞ্জনসংঘস্য সকৃদনেকধা সাম্যাচ্ছেকানুপ্রাস ইতি টীকোক্তস্বভাবোক্ত্যা সহ সংসৃষ্টিঃ। বন্ধার্থস্য প্রগাঢ়ত্বাত্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২০॥

বাঙ্গালা—মীমাংসাশাস্ত্রজ্ঞ পুরোহিতগণ, অপভ্রংশ-শব্দ—পরিত্যাগপূর্ব্বক, আবাহন মন্ত্র দ্বারা উচ্চৈঃস্বরে ইন্দ্রাদি দেবতাদিগকে আহ্বান করিয়া, তাঁহাদের উদ্দেশে যাগমন্ত্র দ্বারা হব্য দ্রব্য সকল হোম করিতে লাগিলেন ॥২০॥

অন্বয়ঃ—তত্র সামবিত্ সপ্ত-ভেদ-কর-কল্পিত-স্বরং সাম অসঙ্গম্ উজ্জগৌ; সূনৃতগিরঃ সূরয়শ্চ পুণ্যম্ ঋগ্যজুষম্ অধ্যগীষত ॥২১॥

টীকা—সপ্তেতি। তত্র ক্রতৌ। সামানি বেত্তীতি সামবিদুদ্গাতা। সপ্তভেদং সপ্তপ্রকারং যথা তথা করেণ হস্তেন কল্পিতাঃ সম্পাদিতাঃ স্বরা নিষাদাদয়ো যস্য তত্ করবিন্যাসভেদাদিভির্ব্যঞ্জিতসপ্তস্বরমিত্যর্থঃ। "নিষাদর্ষভগান্ধারষড্জমধ্যমধৈবতাঃ পঞ্চমশ্চেত্যমী সপ্তেত্যমরঃ। যদ্বা স্বরাঃ ক্রুষ্টাদয়ঃ। ক্রুষ্টঃ প্রথমো দ্বিতীয়ো মন্দ্রো নীচ ইত্যাদয়ঃ। সাম বৃহদ্রথন্তরাদিকমসঙ্গমস্খলিতমুজ্জগৌ উদগায়ত্। কিঞ্চ সূনৃতগিরঃ প্রিয়সত্যবাচঃ। "প্রিয়ং সত্যঞ্চ সূনৃতম্ ইত্যমরঃ" সূরয়ো বিদ্বাংসো হোত্রধ্বর্য্যাদয়ঃ পুণ্যং শ্রেয়স্করম্। ঋচশ্চ যজূংষি চ তত্ ঋগ্যজুষমগ্নিমীল ইষে ইত্যাদিকম্। দ্বন্দ্বৈকবদ্ভাবঃ, "অচতুরে-ত্যাদিনা দ্বন্দ্বে সমাসান্তনিপাতঃ। অধ্যগীষত। ইঙো লুঙি বিভাষা লুঙ্লৃঙোরিতি গাঙাদেশঃ পক্ষে কুটাদিত্বাত্ সিচঃ কিত্ত্বে ঘুমেত্যাদিনা ঈত্বম্। অত্র সাম সামেত্যাদৌ বৃত্ত্যনুপ্রাসভেদো দ্রষ্টব্যঃ ॥২১॥

টিপ্পনী—সপ্তেতি। অত্র সাহিত্যদর্পণমতে সাম-সামেতিশব্দার্থয়োঃ পৌনরুক্ত্যাত্ তাত্পর্য্যমাত্রতো ভেদাচ্চ লাটানুপ্রাসঃ। মল্লিনাথস্তু মতান্তরমাশ্রিত্য "বৃত্ত্যনুপ্রাসভেদঃ" ইত্যুক্তবান্। অত্রাপি গুণরীতী পূর্ব্ববত্ ॥২১॥

বাঙ্গালা—সেই যজ্ঞে সামবেদজ্ঞ (উদ্গাতা) ব্রাহ্মণগণ, হস্তসঙ্কেত দ্বারা নিষাদপ্রভৃতি সপ্তবিধ স্বরের ভেদ দেখাইয়া দিয়া, পরস্পর অসংস্পৃষ্টভাবে সামবেদ গান করিতে লাগিলেন; এবং সত্য-প্রিয়ভাষী পণ্ডিতগণ (হোতারাও অধ্বর্য্যুরা) পবিত্র ঋগ্বেদ ও যজুর্ব্বেদ পাঠ করিতে থাকিলেন ॥২১॥

बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया ।
शुष्मणि प्रणयनादिसंस्कृते तैर्हवींषि जुहवाम्बभूविरे ॥२२॥
नाञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ।
तत्र कर्मणि विपर्य्ययेणनमन् मन्त्रमूहकुशलाः प्रयोगिणः ॥२३॥

---

अन्वयः—तैः बद्ध-दर्भमय-काञ्चि दामया यजमानजायया वीक्षितानि हवींषि प्रणयनादिसंस्कृते शुष्मणि जुहवाम्बभूविरे ॥२२॥

टीका—बद्धेति। बद्धं दर्भविकारं काञ्चिदाम रशनागुणो यया तया। दामेति "डाबुभाभ्यामन्यतरस्यामिति डाप् प्रत्ययः। यजमानो यष्टा। "पूङ्यजोः शानजिति यजेः शानच् प्रत्ययः। तस्य जायया पत्न्या वीक्षितानि दृष्टानि हवींषि "आज्यानि पत्न्यवेक्षत" इत्याज्यस्य पत्न्यवेक्षणसंस्कारविधानात् अर्थप्रधानत्वात् सर्वेषामाज्यादीनां प्राय-भूम्नायेन वीक्षितत्वव्यपदेशः प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणापतने सादनम् आदि-शब्दात्परिस्तरणपरिधानसंमार्गादिसंस्कारसग्रहः तैः प्रणयनादिभिः संस्कृते आहितानि-शये शुष्मणि अग्नौ। "वह्निः शुष्मा कृष्णवर्त्मे"त्यमरः। अत्राप्याहवनीये जुहोतीति हूय-मानि अध्वर्युः कर्त्ता। "जुहूपालव्यापृतया स्रुवाहवनीयं प्रधानमिति न्यायवचनात्। तैः ऋत्विग्भिः जुहवाम्बभूविरे। जुहोतेः कर्मणि लिट्, "भीह्रीभृहुवामिति विकल्पादाम्-प्रत्ययः। अत्र विषयस्य योक्त्रस्यानुपादानेन विषयिणः काञ्चीगुणस्यैव तदभेदेन निर्देशाद्भेदे अभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥२२॥

टिप्पनी—बद्धेति। अत्र "अनुप्रासेन सङ्करः" इति मल्लिनाथः। प्रथमे पादे मय-मयेति छेकानु-प्रासः, द्वितीये यज-जायेति छेकानुप्रासः, प्रथमद्वितीयपादयोरन्त्यानुप्रासश्चेति अनुप्रासत्रयेणेत्यर्थः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

বাঙ্গালা—যজমান যুধিষ্ঠিরের পত্নী দ্রৌপদীদেবী কুশময় কাঞ্চী পরিধান করিয়া যে সকল হব্য দ্রব্য পর্য্যবেক্ষণ করিতেছিলেন; পুরোহিতগণ কুশণ্ডিকাবিধানে সংস্কৃত অগ্নিতে সেই সকল হব্য দ্রব্য হোম করিতে লাগিলেন ॥২২॥

अन्वयः—ऊहकुशलाः प्रयोगिणः तत्र कर्मणि आगमे निखिलाभिः विभक्तिभिः व्यक्तिभिश्च नाञ्जसा निगदितुं मन्त्रं विपर्य्ययेणनमन् ॥२३॥

टीका—नेति। तत्र तस्मिन् कर्मणि यज्ञकर्मणि। अन्यथाश्रुतस्य शब्दस्यान्यथालिङ्ग-वचनादिभेदेन विपरिणमनमूहः तत्र कुशलाः। प्रयोग एषामस्तीति प्रयोगिणः प्रयोक्तारः ऋत्विजः आगमे आम्नाये निखिलाभिर्विभक्तिभिः प्रथमादिभिः सुब्विभक्तिभिस्तिङ्विभक्ति-भिश्च विभक्तिग्रहणं वचनोपलक्षणम्। व्यक्तिभिर्लिङ्गैश्चाञ्जसा सुखेन निगदितुं पठितुं न भवत्यशक्यत्वादिति नाञ्जसा निगदितुम्। "अञ्जस उपसङ्ख्यानमिति। अलुक् नञर्थस्य नशब्दस्य सुप्सुपेति समासः। अथवा अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययं तत्त्वार्थे।

संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥२४॥

---

"अञ्जसा तत्त्वतूर्णयोरिति विश्वः। अञ्जसा तत्त्वत इत्यर्थः। अस्मिन् पक्षे नैकपद्य-नियमः। तं रूढम्, कर्माङ्गदेवतारूपवाक्यं विपर्ययेनमन् विपरिणामन्ति स्म विपरिणमितवन्त इत्यर्थः। विपरिपूर्वकात् ण्यन्तात् णमधातोः लुङ्, सन्वल्लघुनि चङ्परेऽनग्लोपे इति सन्वद्भावे सन्यत इत्यभ्यासस्येत्वम्, "दीर्घो लघोरिति दीर्घः। "उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम्। अत्र नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणामनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥२३॥

टिप्पनी—नाञ्जसेति। अत्र विभक्तिभिर्व्यक्तिभिरिति च्छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह संसृष्टिः। बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥२३॥

বাঙ্গালা—অনন্বয়ী শব্দকে অন্বয়ী করিতে নিপুণ পুরোহিতগণ, সেই যজ্ঞে বেদোক্ত সমস্ত বিভক্তি, বচন ও লিঙ্গদ্বারা সুখে পাঠ করা যায় না বলিয়া মন্ত্রগুলিকে স্থানে স্থানে পরিবর্ত্তিত করিতে লাগিলেন ॥২৩॥

अन्वयः—ते शब्दशासनविदः संशयाय सरूपतां दधतोः क्रियां प्रति दूरभिन्नफलयोः समासयोः विग्रहं स्वरेण व्यवससुः ॥२४॥

टीका—संशयायेति। संशयाय सन्देहोत्पादनाय सरूपतां सादृश्यं दधतोरुभयत्र रूपसाम्यादयं समासोऽयं वेति संशयं कुर्वतोरित्यर्थः। यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शातयिता हन्तेति षष्ठीतत्पुरुषः उपेन्द्रः शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशयः। तत्रानियमे दोषमाह। क्रिया प्रकृतं कर्म तां प्रति तामुद्दिश्येत्यर्थः दूरभिन्नमत्यन्तविलक्षणं फलं ययोर्दूरभिन्नफलयोस्तयोरर्थभेदात् कर्मणः फलभेदं प्रतिपादयतोरित्यर्थः। यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्वं बहुव्रीहौ तु तस्येन्द्रेण वध्यत्वमिति फलभेद इति भावः। समासयोरेवंविधयोः प्रसक्तयोः सतोरित्यर्थः। भावलक्षणे सप्तमी। शब्दशासनविदः शब्दशास्त्रज्ञाः अन्येषामनधिकारादिति भावः। ते प्रकृता ऋत्विजः स्वरेण तत्तत्समासविहितस्वरवशेन विग्रहं वाक्येन समर्थाभिधानं व्यवससुः निश्चिक्युः। अस्मिन् स्वरेऽयं समासः तत्रायं विग्रह इति अन्यतरपक्षावधारणं चक्रुः। यथेन्द्रशत्रुरित्यत्रैव पूर्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमासनिश्चयः। इन्द्रः शत्रुर्यस्येति विग्रहावधारणमित्यर्थः। व्यवपूर्वस्य स्यतेर्लिटि आदेच इत्यात्वे द्विवचनादि-कार्य्ये ओर्जुसादेशः। अत्र संशयजनकत्वफलभेदप्रतिपादकपदार्थयोर्विशेषणगत्या सन्दिग्धे न्यायः प्रवर्त्तते इति न्यायेन विग्रहस्य व्यवसायहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥२४॥

टिप्पनी—संशयायेति। अत्रापि बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥२४॥

বাঙ্গালা—এমন দুইটী সমাস আছে, যাহাতে সমস্ত পদটী একরূপই হইয়া থাকে;

লোলহেতিরসনাশতপ্রভামণ্ডলেন লসতা হসন্নিব।
প্রাজ্যমাজ্যমসকৃদ্বষট্কৃতং নির্মলীমসমলীঢ় পাবকঃ ॥২৫॥
তত্র মন্ত্রপবিতং হবিঃ ক্রতাবশ্নুতো ন বপুরেব কেবলম্।
বর্ণসম্পদমতিস্ফুটাং দধন্নাম চোজ্জ্বলমভূদ্ধবির্ভুজঃ ॥২৬॥

---

সে খানে এইরূপ সন্দেহ জন্মে যে, এখানে এ সমাস না ঐ সমাস; তাহাতে প্রকৃত কার্য্যের ফলও অত্যন্ত বিভিন্নরূপ হইয়া পড়ে। এই জন্য, ব্যাকরণশাস্ত্রজ্ঞ সেই পুরোহিতগণ উদাত্ত-প্রভৃতি স্বরদ্বারা সেই সমাস দুইটীর বিগ্রহবাক্যকে নির্দ্দিষ্ট করিতে লাগিলেন ॥২৪॥*

* যথা—ইন্দ্রশত্রুঃ। এখানে ইন্দ্রস্য শত্রুর্হন্তেতি ইন্দ্রশত্রুঃ এইরূপ ষষ্ঠীতৎপুরুষ সমাস করিলে বুঝাইবে যে, বৃত্রাসুর ইন্দ্রকে বধ করিবেন; আবার ইন্দ্রঃ শত্রুর্হন্তা যস্যেতি ইন্দ্র-শত্রুঃ—এইরূপ বহুব্রীহি সমাস করিলে বুঝাইবে যে, ইন্দ্র বৃত্রাসুরকে বধ করিবেন। সুতরাং 'ইন্দ্রশত্রু' এই পদটী ষষ্ঠীতৎপুরুষ ও বহুব্রীহি এই দুই সমাসেই একরূপ হয়; তাহাতে ঐ দুই সমাসের মধ্যে এখানে কোন্ সমাস এরূপ সন্দেহও জন্মে। কিন্তু উদাত্তপ্রভৃতি যথা-বিহিত স্বর দ্বারা উহার একতর নিশ্চয় হয়; সেইরূপ সেই যজ্ঞে পুরোহিতরা স্বরবিশেষ দ্বারা মন্ত্রবিশেষের অর্থ নিশ্চয় করিয়াছিলেন।

**অন্বয়ঃ**—লসতা লোল-হেতি-রসনা-শত প্রভা-মণ্ডলেন হসন্ ইব পাবকঃ প্রাজ্যং নির্মলীমসং বষট্কৃতম্ আজ্যম্ অসকৃৎ অলীঢ় ॥২৫॥

**টীকা**—লোলেতি। লসতা প্রকাশমানেন লোলাশ্চলা হেতয়ো জ্বালা এব রসনা রসজ্ঞাঃ। "বহ্নের্দ্বয়োর্জ্বালকীলাবর্চির্হেতিঃ শিখা স্ত্রিয়ামিতি," "রসজ্ঞা রসনা জিহ্বেতি" চামরঃ। তাসাং শতানি তেষাং প্রভামণ্ডলেন হসন্নিবেতি রূপকসঙ্কীর্ণোৎপ্রেক্ষা। পাবকো বহ্নিঃ বষট্-কৃতং বষট্কারেণ ত্যক্তং হুতমিত্যর্থঃ। "হুতং ত্রিষু বষট্কৃত"মিত্যমরঃ। নির্ম্মলীমসম-মলিনং শুদ্ধমিত্যর্থঃ। "মলীমসং তু মলিন"মিত্যমরঃ। "জ্যোৎস্নাতমিস্রে"ত্যাদিনা মলিন-শব্দান্মত্বর্থে ঈমসনিচ্ প্রত্যয়ান্তো নিপাতঃ। প্রাজ্যং প্রভূতমাজ্যমসকৃদলীঢ় আস্বাদয়ৎ। লিহেঃ স্বরিতত্বাল্লঙি "হোঢ়" ইতি ঢত্বং "ঝষস্তথোর্ধোঽধ" ইতি ধত্বং ষ্টুত্বে ঢলোপ-দীর্ঘৌ ॥২৫॥

**টিপ্পনী**—লোলেতি। অত্র দ্বিতীয়ার্দ্ধে ছেকানুপ্রাস ইতি টীকোক্তসঙ্করেণ সহ পুনঃ সংসৃষ্টিঃ। মধুররচনাবত্বাৎ মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥২৫॥

**বাঙ্গালা**—চঞ্চল শিখারূপ রসনাসমূহ প্রকাশ পাইতে থাকায় হাসিতে হাসিতেই যেন সেই যজ্ঞীয় অগ্নি, প্রচুর পরিমাণে বিশুদ্ধ আহুত ঘৃত, বার বার আস্বাদন করিতে লাগিলেন ॥২৫॥

**অন্বয়ঃ**—তত্র ক্রতৌ মন্ত্রপবিতং হবিঃ অশ্নতঃ হবির্ভুজঃ অতিস্ফুটাং বর্ণসম্পদং দধৎ কেবলং বপুঃ এব উজ্জ্বলং ন অভূৎ; কিন্তু অতিস্ফুটাং বর্ণসম্পদং দধৎ নাম চ উজ্জ্বলম্ অভূৎ ॥২৬॥

स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् ।
गन्धतोऽपि हुतहव्यसम्भवाद्देहिनामदहदोघमंहसाम् ॥२७॥

---

टीका—तत्रेति । तत्र क्रतौ । मन्त्रैरुत्पवनादिमन्त्रैः पवितं पवित्रितं शोधित-मित्यर्थः । "पूङश्चेति विकल्पादिड़ागमः । हविराज्यादिकमश्नतो भुञ्जानस्य । अशो-र्भोजनार्थाल्लटः शत्रादेशः । हवींषि भुङ्क्त इति हविर्भुजोऽग्नेः सम्बन्धि । अतिस्फुटाम् अतिविकसितां वर्णसम्पदं रूपसमृद्धिं दधत केवलमेकम् । "केवलं त्वेककृत्स्नयोरिति शाश्वतः । वपुरेवोज्ज्वलमोजिष्ठं नाभूत । किन्तु अतिस्फुटामतिव्यक्तां वर्णसम्पदमक्षर-समुदायं दधत् । "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु चाक्षर" इत्यमरः । नाम हवि-र्भुगिति नामधेयं चोज्ज्वलं रूढ़म अभूत निरन्तरं हविर्भोजनाद्वपुः पुष्टिमाप नाम चार्थ-वदासीदित्यर्थः । अत्र भोजनस्याश्नत इति विशेषणगत्या हेतुत्वात्पदार्थहेतुककाव्य-लिङ्गम् ॥२६॥

टिप्पनी—तत्रेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—অগ্নি সেই যজ্ঞে মন্ত্রপূত ঘৃত ভোজন করিতে থাকায়, তাঁহার অতিসুন্দর-রূপযুক্ত শরীরটীই যে কেবল উজ্জ্বল হইয়াছিল, তাহা নহে; কিন্তু সুস্পষ্ট অক্ষরযুক্ত 'হবির্ভুক্' এই নামটীও উজ্জ্বল (রূঢ়) হইয়াছিল ॥২৬॥

अन्वयः—उचितम् उष्णं स्पर्शं दधत् शिखी यत् हविः ददाह, तत् न अद्भुतम्; किन्तु हुत-हव्य सम्भवात् गन्धतः अपि यत् देहिनाम् अंहसाम् ओघम् अदहत् तदेव अद्भुतम् ॥२७॥

टीका—स्पर्शमिति । उचितं स्वाभाविकम् उष्णम् उष्णाख्यं स्पर्शं स्पर्शनेन्द्रियमात्र-ग्राह्यं गुणविशेषं दधत् दधानः शिखी शिखावान् अग्निः । व्रीह्यादित्वादिनिः । हविराज्या-दिकं ददाह भस्मीचकारेति यत् तदद्भुतं न उष्णस्पर्शसहकृतस्याग्नेः पार्थिवद्रव्यदहनशक्तेः स्वाभाविकत्वादिति भावः । कुतः हुतहव्यसम्भवात् हुतहवनीयहविर्जन्यात् गन्धतो गन्धात् अपि सांक्रामिकगुणादपीत्यर्थः देहिनां गन्धं जिघ्रतां प्राणिनामित्यर्थः अंहसां पापानामो-घमपीति भावः अदहत् भस्मीकृतवान् नाशितवानित्यर्थः । अदाह्यदहनं त्वाश्चर्यमिति भावः । अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात् पदार्थहेतुकं तावदेककाव्यलिङ्गम् । उत्तरार्द्धे त्वंहसां भस्मीकरणाभावलक्षणाद्दाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासे लक्षणस्य वाच्याभेदाध्यवसायमूलातिशयोक्तिप्रतिभोत्थापितः स एवा-दाह्यदाहकत्वरूपवाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिङ्गसहकृतो हविर्दहनाद्भुतत्वहेतु-रिति वाक्यार्थहेतुककाव्यलिङ्गमन्यैः प्राधान्येन सङ्गीर्य्यते ॥२७॥

टिप्पनी—स्पर्शमिति । अत्र चतुर्थपादे देहि-दहेति च्छेकानुप्रास इति टीकोक्तसङ्करेण पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

उन्नमन् सपदि धूम्रयन्दिशः सान्द्रतां दधदधःकृताम्बुदः ।
द्यामियाय दहनस्य केतनः कीर्त्तयन्निव दिवौकसां प्रियम् ॥२८॥
निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्भिरे ।
नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥२९॥

---

**বাঙ্গালা**—স্বাভাবিক উষ্ণস্পর্শযুক্ত অগ্নি যে হবনীয় বস্তু দগ্ধ করিতেছিল, তাহা আশ্চর্য্য নহে; কিন্তু আহুত-হবনীয় দ্রব্যের গন্ধ দ্বারাও যে প্রাণিগণের পাপসমূহ দগ্ধ করিতেছিল, তাহাই আশ্চর্য্য ॥২৭॥

**अन्वयः**—सपदि उन्नमन्, दिशः धूम्रयन्, सान्द्रतां दधत्, अधःकृताम्बुदः दहनस्य केतनः दिवौकसां प्रियं कीर्त्तयन् इव द्याम् इयाय ॥२८॥

**टीका**—उन्नमन्निति । सपदि होमसमय एवोन्नमन् उद्गच्छन् दिशो धूम्रयन् धूम्रवर्णाः कुर्वन्, सान्द्रतां नीरन्ध्रतां दधत् अतएवाधःकृताम्बुदः शोभयावधीरितमेघो मेघोपरिगतश्च दहनस्याग्नेः केतनः केतुर्धूम इत्यर्थः द्यौरोको येषां दिवौकसां देवानाम् । पृषोदरादित्वात्साधुः । अथवा दिवसो को येषामिति विग्रहः । "दिवं स्वर्गान्तरिक्षयोरिति विश्वः । तेषां प्रियमिष्टं कीर्त्तयन् कथयन्निव कीर्त्तनहेतोरिव कीर्त्तनार्थमिवेत्यर्थः अतएव फलोत्प्रेक्षा । कीर्त्तयन्निति "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे लटः शत्रादेशः । द्यामन्तरिक्षमियाय प्राप । इणो लिट् ॥२८॥

**टिप्पनी**—उन्नमन्निति । अत्र दध-दधेति च्छेकानुप्रास इति टीकोक्तफलोत्प्रेक्षया सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

**বাঙ্গালা**—যজ্ঞীয় অগ্নির ধূম হঠাৎ উপরে উঠিল, দিক্ সকল ধূম্রবর্ণ করিল, নিবিড়তা ধারণ করিল এবং মেঘমণ্ডলকে নীচে ফেলিল; এই ভাবে সেই ধূম, দেবগণের প্রীতিকর সংবাদ বলিবার জন্যই যেন আকাশে যাইতে লাগিল ॥২৮॥

**अन्वयः**—नाकिनः निर्जिताखिल-महार्णवौषधि-स्यन्द-सारम् अमृतं ववल्भिरे; (किन्तु) अनले हूयमानम् (अमृतं) प्रतीक्षितुं कथम् अपि विषेहिरे ॥२९॥

**टीका**—निर्जितेति । नाकः स्वर्ग एषामस्तीति नाकिनो देवा अखिलानां महार्णवौषधीनां महार्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां स्यन्दो मन्थनान्निःसृतो रसः तस्य सारो भूयांशोऽमृतमिति यावत् स निर्जितो येन तत् अमृतादपि स्वाद्वित्यर्थः । अमृतं हविराख्यामृतम् । "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते" इति मेदिनी । ववल्भिरे अभ्यवजह्रुः । "वल्भ भोजने" कर्त्तरि लिट् । "वल्भस्त्वभ्यवहारं प्रत्यवसानञ्च भोजनं जग्धिरिति" हलायुधः । तस्य स्वादाधिक्यं व्यनक्ति, अनले हूयमानं दीयमानममृतमिति भावः प्रतीक्षितुं कथमपि विषेहिरे सोढवन्तः होमविलम्बं कथञ्चिदसहन्तेत्यर्थः तृष्णा तु प्रागेव निघ्नतीति रसातिशयोक्तिः । अत्र हविषोऽमृतमित्यभेदोक्त्याभेदरूपातिशयोक्तिः

तत्र नित्यविहितोपहूतिषु प्रोषितेषु पतिषु द्युयोषिताम्।
गुम्फिताः शिरसि वेणयोऽभवन् न प्रफुल्लसुरपादपस्रजः ॥३०॥
प्राशुराशु हवनीयमत्र यत् तेन दीर्घममरत्वमध्वगुः।
उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥३१॥

---

स्वाद्विशेषणपदार्थस्य वाक्यानर्थहेतुत्वात् काव्यलिङ्गभेदः तया सङ्कीर्य्यते। "परिनिविभ्यः सेव-सितसयसिवुसहेत्यादिना सत्वः षत्वम् ॥२९॥

टिप्पनी—निर्जितेति। अत्र समासबाहुल्यात् बन्धस्य प्रगाढ़त्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥२९॥

বাঙ্গালা—সেই যজ্ঞে যে ঘৃতের আহুতি দেওয়া হইতেছিল, সে ঘৃত সমুদ্রমথনোত্থিত লতানির্য্যাসের সারকেও জয় করিয়াছিল;. তাই দেবতারা সেই ঘৃত ভোজন করিতে লাগিলেন; কিন্তু অগ্নিতে আহুতি দিতে যে বিলম্বটুকু হইতেছিল, তাঁহারা কোন রকমে তাহা প্রতীক্ষা করিতে পারিতেছিলেন ॥২৯॥

অন্বয়:—তত্র নিত্যবিহিতোপহূতিষু পতিষু প্রোষিতেষু (সৎসু) দ্যুযোষিতাং শিরসি বেণয়ঃ গুম্ফিতাঃ অভবন্; (কিন্তু) প্রফুল্ল-সুর-পাদপ-স্রজঃ গুম্ফিতাঃ ন অভবন্ ॥৩০॥

টীকা—তত্রেতি। তত্র ক্রতৌ নিত্যং বিহিতোপহূতিষু কৃতাহ্বানেষু পতিষু ভর্ত্তৃষু ইন্দ্রাদিষু প্রোষিতেষু প্রবাসং গতেষু। বসেঃ কর্ত্তরি ক্তঃ, "বসতিক্ষুধোরিডাগমঃ। দ্যুযোষিতাং স্বর্গস্ত্রীণাম্ ইন্দ্রাণ্যাদীনাং শিরসি বেণয়ো জটা এব গুম্ফিতা গ্রথিতাঃ অভবন্, প্রফুল্লা-বিকাসিতাঃ সুরপাদপস্রজো মন্দারমালাঃ ন গুম্ফিতা অভবন্। অত্র সুরযোষিতাং বেণ্য-সম্বন্ধেঽপি সম্বন্ধোক্তিঃ সক্সম্বন্ধেঽপ্যসম্বন্ধোক্তেশ্চ সম্বন্ধেঽসম্বন্ধরূপা অসম্বন্ধে সম্বন্ধরূপা চাতিশয়োক্তিঃ তাভ্যাঞ্চ ক্রতোরজস্রত্বং ব্যজ্যতে ইত্যলঙ্কারেণ বস্তুধ্বনিঃ ॥৩০॥

টিপ্পনী—তত্রেতি। অত্র প্রথমার্দ্ধে 'তিষু তেষু তিষু' ইতি বৃত্ত্যনুপ্রাস ইতি টীকোক্তাতিশয়োক্তিভ্যাং সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩০॥

বাঙ্গালা—সেই যজ্ঞে প্রত্যহই ইন্দ্রপ্রভৃতি দেবগণকে আহ্বান করা হইতেছিল; তাই তাঁহারা সে স্থলে আসিয়া প্রবাসী হইয়াছিলেন; সুতরাং শচীপ্রভৃতি স্বর্গস্থ রমণী-গণের মস্তকে সর্বদাই বেণী বদ্ধ হইতেছিল; কিন্তু প্রস্ফুটিত পারিজাতপুষ্পের মালা বদ্ধ হইতেছিল না ॥৩০॥

অন্বয়:—বিবুধাঃ অত্র যৎ আশু হবনীয়ং প্রাশুঃ, তেন দীর্ঘম্ অমরত্বম্ অধ্বগুঃ, (তথা) অধি-কম্ এধিতৌজসঃ (সন্তঃ) উদ্ধতান্ দানবাংশ্চ বিজিগ্যিরে ॥৩১॥

টীকা—প্রাশুরিতি। বিবুধাঃ সুরাঃ অত্র ক্রতৌ আশু ক্ষিপ্রং হূয়ত ইতি হবনীয়ং হবিঃ যৎ প্রাশুঃ প্রাশিতবন্তঃ। অশ ভোজনে লিট্। দ্বির্বচনাদিকার্য্যে "অত আদেরিত্যভ্যাস-দীর্ঘঃ। তেন হবিঃ প্রাশনেন দীর্ঘং চিরভোগ্যমমরত্বং দেবত্বমধ্বগুঃ প্রাপুঃ।" "ইণো গা

नापचारमगमन् क्वचित् क्रियाः सर्वमत्र समपादि साधनम् ।
अत्यशेरत परस्परं धियः सत्रिणां नरपतेश्च सम्पदः ॥३२॥
दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम् ।
दक्षिणः क्षितिपतिर्व्यशिश्रणद्दक्षिणाः सदसि राजसूयकीः ॥३३॥

---

लुह्नोति गादेशः। किञ्च अधिकमत्यन्तमेधितौजसो वर्द्धितबलाः सन्तः उद्धतानुद्दृप्तान् दानवान् असुरांश्च विजिग्यिरे जितवन्तः। विपूर्वाज्जयतेः कर्त्तरि लिट्, "विपराभ्यां जेरित्यात्मनेपदम्। अत्र विबुधानां दीर्घामरत्वासुरविजयित्वासम्बन्धेऽपि सम्बन्धोक्तेरति-शयोक्तिः, एधितौजस्त्वस्य विशेषणगत्या विजयहेतुत्वात् काव्यलिङ्गं तदुत्थापितस्यामरत्वासुर-विजयक्रियासमुच्चय इति सङ्करः। गुणक्रियायौगपद्यं समुच्चयः ॥३१॥

टिप्पनी—प्राशुरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

বাঙ্গালা—যে হেতু দেবতারা এই যজ্ঞে শীঘ্র শীঘ্র হব্য বস্তু সকল ভোজন করিয়াছিলেন, সেই হেতু তাঁহারা দীর্ঘকালস্থায়ী অমরত্ব লাভ করিয়াছিলেন এবং সেই হব্যবস্তু ভোজন করায় দেবতাদের বল অত্যন্ত বৃদ্ধি পাইয়াছিল বলিয়া, তাঁহারা বলদর্পিত দানবগণকেও জয় করিয়াছিলেন ॥৩১॥

अन्वयः—अत्र क्वचित् क्रियाः अपचारं न अगमन्, सर्वं साधनं समपादि; सत्रिणां धियः नरपतेः सम्पदश्च परस्परम् अत्यशेरत ॥३२॥

टीका—नापचारमिति। अत्र क्रतौ क्वचित् कुत्रापि क्रियाः कर्माणि अपचारं वैपरीत्यविपर्य्यासादिदोषं नागमन्। गमेर्लुङि पुषादिना च्लेरङादेशः। अनपचारे हेतुमाह अत्र सर्वं साधनं समपादि सम्पन्नम्। पद्यतेः कर्त्तरि लुङ्, "चिण् ते पद इति चिण् प्रत्ययः कर्मणि वा। सम्पादितमित्यर्थः "चिण् भावकर्मणोरिति चिण्प्रत्ययः। साधनसम्पत्तिमेव व्यनक्ति। अत्येति। सत्रं यज्ञस्तं येषामस्तीति सत्रिणाम् ऋत्विजाम्। "सत्रमाच्छादनं यज्ञमित्यमरः। धियः उत्तरोत्तरप्रयोगविज्ञानानि। तदुक्तम्, "आचतुर्थात् कर्मणोऽन्ते समीक्ष्येतेदं करिष्यामीति। तथा नरपतेः राज्ञः सम्पदः पदार्थसम्भारश्च परस्परम् अत्यशेरत अतिशयितवत्यः उभयेऽप्यतिसमग्रा इत्यर्थः। ज्ञानद्रव्ये हि क्रियासाधने तत्सम्पत्तेः कुतः क्रियापचार इति भावः। अत्रानपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं तच्च परस्परातिशयक्रियारूपधर्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्पद्-गोचरया तुल्ययोगितयोज्जीवितमित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥३२॥

टिप्पनी—नेति। अत्र गुणरीती पूर्ववत् ॥३२॥

বাঙ্গালা—এই যজ্ঞে কোন অংশেই কোন কার্য্যের ত্রুটি বা ব্যত্যয় হইয়াছিল না; সমস্ত অঙ্গই যথাযথভাবে সম্পাদিত হইয়াছিল এবং পুরোহিতদিগের যজ্ঞ সম্বন্ধীয় জ্ঞান ও রাজার সম্পদ এই উভয়ই পরস্পর বৃদ্ধি পাইয়াছিল ॥৩২॥

दिव्यकेशरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ।
दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरदारयन्नखैः ॥७२॥
वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः ।
यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥७३॥

---

अन्वयः—स्थूल-नासिक-वपुः अयं स्कन्ध-धूनन-विसारि-केशर-क्षिप्त-सागर-महाप्लवां वसुन्धरां मुहूर्तम् उद्धृताम् इव ऐक्षत ॥७१॥

टीका—अथ षोडशभिरवतारान् वर्णयिष्यन् वराहावतारं तावदेकेनाह । स्कन्धेति । स्थूलनासिकवपुर्वराहमूर्तिरयं हरिः स्कन्धस्य कन्धरायाः धूननेन कम्पनेन विसारिभिर्विसर्पिभिः केशरैः सटाभिः क्षिप्तोऽवकीर्णः सागरस्य महाप्लवो महापूरो यस्यास्तां जलापसारेण प्रकाशितामित्यर्थः । वसुन्धरां भुवं मुहूर्तं क्षणमात्रम् । "मुहूर्तमल्पकालेऽपीति शब्दार्णवे । उद्धृताम् अनावृतत्वात्सागरादुद्धृतामिव ऐक्षत प्रेक्षितवान् इत्युत्प्रेक्षा । ईक्षतेर्लङ् आडजादीनामाडश्चेति वृद्धिः ॥७१॥

टिप्पनी—स्कन्धेति । अत्र शान्तो रसः, समासबाहुल्यात् उद्धतघटनाव्यञ्जकत्वाच्च ओजो गुणः, गौडी च रीतिः ॥७१॥

বাঙ্গালা—বরাহ অবতারে ইঁহার বিশাল শরীরের নাকটা অত্যন্ত স্থূল ছিল; সেই অবস্থায় ইনি গ্রীবাদেশ কম্পিত করায় কেশরগুলি উঁচু উঁচু হইয়াছিল এবং সমুদ্রের বিপুল জলরাশি সরিয়া গিয়াছিল; তখন সমুদ্রের তলের মাটী বাহির হইয়া পড়ায় কিছুকালের জন্য পৃথিবী যেন উত্তোলিত হইয়াছে বলিয়া ইনিই দেখিয়াছিলেন ॥৭১॥

अन्वयः—एषः दिव्यकेशरिवपुः (सन्) आयुधैः अपि नैव लब्धशमं दुर्निवार-रण-कण्डु सुरद्विषः वक्षः कोमलैः नखैः निरदारयत् ॥७२॥

टीका—द्वाभ्यां नृसिंहावतारमाह । दिव्येति । दिव्यकेशरिवपुर्दिव्यसिंहमूर्तिः । एषः हरिरायुधैर्वज्रादिभिरपि नैव लब्धशमम् अप्राप्तशान्ति दुर्निवारा दुर्जया रणकण्डूर्यस्य तत् रणव्यसनीत्यर्थः । "गोस्त्रियोरुपसर्जनस्येति ह्रस्वः । सुरद्विषो हिरण्यकशिपोर्वक्षः कोमलैर्नखैः निरदारयत् अभिनत् । वज्राद्यभेद्यस्य कोमलनखविदार्यत्वं भगवत्प्रभावादिति विरोधाभासोऽलङ्कारः ॥७२॥

टिप्पनी—दिव्येति । अत्र शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७२॥

বাঙ্গালা—দেবদ্বেষী হিরণ্যকশিপুর যে বক্ষঃস্থল, ইন্দ্রের বজ্রাঘাতেও বিদীর্ণ হইয়াছিল না এবং যে বক্ষঃস্থলের রণকণ্ডূয়া অনিবার্য্য ছিল; ইনি দিব্য নরসিংহমূর্ত্তি ধারণ করিয়া, কোমল নখ দ্বারাই হিরণ্যকশিপুর সেই বক্ষঃস্থল বিদারণ করিয়াছিলেন ॥৭২॥

अन्वयः—कराग्र-वीचिभिः दिङ्मतङ्गज-मुखानि अभिघ्नतः यस्य वारिधेः इव चारु-नख-शुक्तयः स्फुरन्-मौक्तिक-प्रकर-गर्भतां दधुः ॥७३॥

दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सतः ।
आत्मभूरवरजाखिलप्रजः स्वर्पतेरवरजत्वमाययौ ॥७४॥

---

**टीका**—वारिधेरिति । कराग्राण्येव वीचय इवेत्युपमितसमासः । वारिधेरिवेति लिङ्गात् । ताभिः कराग्रवीचिभिर्दिगन्तविततामिरिति भावः । अत एव दिग्गतङ्गजानां मुखान्यभिघ्नतो रोषातिरेकात् प्रहरतो यस्य सिंहमूर्त्तेर्हरेर्वारिधेरिव चारुनखाः शुक्तय इव । पूर्ववदुपमितसमासः । स्फुरन्मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्राती गर्भेऽन्तर्गतो यासां तासां भावस्तत्ता तां दधुः एष निरदारयदिति पूर्वेणान्वयः । एतेन नरहरिक्रोधस्य महासुरेऽपि पर्य्याप्तमिति व्यज्यत इति वस्तुना वस्तुध्वनिः । उपमालङ्कारः ॥७३॥

**टिप्पनी**—वारिधेरिति । अत्र कराग्रवीचिभिरिति लुप्तोपमा, वारिधेरिवेति श्रौतीपूर्णा, चारुनखशुक्तय इति च पुनर्लुप्तोपमा, इत्येतासामङ्गाङ्गिभावेन सङ्करः । अतएव "उपमालङ्कारः" इति मल्लिनाथेन यदुक्तम्, तस्य उक्तसङ्कर एवाभिप्रायः । शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

**বাঙ্গালা**—সমুদ্রের তরঙ্গ উঠিয়া দিগ্‌হস্তিগণের মুখে আঘাত করে ; সেই তরঙ্গের সঙ্গে ঝিনুকও উঠে ; তখন যেমন মুক্তাসমূহ যাইয়া সেই ঝিনুকের ভিতরে প্রবেশ করে ; সেইরূপ যে নরসিংহ হস্তদ্বারা দিগ্‌হস্তিগণের মুখে আঘাত করিয়াছিলেন, তখন সেই দিগ্‌হস্তিগণের মস্তক হইতে মুক্তাসমূহ যাইয়া, তাঁহার নখের ভিতরে প্রবেশ করিয়াছিল ॥৭৩॥

**अन्वयः**—आत्मभूः अवरजाखिलप्रजः अयम्, दीप्तिनिर्जितविरोचनात् विरोचनात् गाम् अभीप्सतः स्वर्पतेः अवरजत्वम् आययौ ॥७४॥

**टीका**—अथ चतुर्भिर्वामनावतारमाह । दीप्तीत्यादि । आत्मना भवतीति आत्मभूः स्वयम्भूरपि । अवरजाश्चरमजा अखिलाः प्रजा जना यस्य सोऽपि सर्वज्येष्ठोऽपीत्यर्थः । अयं हरिः दीप्तिनिर्जितविरोचनात् ज्योतिर्विजितमार्त्तण्डात् । विरोचनः प्रह्लादपुत्रः । "विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने" इत्यमयत्रापि विश्वः । तस्य सुताद्बलेर्गां भुवम् अभीप्सतः प्राप्तुमिच्छतोऽभ्याहर्त्तुमिच्छतः । सनन्तादाप्नोतेर्लटः शत्रादेशः । स्वर्पतेरवरजत्वमिन्द्रानुजत्वं ययौ । वलिध्वंसनार्थमिति शेषः । लोकानुग्रहार्थिनः किन्न कुर्वन्तीति भावः । अत्राजत्वावरजत्वसामानाधिकरण्यविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाभासोऽलङ्कारः ॥७४॥

**टिप्पनी**—दीप्तीति । अत्र च्छेकानुप्रासेन टीकोक्तविरोधाभासः संसृज्यते । शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

**বাঙ্গালা**—যিনি আপন তেজে সূর্য্যকেও জয় করিয়াছিলেন, সেই বলিরাজার নিকট হইতে দেবরাজ ইন্দ্র নিজের রাজ্য পুনরায় লাভ করিতে ইচ্ছা করিয়াছিলেন ; এমন সময়ে ইনি স্বয়ম্ভূ ও সর্ব লোকের জ্যেষ্ঠ হইয়াও, সেই ইন্দ্রের কনিষ্ঠ সহোদর (উপেন্দ্র বামন) হইয়াছিলেন ॥৭৪॥

কিং ক্রমিষ্যতি কিলৈষ বামনো যাবদিত্থমহসন্ ন দানবাঃ।
তাবদস্য ন মমৌ নভস্তলে লঙ্ঘিতার্কশশিমণ্ডলঃ ক্রমঃ ॥৭৫॥
গচ্ছতাপি গগনাগ্রমুচ্চকৈর্যস্য ভূধরগরীয়সাঙ্ঘ্রিণা।
ক্রান্তকন্ধর ইবাবলো বলিঃ স্বর্গভর্ত্তুরগমৎ সুবন্ধতাম্ ॥৭৬॥

---

অন্বয়ঃ—'এষঃ বামনঃ কিল কিং ক্রমিষ্যতি' ইত্থং দানবাঃ যাবৎ ন অহসন্, তাবৎ লঙ্ঘিতার্কশশিমণ্ডলঃ অস্য ক্রমঃ নভস্তলে ন মমৌ ॥৭৫॥

টীকা—কিমিতি। এষ বামনঃ খর্ব্বঃ। "খর্ব্বো হ্রস্বশ্চ বামনঃ" ইত্যমরঃ। কিং ক্রমিষ্যতি। ইত্থম্ অনেন প্রকারেণ দানবা যাবন্নাহসন্। তাবৎ ততঃ প্রাগেব লঙ্ঘিতে অতিক্রান্তে অর্কশশিমণ্ডলে যেন সোঽস্য হরেঃ ক্রমঃ পাদবিক্ষেপো নভস্তলে ন মমৌ ন পরিমাণং গতবান্ যথা ন মাতি তথা ববৃধে ইত্যর্থঃ। অত্রাধারান্নভস্তলাদাধেয়স্য ক্রমস্যাধিক্যকথনাদধিকালঙ্কারভেদঃ। "আশ্রয়াশ্রয়িণোরাধিক্যমধিকমিতি লক্ষণাৎ ॥৭৫॥

টিপ্পনী—কিমিতি। অত্র শান্তো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৫॥

বাঙ্গালা—'এই খর্ব্ব লোকটী চরণ দ্বারা কতটুকু জায়গা আক্রমণ করিবে' এই বলিয়া দানবেরা যে পর্য্যন্ত উপহাস না করিয়াছিল; তাহার মধ্যেই ইহার পদক্ষেপ, সূর্য্যমণ্ডল এবং চন্দ্রমণ্ডলকে অতিক্রম করিয়া আকাশে ধরিয়াছিল না ॥৭৫॥

অন্বয়ঃ—গগনাগ্রং গচ্ছতা অপি ভূধরগরীয়সা যস্য উচ্চকৈঃ অঙ্ঘ্রিণা ক্রান্ত-কন্ধরঃ ইব অবলঃ বলিঃ স্বর্গভর্ত্তুঃ সুবন্ধতাম্ অগমৎ ॥৭৬॥

টীকা—গচ্ছতেতি। গগনাগ্রং গগনোপরিভাগং গচ্ছতাপীতি বিরোধঃ। ভূধরবদ্গরীয়সেত্যুপমা। যস্য বামনস্যোচ্চকৈরুন্নতেনাঙ্ঘ্রিণা ক্রান্তকন্ধরোঽবষ্টব্ধকণ্ঠ ইবাবলো দুর্ব্বলো বলির্ব্বৈরোচনিঃ স্বর্গভর্ত্তুরিন্দ্রস্য সুখেন বধ্যতে ইতি সুবন্ধঃ। "ঈষদ্দুঃসুষ্বিত্যাদিনা খল্ প্রত্যয়ঃ। তত্তামগমৎ। গুরুদ্রব্যাবষ্টব্ধকণ্ঠো হি সুখেন বধ্যতে ইতি ভাবঃ। "ন লোকেত্যাদিনা কর্ত্তৃযোগলক্ষণায়া এব ষষ্ঠ্যা নিষেধাৎ স্বর্গভর্ত্তুরিতি শেষে ষষ্ঠী। অত্র ক্রান্তকন্ধর ইবেত্যুৎপ্রেক্ষায়া ভূধরগরীয়সেত্যুপমাসাপেক্ষত্বাৎ সঙ্করঃ। বিরোধেন ত্বনপেক্ষিতা সংসৃষ্টিঃ ॥৭৬॥

টিপ্পনী—গচ্ছতেতি। অত্র অবলো বলিরিতি ছেকানুপ্রাসস্যাপি টীকোক্তসংসৃষ্টৌ প্রবেশঃ। শান্তো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৬॥

বাঙ্গালা—যে বামনদেবের পর্ব্বততুল্য বিশাল ও উচ্চ চরণ আকাশের উপরে উঠিতে থাকিয়াও, বলিরাজার গলদেশ যেন আক্রমণ করিয়াছিল; তাহাতে বলিরাজা দুর্ব্বল হইয়া পড়িয়াছিলেন; তাই দেবরাজ তাঁহাকে অনায়াসে বন্ধন করিতে পারিয়াছিলেন ॥৭৬॥

क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम् ।
व्योम्नि दिव्यसरिदम्बुपद्धति-स्पर्द्धयेव यमुनौघमुत्थितम् ॥৭৭॥
यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥৭৮॥
सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः ।
स्मर्त्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः ॥৭৯॥

---

अन्वयः—दिवौकसः क्रामतः अस्य दूरम् आयतम् अलि-नीलम् ऊरुम्, दिव्य-सरिदम्बु-पद्धतिस्पर्द्धया व्योम्नि उत्थितं यमुनौघम् इव ददृशुः ॥৭৭॥

टीका—क्रामत इति। क्रामतः पदं विक्षिपतोऽस्य सम्बन्धिनं दूरमायतम् अलिनीलं भृङ्गश्यामम् ऊरुं सक्थि दिवौकसो देवा व्योम्नि दिव्यसरितो मन्दाकिन्या अम्बुपद्धत्या जलप्रवाहेण स्पर्द्धया उत्थितमूर्ध्वतः प्रवृत्तं यमुनौघं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेय-मुपमासङ्कीर्णा ॥৭৭॥

टिप्पनी—क्रामत इति। अत्र शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥৭৭॥

বাঙ্গালা—ইনি যখন পাদক্ষেপ করিতেছিলেন, তখন অতিবিস্তৃত ও ভ্রমরের ন্যায় নীলবর্ণ ইঁহার ঊরুদেশ উপরে উঠিতেছিল; তাই দেবতারা এইরূপ দেখিয়াছিলেন যে, মন্দাকিনীর জলপ্রবাহের সহিত স্পর্দ্ধা করিয়াই যেন যমুনার জলপ্রবাহ আকাশে উঠিতেছে ॥৭৭॥

अन्वयः—काय-निग्रह-गृहीत-विग्रहः कृती राहुः यस्य किञ्चित् अपकर्त्तुम् अक्षमः [सन्] कान्त-वक्त्र-सदृशाकृतिम् इन्दुम् अधुना अपि बाधते ॥৭৮॥

टीका—अवतारान्तरमाह। यस्येति। कायनिग्रहेणात्मनविभागकारिणा शिरश्छेदेन गृहीतविग्रहो बद्धवैरः कृती कुशलो राहुर्यस्य हरेः किञ्चिदपकर्त्तुमक्षमः सन् कान्तं रम्यं यद्वक्त्रं हरिमुखं तेन सदृशी आकृतिर्यस्य तं तत्सदृशमित्यर्थः। इन्दुम् अधुनापि बाधते पीडयति उपरागमिषेणेति भावः। अत्र साक्षात्प्रतिपक्षहरिनिग्रहाशक्त्या राहो-स्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः। तथा च सूत्रम्। "प्रतिपक्षप्रतीकाराशक्तौ तदीय-तिरस्कारः प्रत्यनीकमिति ॥৭৮॥

टिप्पनी—यस्येति। अत्र द्वितीये तृतीये च पादे छेकानुप्रास इति टीकोक्तप्रत्यनीकालङ्कारेण सह तस्य संसृष्टिः। शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥৭৮॥

বাঙ্গালা—নারায়ণ রাহুর শিরশ্ছেদ করিয়াছিলেন; তাহাতে নারায়ণের সহিত রাহুর শত্রুতা বদ্ধমূল হইয়াছিল। কিন্তু রাহু নিপুণ হইয়াও যে নারায়ণের কোন অপকার করিতে না পারিয়া, তাঁহার সুন্দর মুখের তুল্য-আকৃতি চন্দ্রকে অদ্যাপি (গ্রাসচ্ছলে) পীড়া দিয়া থাকে ॥৭৮॥

रेणुकातनयतामुपागतः शातितप्रचुरपत्रसंहति ।
लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥८०॥

---

अन्वयः—अविनाशिविग्रहः अप्रतिहतस्मृतिः एषः सम्प्रदायविगमात् नाशम् उपेयुषीः श्रुतीः आर्त्तुम् दत्तः इति [नाम] अत्रिगोत्रजः अभवत् ॥७९॥

टीका—दत्तात्रेयावतारमाह । सम्प्रदायेति । अविनाशिविग्रहोऽनपायस्वरूपः अत एव अप्रतिहता स्मृतिः स्मरणशक्तिर्यस्य स एष हरिः सम्प्रदाय उपदेशपरम्परा तस्य विगमादपायान्नाशं कालदोषादध्ययनविच्छेदमुपेयुषीः प्राप्ताः । "उगितश्चेति ङीप् । श्रुतीर्वेदान् । "श्रुतिः स्त्री वेद आम्नाय" इत्यमरः । आर्त्तुं श्रुतिसम्प्रदायं प्रवर्त्तयितुमित्यर्थः दत्त इति विख्यात इति शेषः अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत् दत्तात्रेयोऽभूदित्यर्थः । अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥७९॥

टिप्पनी—सम्प्रदायेति । अत्र द्वितीयादौ पादे छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन अस्य संसृष्टिः । शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७९॥

বাঙ্গালা—ক্রমিক উপদেশ না থাকায় বেদ সকল লোপ পাইয়া যাইতেছিল; তখন অবিনশ্বরদেহ এবং অপ্রতিহতস্মৃতি এই শ্রীকৃষ্ণ সেই বেদ স্মরণ করিবার জন্য, অত্রিবংশে দত্তনামে (দত্তাত্রেয়নামে) জন্ম গ্রহণ করিয়াছিলেন ॥৭৯॥

अन्वयः—अयं रेणुकातनयताम् उपागतः [सन्] अर्जुनवनं शातित-प्रचुर-पत्र-संहति लून-भूरि-भुज-शाखम् उज्झितच्छायं व्यधात् ॥८०॥

टीका—परशुरामावतारमाह । रेणुकेति । अयं हरिः रेणुकातनयतां परशुरामत्वमुपागतः सन् । अर्जुनः कार्त्तवीर्य्यार्जुनः । "अर्जुनः ककुभे पार्थे कार्त्तवीर्य्ये मयूरयोरित्यनेकार्थेऽपि रेणुकेयविरोधित्वान्निश्चयः । तदुक्तं हरिणा, "संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव" इति । स एव वनं तत् शातिता छिन्ना प्रचुरा प्रभूता पत्रसंहतिर्वाहनसमूहः पर्णसङ्घातश्च यस्य तत् । "पत्रं स्याद्वाहने पर्णे" इति विश्वः । लूनाश्छिन्ना भूरयः प्रचुरा भुजा एव शाखा यस्य तत् । उज्झिता छाया कान्तिरनातपश्च यस्य तत्तथा व्यधात् विहितवान् । दधातेर्लुङि "गातिस्थेत्यादिना सिचो लुक् । "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप" इत्यमरः । अत्र समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं तच्च छायेति पत्रेति च श्लेषप्रतिभोत्थापिताभेदातिशयोक्त्यानुप्राणितमिति सङ्करः ॥८०॥

टिप्पनी—रेणुकेति । अत्र शान्तो रसः, उद्धतघटनाव्यञ्जकत्वात् समासबाहुल्यात् बन्धस्य गाढत्वाच्च ओजो गुणः, गौडी च रीतिः ॥८०॥

বাঙ্গালা—ইনি রেণুকার পুত্র পরশুরামরূপে অবতীর্ণ হইয়া, কার্ত্তবীর্য্যার্জুনরূপ বনের

एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि।
राघवीमकृत रक्षितप्रजस्तेजसाधिकविभीषणां पुरीम् ॥८१॥
निष्प्रहन्तुममरेशविद्विषामर्थितः स्वयमथ स्वयम्भुवा।
सम्प्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः ॥८२॥

---

বহুতর বাহনরূপ পর্ণসমূহকে নিপাত করিয়া, সহস্র বাহুরূপ শাখাগুলিকে ছেদ করিয়া, সৌন্দর্য্যরূপ ছায়াকে একেবারে নষ্ট করিয়াছিলেন ॥৮০॥

**अन्वयः**—रक्षितप्रजः एषः दाशरथिभूयम् एत्य च ध्वंसितोद्धतदशाननाम् अपि राघवीं पुरीं तेजसा अधिकविभीषणाम् अकृत ॥८१॥

**टीका**—रामावतारमाह। एष इति। किञ्चेति चार्थः। रक्षितप्रज एष हरि-र्दशरथस्यापत्यं पुमान् दाशरथी रामः। अत इञ्। तस्य भावो दाशरथिभूयं रामत्वम्। "भुवो भावे" इति क्यप्। एत्य प्राप्य। ध्वंसितो हत उद्धतो दृप्तो दशाननो रावणो यस्यां तामपि राघवीं रघुसम्बन्धिनीं पुरीं लङ्कां तेजसा स्ववीर्य्येण अधिकविभीषणाम् अत्यन्तभीषणाम् अकृतेति विरोधः। अथ हतोद्धतस्य रावणस्य ध्वंसनात् अधिको महान् विभीषणो रावणानुजो यस्यां तामित्यविरोधः। अत एव विरोधाभासोऽलङ्कारः ॥८१॥

**टिप्पनी**—एष इति। अत्र राघवीं रक्षितेति च्छेकानुप्रासेन टीकोक्तविरोधाभासः संसृज्यते। शान्तो रसः, उद्धतघटनाव्यञ्जकत्वात् उत्कटत्वाच्च ओजो गुणः, गौडी च रीतिः ॥८१॥

**বাঙ্গালা**—জগতের লোক রক্ষা করিবার নিমিত্ত, ইনি আবার দশরথের পুত্র রাম-রূপে অবতীর্ণ হইয়া, বলদৃপ্ত রাবণকে বধ করিয়া, আপনার প্রভাবে লঙ্কানগরীতে বিভী-ষণকে প্রধান করিয়াছিলেন ॥৮২॥

**अन्वयः**—अथ अयम् अमरेशविद्विषां निष्प्रहन्तुं स्वयम्भुवा स्वयम् अर्थितः (सन्) सम्प्रति वसुदेव-रूपिणः कश्यपस्य सूनुतां श्रयति ॥८२॥

**टीका**—अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह। निष्प्रहन्तुमिति। अथ रामावतारा-नन्तरम् अयं हरिः अमरेशविद्विषां निष्प्रहन्तुं चैद्यादीन् इन्द्रशत्रून् हन्तुमित्यर्थः। "जासिनिप्रहणेत्यादिना कर्मणि षष्ठी। स्वयम्भुवा ब्रह्मणा स्वयमात्मना अर्थितः प्रार्थितः सन् सम्प्रतीदानीं वसुदेवरूपिणो वसुदेवमूर्त्तिधरस्य कश्यपस्य पुत्रतां श्रयति व्रजति कृष्ण-रूपेणेति भावः। अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्तिहेतुत्वात्पदार्थ-हेतुकाव्यलिङ्गम् ॥८२॥

**टिप्पनी**—निष्प्रहन्तुमिति। अत्र शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

**বাঙ্গালা**—তাহার পর, শিশুপালপ্রভৃতি দেবদ্বেষীদিগকে উচ্ছেদ করিবার জন্য, স্বয়ং ব্রহ্মার প্রার্থনা অনুসারে, বর্ত্তমান সময়ে ইনি, বসুদেবরূপী কশ্যপের পুত্রত্ব অবলম্বন করিয়াছেন ॥৮২॥

तात ! नोदधिविलोड़नं प्रति त्वद्विनाथ वयमुत्सहामहे ।
यः सुरैरिति सुरौघवल्लभो बल्लवैश्च जगदे जगत्पतिः ॥८३॥
नाप्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम् ।
योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥८४॥

---

अन्वयः—सुरैः बल्लवैश्च सुरौघवल्लभः जगत्पतिः यः—'(हे) तात ! वयं त्वत् विना अथ (उदधिविलोड़नं प्रति न उत्सहामहे) (दधिविलोड़नं प्रति नो उत्सहामहे)' इति जगदे ॥८३॥

टीका—तातेति । सुरौघवल्लभः सुरगणप्रियः जगत्पतिर्यो हरिः सुरैर्देवैर्बल्लवैर्गोपैश्च हे तात ! जनक ! नेति छेदे उदधिविलोड़नं समुद्रमथनम्प्रति नो इति छेदे दधिविलोड़नं दधिमन्थनं च प्रति त्वद्विना त्वां विहायेत्यर्थः । पृथग्विनेत्यादिना विकल्पात्तृतीया । अथ वयं न नो वोत्सहामहे न क्षमामहे इति जगदे गदितम् । अत्र हरिवर्णनाङ्गत्वेन सुराणां बल्लवानां च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धदध्युदधिविलोड़नक्षमत्वकमंसाम्याद्गम्यौपम्यत्वात्तुल्ययोगिताभेदः तेन च हरेर्दधिमन्थनकालवदुदधिमन्थनमपीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥८३॥

टिप्पनी—तातेति । अत्र बल्ल-वल्लेति छेकानुप्रासेन टीकोक्ता तुल्ययोगिता संसृज्यते । शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—দেবগণের প্রিয় ও জগতের অধিপতি যে শ্রীকৃষ্ণকে দেবতারা বলিয়াছিলেন যে,—"হে জগৎপিতঃ ! আপনাকে ছাড়া আমরা সমুদ্র মন্থন করিতে সমর্থ হইব না"। আবার (বৃন্দাবনের) গয়লারাও বলিত যে—"হে বৎস !—তোমাকে ছাড়া, আমরা দধি মন্থন করিতে ইচ্ছা করি না" ॥৮৩॥

अन्वयः—यः शत्रुभिः अवधूय नाप्तगन्धं छायया च शमितामरश्रमं वृत्रविद्विषः अभिमानम् इव पारिजातं दिवः उदमूलयत् ॥८४॥

टीका—नाप्तगन्धमिति । किञ्चेति चार्थः । यो हरिः शत्रुभिरवधूयाभिभूय नाप्तगन्धमनाघ्रातसौरभमनभिभूतञ्च । "आप्तगन्धोऽभिभूतः स्यादित्यमरः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । छायया अनातपेन पालनेन च । "छाया स्यादातपाभावे प्रतिविम्बार्कयोषितोः । पालनोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियामिति" विश्वः । शमितामरश्रमं निवारितसुरखेदं पारिजातं वृत्रविद्विषः शक्रस्याभिमानमहङ्कारमिव दिवः स्वर्गादुदमूलयत् उन्मूलितवानिति पारिजातहरणोक्तिः । श्लेषसविशेषणोयमुपमेति केचित् श्लेषबद्धान्ये ॥८४॥

टिप्पनी—नाप्तेति । अत्र साहित्यदर्पणमते पूर्णोपमालङ्कारः । शान्तो रसः, प्रसादो गुणः वैदर्भी च रीतिः ॥८४॥

বাঙ্গালা—শত্রুরা জয় করিয়া যে পারিজাত বৃক্ষের গন্ধও আঘ্রাণ করিতে পারিত

यं समेत्य च ललाटलेखया बिभ्रतः सपदि शम्भुविभ्रमम्।
चण्डमारुतमिव प्रदीपवच्चैदिपस्य निरवाद्विलोचनम् ॥८५॥
यः कौलतां वल्लवताञ्च बिभ्रद्दंष्ट्रामुदस्थाद्भुजाञ्च गुर्वीम्।
मग्नस्य तोयापदि दुस्तरायां गोमण्डलस्योद्धरणञ्चकार ॥८६॥

---

না এবং যে পারিজাতবৃক্ষ ছায়া দ্বারা দেবগণের সন্তাপ নিবৃত্তি করিত; দেবরাজের অভিমানের ন্যায় সেই পারিজাতবৃক্ষকে যিনি স্বর্গ হইতে উন্মূলন করিয়া আনিয়াছিলেন ॥৮৪॥

**अन्वयः**—ललाटलेखया शम्भुविभ्रमं बिभ्रतः चैदिपस्य लोचनम्, चण्डमारुतम् इव यं समेत्य च प्रदीपवत् सपदि निरवात् ॥८५॥

**टीका**—यमिति। किञ्चेति चार्थः। ललाटमेव लेखा तया ललाटलेखया ललाटदेशेन शम्भोर्विभ्रमं सौन्दर्यं बिभ्रतः ललाटलोचनमित्यर्थः। चैदिपस्य शिशुपालस्य लोचनं तृतीयनेत्रं कर्तृ यं हरिमेव चण्डमारुतं चण्डमारुतमिव समेत्य प्रदीपवत् प्रदीपेन तुल्यम्। "तेन तुल्यम्" इति वतिप्रत्ययः। निरवात् निर्वाति स्म नष्टमित्यर्थः। निर्पूर्वाद्वा धातोर्लङ्। निरवापेति क्वचित्कपाठः स न सम्यक् वातेः प्रक्रियाविरोधादप्रतीतेरसङ्गतार्थत्वादिति। अनेकार्थेयमुपमा ॥८५॥

**टिप्पनी**—यमिति। अत्र विभ्रमं बिभ्रत इति च्छेकानुप्रासेन टीकोक्ता उपमा संसृज्यते। शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८५॥

**বাঙ্গালা**—যিনি ললাটদেশ দ্বারা মহাদেবের সৌন্দর্য্য ধারণ করিতেন, সেই শিশুপালের তৃতীয় নয়নটী, প্রচণ্ড বায়ুর ন্যায় যে শ্রীকৃষ্ণকে পাইবামাত্র, প্রদীপের ন্যায় তৎক্ষণাৎ নিবিয়া গিয়াছিল ॥৮৫॥

**अन्वयः**—यः कौलतां वल्लवताञ्च बिभ्रत् च गुर्वीं दंष्ट्राम् भुजाञ्च उदस्य दुस्तरायां तोयापदि मग्नस्य गोमण्डलस्य उद्धरणं चकार ॥८६॥

**टीका**—य इति। यो हरिः कौलतां वराहत्वम्। "वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिरित्यमरः। वल्लवतां गोपालत्वं च बिभ्रत्। गुर्वीं दंष्ट्रां भुजां च यथासङ्ख्यमिति भावः। उदस्योद्यम्य दुस्तरायां तोयापदि जलसङ्कटे एकत्र समुद्रप्लावनायाम् अन्यत्र वर्षकृतायां च मग्नस्य गोमण्डलस्य भूगोलस्य धेनुवृन्दस्य चोद्धरणं चकार। अत्र कौलत्ववल्लवत्वयोः प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सती यथासङ्ख्येन सङ्कीर्य्यते। इन्द्रवज्रा वृत्तम्। "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥८६॥

**टिप्पनी**—य इति। अत्र शान्तो रसः, वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥८६॥

**বাঙ্গালা**—যিনি বরাহমূর্ত্তি ও গোপালমূর্ত্তি ধারণ করিয়া, সত্বর বিশাল দন্ত ও বাহু

धन्योऽसि यस्य हरिरेष समक्ष एव दूरादपि क्रतुषु यज्वभिरिज्यते यः।
दत्त्वार्घमत्रभवते भुवनेषु यावत् संसारमण्डलमवाप्नुहि साधुवादम् ॥८७॥
भीष्मोक्तं तदिति वचो निशम्य सम्यक् साम्राज्यश्रियमधिगच्छता नृपेण।
दत्तेऽर्घे महति महीभृतां पुरोऽपि त्रैलोक्ये मधुभिदभूदनर्घ एव ॥८८॥

---

উত্তোলন করিয়া, দুস্তর সমুদ্রের জল ও বর্ষার জলে নিমগ্ন ভূমণ্ডলকে ও গোগণকে উদ্ধার করিয়াছিলেন ॥৮৬॥

**অন্বয়ঃ**—धन्यः असि, यस्य समक्षे एव एषः हरिः (वर्त्तते); यः यज्वभिः दूरात् अपि क्रतुषु इज्यते, अत्रभवते अर्घं दत्त्वा यावत् संसारमण्डलं (तावत्) भुवनेषु साधुवादम् अवाप्नुहि ॥८७॥

**टीका**—एवं देवं स्तुत्वानन्तरं कर्त्तव्यमुपदिशति। धन्योऽसीति। धनं लब्धा धन्यः पुण्यवानसि। "सुकृती पुण्यवान्-धन्य" इत्यमरः। "धनगणाल्लब्धा" इति यत्प्रत्ययः। यस्य ते एष हरिः समक्ष एव अक्ष्णोः समीपे एव पुरत एवेत्यर्थः स्थित इति शेषः। सामीप्येऽव्ययीभावः "अव्ययीभावे शरत्प्रभृतिभ्य" इति समासान्तः अतएव "तृतीयासप्तम्योर्बहुलमिति सप्तम्या अमभावः। अन्यत्र को विशेषः तत्राह। यो हरिर्दूरादपि परोक्षेऽपि क्रतुषु यागेषु यज्वभिर्विधिवदिष्टवद्भिः। "यज्वा तु विधिनेष्टवानित्यमरः। "सुयजोर्ङ्वनिपिति ङ्वनिप् प्रत्ययः। इज्यते पूज्यते स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थः। फलितमाह। अत्रभवते पूज्यायेत्यर्थः। "पूज्यस्तत्रभवानिति सज्जनः। इतरेभ्योऽपि दृश्यते इति सार्वविभक्तिके त्रल् प्रत्यये सुप्सुपेति समासः। अर्घं पूजां दत्त्वा यावत्संसारमण्डलं वर्त्तते तावदिति शेषः। भुवनेषु साधुर्वादः शब्दस्तं साधुवादं साधुसमाख्याम् अवाप्नुहि लभस्वेत्यर्थः। अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात्पदार्थहेतुकाव्यलिङ्गमलङ्कारः। वसन्ततिलका वृत्तम् ॥८७॥

**टिप्पनी**—धन्य इति। अत्र तृतीयपादे भवभुवेति च्छेकानुप्रासेन टीकोक्तं काव्यलिङ्गं संसृज्यते। शान्तो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८७॥

**বাঙ্গালা**—যুধিষ্ঠির! তুমি ধন্য হইয়াছ; যে তোমার সমক্ষেই এই শ্রীকৃষ্ণ বিদ্যমান রহিয়াছেন; যাজ্ঞিকেরা দূর হইতেও যজ্ঞে যাঁহার পূজা করিয়া থাকেন; সেই শ্রীকৃষ্ণকে অর্ঘ দান করিয়া, যত কাল ভুবনমণ্ডল থাকিবে, তত কাল যাবৎ জগতে সাধুবাদ লাভ কর ॥৮৭॥

**অন্বয়ঃ**—साम्राज्यश्रियम् अधिगच्छता नृपेण इति तत् भीष्मोक्तं वचः सम्यक् निशम्य महीभृतां पुरः महति अर्घे दत्ते अपि मधुभित् त्रैलोक्ये अनर्घः एव अभूत् ॥८८॥

**टीका**—भीष्मेति। "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः। सम्राजो भावः साम्राज्यं तदेव श्रीस्तां श्रियम् अधिगच्छता भजता नृपेण युधिष्ठिरेण इतीदं भीष्मोक्तं तद्वचः सम्यङ् निशम्य श्रुत्वा। महीभृतां राज्ञां पुरोऽग्रे

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
कृष्णार्घदानो नाम चतुर्दशः
सर्गः ॥१४॥

—०—

---

महति अर्घे पूजायां दत्तेऽपि मधुभिद्धरिः त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः। तत्र त्रैलोक्ये कृष्णोऽनर्घः पूजारहित एव अभूदिति विरोधः। अमूल्य एवाभूदित्यविरोधः। "मूल्ये पूजाविधावर्घः" इत्यमरः। अत्रार्घयोरभेदाध्यवसायाद्विरोधः तद्भेदाध्यवसायादविरोध इति विरोधाभासोऽलङ्कारः। प्रहर्षिणी वृत्तम् ।८८॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
चतुर्दशः सर्गः ॥१४॥

—०—

टिप्पनी—भीष्मोक्तमिति। अत्र निशम्य सम्यगिति महति महीति व्यञ्जनसंघस्य सकृदनेकधा साम्यात् छेकानुप्रास इति तेन सह टीकोक्तविरोधाभासस्य संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८८॥

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां
शिशुपालवधटिप्पन्यां माधुरीसमाख्यायां
चतुर्दशः सर्गः ॥०॥

—०—

বাঙ্গালা—(নির্বিঘ্নে রাজসূয়যজ্ঞ সমাপন করায়) যুধিষ্ঠির সাম্রাজ্যলক্ষ্মী লাভ করিয়া, এইরূপ ভীষ্মকথিত সেই বাক্যসমূহ সম্যক্ রূপে শ্রবণ করিয়া, অন্যান্য রাজগণের সমক্ষে শ্রীকৃষ্ণকে বিশাল অর্ঘ (পূজা) দান করিলেও, শ্রীকৃষ্ণ ত্রিভুবনের মধ্যে অনর্ঘই (পূজা-বিহীনই, অমূল্যই) হইলেন ॥৮৮॥



# पञ्चदशः सर्गः ।

—:०:—

अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥१॥
पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ।
मन्युरभजदवगाढतरः समदोषकाल इव देहिनं ज्वरः ॥२॥

---

अन्वयः—अथ चेदिपतिः तत्र सदसि पाण्डुतनयेन विहितं मधुद्विषः मानं न असहत । हि मानिनां मनः परवृद्धिमत्सरि ॥१॥

टीका—अथेति । अथ हरिपूजानन्तरं चेदिपतिः शिशुपालः तत्र सदसि सभायां पाण्डुसुतेन युधिष्ठिरेण विहितं मधुद्विषो हरेर्मानं पूजां नासहत ईर्ष्यां चकारेत्यर्थः । परोत्कर्षाक्षमेर्ष्या स्यादीर्ष्यान्यान्यतोऽपि चेति लक्षणात् । तथाहि । मानिनामहङ्कारिणां मनः परवृद्धौ मत्सरि हि परशुभद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अस्मिन् सर्गे उद्गता वृत्तम् । सजसादिमे सलघुकौ च नसजगुरुकेष्वथोद्गता । अङ्घ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेदिति लक्षणात् ॥१॥

टिप्पनी—अथेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

বাঙ্গালা—তাহার পর, সেই যুধিষ্ঠির যে, শ্রীকৃষ্ণের সম্মান করিলেন, তাহা শিশুপাল সহ্য করিতে পারিলেন না। কারণ, অভিমানীদিগের মন, পরের উন্নতির বিদ্বেষীই হইয়া থাকে ॥১॥

अन्वयः—समदोषकालः ज्वरः देहिनम् इव अवगाढतरः मन्युः पुरः एव शार्ङ्गिणि सवैरम् अमुम् अथ पुनः तदर्चया अभजत् ॥२॥

टीका—पुर इति । पुरः पूर्वमेव शार्ङ्गिणि सवैरं सक्रोधममुं चैद्यम अथ पुनः अतः परं तदर्चया हरिपूजया अवगाढतरो निविड़तरो मन्युः क्रोधो रौद्ररसस्य स्थायी भाव इति भावः । देहिनं शरीरिणं समौ तुलितौ दोषोऽपथ्यसेवा कालः कर्मविपाकश्च यस्य स ज्वर इवाभजत् । उपमालङ्कारः ॥२॥

टिप्पनी—पुर इति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—পূর্ব্ব কর্ম্ম অনুসারে জর চলিতে থাকে; তাহার পর আবার কুপথ্য সেবন করিলে, সে জর যেমন প্রাণীকে প্রবলভাবে আশ্রয় করে; সেইরূপ পূর্ব হইতেই শ্রীকৃষ্ণের

अभितर्जयन्निव समस्तनृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः ॥३॥
स वमन् रुषाम्बु घनघर्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥४॥

---

প্রতি শিশুপালের ক্রোধ চলিয়া আসিতেছিল ; তাহার পর আবার যুধিষ্ঠির তাঁহার পূজা করায় প্রগাঢ় ক্রোধ আসিয়া শিশুপালকে আশ্রয় করিল ॥২॥

**अन्वयः**—असौ समस्त-नृप-गणम् अभितर्जयन् इव अशनैः प्रकम्पितजगत्त्रयं शिरः शनैः लोलमुकुटमणिरश्मि अकम्पयत् ॥३॥

**टीका**—अथाष्टभिरस्य गात्रारम्भक्रोधचेष्टां प्रपञ्चयति। अभीत्यादि। असौ चैद्यः। समस्तनृपगणमभितर्जयन्निवेत्युत्प्रेक्षा। तर्ज भर्त्सने चौरादिकस्यानुदात्तत्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङादेशस्य ख्याञः ख्यानिवद्भावानादरेण पुनर्जितकरणसामर्थ्यादनित्यत्वज्ञापनात् परस्मैपदम् अतएव तर्जयतीत्यपि दृश्यते क्वचिदिति भट्टमल्लः। अशनैरतिमात्रं प्रकम्पितं जगत्त्रयं येन तत् त्रैलोक्यभीषणं शिरः शनैर्लोलाश्चपला मुकुटमणिरश्मयो यस्मिन् कर्मणि तद्यथा तथा अकम्पयत् क्रोधातिरेकादिति भावः ॥३॥

**टिप्पनी**—अभितर्जयन्निति। अत्र जगत्त्रयप्रकम्पनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरिति टीकोक्तोत्प्रेक्षया सह संसृष्टिः। रौद्रो रसः। तथा च शिशुपालस्य क्रोधः स्थायी भावः, श्रीकृष्ण आलम्बनविभावः, तत्पूजा उद्दीपनविभावः, तर्जनशिरःकम्पने अनुभावः, आवेगादयो व्यभिचारिभावाश्च आक्षेपलभ्याः। यथा साहित्यदर्पणे—

"सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ॥"

एवमन्यत्राप्यूह्यम्। प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

**বাঙ্গালা**—শিশুপাল সমস্ত রাজগণকে ভৎর্সনা করতই যেন অতিরিক্তভাবে মস্তক-কম্পন করিতে লাগিলেন ; সে মস্তককম্পন ত্রিভুবনকেই কম্পিত করিয়া তুলিল এবং মুকুটস্থ রত্নের কিরণগুলি ক্রমে চারিদিকে চলিতে থাকিল ॥৩॥

**अन्वयः**—रुषा अम्बु वमन् घनघर्मविगलदुरुगण्डमण्डलः स्वेदजलकणकरालकरः सः, त्रिधा प्रभिन्नः कुञ्जरः इव व्यरुचत् ॥४॥

**टीका**—स इति। रुषा रोषेणाम्बु वमन् मुञ्चन्। घनेन सान्द्रेण घर्मेण क्रोधोष्मणा विगलत् स्रवदुरु महत् गण्डमण्डलं यस्य सः स्विद्यत्कपोल इत्यर्थः। स्वेदजलकणैः स्वेदबिन्दुभिः करालकरो दन्तुरहस्तः स चैद्यः त्रिधा नेत्रकपोलहस्तदेशैः प्रभिन्नो मदस्रावी मत्तः। "प्रभिन्नो मत्तः स्यादिति वैजयन्ती। कुञ्जर इव व्यरुचत्। रुचेर्द्युभ्यो लुङीति विकल्पात् परस्मैपदम्। एतेन स्वेदाख्यः सात्त्विकभाव उक्तः। उपमालङ्कारः ॥४॥

**टिप्पनी**—स इति। अत्र घनघर्मेति बहुव्रीहिसमासः, गण्डमण्डल इति करालकर इति च [illegible]

स निकाममघर्मितमभीक्ष्णमधुवदवधूतराजकः ।
छिन्नबहुलजलबिन्दुवपुः प्रलयार्णवोत्थित इवादिशूकरः ॥५॥
क्षणमाश्लिषद्घटितशैलशिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसावधिकावधूनितसमस्तसंसदम् ॥६॥

---

प्राय इति टीकोक्तोपमया सह तयोः संसृष्टिः । रौद्रो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥४॥

বাঙ্গালা—শিশুপাল ক্রোধে নয়নজল বর্ষণ করিতে লাগিলেন, নিবিড় ঘর্ম্মজল নির্গত হওয়ায় তাঁহার বিশাল গণ্ডযুগল ক্লিন্ন হইয়া গেল এবং ঘর্ম্মবিন্দুতে তাঁহার করযুগল বিষম হইয়া উঠিল ; সুতরাং গণ্ড, শুণ্ড ও নেত্র হইতে মদস্রাবী হস্তীর ন্যায় তিনি শোভা পাইতে লাগিলেন ॥৪॥

अन्वयः—अवधूतराजकः सः निकामघर्म्मितं वपुः प्रलयार्णवोत्थितः आदिशूकरः इव छिन्नबहुल-जलबिन्दु अभीक्ष्णम् अधुवत् ॥५॥

टीका—स इति । राज्ञां समूहो राजकम् । गोत्रोक्षेत्यादिना वुञ्प्रत्ययः । तद-वधूतमभिभूतं येन स तथोक्तः स चैद्यो निकामं घर्मितं सञ्जातघर्मं सुष्ठुवत्स्वेदमित्यर्थः "घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्बुसोरपीति विश्वः । तारकादित्वादितच् प्रत्ययः । वपुः प्रलयेऽर्णवस्तस्मादुत्थित आदिशूकर इव छिन्नाः प्रेरिताः बहुलाः सान्द्रजलबिन्दवो यस्मिन् कर्मणि तद्यथा तथा अभीक्ष्णमधुवत् क्रोधाद्धुवति स्म । धूञ् विधूनन इति धातोस्तौ-दादिकाल्लङ् । अत्रापि स्वेदः सात्त्विक एवोक्तः । उपमालङ्कारः ॥५॥

टिप्पनी—स इति । अव धुवदवधू इति छन्त्यनुप्रासेन टीकोक्ता उपमा संसृज्यते । रौद्रो रसः, पञ्चोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥५॥

বাঙ্গালা—রাজসমূহবিজয়ী শিশুপাল, অত্যন্তঘর্ম্মাক্ত দেহটাকে, প্রলয়সমুদ্র হইতে উত্থিত আদিবরাহের ন্যায় বার বার কম্পিত করিতে লাগিলেন ; তাহাতে তাঁহার দেহ হইতে বহুতর জলবিন্দু নিক্ষিপ্ত হইতে থাকিল ॥৫॥

अन्वयः—घटितशैलशिखरकठिनांसमण्डलः असौ उपहितविधूतिम् अधिकावधूनितसमस्त-संसदम् स्तम्भं क्षणम् आश्लिषत् ॥६॥

टीका—क्षणमिति । घटितं सुसंहितं यच्छैलशिखरन्तद्वत् कठिनमंसमण्डलं यस्य सोऽसौ चैद्यः उपहितावगाहिना आरोपितेत्यर्थः विधूतिः कम्पो यस्मिंस्तम् अधिकमत्यन्त-मवधूनिता कम्पिता समस्ता सकला संसत् सभा येन तं स्तम्भं क्षणम् आश्लिषत् श्लिष्टवान् तेनांसमण्डलेनाहतवानित्यर्थः । अतएव कठिनांसमण्डल इति विशेषणं च । पुषादि-त्वात् च्लेरङादेशः । आलिङ्गनार्थत्वे तु श्लिष आलिङ्गन इति क्सादेशः स्यात् । क्रोधान्धाः किमु न कुर्वन्तीति भावः । अत्रांसकाठिन्यस्य विशेषणगत्या स्तम्भाश्लेषहेतुत्वात् काव्य-लिङ्गं शैलशिखरोपमया सङ्कीर्य्यते ॥६॥

কনকাঙ্গদদ্যুতিভিরস্য গমিতমরুচৎপিশঙ্গতাম্ ।
ক্রোধময়শিখিশিখাপটলৈঃ পরিতঃ পরীতমিব বাহুমণ্ডলম্ ॥৭॥
কৃতসন্নিধানমিব তস্য পুনরপি তৃতীয়চক্ষুষা ।
ক্রূরমজনি কুটিলভ্রু গুরুভ্রূকুটীকঠোরিতললাটমাননম্ ॥৮॥
অতিরক্তভাবমুপগম্য কৃতমতিরমুষ্য সাহসে ।
দৃষ্টিরগণিতভয়াবিলতামবলম্বতে স্ম সময়া সখীমিব ॥৯॥

---

**টিপ্পনী**—স্পষ্টমিতি । অত্র রৌদ্রো রসঃ, সমাসবাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৬॥

**বাঙ্গালা**—শিশুপালের স্কন্ধদেশ, সুশ্লিষ্ট পর্বতশৃঙ্গের ন্যায় কঠিন ছিল; তিনি তাহা দ্বারা একটা স্তম্ভে একটুমাত্র আঘাত করিলেন; তাহাতে সে স্তম্ভে কম্প উপস্থিত হইল, সে কম্প আবার সমস্ত সভাটাকেই কম্পিত করিল ॥৬॥

**অন্বয়ঃ**—কনকাঙ্গদদ্যুতিভিঃ পিশঙ্গতাং গমিতম্ অস্য বাহুমণ্ডলং পরিতঃ ক্রোধময়শিখিশিখাপটলৈঃ পরীতম্ ইব (সৎ) অরুচৎ ॥৭॥

**টীকা**—কনকেতি । কনকস্যাঙ্গদয়োঃ কেয়ূরয়োঃ দ্যুতিভিঃ পিশঙ্গতাং পিঙ্গলবর্ণতাং গমিতং প্রাপিতমিতি তদ্গুণালঙ্কারঃ । অস্য চৈদ্যস্য বাহুমণ্ডলং ক্রোধময়শিখিশিখাপটলৈঃ ক্রোধাগ্নিজ্বালাজালৈঃ পরিতঃ পরীতং পরিবৃতমিবারুচৎ ইত্যুৎপ্রেক্ষা । দ্যুদ্ভ্যো লুঙীতি পরস্মৈপদম্ ॥৭॥

**টিপ্পনী**—কনকেতি । অত্র ক্রোধময়শিখীতি নিরঙ্গং কেবলরূপকম্, শিখিশিখেতি পরিপরীতি চ ছেকানুপ্রাস ইতি টীকোক্ততদ্গুণোৎপ্রেক্ষাভ্যাং সংসৃষ্টিঃ । রৌদ্রো রসঃ, তালব্যশকারবাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭॥

**বাঙ্গালা**—স্বর্ণময় কেয়ূর দুইটার কিরণে শিশুপালের বাহু দুইখানাকে পিঙ্গলবর্ণ করিয়াছিল; তাহাতে বোধ হইতেছিল—ক্রোধানলের শিখাসমূহে সর্বতো ভাবে ব্যাপ্ত হইয়াই যেন সেই বাহু দুই খানা শোভা পাইতেছে ॥৭॥

**অন্বয়ঃ**—কুটিলভ্রু গুরুভ্রূকুটী-কঠোরিত-ললাটং তস্য আননং পুনঃ অপি তৃতীয়চক্ষুষা কৃতসন্নিধানম্ ইব (সৎ) ক্রূরম্ অজনি ॥৮॥

**টীকা**—কৃতেতি । কুটিলে ভ্রুবৌ যস্য তৎ কুটিলভ্রু । উপসর্জনস্য হ্রস্বঃ । গুর্ব্যা ভ্রূকুট্যা ভ্রূভঙ্গেন কঠোরিতং ভীষণীকৃতং ললাটং যস্য তৎ তস্য চৈদ্যস্যাননং পুনরপি তৃতীয়চক্ষুষা কৃতসন্নিধানং কৃতসংসর্গমিবেত্যুৎপ্রেক্ষা । ক্রূরমজনি ভয়ঙ্করমভূৎ । জনেঃ কর্ত্তরি লুঙ্, "দীপজনেত্যাদিনা বিকল্পাচ্চিণ্ প্রত্যয়ঃ ॥৮॥

**টিপ্পনী**—কৃতেতি । অত্র রৌদ্রো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮॥

**বাঙ্গালা**—শিশুপালের মুখমণ্ডল ভয়ঙ্কর হইয়া উঠিল। কেন না, ভ্রূযুগল বক্র হইল এবং বিশাল ভ্রূকুটী আসিয়া ললাটদেশকে ভীষণ করিল; তাহাতে বোধ হইল আবারও যেন তৃতীয় নয়ন আসিয়া সেই ললাটে উপস্থিত হইয়াছে; ॥৮॥

করকুড্মলেন নিজমূরু, মুরুতরনগাশ্মকর্কশম্ ।
ত্রস্তচপলচলমানজন-শ্রুতভীমনাদময়মাহতোচ্চকৈঃ ॥১০॥

---

অন্বয়ঃ—অমুষ্য দৃষ্টিঃ অতিরক্তভাবম্ উপগম্য সাহসে কৃতমতিঃ অগণিতভয়া (চ সতী) সময়া সখীম্ ইব অসিলতাম্ অবলম্বতে স্ম ॥৯॥

টীকা—অতিরক্তেতি। অমুষ্য চৈদ্যস্য দৃষ্টিঃ। অতিরক্তস্য ভাবস্তমতিরক্তভাবং রোষাতিরেকাদত্যন্তরক্ততামন্যত্র কামাতিরেকাদত্যনুরাগিতামুপগম্য প্রাপ্য সাহসে কৃত্যাদিধূননরূপে অন্যত্র যুদ্ধে কৃতমতিঃ। সর্বথা গমিষ্যামি হনিষ্যামি ইতি চ কৃতনিশ্চয়া অয়ং নির্দ্ধারণং প্রতিবিধিঃ। অগণিতমবিচারিতং ভয়ং গুরোর্গুরুজনাচ্চ যয়া সা সতী সময়া সমীপে অসিলতাং সখীমিবাবলম্বতে স্ম সাধনত্বেন স্বীচকার ক্রোধাজ্জিঘাংসয়া খড়্গমদ্রাক্ষীদিত্যর্থঃ। অত্র প্রস্তুতদৃষ্টিবিশেষণসাম্যাদপ্রস্তুতনায়িকাপ্রতীতেঃ সমাসোক্তিরুপমাসঙ্কীর্ণা ॥৯॥

টিপ্পনী—অতীতি। অত্র রৌদ্রো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৯॥

বাঙ্গালা—শিশুপালের দৃষ্টি, অত্যন্ত রক্তবর্ণ হইয়া সাহসের কার্য্যে কৃতনিশ্চয় হইল, কিন্তু ভয়ের গণনাও করিল না; তৎপরে সখীর ন্যায় নিকটবর্ত্তিনী অসিলতাকে আশ্রয় করিল ॥৯॥

অন্বয়ঃ—অয়ং করকুড্মলেন উরুতর-নগাশ্ম-কর্কশং নিজম্ ঊরুং ত্রস্ত-চপল-চলমান-জন শ্রুত-ভীম-নাদম্ উচ্চকৈঃ আহত ॥১০॥

টীকা—করেতি। অয়ং চৈদ্যঃ উরুতরো মহত্তরো নগাশ্মবৎ শৈলশিলেব কর্কশ ইত্যুপমা। তং নিজমাত্মীয়মূরুং সক্থি। "সক্থি ক্লীবে পুমানূরুরিত্যমরঃ। করঃ কুড্মল ইবেত্যুপমিতসমাসঃ। তেন সংহৃতপ্রসারিতাঙ্গুলিনা পাণিতলেনেত্যর্থঃ। ত্রস্তো ভীতঃ অতএব চপলং চঞ্চলং চলমানেন জনেন শ্রুতো ভীমনাদো ভয়ঙ্করধ্বনির্যস্মিন্ কর্মণি তদ্যথা তথা উচ্চকৈরাহত আহতবান্। অলক্ষ্যলক্ষ্যাঃ ক্রোধান্ধাঃ স্বাত্মানমেব ঘ্নন্তীতি ভাবঃ। আঙ্পূর্বাদ্ধন্তের্লঙ্। "আঙোযমহনঃ" ইতি অকর্মকাধিকারেঽপি স্বাঙ্গাত্তু সকর্মকাচ্চেতি বক্তব্যস্মাদাত্মনেপদে অনুদাত্তোপদেশেত্যাদিনাঽনুনাসিকলোপঃ ॥১০॥

টিপ্পনী—করেতি। অত্র "চপলং চঞ্চলং চলমানেন জনেন" ইতি মল্লিনাথঃ। চঞ্চলং ত্রস্তত্বাদেব কম্পিতাঙ্গং যথা তথা চলমানেন গচ্ছতা জনেনেত্যর্থঃ। অতো ন চপলচলমানপদয়োরর্থস্য পুনরুক্তিঃ। নিজমূরুমুরুতরেতি ছেকানুপ্রাসেন টীকোক্তোপমা সংসৃজ্যতে। রৌদ্রো রসঃ, সমাসবাহুল্যাৎ উদ্ধতঘটনাব্যঞ্জকত্বাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥১০॥

বাঙ্গালা—শিশুপাল আপন করকুট্মল দ্বারা, পার্বত্য বিশাল পাষাণের ন্যায় কঠিন স্বকীয় উরুর উপরে একটা তীব্র আঘাত করিলেন; তখন যে সকল লোক গমনাগমন করিতেছিল, তাহারাও ভীত হইয়া, কম্পিতকলেবরে সেই ভয়ঙ্কর শব্দ শুনিল ॥১০॥

इति चुक्रुधे भृशमनेन ननु महदवाप्य विप्रियम् ।
याति विकृतिमपि संवृतिमत् किमु यन्निसर्गनिरवग्रहं मनः ॥११॥
प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ।
भावि कलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥१२॥

---

**अन्वयः**—इति अनेन भृशं चुक्रुधे । संवृतिमत् अपि मनः महत् विप्रियम् अवाप्य विकृतिं याति ननु ; यत् (मनः) निसर्गनिरवग्रहम्, (तत् विकृतिं याति, अत्र) किमु (वक्तव्यम्) ॥११॥

**टीका**—इतीति । इतीत्थमनेन प्रकारेण अनेन चैद्येन भृशं चुक्रुधे क्रुद्धम् । भावे लिट् । संवृतिमदपि संवृतिर्विकारगुप्तिः तद्वदपि धीरमपीत्यर्थः । मनो महद्विप्रियम् अप्रियमवाप्य विकृतिं विकारं याति ननु प्राप्नोति खलु । यन्मनो निसर्गात् स्वभावान्निरवग्रहं चपलमित्यर्थः । ग्रहेः खल् प्रत्ययः । तदिति शेषः किमु विकृतिं यातीति किमु वक्तव्यमित्यर्थः । चपलचित्तस्यायं चैद्य इति भावः । अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थं हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥११॥

**टिप्पनी**—इतीति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥११॥

**বাঙ্গালা**—এই ভাবে শিশুপাল অত্যন্ত ক্রোধ প্রকাশ করিলেন । কেন না, সংবরণ-শক্তিসম্পন্ন মনও, গুরুতর অপ্রিয় ঘটনা অনুভব করিয়া, বিকৃতি প্রাপ্ত হইয়া থাকে ; তাহাতে যে মন স্বভাবতই অদম্য, সে মন যে বিকৃতি প্রাপ্ত হইবে ; সে বিষয়ে আর বক্তব্য আছে কি ॥১১॥

**अन्वयः**—अव्यथी असौ प्रथमं शरीरज-विकार-कृत-मुकुल-बन्धम् भावि कलह फल-योगं कोप-कुसुमं वचनेन व्यचीकसत् ॥१२॥

**टीका**—एवं गात्रारम्भविकारानुक्त्वा वागारम्भान् वक्तुमुपोद्घातयति । प्रथममिति । न व्यथते बिभेतीति अव्यथी निर्भयः । दिहचीत्यादिना नञ्पूर्वाद्व्यथतेरिनिः । असौ चैद्यः प्रथमं शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः कृतो मुकुलबन्धो मुकुलप्रादुर्भावो यस्य तत् । भाविकलहस्य रणस्यैव फलस्य योगो यस्य तत् । "अस्त्रियां समराणीकरणाः कलहविग्रहावित्यमरः । कोप एव कुसुमं तत् वचनेन यदपूपुज इत्यादिवक्ष्यमाणवाक्येन व्यचीकसत् विकासयति स्म । कसेर्णौ चङ्युपधाया ह्रस्वः, "दीर्घो लघोरित्यभ्यासदीर्घः । अत्र विकारकलहवचनकोपेषु मुकुलफलविकासकुसुमत्वरूपणात् समस्तवस्तुवर्त्ति सावयवरूपकम् ॥१२॥

**टिप्पनी**—प्रथममिति । अत्र समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥१२॥

**বাঙ্গালা**—নির্ভয়চিত্ত শিশুপাল প্রথমে শারীরিক বিকার দ্বারা কলিকা প্রকাশ করিয়া, বাক্য দ্বারা এমন একটী কোপরূপ পুষ্প প্রকাশ করিলেন যে ভবিষ্যতে যুদ্ধই তাহার ফল হইয়াছিল ॥১২॥

ध्वनयन् सभामथ सनीर-घनरवगभीरवागभीः।
वाचमवददिति रोषवशादतिनिष्ठुरस्फुटतराक्षरामसौ ॥१३॥
यदपूपुजस्त्वमिह पार्थ! मुरजितमपूजितं सताम्।
प्रेम विलसति महत्तदहो दयितं जनः खलु गुणीति मन्यते ॥१४॥
यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विषि।
ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु ॥१५॥

---

अन्वयः—अथ सनीर-घन-रव-गभीर-वाक् अभीः असौ सभां ध्वनयन् (सन्) रोषवशात् अतिनिष्ठुर-स्फुटतर-अक्षराम् इति वाचम् अवदत् ॥१३॥

टीका—ध्वनयन्निति। अथ सनीरघनरवगभीरवाक् सजलमेघगर्जितगभीरस्वर इत्यर्थः अभीः निर्भीकः असौ चैद्यः सभामास्थानं ध्वनयन् अतिरोषवशात् अतिनिष्ठुराणि अतिपरुषाणि स्फुटतराणि चाक्षराणि यस्यास्तां वाचमवदत्। घनरवगभीरेत्युपमालङ्कारः ॥१३॥

टिप्पनी—ध्वनयन्निति। अत्र द्वितीयपादे च्छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तस्य च टीकोक्तोपमया सह संसृष्टिः। रौद्रो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥१३॥

বাঙ্গালা—তদনন্তর, জলপূর্ণ মেঘধ্বনির ন্যায় গম্ভীরধ্বনি ও নির্ভীকহৃদয় শিশুপাল, সভামণ্ডপকে ধ্বনিত করিয়া, ক্রোধবশতঃ অতিনিষ্ঠুর ও স্পষ্ট অক্ষরে এই বাক্য বলিলেন ॥১৩॥

अन्वयः—(हे) पार्थ! त्वं सताम् अपूजितं मुरजितं यत् इह अपूपुजः, तत् महत् प्रेम विलसति। अहो! जनः दयितं गुणी इति मन्यते खलु ॥१४॥

टीका—वाचमवददित्युक्तम् अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भनाह। यदित्यादि। हे पार्थ। पृथापुत्रेति मातृप्राधान्येनामन्त्रणं नर्मोद्घाटनार्थम्। सतामपूजितं सद्भिरपूज्यमानमित्यर्थः। "मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः, क्तस्य च वर्धमान इति षष्ठी। मुरजितं कृष्णम् इह सदसि यद्यस्मादपूपुजः पूजयसि स्म। णौ चङ्युपधाया ह्रस्वः। तत्तस्मात् महत् प्रेम विलसति स्फुरति। अन्यथा कथमपूज्ये पूज्यत्वाभिमान इत्यभिप्रेत्याह। जनो लोकः दयितं प्रियं जनं गुणीति मन्यते खलु अगुणिनमपीत्यर्थः अहो आश्चर्य्यं कृष्णः प्रेम्णा पूजितो न गुणादिति भावः। अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुकाव्यलिङ्गम् ॥१४॥

टिप्पनी—यदिति। अत्र द्वितीयपादे च्छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह तस्य संसृष्टिः। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—হে পৃথাপুত্র! যুধিষ্ঠির! তুমি যে সজ্জনের অপূজ্য কৃষ্ণকে এই সভার মধ্যে পূজা করিয়াছ, তাহাতে (কৃষ্ণের প্রতি) তোমার গুরুতর ভালবাসাই প্রকাশ পাইয়াছে। কেন না, সাধারণ লোক আত্মীয় জনকে গুণবান্ বলিয়াই মনে করিয়া থাকে ॥১৪॥

अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता ॥१६॥
तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते।
भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ॥१७॥

---

**अन्वयः**—अराज्ञि इह सुरद्विषि राजवत् यत् इदम् अर्घ्यम् उपाहितम्, तत् अयम् महीशवह्निषु ज्वलत्सु (सत्सु) ग्राम्यमृगः हविः इव न भजते ॥१५॥

**टीका**—यदिति। अराज्ञि अभिषेकादिराजगुणविरहिणीत्यर्थः। नञ्स्तत्पुरुषादिति समासान्तप्रतिषेधः। इहास्मिन् सुरद्विषि कृष्णे। अपात्रद्योतनार्थमसम्प्रदानविभक्तिनिर्देशः। राजानमर्हतीति राजवत् राजार्हम्। तदर्हमिति वतिप्रत्ययः। "तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम्। यदिदमर्घ्यमर्घ्यार्थं द्रव्यम् अर्हणामित्यर्थः। उपाहितमर्पितं तदर्घ्यमयं कृष्णः महीशा अवनीपा वह्नय इव इत्युपमितसमासः। तेषु महीशवह्निषु ज्वलत्सु सत्सु अन्यत्र महीशा इव वह्नयः तेषु ज्वलत्सु सत्स्वित्यर्थः। ग्राम्यमृगः शुनको हविरिव न भज्यते न प्राप्नोति। उपमालङ्कारः ॥१५॥

**टिप्पनी**—यदिति। अत्र "उपमालङ्कारः" इति मल्लिनाथः। आद्या श्रौतोपमा द्वितीया च लुप्तोपमा इत्युभयोरङ्गाङ्गिभावेन सङ्कर इति तदभिप्रायः। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

**বাঙ্গালা**—যুধিষ্ঠির! কৃষ্ণ রাজা নহে; তথাপি রাজার ন্যায় ইহার নিকটে যে এই সকল অর্ঘ্যদ্রব্য রাখিয়াছ; তাহা এ, অগ্নির ন্যায় জাজ্জ্বল্যমান রাজগণ থাকিতে, গ্রহণ করিতে পারিতেছে না; যেমন রাজতুল্য অগ্নি জ্বলিতে থাকিলে, কুক্কুর যজ্ঞের ঘৃত গ্রহণ করিতে পারে না ॥১৫॥

**अन्वयः**—(हे पार्थ!) अनृतां गिरं न गदसि इति पटहैः जगति विघुष्यसे। अथ च निन्द्यं हरिम् अर्चयतः तव कर्मणा एव असत्यता विकसति ॥१६॥

**टीका**—अनृतामिति। हे पार्थ! अनृतामसत्यां गिरं न गदसि न वदसीति जगति लोके पटहैर्वाद्यविशेषैः कर्त्तृभिर्विघुष्यसे उद्घोष्यसे अथच तथापि। निन्द्यं हरिमर्चयतस्तव कर्मणा अपूज्यपूजाकरणेनैवासत्यता सत्यहीनता विकसति प्रकाशते। अत्रासत्यप्रसिद्धसत्याचरणयोर्विरूपयोर्घटनाद्विरूपघटनारूपो विषमालङ्कारः ॥१६॥

**टिप्पनी**—अनृतामिति। अत्र पटहैस्तादृशघोषणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरिति टीकोक्तविषमालङ्कारेणासौ संसृज्यते। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१६॥

**বাঙ্গালা**—যুধিষ্ঠির! 'তুমি মিথ্যা কথা বল না' এইরূপে ঢাক বাজিয়া জগতে তোমাকে ঘোষিত করিয়া থাকে; অথচ নিন্দনীয় কৃষ্ণটাকে পূজা করায়, কার্য্য দ্বারাই তোমার অসত্যতা প্রকাশ পাইয়াছে ॥১৬॥

**अन्वयः**—(हे पार्थ!) तव इदं धर्मराजः इति नाम कथम् अपष्ठु पठ्यते (लोकैः)। अथवा जनाः भृशम् अप्रशस्तम् अपि भौमदिनं मङ्गलम् अभिदधति ॥१७॥

यदि वार्चनीयतम एष किमपि भवतां पृथासुताः ! ।
शौरिरवनिपतिभिर्निखिलैरवमानमनार्थमिह किं निमन्त्रितैः ॥१८॥
अथवा न धर्मसमुबोधसमयमवयात बालिशाः ।
काममयमिह वृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥१९॥

---

टीका—तवेति। हे पार्थ ! तवेदं धर्मराज इति नाम कथमपष्ठु असत्यमेव पठ्यते। "अपदुःसुभ्यः स्थ" इत्यौणादिकः कुप्रत्ययः। "अम्बाम्बगोभूमीत्यादिना षत्वम्। यद्वा युक्तमेव तदित्याह। अथवा जनाः भृशमप्रशस्तमपि भौमदिनमङ्गारकवारं मङ्गलम् अभिदधति व्यपदिशन्ति तद्वदिदमपीत्यर्थः। लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते तदुच्चारणदोषात्। तद्वदधर्मराजस्यापि ते धर्मराजव्यपदेश इति भावः। अत्र धर्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥१७॥

टिप्पनी—तवेति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—যুধিষ্ঠির! তোমার এই "ধর্ম্মরাজ" এহেন মিথ্যা নামটা লোকে কেন বলে? অথবা ভৌমবার অত্যন্ত অপ্রশস্ত হইলেও, লোকে তাহাকে "মঙ্গলবার" বলিয়া থাকে ॥১৭॥

अन्वयः—(हे) पृथासुताः! एषः शौरिः वा किम् अपि यदि भवताम् अर्चनीयतमः; (तर्हि) अपमानार्थं निमन्त्रितैः निखिलैः अवनिपतिभिः किम (प्रयोजनम्) ॥१८॥

टीका—यदि वेति। हे पृथासुताः! कौन्तेयाः! एष शौरिर्वा शौरिरेवेत्यर्थः। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय" इति विश्वः। किमपि कथमपि भवतामर्चनीयतमो यदि पूज्यश्चेत तर्हीति शेषः अवमानस्तिरस्कारः तस्मै तदर्थमेव। अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या। क्रियाविशेषणम्। निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरिह किं कोऽर्थः साध्य इत्यर्थः। अत एव साधनक्रियापेक्षया करणत्वे तृतीया। अत्र गम्यमानक्रियापेक्षयापि कारकप्रवृत्तिरिति न्यासद्योते। अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गमेदः ॥१८॥

टिप्पनी—यदीति। अत्र पूर्वार्द्धान्वयिनः शौरिरित्येकपदस्य परार्द्धे पातात् अर्द्धान्तरैकपदतादोषः, शौरीत्यनेनान्वयिनो वाशब्दस्य अन्यत्र पाठादक्रमतादोषश्च। तेन श्लोकोऽयमेवं पठनीयः—

'हरिरेव पूज्यतम एष किमपि यदि वः पृथासुताः !
तर्हि मनुजपतिभिर्निखिलैः अवमाननार्थमिह किं निमन्त्रितैः'।

रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—হে কুন্তীপুত্রগণ! কৃষ্ণই যদি কোন কারণে তোমাদের বিশেষ পূজনীয় হইয়া থাকে; তাহা হইলে, অপমান করিবার জন্য সমস্ত রাজগণকে এখানে নিমন্ত্রণ করিয়া আনিবার কি প্রয়োজন ছিল? ॥১৮॥

स्वयमेव शन्तनुतनूज ! यमपि गुणमर्घ्यमभ्यधाः ।
तत्र सुररिपुरयं कतमो यमनिन्द्यवन्दिवदभिष्टुषे वृथा ॥२०॥
अवनीभृतां त्वमपहाय गणमतिजडः समुन्नतम् ।
नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः ॥२१॥

---

**अन्वयः**—अथवा बालिशाः (यूयम्) असुबोधसमयं धर्मं न अवयात । (किन्तु) वृथापलितः हतबुद्धिः अयं सरित्सुतः इह कामम् अप्रणिहितः ॥१९॥

**टीका**—अथ त्रिभिर्भीष्मोपालम्भमाह । अथवेत्यादि । अथवा बालिशा मूर्खाः यूयमिति शेषः । सुबोधो न भवतीत्यसुबोधो दुर्बोधः समय आचारो यस्य तं धर्मं नावयात न जानीत । अवपूर्वाद्याधातोर्लोट् लोटस्तस्थमित्यादिना थस्य तादेशः । किन्तु वृथा निष्फलं पलितं यस्य स वृथापलितः वृथापरिणत इत्यर्थः । "पलितं जरसा शौक्ल्यमित्यमरः । वृथात्वे हेतुः हतबुद्धिर्नष्टमतिरयं सरित्सुतो भीष्मोऽपि काममप्रणिहितोऽनवहितः प्रमत्तः, बालाः पार्था न जानन्तु हन्त वृद्धोऽपि न जानातीति चित्रमित्यर्थः । अत एव सत्यपि कारणे कार्य्यानुदयाद्विशेषोक्तिरलङ्कारः तथा बालिशत्वधर्मदुर्बोधत्वयोर्विशेषणगत्या धर्मज्ञानाहेतुत्वात् काव्यलिङ्गञ्चेत्यनयोः सापेक्षत्वात्सङ्करः ॥१९॥

**टिप्पनी**—अथवेति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—হে কুন্তীপুত্রগণ! তোমরা মূর্খ, এদিকে ধর্ম্মের নিয়মও দুর্বোধ; সুতরাং তোমরা সে ধর্ম্ম বুঝিতে পার নাই। কিন্তু বৃথাবৃদ্ধ ও নষ্টবুদ্ধি এই নদীর পুত্রও যে এ বিষয়ে অত্যন্ত অমনোযোগী হইয়াছিল, (ইহাই আশ্চর্য্য) ॥১৯॥

**अन्वयः**—(हे) शन्तनुतनूज ! स्वयम् एव (त्वं) यम् अपि अर्घ्यं गुणम् अभ्यधाः, तत्र अयं सुररिपुः कतमः ? यम् अनिन्द्यवन्दिवत् वृथा अभिष्टुषे ॥२०॥

**टीका**—स्वयमेवेति । हे शन्तनुतनूज ! भीष्म ! स्वयमेव त्वमेवेत्यर्थः । यमपि गुणमर्घ्यं मर्घार्हं पूज्यम् । "दण्डादिभ्यो यदिति यत्प्रत्ययः । अभ्यधाः अवोचः "स्नातकं गुरुमित्यादिश्लोक इति भावः । धाधातोर्लुङि "गातिस्थेत्यादिना सिचो लुक् । तत्र स्नातकादिगुणो अयं सुररिपुः कतमः न कोऽपीत्यर्थः । मास्तु अस्तु वा अत्रादुपालम्भे को हेतुरत आह यमिति । यं सुररिपुमनिन्द्यवन्दिवत् प्रगल्भवैतालिकवदित्युपमा अभिष्टुषे मिथ्या स्तौषि । अतस्त्वमेवोपालभ्योऽसि इति भावः । "उपसर्गात् सुनोतीत्यादिना षत्वम् ॥२०॥

**टिप्पनी**—स्वयमिति । अत्र अनिन्द्यवन्दीति छेकानुप्रासेन टीकोक्तोपमा संसृज्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

**বাঙ্গালা**—হে শান্তনুনন্দন! তুমি নিজেই যে অর্ঘ পাইবার উপযোগী গুণের কথা বলিয়াছ, সে গুণের বিষয়ে এ কৃষ্ণটা কে? যাহাকে তুমি, ভাল স্তুতিপাঠকের মত অনর্থক স্তব করিয়াছ ॥২০॥

प्रतिपत्तुमङ्ग ! घटते च न तव नृपयोग्यमर्हणम् ।
कृष्ण ! कलय ननु कोऽहमिति स्फुटमापदां पदमनात्मवेदिता ॥२२॥

---

अन्वयः—अतिजडः चपलः त्वं समुन्नतम् अवनीभृतां गणम् अपहाय यत् इह नीचि नियतं निरतः, (तत्) स्फुटं निम्नगासुतः भवसि ॥२१॥

टीका—अवनीति । अतिजडोऽतिमूढोऽतिशीतश्च चपलोऽस्थिरः सत्वरश्च त्वम् । समुन्नतम् उन्नतमवनीभृतां राज्ञां भूधराणां च गणमपहाय । न्यञ्चतीति न्यङ् तस्मिन् नीचि नीचवृत्ते निम्ने च । "अचः" इत्यकारलोपे चाविति दीर्घः । इहास्मिन् कृष्णे यद्यस्मान्नियतं नित्यं निरतोऽनुरक्तः प्रवणश्च स इति शेषः । निम्नं नीचं गच्छतीति निम्नगा नदी । 'डोऽन्यत्रापि दृश्यते" इति डप्रत्ययः । तस्याः सुतो भवसि स्फुटं व्यक्तं नीचनिरतत्वादिधर्मसङ्क्रमादिति भावः । उक्तं च । "न पितुरमनुवर्त्तन्ते मातृकं द्विपदा" इति । अत्र चतुर्थपादार्थस्य पूर्ववाक्यार्थं हेतुकत्वात् काव्यलिङ्गभेदः ॥२१॥

टिप्पनी—अवनीति । अत्र निम्नं गच्छतीति व्युत्पत्त्या नदी अधमजातीयपुरुषव्यभिचारिणी स्त्री च गम्यत इति तादृशस्त्रीसुत इत्यर्थस्यापि प्रतीतिः शब्दशक्तिमूलो वस्तुध्वनिः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२१॥

বাঙ্গালা—ভীষ্ম! তুমি অতিমূর্খ ও অস্থিরচিত্ত ; সুতরাং তুমি যেহেতু উন্নত রাজগণকে পরিত্যাগ করিয়া, এই নীচচরিত্র কৃষ্ণের প্রতি একান্ত আসক্ত হইয়াছ ; সেহেতু তুমি স্পষ্টতই নিম্নগার পুত্র বলিয়া স্থির হইয়াছ ॥২১॥

अन्वयः—अङ्ग ! नृपयोग्यम् अर्हणं प्रतिपत्तुं तव च न घटते । ननु कृष्ण ! अहं कः इति कलय । अनात्मवेदिता आपदां पदं स्फुटम् ॥२२॥

टीका—अथ सप्तदशभिः कृष्णोपालम्भं करोति । प्रतिपत्तुमिति । हे अङ्ग ! तव नृपयोग्यं राजार्हमर्हणं पूजनं प्रतिपत्तुं स्वीकर्त्तुं न च घटते न युज्यते । नन्वहमपि राजैव कथमर्हणं मे न युक्तं तत्राह कृष्णेति । हे कृष्ण ! अहं क इति कलय अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः । अनालोचनेऽनर्थमाह । अनात्मवेदिता अनात्मज्ञत्वम् आपदां पदं स्थानं स्फुटं खलु सत्यमित्यर्थः । आत्मा च कंसकिङ्करस्तस्य पशुपालकत्वादिति भावः । अतो निजस्वरूपं चिन्त्यमिति हेतुसद्भावात् काव्यलिङ्गमिति ॥२२॥

टिप्पनी—प्रतिपत्तुमिति । अत्र आपदां पदमिति छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह तस्य संसृष्टिः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

বাঙ্গালা—ওহে! রাজার যোগ্য পূজা গ্রহণ করা, তোমার পক্ষেও উচিত নহে। কেন না, হে কৃষ্ণ! 'আমি কে' ইহা একবার পর্য্যালোচনা কর দেখি। 'আমি কে' ইহা না জানা, স্পষ্টতই নানা বিপদের কারণ হয় ॥২২॥

असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन् मधु ॥२३॥
मुचुकुन्दतल्पशरणस्य मगधपतिशातितौजसः ।
सिद्धमबल ! सबलत्वमहो तव रौहिणीतनयसाहचर्य्यतः ॥२४॥

---

**अन्वयः**—(कृष्ण !) त्वया 'मधुः' इति कः अपि असुरः न्यवधि इति कथं प्रतीयते । (किन्तु) दण्ड-दलित-सरघः त्वं मधु सूदयन् (सन्) 'मधुसूदनः' इति प्रथसे ॥२३॥

**टीका**—असुर इति । मधुरिति कोऽप्यसुरस्त्वया न्यवधि हतः । "लुङि च" "आत्मनेपदेष्वन्यतरस्यामिति हन्तेर्लुङि विकल्पाद्वधादेशः । इति कथं प्रतीयते विश्वस्यते न कथञ्चिदित्यर्थः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः । किन्तु दण्डेन दलिता ध्वस्ताः सरघा मधुमक्षिका येन ईदृशस्त्वम् । "सरघा मधुमक्षिकेत्यमरः । अत एव मधु क्षौद्रं सूदयन् पीड़यन् मधुसूदन इति प्रथसे प्रथितोऽसि । मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः । अत्र मधुसूदनसंज्ञायां प्रसिद्धार्थं निषेधस्योत्तरवाक्यस्यान्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकाव्यलिङ्गम् ॥२३॥

**टिप्पनी**—असुर इति । अत्र मधुनामकदैत्यमर्द्दनार्थे प्रसिद्धस्य मधुसूदनशब्दस्य पुष्परसहरणार्थे योजनात् संबन्धातिशयोक्तिरलङ्कारः टीकोक्तकाव्यलिङ्गेन सङ्कीर्य्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

**বাঙ্গালা**—কৃষ্ণ! তুমি মধুনামে কোন অসুরকে বধ করিয়াছিলে, ইহা কি করিয়া বিশ্বাস করা যায়। তবে, দণ্ড দ্বারা মৌ-পোকার চাক ভাঙ্গিয়া মধু আনিয়াছিলে, তাই তুমি 'মধুসূদন' এই নামে প্রসিদ্ধ হইয়াছ ॥২৩॥

**अन्वयः**—(हे) अबल ! मुचुकुन्द-तल्प-शरणस्य मगधपतिशातितौजसः तव रौहिणीतनय-साहचर्य्यतः सबलत्वं सिद्धम्, अहो ! ॥२४॥

**टीका**—मुचुकुन्देति । हे अबल ! बलहीन ! कुतः मुचुकुन्दो नाम कश्चिद्राजा । यस्यासुरविजयश्रान्त्या निद्रायमाणस्य देवतावरप्रसादात् निद्राविघातकारी दृष्टिपातान्नष्टो भवति । तस्य तल्पं शय्या तदेव शरणं रक्षकं यस्य तस्य कालयवनविद्रावितस्येति भावः । तथा मगधपतिना जरासन्धेन शातितौजसः अष्टादशकृत्वो नष्टवीर्य्यस्य तव रौहिणीतनयस्य बलापरनाम्नो बलभद्रस्य साहचर्य्यतः साहचर्य्यात् सबलत्वं सिद्धम् । न तु स्वबलसम्पत्त्येत्यर्थः । अहो कारणं विना कार्य्योदयादाश्चर्य्यम् । अतएव विभावनालङ्कारः । पुरुषार्थशो लभ्यते इति भावः ॥२४॥

**टिप्पनी**—मुचुकुन्देति । अत्रापि शौर्य्यवदर्थे प्रसिद्धस्य सबलशब्दस्य बलरामसहचरितार्थे योजनात् संबन्धातिशयोक्तिः, अबल-सबलेति च्छेकानुप्रासश्चेति ताभ्यां टीकोक्ता विभावना संसृज्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

छलयन् प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः ।
प्रीतिमनुभवसि नग्नजितः सुतयेष्टसत्य इति सम्प्रतीयसे ॥२५॥
धृतवान् न चक्रमरिचक्रभयचकितमाहवे निजम् ।
चक्रधर इति रथाङ्गमदः सततं बिभर्षि भुवनेषु रूढये ॥२६॥

---

বাঙ্গালা—হে দুর্বল ! মুচুকুন্দ রাজার শয্যাই তোমার রক্ষক হইয়াছিল এবং মগধেশ্বর জরাসন্ধ তোমার তেজ নষ্ট করিয়া দিয়াছিলেন ; তথাপি তোমার যে সবলত্ব প্রসিদ্ধ রহিয়াছে, তাহা কেবল বলরামের সহচর বলিয়া । কি আশ্চর্য্য ? ॥২৪॥

अन्वयः—(हे कृष्ण !) ऐन्द्रजालिकः कपटपटुः त्वम् अनृतेन प्रजाः छलयन् (अपि) नग्नजितः सुतया प्रीतिम् अनुभवसि, (अतएव] इष्टसत्यः इति सम्प्रतीयसे ॥२५॥

टीका—छलयन्निति । इन्द्रजालं वेत्तीति ऐन्द्रजालिकः । अतएव कपटपटुर्वञ्चनाकुशलस्त्वम् अनृतेनासत्येन प्रजाश्छलयन् वञ्चयन् इष्टं सत्यं यस्य स इष्टसत्यः प्रियसत्यः इति सम्प्रतीयसे सम्यक् ख्यायसे । "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः । नग्नजितो नग्नजिन्नाम्नो राज्ञः सुतया सत्यभामया सत्यापराख्यया प्रीतिमानन्दम् अनुभवसि सत्यायोगादिष्टसत्यो न तु सत्ययोगादिति भावः । अत्र हरेः सत्यसम्बन्धेऽपि तदसम्बन्धोक्तेः सम्बन्धे असम्बन्धरूपातिशयोक्तिः ॥२५॥

टिप्पनी—छलयन्निति । अत्र मल्लिनाथव्याख्यानं चिन्त्यम् । सत्यप्रियार्थे लोकव्यवहृतस्य इष्टसत्यपदस्य सत्याप्रियार्थे योजनात् श्लेषवक्रोक्तिः, कपटपटुरिति छेकानुप्रासश्च ताभ्यां टीकोक्तातिशयोक्तिः संसृज्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२५॥

বাঙ্গালা—কৃষ্ণ ! তুমি মায়াবী এবং প্রতারণানিপুণ ; তাই মিথ্যা ব্যবহার দ্বারা জনসাধারণকে প্রতারিত করিয়াও তুমি, নগ্নজিৎ-রাজার কন্যা সত্যভামার গুণে প্রীতি অনুভব কর বলিয়া "ইষ্টসত্য" এই নামে প্রসিদ্ধ হইয়াছ ॥২৫॥

अन्वयः—आहवे अरिचक्र-भय-चकितं निजं चक्रं न धृतवान् ; [तथापि] भुवनेषु 'चक्रधरः' इति रूढये सततम् अदः रथाङ्गं बिभर्षि ॥२६॥

टीका—धृतवानिति । आहवे युद्धे अरिचक्रादरिसैन्याद्भयेन चकितं सम्भ्रान्तम् । "चकितं भयसम्भ्रमः" इति सज्जनः । निजमात्मीयं चक्रं सैन्यं न धृतवान् नावलम्बितवान् न रक्षितवान् इत्यर्थः । किन्तु चक्रधर इति भुवनेषु रूढये प्रसिद्धये । अदः इदं रथाङ्गं चक्रापराख्यं सततं बिभर्षि दधासि वृथाभारमिति भावः । "चक्रं सैन्यरथाङ्गयोः" इति हैमसज्जनौ । अयोविकारधरः चक्रधरो भवानारिभीतचक्रधरत्वादित्यर्थः । अत्र हरौ भगवति चक्रधारणासम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥२६॥

टिप्पनी—धृतवानिति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

জগতি শ্রিয়া বিরহিতোঽপি যদুদধিসুতামুপায়থাঃ।
জ্ঞাতিজনজনিতনামপদাং ত্বমতঃ শ্রিয়ঃ পতিরিতি প্রথামগাঃ। ॥২৭॥
অভিমন্যু সংযতি কদাচিদবিহিতপরাক্রমোঽপি যত্।
ব্যোম্নি কথমপি চকর্থ পদং ব্যপদিশ্যসে জগতি বিক্রমীত্যতঃ ॥২৮॥

---

বাঙ্গালা—কৃষ্ণ! যুদ্ধে তোমার সৈন্যগণ শত্রুসৈন্যের ভয়ে ব্যতিব্যস্ত হইয়া যায়, অথ চ তুমি তাহা রক্ষা করিতে পার না, তথাপি জগতে 'চক্রধর" এই নামটী বিখ্যাত করিবার জন্য, সর্বদা ঐ সুদর্শনচক্রটা ধারণ করিয়া থাক ॥২৬॥

অন্বয়ঃ—ত্বং শ্রিয়া বিরহিতঃ অপি [সন্] যত্ জ্ঞাতি-জনজনিত-নাম-পদাম্ উদধিসুতাম্ উপায়থাঃ, অতঃ জগতি 'শ্রিয়ঃ পতিঃ' ইতি প্রথাম্ অগাঃ ॥২৭॥

টীকা—জগতীতি। শ্রিয়া রাজলক্ষ্ম্যা বিরহিতোঽপি। যদূনাং যযাতিশাপাদ্রাজ্যানধিকারিত্বাদিতি ভাবঃ। জ্ঞাতিজনেন বন্ধুজনেন জনিতং প্রবর্ত্তিতং নামপদং শ্রীপতিরিতি পারিভাষিকসংজ্ঞাশব্দো যস্যাস্তাম উদধিসুতাম্ অব্ধিকন্যাং যদ্যস্মাদুপায়থাঃ উদূঢ়বানিত্যর্থঃ। "বিবাহোপযমৌ সমাবিত্যমরঃ। "উপাদ্যমঃ স্বীকরণে" ইত্যাত্মনেপদম্। "তনাদিভ্যস্তথাসোরিতি সিচো লুক্, "অনুদাত্তোপদেশ" ইত্যাদিনা অনুনাসিকলোপঃ। অতো জগতি শ্রিয়ঃ পতিরিতি প্রথাং খ্যাতিমগাঃ প্রাপ্তবানসি। 'ইণো গা লুঙীতি গাদেশঃ। ন রাজান্তরবদ্রাজ্যলক্ষ্মীযোগাত্তব শ্রীপতিত্বম্। কিন্তু শ্রীসংজ্ঞিকায়াঃ কস্যাশ্চিদ্দারাঃ পরিগ্রহাদিতি ভাবঃ। অত্রীপ্সিতস্যাভিষিকসংস্কারেঽপি ত্রৈলোক্যপ্রতিষ্ঠাপকস্য হরেরেব সকলরাজ্যশ্রীধুরন্ধরত্বসম্বন্ধেঽপ্যসম্বন্ধোক্তেরতিশয়োক্তিঃ ॥২৭॥

টিপ্পনী—জগতীতি। অত্রাপি লক্ষ্মীপত্যর্থে প্রসিদ্ধস্য শ্রীপতিশব্দস্য পারিভাষিকশ্রীনামকস্ত্রীপত্যর্থে যোজনাত্ পূর্ববত্ বক্রোক্তিঃ, জনজনিতেতি ছেকানুপ্রাসশ্চ তাভ্যাং টীকোক্তাতিশয়োক্তিঃ সংসৃজ্যতে। রৌদ্রো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৭॥

বাঙ্গালা—কৃষ্ণ! তুমি রাজলক্ষ্মী শূন্য হইয়াও, যেহেতু সমুদ্রকন্যাকে বিবাহ করিয়াছ এবং জ্ঞাতিরা পূর্বেই সেই সমুদ্রকন্যার নাম রাখিয়াছিল—'শ্রী'; সেই হেতু তুমি জগতে 'শ্রীপতি' এই প্রসিদ্ধি লাভ করিয়াছ ॥২৭॥

অন্বয়ঃ—সংযতি কদাচিত্ অভিমন্যু অবিহিতপরাক্রমঃ অপি [ত্বং] যত্ কথম্ অপি ব্যোম্নি পদং চকর্থ; অতঃ জগতি বিক্রমী ইতি ব্যপদিশ্যসে ॥২৮॥

টীকা—অভীতি। সংযতি যুদ্ধে কদাচিত্ কদাপি অভিমন্যু মন্যুমভিব্যাপ্য। আভিমুখ্যেঽব্যয়ীভাবঃ। অবিহিতপরাক্রমোঽকৃতপৌরুষোঽপি যদ্যস্মাত্ কথমপি অত্যন্তপ্রযত্নেন ব্যোম্নি পদং পাদক্ষেপং চকর্থ কৃতবানসি। কৃসৃ ভৃবৃস্তুদ্রুস্রুশ্রুবো লিটীতি ইট্প্রতিষেধঃ, পিত্ত্বাদ্গুণঃ। অতো জগতি বিক্রমী বিক্রমবানিতি ব্যপদিশ্যসে ব্যবহ্রিয়সে ন তু পরাক্রমযোগাদিত্যর্থঃ। অত্রাপি পরাক্রমসম্বন্ধেঽপি অসম্বন্ধোক্তেরতিশয়োক্তিঃ ॥২৮॥

पृथिवीं बिभर्थ यदि पूर्वमिदमपि गुणाय वर्त्तते।
भूमिभृदिति परहारितभूस्त्वमुदाक्रियस्व कथमन्यथा जनैः ॥२९॥
तव धन्यतेयमपि सर्वनृपतितुलितोऽपि यत् क्षणम्।
क्लान्तकरतलधृताचलकः पृथिवीतले तुलितभूभृदुच्यसे ॥३०॥

---

टिप्पनी—अभीति। अत्रापि पराक्रम्यर्थे प्रसिद्धस्य विक्रमिपदस्य आकाशक्रमणपरत्वेन योजनात् श्लेषवक्रोक्तिः। तस्य च शब्दालङ्कारत्वात् टीकोक्तातिशयोक्त्या सह संसृष्टिः। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

বাঙ্গালা—যুদ্ধে কখনও তুমি শত্রুর সম্মুখে পরাক্রম প্রকাশ কর নাই; তথাপি যেহেতু কোন কারণে আকাশে পদক্ষেপ করিয়াছিলে, সেই জন্য জগতে তোমাকে 'বিক্রমী' বলিয়া থাকে ॥২৮॥

अन्वयः—यदि पूर्वं पृथिवीं बिभर्थ, तदा इदम् अपि गुणाय वर्त्तते; किन्तु पर-हारित-भूः त्वं जनैः कथं 'भूमिभृत्' इति अन्यथा उदाक्रियस्व ॥२९॥

टीका—पृथिवीमिति। पूर्वं प्रागपि सम्प्रत्यभवेऽपीति भावः। पृथिवीं बिभर्थ यदि भृतवांश्चेत्। भृञो लिटि भारद्वाजीयेट्प्रतिषेधः पित्वाद्गुणः। इदं भूधारणमपि गुणायोत्कर्षाय वर्त्तते। भूतपूर्वगत्यापि व्यपदेशत्वात्तदपि नास्तीति भावः। प्रत्युत परैः शत्रुभिः हारितभूः परहारितभूमिकः जरासन्धेन मथुरानगरान्निष्काशितत्वादिति भावः। अत्र हर्तुरिव हरणाचरणत्वमेव हारयितृत्वमिति निजार्थोपपत्तिः। जनैः कथमन्यथा अर्थवैपरीत्येन भूमिभृदिति उदाक्रियस्व उदाक्रियेथाः। संभावनायां लोट्। असंभावितमेवेत्यर्थः। अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥२९॥

टिप्पनी—पृथिवीमिति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

বাঙ্গালা—কৃষ্ণ! তুমি যদি পূর্বেও পৃথিবী পালন করিতে, তথাপি তাহা (এখন তোমার পক্ষে) গুণের জন্যই হইত; কিন্তু তুমি পরের হাতে নিজের ভূমি হারাইয়াছ; তথাপি কেন লোকে তোমাকে 'ভূমিভৃৎ' এই বিপরীতার্থক নামে উল্লেখ করে? ॥২৯॥

अन्वयः—इयम् अपि तव धन्यता, यत् सर्व-नृपति-तुलितः अपि त्वं क्षणं क्लान्त-करतल धृताचलकः (सन्) पृथिवीतले 'तुलितभूभृत्' उच्यसे ॥३०॥

टीका—तवेति। तवेयं धन्यता पुण्यवत्ता कथं सर्वैर्नृपतिभिस्तुलितोऽवधृतोऽवितिरस्कृतोऽपीत्यर्थः क्षणं क्लान्ते भारवत्तयैव श्रान्ते करतले धृतः अचलकोऽल्पाचलो येन सः सन् पृथिवीतले तुलितभूभृद्धुतराजकश्च उच्यसे इति यत् इयमप्यपरा ते धन्यतेत्यर्थः। गोवर्द्धनाख्यक्षुद्रभूधरतोलनात्तुलितभूभृत्त्वं भवति न साट्टहासमिव महावीरातितुलनादिति भावः। अत्र सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्योः सङ्करः तेन गोवर्द्धनोद्धरणमपि नातीवाद्भुतं बाहुबलशालिनामिति वस्तु व्यज्यते ॥३०॥

त्वमशक्नुवन्नशुभकर्मनिरत ! परिपाकदारुणम् ।
जेतुमकुशलमतिर्नरकं यशसेऽधिलोकमजयः सुतं भुवः ॥३१॥
सकलैर्वपुः सकलदोषसमुदितमिदं गुणैस्तव ।
त्यक्तमपगुण ! गुणत्रितयत्यजनप्रयासमुपयासि किं मुधा ॥३२॥

---

**टिप्पनी**—तवेति । अत्र चतुर्थपादे छेकानुप्रास इति टीकोक्तसङ्करेण सह तस्य पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३०॥

**বাঙ্গালা**—কৃষ্ণ ! ইহাও তোমার পুণ্যের ফল যে, সকল রাজাই তোমাকে পরাভূত করিয়াছেন ; তথাপি তুমি ক্লান্ত হস্তে ক্ষুদ্র একটী পর্বত ধারণ করিয়াছিলে বলিয়া, পৃথিবীর মধ্যে তোমাকে 'তুলিতভূভৃৎ' বলে ॥৩০॥

**अन्वयः**—हे अशुभकर्मनिरत ! अकुशलमतिः त्वं परिपाकदारुणं नरकं जेतुम् अशक्नुवन् (सन्) अधिलोकं यशसे भुवः सुतम् अजयः ॥३१॥

**टीका**—त्वमिति । हे अशुभकर्मनिरत ! पापाचारपर ! अतएवाकुशलमतिर्दुर्बुद्धिस्त्वं परिपाके फलकाले दारुणं विचित्रपापयातनाभयत्वाद्भयङ्करमित्यर्थः नरकं निरयम् । "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः । जेतुमशक्नुवन् पापिष्ठैर्दुर्जयत्वादिति भावः । अधिलोकं लोके । विभक्त्यर्थेऽव्ययीभावः । यशसे नरकविजयीति प्रसिद्धये भुवः सुतं नरकाख्यम् अजयः जितवानसि परलोकप्रतारणमात्रपरो न परलोकबाध्योऽसीति भावः । अत्र निरयापराख्यनरकविजयाशक्तेर्विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजयप्रकृतिहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तच्च नरकयोः श्लेषमूलाभेदात्तदुत्थापितमिति सङ्करः ॥३१॥

**टिप्पनी**—त्वमिति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

**বাঙ্গালা**—হে পাপাচারপরায়ণ ! তোমার বুদ্ধিও অমঙ্গলের দিকেই যাইয়া থাকে ; তাই তুমি পরিণামভয়ঙ্কর নরক জয় করিতে না পারিয়া, জগতে সুখ্যাতি লাভ করিবার জন্য পৃথিবীর পুত্র নরকাসুরকে জয় করিয়াছ ॥৩১॥

**अन्वयः**—हे अपगुण ! सकलदोषसमुदितम् इदं तव वपुः सकलैः गुणैः त्यक्तम् ; अतः मुधा किं गुणत्रयत्यजनप्रयासम् उपयासि ? ॥३२॥

**टीका**—सकलैरिति । हे अपगुण ! निर्गुण ! सकलैः सर्वैर्दोषैः समुदितं युक्तं तवेदं वपुः सकलैर्गुणैः शौर्यादिभिस्त्यक्तं सर्वगुणान्निवर्तितमेवेत्यर्थः । एवञ्च सति गुणत्रयस्य त्यजने त्यागे यः प्रयासः तं मुधा वृथा किं किमर्थमुपयासि समुत्तयेति भावः । यत्र सकलगुणस्य त्यागस्तत्र गुणत्रयस्य त्यागोऽन्तर्गत्या सिद्ध एव अन्यथा साकल्यव्याघातादित्यर्थः । स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्तेति ध्वनिः । गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥३२॥

त्वयि पूजनं जगति जाल्म ! कृतमिदमपाकृते गुणैः ।
हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्द्धजे ॥३३॥
मृगविद्विषामिव यदित्थमजनि मिषतां पृथासुतैः ।
अस्य वनशुन इवापचितिः परिभाव एष भवतां भुवोऽधिपाः ! ॥३४॥

---

टिप्पनी---सकलैरिति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—হে নির্গুণ ! তোমার এই শরীরটী সমস্ত দোষে পরিপূর্ণ এবং সমস্তগুণ-বিবর্জিত ; সুতরাং তুমি বৃথা কেন তিনটী গুণকে (সত্ত্ব, রজঃ এবং তমোগুণকে) পরিত্যাগ করিবার প্রয়াস পাইতেছ ? ॥৩২॥

अन्वयः—[हे] जाल्म ! गुणैः अपाकृते त्वयि कृतम् इदं जगति हासकरं पूजनम्, अपेतमूर्द्धजे शिरसि कङ्कतम् इव नितराम् अघटते ॥३३॥

टीका—त्वयीति । हे जाल्म ! असमीक्ष्यकारिन् ! "जाल्मोऽसमीक्ष्यकारी स्यादित्य-मरः । गुणैरपाकृते निरस्ते गुणहीने त्वयि कृतं जगति हासकरं परिहासजनकम् इदं पूजनम् । अपेतमूर्द्धजे अपगतकेशे शिरसि कङ्कतं दारुदन्तादिमयः केशप्रसाधनविशेषः । "प्रसाधनं कङ्कतिकेति विश्वामरौ । कङ्कतमेव कङ्कतिका । कङ्कणमिति पाठे शेखरमि-त्यर्थः । "कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपीति विश्वः । तदिव नितरामघटते न सङ्ग-च्छते इत्यर्थः । "नञो नलोपस्तिङि चेपे इत्युपसङ्ख्यानमिति निन्दायां तिङ्योगेऽपि नलोपः । उपमालङ्कारः ॥३३॥

टिप्पनी—त्वयीति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

বাঙ্গালা—হে অবিবেচক ! তুমি গুণবিহীন ; সুতরাং তোমাকে এই যে পূজা করি-য়াছে, তাহা জগতে হাস্তকরই হইয়াছে , আর কেশবিহীন মস্তকে কাঁকই (চিরুণী) দেওয়ার মত, তোমার এই পূজা অত্যন্ত অসঙ্গতই হইয়াছে ॥৩৩॥

अन्वयः—[हे] भुवः अधिपाः ! मृगविद्विषाम् इव भवतां मिषताम् इत्थं पृथासुतैः अस्य वनशुनः इव यत् अपचितिः अजनि, एष भवतां परिभावः ॥३४॥

टीका—सम्प्रति राज्ञां रोषमुत्पादयन्नाह । मृगेति । हे भुवोऽधिपा राजानः ! मृगविद्विषां सिंहानामिव भवतां मिषतां पश्यतां भवत्सु मिषत्सु मिषतीयुष्मान् अनादृत्ये-त्यर्थः । "षष्ठी चानादरे" इति विकल्पाच्चानादरे षष्ठी । इत्थं पृथासुतैः कौन्तेयैः वितरमेतेषां न वेद्मीति भावः । अस्य कृष्णस्य वनशुनो वनश्वकस्येव जम्बुकस्येवेति यावत् अपचितिः पूजा अजनि जनिता कृतेति यत् । जनेर्ण्यन्तात् कर्म्मणि लुङ् । एष भवतां परिभावः परिभवः । "परौ भुवोऽवज्ञाने" इति विभाषया घञ् प्रत्ययः ॥३४॥

टिप्पनी—मृगेति । अत्र श्रौतोपमाद्वयस्य परस्परसापेक्षत्वात् सङ्करः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

বাঙ্গালা—হে রাজগণ ! সিংহের ন্যায় আপনারা দেখিতেছেন এই অবস্থায় আপনাদ

अवधीज्जनङ्गम इवैष यदि हतवृषो वृषं ननु।
स्पर्शमशुचिवपुरर्हति न प्रतिमाननान्तु नितरां नृपोचिताम्॥३५॥
यदि नाङ्गनेति मतिरस्य मृदुरजनि पूतनां प्रति।
स्तन्यमघृणमनसः पिबतः किल धर्मतो भवति सा जनन्यपि॥३६॥

---

দিগকে অবজ্ঞা করিয়া কুন্তীপুত্রেরা, শৃগালের ন্যায় এই কৃষ্ণটার এই ভাবে পূজা করিল; ইহা আপনাদের পক্ষে তিরস্কারস্বরূপ হইয়াছে॥৩৪॥

**अन्वयः**—हतवृषः एषः जनङ्गमः इव यदि वृषम् अवधीत्, [तदा] अशुचिवपुः स्पर्शम् न अर्हति, नृपोचितां प्रतिमाननां तु नितरां न अर्हति॥३५॥

**टीका**—अवधीदिति। हतवृषो हतसुकृतः। "सुकृतं वृषभे वृषः" इति विश्वः। एष कृष्णो जनङ्गमश्चाण्डाल इव। "चाण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः" इत्यमरः। "गमेश्चेति संज्ञायां जनपूर्वाद्गमधातोः खच् प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः। वृषं वृषभरूपिणम् अरिष्टाख्यमसुरमवधीद्यदि हतवांश्चेत्। "लुङि चेति हनो वधादेशः। अतएव अशुचिवपुरशुद्धदेहः स्पर्शं नार्हति नृपोचितां राजार्हां प्रतिमाननां पूजां तु नितरां नार्हति स्पर्शायोग्यो गोघ्नः कथं पूज्य इत्यर्थः। उपमा॥३५॥

**टिप्पनी**—अवधीदिति। अत्र वृषो वृषमिति च्छेकानुप्रासेन टीकोक्तोपमा संसृज्यते। रौद्रो रसः, बन्धोनकर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः॥३५॥

**বাঙ্গালা**—ধর্ম্মনাশী এই কৃষ্ণটা, চণ্ডালের ন্যায়ই যদি বৃষরূপী অরিষ্টাসুরকে বধ করিয়া থাকে; তাহা হইলে উহার শরীরই অপবিত্র হইয়াছে; সুতরাং ও, আমাদের স্পর্শ করিবারই যোগ্য নহে; কিন্তু রাজার প্রাপ্য পূজা ত কোন রূপেই পাইতে পারে না॥৩৫॥

**अन्वयः**—अस्य मतिः पूतनां प्रति अङ्गना इति [कृत्वा] यदि मृदुः न अजनि; [तथा] अपि स्तन्यं पिबतः अघृणमनसः अस्य सा धर्मतः किल जननी भवति॥३६॥

**टीका**—यदीति। अस्य कृष्णस्य मतिः पूतना नाम बालग्रहविशेषः तां प्रति अङ्गना इति हेतोर्मृदुः कृपा दया नाजनि यदि न जाता चेत् माऽस्त्विति शेषः। जनेः कर्त्तरि लुङ्, "दीपजनेत्यादिना चिण् प्रत्ययः। अघृणमनसो निर्घृणचित्तस्य। स्तने भवं स्तन्यं पयः। "शरीरावयवाच्चेति यत्प्रत्ययः। पिबतोऽस्य सा पूतना धर्मतः शास्त्रतो जनन्यपि जाता च भवति खलु स्त्रीति कृपाऽभावेऽपि मातेति जुगुप्साप्यस्य नास्तीत्यहो न केवलं स्त्रीहन्ता किन्तु मातृहन्ता चायं स्तनप्रदाया उपमातृत्वादिति भावः। अत्र स्तनपानस्य विशेषणगत्या जननीत्वहेतुत्वात् काव्यलिङ्गम्॥३६॥

**टिप्पनी**—यदीति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥३६॥

**বাঙ্গালা**—স্ত্রী বলিয়া পূতনার বিষয়ে যদিও ইঁহার মন দয়ায় কোমল না হইয়া থাকে; তথাপি এ, তাহার স্তন্য পান করিয়াছিল; সুতরাং এই নির্দ্দয়হৃদয়ের পক্ষে সে পূতনা ধর্ম্মানুসারেও ত মাতাই হইত॥৩৬॥

शकटव्युदासतरुभङ्ग-धरणिधरधारणादिकम्।
कर्म यदयमकरोत्तरलः स्थिरचेतसां क इव तेन विस्मयः ॥३७॥
अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन्।
स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत्परमनेतदद्भुतम् ॥३८॥

**अथ मल्लिनाथमते प्रक्षिप्ताः श्लोकाः। टीका चैषां वल्लभदेवस्य। ***

नुन सर्व एव समवेत्य कमपि गुणमेति पूज्यताम्।
सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र! को गुणः ॥१॥

---

**अन्वयः**—तरलः अयं शकटव्युदास-तरुभङ्ग धराधर-धारणादिक यत् कर्म अकरोत्, तेन स्थिरचेतसां कः इव विस्मयः ॥३७॥

**टीका**—शकटेति। तरलश्चपलोऽयं कृष्णः शकटव्युदासः शकटासुरमर्दनं तरुभङ्गो यमलार्जुनभञ्जनं धरणिधरधारणं गोवर्द्धनोद्धरणन्तान्यादिर्यस्य तत्तथोक्तं यत् कर्म अकरोत्। तेन कर्मणा स्थिरचेतसां धीरचित्तानां क इव विस्मयो न कोऽपीत्यर्थः। अत्र स्थिरचेतस्कताया विशेषणगत्या विस्मयनिषेधहेतुत्वात् काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥३७॥

**टिप्पनी**—शकटेति। अत्र रौद्रो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥३७॥

**বাঙ্গালা**—এই চঞ্চলমতি কৃষ্ণ শকটাসুরবধ, যমলার্জুনভঞ্জন ও গোবর্দ্ধনধারণপ্রভৃতি যে যে কার্য্য করিয়াছে; তাহাতে স্থিরচিত্ত লোকের কি বিস্ময় জন্মিতে পারে? ॥৩৭॥

**अन्वयः**—अपरः नृपशुः अयम् उग्रसेनतनयस्य पशून् अवन् (सन्) पुरुषैः असुकरं स्वामिवधं यत् कुरुते स्म; एतत् परमम् अद्भुतम् ॥३८॥

**टीका**—अयमिति। अपरोऽन्यः ना पशुरिवेति नृपशुरित्युपमितसमासः। कार्य्याकार्य्यविवेकशून्यत्वादेवेत्यर्थः। अयं कृष्णः। उग्रसेनतनयस्य कंसस्य पशून् अवन् गाः पालयन् पुरुषैरसुकरं लोकवेदविगीतत्वात् दुष्करं स्वामिवधं यत् कुरुते स्म चकारेति यत्। एतत्परममद्भुतम् अभूतपूर्वत्वादिति भावः। अत्र पश्ववनस्य विशेषणगत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात् काव्यलिङ्गम् ॥३८॥

**टिप्पनी**—अयमिति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३८॥

**বাঙ্গালা**—অপর মনুষ্যপশু এই কৃষ্ণ, কংসের পশু পালন করতঃ, মনুষ্যের পক্ষে দুষ্কর স্বামিহত্যা যে করিয়াছে: ইহাই অত্যন্ত অদ্ভুত ॥৩৮॥

---

* तत्र मल्लिनाथः "प्रतिपत्तुमङ्ग! घटते—"इत्यादीन् सप्तदश श्लोकान् प्रकृतान् मन्यमानो व्याख्यातवान्; "ननु सर्व एव समवेत्य" इत्यादीन् चतुस्त्रिंशत श्लोकांस्तु प्रक्षिप्तान् मन्यमानः परिहृतवान्। वल्लभदेवस्तु वैपरीत्येन "प्रतिपत्तुम्" इत्यादिकानेव प्रक्षिप्तान् निश्चिन्वानः परिजहार, "ननु सर्वएव" इत्यादिकांस्तु प्रकृतान् मन्वानो व्याचख्यौ। वयन्तु तत्र मल्लिनाथमननमेव समीचीनं मन्यामहे, तद्व्याख्यातेष्वेव माघलिपेः सौसादृश्यदर्शनात्, इतरेषु च तद्वैषम्यानुभवात्।

**न महानयं न च बिभर्त्ति गुणसमतया प्रधानताम् ।**
**स्वस्य कथयति चिराय पृथग्जनतां जगत्यनभिमानतां दधत् ॥२॥**

---

**अन्वयः**—ननु कुरुनरेन्द्र ! सर्वैः एव कम् अपि गुणं समवेक्ष्य पूज्यताम् एति ; सर्वगुणविरहितस्य हरेः परिपूजया कः गुणः ॥१॥

**टीका**—किमवोचदित्याह नन्विति । हे कुरुनरेन्द्र ! कौरवनाथ ! ननु सर्व एव कश्चित् कमपि पौरुषश्रुतादिकं समवेक्ष्य पूज्यतामेति पूज्यते गुणैः । गुणाः पूजाया निमित्तमित्यर्थः । यदि वा गुणं स्वप्रयोजनं पर्य्यालोच्य । अतस्त्वं ख्याते अस्य हरेर्वानरतुल्यस्य सर्वैर्गुणैः कुलज्ञत्वादिभिर्विरहितस्य विशेषेण रहितस्य परिपूजनात् को गुणः । एनमर्चयित्वा न कश्चिद्गुणस्त्वया प्राप्तः । ननु रमर्षे । कमपि । स्वल्पमपीत्यर्थः । हरिर्वानरः तत्साधर्म्याद्भगवानत्र हरिर्विवक्षितः । यथाग्निर्माणवक इति तत्त्वम् । यादृशस्तादृशस्त्वम् । येनागुणं पूजयसीति "कुरुनरेन्द्र" इत्यामन्त्रणेन सूच्यते ॥

अत्र कविरतिभक्तत्वाद्भगवतः कथाक्रमागतामपि निन्दामसहमानः प्रतीयमानां स्तुतिं व्यरचयदिति तदर्थोऽधुना व्याख्यायते—हरेर्विष्णोः परिपूजया कोऽगुणः अपितु स्वर्गादिको गुणः । न तु गुण एव इत्यर्थः । यदि वा को गुणो नीरागत्वेन । नैवास्य गुण उपकार इत्यर्थः । कीदृशस्य । सर्वैस्त्रिभिरपि गुणैः सत्त्वरजस्तमोभिर्विरहितस्य । निर्गुणो हि पुरुष" इति सांख्याः । अत्र द्वितीयार्द्धमेव तेन भिद्यते । प्रथमार्द्धेन तु न किञ्चित्प्रयोजनम् । नहि तत्र ते गुणनिन्दागताः । पूज्यतामेतीति इण्धात्वर्थस्य तु समवेक्ष्येत्येककर्त्ता । य एव हि समीक्षते स एव पूजयते इति स्यब्भवत्येव । सर्वो गुणान् दृष्ट्वा पूज्यत इत्यर्थः । वक्रश्लेषोऽत्र । निन्दास्तुतावक्रार: ॥१॥

**टिप्पनी**—नन्विति । गुणं पूजया पूजकस्यात्मन उत्कर्षं फलं वा, समवेक्ष्य पूज्यताम् अन्यस्य पूजनीयत्वम्, एति बुध्यते ; ततश्च तस्य पूजां करोतीत्यर्थः । एवञ्च न समवेक्ष्येतीत्यनयोरेककर्त्तृकत्वहानिः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । एवमन्यत्राप्येवं ज्ञेयम् ॥१॥

**বাঙ্গালা**—হে কুরুরাজ ! পূজা দ্বারা কোন গুণ হইবে ইহা বিবেচনা করিয়া পরে, সকলেই অন্যের পূজনীয়তা নিশ্চয় করে ; তাহার পর তাহার পূজা করে। কিন্তু সমস্তগুণবিহীন এই কৃষ্ণের পূজা দ্বারা তোমার কোন্ গুণ হইল ? ॥১॥

**अन्वयः**—अयं न महान्, गुणसमतया च प्रधानतां न बिभर्त्ति, (तथा) अनभिमानतां दधत् जगति चिराय स्वस्य पृथग्जनतां कथयति ॥२॥

**टीका**—तदेव निर्गुणत्वं दर्शयितुमाह नेति । अयं हरिः न महान् सर्वोत्कृष्टः । सर्वं नाम सर्वं न प्रत्यक्षनिर्दिष्टे । कदाचिदन्येषां प्रधानानां गुणैः समः स्यात्तदापि पूज्यः । एतदपि नेत्याह—गुणसमतया गुणसाम्येन या प्रधानता विवक्षितत्वं तदपि न बिभर्त्ति । यतोऽन्येषां गुणैरसम इत्यर्थः । गुणोत्कर्षाद्धि प्राधान्यमाप्यते । कदाचित् महत् प्रधानं तु न भवेद् यावज्ज्ञोऽपि । न तत्स्यात् तदपि नेत्याह अनभिमानितां निरहङ्कारित्वं दधत्

रहितं कलाभिरखिलाभिरज्ञतरसभावसंविदम् ।
चैत्रविदमुपदिशन्ति जनाः पुरबाह्यमेनमगतं विदग्धताम् ॥३॥

---

स्वस्यात्मनः चिराय जगति पृथग्जनतां हीनत्वं कथयति प्राकृतोऽपि निरभिमानी भवति इति निन्दा ॥

स्तुतिस्तु—अयं न महान् महत्तत्त्वं न भवति । गुणानामुद्रेके साम्याभावे बुद्धेरेव महत्त्वम् । अथ गुणानां सत्त्वरजस्तमसां समतया या प्रधानता तामपि न बिभर्त्ति । प्रधानमप्ययं न भवतीत्यर्थः । अनुभूतविक्रियाणि प्रकृतिस्थानि सत्त्वरजस्तमांसि प्रधानशब्देनाहुः । तथानभिमानितामनहङ्कारितां दधत् स्वस्यात्मनः पृथग्जनतां जनव्यतिरिक्तत्वं कथयतीति वा । जनाः पञ्चतन्मात्राणि । पृथग्भूतो जनेभ्यः, पृथग् वा जनो यस्मात् स पृथग्जनः । तद्भावस्तत्ता तां कथयति । सर्वातीतत्वात्, तेनायं न महान्, न प्रधानम्, न भूतानि, न तन्मात्राणि, नाहङ्कार इति वाक्यार्थः । पञ्चविंशकोऽयं पुरुषः चतुर्विंशकवाच्य इति यावत् ॥२॥

বাঙ্গালা---এই কৃষ্ণ স্বভাবত উৎকৃষ্ট নহে, প্রধান লোকের সমান কোন গুণ না থাকায়ও প্রধান নহে এবং অভিমানশূন্য বলিয়া জগতে চিরকালই নিজের হীনতা প্রকাশ করিয়া থাকে ॥২॥

अन्वयः—जनाः एनम् अखिलाभिः कलाभिः रहितम् अज्ञतरसभावसंविदं पुरबाह्यं विदग्धताम् अगतं चैत्रविदम् उपदिशन्ति ॥३॥

टीका—भूयोऽपि निर्गुणत्वमाह रहितमिति । एनं हरिं चैत्रविदमुपदिशन्ति कर्षकमाहुः, अतएव पुरबाह्यं ग्राम्यम् । कार्षिका हि नगराद्बहिर्वसन्ति । यद्वा पुरस्य बाहनीयो बाह्यः पुरायत्तः । तथा सर्वाभिः कलाभिर्गीतवाद्यादिभिर्वर्जितम् । यतः अज्ञता रसानां शृङ्गारादीनां भावानां रत्यादिकानां च संवित् संकेतः संवचनं येन । विदग्धशास्त्राणां संकेतमपि यो न वेदेत्यर्थः । यतो विदग्धतां वैदग्ध्यमगतमप्राप्तम् इति निन्दा ।

स्तुतिस्तु—एनं भगवन्तं चैत्रज्ञमात्मानमामनन्ति चैत्रं शरीरम् । कीदृशम् । समशाभिः कलाभिरवयवै रहितं निष्कलम् । अज्ञातरसा अविदितरागा भावसंवित् पदार्थसंवेदनं यस्य । पुरुषो हि भावान् वेत्ति । न तु तत्र रसज्ञतां भजति । यद्वा अविद्यमानाः ज्ञातरसभावाः कर्म्मरागोत्पत्तयो यस्य स चासौ संवित् चिद्रूपः । पुरात् देहाद्बाह्यं विलक्षणम् । विदग्धतां विशेषेण दाह्यत्वमगतम् । यदाह "नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः" इति ॥३॥

বাঙ্গালা—লোকে এই কৃষ্ণকে সমস্তকলাবিদ্যা-বিহীন, রস ভাবজ্ঞানশূন্য, নগরের বাহিরে বাস করিবার উপযুক্ত এবং অচতুর কৃষক বলিয়া থাকে ॥৩॥

अतिभूयसापि सुकृतेन दुरुपचर एष शक्यते ।
भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः ॥४॥
व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ।
नित्यमपरिचितचित्ततया पर एव सर्वजगतस्तथाप्ययम् ॥५॥

---

अन्वयः—भक्तिशुचिभिः उपचारपरैः अभियोगिभिः अपि नृभिः अतिभूयसा अपि सुकृतेन दुरुपचरः एषः ग्रहीतुं न शक्यते ॥४॥

टीका—अतीति । अयमेवंविधैरपि नृभिर्ग्रहीतुमावर्जयितुं न शक्यते । कीदृशैः भक्त्या तत्त्वतः शुचिभिः शुद्धमतिभिरुपचारपरैराराधनपरैरभियोगिभिः एतन्मनोभिः । कथं तर्हि न शक्यते इत्याह यतोऽतिभूयसापि बहुतरेणापि सुकृतेनोपकारेण दुरुपचरो दुराराधः । अकृतज्ञोऽयमिति वाक्यार्थः । इति निन्दा ।

स्तुतिस्तु—एषोऽभियोगिभिराभिमुख्येन योगिभिरपि नृभिर्ग्रहीतुं परिच्छेत्तुं न शक्यते आत्मतत्त्वस्य दुर्ज्ञानत्वात् । कीदृगेषः अतिभूयसापि सुकृतेन यज्ञदानादिना दुरुपचरो दुराराधः भक्तिगम्यो हि भगवान् । कीदृशैर्नृभिः भक्त्या शुचिभिर्निर्मलीमसैः । कैश्चित्त्वमताशङ्कया नञ् काक्वा व्याचष्टे । नैष सुकृतेन दुरुपचरो योगिभिरपि न ग्रहीतुं शक्यते । परन्तु तैरेव ज्ञायत इत्यर्थः । यदुक्तं "नाहं वेदैर्न तपसा" इत्यादि ॥४॥

বাঙ্গালা—ভক্তির গুণে পবিত্র, আরাধনাপরায়ণ এবং প্রসন্ন করিবার জন্য মনোযোগী মনুষ্যেরাও, প্রচুর উপকার করিয়াও, ইহাকে প্রসন্ন করিতে পারে না, বা আয়ত্ত করিতে পারে না ॥৪॥

अन्वयः—अयम् अनुचितः अपि स्वतां व्रजति (तथा) जनैः अपरिचितचित्ततया नित्यं सविनयम् उपासितः तथापि सर्वजगतः परः एव ॥५॥

टीका—व्रजतीति । अयमनुचितोऽप्ययोग्योऽपि स्वतां जन्मना ज्ञातित्वं याति । अधमोऽपि शिशुपालस्याहं स्वजन इति वक्तीत्यर्थः । तथा जनैः सविनयं साचारं सेवितोऽपि परः शत्रुरेवायं त्रिभुवनस्य यद्ययमकृतज्ञः सेवितोऽपि शत्रुस्तत्कथं जनाः सेवन्त इत्याह अपरिचितचित्ततया चलचित्ततया अविश्वासहृदयत्वेन सर्वजगतः परमेवेति योज्यम् । इति निन्दा ।

स्तुतिस्तु—असौ स्वतामात्मत्वं व्रजति प्रतिपद्यते । चेतनोऽयमित्यर्थः । लोकप्रसिद्ध्या अत्र स्वशब्देन आत्मा उक्तः । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । सांख्या हि आत्मानं स्वामिशब्दवाच्यमाहुः । कीदृशोऽयम् अनुचितोऽप्यनभ्यस्तोऽप्यज्ञेयोऽपि सविनयम् एकाग्र्येण योगिभिरुपासितश्चिन्तितः । तस्मात् सर्वस्माज्जगतो व्यक्तात् परो विलक्षणः । कुतः । अपरिचितमसंगतं चित्तं मनो बुद्धिर्वा यस्य सोऽपरिचितचित्तः तद्भावस्तत्ता तया अन्यो हि आत्मा, अन्या च बुद्धिः, अन्यच्च चित्तं, जगच्चेदं प्राकृतो भागः ॥५॥

উপকারিণং নিরুপকারমনরিমরিমপ্রিয়ং প্রিয়ম্।
সাধুমিতরমবুধং বুধমিত্যবিশেষতঃ সততমেষ পশ্যতি ॥৬॥
উপকারকস্য দধতোঽপি বহুগুণতয়া প্রধানতাম্।
দুঃখমনিশমযমাশ্রবতো ন পরস্য কিঞ্চিদুপকর্ত্তুমিচ্ছতি ॥৭॥

---

বাঙ্গালা—এই কৃষ্ণ আত্মীয়তার অযোগ্য হইলেও আত্মীয় হইয়া দাঁড়ায় এবং লোকে ইহার মন জানে না বলিয়া সর্বদা নম্রতার সহিত ইহার অনুনয় করে; তথাপি এ, সমস্ত জগতের শত্রুই ॥৫॥

অন্বয়ঃ—এষঃ উপকারিণং নিরুপকারম্, অনরিম্ অরিম্, অপ্রিয়ং প্রিয়ম্, সাধুম্ ইতরম্, অবুধং বুধম্, সততম্ অবিশেষতঃ পশ্যতি ॥৬॥

টীকা—উপকারিণমিতি। অয়মুপকারিণমপকারিণঞ্চাবিশেষেণ পশ্যতি। অপকারিণমিবোপকারকমপ্যসৌ ত্বয়া দৃষ্ট্যা পশ্যতীত্যর্থঃ। ইত্যকৃতজ্ঞত্বকথনম্। এবমন্যত্র তথা অরিং শত্রুং ত্বনরিং মিত্রম্। নায়ং নিয়মো যস্মিন্নুপকার্য্যেব ভবতি। অনুপকারকস্য শত্রুরেব সম্ভবতি। অপ্রিয়ং দ্বেষ্যং প্রিয়ং মনোজ্ঞং। সাধুমার্য্যমিতরং খলম্। অবুধং মূর্খং বুধং পণ্ডিতম্। ইতি দুষ্কর্মনির্দ্দেশঃ। এষা নিন্দা।

স্তুতৌতু—নির্গুণত্বাৎ পুরুষস্য সমদৃষ্টিত্বম্ ॥৬॥

বাঙ্গালা—এই ব্যক্তি উপকারী ও অনুপকারীকে, অশত্রু ও শত্রুকে, অপ্রিয় ও প্রিয়কে, সাধু ও অসাধুকে এবং মূর্খ ও পণ্ডিতকে সর্বদা এক রকমই দেখে ॥৬॥

অন্বয়ঃ—অয়ং বহুগুণতয়া প্রধানতা দধতঃ উপকারকস্য অনিশং দুঃখম্ আশ্রবতঃ অপি পরস্য কিঞ্চিৎ উপকর্ত্তুং ন ইচ্ছতি ॥৭॥

টীকা—উপকারকস্যেতি। অয়ং পরস্য অন্যস্য কিঞ্চিদপি মনাগপি নোপকর্ত্তুমিচ্ছতি। উপকারকরণে বুদ্ধিরেবাস্য ন ভবতীত্যর্থঃ। কদাচিৎ পরোঽনুপকারী স্যাদিত্যাহ উপকারকস্যাপি অতএব তদর্থং অনিশং দুঃখং ক্লেশমাশ্রবতঃ প্রাপ্নস্য। কদাচিদমুখ্যঃ পরঃ স্যাত্তৎপ্রত্যুপকারিত্বেন লজ্জাদোষো ভবেদিত্যাহ বহুগুণতয়া শৌর্য্যৌদার্য্যাদিসদ্ভাবেন প্রধানতাং মুখ্যত্বং দধতো বিভ্রতঃ। তদেতেন পূর্বোক্তার্থো দৃঢ়ীকৃতঃ। ইতি নিন্দা।

স্তুতিস্তু—অয়ং পরস্য বুদ্ধিতত্ত্বস্য প্রধানসংজ্ঞকস্য কিঞ্চিদপি নোপচিকীর্ষতি। দ্রষ্টা হি পুরুষো ন সক্রিয়ঃ। কীদৃশস্য পুরুষপ্রবৃত্তিদ্বারৈবোপকারকস্য, বহুবস্তুষ্বপি যে গুণাস্তদ্ভাবেন প্রধানতাং প্রকৃতিত্বং দধতঃ। সত্ত্বরজস্তমাংসি প্রধানম্। তথা দুঃখং জননমরণাদিকং সদা প্রাপ্নস্য। সর্বং হি বুদ্ধিরনুভবতি ন পুরুষঃ ॥৭॥

বাঙ্গালা—যে লোক নিজের বহুগুণে প্রধান হইয়াছে, ইহার উপকার করিতেছে এবং ইহার জন্যই সর্বদা দুঃখ ভোগ করিতেছে, সে লোকেরও একটু উপকার এ ব্যক্তি করিতে ইচ্ছা করে না ॥৭॥

स्वयमक्रियः कुटिलमेष तृणमपि विधातुमक्षमः ।
भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्म्मणः ॥८॥
य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम् ।
तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमीयुषः ॥९॥
गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ।
याति सुचिरमतिबालतया धृतिमैक एव परिवारितो जनैः ॥१०॥

---

अन्वयः—अक्रियः स्वयं तृणम् अपि कुटिलं विधातुम् अक्षमः एषः अलज्जतया अविरतं परकृतस्य कर्म्मणः फलं भोक्तुम् ईहते ॥८॥

टीका—स्वयमित्यादि। एष देवः परकृतस्यान्यनिष्पादितस्य कर्म्मणः फलं भोक्तुमीहते वाञ्छति। कथं अलज्जतया निस्त्रपत्वेन। कदाचिदैश्वर्य्यादेवं स्यादित्याह आत्मना तृणमपि कुटिलं कर्त्तुमक्षमोऽसमर्थोऽनीशः। यतोऽक्रियोऽलसः। अशक्तत्या स्वयं निष्क्रियः पराधीनोऽन्यदत्तेन पिण्डेन जीवति। इति निन्दा।

अथच वाक्यार्थपर्य्यालोचनया स्तुतिः—एष भगवान् परजनितस्य बुद्धिकृतस्य कर्म्मणः शुभाशुभस्य फलं सुखदुःखात्मकं भोक्तुम् ईहते। आत्मा हि फलभागीति सांख्याः। कीदृशोऽप इति पुरुषस्य स्वरूपमाह स्वयमक्रियो निष्कर्म्मा। तथा तृणमपि कुटिलं कर्त्तुमनीशः। निर्लज्जत्वं निर्गुणत्वात् ॥८॥

বাঙ্গালা—এই কৃষ্ণ অক্রিয় অর্থাৎ অলস; তাই নিজে একগাছি তৃণও বাকা করিতে পারে না; অথ চ নির্লজ্জ বলিয়া সর্বদাই পরকৃত কার্য্যের ফল ভোগ করিতে চেষ্টা করে ॥৮॥

अन्वयः—यः कश्चित् उदयविपदोः निराकुलम् इमं समाश्रयति, विकरणत्वम् ईयुषः तस्य इह जगति कुतः पुनः उद्भवः भवति ॥९॥

टीका—य इति। यः कश्चिन्मूर्खं इमं कृष्णं समाश्रयति सेवते। तस्यास्मिन् संसारे कुतः पुनरुद्भवो भवति। नैव समुत्थानं भवतीत्यर्थः। य एनमुदये विपदि च निराकुलं निश्चिन्तमाश्रितस्य यदि सम्पत्ततोऽस्य नैव सुखं, यदि वा विपत्ततो नैव दुःखमित्यर्थः। तस्य कीदृशस्य विकरणत्वं व्यतिमीयुषः प्राप्तस्य। एतदाश्रयणात् स हृत एव। व्यसनी वैकल्यं वा विकरणत्वं। इति निन्दा।

स्तुतिस्तु—यः कश्चिद्योगी एनं परमात्मानं सेवते विकरणत्वमीयुषो नष्टदेहस्य पुनरिह कुत उद्भवो जन्म। मुक्त एवासावित्यर्थः। कीदृशं सम्पुदयविपदोर्निराकुलमव्यग्रम् अक्रियत्वात्। करणानीन्द्रियाणि। ईयुष इत्यभङ्पूर्वस्यायः क्वसुः। "उपेयिवान्" इत्यत्र हि उपसर्गं निर्दिश्योऽतन्त्रम् ॥९॥

বাঙ্গালা—এই কৃষ্ণ সম্পৎ বা বিপদে ব্যস্ত হয় না; কিন্তু যে কোন ব্যক্তি ইহাকে আশ্রয় করে, সে বিকল হইয়া পড়ে; সুতরাং এই জগতে সেই ব্যক্তির উন্নতি হইবে কোথা হইতে? ॥৯॥

सुकृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ।
सर्वजनविहितनिर्विदयं सकृदेव दर्शनमुपैति कस्यचित् ॥११॥

---

**अन्वयः**—अयम् अतिबालतया अखिलं गुणवन्तम् अपि जनम् अपास्य, अव्यवस्थितैः जडैः परिवारितः (सन्) एकः एव सुचिरं धृतिम् एति ॥१०॥

**टीका**—गुणवन्तमिति । अयं सर्वमेव गुणिनं जनम् अतिबालतयातिचापल्येन हित्वा अव्यवस्थितैश्चपलैर्जडैर्मूर्खैः परिवारितः सन्नजस्रमेक एव धृतिमेति प्रीयते । एतद्वज्जं नान्यो नाकलोकमपास्य गोपमध्ये रमते । इति निन्दा ।

स्तुतिस्तु—एष भगवान् बालतया बालरूपो भवन् जलैरद्भिः परिवारितः आद्यतः सुचिरं धृतिमेति । उक्तञ्च—"संहृत्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ।" कीदृशैर्जलैर्व्यवस्थितैर्भरितसकलभुवनैः । किं कृत्वा धृतिं याति गुणवन्तं सत्त्वाद्याश्रयं जनम् अपास्य हित्वा विनाश्य । सर्वं जनं संहृत्य बालरूपधरो जलमध्ये अयं शेते ॥१०॥

**বাঙ্গালা**—এই কৃষ্ণ, অতিমূর্খতাবশতঃ সমস্ত গুণবান্ লোককেও পরিত্যাগ করিয়া, অব্যবস্থিতচিত্ত মূর্খলোক কর্ত্তৃক পরিবেষ্টিত হইয়া, কেবল একাকীই দীর্ঘকাল যাবৎ শান্তিসুখ অনুভব করে ॥১০॥

**अन्वयः**—सर्वजनविहितनिर्वित् अयं बहुदिवसखिन्नचेतसः सुकृतः अपि कस्यचित् सेवकजनस्य सकृत् एव दर्शनम् उपैति ॥११॥

**टीका**—सुकृत इति । अयं सुकृतोऽपि उपकारकस्याप्याश्रितजनस्य सकृदेकवारमेव दर्शनमुपैति दर्शनं ददाति कस्यचित् न सर्वस्य, किम्भूतः सर्वजनविहितनिर्वित् सर्वजनस्य विहिता निर्वित् खेदो येन, कीदृशस्य जनस्य बहुदिवसखिन्नचेतसः बहुभिर्दिवसैः खिन्नं चेतो यस्य तस्य चिरकालसेवोद्विग्नचित्तस्येत्यर्थः । इति निन्दा ।

स्तुतिस्तु—अयं कस्यचिदेव सेवकजनस्य सकृदेव दर्शनमुपैति । नहि चेतसः सर्वस्य सदैव । कीदृशस्य सुकृतः पुण्यकृतः, तथा बहुभिर्दिवसैर्भूयसा कालेन खिन्नचेतसः क्षुब्धमनसः । दीर्घेण योगेन श्रान्तचेतस इत्यर्थः । नह्यनभ्यासगम्य ईश्वरः । अतएव सर्वजनविहितनिर्वेदः, श्रेयस्यपि चिरकालमभ्यसनी निर्विद्यते । यदिवा सर्वेषु जनेषु विगतो हितनिर्वेदो यस्य स सर्वजनविहितनिर्विद् । नास्य कश्चित् प्रियो न च द्वेष्य इत्यर्थः । यदि वा सर्वे जना यत्र स सर्वजनः । विगते हितनिर्विदौ सुखदुःखे यस्य स विहितनिर्वित् । ततः कर्म्मधारयः । सर्वजनस्य विहिता निर्वित् निर्वाणो येनेत्यन्ये । आश्रितजनं संसारान्मोचयतीत्यर्थः । शमनं करोति सुकृदुपकारी, पुण्यकृच्च । निर्विन्निर्वेदो निर्वाणं च ॥११॥

**বাঙ্গালা**—এই কৃষ্ণটা সকল লোককেই কষ্ট দিয়া থাকে এবং যে সকল সেবক লোক,

स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि ।
स्नेहमस्मृदुहृदयः क्षपयन्निरपेक्ष एव समुपैति निर्वृतिम् ॥१२॥
क्षणमेष राजसतयैव जगदुदयदर्शितात्मकः ।
सत्वहितकृतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥१३॥

---

বহুদিন ধরিয়া ইহার জন্যই দুঃখিতচিত্ত হইয়া, ইহার উপকার করিয়া আসিতেছে, তাহাদের মধ্যে কোন লোককেই এ, একবার মাত্র দর্শন দিয়া থাকে ॥১১॥

**अन्वयः**—अमृदुहृदयः निरपेक्षः एषः स्वजने सखिषु अनुगतेषु अनुरागवत्सु अपि (जनेषु) स्नेहं क्षपयन् नियतं निर्वृतिं समुपैति ॥१२॥

**टीका**—स्वजन इति । एष बन्धुमित्राश्रितेषु प्रीतिं नाशयन्निर्वृतिं सदा समुपैति सुखं प्राप्नोति । सर्वत्रैव वैरायमाणः सुखायत इत्यर्थः । कदाचिदेते विरक्ताः स्युरित्याह अनुरक्तेष्वपि कथं तर्हि निःस्नेह इत्याह यतो हृदयेऽमृदुः क्रूरचित्तः । तथा निरपेक्षो निर्विवेक इति निन्दा ।

**स्तुतिस्तु**—एष स्वजनादिषु अनुरागवत्स्वपि स्नेहं क्षपयंस्तृष्णां तनूकुर्वन्निर्वृतिं समुपैति निर्वाणं याति । तृष्णाक्षयात् किल मुक्तिः । अमृदुहृदयः नार्द्रभावो वीतरागत्वात्, यदि वा अमृदु दुर्बोधं हृदयं स्वरूपं यस्य । निरपेक्षो निःसङ्गः क्षपिर्धातुष्वपठितोऽपि क्रियावाचित्वात् स्वचिमिलीकस्यार्थत्वादिकवद्धातुरेव ॥१२॥

**বাঙ্গালা**—এই ক্রূরচিত্ত ও নিঃসংস্রব কৃষ্ণ আত্মীয় বন্ধু, অনুগত ও অনুরক্ত লোকদিগের উপরের স্নেহও, নষ্ট করিয়া, কেবল নিজেই সর্বদা শান্তিসুখ ভোগ করে ॥১২॥

**अन्वयः**—एषः राजसतया एव क्षणं जगदुदयदर्शितात्मकः, तु सहसा तमसा आवृतः अहितकृतमतिः [सन्] सर्वं सत् विनाशयति ॥१३॥

**टीका**—क्षणमिति । एष राजसतया चापलेन क्षणं जगदुदये लोकहिते दर्शितात्मकः दर्शितोद्यम इति क्रिया । राजसिकत्वेन क्षणमुपकुरुते इत्यर्थः । तमसा तु मोहेन पुनरनन्तरमावृतत्वादहितकृतमतिरुपद्रवविहितबुद्धिः सन् सहसैव सर्वं सत् सुकृतं विनाशयति । यदेव पूर्वमुपकृतं तदेव मोहयन्नाशयतीत्यर्थः । सत् सुकृतं । तु भिन्नक्रमः । इति गर्हा ।

**नुतिरपि**—एष त्रिमूर्त्तिः राजसतया रजोगुणेनाश्रितः सन् ब्रह्मरूपेण जगदुदये प्रजासर्गं दर्शितोद्यमः । तथा सत्त्वेन गुणेन हिते रक्षायां विहितचित्तो विष्णुरूपेण । तथा तमसा गुणेनावृतः सन् सहसैव सर्वं व्यक्तं रुद्ररूपेण नाशयति ॥१३॥

**বাঙ্গালা**—এই কৃষ্ণ, রজোগুণের প্রভাবে ক্ষণকালমাত্র লোকের উন্নতির দিকে উদ্‌যোগ দেখায় ; কিন্তু তৎক্ষণাৎ আবার তমোগুণে অভিভূত হইয়া, তাহার অনিষ্ট করিবার ইচ্ছা করিয়া, সেই সমস্ত সৎকার্য্যগুলি নষ্ট করিয়া ফেলে ॥১৩॥

अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते।
नास्य भवति वचनीयमिदं चपलात्मिका प्रकृतिरेव हीदृशी ॥१४॥
अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते।
सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्त्वसङ्करम् ॥१५॥

---

अन्वयः—[अन्येन एषः] यत् अभिहन्यते, एषः अन्यं यत् अभिहन्ति ; [एषः अन्यं] यत् परितपति, (अन्येन एषः) यत् च तप्यते ; इदम् अस्य वचनीयं न भवति। चपलात्मिका प्रकृतिः एव हि ईदृशी ॥१४॥

टीका—अभीति। यदेष हरिरन्येनाभिहन्यते ताड्यते यच्चैषोऽन्यानभिहन्ति। तथा यत् परितपति बाधते यच्च तप्यते उपसृज्यते अतोऽस्य वचनीयता वाच्यता भवति। यतोऽस्यैवंविधैव चपलात्मिका अविनीता प्रकृतिः स्वभावः। स्वभावाच्चपलस्त्वयोग्यतामर्हति। इति क्षेपः।

स्तुतिस्तु—अस्य परमात्मनो यथोक्तं वचनीयं वचनं न भवति न प्रवर्त्तते। एष हन्ति हन्यते तपति परितप्यते च' न वाच्यमित्यर्थः। यत ईदृशी चपलात्मिकाऽनेकरूपा प्रकृतिर्बुद्धिः। नान्येषः। हननादिकं तमसा भवति। पुरुषस्य निर्गुणत्वादित्यर्थः। उक्तं च 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति। 'तस्मान्न बुध्यतेऽसौ न मुच्यतेऽसौ नापि संसरति। संसरति बुध्यते मुच्यते च नानाश्रया प्रकृतिः।' तपिः सकर्म्मकोऽपि। शरीरं दुःखमभिघातः। मानसं तु परितापः ॥१४॥

বাঙ্গালা—অন্য লোক যে ইহাকে মারে, কিম্বা এ অন্যলোককে যে মারে; আর এ অন্য লোককে যে কষ্ট দেয়, কিম্বা অন্য লোক ইহাকে যে কষ্ট দেয়; এঘটনা ইহার পক্ষে নিন্দনীয় হয় না। কেন না, চঞ্চল স্বভাবই এই প্রকার ॥১৪॥

अन्वयः—सूक्ष्ममतिभिः पुंभिः 'अयम् अतिसत्त्वयुक्तः' इति अतिशयेन वर्ण्यते ; अथ [ शत्रौ ] चापगते अयम् अल्पम् अपि सत्त्वसङ्करं न समुपैति ॥१५॥

टीका—अतीति। एष सूक्ष्ममतिभिः स्वल्पप्रज्ञैरभिमानिभिः सत्त्वेन धैर्य्येण युक्त इति सुष्ठु वर्ण्यते। अथानन्तरं चापगते प्राप्तचापे गृहीतधनुषि कस्मिंश्चित् स्वल्पमपि सत्त्वसंकरं पौरुषलेशं न भजति पलायनादिना। परैर्योत्सव्यस्यास्य सत्त्वलेशोऽपि न लभ्यत इत्यर्थः। तस्मादयुक्तं च तं वर्ण्यते इति भावः। इति निन्दा।

स्तुतिस्तु—चापं गतश्चापगतः। यद्वा चापस्य गतं प्राप्तिश्चापगतं तस्मिंश्चापगते धनुःसन्निधाने सतीत्यर्थः। अथ च सबीजनिर्बीजसमाधौ पुंभिर्योगिभिः 'सत्त्वेन गुणेन युक्त' इति कथ्यते। सूक्ष्ममतिभिः कुशाग्रीयबुद्धिभिर्वर्हुडस्य सिरपगते ज्ञाते सति निर्बीजसमाधौ स्वल्पमपि सत्त्वसंकरं नोपैति। निर्गुणो हि पुरुषः। अथ चेति विजये ॥१५॥

प्रलयं परस्य महतोऽपि नियतमिह निःसुखे गुणाः ।
यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान् द्विषन्नयम् ॥१६॥
क्षितिपीठमम्भसि निमग्नमुदहरत यः परः पुमान् ।
एष किल स इति कैरबुधैरभिधीयमानमपि तत् प्रतीयते ॥१७॥

---

বাঙ্গালা—ক্ষুদ্রবুদ্ধি লোকেরা ইহাকে অতিবলবান্ বলিয়া খুব বর্ণনা করে; কিন্তু শত্রু আসিয়া ধনু ধারণ করিলে, এ—অল্পমাত্রও বল পায় না (দেখাইতে পারে না) ॥১৫॥

অন্বয়:—মহতঃ অপি পরস্য গুণাঃ নিঃসুখে ইহ নিয়তং প্রলয়ং যান্তি; তথা গুণান্ দ্বিষন্ অয়ং স্বরুচা এব অদঃ জগৎ অপি সদোষং পশ্যতি ॥১৬॥

টীকা—প্রলয়মিতি। পরস্যান্যস্য মহতোঽপি সুখ্যস্যাপীহ কৃষ্ণে গুণাঃ সৌন্দর্য্যাদয়ো নিয়তমবশ্যং প্রলয়ং যান্তি নশ্যন্তি। নৈষ কস্যচিদ্ গুণানঙ্গীকরোতীত্যর্থঃ। অবিদ্যমানং সুখমস্মাদিতি নিঃসুখঃ। গুণাপহারাদ্ধি কুতঃ সুখম্। যদ্বা অবিদ্যমানং সুখমস্যাদিতি নিঃসুখঃ। অতএব তে নাশমেব যান্তি। অতস্থায়ং গুণান্ দ্বিষন্নখিলমপ্যেতজ্জগদিদং স্বরুচ্যৈবালোক্যৈব সদোষং পশ্যতি। গুণদ্বেষিত্বাদন্যানপি সদোষান্বেতীত্যর্থঃ। ইতি নিন্দা।

অথ স্তুতিঃ—ইহ পরমাত্মনি কৃষ্ণে পরস্য বুদ্ধিতত্ত্বস্য মহতোঽপি মহত্তত্ত্বস্য গুণাঃ সত্ত্বরজস্তমাংসি প্রলয়ং যান্তি নাশং গচ্ছন্তি। পুরুষং প্রাপ্য নিবর্ত্তন্ত ইত্যর্থঃ। কীদৃশেঽত্র নিঃসুখে সুখবর্জ্জিতে। অবিক্রিয়ত্বাৎ। সুখাসুখেনাত্মনঃ তথৈষ গুণান্ সত্ত্বাদীন্দ্বিষন্ননভিনন্দনস্বপ্রবদো জগৎপ্রকৃতিং সদোষং ক্লেশযুক্তং পশ্যতীত্যর্থঃ। দ্রষ্টা হি পুরুষঃ প্রকৃতের্বিশ্বতো জগৎপ্রকৃতির্হিংসাগো ব্যক্তম্। তচ্চ সদোষং জননমরণযোগাৎ। কেন পশ্যতি স্বরুচা আত্মভাবেনেত্যর্থঃ ॥১৬॥

বাঙ্গালা—এই কৃষ্ণটার কোন সুখ নাই এবং ইহার নিকট প্রধান লোকের গুণগুলিও লয় প্রাপ্ত হয় (কৃষ্ণ গুণগ্রাহী নহে) আর গুণদ্বেষী এই কৃষ্ণ, নিজের রুচি অনুসারেই এই জগৎটাকেও দূষিত বলিয়াই জানে ॥১৬॥

অন্বয়:—যঃ পরঃ পুমান্ অম্ভসি নিমগ্নং ক্ষিতিপীঠম্ উদহরত, এষঃ কিল সঃ ইতি অভিধীয়মানং যদি ভবতি তদা অবুধৈঃ অপি কৈঃ তৎ প্রতীয়তে ॥১৭॥

টীকা—এবং সাংখ্যদর্শনেন স্তুত্বা অধুনা পুরাণদর্শনেন তুষ্টুষুর্নিন্দিষুশ্চাহ—ক্ষিতীতি। কৈরবুধৈর্মূর্খৈরিতি তদভিধীয়মানমপ্যুচ্যমানমপি প্রতীয়তে, মূর্খ এব সত্যমবগচ্ছতীত্যর্থঃ। ইতীতি কিম্। স এষ পরমপুরুষঃ। যো বরাহরূপেণাম্ভসি নিমগ্নং ক্ষিতিপীঠং পৃথ্বীমণ্ডলমুদহরতোদ্ধৃতবান্। ইতি নিন্দা।

স্তুতিস্তু—কৈশ্চিদভিধীয়মানং তৎ মূর্খৈরপি প্রতীয়তে। মূর্খা অপি সত্যমবগচ্ছন্তীত্যর্থঃ ॥১৭॥

नरसिंहमूर्त्तिरयमेव दितिसुतमदारयन्नखैः ।
आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥१८॥
अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् ।
स्वार्थकरणपटुरेष पुरा बलिना परेण सह सम्प्रयुज्यते ॥१९॥

---

বাঙ্গালা—যে পরমপুরুষ, জলনিমগ্ন পৃথিবীমণ্ডলকে উত্তোলন করিয়াছিলেন, ইনিই সেই পরমপুরুষ; একথা যদি বলা হয়, তবে তাহা কোন্ নির্বোধ লোকেও বিশ্বাস করে ? ॥১৭॥

अन्वयः—'अयम् एव नरसिंहमूर्त्तिः (सन्) नखैः दितिसुतम् अदारयत्' एतत् आप्तवचनम् अपि अयं जनः 'ओम्' इति प्रतिपत्तुम् अर्हति ॥१८॥

टीका—नरसिंहेति । नृसिंहवपुः सन्नयमेव नखैर्हिरण्यकशिपुमदारयदिति यदाप्तवचनं तदप्ययं भीष्मादिक एव जन ओमित्येवमेवैतदिति प्रतिपत्तुमङ्गीकर्त्तुमर्हति । सुहृद एवैनं स्तुवन्ति; तच्च मूर्खैरेव सत्यं बुध्यत इत्यर्थः । इतिशब्दोऽत्रार्थयोः सम्बन्धोपादानायाध्याहार्य्यः ।

स्तुतौ त्वयमर्थः—अयमेव भगवान्नापरो नरसिंहमूर्त्तिमाश्रित्य नखैर्दैत्येन्द्रमदारयदित्येतदप्याप्तवचनं शिष्टवाक्यम् अयं मनीषी जनः प्रतिपत्तुमर्हति नान्यः । आप्तोक्तत्वात् पण्डिता एव सत्यं जानन्तीत्यर्थः । आप्ता अवितथवादिनो व्यासादयः ॥१८॥

বাঙ্গালা—'ইনিই নরসিংহমূর্ত্তি হইয়া নখদ্বারা হিরণ্যকশিপুকে বিদারণ করিয়াছিলেন' ইহা বিশ্বস্ত লোকের (বেদব্যাসের) উক্তি হইলেও, এই লোকটাই (নির্বোধ ভীষ্মই) তাহা 'হাঁ' বলিয়া স্বীকার করিতে পারে ॥১৮॥

अन्वयः—स्वार्थकरणपटुः एषः पुरा उचितं तुङ्गम् अपि मानम् अपहाय नीचताम् अवलम्ब्य बलिना परेण सह सम्प्रयुज्यते ॥१९॥

टीका—अपहायेति । एष बलिना बलवता परेणान्येनारिणा वा सह पुरा अचिरात् संप्रयुज्यते संबध्यते । समर्थं चेत् परं वेत्ति तन्नयात्तमेव प्रविशतीत्यर्थः । सर्वनाम निर्देशः सर्वत्र निन्दायामनास्थां सूचयति । स्तुतौ तु गौरवम् । किं कृत्वा उचितं योग्यं तुङ्गमुन्नतं मानमप्यपहाय अहङ्कारमपि त्यक्त्वा । तथा नीचतां प्राकृतत्वमाश्रित्य । यतः स्वार्थकरणपटुरात्मप्रयोजनसम्पादनचतुरः । शक्तिः किलात्मनो नाशाय । इति निन्दा ।

स्तुतिस्तु—एष तुङ्गं मानं प्रमाणं हित्वा नीचतां खर्वत्वमवलम्ब्य । पुरा पूर्वं कृतकृष्टेन बलिना वैरोचनिना सह संप्रयुज्यते सम्प्रयुयुजे । यतः स्वस्य ज्ञातेरिन्द्रस्य योऽर्थः प्राप्तवशीकरणलक्षणस्तत्र पटुः कुशलः । इन्द्रप्रीतये वामनरूपत्वमवलम्ब्यैष भगवान् बलिं बबन्धेत्यर्थः ॥१९॥

क्रमते नभो रभसयैव विरचयति विश्वरूपताम् ।
सर्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥२०॥
किल रावणारिरयमेव किमिदमियदेव कथ्यते ।
सत्त्वमतिबलमभिद्युति यत्तदशेषमेष इति धृष्टमुच्यताम् ॥२१॥

---

বাঙ্গালা—স্বার্থসাধনপটু এই কৃষ্ণ, পূর্বে উপযুক্ত উচ্চ সম্মানও পরিত্যাগ করিয়া এবং নীচতা অবলম্বন করিয়া, বলবান্ শক্রর সহিত (অবনতভাবে) সম্মিলিত হইয়াছে ॥১৯॥

अन्वयः—एषः रभसया मायया एव नभः क्रमते, विश्वरूपतां विरचयति, अतिशयगतम् इदं सर्वम् इन्द्रजालं कुरुते स्फुटम् ॥२०॥

टीका—क्रमत इति । एष कृष्णः स्फुटमिन्द्रजालमसद्भूतं मायया हेतुभूतया कुरुते । किमित्याह रभसया रभसेन युद्धादौ नभः क्रमते आरोहति । वयः पक्षिणः, श्वानः कुक्कुराः, तद्रूपा मृगाः, तद्भावं विरचयति । यद्वा विश्वरूपतां नानारूपत्वम् । तथा सर्वमतिशयगतं विशेषमात्रं कुरुते । तात्त्विकोऽस्य व्यवहारो न कश्चित् । इति निन्दा ।

स्तुतिस्तु—इदमीदृक् स्फुटमेष भगवान्मायया स्वेच्छया इन्द्रजालं कुरुते । इन्द्रजालमिवेन्द्रजालं चमत्कारित्वात् । तदेवाह नभः क्रमते बलिबन्धनार्थं विश्वरूपत्वं सर्वदेवमयत्वं विरचयति । सर्वं च जगदतिशयगतं प्राप्तविशेषं कुरुते । कीदृश्या मायया रभसमौत्सुक्यं करोतीति रभसा तया रभसया । क्रमत इति "अनुपसर्गाद्वा" इत्यात्मनेपदम् ॥२०॥

বাঙ্গালা—এই কৃষ্ণটা তীব্র মায়া দ্বারাই আকাশে উঠে এবং বিশ্বরূপ প্রকাশ করে; স্পষ্টতই বুঝা যায় যে, এই সকল অতিরিক্তমাত্রায় ইন্দ্রজাল করে ॥২০॥

अन्वयः—अयम् एव रावणारिः किल, इदम् इयत् एव किं कथ्यते; अतिबलम् अभिद्युति यत् सत्त्वम्, एषः तत् अशेषम् इति धृष्टम् उच्यताम् ॥२१॥

टीका—किलेति । अयं हरी रावणारिरिति । एतेन दशास्यो हत इति यद्येवं तत् स्वल्पमानकं किमिति कस्मादुच्यते । अतिबलं महाशक्ति अभिद्युति महातेजश्च यत् सत्त्वं प्राणी तत् सर्वमेष एवेति धृष्टं निःशङ्कमुच्यताम् । न ह्यलीकवान्तो भवतीति भावः । अतश्च येनासत्यं वाच्यं स बह्वेव कस्मान्नाह । तस्मान्नैतेन किञ्चिदपि कृतमिति वाक्यार्थः । इति निन्दा ।

स्तुतिस्तु—अयं रावणारिरेवेति किमेतावदेवोच्यते । यस्माद्यदतिबलमभिद्युति च सत्त्वं तत् सर्वमेष इति धृष्टं निःशङ्कमुच्यताम् । उक्तं च 'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ।' किलागमे ॥२१॥

বাঙ্গালা—(হে ভীষ্ম!) এই কৃষ্ণই রাবণহন্তা রাম, ইহা এইটুকুমাত্র বলিলে কেন? ইহাই প্রগল্‌ভভাবে (বড় গলায়) বল যে, জগতে যে কিছু বস্তু অতিশয় বলবান্ ও অত্যন্ত তেজীয়ান্, সে সমস্তই এই কৃষ্ণ ॥২১॥

चलतैष पादयुगलेन गुरुशकटमीषदस्पृशत्।
दैवकलितमथचोदलसद्दलितोरुभाण्डचयमात्मनैव तत् ॥२२॥
स्नुवताऽमुना स्तनयुगेन जनितजननीजनादरा।
स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघाति पूतना ॥२३॥
अभनक् तरू कथमिवैष कृतधरणिरिङ्गणः क्षणात्।
बाढ़मिदमपि न बालकृतं ननु दैवताविधिरयं विजृम्भते ॥२४॥

---

अन्वयः—एषः चलता पादयुगलेन गुरु शकटम् ईषत् अस्पृशत्, अथ च आत्मना एव दलितोरु-भाण्डचयं तत् दैवकलितं (सत्) उदलसत् ॥२२॥

टीका—यस्य दाल्ये शकटमेष एव भिनत्तीत्युच्यते तदप्यसत्यमिति वक्तुमाह चलतेति। एष वै चञ्चलाभ्यां चरणाभ्यां गुरु शकटं किञ्चिदस्प्राक्षीत्। तच्च दैवकलितं दैवचोदितं स्वयमेवोदलसदपप्तत्। न त्वेतस्मात् किञ्चित्पौरुषम्। दलितः स्फुटित उरुर्महान् भाण्डानां दधिघृतघटादीनां चयो राशिर्यत्र। इति निन्दा।

स्तुतिस्तु—एष भगवांश्चलता पादयुगलेन गुरु शकटमीषदेवास्पृशत्। अथ चोदलसत् परिवृत्तम्। यत् एतेन दैवेन भगवता कलितं प्रेरितम्। अधेति विस्मये। ईषत् स्पर्श-मात्रात् किल भङ्गो न युक्तः। शकटशब्दोऽस्त्रीलिङ्गः ॥२२॥

বাঙ্গালা—এই কৃষ্ণ চঞ্চল চরণযুগল দ্বারা বৃহৎ শকটখানাকে একটুমাত্র স্পর্শ করিয়াছিল; তাহার পর, ঈশ্বরের ইচ্ছায় সে শকটখানা নিজেই উল্‌টিয়া পড়িয়াছিল; তাহাতে দধি ও ঘৃতপ্রভৃতির ভাণ্ড সকল ভাঙ্গিয়া গিয়াছিল ॥২২॥

अन्वयः—अमुना स्नुवता स्तनयुगेन जनितजननीजनादरा पूतना मनः स्त्री इति सदयम् अविधाय यत् अघाति, तत् साधु अकारि ॥२३॥

टीका—स्नुवतेति। अमुना यत् पूतना राक्षसी स्त्री इति सदयं मनः अकृत्वा अघाति हता तत् साध्वकारि युक्तं कृतमिति काक्वा प्रयोजनेनैव साधुकृतमित्यर्थः। कीदृशी सा। स्नुवता क्षीरं स्रवता स्तनयुगेन कृतो जननीजनादरो मातृस्नेहो यया। अतश्च मातृघात्येवायम्। इति निन्दा।

स्तुतिस्तु—यदमुना स्नुवता स्तनयुगेन कृतमातृस्नेहापि पूतना राक्षसी स्त्रीति मनः सदयमकृत्वा हता तत्साध्वकारि युक्तमेवानुष्ठितमिति स्पष्ट एवार्थः। सा हि राक्षसी स्तनाभ्यां क्षीरं स्रवन्ती तन्मारणार्थमेवागमदित्यागमार्थः। निष्कारणवधोद्यतस्य वधे कथम-धर्म्मः स्यात् ॥२३॥

বাঙ্গালা—দুগ্ধস্রাবী স্তনযুগল দ্বারা জননীর স্নেহ দেখাইতে থাকিয়া পূতনারাক্ষসী, আসিয়াছিল; এই কৃষ্ণ তখন স্ত্রী বলিয়া মনকে দয়ার্দ্র না করিয়া, তাহাকে যে বধ করিয়া-ছিল; তাহা ভালই করিয়াছিল ॥২৩॥

विहरन् वने विजन एव महति दधदेष गोपताम् ।
नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥२५॥
अविमृश्य गोवधसमुत्थमयमघमसौमरद्रुषा ।
रिष्टमुपशु समुपोढ़मदं यदसौ किलासुर इति प्रमार्ष्टि तत् ॥२६॥

---

**अन्वयः**— कृतधराधिरिङ्गणः एषः कथम् इव क्षणात् तरू अभनक् । बाढ़म् इदम् अपि न बाल-कृतम्, (अपितु) अयं दैवताविधिः ननु विजृम्भते ॥२४॥

**टीका**—अभनगिति । कृतधराधिरिङ्गणो विहितोर्वीगतिः स कथमिव केन प्रकारेण क्षणेनैव तरू अर्ज्जुनाख्यौ बाढ़ं भृशमभनग्बभञ्ज । न सम्भावयाम एतदित्यर्थः । ननु सर्वत्रैव तेनैव भिन्नाविति प्रतीतिः तत्कथं भवतो न सम्भावना इत्याह इदमपि न बाल-कृतं न शिशुकर्म्म । ननु दैवताविधिरयं विजृम्भते विलसति । केनाप्यदृष्टेन दैवेन तत्कृतं नत्वनेन यस्य हि गमनमात्रे न शक्तिः स कथममानुषं कर्म्म कुर्य्यादिति भावः । ननु अमर्षे, न केवलं शकटभङ्गो दैवताविधिर्यावदयमपीत्यपिशब्दार्थः । इति निन्दा ।

स्तुतिस्तु—यदेष कृतधराधिरिङ्गणः कथमिवावलीलयैव क्षणादर्ज्जुनौ बभञ्ज इदमपि न बालकृतं । नन्वयं दैवताविधिर्विजृम्भते । एतस्य दैवरूपत्वं दैवत्वमाश्रित्यैतदेतेन कृतम् । नतु तत्त्वतो बालेनेत्यर्थः । नत्वराशिमुख्ये । अभनगिति भञ्जेर्लुङि रूपम् ॥२४॥

**বাঙ্গালা**—এই কৃষ্ণ যখন মাটীতে হামাগুড়ি দিয়া বেড়াইত, তখন এ, কি করিয়া সেই যমলার্জুন বৃক্ষ দুইটাকে ক্ষণকালের মধ্যে ভাঙ্গিয়াছিল ? ( কখনই না )। তবে ইহা সত্য যে, ইহাও বালকের কার্য্য নহে; কিন্তু ইহা কোন দেবতার কার্য্যই প্রকাশ পাইয়াছিল ॥২৪॥

**अन्वयः**—गोपतां दधत् एषः महति विजने वने विहरन् महीयसा मधुना हतेन एव जगति 'मधुसूदनः' इति नाम अगमत् ॥२५॥

**टीका**—विहरन्निति । एष महति विशाले विजने वनेऽरण्ये गोपरूपी विहरन् बृहता मधुना माक्षिकपटलेन हतेन जगति मधुसूदन इति नाम प्राप्तवान् । वने मधु सूदितवान्, नतु मधुनामानं दैत्यम् इति निन्दा ।

स्तुतिस्तु—एष कृष्ण एव महीयसा बलवत्तरेण मधुना दैत्येन हतेन मधुसूदन इति नाम जगत्यगमत् प्राप । कीदृगेवः वने तोये महति सर्वलोकव्यापिनि विगतजने विहरन् । यद्वा गां पृथ्वीं पातीति गोपस्तद्भावं बिभ्रत् ॥२५॥

**বাঙ্গালা**—এই কৃষ্ণ গোপরূপ ধারণ করিয়া নির্জন মহারণ্যে বিচরণ করতঃ, প্রকাণ্ড একখানা মৌপোকার চাক ভাঙ্গিয়াই জগতে 'মধুসূদন' এই নাম লাভ করিয়াছে ॥২৫॥

**अन्वयः**—अयं गोवधसमुत्थम् अघम् अविमृश्य रुषा उपशु समुपोढ़मदं रिष्टं यत् अमीमरत्, असौ तत् असुरः इति किल प्रमार्ष्टि ॥२६॥

मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना ।
नास्य सपदि यदखादि भुजस्तदहो तिरश्चि सहसैव मूढ़ता ॥२७॥
यदुदस्य बाहुमयमेकमधृत गिरिमद्भुतं न तत् ।
भूरिसलिलमविषह्यमियं जलदे विमुञ्चति गवां सभाव्यता ॥२८॥

---

टीका—अविमृश्येति । अयं गोवधसमुत्थं तन्मारणोद्भवं पापमविमृश्यागणयित्वा यद्रुषा कोपेन रिष्टमनड्वाहममीमरदवधीत्तदकार्य्यम् । असौ पापी असुर इति किल प्रमार्ष्टिं नाशयति । दान्तरूपी असुरो मया हतो न तु गौरिति लोकस्य परिशुध्यति । किन्तु लोके तत्त्वतस्त्वसौ गौरेव, अयञ्च गोघातीत्यर्थः । कीदृशं रिष्टम् । उपगु गवां समीपे समुपोढ़मदं धृतदर्पं सुरभीः कामयमानमित्यर्थः । अतश्च सुरतासक्तदान्तवधपातकित्वान्नायं पूजार्हः । इति निन्दा ।

स्तुतिस्तु—किलशब्दस्य सत्यार्थत्वात् । यदसावुपगु गोनिकटे रिष्टमलयीट्, तदसौ किलासुर इति प्रमार्ष्टि । असुर एवानेन हत इत्यर्थः । कीदृशं तम् अविमृश्यश्चिन्तयितुमशक्यो यो गोवधस्तत्र समुत्था उत्थानमुद्यमो यस्य तमविमृश्यगोवधसमुत्थं यतोऽघं पापिनम् । अघमस्यास्तीति ज्ञात्वा । तथा समुपोढ़मदं धृतदर्पं । अतश्च गोवधसमुत्थस्य दर्पिष्ठस्य पापमतेर्दानवस्य वधाद्भगवतो महती स्तुतिरेव । अविमृश्येति ल्यप् । "ऋदुपधादिति क्यप्" । अमीमरदिति मारयतेर्लुङ् चङ् । प्रमार्ष्टीति मृजेर्वृद्धिः ॥२६॥

বাঙ্গালা—এই কৃষ্ণ, ক্রোধবশতঃ গোবধজাত পাপের বিবেচনা না করিয়া, গাভীর নিকটে কামমত্ত রিষ্টকে যে বধ করিয়াছিল ; 'সে রিষ্ট—অসুর' ইহা প্রচার করিয়া এখন এ, সে দোষ মার্জনা করিয়া থাকে ॥২৬॥

अन्वयः—विकटदशनेन केशिना मुखकन्दरान्तरगतः अपि अस्य भुजः यत् न अखादि अहो तत् तिरश्चि सहजा मूढ़ता एव ॥२७॥

टीका—मुखेति । अस्य केशिनाम्ना अश्वेन यद्भुजो नाखादि न जग्धः तदहो तिरश्चि तिर्य्यञ्चु सहजैव स्वाभाविक्येव मूढ़ता अज्ञत्वं, तिर्य्यक्त्वात् । मूर्खेण तेन न भक्षितो न त्वस्य कापि शक्तिरिति वाक्यार्थः । कदाचिदप्राप्तोऽसौ भवेदित्याह—आस्यदरीविवरप्राप्तः । कदाचिद्दन्ताभावः स्यादित्याह—विकटदशनेन दन्तुरेणापि । सपदि अस्य प्राप्त्यनन्तरम् । अहो विषादे ।

स्तुतिरत्र=परमतमाशङ्क्य काकुप्रयोगेण । यदस्य केशिना दैत्येन भुजो नाखादि तत्किं तिरश्चि सहजैव मूढ़ता । नन्वस्य माहात्म्यमित्यर्थः । एतस्यैव चेयमसौ शक्तिः । न स तात्त्विकोऽर्थः । अहोशब्दः परस्योल्लुण्ठनाय तिरश्चीति सप्तमी ॥२७॥

বাঙ্গালা—অশ্বরূপী বিকটদন্তশালী কেশী দানব, নিজ মুখবিবরপ্রবিষ্ট ইহার হাতখানা যে ভক্ষণ করে নাই, সেটা পশুজাতির স্বাভাবিক মূঢ়তাই বটে ॥২৭॥

किमिवात्र चित्रमयमन्नमचलमहकल्पितं यदि।
प्राश निखिलमखिलेऽपि जगत्युदरं गते बहुभुजोऽस्य न व्यथा ॥२९॥
अमुना करेण पृथुदन्तमुसलमुदखानि दन्तिनः।
तेन यदवधि स एव पुनर्बलशालिनां क इव तत्र विस्मयः ॥३०॥

---

अन्वयः—जलदे अविषह्यं भूरि सलिलं विमुञ्चति (सति) अयम् एकं बाहुम् उदस्य यत् गिरिम् अधृत, तत् अद्भुतं न; इयं गवां समाग्यता ॥२८॥

टीका—यदिति। मेघे दुःसहं प्रभूतं वारि वर्षति यदयं हरिरेक भुजमुत्क्षिप्य गिरिं गोवर्द्धनमधृत दध्रे तदद्भुतं नाश्चर्यम्। इयं गवां समाग्यता पुण्यवत्त्वम्। गवां जडिम्नः सो धृतो नत्वेतस्य काचित् शक्तिरित्यर्थः। इति निन्दा।

स्तुतिस्तु—परमतमाशङ्क्य काकुप्रयोगेण। न तदद्भुतम्, अपि तु आश्चर्यमेव। तथैवं गवां समाग्यता नत्वस्य सा किम्। अयमेव स्वमहिम्ना बभारेत्यर्थः ॥२८॥

বাঙ্গালা—মেঘ অসহ্য প্রচুর জল বর্ষণ করিতে লাগিলে, এই কৃষ্ণ একখানা হস্ত উত্তোলন করিয়া যে গোবর্দ্ধনপর্বত ধারণ করিয়াছিল, তাহা আশ্চর্য্য নহে; সেটা গরুগুলির ভাগ্যমাত্র ॥২৮॥

अन्वयः—अयं यदि अचलमहकल्पितं निखिलम् अन्नं प्राश, अत्र किम् इव चित्रम्, [यतः] अखिले जगति उदरं गते अपि बहुभुजः अस्य न व्यथा [भवति] ॥२९॥

टीका—किमिवेति। अयं हरिरचलमहकल्पितं पर्वतोत्सवकृतमन्नं यदि प्राश भुक्तवांस्तत् किमिवात्र चित्रमाश्चर्यम्। यतोऽस्य बहुभुज औदरिकस्य सकलेऽपि जगत्युदरं प्राप्ते न व्यथा पीड़ा अजीर्णत्वात्। अतश्च यः कुक्षिम्भरत्वात् सर्वमेव जिघत्सति तस्यौदनमात्रभोजनात् को विस्मयः। इत्यालम्भरित्वकथनेन निन्दा।

स्तुतिस्तु—अन्नादनात् को विस्मयः। यतोऽस्य जगन्निवासस्य सर्वेषु जगत्सूदरस्थितेषु न व्यथा। बहु भुनक्तीति बहुभुक्, निखिलभुवनपालकः। यदि वा बहवो भुजा यस्य स बहुभुजोऽयम्। पूर्वत्र तु बहु भुङ्क्ते इति बहुभुक्। प्राशीत्यत्राशीतिर्लिट् ॥२९॥

বাঙ্গালা—পর্বতমহোৎসবে যে অন্ন প্রস্তুত করিয়াছিল, সে সমস্ত অন্নই যদি এ, ভোজন করিয়া থাকে; তথাপি এ বিষয়ে আশ্চর্য্য আছে কি?। কেন না, এ,—বহুভোজী ঔদরিক; সুতরাং সমস্ত জগৎ ইহার উদরের ভিতর গেলেও, ইহার কষ্ট হয় না ॥২৯॥

अन्वयः—अमुना करेण दन्तिनः पृथु, दन्तमुसलं यत् उदखानि, तेन पुनः सः एव (यत्र) अवधि, तत्र बलशालिनां कः इव विस्मयः ॥३०॥

टीका—अमुनेति। अमुना हरिणा दन्तिनः कुवलयापीड़स्य यत् पृथुदन्तमुसलं करेणोत्पाटि उत्खातम्। तेनोत्खातेन योऽसौ हस्ती अवधि हतः तत्र बलशालिनां क इव विस्मयः। न युक्तस्तत्र विस्मयः। मर्म्मेदननाद्धि शिशुरपि मारयति। इति निन्दा।

शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ।
मल्लमलघुकठिनांसतटं न्यवधीद्यदेष तददृष्टकारितम् ॥३१॥
यदयुध्यमानमपि सन्तमुपहितसुरौघसाध्वसम् ।
कंसमभियमयमभ्यभवत्समुदा जनेन तदपि प्रशस्यते ॥३२॥

---

स्तुतिस्तु—काक्वा गम्यते—को विस्मयः । विस्मय एवेत्यर्थः । स तु हस्तिनो हन्तुमशक्यत्वादिति भावः । यदुक्तम्—"एकः क्रुद्धो गजो हन्ति षट्सहस्राणि वाजिनाम्" । अवधीति कर्म्मणि लकारः चलेश्चिण् अकारलोपः ॥३०॥

বাঙ্গালা—এই কৃষ্ণ হস্ত দ্বারা যে কুবলয়াপীড় হস্তীর বিশাল দন্তমুসল উৎপাটন করিয়াছিল এবং তাহাদ্বারাই আবার যে সেই হস্তীটাকেই বধ করিয়াছিল, সে বিষয়ে বলবান্‌দিগের কি বিস্ময় জন্মিতে পারে ? ॥৩০॥

অন্বয়:—स्वयम् अकृतक्रियः शिशुः एव एषः यत् शिक्षित-नियुद्ध-करणम् अलघु-कठिनांस-तटं मल्लं न्यवधीत्, तत् अदृष्टकारितम् ॥३१॥

टीका—शिशुरिति । एष हरिः शिशुरेव बालः सन् यन्मल्लं चाणूराख्यं न्यवधीज्जघान तददृष्टकारितं दैवविहितम् । विधिवशाद्यबलोऽपि बलीयांसमभिभवति तदेव बलवत्त्वमाह कीदृशं मल्लम् । शिक्षितानि नियुद्धकरणानि बाहुयुद्धक्रियाः येन तं शिक्षितनियुद्धकरणं युद्धज्ञं, तथा अलघु पीनं कठिनमंसतटं यस्य तम् । एष तु स्वयमकृतक्रियोऽशिक्षितकरणः । यतः शिशुः ।

स्तुतिस्तु—पूर्ववत् काक्वा । तत् किमदृष्टकारितं नैतद्दैवविजृम्भितम्, अपि त्वस्य वाय्यं सहिमेत्यर्थः ॥३१॥

বাঙ্গালা—এই কৃষ্ণ নিজে কোন শিক্ষা করিয়াছিল না, অথচ বালকই ছিল; কিন্তু মল্লযোদ্ধা চাণূর বাহুযুদ্ধ শিক্ষা করিয়াছিল এবং তাহার স্কন্ধযুগল বিশাল ও কঠিন ছিল; এই অবস্থায় কৃষ্ণ যে সেই চাণূরকে বধ করিয়াছিল; সেটা উহাকে উহার অদৃষ্টই করাইয়াছিল ॥৩১॥

অন্বয়:—अयं यत् उपहित सुरौघ-साध्वसम् अभियम् अयुध्यमानम् अपि सन्तं कंसम् अभ्यभवत्, तत् अपि समुदा जनेन प्रशस्यते ॥३२॥

टीका—यदिति । यदयमयुध्यमानं कंसं स्वजनमप्यभ्यभवदाचकर्ष तदपि समुदा जनेन प्रशस्यते नैवाभिनन्द्यत इति काकुप्रयोगः । निष्क्रियस्य हि वधे का, नाम स्तुतिः । कीदृशं तम्—जनितदेवपुगकम्पम् अभियं त्रासरहितं वीरमित्यर्थः । इति निन्दा ।

स्तुतिस्तु—अयुध्यमानमपि सन्तं कंसमभियं त्रासरहितं वीरं यदभ्यभवत्तदपि सन्तोषवता जनेन प्रशस्यते स्तूयत एव । यत उपहितसुरौघसाध्वसं, सदर्पं च । कण्टकोद्धरणेन ह्यावश्यं प्रहृष्टो जनः प्रशंसां करोति ॥३२॥

इति निन्दितुं कृतधियापि वचनममुना यदाददे ।
स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत् ॥३३॥
यदुवाच दुष्टमतिरेष परिविवदिषुर्मुरद्विषम् ।
द्व्यर्थमपि सदसि चेदिपतेस्तदतोऽपराधगणनामगात् वचः ॥३४॥

## इति प्रक्षिप्ताः श्लोकाः ।

इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ।
सोढरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥३५॥

---

বাঙ্গালা—কংস, দেবগণের পর্য্যন্ত ভয় জন্মাইতেন, তিনি নিজে নির্ভয় ছিলেন, অথচ তিনি সে সময়ে যুদ্ধও করিতেছিলেন না, এই অবস্থায় কৃষ্ণ যে তাঁহাকে বধ করিয়াছিল, তাহাও লোকে উপহাসের আমোদেই প্রশংসা করিয়া থাকে ॥৩২॥

अन्वयः—निन्दितुं कृतधिया अपि अमुना इति यत् वचनम् आददे, सा परैः अनिशं स्तोतुम् उचितस्य मधुनिघातिनः स्तुतिः एव अभवत् ॥३३॥

टीका—इतीति । इत्युक्तप्रकारेण अमुना चैद्येन यद्वच आददेऽभ्यधायि । (सा) मधुरिपोर्नुतिरेवाभवत् कदाचित् तुष्टुवुरसौ स्यादित्याह—निन्दितुं कृतधियापीति । किंविधस्य हरेः परैः शत्रुभिरपि स्तोतुमजस्रं योग्यस्य । अत एतत् स्तुतिरभवत् । एतेन पूर्वेषां वाक्यानामुभयार्थता ख्याता यथा च तथा व्याख्यातमेव । आददे इत्यस्य विहरणस्याशब्दार्थत्वात् प्रतिषेधाभावः प्रतीयते । अत्र तत्र तु शब्दोपात्तं यथा आस्यं व्याददातीति । मधुं निहन्तीत्यावश्यके णिनिः । कर्म्मणि हनः, इत्यर्थं कृतवायाम् ॥३३॥

বাঙ্গালা—শিশুপাল নিন্দা করিবার ইচ্ছা করিয়াও, এই ভাবে যে সকল কথা বলিয়াছিলেন, সর্বদা অন্য সকলের স্তবের যোগ্য শ্রীকৃষ্ণের পক্ষে তাহা স্তবই হইয়াছিল ॥৩৩॥

अन्वयः—दुष्टमतिः मुरद्विषं परिविवदिषुः एषः सदसि द्व्यर्थम् अपि यत् उवाच, तत् चेदिपतेः वचः अतः अपराधगणनाम् अगात् ॥३४॥

टीका—यदुवाचेति । एष सभायां यद्वचोऽवोचत्तदुभयार्थं निन्दास्तुतिवाचकमप्यतो हेतोरपराधगणनामगादपराधगणनामध्ये गणितम् । यतो दुष्टत्वान्मुरारिं परिविवदिषुर्निनिन्दिषुः । तेन हि तद्वच आक्रोशतीतम् । या तु तस्य स्तोत्ररूपता सा काकतालीयेति भगवतो वा माहात्म्यम् । नैतावतासौ प्रियंवद इति अपराधगणनामगात् । यस्मादेष दुष्टमतिः सन् देवं परिविवदिषुराह इत्येवं वा योज्यम् ॥३४॥

বাঙ্গালা—দুষ্টবুদ্ধি শিশুপাল শ্রীকৃষ্ণের নিন্দা করিবার ইচ্ছা করিয়া, সভাতে যে দ্ব্যর্থক বাক্যও বলিয়াছিল, শিশুপালের সে দ্ব্যর্থক বাক্যও তাঁহার পক্ষে অপরাধের মধ্যেই গণ্য হইয়াছিল। যে হেতু শিশুপাল তাহা নিন্দা করিবার অভিপ্রায়েই বলিয়াছিল ॥৩৪॥

अन्वयः—सोढरिपुबलभरः असहनः सः इति उद्धतं वाचम् उदीर्य सपदि वेणुदारिणा सह दत्तकरतालम् उच्चकैः जहास ॥३५॥

कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ॥४०॥
न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्त्तते ॥४१॥

---

टीका—इतीति । सोढ़ः क्षान्तो रिपूणां बलभरो वीर्य्यातिशयो येन सः न सहत इति असहनः असहिष्णुः स चैद्यः इतीत्थम् उद्धतं निष्ठुरं यथा तथा वाचम् उदीर्य्य सपदि वेणुदारिणा नरकात्मजेन सह दत्तः करतालः परस्परपाणिताड़नं यस्मिन् कर्म्मणि तद्यथा तथा उच्चकैस्तारं जहास । अन्यदीयोद्घाटनहर्षादट्टहासं चकारेत्यर्थः । स्वभावोक्तिः ॥३९॥

टिप्पनी—इतीति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—শক্রগণের বীর্য্যমহিমা সহ্য করিতে সক্ষম, অথচ অসহিষ্ণুস্বভাব শিশুপাল, উদ্ধতভাবে এই সকল কথা বলিয়া, তৎক্ষণাৎ নরকাসুরের পুত্র বেণুদারীর সহিত করতালি দিয়া, উচ্চ হাস্য করিলেন ॥৩৯॥

অন্বয়ঃ—माधवः कटुना अपि चैद्यवचनेन विकृतिं न अगमत्; [तथाहि] के जनाः वचसा सत्यनियतवचसं सुजनं चलयितुम् ईशते ॥४०॥

टीका—कटुनेति । माधवः कटुनापि चैद्यवचनेन विकृतिं नागमत् । गमेर्लुङि पुषादिना च्लेरङादेशः । तथाहि, सत्ये नियतवचसम् अस्खलितवचसं सत्यसन्धं सुजनं के जनाः वचसा तीव्रेणापीति भावः । चलयितुमीशते शक्नुवन्ति न केऽपीत्यर्थः । "शतं क्षमिष्ये शतमागांसीति प्रतिज्ञाभङ्गभयादसहतेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥४०॥

टिप्पनी—कटुनेति । अत्र वचसं वचसेति सुजनं जना इति शब्दार्थयोः पौनरुक्त्यात् तात्पर्य्यमात्रतो भेदाच्च लाटानुप्रासः, अर्थापत्तिरिति ताभ्यां सह टीकोक्तार्थान्तरन्यासस्य संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४०॥

বাঙ্গালা—শিশুপালের কটু বাক্যেও, শ্রীকৃষ্ণের মন বিকৃতি প্রাপ্ত হইল না। কেন না, যাঁহার বাক্য সত্যের উপরে নির্দ্দিষ্ট থাকে, সেইরূপ সজ্জনকে বাক্য দ্বারা কোন্ ব্যক্তি চঞ্চল করিতে পারে ? ॥৪০॥

অন্বয়ঃ—यदुनृपाः शौरिसमयनिगृहीतधियः [सन्तः] तदा इति शपमानम् अपि तं न च प्रचुक्रुधुः । हि जनः प्रभुचित्तम् एव अनुवर्त्तते ॥४१॥

टीका—न चेति । किन्त्विति चार्थः । तदा तत्काले इतीत्थं शपमानमाक्रोशन्तमपि । "शपतेराक्रोश" इति भट्टमल्लः । तं चैद्यम् । यदुनृपाः यादवाः शौरेः कृष्णस्य समयेन सङ्केतेन निगृहीतधियो निरुद्धबुद्धयः सन्तो न प्रचुक्रुधुः । "क्रुधद्रुहोरुपसृष्टयोः कर्म्मेति

विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।
तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ॥४२॥
स्मृतिवर्त्म तस्य न समस्तमपकृतमियाय विद्विषः ।
सर्त्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः ॥४३॥

---

कर्मत्वम् । तथाहि, जनो लोकः प्रभुचित्तमेव अनुवर्त्तते । शौरिसङ्केतानवद्धबुद्धेर्यदुविशेषणगत्या क्रोधाभावहेतुत्वात् काव्यलिङ्गमर्थान्तरन्यासेन संकीर्य्यते ॥४१॥

**टिप्पनी**—न चेति । अत्र प्रचुरं धुरित्यन्तेन वाक्यसमाप्तावपि पुनर्यदुनपा इत्यस्य विशेषणतयः तृतीयपादोपादानात् समाप्तपुनरात्ततादोषः । 'हरिसमयबद्धबुद्धयः । चुक्षुधुरिह न यदुचितिपाः—' इति पाठेन तत्समाधानं विधेयम् । प्रसादो गुणः, वैदर्भी च रीतिः ॥४१॥

**বাঙ্গালা**—শিশুপাল সেই সময়ে সেইরূপ আক্রোশ করিতে থাকিলেও, যদুবংশীয় রাজারা তাঁহার প্রতি ক্রোধ প্রকাশ করেন নাই। কারণ, শ্রীকৃষ্ণের সঙ্কেতে তাঁহাদের বুদ্ধি নিরুদ্ধ ছিল। কেন না, মানুষ প্রভুর চিত্তেরই অনুবর্ত্তন করিয়া থাকে ॥৪১॥

**अन्वयः**—अलङ्घ्य-निज-वचन-दाम-संयतः अच्युतः मुहुः विहितागसः तस्य अपराधं तत्प्रथमं कतिथः इति मनसा समाख्यत् ॥४२॥

**टीका**—विहितेति । अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन संयतो बद्धोऽच्युतः मुहुर्विहितागसः पूर्वं बहुशः कृतापराधस्यापि तस्य चैद्यस्यापराधं स एव प्रथमो यस्मिन् कर्मणि तत्प्रथमं यथा तथा कतिथः । कतीनां पूरण इति तस्य पूरणे डडिति डट् प्रत्ययः, "षट्कतिपयचतुरां थुगिति थुगागमः । मनसा समाख्यत् गणनां चकार । ख्यातिविज्ञिख्यातिभ्योऽङिति च्लेरङादेशः । अत्र प्रतिज्ञापाशबन्धनस्य विशेषणगत्या प्राचीनापराधानन्योऽपि तात्कालिकापराधगणनाहेतुत्वात् काव्यलिङ्गभेदः ॥४२॥

**टिप्पनी**—विहितेति । अत्र वचनदामेति निरङ्गं केवलरूपकमिति टीकोक्तकाव्यलिङ्गेन सह तस्य सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

**বাঙ্গালা**—শ্রীকৃষ্ণ নিজেরই অলঙ্ঘনীয় প্রতিজ্ঞাপাশে আবদ্ধ ছিলেন; তাই শিশুপাল বার বার অপরাধ করিয়া থাকিলেও, তাঁহার সেই প্রথম উক্তিকেই প্রথম অপরাধ ধরিয়া, 'কতটা অপরাধ হইল' এইরূপ মনে মনে গণনা করিতে লাগিলেন ॥৪২॥

**अन्वयः**—विद्विषः समस्तम् अपकृतं तस्य स्मृतिवर्त्म न इयाय । (यतः) अधिगतगुणस्मरणाः उत्तमाः अखिलं दोषं सर्त्तुं न पटवः ॥४३॥

**टीका**—स्मृतीति । विद्विषश्चैद्यस्य सम्बन्धि समस्तमपकृतमपकारजातम् । नपुंसके भावे क्तः । तस्य हरेः स्मृत्याः स्मृतिपथं नेयाय न प्राप । न तमपकारं सस्मारेत्यर्थः । अर्थान्तरं न्यस्यति । अधिगतगुणस्मरणाः परिचितोपकारस्मृतयः उत्तमाः सज्जनाः अखिलं दोषमपकारं सर्त्तुं न पटवः खलु नालम्भवन्तीत्यर्थः । "पर्य्याप्तिवचनेष्वलमर्थेष्विति तुमुन्-प्रत्ययः । उपकारमेव स्मरन्ति साधवो नापकारमित्यर्थः ॥४३॥

नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वचः ।
स्माह चलयति भुवं मरुति क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥४४॥
अथ गौरवेण परिवादमपरिगणय्य स्वमात्मनः ।
प्राह सुररिपुतिरस्करणक्षुभितः स्म वाचमिति जाह्नवीसुतः ॥४५॥

---

**टिप्पनी**—अन्विति । अत्र अखिलं स्खलितमिति छेकानुप्रास इति टीकोक्तार्थान्तरन्यासेन सह तस्य संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४३॥

**বাঙ্গালা**—শিশুপালকৃত সমস্ত অপকার, শ্রীকৃষ্ণের স্মৃতিপথে আসিল না। কারণ, পরের গুণ স্মরণ করাই যাঁহাদের অভ্যাস ; সেইরূপ উত্তম লোকেরা পরের সমস্ত দোষ স্মরণ করিতে সমর্থ হন না ॥৪৩॥

**अन्वयः**—अथ नृपतौ शौरिम् अधिक्षिपति [सति] सुर-सरित्सुतः मरुति भुवं चलयति (सति) क्षुभितस्य अम्बुधेः नादम् अनुकुर्वत् वचः आह स्म ॥४४॥

**टीका**— नृपताविति । अथ नृपतौ चैद्ये शौरिं हरिम् अधिक्षिपति सति सुरसरित्सुतो भीष्मः मरुति प्रलयमारुते भुवं चलयति कम्पयति सति क्षुभितस्योद्वेलस्याम्बुधेर्नादमनुकुर्वत्तद्वद्गम्भीरं वचः आह स्म उवाच । "लटः स्मे" इति भूतार्थे लट्, "ब्रुवः पञ्चानामादित आहो ब्रुव" इति आह्वादेशः । यद्यपि न पादादौ स्माह इत्याह वामनः तथापि कविप्रौढ्या अप्रयुक्तस्य पादादौ प्रयोगः । उपमालङ्कारः ॥४४॥

**टिप्पनी**—नृपताविति । अत्र सुरसरित्सुत इति छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः टीकोक्तोपमया पुनः संसृज्यते । नृपतिपदेन प्रकरणात् शिशुपाललाभः, मरुत्पदेन च सामर्थ्यात् प्रलयमरुल्लाभ इति न विशेषे अविशेषाख्यदोषः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

**বাঙ্গালা**—শিশুপাল শ্রীকৃষ্ণকে তিরস্কার করিতে লাগিলে, তাহার পর ভীষ্ম যে বাক্য বলিয়াছিলেন, সে বাক্য—প্রলয়কালের বায়ু পৃথিবী কম্পিত করিতে লাগিলে, উদ্বেলিত সমুদ্রের যেরূপ গম্ভীর শব্দ হয় সেই শব্দের অনুকরণ করিতেছিল ॥৪৪॥

**अन्वयः**—अथ सुर-रिपु-तिरस्करण-क्षुभितः जाह्नवीसुतः गौरवेण (तम्) आत्मनः परिवादम् अपरिगणय्य (सन्) इति वाचं प्राह स्म ॥४५॥

**टीका**—उक्तमेवार्थं वक्तुरायथाविष्कारायमाह । अथेति । अथ शिशुपालप्रलापानन्तरं सुररिपुतिरस्करणेन हरिनिन्दया क्षुभितः कलुषमनाः जाह्नवीसुतो गाङ्गेयः गौरवेण धैर्येण स्वमात्मनः परिवादं "काममयं वृथापलित," इत्यादि स्वनिन्दामपरिगणयन् इति वक्ष्यमाणप्रकारेण वाचं प्राह स्म प्रोक्तवान् गतमेतत् । धीराः स्वनिन्दामेव सहन्ते न गुरुदेवादिनिन्दामिति भावः । अत्र क्षोभस्य विशेषणगत्या वचनहेतुत्वात् काव्यलिङ्गभेदः ॥४५॥

**टिप्पनी**—अथेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

विहितं मयाद्य सदसीदमपमर्षितमच्युतार्चनम् ।
यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम् ॥४६॥
इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः ॥४७॥

---

বাঙ্গালা—তদনন্তর, ভীষ্ম, ধৈর্য্যগুণে নিজের সেই নিন্দা গ্রাহ্য না করিয়া, শ্রীকৃষ্ণের তিরস্কারে ক্ষুভিতচিত্ত হইয়া, এই বাক্য বলিলেন ।৪৫।

अन्वयः---मया अद्य सदसि विहितम् इदम् अच्युतार्चनं यस्य अपमर्षितम्, सः चापं नमयतु ; मया अयं चरणः सर्वभूभृतां शिरसि कृतः ॥४६॥

टीका—विहितमिति । मया अद्य सदसि सभायां विहितं कृतम् इदम् अच्युतार्घनं यस्यापमर्षितमतितिक्षितमसोढमित्यर्थः । मृष तितिक्षायामिति धातोः कर्मणि क्तः, उपसर्गवशाद्विपरीतार्थता । अतएव मृषस्तितिक्षायामेव कित्त्वनिषेधादतितिक्षार्थत्वान्न गुणः, "मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्वर्त्तमानार्थता "क्तस्य च वर्त्तमाने" इति षष्ठी । सोऽपमर्षी पुरुषश्चापं नमयतु आरोपयतु सर्वभूभृतां शिरसि अयं चरणः कृतः न्यस्तः । अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः । अयं कोपाभर्षं इत्यनुसन्धेयम ॥४६॥

टिप्पनी—विहितमिति । अत्र पूर्वार्द्धवाक्यान्वितस्य यस्येत्येकमात्रपदस्य परार्द्धे पातादर्द्धान्तरैकपदता दोषः । 'कृतमद्य यस्य सदसीदम् अपमर्षितमच्युतार्चनम् । मङ्क्षु नमयतु स चापमिदं निहितं पदं शिरसि सर्वभूभृताम् ।'* इति पाठेनासौ परिहार्य्यः । मङ्क्षु द्रुतमित्यर्थः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

বাঙ্গালা—আমি আজ সভায় শ্রীকৃষ্ণের এই পূজা করিয়াছি ; তাহা যাঁহার অসহ্য হইয়াছে, তিনি ধনু আরোপণ করুন ; সকল রাজার মস্তকে আমি এই চরণ স্থাপন করিলাম ।৪৬।

अन्वयः—अथो इति भीष्मभाषितवचोऽर्थम् अधिगतवताम् इव शिशुपालपक्ष-पृथिवीभृतां गणः क्षणात् अतिमात्रं क्षोभम् अगमत् ॥४७॥

टीका—इतीति । इतीत्थं भीष्मस्य भाषितस्योक्तस्य वचसोऽर्थमभिधेयं शिरसि पादन्यासरूपं क्षणात् अधिगतवतां प्राप्तवतामिव सतामित्यर्थः शिशुपालस्य पक्षा ये पृथिवीभृतो राजानः तेषामसौ गणोऽतिमात्रं क्षोभं क्रोधं विकारमगमत् । एतेनैषाम् आत्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम् । उत्प्रेक्षा ॥४७॥

टिप्पनी—इतीति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४७॥

বাঙ্গালা—তাহার পরে, এইরূপ ভীষ্মোক্ত বাক্যের অর্থ বুঝিতে পারিয়াই যেন শিশুপালের পক্ষবর্ত্তী রাজগণ, ক্ষণকালের মধ্যেই অত্যন্ত ক্রুদ্ধ হইয়া উঠিলেন ।৪৭।

स्मितितारकानुमितताम्रनयनमरुणीकृतं क्रुधा ।
बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्य्यमण्डलम् ॥४८॥
प्रविदारिताकृणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन् ।
प्रातरहिमकरताम्रतनुर्विषजद्रुमोऽपर इवाभवद्द्रुमः ॥४९॥

---

अन्वयः—क्रुधा अरुणीकृतं स्मितितारकानुमितताम्र-नयनं बाण-वदनं सकीलं सूर्य्यमण्डलम् इव जगतः भिये उददीपि ॥४८॥

टीका—अथैषां द्वयमिर्गतारम्भान् क्रोधानुभावानाह । स्मितीत्यादि । क्रुधा क्रोधेन अरुणीकृतमत एव स्मिती श्यामे ये तारके कनीनिके ताभ्याम् अनुमिते अनुमापिते ताम्रे नयने यस्य तत् । "तारकाक्ष्णः कनीनिकेत्यमरः । सर्वं सुखस्य रक्तत्वादिति भावः । बाणो नृपस्तस्य वदनम् । सकीलं कीलाकारच्छायासहितं परिधियुक्तमिति यावत् । सूर्य्यमण्डलमिव जगतो भिये भयाय उददीपि प्रजज्वाल । दीप्यतेः कर्त्तरि लुङीति दीपजनीत्यादिना चिण्प्रत्यये तलुक् । अत्र नयनयोः स्वधावल्यत्यागेनान्यगुणस्वीकारात्तद्गुणः, तदपेक्षाद्वीत्यातिकसूर्य्यमण्डलोपमात्रङ्कारः ॥४८॥

टिप्पनी—स्मितीति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

বাঙ্গালা—ক্রোধে বাণরাজার মুখখানাকে রক্তবর্ণ করিল; সুতরাং কালবর্ণ তারা দুইটা দ্বারা তাহার তাম্রবর্ণ নয়ন দুইটার অনুমান করা হইতে লাগিল; অতএব কীল (পেরেকলোহার ছাতি) তুল্য ছায়াযুক্ত সূর্য্যমণ্ডলের ন্যায় বাণরাজার সেই মুখখানা, জগতের ভয়ের জন্য জ্বলিতে লাগিল ॥৪৮॥

अन्वयः—प्रविदारिताकृण-तरोग्र-नयन-कुसुमोज्ज्वलः स्फुरन् प्रातरहिमकर ताम्र-तनुः द्रुमः अपरः विषजद्रुमः इव अभवत् ॥४९॥

टीका—प्रवीति । प्रविदारिते अतिविकासिते अरुणतरे क्रोधादतिरक्ततरे अत एवोग्रे भयङ्करे ये नयने ते एव कुसुमे ताभ्यामुज्ज्वलो दीप्तः स्फुरन् स्वतेजसा दीप्यमानः प्रातरहिमकरताम्रतनुः प्रभातार्कावत्यविग्रहः प्रसिद्धो द्रुमो द्रुमाख्यो नृपः अपरो विषजद्रुम इवाभवत् इत्युत्प्रेक्षा रूपकसङ्कीर्णा ॥४९॥

टिप्पनी—प्रविदारितेति । अत्र द्रुम-द्रुम इति च्छेकानुप्रासेन तृतीयचरणगतलुप्तोपमया च टीकोक्तोत्प्रेक्षारूपकसङ्करः पुनः संसृज्यते । रौद्रो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥४९॥

বাঙ্গালা—প্রস্ফুটিত পুষ্পের ন্যায় বিস্ফারিত, অত্যন্ত রক্তবর্ণ ও ভয়ঙ্কর নয়নযুগল দ্বারা দ্রুমরাজার শরীর উজ্জ্বল হইল, নিজতেজে তিনি উত্তেজিত হইলেন এবং তাঁহার শরীর প্রভাতকালের সূর্য্যের ন্যায় তাম্রবর্ণ হইল; এই অবস্থায় তিনি, অন্য বিষবৃক্ষের ন্যায় হইয়া পড়িলেন ॥৪৯॥

अनिशान्तवैरदहनेन विरहितवतान्तरार्द्रताम् ।
कोपमरुदभिहतेन भृशं नरकात्मजेन तरुणेव जज्वले ॥५०॥
अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत ।
ग्रस्तशशधरमिवोपलसत्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥५१॥
कुपिताकृतिं प्रथममेव हसितमशनैरसूचयत् ।
क्रुद्धमशनिदलिताद्रितटध्वनि दन्तवक्त्रमरिचक्रभीषणम् ॥५२॥

---

**अन्वयः**—अनिशान्त-वैर दहनेन अन्तः आर्द्रतां विरहितवता कोपमरुदभिहतेन नरकात्मजेन तरुणा इव भृशं जज्वले ॥५०॥

**टीका**—अनिशान्तेति । अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य तेन अत एवान्तरभ्यन्तरे आर्द्रतां सारस्यं विरहितवता त्यक्तवता । रहयतेः क्तवतुप्रत्ययः । कोपो मरुदिव तेनाभिहतः प्रज्वलितः तेन नरकात्मजेन वेणुदारिणा तरुणा वृक्षेणेव भृशं जज्वले ज्वलितम् । भावे लिट् । उपमालङ्कारः ॥५०॥

**टिप्पनी**—अनिशान्तेति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५०॥

**বাঙ্গালা**—নরকাসুরের পুত্র বেণুদারীর শত্রুতানল তখনও নিবৃত্তি পাইয়াছিল না; তিনি অন্তরের আর্দ্রভাব পরিত্যাগ করিয়াছিলেন এবং বায়ুর ন্যায় ক্রোধে সঞ্চালিত হইয়াছিলেন; সুতরাং বৃক্ষের ন্যায় বেণুদারী তখন ক্রোধে জ্বলিয়া উঠিয়াছিলেন ॥৫০॥

**अन्वयः**—किम् अपि अभिधित्सतः उत्तमौजसः राहुवदनविकृतम् उपलसत् सित-दन्त-पङ्क्ति-मुखम्, ग्रस्तशशधरम् इव व्यभाव्यत ॥५१॥

**टीका**—अभीति । किमप्यभिधित्सतोऽभिधातुमिच्छतः । दधातेः सनन्ताल्लटः शत्रादेशः । उत्तमौजसो नाम राज्ञः सम्बन्धि राहुवदनविकृतं व्यात्तत्वाद्राहुवक्त्रवत् करालम् उपलसन्ती लक्ष्यमाणा सिता दन्तपङ्क्तिर्यस्य तन्मुखं ग्रस्तशशधरमिव सन्दष्टचन्द्रमिव व्यभाव्यतातर्क्यत । इत्युत्प्रेक्षा ॥५१॥

**टिप्पनी**—अभीति । अत्र राहुवदनविकृतमिति लुप्तोपमया टीकोक्तोत्प्रेक्षा सङ्कीर्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

**বাঙ্গালা**—উত্তমৌজানামে কোন রাজা তখন কিছু বলিতে ইচ্ছা করিয়াছিলেন; সুতরাং তাঁহার মুখখানা রাহুর মুখের ন্যায় বিস্ফারিত হইয়াছিল; তাই তাঁহার শুভ্র দন্তগুলি প্রকাশ পাইয়াছিল; অতএব সে মুখখানা যেন চন্দ্রকে গ্রাস করিয়াছে বলিয়া লোকে মনে করিয়াছিল ॥৫১॥

**अन्वयः**—अशनि दलिताद्रि-तट-ध्वनि अशनैःहसितम्, प्रथमम् एव कुपिताकृतिम् अरिचक्रभीषणं दन्तवक्त्रं क्रुद्धम् असूचयत् ॥५२॥

**टीका**—कुपितेति । प्रथमं प्रागेवाकुपितावस्थायामपीत्यर्थः । कुपितस्येवाकृति-

प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत्।
यामिहरणजनितानुशयः समुदाचचार निज एव रुक्मिणः ॥५३॥
चरणेन हन्ति सुबलः स्म शिथिलितमहीध्रबन्धनाम्।
तीरतरलजलराशिजलामवभुग्नभोगिफणामण्डलां भुवम् ॥५४॥

---

मुखरागो यस्येत्युपमा। अरिचक्रभीषणं परबलभयङ्करं दन्तवक्त्रं दन्तवक्त्रनामानं राजानम्। अशनिदलितस्य वज्राहतस्याद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तदित्युपमा। न शनैरशनैः उच्चैर्हसितमट्टहासः क्रुद्धमसूचयत्। सर्वदा मुखरागस्य विशेषणादनुभावान्तरवेद्यः क्रुद्ध इत्यर्थः। अत्र कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥५२॥

टिप्पनी—कुपितेति। अत्र दन्तवक्त्रमरिचक्रेति च्छेकानुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते। रौद्रो रसः, वन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥५२॥

বাঙ্গালা—পর্বতের উপরে বজ্রাঘাত হইলে যেমন বিকট ধ্বনি হয়, তেমন বিকট-ধ্বনিতে দন্তবক্র একটা উচ্চ হাস্য করিলেন; সেই উচ্চহাস্যেই তাঁহাকে ক্রুদ্ধ বলিয়া জানাইল; অথ চ প্রথম হইতেই তাঁহার আকৃতি ক্রুদ্ধের মতই ছিল এবং তিনি শত্রুপক্ষের ভয়জনক ছিলেন ॥৫২॥

अन्वयः—प्रतिघः कुतः अपि समुपेत्य नरपतिगणं समाश्रयत्, किन्तु रुक्मिणः यामि-हरण-जनितानुशयः निजः एव प्रतिघः समुदाचचार ॥५३॥

टीका—प्रतिघ इति। प्रतिघः कोपः। "कोपक्रोधामर्षरोषप्रतिघा" इत्यमरः। कुतोऽपि समुपेत्यागत्य नरपतिगणं राजमण्डलं समाश्रयत समाविशत्। रुक्मिणस्तु यामिः स्वसा। "यामिः स्वसृकुलस्त्रियोरित्यमरः। तस्या रुक्मिण्या हरणेन जनितोऽनुशयो हा कष्टमापन्नं कदा निर्यातयामीति अनुतापो यस्मिन् सः। "अथानुशयो दीर्घद्वेषानुतापयोरित्यमरः। निजो नित्य एव प्रतिघः। "निजमात्मीयनित्ययोरिति विश्वः। समुदाचचार समुद्दिदीपे। भीष्मवाक्यमन्येषां कोपोत्पादकमासीत् रुक्मिणस्तु प्रागेवारूढकोपस्योद्दीपकमासीदित्यर्थः। अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात् काव्यलिङ्गभेदः ॥५३॥

टिप्पनी—प्रतिघ इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५३॥

বাঙ্গালা—ক্রোধ কোনও স্থান হইতে আসিয়া রাজগণকে আশ্রয় করিয়াছিল; কিন্তু ভগিনী রুক্মিণীর হরণই রুক্মীর হৃদয়ে অনুতাপ জন্মাইয়া দিয়াছিল, সেই অনুতাপসংশ্লিষ্ট নিত্য ক্রোধই তৎকালে তাঁহার উদ্দীপিত হইয়াছিল ॥৫৩॥

अन्वयः—सुबलः चरणेन शिथिलित-महीध्र-बन्धनां तीर-तरल-जलराशिजलाम् अवभुग्न-भोगि-फणा-मण्डलां भुवं हन्ति स्म ॥५४॥

टीका—चरणेनेति। सुबलो नाम राजा महीं धारयन्तीति महीध्राः पर्वताः;

कुपितेषु राजसु तथापि रथचरणपाणिपूजया।
चित्तकलितकलहागमनो मुदमाहुकिः सुहृदिवाधिकां दधौ ॥५५॥
गुरुकोपरुद्धपदमापदसितयवनस्य रौद्रताम्।
व्यात्तमशितुमिव सर्वजगद्विकरालमास्यकुहरं विवक्षतः ॥५६॥

---

कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानमिति कप्रत्ययः। शिथिलितानि विश्लेषितानि महीध्राणां बन्धनानि सन्धयो यस्यास्ताम्। तीरेण तरलानि भूकम्पाच्चलितानि जलराशेरम्बुधेर्जलानि यस्यास्ताम्। अवभुग्नं कुटिलम् अतिभावादित्यर्थः भोगिनां फणिनां फणमण्डलं फणसमूहो यस्यास्तां भुवं चरणेन हन्ति स्म जघान। लट् स्मेति भूतार्थे लट्। अत्र पादाघाताद् भुवः कम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥५४॥

टिप्पनी—चरणेनेति। अत्र तीरतरेति छेकानुप्रासः जलराशिजलानिति च लाटानुप्रास इत्यनयोः टीकोक्तातिशयोक्त्या सह संसृष्टिः। रौद्रो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥५४॥

বাঙ্গালা—সুবলনামে কোন রাজা ক্রোধবশতঃ ভূতলে পদাঘাত করিলেন; তাহাতে পৃথিবী ও পর্বতের বন্ধন সকল বিশ্লিষ্ট হইয়া গেল; সমুদ্রের জল তীরে আসিয়া ঢেউ খেলিতে লাগিল এবং পাতালস্থ সর্পগণের ফণাসমূহ নীচু হইয়া পড়িল ॥৫৪॥

अन्वयः—राजसु रथचरणपाणि-पूजया तथा कुपितेषु अपि, आहुकिः चित्त-कलित-कलहागमनः (सन्) सुहृत् इव अधिकां मुदं दधौ ॥५५॥

टीका—कुपितेष्विति। रथचरणपाणेश्चक्रपाणेः पूजया राजसु तथा कुपितेष्वपि चित्ते कलितं निश्चितं कलहागमनं युद्धलाभो येन सः आहुकिः आहुकिर्नाम राजा शोभनं हृदयं यस्य स सुहृत् मित्रमिव कृष्णपक्षपातीवेत्यर्थः। "सुहृद्दुर्हृदौ मित्रामित्रयोरि"ति निपातः। अधिकां मुदं दधौ सन्तोषं धृतवान्। सुहृःपक्षेऽपि कृष्णोत्कर्षं कलहकण्डूलवाहोराहुकेर्मोदहेतुरासीदित्यर्थः। उपमालङ्कारः ॥५५॥

टिप्पनी—कुपितेष्विति। अत्र हर्षलाभं प्रति चित्तकलितेति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तथा तत्रैव कलित-कलेति छेकानुप्रासश्च; ताभ्यां टीकोक्तोपमा संसृज्यते। रौद्रो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः। हर्षोऽत्र व्यभिचारी ॥५५॥

বাঙ্গালা—শ্রীকৃষ্ণের পূজা করায় অন্যান্য রাজারা সেইরূপ ক্রুদ্ধ হইলেও, আহুকিনামে কোন রাজা, মনে মনে যুদ্ধোপস্থিতির সম্ভাবনা করিয়া, কৃষ্ণেরই বন্ধুলোকের ন্যায় অত্যন্ত আনন্দ লাভ করিলেন ॥৫৫॥

अन्वयः—विवक्षतः असितयवनस्य सर्वं जगत् अशितुम् इव व्यात्तं विकरालं गुरु-कोप-रुद्धपदम् आस्यकुहरं रौद्रताम् आपत् ॥५६॥

टीका—गुर्विति। विवक्षतः किमपि वक्तुमिच्छतः। वचेः सनन्ताल्लटः शत्रादेशः। असितयवनस्य कालयवनस्य राज्ञः सम्बन्धि सर्वं जगदशितुमत्तुमिव व्यात्तं विवृतम् अत एव

विवृतोरुबाहुपरिघेण सरभसपदं निधित्सता ।
हन्तुमखिलनृपतीन् वसुना वसने विलम्बिनि निजे विचस्खले ॥५७॥
इति तत्तदा विकृतरूपमभजदविभिन्नचेतसम् ।
मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि राजमण्डलम् ॥५८॥

विकरालम् अतिविकृतम् । "करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च" इति वैजयन्ती । गुरुणा कोपेन रुद्धपदं प्रतिरुद्धवचनम् आस्यकुहरं वक्त्रविवरं रौद्रतां भयङ्करतामापत् । जगद्ग्रसितुमिवेति फलोत्प्रेक्षा व्यादानक्रिया निमित्ता ॥५६॥

टिप्पनी—गुरुणेति । अत्र अखिलपदेन हृद्प्रयोजनयोरभावेऽपि कालशब्दरूपलक्ष्यार्थप्रकाशनात् पदांशगतो नेयार्थतादोषः "संग्रामे निहताः शूरा वचोवाचलमागताः" इति दर्पणोदाहरणवत् । 'प्रतिघेन कालयवनस्य हृतवचनमापरौद्रताम्' इति पाठेनास्य परिहार्यः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—কালযবননামে রাজা কোন কথা বলিতে ইচ্ছা করিয়াছিলেন; তাহাতে সমস্ত জগৎ ভক্ষণ করিবার জন্যই যেন তাঁহার মুখবিবর বিবৃত হইয়াছিল; অথ চ গুরুতর কোপে সে বাক্য রুদ্ধ করিয়াছিল; তাঁহার এহেন মুখ ভয়ঙ্কর হইয়াছিল ॥৫৬॥

अन्वयः—अखिलनृपतीन् हन्तुं विवृतोरुबाहु-परिघेण सरभसपदं निधित्सता वसुना विलम्बिनि निजे वसने विचस्खले ॥५७॥

टीका—विवृतेति । अखिलनृपतीन् हन्तुं विवृतः प्रसारितः उरुबाहुरेव परिघ आयुधविशेषो येन तेन । "परिघः प्रतिघातेऽस्त्रेऽपि" इति हेमः । सरभसं ससत्वरं यत् पदं तन्निधित्सता निधातुमिच्छता । दधातेः सनन्तात् शतृ प्रत्ययः । वसुना तन्नाम्ना राज्ञा विलम्बिनि उत्पातवेगात् विस्रंसिनि निजे वसने स्वाम्बरे विचस्खले स्खलितं तच्च अस्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वसनस्रंसनस्य विशेषणगत्या स्खलनहेतुत्वात् काव्यलिङ्गं तच्च बाहुपरिघेति रूपकेण संसृज्यते ॥५७॥

टिप्पनी—विवृतेति । अत्र वसुना वसने इति च्छेकानुप्रासं तस्यापि च टीकोक्तसंसृष्टौ प्रवेशः । रौद्रो रसः, वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥५७॥

বাঙ্গালা—বসুনামে কোন রাজা, বিপক্ষভুক্ত সমস্ত রাজগণকে বধ করিবার জন্য, পরিঘস্বরূপ বিশাল বাহুযুগল বিস্তৃত করিয়া, বেগে পদক্ষেপ করিবার ইচ্ছামাত্রই নিজের স্খলিত বসনে চরণ জড়াইয়া যাওয়ায় পড়িয়া গেলেন ॥৫৭॥

अन्वयः—इति तदा विकृतरूपं तत् राजमण्डलम् अविभिन्नचेतसं हरिबोधिसत्त्वम् अभिमारबलम् इव भयङ्करताम् अभजत् ॥५८॥

टीका—इतीति । इतीत्थं तदा तस्मिन् काले विकृतरूपं रौद्रभीषणाकारं तद्राजमण्डलं मारबलमिव मदनसैन्यमिव । 'मदनो मन्मथो मारः" इत्यमरः । अविभिन्नचेतसमवि-

रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः।
सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सदसि मेदिनीभृतः ॥५९॥
स्फुरमाणनेत्रकुसुमोष्ठदलमभृत भूभृदङ्घ्रिपैः।
धूतपृथुभुजलतं चलितैर्द्रुतवातपातवनविभ्रमं सदः ॥६०॥

---

कृतचित्तं बोधिसत्त्वो बुद्धः। "बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायक" इति वैजयन्ती। स हरिरिवेत्युपमितसमासः। तं हरिबोधिसत्त्वमभि तत्समक्षमित्यर्थः। "अभिरभागे" इत्यभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। भयङ्करोतीति भयङ्करः। 'मेघर्तिभयेषु कृञ' इति खच् प्रत्यये मुमागमः। तस्य भावस्तत्तामभजत। उपमालङ्कारः। तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा तेन भग्नं तथा राजमण्डलमपि हरिणा भञ्ज्यत इति वस्तु व्यज्यते ॥५८॥

टिप्पनी---इतीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५८॥

বাঙ্গালা—(পূর্বকালে) অবিকৃতচিত্ত বুদ্ধদেবের সমক্ষে কামদেবের সৈন্য যেমন ভয়ঙ্কররূপ ধারণ করিয়াছিল; সেইরূপ সেই সময়ে ক্রোধে বিকৃতমূর্ত্তি সেই রাজগণ, (শ্রীকৃষ্ণের সমক্ষে) ভয়ঙ্কররূপ ধারণ করিল ॥৫৮॥

अन्वयः—अथ अनुचितभियः युद्धम् अभिलाषुकाः सदसि (स्थिताः) मेदिनीभृतः सान्द्रमुकुट-किरणोच्छलित-स्फटिकांशवः (सन्तः) रभसात् उदस्थुः ॥५९॥

टीका—रभसादिति। अथानन्तरम् अनुचितभियोऽनभ्यस्तसाध्वसाः। "अभ्यस्तेऽप्युचितमिति यादवः। अतएव युद्धमभिलाषुकाः युद्धार्थिनः। "लषपतेत्यादिना उकञ्-प्रत्यये 'न लोकेत्यादिना षष्ठीप्रतिषेधः। सदसि मेदनीभृतः सदसि स्थिताः चैद्यपक्षीया राजानः। सान्द्रैर्मुकुटकिरणैरुच्छलिताः स्फटिकांशवः सभाभित्तिस्फटिकमणिमयूखाः यैस्ते तथोक्ताः सन्तो रभसाद्वेगात्। 'उदस्थुरुत्थिताः। उदोऽनूर्द्ध्वकर्मणीत्यस्य प्रत्युदाहरणमेतत्। अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात् काव्यलिङ्गभेदः ॥५९॥

टिप्पनी---रभसादिति। अत्र युद्धवीरो रसः। तत्र उत्साहः स्थायीभावः, श्रीकृष्णश्च आलम्बन-विभावः, "विहितं मयाद्य सदसीदम्" इत्यादिभीष्मोक्तिरुद्दीपनविभावः, उत्थानमनुभावः, आक्षेपलभ्यो गर्वादिर्व्यभिचारी भावः। एवमन्यत्राप्युन्नेयम्। न चात्र प्रकृतो रौद्र एव रस इति वाच्यम्, रक्तनेत्रताद्यदर्शनात् "रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः" इति साहित्यदर्पणात्। अतएवाग्रिमश्लोके रौद्र एव रसः, नेत्रे कुसुमत्वारोपेण रक्ततावगमात्। समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥५९॥

বাঙ্গালা—তাহার পর, নির্ভয়চিত্ত যুদ্ধাভিলাষী সভাস্থিত রাজগণ, বেগে গাত্রোত্থান করিলেন; তখন তাঁহাদের মুকুটের নিবিড় কিরণের সহিত সভাভিত্তিগত স্ফটিকের কিরণগুলি সম্মিলিত হইল ॥৫৯॥

अन्वयः—सदः, स्फुरमाणनेत्रकुसुमोष्ठदलं धूत-पृथुभुजलतं चलितैः भूभृदङ्घ्रिपैः द्रुतवातपातवनविभ्रमम् अभृत ॥६०॥

हरिमप्यमंसत तृणाय कुरुपतिमजीगणन्न वा ।
मानतुलितभुवनत्रितयाः सरितः सुतादबिभयुर्न भूभृतः ॥६१॥
गुरु निःश्वसन्नथ विलोलमदथु वपुर्वचोविषम् ।
कीर्णदशनकिरणाग्निकणः फणवानिवैष विससर्ज चेदिपः ॥६२॥

---

टीका—स्फुरदमाणीति । स्फुरदमाणानि नेत्राण्येव कुसुमान्योष्ठा एव दलानि च यस्मिन् कर्मणि तद्यथा तथा चलताः कम्पिताः पृथवो भुजा एव लताः शाखा यस्मिन् कर्मणि तत् यथा तथा चलितैः भूभृतो राजानस्त एव अङ्घ्रिपाः पादपास्तैः सदः सभामण्डपं द्रुतः शीघ्रो वातपातो वायुप्रचारो यस्य तस्य वनस्य विभ्रमं शोभाम् । 'विभ्रमः संशये भ्रान्तौ शोभायाञ्चेति वैजयन्ती । अभृत दधार । भृञो लुङि तङ्, उश्चेति सिचः कित्त्वाद्गुणाभावः, ह्रस्वादङ्गादिति सलोपः । अत्र वनविभ्रमभितीति साहृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना नेत्रकुसुमेत्यादिरूपकोत्थापितेति सङ्करः ॥६०॥

टिप्पनी—स्फुरदमाणीति । अत्र रौद्रो रसः, समासबाहुल्यात् उद्धतघटनात्युज्ज्वलाच्च ओजो गुणः, गौड़ी च रीतिः ॥६०॥

বাঙ্গালা—বেগবান্ বায়ুর সঞ্চারে বনের যেরূপ শোভা হয়, তৎকালে সেই সভাভবন সেইরূপ শোভা ধারণ করিল। কেন না, রাজগণরূপ বৃক্ষসকল চলিতে লাগিল; তখন সে সকলের নয়নরূপ পুষ্প এবং ওষ্ঠরূপ পত্রস্পন্দিত হইতে থাকিল; আর বিশাল বাহুরূপ লতাগুলিও কম্পিত হইতে লাগিল ॥৬০॥

अन्वयः—मान-तुलितभुवन-त्रितयाः भूभृतः हरिम् अपि तृणाय अमंसत, कुरुपतिं न अजीगणन्, सरितः सुतात् वा न अबिभयुः ॥६१॥

टीका—हरिमिति । मानतुलितभुवनत्रितया अहङ्कारावधीरितजगत्त्रयाः भूभृतश्चैद्यपक्षा राजानः । हरिमपि तृणायामंसत तृणसममन्यन्त । तथा लघु मेनिरे इति अनादरोक्तिः । मन्यतेः कर्त्तरि लुङि च्लेः सिच्, अनुदात्तत्वादिट् प्रतिषेधः, "मन्यकर्मणि इति चतुर्थी । कुरुपतिं च नाजीगणन्न धर्मराजं गणयन्ति स्मेत्यर्थः । गणेर्णौ चङि "ई च गणः" इत्यभ्यासस्येकारः । सरितः सुताद्भीष्मादपि नाबिभयुर्न भीताः । बिभेतेर्लङि श्नाविति द्विर्भावे "सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशः," "जुसि चेति गुणः । अत्र राजसु हर्य्यवमानाद्यनेकक्रियायौगपद्यात्समुच्चयः इति सर्वङ्कषाकारः ॥६१॥

टिप्पनी—हरिमिति । अत्र युद्धवीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६१॥

বাঙ্গালা—যাঁহারা গর্বে ত্রিভুবনকেই অবজ্ঞা করিতেন, শিশুপালপক্ষীয় সেই সকল রাজারা, শ্রীকৃষ্ণকেও তৃণতুল্য মনে করিলেন, যুধিষ্ঠিরকেও গ্রাহ্য করিলেন না এবং ভীষ্মকেও ভয় করিলেন না ॥৬১॥

अन्वयः—अथ एषः चेदिपः फणवान् इव, गुरु निःश्वसन् विलोलमदथु, वपुः कीर्ण-दशन-किरणाग्नि कणः (सन्) वचोविषं विससर्ज ॥६२॥

किमहो नृपाः सममभीभिरुपपतिसुतैर्न पञ्चभिः ।
वध्यमभिहत भुजिष्यममुं सह चानया स्थविरराजकन्यया ॥६३॥
अथवाध्वमेव खलु यूयमगणितमरुद्गणौजसः ।
वस्तु कियदिदमयं न मृधे मम केशवस्य सुखमीक्षितुं क्षमः ॥६४॥

---

**टीका**—गुर्विति । अथ च चेदिपः फणवान् फणीव । गुर्वधिकं निःश्वसन् फूत्कुर्वन् विलोलं सदवथु ससन्तापम् । "सन्तापो दवथुरित्यनेकार्थादिति सज्जनः । तद्वपुर्यस्य स विलोलसदवथुवपुः । ट्वितोऽथुच् । कीर्णा विक्षिप्ता दशनकिरणा अग्निकणा इव यस्य सः तथा सन् वचो विषमिव तद्वचोविषं विससर्ज विषप्रायं वच उज्जगारेत्यर्थः । अतः फणवानिवेति व्यस्तोपमालिङ्गात्तत्रोपमितसमासाश्रयणम् ॥६२॥

**टिप्पनी**—गुर्विति । अत्र पूर्णोपमालङ्कारः, स्पष्टमेव क्रोधप्रतीतेः रौद्रो रसः, समासबाहुल्यात् उद्धतघटनाव्यञ्जकत्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥६२॥

**বাঙ্গালা**—তদনন্তর শিশুপাল সর্পের ন্যায় গুরুতর নিঃশ্বাস পরিত্যাগ করতঃ, বিষের ন্যায় বাক্য উদ্গীরণ করিতে লাগিলেন ; তখন তাঁহার শরীর সন্তপ্ত ও কম্পিত হইতেছিল এবং অগ্নিস্ফুলিঙ্গের ন্যায় দন্তের কিরণ বিক্ষিপ্ত হইতেছিল ॥৬২॥

**अन्वयः**—(हे) नृपाः ! अमीभिः पञ्चभिः उपपतिसुतैः समम् अनया स्थविरराजकन्यया च सह वध्यं भुजिष्यम् अमुं किं न अभिहत ? अहो ! ॥६३॥

**टीका**—अथैतद्वचोविषमेव चतुर्भिराह । किमित्यादि । हे नृपाः ! अमीभिः पञ्चभिरुपपतिसुतैः समं जारजैः सह पाण्डवानां क्षेत्रजत्वादित्थं प्रलापः । अनया स्थविरराजकन्यया वृद्धयाङ्गनया च सह । "कन्या कुमारिकानार्योरिति विश्वः । भीष्मस्येव रैतस्कन्येन निन्दा । वध्यं वधार्हम् । अराज्ञो राजार्हपूजाग्रहणापराधादिति भावः । अराजत्वं व्यनक्ति । अमुं भुजिष्यं किङ्करं कंसपशुपालनादिति भावः । "भुजिष्यः किङ्करो मत इति हलायुधः । किं नाभिहत किमिति न मारयत किन्तु अभिहतेत्यर्थः । हन्तेर्वधार्थे लोट् लोटो "लङ्वदिति थस्य तादेशः । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अतो अति वध्योऽपि न हन्यत इत्याश्चर्यम् । अत्रामर्षानुभावो वागारम्भः । "क्रोधः कृतापराधेषु स्थिरोऽमर्ष इतीर्यते" इति ॥६३॥

**टिप्पनी**—किमिति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६३॥

**বাঙ্গালা**—হে রাজগণ ! আপনারা, ঐ পাঁচজন উপপতিপুত্র পাণ্ডবের সহিত এবং এই বৃদ্ধ রাজকন্যাটার (ভীষ্মের) সহিত, এই ভৃত্য ও বধযোগ্য কৃষ্ণটাকে বধ করিতেছেন না কেন ? কি আশ্চর্য্য ! ॥৬৩॥

**अन्वयः**—अथवा अगणितमरुद्गणौजसः यूयम् आध्वम् एव खलु । इदं कियत् वस्तु ; अयं मृधे केशवस्य मम सुखम् ईक्षितुं न क्षमः ॥६४॥

विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ ।
यातु निकषमधियुद्धमसौ वचनेन किं भवतु साध्वसाधु वा ॥६५॥
अचिरान्मया सह गतस्य समरमुरगारिलक्ष्मणः ।
तीक्ष्णविशिखमुखपीतमसृक् पततां गणैः पिबतु सार्द्धमुर्वरा ॥६६॥

---

**टीका**—अथवेति । अथवा अगणितमच्चण्डौजसः अवधीरितसुरसङ्घमत्त्वा यूयमास्व मेव तूष्णीं तिष्ठतैव खलु । आस्तेर्लोटि धि चेति सकारलोपः । इदं कृष्णाहननं कियद्वस्तु कियत्कार्य्यम् अल्पमित्यर्थः । कुतः अयं कृष्णो मृधे युद्धे । "मृधमास्कन्दनं सङ्ख्यमिति युद्धपर्य्यायेष्वमरः । केवलस्यैकाकिनो ममैव मुखमीक्षितुं न क्षमः युष्माकं का वार्त्तेति भावः । एतेनास्य बलगर्वो व्यज्यते "आत्मोत्कर्षोऽन्यधिक्कारो यद्वः बलविभूतिभिरिति लक्षणात् ॥६४॥

**टिप्पनी**—अथवेति । अत्र द्वितीये चतुर्थे च पादे छेकानुप्रासोऽलङ्कारः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

**বাঙ্গালা**—অথবা আপনারা দেবগণের বলবীর্য্যকেও গ্রাহ্য করেন না; সুতরাং আপনারা বসিয়াই থাকুন। এই কৃষ্ণকে বধ করা কতটুকু বিষয়! এই কৃষ্ণ, যুদ্ধে কেবল আমার মুখ দর্শন করিতেও সমর্থ নহে ॥৬৪॥

**अन्वयः**—नदीज धर्मजौ अशेषपरिषदि यम् उत्तमं विदतुः, असौ अधियुद्धं निकषं यातु ; वचनेन साधु असाधु वा किं भवतु ॥६५॥

**टीका**—विदतुरिति । किञ्च नदीजधर्मजौ भीष्मयुधिष्ठिरौ । अशेषपरिषदि समग्रसंसदि । "परिषत्संसदिति विश्वः । यं कृष्णमुत्तमं विदतुर्विदितवन्तावित्यर्थः । "विदो लटो वेति तसोऽतुसादेशः । असौ कृष्णः अधियुद्धं युद्धे । विभक्त्यर्थेऽव्ययीभावः निकषं निकषणं परीक्षातामित्यर्थः यातु । ततः साधुत्कर्षोऽसाध्वनुत्कर्षो वा भवतु व्यक्तमस्त्वित्यर्थः । वचनेन किं वृथा वाग्वीर्य्यैरलमित्यर्थः । अत्रापि गर्वामर्षौ व्यज्येते ॥६५॥

**टिप्पनी**—विदतुरिति । अत्र किं भवतु अपि तु किमपि नेत्यर्थापत्तिरलङ्कारः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

**বাঙ্গালা**—ভীষ্ম ও যুধিষ্ঠির সমস্ত সভাটার মধ্যে যাহাকে শ্রেষ্ঠ বলিয়া মনে করিয়াছে; সে কৃষ্ণ যুদ্ধেই পরীক্ষা প্রাপ্ত হউক, বাক্য দ্বারা উৎকর্ষ বা অপকর্ষ কি স্থির হইবে ॥৬৫॥

**अन्वयः**—उर्वरा पततां गणैः सार्द्धम् अचिरात् मया सह समरं गतस्य उरगारिलक्ष्मणः तीक्ष्णविशिख मुख-पीतम् असृक् पिबतु ॥६६॥

**टीका**—अचिरादिति । किञ्च मया सह समरं गतस्योरगारिलक्ष्मणः गरुड़ध्वजस्य सम्बन्धि तीक्ष्णैर्विशिखमुखैः पीतं मद्बाणोच्छिष्टमित्यर्थः । असृक् रक्तमुर्वरा भूमिः ।

अभिधाय रूक्षमिति मा स्म गम इति पृथासुतैरिताम्।
वाचमनुनयपरां स ततः सहसावकर्ण्य निरियाय संसदः ॥६७॥
गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः।
क्षान्तिमहितमनसो जननीस्वसुरात्मजाय चुक्रुधुर्न पाण्डवाः ॥६८॥

---

"उर्वरा सर्वसस्याढ्याभूमौ स्याद्भूमिमात्रके" इति विश्वः। पततां गणैः पक्षिसमूहैः। "पतत्पत्ररथाण्डजाः" इत्यमरः। सार्द्धमचिरात् पिबतु। अद्यैवाहमेनं हनिष्यामीत्यर्थः। अत्रापि अमर्ष एवेति भावः ॥६६॥

**टिप्पनी**—अचिरादिति। अत्र नर-सुरेति पीत-पतेति च छेकानुप्रासोऽलङ्कारः, रौद्रो रसः, प्रसादो गुणः वैदर्भी च रीतिः ॥६६॥

**বাঙ্গালা**—কৃষ্ণ, শীঘ্রই আমার সঙ্গে যুদ্ধে উপস্থিত হইবে; তখন আমার তীক্ষ্ণ বাণের মুখ উহার রক্ত পান করিবে; তাহার অবশিষ্ট যে রক্ত থাকিবে, তাহা পক্ষিগণের সহিত ভূমি, পান করিবে ॥৬৬॥

**अन्वयः**—सः इति रूक्षम् अभिधाय पृथासुतैरिताम् अनुनयपरां 'मास्म गमः' इति वाचम् अवकर्ण्य सहसा ततः संसदः निरियाय ॥६७॥

**टीका**—अभिधायेति। स चैद्य इतीत्थं रूक्षं परुषमभिधाय ततः पृथासुतैः पार्थैरीरितामुक्तामनुनयपरां मास्म गमो न गच्छेति वाचम। स्मोत्तरे लङ् चेति चकारान्मेरा-शिषि लुङि पुषादित्वात् च्लेरङादेशः। "न माङ्योगे" इत्यडभावः। अवकर्ण्य अनादरेण श्रुत्वा सहसा संसदः सदसो निरियाय निर्ययौ अमर्षादेवेति भावः ॥६७॥

**टिप्पनी**—अभिधायेति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

**বাঙ্গালা**—শিশুপাল এইরূপ নিষ্ঠুর কথাগুলি বলিলে পর, পাণ্ডবেরা বলিলেন—"আপনি যাইবেন না", কিন্তু শিশুপাল সেই সানুনয় বাক্য অবজ্ঞাসহকারে শুনিয়া তৎক্ষণাৎ সেই সভা হইতে নির্গত হইলেন ॥৬৭॥

**अन्वयः**—निसर्गदक्षिणाः क्षान्ति-महित-मनसः पाण्डवाः गृहम् आगताय जननीस्वसुः आत्मजाय कृपया कथम् अपि न चुक्रुधुः ॥६८॥

**टीका**—गृहमिति। निसर्गदक्षिणाः स्वभावतो दाक्षिण्यसम्पन्नाः परच्छन्दानुवर्तिन इत्यर्थः। "दक्षे वाक्ये कुशलावामपरच्छन्दानुवर्त्तिषु दक्षिणा" इति वैजयन्ती। किञ्च क्षान्त्या क्षमया महितमनसः पूजितचित्ताः क्षमावन्तः पाण्डवाः किञ्च गृहमागतायाभ्यागतायेत्यर्थः। किञ्च जननीस्वसुर्मातृष्वसुरात्मजाय शिशुपालाय कृपया च कथमपि असह्यापराधेऽपीत्यर्थः न चुक्रुधुः न चुक्रुधुः। सद्योवध्यस्यापि तस्याभ्यागतत्वात् मातृबन्धुत्वात् स्वयं क्षान्तत्वात् दाक्षिण्यात् कृपया च कथमपि जिघांसां न चक्रुरित्यर्थः। "क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी। अत्राभ्यागतत्वादिविशेषणानां साभिप्रायत्वादकोपहेतुत्वाच्च परिकरः काव्यलिङ्गे सति सापेक्षत्वात् संकीर्यते ॥६८॥

चलितं ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः।
तूर्णमथ ययुमिवानुययुर्दमघोषसूनुमवनीशसूनवः ॥६९॥
विशिखान्तराण्यतिपपात सपदि जवनैः स वाजिभिः।
द्रष्टुमलघुरभसापतिता वनिताश्चकार न सकामचेतसः ॥७०॥

---

टिप्पनी—स्वहमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

বাঙ্গালা—স্বভাবতই উদারস্বভাব এবং ক্ষমাগুণে প্রশস্ত-হৃদয় পাণ্ডবগণ, গৃহে অভ্যাগত এবং জননীর ভগিনীপুত্র (মাসতুত ভাই) শিশুপালের প্রতি দয়াবশতঃ কোন রূপেই ক্রুদ্ধ হইলেন না ॥৬৮॥

अन्वयः—अथ अवनीशसूनवः ततः अवनिपति-यज्ञभूमितः अनभिहतेच्छं चलितं दमघोषसूनुं ययुम् इव तूर्णम् अनुययुः ॥६९॥

टीका—चलितमिति। अथ चैद्यनिर्य्याणानन्तरम् अवनीशसूनवः तत्पक्षराजपुत्राः ततस्तस्याः अवनिपतेर्युधिष्ठिरस्य यज्ञभूमितो यज्ञभूमेर्दैवयजनात्। पञ्चम्यास्तसिल्। अनभिहतेच्छमप्रतिहतमनोरथं यथा तथा चलितं प्रस्थितं दमघोषसूनुं शिशुपालम्। याति परलोकमिति ययुः परलोकप्रापकोऽश्वमेधीयोऽश्वः। "ययुरश्वोऽश्वमेधीय" इत्यमरः। "योऽद्य चेति यातेरौणादिक उक्, द्विवच्च। तं ययुमिव तूर्णमनुययुः ययुरपि राजकैराजपुत्रैरन्वीयते। "चतुःशता रक्षन्तीति श्रुतेः अश्वमेध्याश्वोपमया चैद्यस्य वध्यत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥६९॥

टिप्पनी—चलितमिति। अत्र श्रौतीपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

বাঙ্গালা—তাহার পর, পূর্বকালে যেমন রাজপুত্রেরা অশ্বমেধীয় অশ্বের পশ্চাৎ পশ্চাৎ গমন করিতেন, তেমন শিশুপালপক্ষীয় রাজপুত্রেরা, যুধিষ্ঠিরের সেই যজ্ঞস্থান হইতে শিশুপালের পশ্চাৎ পশ্চাৎ গমন করিতে লাগিলেন; শিশুপালও তখন যথেচ্ছভাবে গমন করিতে থাকিলেন ॥৬৯॥

अन्वयः—सः जवनैः वाजिभिः सपदि विशिखान्तराणि अतिपपात। द्रष्टुम् अलघु-रभसापतिताः वनिताः सकामचेतसः न चकार ॥७०॥

टीका—विशिखान्तराणीति। स चैद्यः सपदि जवनैर्वेगशालिभिर्वाजिभिरश्वैर्विशिखान्तराणि रथ्यान्तराणि। "रथ्या प्रतोली विशिखेत्यमरः। अतिपपात अतिचक्राम। अतएव द्रष्टुमलघुरभसेनातिवेगेनापतिता आधावन्तीर्वनिताः सकामानि साभिलाषाणि चेतांसि चित्तवृत्तयो यासां ताः सकामचेतसः सफलमनोरथा इत्यर्थः। न चकार अतिशीघ्रलङ्घनान्न दर्शनावकाशस्तासामासीदित्यर्थः। अतएव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥७०॥

टिप्पनी—विशिखेति। अत्र जव-वाजीति इत्यनुप्रासेन टीकोक्तकाव्यलिङ्गं सङ्कीर्य्यते। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७०॥

ক্ষণমীক্ষিতঃ পথি জনেন কিমিদমিতি জল্পতা মিথঃ ।
প্রাপ্য শিবিরমবিশঙ্কিমনাঃ সমনীনহদ্দ্রুতমনীকিনীমসৌ ॥৭১॥
ত্বরমাণশাঙ্খিকসবেগবদনপবনাভিপূরিতঃ ।
শৈলকটকতটভিন্নরবঃ প্রণনাদ সান্নহনিকোঽস্য বারিজঃ ॥৭২॥

---

**বাঙ্গালা**—শিশুপাল বেগগামী ঘোটকে আরোহণ করিয়া, তাড়াতাড়ি অন্যান্য রাস্তা অতিক্রমণ করিলেন ; সেই জন্য যে সকল স্ত্রীলোক তাঁহাকে দেখিবার নিমিত্ত অত্যন্তবেগে উপস্থিত হইয়াছিল, তিনি তাহাদিগকে সফলমনোরথ করিতে পরিলেন না ॥৭০॥

**অন্বয়ঃ**—অসৌ পথি মিথঃ 'কিম্ ইদম্' ইতি জল্পতা জনেন ক্ষণম্ ঈক্ষিতঃ (সন্) শিবিরং প্রাপ্য অবিশঙ্কিমনাঃ অনীকিনীং দ্রুতং সমনীনহৎ ॥৭১॥

**টীকা**—ক্ষণমিতি । অসৌ চৈদ্যঃ পথি কিমিদমিতি মিথঃ জল্পতা কোঽয়মনর্থঃ সংবৃত্ত ইতি পরস্পরমালপতা জনেন ক্ষণমীক্ষিতঃ সন্ শিবিরং স্বকটকং প্রাপ্যাবিশঙ্কিমনা নিঃশঙ্কচিত্তঃ দ্রুতং শীঘ্রম্ অনীকিনীং সেনাং সমনীনহৎ সন্নাহয়তি স্ম । নহ্যতেঃ সম্পূর্বকাৎ ণৌ লুঙি চঙ্যুপধায়া হ্রস্বঃ অভ্যাসদীর্ঘশ্চ । শিবিরং শকটমিতি কেচিৎ । এতেনাস্য রৌদ্রস্থায়িনঃ কোপস্য প্ররূঢ়ত্বং বেদিতব্যম্ ॥৭১॥

**টিপ্পনী**—ক্ষণমিতি । অত্র ক্ষণমীক্ষিত ইতি ছেকানুপ্রাসোঽলঙ্কারঃ, রৌদ্রো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭১॥

**বাঙ্গালা**—"এ কি উপস্থিত হইল!" এইরূপ পরস্পর আলাপ করতঃ লোকেরা শিশু-পালকে পথে ক্ষণকালমাত্র দেখিল ; পরে তিনি শিবিরে উপস্থিত হইয়া নিঃশঙ্কচিত্তে তাড়া-তাড়ি সৈন্যসজ্জা করিলেন ॥৭১॥

**অন্বয়ঃ**—ত্বরমাণ-শাঙ্খিক-সবেগ-বদন-পবনাভিপূরিতঃ শৈল-কটক-তট-ভিন্ন রবঃ অস্য সান্নহনিকঃ বারিজঃ প্রণনাদ ॥৭২॥

**টীকা**—ত্বরমাণেতি । শঙ্খঃ শিল্পমস্যেতি শাঙ্খিকঃ । "তদস্য শিল্পম্" ইতি ঠক্ । ত্বরমাণস্য জবমানস্য শাঙ্খিকস্য যঃ সবেগো বদনপবনো মুখমারুতঃ তেনাভি-পূরিতঃ প্রধ্মাতঃ শৈলানাং কটকতটেষু নিতম্বপ্রদেশেষু ভিন্নরবো মূর্চ্ছিতপ্রতিধ্বনিরস্য চৈদ্যস্য সম্বন্ধি সন্নহনং প্রয়োজনমস্যেতি সান্নহনিকো যোধানাং বর্মসন্নাহপ্রবর্ত্তক ইত্যর্থঃ । তদস্য প্রয়োজনমিতি ঠক্ । বারিজঃ শঙ্খঃ । "বারিজঃ শঙ্খপদ্মযোরিতি বিশ্বঃ । প্রণনাদ দধ্বান সন্নহনশঙ্খং দধ্মাবিত্যর্থঃ । "উপসর্গাদসমাসেঽপি ণোপদেশস্যেতি ণত্বম্ । এতেনাস্য মহানুৎসাহো বীররসস্থায়ী ব্যজ্যতে ॥৭২॥

**টিপ্পনী**—ত্বরমাণেতি । অত্র যুদ্ধবীরো রসঃ, সমাসবাহুল্যাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭২॥

**বাঙ্গালা**—শঙ্খবাদক ত্বরান্বিত হইয়া বেগবান্ মুখবায়ু দ্বারা পরিপূরণ করিলে, শিশু-পালের যুদ্ধসজ্জার শঙ্খ, গুরুতর রব করিয়া উঠিল ; তখন পর্বতের নিতম্বদেশে যাইয়া তাহার প্রতিধ্বনি হইল ॥৭২॥

जगदन्तकालसमवेतविषदविषमैरितारवम्।
धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्य्यमावधि ॥७३॥
सहसा ससम्भ्रमविलोलसकलजनतासमाकुलम्।
स्थानमगमदथ तत्परितश्चलितोडुमण्डलनभःस्थलोपमाम् ॥७४॥
दधती भयानकतरत्वमुपगतवतः समानताम्।
धूमपटलपिहितस्य गिरेः समवर्मयन् सपदि मेदिनीभृतः ॥७५॥

---

अन्वयः—अन्वयानुसारेणैवं निबद्धमिदं पद्यम् ॥७३॥

टीका—जगदिति। जगदन्तकाले कल्पान्ते समवेता मिलिता ये विषदास्तोयदाः पुष्करावर्त्तकादयो मेघाः। "विषं तु गरले तोये" इति विश्वः। तैर्विषमं दारुणं यथा तथेरित उत्पादितो य आरवः स इवारवो यस्य तत्। धीरे गम्भीरे निजरवे विलीना अन्तर्गता गुरवः प्रतिशब्दाः शब्दान्तराणि यस्य तत् अस्य चैद्यस्य रणतूर्य्यं रणदुन्दुभिराबधि आहतम्। आहतेः कर्मणि लुङ्, आत्मनेपदेष्वन्यतरस्यामिति हनो वधादेशः। अत्राप्युत्साहो व्यज्यते। उपमालङ्कारः ॥७३॥

टिप्पनी—जगदन्तेति। अत्र विष-विषेति च्छेकानुप्रासेन टीकोक्तोपमा संसृज्यते। युद्धवीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥७३॥

বাঙ্গালা—প্রলয়কালে সম্মিলিত পুষ্করাবর্ত্তকপ্রভৃতি মেঘসমূহ যেরূপ ভীষণ রব করিয়া থাকে, সেইরূপই যাহার ভীষণ রব এবং নিজেরই গম্ভীর রবের মধ্যে যাহার গুরুতর প্রতিধ্বনি বিলীন হইয়া থাকে; শিশুপালের সেই রণভেরী বাজিয়া উঠিল।৭৩॥

अन्वयः—अथ सहसा ससम्भ्रम-विलोल-सकल-जनता-समाकुलं तत् स्थानम्, परितः चलितोडु-मण्डल-नभःस्थलो-पमाम् अगमत् ॥७४॥

टीका—सहसेति। अथ रणदुन्दुभिताड़नानन्तरं सहसा झटिति ससम्भ्रमं सत्वरं यथा तथा विलोलया चलन्त्या सकलया समग्रया जनतया जनसमूहेन समाकुलं सङ्कीर्णं तत् स्थानं परितश्चलितं प्रक्षिप्तम् उडुमण्डलं ज्योतिश्चक्रं यस्मिन् तस्य नभःस्थलस्योपमां सादृश्यमगमत्। अत्रोडुमण्डलस्य चलनासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिः उपमा तु तदुज्जीविता प्रतीतिमात्रसारा तदङ्गं तत्रैव चमत्कारस्फुरणात्। "पुष्पं प्रवालोपहितं यदि स्यादित्यादिवत् ॥७४॥

टिप्पनी—सहसेति। अत्र द्वितीयपादे-कल कुलेति च्छेकानुप्रासस्येति टीकोक्तातिशयोक्त्युपमालङ्कारस्य पुनः संसृष्टिः। युद्धवीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥७४॥

বাঙ্গালা—সেই রণভেরী বাজিয়া উঠিলে পরই, তৎক্ষণাৎ সমস্ত লোকগুলি ব্যস্ততার সহিত ছুটাছুটি করিতে লাগিল; তাহাতে সেই স্থানটা, নক্ষত্রসমূহ ছুটাছুটি করিতে থাকিলে আকাশের সাদৃশ্য লাভ করিল ॥৭৪॥

परिमोहिणा परिजनेन कथमपि चिरादुपाहृतम्।
वर्म करतलयुगेन महत् तनुचूर्णपेषमपिषद्रुषापरः॥७६॥
रणसम्मदोदयविकासिबलकलकलाकुलीकृते।
आरिमशकदभिरोपयितुं द्विरदे मदच्युति जनः कथञ्चन॥७७॥

---

अन्वयः—मेदिनीभृतः धूमपटल पिहितस्य भयानकतरत्वम् उपगतवतः गिरेः समानता दधतः (सन्तः) सपदि समवर्म्मयन्॥७५॥

टीका—दधत इति। मेदिनीभृतो राजानः। धूमपटलेन पिहितस्य छादितस्य अतएव भयानकतरत्वम् अतिभयङ्करत्वम् उपगतवतो गिरेः समानतां सादृश्यं दधतो दधानाः सपदि समवर्मयन् संवर्मयन्ति स्म। सन्नद्धवर्माणश्चित्यर्थः। "सत्यापपाशे-त्यादिना णिच्। उपमालङ्कारः॥७५॥

टिप्पनी—दधत इति। अत्र युद्धवीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥७५॥

বাঙ্গালা—পর্বত, ধূমরাশিতে আবৃত হইয়া অতি ভয়ঙ্কর আকৃতি ধারণ করিয়া থাকে; রাজারাও তাদৃশ পর্বতের সাদৃশ্য ধারণ করতঃ, তাড়াতাড়ি বর্ম্ম পরিধান করিলেন॥৭৫॥

अन्वयः—परः परिमोहिणा परिजनेन चिरात् कथम् अपि उपाहृतं महत् वर्म्म रुषा करतल-युगेन तनु-चूर्ण-पेषम् अपिषत्॥७६॥

टीका—परिमोहिणेति। परोऽन्यो नृपः परिमुह्यतीति परिमोही। सम्पृचेत्या-दिना इनुप्रत्ययः। तेन खेदयुक्तेनेत्यर्थः। परिजनेन सेवकजनेन कथमपि विलम्बेन कष्टसृष्ट्या चिरादुपाहृतम् आनीतं महद्वर्म सन्नाहं करतलयुगेन पाणितलद्वयेन तनुचूर्णं-पेषं तनुचूर्णं पिष्ट्वा। "शुष्कचूर्णरूक्षेषु पिषः" इति णमुल्प्रत्ययः। अपिषत् चूर्णि-तवान् तच्च जिगीषोर्दुर्निमित्तमिति भावः। "कषादिषु यथाविध्यनुप्रयोग" इत्यनुप्रयोगः। पिषेर्लुङि पुषादिना च्लेरङादेशः। अत्र वर्मणः पेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिश-योक्तिः। तया च अमानुषं वीर्यमस्य व्यज्यते॥७६॥

टिप्पनी—परेति। अत्र विलम्बकारिणं परिजनं प्रति उग्रतारूपो व्यभिचारी भावो व्यज्यते। युद्धवीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥७६॥

বাঙ্গালা—বিষণ্ণচিত্ত ভৃত্য, অত্যন্ত বিলম্ব করিয়া কোন রকমে বৃহৎ বর্ম্ম আনিয়া দিল; তখন অন্য কোন রাজা ক্রোধবশতঃ করযুগল দ্বারা সেই বর্ম্মটাকে নিষ্পেষণ করিয়া, সূক্ষ্ম চূর্ণে পর্য্যবসিত করিয়া ফেলিলেন॥৭৬॥

अन्वयः—रण-सम्मदोदय-विकासि-बल-कलकलाकुलीकृते मदच्युति द्विरदे जनः कथञ्चन आरिम् अधिरोपयितुम् अशकत्॥७७॥

टीका—रणेति। रणेन रणारम्भेण यः सम्मदो हर्षः। "प्रमदसम्मदौ हर्षे" इति

परितश्च धौतमुखरुक्मविलसदहिमांशुमण्डलाः ।
तेनुरतनुवपुषः पृथिवीं स्फुटलक्ष्यतेजस इवात्मजाः श्रियः ॥७८॥
प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्त्तिनः ।
पेतुरशनय इवाशनकैर्गुरुनिस्वनव्यथितजन्तवो रथाः ॥७९॥

---

निपातः । तस्योदयेन जन्मना क्षिप्ताभिर्विस्तारिभिर्बलकलकलैः सैन्यकोलाहलैराकुलीकृते संक्षोभिते । अतएव मदं च्योततीति मदच्युति मदस्राविणि । क्विप् । द्विरदे गजे । जनः परिजनः शारिं पर्य्याणम् । "ना पर्य्याणे विहङ्गे स्त्री शारिर्द्यूतगुडे न पुमिति" वैजयन्ती । "शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थं गजपर्य्याणे व्यवहारान्तरे क्वचिदिति" विश्वप्रकाशश्च । अधिरोपयितुम् आरोपयितुं कथञ्चन कृच्छ्रेण शकत शशाक । शकेर्लुङि पुषादित्वाच्च्लेरङादेशः । अत्र विशेषणगत्या सेनाकलकलस्य मदहेतुत्वान्मदस्य शारिदुरारोपत्वहेतुत्वाच्च काव्यलिङ्गद्वयं तत्सापेक्षत्वात् सङ्कीर्य्यते ॥७७॥

टिप्पनी—रणेति । अत्र कलाकुलीति च्छेकानुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते । युद्धवीरो रसः, समासबाहुल्यं तु ओजो गुणः, गौड़ी च रीतिः ॥७७॥

বাঙ্গালা—যুদ্ধের আমোদ উপস্থিত হওয়ায় সৈন্যগণ হইতে বিশাল কোলাহল উঠিল; সেই কোলাহল হস্তিগণকে আকুল করিয়া ফেলিল; তাহাতে সেই হস্তিগণ মদজল নিঃসারণ করিতে লাগিল; সুতরাং মাহুতরা কোন রকমে সেই হস্তিগুলিতে পালান লাগাইতে পারিল ॥৭৭॥

अन्वयः—धौत-मुख रुक्म-विलसदहिमांशु-मण्डलाः (अतएव) स्फुट-लक्ष्य-तेजसः इव (स्थिताः) अतनुवपुषः श्रियः आत्मजाः च परितः पृथिवीं तेनुः ॥७८॥

टीका—परित इति । किंचेति चार्थः । धौतेषु शोधितेषु मुखरुक्मेषु मुखस्थरुक्माभरणेषु विलसत्प्रत्येकं प्रतिफलदहिमांशुमण्डलमर्कबिम्बं येषां ते तथोक्ताः । अतएव स्फुटलक्ष्यमन्तर्गत्वा बहिःस्फुरितं तेजोऽन्तःसारो येषां ते इव स्थिता इत्युत्प्रेक्षा । तेजो व्याख्यातं पञ्चमे तेजो निरोधेत्यत्र । अतनुवपुषो महाकायाः श्रियः आत्मजाः अश्वाः । "लक्ष्मीपुत्त्रोऽश्व आढ्यो चेति वैजयन्ती । परितः पृथिवीं तेनुः व्याप्नुवन्तः ॥७८॥

टिप्पनी---परितः इति । अत्र तनुवपुःशब्दयोः पर्य्यायतया तयोरर्थस्यापाततः पुनरुक्तताप्रतीतेः परस्च भेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, स्फुटलक्ष्यतेजस्त्वं प्रति धौतेत्यादिपदस्यार्थो हेतुरिति काव्यलिङ्गम्, तेनुरतन्विति च्छेकानुप्रासश्चेत्येतेषां टीकोक्तोत्प्रेक्षया सह संसृष्टिः । समासबाहुल्यं तु बन्धस्य प्रगाढ़त्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥७८॥

বাঙ্গালা—অশ্বগণের মুখস্থিত পরিমার্জিত স্বর্ণালঙ্কারগুলির উপরে সূর্য্যমণ্ডলের প্রতিবিম্ব পড়িয়াছিল; তাহাতে সেই অশ্বগণের আভ্যন্তরিক তেজ যেন স্পষ্টই লক্ষ্য করা যাইতেছিল; এহেন বৃহদাকার অশ্বগণ সকল দিকের স্থানগুলি ব্যাপ্ত করিল ॥৭৮॥

दधतः शशाङ्कितशशाङ्करुचि लसदुरश्छदं वपुः ।
चक्रुरथ सह पुरन्ध्रिजनैरयथार्थसिद्धि सरकं महीभृतः ॥८०॥
दयिताय सासवमुदस्तमपतदवसादिनः करात् ।
कांस्यमुपहितसरोजपतद्भ्रमरौघभारगुरु राजयोषितः ॥८१॥

---

**अन्वयः**—प्रधि-मण्डलोद्धत-पराग-घन-वलय-मध्य-वर्त्तिनः गुरुनिस्वन व्यथित-जन्तवः रथाः अशनयः इव अशनकैः पेतुः ॥७९॥

**टीका**—प्रधीति । "चक्रधारा प्रधिर्नेमिरिति हलायुधः प्रधिमण्डलैर्नेमिवलयैरुद्धता उत्थापिताः परागाः पांसव एव घना मेघास्तेषां वलयानि मण्डलानि तेषां मध्यवर्त्तिनः गुरुभिर्निस्वनैः स्वघोषैः व्यथिता भीषिता जन्तवः प्राणिनो यैस्ते रथा अशनयः वज्रा इवा-शनकैः पेतुस्तीव्रमधावन् । अत्र रथानामशनित्वेनोत्प्रेक्षा परागाणां घनत्वरूपणसापेक्षेति सङ्करः ॥७९॥

**टिप्पनी**—प्रधीति । अत्र तृतीये पादे घन-घनीति छेकानुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते । समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥७९॥

**বাঙ্গালা**—চক্রধারাগুলির আঘাতে ভূতল হইতে যে ধূলিরাশি উঠিয়াছিল, সে গুলি মেঘস্বরূপ উপরে ঘুরিতেছিল ; রথগুলি তাহারই মধ্যে রহিয়াছিল এবং সেই রথগুলির বিশাল শব্দে সকল প্রাণীই ভীত হইয়া পড়িয়াছিল , এ হেন রথগুলি বজ্রের ন্যায় তাড়াতাড়ি আসিয়া উপস্থিত হইল ॥৭৯॥

**अन्वयः**—अथ लसदुरश्छदं शशाङ्कितशशाङ्करुचि वपुः, दधतः महीभृतः पुरन्ध्रिजनैः सह सरकम् अयथार्थसिद्धि चक्रुः ॥८०॥

**टीका**—दधत इति । लसन्नुरश्छदः कवचो यस्मिन् कर्मणि तद्यथा तथा । "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियामित्यमरः । अतएव शशाङ्कितो मृगलाञ्छितो यः शशाङ्कः इन्दुस्तस्य रुचिरिव रुचिर्यस्येत्युपमा । तद्वपुर्दधतो दधानाः महीभृतो राजानः पुरन्ध्रिजनैरङ्गनाजनैः सह । अयथार्था असत्या सिद्धिर्मदकार्योत्पत्तिर्यस्मिन् तदयथार्थसिद्धिरचित्तम अनिर्वृतचित्तत्वादमादकत्वादित्यर्थः । सरकं मधुपानं चक्रुः । उत्साहवर्द्धनार्थमिति भावः । "मद्यौ शीधौ शीधुपाने सरकं मधुभाजनमिति वैजयन्ती ॥८०॥

**टिप्पनी**—दधत इति । अत्र मद्यपानरूपकारणे सत्यपि मादकतानुत्पत्तेर्विभावनालङ्कारः । तथा—शशाङ्कितशशाङ्केति पुनरुक्ततादोषः ; स च 'शशाङ्कित-सुधांशुरुचि' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८०॥

**বাঙ্গালা**—তাহার পর, রাজাদের শরীরে লৌহবর্ম্ম সকল শোভা পাইতে লাগিল ; তাহাতে সে শরীরগুলি—শশচিহ্নে চিহ্নিত চন্দ্রের শোভা ধারণ করিল ; এ হেন শরীর ধারণ করতঃ সেই রাজারা রমণীগণের সহিত মদ্যপান করিতে লাগিলেন বটে, কিন্তু তাঁহাদের মত্ততা জন্মিল না ॥৮০॥

भृशमङ्गसादमरुणत्वमविशददृशः कपोलयोः ।
वाक्यमसकलमपास्य मदं विदधुस्तदीयगुणमात्मना शुचः ॥८२॥

---

**अन्वयः**—दयिताय उदस्तं सासवम् उपस्थित-सरोज-पतद्भ्रमरौघ-भारगुरु कांस्यम् अवसादिनः राजयोषितः करात् अपतत् ॥८१॥

**टीका**—अथासर्गसमाप्तेः प्रायाणिकामन्त्रणाय प्रियासङ्गतानां भटानामागामिशुचः सूचिकास्तात्कालिकचेष्टाः वर्णयति । दयितायेत्यादि । दयिताय प्रेयसे उदस्तं पानार्थमुत्क्षिप्तं सासवं समद्यम् अतएवोपहिते वासनार्थं निहिते सरोजे पतन् भ्रमरौघ एव भारस्तेन गुरु दुर्भरम । "गुरुस्तु वाक्पतौ श्रेष्ठे तुङ्गे पितरि दुर्भरे" इति शब्दार्णवे । कांस्यं पानभाजनम् । "कांस्योऽस्त्री पानभाजनमित्यमरः । "वृतवदिहनिकमिकषिभ्यः स" इति कमेर्धातोरौणादिकः सप्रत्ययः । तस्मै हितं कंसीयं लोहविशेषः । "प्राक्-क्रीताच्छः" इति छप्रत्ययः । तस्य विकारः कांस्यं पानपात्रम् । "कंसीयपरशव्ययोर्यञञौ लुक् चेति यञ् प्रत्यये छस्य लुक् । राजयोषितः कस्याश्चिद्राजवध्वाः सम्बन्धिनः अवसादिनः शैथिल्यभाजः करादपतत तच्च दुर्निमित्तमिति भावः । एतेनास्या भाविविरह-शोकादेवाप्रसन्नदृष्टेः काचिच्चिन्ता व्यज्यते । अत्रावसादभारगौरवयोर्विशेषणगत्या पात्र-पातहेतुत्वात् काव्यलिङ्गम् ॥८१॥

**टिप्पनी**—दयितायेति । अत्र समास बाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥८१॥

**বাঙ্গালা**—কোন রাজমহিষী, মদ্যপূর্ণ একখানি কাঁসার পাত্র প্রিয়তমের নিমিত্ত উত্তোলন করিলেন ; কিন্তু তাঁহার অবসন্ন হস্ত হইতে সে পাত্রখানি পড়িয়া গেল । কেন না, সুবাসিত করিবার জন্য সেই মদ্যের মধ্যে যে পদ্ম রাখিয়াছিল, তাহার উপরে বহুতর ভ্রমর পড়িয়া সে পাত্র খানিকে ভারী করিয়াছিল ॥৮১॥

**अन्वयः**—शुचः अविशददृशः मदम् अपास्य आत्मना तदीयगुणम् अङ्गसादम्, कपोलयोः अरुणत्वम्, असकलं वाक्यं (च) भृशं विदधुः ॥८२॥

**टीका**—भृशमिति । शुचो भाविविरहभावनाप्रसूताः शोकाः अविशददृशः शोकादेवाप्रसन्नदृष्टेः कस्याश्चिदिति शेषः । मदमपास्य तदुत्पत्तिं प्रतिरुध्य तदीयं गुणं तद्धर्मं मदकार्यभूतमित्यर्थः । अङ्गसादमङ्गशैथिल्यं कपोलयोररुणत्वम् असकलमसमाप्तं वाक्यं चात्मना स्वयम् । प्रकृत्यादिभ्य उपसङ्ख्यानात् तृतीया । भृशं विदधुः करुणेन शृङ्गार-स्तिरस्कृत इत्यर्थः । अत्र मदाभावेऽपि तत्कार्योदयात्तस्यावलोकननिमित्तकत्वोक्त्या उक्तनिमि-त्ताख्यो विभावनाभेदः ॥८२॥

**टिप्पनी**—भृशमिति । अत्र विदधुरित्येकया क्रियया अङ्गसादादीनां त्रयाणां कर्मतयाभिसम्बन्धा-त्तुल्ययोगिता चेति टीकोक्तविभावनया सह तस्या अङ्गाङ्गिभावेन सङ्करः । करुणो रसः । तथालम्बनादिकमूह-नीयम् प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

सुहृदः समीकगमनाय युवभिरथ सम्बभाषिरे ।
शोकपिहितगलरुद्धगिरस्तरसागताश्रुजलकेवलोत्तराः ॥८३॥
विपुलाचलस्थलघनेन जिगमिषुभिरङ्गनाः प्रियैः ।
पीनकुचतटनिपीड़दलद्वरवारबाणमुरसालिलिङ्गिरे ॥८४॥

---

বাঙ্গালা — ভাবী বিরহের চিন্তা করায় কোন রমণীর নয়নযুগল, অশ্রুজলে কলুষিত হইয়া গেল এবং শোক উপস্থিত হইল ; সেই শোক তাহার মদ্যপাননিবন্ধন মত্ততা দূর করিয়া, অঙ্গের অবসাদ, গণ্ডযুগলের অরুণত্ব এবং অসম্পূর্ণ বাক্য, এই সকল মত্ততার গুণ নিজেই বিশেষ ভাবে জন্মাইয়া দিল ॥৮২॥

अन्वयः—अथ युवभिः समीक-गमनाय शोक-पिहित-गलरुद्ध गिरः तरसा आगताश्रुजलकेवलो-त्तराः सुहृदः सम्बभाषिरे ॥८३॥

टीका—सुहृद इति । अथास्मिन्नवसरे युवभिः समीकगमनाय युद्धगमनाय ।"समीकं साम्परायिकमित्यमरः । सुहृदः शोकपिहिते शोकावृते गले कण्ठे रुद्धगिरः प्रतिबद्धोत्तर-वाचस्तथापि तरसा वेगेनागतमश्रुजलमेव केवलं निर्णीतमुत्तरं यासां ताः ।"निर्णीतं केवलं प्रोक्तमिति विश्वः । सम्बभाषिरे संभाषिताः । योद्धुं गच्छाम इत्यामन्त्रिता स्त्रा कश्चिद्-शैवान्तिमदर्शनमिति वाक्यभेदेऽप्यश्रुपातेनैवानवरं दत्तोत्तराश्चासन्नित्यर्थः । अत्राप्यश्रु-पातो दुर्निमित्तमिति भावः । एतेन गन्तव्यं चेत् गम्यतां वयञ्च युष्मल्लोकयामाना इत्यनिष्टविध्याभासरूपाचेपालङ्कारो व्यज्यते । अनिष्टविध्याभासश्चेति सूत्रे इष्टनिषेधाभास-वदस्यापि लक्षणात् ॥८३॥

टिप्पनी—सुहृद इति । अत्र करुणो रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥८३॥

বাঙ্গালা—সেই সময়ে যুবকগণ যুদ্ধ গমনের জন্য সুন্দরীদিগকে সম্ভাষণ করিল ; তখন শোক আসিয়া সেই সুন্দরীদিগের গলদেশ আবৃত করিল এবং বাক্য রুদ্ধ করিল, আর বেগে অশ্রুজল আসিয়া উত্তরের স্থানপাতী হইল ॥৮৩॥

अन्वयः—जिगमिषुभिः प्रियैः विपुलाचल-स्थल-घनेन उरसा अङ्गनाः पीनकुच-तट-निपीड़-दलद्वर-वारबाणम् आलिलिङ्गिरे ॥८४॥

टीका—विपुलेति । जिगमिषुभिर्युद्धाय गन्तुमिच्छुभिः प्रियैः कान्तैः अङ्गनाः विपुलं यदचलस्य स्थलं तद्वद्घनेन दृढ़ेन उरसा निजवक्षसा करणेन पीने कुचतटे निपीड़ो नितरां पीड़नं तेन दलन्तो विदीर्यमाणा वराः श्रेष्ठा वारबाणाः कञ्चुका यस्मिन् कर्मणि तद्यथा तथा । "कञ्चुको वारबाणोऽस्त्रीत्यमरः । आलिलिङ्गिरे आलिङ्गिताः । अत्र वार-बाणानां दलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥८४॥

टिप्पनी—विपुलेति । अत्र विपुलेत्यादौ लुप्तोपमा, रब-वारेति च च्छेकानुप्रास इति ताभ्यां टीको-क्तातिशयोक्तिः संसृज्यते । सम्भोगशृङ्गारो रसः, मधुररचनावशान्माधुर्यं गुणः, पाञ्चाली च रीतिः ॥८४॥

न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी।
यातमवनिमवसन्नभुजान्न गलद्विवेद वलयं विलासिनी ॥८५॥
प्रविवत्सतः प्रियतमस्य निगडमिव चक्षुरक्षिपत्।
नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढसुन्दरी ॥८६॥

---

বাঙ্গালা--- প্রিয়তমেরা যুদ্ধে যাইতে ইচ্ছা করিয়া, বিশাল ও পর্বতের ন্যায় দৃঢ় বক্ষ দ্বারা রমণীগণকে আলিঙ্গন করিল ; তখন সেই রমণীগণের পীবর স্তনতটের আঘাতে সেই প্রিয়তমদিগের বিশাল বর্ম্মগুলি বিদলিত হইয়া গেল ॥৮৪॥

अन्वयः—दयित-जय-मङ्गलैषिणी विलासिनी लोचनजलानि न मुमोच, (अथ च) अवसन्नभुजात् गलत् वलयम् अवनिं यातं न विवेद ॥८५॥

टीका—नेति। दयितस्य जयमङ्गलं तदर्थं मङ्गलमित्यर्थः। अश्वघासादिवत्तदर्थे षष्ठीसमासः। तदिच्छतीति तदेषिणी विलासिनी काचिदङ्गना लोचनजलान्यश्रूणि न मुमोच अश्रुपातस्यामङ्गलत्वादिति भावः। अमङ्गलं तदन्यतः प्रवृत्तमेवेत्याह, यातमिति। अवसन्नभुजात्क्षीणशिथिलात् करात गलद्भ्रश्यदेवावनिं भुवं यातं प्राप्तं वलयं कङ्कणं न विवेद। अवश्यम्भाविनां को निवारक इति भावः। एषा च दैवचिन्तकेति। अत्रा-वसादस्य विशेषणगत्या वलयपातहेतुत्वात काव्यलिङ्गम ॥८५॥

टिप्पनी—नेति। अत्र तृतीये चतुर्थे च पादे छेकानुप्रास इति टीकोक्तकाव्यलिङ्गेन सह तस्य संसृष्टिः। मधुररचनावशान्माधुर्यं गुणः, वैदर्भी च रीतिः ॥८५॥

বাঙ্গালা—কোন রমণী প্রিয়তমের জয়লাভরূপ মঙ্গল কামনা করিয়া, নয়নের জল ত্যাগ করিল না বটে ; কিন্তু তাহার অবসন্ন হস্ত হইতে যে বলয়গাছি ভূতলে পড়িয়া গেল তাহা সে জানিতে পারিল না ॥৮৫॥

अन्वयः—अचिरोढसुन्दरी प्रविवत्सतः प्रियतमस्य प्रतिपादयुग्मं नीलनलिन दलदाम रुचि निगडम् इव चक्षुः अक्षिपत् ॥८६॥

टीका—प्रेति। अचिरोढसुन्दरी काचिन्नवोढा स्त्री प्रविवत्सतः प्रवासं कर्तु-मिच्छतः। वसेः सनन्ताल्लटः शत्रादेशः। प्रियतमस्य प्रतिपादयुग्मं पादयुग्मे। विभक्त्यर्थे-ऽव्ययीभावः। नीलनलिनदलदामरुचि नीलोत्पलमालासच्छायमित्युपमा। निगडमिव शृङ्खलमिव चक्षुर्नेत्रमक्षिपत् प्रेरयदित्यर्थः। चक्षुषो दूरे पदमपि गन्तुं न शशाकेत्यर्थः तच्च दुर्निमित्तमिति भावः प्रयायी स्त्रावलोकनकनिषेधात्। उत्प्रेक्षासापेक्षा चक्षुषो निग-डत्वोत्प्रेक्षेति सङ्करः ॥८६॥

टिप्पनी—प्रविवत्सत इति। अत्र द्वितीयतृतीयपादयोश्छेकानुप्रास इति टीकोक्तसङ्करेण सह तस्य पुनः संसृष्टिः। प्रवासाय चलनस्यापि प्रवासत्वात् प्रवासाख्यो विप्रलम्भशृङ्गारो रसः, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥८६॥

व्रजतः क्व तातः ! वजसीति परिचयगतार्थमस्फुटम् ।
धैर्यमभिनदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥८७॥
शठ ! नाकलोकललनाभिरविरतं रिरंससे ।
तेन वहसि मुदमित्यवदद्रणरागिणं रमणमीर्ष्ययाऽपरा ॥८८॥

---

**বাঙ্গালা**—প্রিয়তম স্থানান্তরে যাইবার ইচ্ছা করিয়া চলিতে লাগিলে, কোন নব-বিবাহিতা রমণী তাহার প্রত্যেক পদক্ষেপে শৃঙ্খলের ন্যায় এবং নীলপদ্মদলের মালার ন্যায় মনোহর দৃষ্টিনিক্ষেপ করিতে লাগিল ॥৮৬॥

**अन्वयः**—जननी-निभर्त्सन-विवृद्ध मन्युना शिशुना (हे) तात ! क्व वजसि इति परिचयगतार्थम् अस्फुटम् उदितं व्रजतः धैर्यम् अभिनत् ॥८७॥

**टीका**—व्रजत इति । जनन्याः अपथ्यकुलभीतायाः मातुर्निभर्त्सनाद्विवृद्धमन्युना प्रवृद्धकोपेन शिशुना बालकेन, हे तात ! जनक ! "तातस्तु जनकः पितेत्यमरः । क्व व्रजसि कुत्र वजसि इत्यस्फुटम् उदितमुक्तम् । वदेः कर्मणि क्तः, "वचिस्वपीत्यादिना सम्प्रसारणम् । व्रजसीति सरेफपदमपाटवादरेफमुच्चारितमित्यर्थः । तथापि परिचयादभ्यास-पाटवाद्गतार्थम् । पितृभ्यां केवलावगताभिधेयं वचनमिति शेषः । व्रजतः प्रस्थातुः धैर्यं प्रयाणोत्साहमभिनत् गमनकारिणो दुर्निमित्तत्वादिति भावः । उक्तं च योगयात्रायाम् । 'यानात् पुरानिपतनं स्खलतीव काचित् गर्भं च भारवहती स्वपुरः स्थिता स्त्री । आगच्छ तिष्ठ कुत इत्यलमर्थवाचिशब्दाश्च राजगमने प्रतिषेधकाः स्युः'रिति । अत्र दम्पत्योर्दैन्यविषाद-चिन्ताशङ्कादयः सञ्चारिणोऽनुसन्धेयाः ॥८७॥

**टिप्पनी**—व्रजत इति । अत्र दैन्यविषादचिन्ताशङ्कादीनां व्यभिचारिभावानां मेलनात् भावशबली नामालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८७॥.

**বাঙ্গালা**—কোন বালকের মাতা তাহাকে ভৎর্সনা করিয়াছিল ; তাহাতে বালক-টীর ক্রোধ জন্মিয়াছিল ; তাই সে বালকটী বলিয়াছিল যে "বাবা ! তুমি কোথায় যাও" (সে, ঠিক্ মত উচ্চারণ করিতে না পারিয়া ব্রজসির জায়গায় বজসি বলিয়াছিল) কিন্তু পিতা ও মাতা পরিচয়বশতঃ সেই অস্পষ্ট বাক্যেরও অর্থ বুঝিয়াছিলেন ; সুতরাং সেই অস্পষ্ট বাক্যই গমনকারী পিতার ধৈর্য্য নষ্ট করিয়াছিল ॥৮৭॥

**अन्वयः**—अपरा रण रागिणं रमणम् '(हे) शठ ! (त्वं) नाक-लोक ललनाभिः (सह] अविरतं रिरंससे, तेन मुदं वहसि' इति ईर्ष्यया अवदत् ॥८८॥

**टीका**—शठेति । अपरा स्त्री रणरागिणं युद्धोत्साहिनं रमणम्, हे शठ ! वञ्चक ! नाकलोकललनाभिरप्सरोभिः सहेत्यर्थः । "सह युक्तेऽप्रधाने" इति सहार्थे तृतीया वृद्धो यूनेतिवत् । अविरतमविच्छिन्नसुरतं यथा भवति तथा रिरंससे रन्तुमिच्छसि । रमेः सन्नन्ताल्लट् "पूर्ववत् सन" इत्यात्मनेपदम् । तेनाप्सरोरिरंसाकारणेन मुदं वहसीति ईर्ष्यया

म्रियमाणमप्यगलदश्रु चलति दयिते नतभ्रुवः ।
स्नेहमकृतकरसं दधतामिदमेव युक्तमतिमुग्धचेतसाम् ॥८९॥
सह कज्जलेन विरराज नयनकमलाम्बुसन्ततिः ।
गण्डफलकमभितः सुतनोः पदवीव शोकमयकृष्णवर्त्मनः ॥९०॥

---

सापत्न्याच्चमया अवदत् अर्थाद्विरहासहनया प्रस्थानप्रतिषेधपरया व्याकृतमिदमेवास्य मरण-मिति भावः । ईर्ष्यात्र कण्ठोक्त एव संचारी ॥८८॥

टिप्पनी—शठेति । अत्र प्रथमे द्वितीये च पादे छेकानुप्रासोऽलङ्कारः, मधुररचनावशात् माधुर्यं गुणः, वैदर्भी च रीतिः ॥८८॥

বাঙ্গালা—অন্য কোন রমণী ঈর্ষ্যাবশতঃ, যুদ্ধোৎসাহী ভর্ত্তাকে বলিল—"হে শঠ! তুমি স্বর্গীয় রমণীগণের সঙ্গে অবিরত রমণ করিতে ইচ্ছা করিতেছ এবং সেই ইচ্ছাতেই আনন্দ লাভ করিতেছ!" ॥৮৮॥

अन्वयः—दयिते चलति (सति) नतभ्रुवः म्रियमाणम् अपि अश्रु अगलत् । अकृतकरसं स्नेहं दधताम् अतिमुग्धचेतसाम् इदम् एव युक्तम् ॥८९॥

टीका—म्रियमाणमिति । दयिते चलति प्रतिष्ठमाने सति नतभ्रुवः वध्वाः अश्रु म्रियमाणमन्तर्लज्जिया धार्यमाणमपि । धरतेः कर्मणि लटः शानजादेशः । अगलदस्रवत् शोकातिरेकाद्धारयितुमशक्यमासीदित्यर्थः । तथाहि, अकृतकरसमकृत्रिमरागं स्नेहं प्रेम दधताम् अतएव अतिमुग्धचेतसाम् अत्यन्ताकपटबुद्धीनाम् इदमेवासंवरणं युक्तम् । अन्यथा स्नेहव्याघातेन तत्कालविलम्बमश्रुमोचनं नानुचितमिति भावः । रसस्नेहयोरागप्रेमापरनाम्नोरवस्थाभेदात् भेदः "रागस्तत्सम्बन्धी प्रेम तद्वियोगासहिष्णुतेति रससागरे ॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥८९॥

टिप्पनी—म्रियमाणमिति । अत्र करुणो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८९॥

বাঙ্গালা—প্রিয়তম প্রস্থান করিলে, কোন সুন্দরী নয়নজল আবদ্ধ রাখিবার চেষ্টা করিলেও, তাহা পড়িতে লাগিল। কারণ, অকৃত্রিম অনুরাগী, স্নেহশালী এবং অত্যন্ত সরলচিত্ত লোকদিগের পক্ষে ইহাই সঙ্গত ॥৮৯॥

अन्वयः—सुतनोः नयनकमलाम्बु-सन्ततिः कज्जलेन सह गण्डफलकम् अभितः शोकमयकृष्णवर्त्मनः पदवी इव विरराज ॥९०॥

टीका—सहेति । सुतनोः शुभाङ्ग्याः गण्डफलकमभितो गण्डस्थलयोरित्यर्थः । "अभितः परित" इत्यादिना द्वितीया । नयनकमलाम्बुसन्ततिरश्रुधारा कज्जलेनाञ्जनेन सह शोक एव शोकमयस्तस्य कृष्णवर्त्मनः शोकाग्नेः पदवी निःसरणमार्गं इव विरराज शुशुभे । येन वर्त्मना अग्निर्गच्छति तत् कृष्णं भवतीति कृष्णवर्त्मा । अनेनाप्यश्रुपात एव तूर्णं निमित्तमिति भावः ॥९०॥

क्षणमात्ररोधि चलितेन कतिपयपदं नतभ्रुवः।
स्रस्तभुजयुगगलद्वलयस्वनितं प्रति क्षुतमिवोपशुश्रुवे ॥९१॥
अभिवर्त्म वल्लभतमस्य विगलदमलायतांशुका।
भूमिनभसि रभसेन यती विरराज काचन समं महोल्कया ॥९२॥

---

**टिप्पनी**— सहेति। अत्र नयनकमलोत्थ लुप्तोपमा, शोकमयकृष्णवर्त्मेति निरङ्गं केवलरूपकम् पदवीवेति चाप्युत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥९०॥

**বাঙ্গালা**—কোন সুন্দরীর নয়নকমলের জলধারা, কজ্জলের সহিত সম্মিলিত হইয়া, গণ্ডযুগলের দুই দিকে শোকাগ্নির পথের ন্যায় প্রকাশ পাইতে লাগিল ॥৯০॥

**अन्वयः**—कतिपयपदं चलितेन (केनचित्) क्षणमात्ररोधि नतभ्रुवः स्रस्त भुज युग-गलद्वलयस्वनितं प्रति क्षुतम् इव उपशुश्रुवे ॥९१॥

**टीका**—क्षणेति। कतिपयं च तत्पदं च तत्। जातावेकवचनम्। कतिचित्पदानीत्यर्थः। पदशब्दस्य तदवच्छिन्नदेशवाचित्वादत्यन्तसंयोगे द्वितीया। चलितेन प्रस्थितेन केनचिदिति शेषः क्षणमात्ररोधि क्षणमात्रप्रतिबन्धकम्। प्रायशो दानैकजीविनामवसरे सत्याधिकं ख्यातुमनौचित्यादिति भावः। नतभ्रुवः सन्तानासङ्गसादेन झटिति प्रकोष्ठाग्रं पतितानां भुजयुगगलद्वलयानां स्रस्तवलयकङ्कणानां स्वनितं रणत्कारं प्रति प्रतिमुखं क्षुतमिव उपशुश्रुवे उपश्रुतम्। "स्त्री क्षुत् क्षुतं क्षवः पुंसीत्यमरः। रणत्कारे क्षुतभ्रान्त्या निवृत्तं क्षणमात्रं स्थितमित्यर्थः। अक्षुते क्षुतभ्रान्त्या भ्रान्तिमदलङ्कारः, इन्यदिपादाख्याः सख्याः ॥९१॥

**टिप्पनी**—क्षणेति। अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥९१॥

**বাঙ্গালা**—কোন যোদ্ধা কএক পা মাত্র গিয়াছিল; তখন তাহার স্ত্রীর ঝুলান হাত দু'খানি হইতে যে বালাগুলি পড়িয়া গেল, তাহার শব্দটাকে সেই যোদ্ধা, সম্মুখের হেঁচির ন্যায় শুনিল; তাই তাহার গমন একটুকাল মাত্র স্থগিত রহিল ॥৯১॥

**अन्वयः**—वल्लभतमस्य अभिवर्त्म विगलदमलायतांशुका भूमि-नभसि रभसेन यती काचन महोल्कया समं विरराज ॥९२॥

**टीका**—अभीति। वल्लभतमस्य प्रियतमस्याभिवर्त्माभिमार्गं विगलद्रभसादात् संसमानममलमायतं चांशुकं वस्त्रं यस्याः अन्यत्र विगलन्ती विशीर्य्यमाणा अमला उज्ज्वलाः आयता दीर्घीभूता अंशवो रश्मयो यस्याः सा। शेषिकः कप्रत्ययः। भूमिर्नभ इव तस्मिन् भूमिनभसि रभसेन वेगेन यती यान्ती। इणः शतर्य्युगितश्चेति ङीप्। काचनाङ्गना महोल्कया समं सदृशं विरराज। अत्र प्रस्थातुरग्रे स्वकान्ताया महोल्कासादृश्यप्रदर्शनमेव दुर्निमित्तमिति भावः। उपमालङ्कारः ॥९२॥

**टिप्पनी**—अभीति। अत्र तृतीयपादे भसि-भसेति च्छेकानुप्रासेन टीकोक्तोपमा संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥९२॥

समरोन्मुखे नृपगणेऽपि तदनुमरणोद्यतैकधीः।
दीनपरिजनहृताश्रुजलो न भटीजनः स्थिरमना विचक्लमे ॥९३॥
विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः।
यान्तमनिमिषमविक्लममनाः पतिमीक्षते स्म भृशमादृशः पथः ॥९४॥

---

बाङ्गाला—प्रियतमेर पथेर सम्मुखे, कोन रमणी आकाशेर न्याय भूतले वेगे गमन करिते थाकिया, बृहत् उल्कार न्याय शोभा पाइल; केन ना, उल्का हइते येमन निर्म्मल किरण श्रेणी निर्गत हइया लम्बा हय, तेमन सेइ रमणीर निर्म्मल वस्त्र वायुवेगे लम्बा हइयाछिल ॥९२॥

अन्वयः—नृपगणे समरोन्मुखे अपि तदनुमरणोद्यतैकधीः दीन-परिजन-हृताश्रुजलः स्थिरमनाः भटीजनः न विचक्लमे ॥९३॥

टीका—समरेति। नृपगणे समरोन्मुखेऽपि तस्य नृपगणस्यानुमरणे सहमरणे उद्यतोद्युक्ता अत एवैका मुख्या धीर्यस्य सः। दीनेनाप्रवीणेन परिजनेन हृताश्रुजलो मुक्तबाष्पो दासीभुक्ताश्रुविन्दुरित्यर्थः। तथापि स्वयं स्थिरमना अचलितचित्तो भटीजनो भटस्त्रीलोकः। जातिविवक्षया पुंयोगादाख्यायामिति ङीपोऽलुक्। न विचक्लमे न तत्रास सहमृत्युप्रियायाः कुतः संत्रास इति भावः। अत्र मरणोद्योगस्य विशेषणगत्या क्लमाभावहेतुत्वात् काव्यलिङ्गमेदः ॥९३॥

टिप्पनी—समरेति। अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥९३॥

बाङ्गाला—राजारा युद्धेर जन्य उन्मुख हइलेओ, ताँहादेर महिषीरा सहमरण याइबार जन्य उद्यत थाकिया, एकाग्रबुद्धि ओ स्थिरचित्त हइया भीत हइलेन ना; तखन किञ्चित् शोकातुर दासीरा ताँहादेर अश्रुजल मुछाइया दिते लागिल ॥९३॥

अन्वयः—युवतिः अमुष्य दर्शनं पुनः अतिदुर्लभं विदुषी इव अविक्लममनाः (सती) यान्तं पतिम् आदृशः पथः भृशम् अनिमिषम् ईक्षते स्म ॥९४॥

टीका—विदुषीति। युवतिः काचिदङ्गना अमुष्य पत्युर्दर्शनं पुनः पश्चादतिदुर्लभं तस्यापुनरावृत्तेरिति भावः। विदुषी जानतीवेत्युत्प्रेक्षा। "विदेः शतुर्वसुरिति वस्वादेशः, "उगितश्चेति ङीप्। अविक्लममना अविक्लमचित्ता सती यान्तं योद्धुं गच्छन्तं पतिं भर्त्तारम् आदृशः पथः आदृष्टिपथात् दृष्टिपथातिक्रमपर्य्यन्तमित्यर्थः। "आङ्मर्य्यादाभिविध्योरिति विकल्पादाङो न समासः। भृशमनिमिषं निमेषरहितं यथा तथा ईक्षते स्म ॥९४॥

टिप्पनी—विदुषीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥९४॥

बाङ्गाला—कोन युवति, पुनराय पतिर दर्शन अतिदुर्लभ जानियाइ येन अतृप्तचित्ते, गमनशील पतिके दृष्टिर पथ पर्य्यन्त निर्निमेषनयने अतिरिक्त मात्राय देखिते लागिल ॥९४॥

सम्प्रत्युपेयाः कुशली पुनर्युधः सस्नेहमाशीरिति भर्त्तुरीरिता।
सद्यः प्रसह्य द्वितयेन नेत्रयोः प्रत्याचचक्षे गलता भटस्त्रियाः ॥९५॥
काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः।
भ्रेमुर्वात्या इवान्याः प्रतिदिशमपरा भूमिवत्कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्य्यः शशंसुः ॥९६॥

---

अन्वयः—सम्प्रति (एव) कुशली (सन्) युधः पुनः उपेयाः इति सस्नेहं भर्त्तुः ईरिता आशीः, सद्यः प्रसह्य गलता भटस्त्रियाः नेत्रयोः द्वितयेन प्रत्याचचक्षे (इव) ॥९५॥

टीका—सम्प्रतीति। सम्प्रतीदानीमेव कुशली अक्षतः सन् युधो युद्धात् पुनः उपेयाः प्रत्यावर्त्तस्वेति सस्नेहं भर्त्तुरीरिता भर्त्रे प्रयुक्ता आशीराशीर्वादः सद्यः प्रसह्य बलात् गलदम्भसा स्रवदश्रुणा तस्या भटस्त्रियास्तस्य वध्वा एव। अश्लीति प्रतिषेधात्नदीत्वादङ्गाभ्रः। नेत्रयोर्द्वितयेन प्रत्याचचक्षे प्रत्याख्याता निराकृतेत्यर्थः अमङ्गलेनाश्रुपातेन निष्फलीकृतेत्यवश्यं भवितव्य भवत्येवेति भावः। "वा लिटीति विकल्पान्न चक्षिङः ख्याञादेशः। अत्राश्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्याने हेतुत्वात् काव्यलिङ्गभेदः ॥९५॥

टिप्पनी—सम्प्रतीति। अत्र प्रत्याचचक्षे इवेति प्रतीयमाना क्रियोत्प्रेक्षा चेति टीकोक्तकाव्यलिङ्गेन सङ्कीर्य्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥९५॥

বাঙ্গালা—"তুমি এখনই অক্ষতদেহে যুদ্ধ হইতে পুনরায় আসিও" এইরূপ কোন যোদ্ধার স্ত্রী ভর্ত্তাকে আশীর্ব্বাদ করিল; কিন্তু তৎক্ষণাৎ তাহার নয়নযুগল বলপূর্ব্বক অশ্রু মোচন করিয়া, সে আশীর্ব্বাদ যেন প্রত্যাখ্যান করিল ॥৯৫॥

अन्वयः—रजोभिः कीर्णा काचित् भिन्नवक्त्रेन्दुलक्ष्मीः (सती) दिवम् अनुविदधे; अश्रीकाः काश्चित् उद्भ्रान्तसत्त्वाः (सत्यः) दिशः इव अन्तः दाहं दधिरे; अन्याः वात्याः इव प्रतिदिशं भ्रेमुः; अपराः भूमिवत् कम्पम् आपुः; इति पार्थिवानां प्रस्थाने नार्य्यः भावि अशिवं पुरः शशंसुः ॥९६॥

टीका—काचिदिति। काचित् स्त्री रजोभिरार्त्तवैरङ्गस्रावत्यागात् पांशुभिर्वा कीर्णा। "स्याद्रजः पुष्पमार्त्तवमिति। "पांशुर्ना न द्वयो रजः" इति चामरः। दिवस्त्वौत्पातिकपांशुवर्षणाद्रजःकीर्णता। वक्त्रमिन्दुरिव अन्यत्र वक्त्रमिवेन्दुर्भिन्नास्तस्य लक्ष्मी यस्याः सा भिन्नवक्त्रेन्दुलक्ष्मीः सती। बहुवचनान्तो बहुव्रीहिः। एवमपि एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पठान्न तन्निमित्तः कप्रत्ययः शैषिकस्तु वैभाषिक इत्यविरोधः। दिवमनुविदधे अनुचकार। काश्चिन्नार्य्यः दिश इवाश्रीका वीतशोभाः। उद्भ्रान्तसत्त्वा उद्भ्रान्तचित्ता उद्भ्रान्तजन्तुकाश्च सत्यः। अन्तरात्मनि मध्ये च दाहं सन्तापम्। अन्यत्रौत्पातिकं प्रज्वलनं दधिरे दधुः। अन्या नार्य्यो वात्या इव वातसमूहा इव। "पाशादिभ्यो यदिति यत्प्रत्ययः। प्रतिदिशं दिशि दिशि। "अव्ययीभावे "शरत्प्रभृतिभ्यः टच्" इति

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
पञ्चदशः सर्गः ॥१५॥

—०—

समासान्तः टच् प्रत्ययः। भ्रे सुवं भ्रसुः। "वा जृभ्रमुत्रसामिति विकल्पादेत्वाभ्यासलोपौ। अपरा नार्य्यो भूम्या तुल्यं भूमिवत् कम्पमापुः। इतीत्थं पार्थिवानां प्रस्थाने प्रयाणे नार्यो भाव्यशुभं पुरः पूर्वं शशंसुः सूचयामासुरित्यर्थः। अत्र नारीणां भाव्यशुभसूचनस्य रजो-दाहादिवाक्यार्थहेतुकं काव्यलिङ्गं तत्र नारीणां द्युदिगाद्युपमाभिस्तद्रजोदाहादिवन्नारी-रजोदाहादीनाम् अशुभसूचकत्वमित्युपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः। सञ्चारिणाञ्च पूर्ववद्विषादादयः सुगमाः। अत्र काश्चिन्न कीर्णा रजोभिर्दिवमनुविदधुर्भिन्नवक्त्रेन्दुलक्ष्मी निःश्रीकाः काश्चिदिति पाठे क्वचित् कीर्णत्यैकवचनप्रक्रमभङ्गे दोषो नास्ति न चैवमुपमा-नोपमेययोर्भिन्नवचनत्वदोषः लोकेषु चन्द्रादिष्वेकत्र नियतेषु दोषबुद्ध्यनुदयात्। यथाह दण्डी। "न लिङ्गवचने भिन्ने न हीनाधिकतापि वा। उपमादूषणायालं यत्रोद्वेगो न धीमतामिति। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ॥८६॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
पञ्चदशः सर्गः ॥१५॥

—:०:—

टिप्पनी—काचिदिति। एवं प्रथमे पादे दिवमिति वृत्त्यनुप्रासेन टीकोक्तः सङ्करः पुनः संसृज्यते। प्रसादोगुणः, वैदर्भी च रीतिः ॥९६॥

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां
शिशुपालवधटीप्पन्यां माधुरीसमाख्यायां
पञ्चदशः सर्गः ॥०॥

—०—

বাঙ্গালা—কোন রমণীর শরীরটী ধূলিতে আবৃত হইয়া গেল এবং মুখচন্দ্রের শোভা বিকৃত হইয়া পড়িল; সুতরাং সে, আকাশের অনুকরণ করিতে লাগিল। কতকগুলি রমণীর শরীরশোভা তিরোহিত হইল এবং মন বিচলিত হইয়া পড়িল; তখন তাহারা দিক্‌-সমূহের ন্যায় অন্তরে সন্তাপ বহন করিতে থাকিল। অপর কতকগুলি রমণী ঘূর্ণী বায়ুর ন্যায় ঘুরিতে লাগিল। আর কতকগুলি রমণী ভূমির ন্যায় কাঁপিতে থাকিল। এই ভাবে রাজাদের যুদ্ধযাত্রার সময়ে রমণীরা ভাবী অমঙ্গল পূর্বেই সূচনা করিল ॥৯৬॥

# षोड़शः सर्गः ।

दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ।
उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥१॥
अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्त्तुमुपेत्य माननाम् ॥२॥

---

**अन्वयः**—अथ दमघोषसुतेन प्रतिशिष्टः प्रतिभानवान् कश्चन सदसि हरिम् उपगम्य अदः स्फुटभिन्नार्थं वचः उदाहरत ॥१॥

**टीका**—अथानन्तरसर्गे हरेश्चैद्यदूतसंवादं वर्णयति । दमघोषेत्यादि । अथ सभास्थानन्तरं दमघोषसुतेन शिशुपालेन प्रतिशिष्टः प्रहितः प्रतिभानमस्यास्तीति प्रतिभानवान् अवसरोचितोत्तरस्फुरणशक्तिमानित्यर्थः । कश्चन कश्चिद् दूतः हरिं कृष्णमुपगम्य प्राप्य सदसि सभायां स्फुटो भिन्नाऽर्थौ पृथगर्थौ प्रियाप्रियरूपौ यस्मिंस्तत् स्फुटभिन्नार्थं युगपदुभयार्थाभिधायकमित्यर्थः । तथैव वक्ष्यति "उभयं युगपन्मयोदितन्त्वरया सान्त्वमथेतरच्च ते" इति । अदः इदं वक्ष्यमाणं वचः उदाहरत् व्याहरत् । अस्मिन् सर्गे वैतालीयाख्यं जातिवृत्तम् । षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नोनिरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुरिति लक्षणात् ॥१॥

**टिप्पनी**—दमेति । अत्र प्रसादो गुणः वैदर्भी च रीतिः ॥१॥

**বাঙ্গালা**—তদনন্তর, শিশুপালপ্রেরিত প্রত্যুৎপন্নমতি কোন দূত, সভায় শ্রীকৃষ্ণের নিকট উপস্থিত হইয়া, স্পষ্ট বিভিন্নার্থবোধক এই সকল বাক্য বলিল ॥১॥

**अन्वयः**—शिशुपालः तदा तदप्रियम् अभिधाय परम् अनुशयं गतः; (तेन) अभिमनाः (सन्) उपेत्य सरुषः भवतः माननां कर्त्तुं समीहते ॥२॥

**टीका**—स्फुटभिन्नार्थमुदाहरद्वच इत्युक्तं तदेव चतुर्दशभिः श्लोकैरभिधत्ते । अभिधायेत्यादि । शिशुपालस्तदा अर्घस्वीकारकाले तत्तादृशमप्रियमभिधाय परमनुशयम् अनुतापं गतः अभिमनाः उत्कण्ठितचित्तः सन् उपेत्यागत्य सरुषः समन्योर्भवतस्तव माननां पूजां कर्त्तुं समीहते अनुनेतुमिच्छतीत्यर्थः । अयं मधुरोऽर्थः । परुषस्तु । तदा तदप्रियमभिधाय परम् अनुशयं केवलं न शाम्यः किन्तु हन्तव्योऽसीति दीर्घद्वेषं गतः प्राप्तः । "दन्दशूके ऽनुशयो दीर्घद्वेषानुतापयोरित्यभयत्राप्यमरः । अतएव नास्ति भीयंस्येत्यभि

विपुलेन निपीड्य निर्दयं मुदमायातु नितान्तमुन्मनाः।
प्रचुराधिगताङ्गनिर्वृतिं परितस्त्वां खलु विग्रहेण सः ॥२॥

---

निर्भीकं मनो यस्य सोऽभिमनाः निःशङ्कचित्तः सन् उपेत्य स्वयमागत्य सरुषः सकोपस्य भवतो माननां हननं कर्त्तुं समीहते। "मानना हनने मानि" इत्युभयत्रापि केशवः। भवन्तं हन्तुमिच्छतीत्यर्थः। मनस्तम्भे इति धातोश्चौरादिकात् ल्युट्, णिचो लुक्। अत्र चतुर्दशश्लोक्यां परहृदयपरीक्षापराणां दूतानामप्रियाप्रिये द्वे अपि वक्तव्ये चमत्काराय तु श्लेषभङ्ग्याभिधीयेते इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वादभिधेयत्वाच्छब्दमात्रसाधर्म्याच्च केवलप्रकृतगोचरः श्लेषः। "प्रकृताप्रकृतोभयगतमुक्तत्वे च्छब्दमात्रसाधर्म्यं श्लेषोऽयमिति लक्षणात्। न चोभयगतः निन्दास्तुत्योरन्यतरगम्यतया तद्व्यापनात् इह "उभयं युगपन्मयोदितं त्वरया सान्त्वयितरश्च ते" इति वक्ष्यमाणलिङ्गादुभयोर्वाच्यत्वावगमादित्यलं प्रपञ्चेन ॥२॥

**टिप्पनी**—अभिधायेति। अत्र तद्रा-तदेति च्छेकानुप्रासेन टीकोक्तः श्लेषः संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

**বাঙ্গালা**—মহারাজ শিশুপাল তখন সেই সকল অপ্রিয় কথা বলিয়া অত্যন্ত অনুতাপ ভোগ করিতেছেন; আপনিও তাহাতে ক্রুদ্ধ হইয়াই রহিয়াছেন। সুতরাং তিনি এখন উৎ-কণ্ঠিত হইয়া আসিয়া আপনার সম্মান করিবার ইচ্ছা করেন॥

দীর্ঘকাল যাবৎ বিদ্বেষী শিশুপাল, তখন সেই সকল অপ্রিয় কথা বলিয়াছেন; আপনিও তাহাতে ক্রুদ্ধ হইয়াই আছেন। এখন তিনি নির্ভয়চিত্তে আসিয়া আপনাকে বধ করিবার চেষ্টা করিবেন ॥২॥

**अन्वयः**—उन्मनाः सः विपुलेन विग्रहेण प्रचुराधिगताङ्गनिर्वृतिं त्वां परितः निर्दयं निपीड्य नितान्तं मुदम् आयातु खलु ॥२॥

**टीका**—विपुलेनेति। उन्मनाः उत्सुकचेताः स चैद्यः परितः प्रचुरं प्रभूतं यथातथा अधिगता प्राप्ता अङ्गनिर्वृतिः सुहृत्सम्पर्कजातमङ्गसुखं येन तं त्वां विपुलेन विश्लिष्टपुलकेन। "पुलः स्यात् पुलके नापि पुलन्तु विपुलेऽन्यवदिति विश्वः। विग्रहेण वपुषा निर्दयं गाढं निपीड्यालिङ्ग्य नितान्तं मुदमायातु खलु। पक्षान्तरे। उन्मना मनस्वी स चैद्यः प्रचुरेणाधिना मनोव्यथया गताङ्गनिर्वृतिं विगतशरीरसौख्यं त्वां विपुलेन महता विग्रहेण समरेण। "विग्रहः समरे काये" इति विश्वः। निर्दयं निष्कृपं निपीड्य हत्वा मुदमायातु ॥२॥

**टिप्पनी**—विपुलेनेति। अत्र पद्ये पूर्वोऽलङ्कारः वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥२॥

**বাঙ্গালা**—উৎসুকচিত্ত শিশুপাল (তাঁহার) বিশাল শরীর দ্বারা আপনাকে সর্বতো-ভাবে গাঢ় আলিঙ্গন করিয়া অত্যন্ত আনন্দ অনুভব করুন; তাহাতে আপনারও প্রচুরপরি-মাণে অঙ্গের আরাম উৎপন্ন হউক ॥

প্রণতঃ শিরসা করিষ্যতে সকলৈরেত্য সমং ধরাধিপৈঃ।
তব শাসনমাশু ভূপতিঃ পরবানদ্য যতস্ত্বয়ৈব সঃ ॥৪॥
অধিবহ্নিপতঙ্গতেজসো নিয়তস্বান্তসমর্থকর্ম্মণঃ।
তব সর্ব্ববিধেয়বর্ত্তিনঃ প্রণতিং বিভ্রতি কেন ভূভৃতঃ ॥৫॥

---

বহুতর মনোবেদনায় আপনার শরীরের সুখ ত গিয়াছেই; এখন সেই উন্নতহৃদয় শিশুপাল আসিয়া, বিশাল সংগ্রাম দ্বারা, আপনাকে নির্দ্দয় ভাবে বধ করিয়া, অত্যন্ত আনন্দ লাভ করুন ॥৩॥

অন্বয়ঃ—ভূপতিঃ সকলৈঃ ধরাধিপৈঃ সমম্ এত্য শিরসা প্রণতঃ (সন্) আশু তব শাসনং করিষ্যতি। যতঃ অদ্য সঃ ত্বয়া এব পরবান্ ॥

(পক্ষান্তরে তু) শিরসা প্রণতঃ ভূপতিঃ সকলৈঃ ধরাধিপৈঃ সমম্ এত্য আশু (পরং সমানম্) ॥৪॥

**টীকা**—প্রণত ইতি। ভূপতিঃ চৈদ্যঃ সকলৈর্ধরাধিপৈঃ সমং সহ এত্যাগত্য শিরসা প্রণতঃ প্রণামং কৃতবান্। কর্ত্তরি ক্তঃ। আশু তব শাসনমাজ্ঞাং করিষ্যতি ত্বদাজ্ঞাকরো ভবিষ্যতি। কুতঃ যতঃ স চৈদ্যোঽস্মিন্ অবসরে ত্বয়ৈব পরবান্ ত্বদেকপরতন্ত্রঃ। পক্ষস্তু। শিরসা প্রণতো নমস্কৃতো নরাধিপৈরিতি ভাবঃ। কর্ম্মণি ক্তঃ। ভূপতিস্তব শাসনং শাস্তিং শিক্ষাং করিষ্যতি যতস্ত্বয়ৈব পরবান্ শত্রুমান্ ত্বমেক এবাস্য শত্রুরবশিষ্ট ইতি ভাবঃ। অন্যৎ সমম্। "শাসনং রাজদত্তোর্ব্ব্যাং লেখাজ্ঞাশাস্ত্রশিক্ষিতি বিশ্বঃ ॥৪॥

**টিপ্পনী**—প্রণত ইতি। অত্র পদশ্লেষোঽলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪॥

**বাঙ্গালা**—মহারাজ শিশুপাল নিজপক্ষীয় সকল রাজগণের সহিত আসিয়া, (আপনার নিকট) মস্তক দ্বারা অবনত হইয়া, শীঘ্রই আপনার আদেশ পালন করিবেন। যেহেতু, এখন তিনি একমাত্র আপনারই অধীন ॥

রাজারা মস্তকদ্বারা যাঁহাকে নমস্কার করিয়া থাকেন, সেই মহারাজ শিশুপাল স্বপক্ষীয় সমস্ত রাজগণের সহিত আসিয়া শীঘ্রই আপনার শাস্তিবিধান করিবেন। যেহেতু, তিনি এখন একমাত্র আপনার দ্বারাই শত্রুমান্ (একমাত্র আপনিই এখন তাঁহার শত্রু অবশিষ্ট রহিয়াছেন) ॥৪॥

অন্বয়ঃ—কে ভূভৃতঃ অধিবহ্নিপতঙ্গতেজসঃ নিয়তস্বান্তসমর্থকর্ম্মণঃ সর্ব্ববিধেয়বর্ত্তিনঃ তব প্রণতিং ন বিভ্রতি ॥

(পক্ষান্তরে তু) ভূভৃতঃ অধিবহ্নি.....প্রণতিং কেন বিভ্রতি ॥৫॥

**টীকা**—প্রণামে হেতুমাহ। অধীতি। অধিগতং বহ্নিপতঙ্গয়োরগ্নিসূর্য্যয়োরিব তেজো যেন তস্য তত্তুল্যতেজস ইত্যর্থঃ। নিয়তস্বান্তো নিয়তচিত্তঃ স চাসৌ সমর্থকর্ম্মা চ। খঞ্জকুব্জবদ্বিশেষণসমাসঃ। তস্য তথোক্তস্য সর্ব্ববিধেয়বর্ত্তিনো বশবর্ত্তিনঃ কর্ম্মকরা যস্য তস্য তব কে ভূভৃতঃ প্রণতিং ন বিভ্রতি সর্ব্বেঽপি বিভ্রতীত্যর্থঃ। পক্ষস্তু। প্রণামে হেতুমাহ।

জনতাং ভয়শূন্যধীঃ পরৈরভিভূতামবলম্বসে যতঃ।
তব কৃষ্ণ! গুণাস্ততো নরৈরসমানস্য দধত্যগণ্যতাম্ ॥৬॥

---

অধিবহ্নি অগ্নৌ পতঙ্গস্য শলভস্যেব তেজঃ পৌরুষং যস্য তস্য। "পতঙ্গঃ শলভে ভানাবিতি বিশ্বঃ। নিয়তৌ অব্যভিচারে স্বান্তে স্ববিনাশে সমর্থং হেতুভূতং ধাম যস্য তস্য সর্বেষাং বিধেয়ে বর্ত্ততে বিধেয়ং বর্ত্তয়তি বা সর্ববিধেয়বর্ত্তিনঃ সর্বকিঙ্করস্যাপি রূপস্য তব কেন গুণেন ভূভৃতঃ প্রণতিং বিভ্রতি ন কেনাপীত্যর্থঃ ॥৫॥

টিপ্পনী — অধীতি। অত্র অধিবহ্নীত্যাদিবিশেষণে লুপ্তোপমা, কেনেতি সভঙ্গশ্লেষঃ, অন্যত্র অভঙ্গশ্লেষ ইতি সমুদায়ে সংসৃষ্টিঃ। সমাসবাহুল্যাৎ বন্ধস্য প্রগাঢ়ত্বাচ্চ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৫॥

বাঙ্গালা — আপনি অগ্নি ও সূর্য্যের ন্যায় অত্যন্ত তেজীয়ান্ এবং সংযতচিত্ত; আর সকল কার্য্যই আপনার ন্যায়সঙ্গত; বিশেষতঃ সমস্ত লোকই আপনার বশবর্ত্তী হইয়াছে। সুতরাং কোন্ রাজা আপনার নিকট অবনত না হন॥

আগুনের কাছে ফড়িংএর মত আপনার প্রভাব এবং আপনার সমস্ত কার্য্যই, নিশ্চিত নিজ মৃত্যুর কারণ হইয়া থাকে; আর আপনি সকলেরই আজ্ঞাবহ। সুতরাং রাজারা আপনার নিকট অবনত হইবেন কেন? ॥৫॥

অন্বয়ঃ — (হে) কৃষ্ণ! (ত্বং) ভয়শূন্যধীঃ (সন্) পরৈঃ অভিভূতাং জনতাং যতঃ অবলম্বসে, ততঃ, নরৈঃ অসমানস্য তব গুণাঃ অগণ্যতাং দধতি ॥৬॥

টীকা — জনতামিতি। হে কৃষ্ণ! হে হরে! ভয়শূন্যধীর্নির্ভীকচিত্তঃ সন্ পরৈঃ শত্রুভিরভিভূতাং জনতাং জনসমূহম্। "গ্রামজনেত্যাদিনা সমূহে তল্প্রত্যয়ঃ। যতোঽবলম্বসে পরিগৃহ্লাসি রক্ষসীত্যর্থঃ। ততো হেতোর্নরৈরসমানস্য সর্বোৎকৃষ্টস্য তব গুণাঃ আর্ত্ত-শরণ্যাদয়ঃ অগণ্যতামসঙ্খ্যেয়তাং দধতি। পক্ষস্তু। হে মলিনাত্মক! ভয়শূন্যধীঃ মূঢ়বুদ্ধিঃ পরৈস্ত্বদন্যৈঃ। "পরং দূরান্যমুখ্যেষু পরোঽরিপরমাত্মনোরিত্যুভয়ত্রাপি বৈজয়ন্তী। অভিভূতাম্ অবধীরিতাং জনতাং পশুপালনপারতন্ত্র্যাদিনা পৃথগ্জনত্বম্। ভাবেঽর্থে তল্প্রত্যয়ঃ। যতোঽবলম্বসি আশ্রয়সি। ততো নরৈরসমানস্য ততোঽপি হীনস্যেত্যর্থঃ। তব গুণাঃ নিয়তঃ স্বভাবতোঽপীতি ভাবঃ। অগণ্যতামনাদরণীয়তাং দধতি ॥৬॥

টিপ্পনী — জনতামিতি। অত্র পদশ্লেষোঽলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬॥

বাঙ্গালা — হে কৃষ্ণ! আপনি নির্ভয়চিত্ত হইয়া, শত্রুকর্ত্তৃক আক্রান্ত লোকসমূহকে যেহেতু রক্ষা করিয়া থাকেন, সেই হেতু আপনি অন্যান্য লোকের সমান নহেন; তাই আপনার গুণগুলিও অসংখ্যতা ধারণ করে॥

হে মলিনহৃদয়! আপনার বুদ্ধি, ভয়বশতঃ একে বারে লোপ পাইয়া যায় এবং আপনি (পরের পশুপালনপ্রভৃতি নীচ কার্য্য করায়) যেহেতু অন্যজন নিন্দিত নীচলোকতা আশ্রয়

অহিতাদনপত্রপস্ত্রসন্নতিমাত্রোজ্ঝিতভীরনাস্তিকঃ।
বিনয়োপহিতস্ত্বয়া কুতঃ সদৃশোঽন্যো গুণবাননবিস্ময়ঃ ॥৭॥
কৃতগোপবধূরতির্ঘ্নতো বৃষমুগ্রে নরকেঽপি সম্প্রতি।
প্রতিপত্তিরধঃকৃতৈনসো জনতাভিস্তব সাধু বর্ণ্যতে ॥৮॥

---

করিয়া থাকেন, সেই হেতু আপনি অন্য উৎকৃষ্ট লোকের তুল্য নহেন। এই জন্যই আপনার গুণগুলিও অগ্রাহ্যতা ধারণ করে।৬।

**অন্বয়ঃ**—ত্বয়া সদৃশঃ অন্যঃ গুণবান্ কুতঃ? (যেন ত্বম্) অহিতাৎ ত্রসন্ অনপত্রপঃ অতিমাত্রো-জ্ঝিতভীঃ অনাস্তিকঃ বিনয়োপহিতঃ (তথা) অবিস্ময়ঃ॥

(পক্ষান্তরে তু) ত্বয়া সদৃশঃ অন্যঃ অগুণবান্ কুতঃ? (যেন ত্বম্) অহিতাৎ ত্রসন্ অনপত্রপঃ নতিমাত্রোজ্-ঝিতভীঃ অনাস্তিকঃ বিনয়ঃ অপহিতঃ (তথা) অবিস্ময়ঃ ॥৭॥

**টীকা**—অহিতাদিতি। ত্বয়া সদৃশোঽন্যো গুণবান্ গুণাঢ্যঃ কুতঃ ন কুত্রাপীত্যর্থঃ। কুতস্ত্বম্ অহিতাদনর্থাত্ত্রসন্ অধর্মভীরুরিত্যর্থঃ। অপত্রপো নিস্ত্রপো ন ভবতীতি অনপত্র-পস্ত্রপাবান্ অকার্য্যং জুগুপ্সুরিত্যর্থঃ। অতিমাত্রমত্যন্তমুজ্ঝিতভীস্ত্যক্তারিভয় ইত্যর্থঃ। ন অস্তি মতিরস্যেতি নাস্তিকঃ নাস্তিপরলোকঃ। অস্তিনাস্তিদিষ্টং মতিরিতি ঠক্। স ন ভবতী-ত্যনাস্তিকঃ আস্তিক ইত্যর্থঃ। বিনয়েনানৌদ্ধত্যেনোপহিতো বিশিষ্টঃ বিনয়বানিত্যর্থঃ। বিস্ময়ো বিশিষ্টগর্বো ন ভবতীতি অবিস্ময়োঽগর্বঃ। পক্ষস্তু। ত্বয়া সদৃশোঽন্যো গুণবান্ন ভবতীত্যগুণবান্ নির্গুণঃ কুতঃ কুত্র ন কুত্রাপীত্যর্থঃ। ত্বমহিতাচ্ছত্রোস্ত্রসন্ ভীরুঃ। নাস্তি অপত্রপা লজ্জাবিশেষো যস্যেত্যনপত্রপঃ নির্লজ্জঃ। "লজ্জা সাপত্রপান্যত" ইত্যমরঃ। নতি-মাত্রেণ প্রণামেনৈবোজ্ঝিতভীরপাকৃতারিভয়ঃ ন তু পরাক্রমেণেতি ভাবঃ। অস্তি মতিরস্যে-ত্যাস্তিকোঽস্তিপরলোকঃ। পূর্ববৎ ঠক্। স ন ভবতীত্যনাস্তিকঃ নাস্তিক ইত্যর্থঃ বিনয়ো নয়াতীতঃ অপহিতো হিতাদপেতঃ বিস্ময়ো বিগর্বো ন ভবতীতি অবিস্ময়ো গর্বী গর্বযুক্ত ইত্যর্থঃ। অত্রাহিতাদিত্যর্থশ্লেষঃ অন্যত্র শব্দশ্লেষ ইত্যনয়োঃ সঙ্করঃ ॥৭॥

**টিপ্পনী**—অহিতাদিতি। অত্র অর্থাপত্তিঃ, ত্বৎসদৃশগুণবদগুণবতোরুভয়োরপ্যভাবং প্রতি অন্যান্য-বিশেষণপদার্থানাং হেতুত্বাৎ পদার্থহেতুকং কাব্যলিঙ্গমনয়োরপি টীকোক্তসঙ্করে প্রবেশঃ। প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥৭॥

**বাঙ্গালা**—কৃষ্ণ! আপনার তুল্য অন্য গুণবান্ লোক কোথায় আছে? কারণ, আপনি অধর্ম্মভীরু, লজ্জাশীল, শত্রুর ভয় একেবারে ত্যাগ করিয়াছেন, আস্তিক, বিনয়যুক্ত এবং অহঙ্কারশূন্য।

হে মলিনহৃদয়! আপনার তুল্য অন্য নির্গুণ লোক কোথায় আছে? কারণ, আপনি শত্রু হইতে ভয় করেন, নির্লজ্জ, কখন কখন শত্রুর নিকট কেবল অবনত হইয়াই তাহার ভয় ত্যাগ করেন, নাস্তিক, নীতিশূন্য, হিত হইতে পরিভ্রষ্ট এবং অহঙ্কারে পরিপূর্ণ।৭।

विहितापचितिर्महीभृता द्विषतामाहितसाध्वसो बलैः।
भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि चमाभृताम् ॥८॥

अन्वयः—जनताभिः कृत-गोप-वधू-रतेः वृषं घ्नतः अधःकृतैनसः तव सम्प्रति उग्रे नरके अपि प्रतिपत्तिः साधु वर्ण्यते ॥

(पचान्तरे तु)···घ्नतः कृतैनसः तव···अधःप्रतिपत्तिः··· ॥८॥

टीका—कृतेति। गोप्य एव बध्वो गोपवध्वः। स्त्रियाः पुंवदित्यादिना पुंवद्भावः। तासु रतिः कृता येन तस्य गोपीजनवल्लभस्येत्यर्थः। वृषं वृषभरूपिणम् अरिष्टाख्यम् असुरं घ्नतो मारयतः। हन्तेर्लटः शत्रादेशः। अधःकृतैनसो निरस्तकल्मषस्य तवोग्रे भयङ्करे नरके नरकासुरे प्रतिपत्तिः प्रवृत्तिः पुरुषकार इति यावत् सम्प्रति जनताभिर्जनसमूहैः साधु वर्ण्यते, अहो महद्दुष्करं कृतमित्युपश्लाघ्यते। पक्षस्तु। गोपानां वधूषु रतिः कृता येन तस्य पारदारिकस्य वृषं धर्मं वृषभं वा घ्नतः। "सुकृते वृषभे वृष" इति विश्वः। अत-एव कृतैनसः पापकृतः तेन उग्रे दारुणे नरके निरये अधःप्रतिपत्तिरधःप्राप्तिः। "प्रति-पत्तिः पदप्राप्तौ पौरुषे गौरवेऽपि चेति विश्वः। जनताभिः साधु वर्ण्यते दुस्तरोऽस्य पापिष्ठस्य नरकपात इत्युद्घोष्यते इत्यर्थः। अत्र गोपपरदारिकोऽप्यधःकृतैना इति विरोधाभासः श्लेषेण सङ्कीर्यते ॥८॥

टिप्पनी—कृतेति। अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥८॥

বাঙ্গালা—হে কৃষ্ণ! আপনি গোপরমণীগণের প্রতি স্নেহ প্রকাশ করিয়াছেন, বৃষ-রূপী অরিষ্টাসুরকে বধ করিয়াছেন এবং সমস্ত পাপ দূরীভূত করিয়াছেন; বিশেষতঃ বর্ত্তমান সময়ে ভয়ঙ্কর নরকাসুরকে বধ করিয়া যে পুরুষকার প্রকাশ করিয়াছেন, তাহা সকল লোকেই সাধুবাদের সহিত বর্ণনা করিতেছে ॥

হে মলিনহৃদয়! আপনি গোপরমণীগণের সহিত রমণ করিয়াছেন এবং বৃষ হত্যা করিয়া-ছেন, সুতরাং পাপই করিয়াছেন; অতএব এখন ভয়ঙ্কর নরকেই আপনার অধঃপাত ঘটিবে ইহা সকল লোকেই সম্যক্ বর্ণনা করিতেছে ॥৮॥

अन्वयः—सानुचरः त्वं महीभृता विहितापचितिः बलैः द्विषताम् आहितसाध्वसः (सन्) महताम् अपि चमाभृताम् उपरि उच्चकैः भव ॥

(पचान्तरे तु) त्वं महीभृता विहितापचितिः द्विषतां बलैः आहितसाध्वसः (च सन्) महतां चमाभृताम् उपरि अपि उच्चकैः सानुचरः भव ॥९॥

टीका—विहितेति। सह अनुचरः सानुचरः सभृत्यो महीभृता चैद्येन विहितापचितिः कृतपूजः। लोकवेदयोः सानुचरस्यैव राज्ञः पूज्यत्वप्रसिद्धेरिति भावः। एतएव बलैः सैन्यै-र्द्विषतां शत्रूणामाहितसाध्वसो जनितभयः सन् महतामपि चमाभृतां राज्ञामुपरि उच्चकै-र्भवतस्त्वं भव सर्वोत्कर्षेण वर्तस्व। पक्षस्तु महीभृता चैद्येन विहितापचितिः कृत;

घनजालनिभैर्दुरासदाः परितो नागकदम्बकैस्तव।
नगरेषु भवन्तु वीथयः परिकीर्णा वनजैर्मृगादिभिः ॥१०॥
सकलापिहितस्वपौरुषो नियतव्यापदवर्द्धितोदयः।
रिपुरुन्नतधीरचेतसः सततव्याधिरनीतिरस्तु ते ॥११॥

---

ष्ठानिः। "भवेदपचितिः पूजाव्ययह्रानिषु निष्कृताविति विश्वः। अतएव द्विषतां बलैराहितसाध्वसो भीषितः सन् महतां क्षमाभृतां भूधराणामुपरि सानुषु चरतीति सानुचरः स्व भव वरिष्ठः। अत्रापि शब्दार्थश्लेषसङ्करः ॥९॥

**टिप्पनी**—विहितेति। अत्र प्रकरणात् महीश्वरपदेन राजा शिशुपाल एव लभ्यते इति न विशेषे अविशेषाख्यदोषः। प्रसादो गुणः वैदर्भी च रीतिः ॥९॥

**বাঙ্গালা**—রাজা শিশুপাল, অনুচরবর্গের সহিত আপনার পূজা করিলে, আপনি আপনার সৈন্যগণদ্বারা শত্রুদিগের ভয় জন্মাইয়া, বড় বড় রাজগণেরও উপরে উন্নত হউন ॥

রাজা শিশুপাল আপনার বলক্ষয় করিয়া দিলে, অন্যান্য শত্রুগণের সৈন্য আপনার ভয় জন্মাইতে থাকিবে; তখন আপনি বড় বড় পাহাড়ের উপরিস্থ উচ্চ উচ্চ সানুদেশে বিচরণ করিতে থাকুন ॥৯॥

**अन्वयः**—तव नगरेषु वीथयः घन-जालनिभैः वनजैः मृगादिभिः नागकदम्बकैः परितः परिकीर्णाः (सत्यः) दुरासदाः भवन्तु ॥१०॥

**टीका**—घनेति। तव नगरेषु वीथयो रथ्याः घनजालनिभैर्मेघसमूहकल्पैः वनजैर्वनभवैर्मृगादिभिः मृगप्रभृतिभिर्भद्रो मन्द्रो मृगश्चेत्येवं त्रिविधैरपीत्यर्थः। नागकदम्बकैर्गजवृन्दैः परितः परिकीर्णाः व्याप्ताः अतएव दुरासदाः दुष्प्रवेशा भवन्तु। राज्ञी स्थानानि सद्ऐश्वर्य्यं च ते भविष्यन्तीत्यर्थः। पक्षस्तु। घनजालनिभैः सान्द्रानायतुल्यैः। आनायः पुंसि जालं स्यादित्यमरः। नागकदम्बकैः सर्पसङ्घैर्वनजैर्मृगादिभिर्मृगव्याघ्र-पुलिन्दप्रभृतिभिः। अथवा मृगादिभिः मृगभक्षकैः शार्दूलादिभिः दुरासदा भवन्तु राज-विग्रहादरण्यप्रायं गता भवन्त्वित्यर्थः ॥१०॥

**टिप्पनी**—घनेति। अत्र घनजालनिभैरिति लुप्तोपमया पदश्लेषः सङ्कीर्यते। बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥१०॥

**বাঙ্গালা**—মেঘসমূহতুল্য কৃষ্ণবর্ণ বন্য হরিণপ্রভৃতি এবং হস্তিসমূহ দ্বারা আপনার নগরের রাস্তাগুলি, সকল দিকে ব্যাপ্ত হইয়া, দুর্গম হউক।

নিবিড় জালের ন্যায় কৃষ্ণবর্ণ মৃগভক্ষক বন্য ব্যাঘ্রপ্রভৃতি এবং বন্য হস্তিসমূহ দ্বারা আপনার নগরের রাস্তাগুলি, চারিদিকে ব্যাপ্ত হইয়া, দুর্গম হউক ॥১০॥

**अन्वयः**—उन्नत धीर-चेतस, ते रिपुः सकलापिहित-स्वपौरुषः नियतव्यापत् अवर्द्धितोदयः सततः व्याधिः अनीतिः (च) अस्तु।

विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषः।
यदुपुङ्गव ! बन्धुसौहृदात् त्वयि पाता ससुरो नवासवः ॥१२॥

---

(पक्षान्तरे तु) अचेतसः ते रिपुः उन्नतधीः··· ··· ॥११॥

टीका—सकलैरिति। उन्नतमुदारं धीरमविकारं चेतो यस्य तस्य ते तव रिपुः सकलैरपिहितं तिरस्कृतं स्वपौरुषं यस्य सः। नियता नित्या व्यापदो विशिष्टापदो यस्य सः। अवर्द्धितोदयः असम्पूरिताभ्युदयः सततव्याधिः सततरोगः। अनीतिर्नीतिरहितः एवंविधोऽस्तु। पक्षस्तु। अचेतसः अमनस्विनः ते रिपुश्चैद्यः सकलैरपिहितस्वपौरुषः अतिरस्कृतात्मविक्रमः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यल्लोपे नञ्समासः। नियतं नित्यं व्यापत् विगतापत् अवर्द्धितोदयः अच्छिन्नोदयः। वृधुच्छेदने वृधाविति धातोः कर्मणि क्तः। उन्नतधीरुदारबुद्धिः सततव्याधिविगताधिर्मनोव्यथारहितः। अनीतिरीतिबाधरहितोऽस्तु। "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षड़ेता ईतयः स्मृताः।" अत्र सर्वत्र पदभङ्गेनार्थद्वयप्रतिपादनाज्जतुकाष्ठवदेकशब्दप्रतीतेः शब्दश्लेषः ॥११॥

टिप्पनी—सकलैति। अत्र बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥११॥

বাঙ্গালা—আপনার হৃদয় উদার এবং ধীর; এদিকে আপনার শত্রুর পুরুষকারকে যেন সকলেই নীচে ফেলিয়া রাখে, নিশ্চয়ই যেন তাহার বিশেষরূপ বিপদ ঘটে, উন্নতির যেন বৃদ্ধি হয় না, সর্বদাই যেন রোগ থাকে এবং নীতিরহিত কার্য্যই যেন তাহার ঘটিতে থাকে।

আপনি হৃদয়বিহীন; সুতরাং আপনার শত্রু মহারাজ শিশুপালের বুদ্ধি উদার হউক, সকলেই যেন তাঁহার পুরুষকারকে নীচে ফেলিতে পারে না, তিনি যেন নিশ্চয়ই বিপদবিহীন হন, তাঁহার উন্নতি যেন অবিচ্ছিন্নভাবে চলিতে থাকে, সর্বদাই তিনি মনোবেদনাবিহীন হউন এবং তাঁহার রাজ্যে যেন অতিবৃষ্টি প্রভৃতি উৎপাত না হয় ॥১১॥

अन्वयः—(हे) यदुपुङ्गव ! चैद्येन त्वयि बन्धुसौहृदात् घटाम् उपेयुषः तव विकचोत्पलचारुलोचनः ससुरः नवासवः पाता।

(पक्षान्तरे तु) (हे) यदुपुङ्गव ! विकचोत्पलचारुलोचनः ससुरः वासवः [अपि] त्वयि बन्धुसौहृदात् चैद्येन [सह] घटाम् उपेयुषः तव न पाता ॥१२॥

टीका—विकचेति। पुमान् गौरिव पुङ्गवः पुरुषर्षभः। उपमितसमासः "गोरतद्धितलुकीति समासान्तष्टच्प्रत्ययः। यदुषु पुङ्गव ! यदुश्रेष्ठ ! "श्रेष्ठोत्तमौ तु पुङ्गवाविति वैजयन्ती। चैद्येन कर्त्रा घटां घनसन्धिम् उपेयुषस्तव सम्बन्धीनि विकचोत्पलानि वासनार्थं विहितानि तान्येव चारुलोचनानि यस्य सः। सह सुरया माध्व्या गौड्या वा ससुरः। "गौड़ी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधेति वचनात्। अत्र राजन्यवैश्ययोः पैष्ट्यामेव निषेधः। नवासवो नवमद्यं नारिकेलादिकमिति सुरासवयोर्न पौन:

चलितानकदुन्दुभिः पुरः सबलस्त्वं सह सारथीन तम्।
समितौ रभसादुपागतः सगदः सम्प्रतिपत्तुमर्हसि ॥१३॥

---

वक्तव्यम्। बन्धुसौहृदात् बन्धौ त्वयि स्नेहात् पाता पास्यति त्वद्गृहे सह पानं करिष्यति सम्प्रति तेन सन्धिप्रतिपन्नत्वादिति भावः। पिबतेः कर्मणि लुट्। पक्षान्तरे तु। हे यदुपुङ्गव! यादववलीवर्द! चैद्येन सह घटाम् उपेयुषः समराभियोगं गतस्य तव विकचोत्पलचारुलोचनः। असुरः सदेवो वासवोऽपि बन्धुसौहृदात् उपेन्द्रे त्वयि सौभ्रात्रादित्यर्थः। पाता त्राता न किं पुनर्भ्रातरो भीष्मादय इति भावः। पातेस्तृच्। सुहृदयस्य भावः सौहृदमिति विग्रहः युवादित्वादण् प्रत्ययः हृदयस्य हृल्लेखेति हृद्भावविधानसामर्थ्यान्न हृद्भगेत्युभयपदवृद्धिः अतएव सौहृददौहृदशब्दाभ्यामपि हृद्भावाविति वामनः सुहृदस्तु सौहार्दमेव। शब्दार्थश्लेषसङ्करः ॥१२॥

**टिप्पनी**—विकचेति। अत्र प्रथमे पादे लुप्तोपमेति टीकोक्तसङ्करे तस्या अपि प्रवेशः। बन्धौत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥१२॥

**বাঙ্গালা**—হে যদুবংশশ্রেষ্ঠ! আপনি, মহারাজ শিশুপালের সঙ্গে সন্ধি করিলে, তিনি আপনার প্রতি বন্ধুস্নেহবশতঃ আপনার গৃহে সুরার সহিত নূতন আসব (নারিকেল প্রভৃতির মদ্য) পান করিবেন; তাহার পাত্রের ভিতরে সুন্দর নয়নের ন্যায় প্রস্ফুটিত পদ্ম নিক্ষিপ্ত থাকিবে।

হে যদুবংশের বৃষ! আপনি, মহারাজ শিশুপালের সঙ্গে যুদ্ধে প্রবৃত্ত হইলে, যাঁহার শরীরে প্রস্ফুটিত পদ্মের ন্যায় সুন্দর নয়ন রহিয়াছে, সেই ইন্দ্রও, দেবগণের সহিত আসিয়া, আপনার প্রতি ভ্রাতৃস্নেহবশতঃ আপনাকে রক্ষা করিতে পারিবেন না ॥১২॥

**अन्वयः**— पुरः चलितानकदुन्दुभिः सबलः सगदः त्वं सारथीन सह रभसात् समितौ उपागतः [सन्] तं सम्प्रतिपत्तुम् अर्हसि।

[पक्षान्तरे तु] पुरः चलितानकदुन्दुभिः सबलः सगदः त्वं सहसा रभसात् समितौ उपागतः [सन्] रथीन तं सम्प्रतिपत्तुम् अर्हसि ॥१३॥

**टीका**—चलितेति। रभसाद्धर्षादुपागतः प्राप्तस्त्वं चैद्यं त्वं पुरश्चलितानकदुन्दुभिः पुरोगतवसुदेवः। "वसुदेवोऽस्य जनकः स एवानकदुन्दुभिरित्यमरः। सबलो बलभद्रसहितः। सारथीन सारणाख्येन पुत्रेण सह सगदः गदाख्येन अनुजेन सहितः समितौ सभायां सम्प्रतिपत्तुं सम्भावयितुम् अर्हसि सर्वबन्धुसमेतः प्रत्युद्गन्तुमर्हसीत्यर्थः। पक्षान्तरे तु। समितौ समरे रभसाद्वेगादुपागतः। "रभसो वेगहर्षयोः।" "समितिः समरे साम्ये सभायामपि संगतेत्यभयत्रापि विश्वः। तं चैद्यं पुरतः चलिता आनकाः पटहाः दुन्दुभयो भेर्यश्च यस्य सः। "आनकः पटहोऽस्त्री स्यात् भेरी स्त्री दुन्दुभिः पुमानित्यमरः। सबलः ससैन्यः। सगदः गदया कौमोदक्या सहितः सन् सहसा झटिति। रथीन युद्धेन सम्प्रतिपत्तुमभियोक्तुमर्हसि। अत्रापि शब्दार्थश्लेषसङ्करः ॥१३॥

समरेषु रिपून् विनिघ्नता शिशुपालेन समेत्य सम्प्रति ।
सुचिरं सह सर्वसात्वतैर्भव विस्रब्धविलासिनीजनः ॥१४॥
विजितक्षुधमीक्ष्यतामसौ महता त्वामहितं महाभ्रताम् ॥
असकृज्जितसंयतं पुरो मुदितः सप्रमदं महीपतिः ॥१५॥

---

**टिप्पनी**—चलितेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१३॥

**বাঙ্গালা**—আপনার পিতা বসুদেব অগ্রে অগ্রে যাইবেন, বলরাম ও গদনামকভ্রাতা সঙ্গে সঙ্গে থাকিবেন এবং সারণনামক পুত্র পিছনে আসিবেন ; এই ভাবে আপনি আনন্দে সভায় উপস্থিত হইয়া, মহারাজ শিশুপালকে আপ্যায়িত করিতে পারেন।

ঢাক ও ভেরী অগ্রে অগ্রে চলিতে থা'ক, সৈন্যগণও সঙ্গে চলুক, এই ভাবে আপনি গদা লইয়া, শীঘ্রই বেগে সমরাঙ্গনে উপস্থিত হইয়া, যুদ্ধে মহারাজ শিশুপালকে আক্রমণ করিতে পারেন ॥১৩॥

**अन्वयः**—समरेषु रिपून् विनिघ्नता शिशुपालेन समेत्य सम्प्रति सर्वसात्वतैः सह सुचिरं विस्रब्ध-विलासिनीजनः भव ।

[पक्षान्तरे तु] रिपून् विनिघ्नता शिशुपालेन [सह] समरेषु समेत्य…॥१४॥

**टीका**—समरेष्विति । किञ्च समरेषु रिपून् विनिघ्नता अतिशूरेणेत्यर्थः । शिशुपालेन समेत्यैक्यं प्राप्य सम्प्रति सुचिरं बहुकालं सत्वतः अपत्यानि पुमांसः सात्वताः यादवाः उत्सादिभ्योऽञ् । तैः सर्वैः सर्वसात्वतैः सह विस्रब्धविलासिनीजनः शिशुपालभय-निवृत्तिविस्रब्धविलासिनीजनो भव । समौ विस्रम्भविश्वासावित्यमरः । पक्षान्तरे तु । रिपु-घातिना शिशुपालेन सह समरेषु समेत्य सङ्गत्य सम्प्रत्येव सर्वसात्वतैः सह विश्वस्तविला-सिनीजनो भव । "विश्वस्ता विधवा समे" इत्यमरः । आदितश्चेति चकारादनुक्तसमुच्चयार्था-च्छ्वसेर्निष्ठायामिट्प्रतिषेधः । शिशूनामनुकूलानामेवार्थं पालयिता जीवतामिति सर्वथा यादवानद्यैव हनिष्यतीति भावः ॥१४॥

**टिप्पनी**—समरेष्विति । अत्र पदश्लेषोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

**বাঙ্গালা**—বর্ত্তমান সময়ে সমস্ত যাদবগণের সহিত আপনি, যুদ্ধে শত্রুহন্তা শিশু-পালের সঙ্গে (সন্ধিসূত্রে) সম্মিলিত হউন ; (তাহাতে শত্রুভয় একেবারে নিবৃত্তি পাওয়ায়) আপনাদের রমণীরাও চিরকালের জন্য আশ্বস্ত হউন।

বর্ত্তমান সময়ে আপনি সমস্ত যাদবগণকে নিয়া, শত্রুহন্তা শিশুপালের সঙ্গে যুদ্ধে সম্মিলিত হইলে পর (তিনি আপনাদিগকে বধ করায়) আপনাদের রমণীরা চিরকালের জন্য বিধবা হউন ॥১৪॥

**अन्वयः**—असौ महीपतिः मुदितः (सन्) विजितक्षुधम् महता महीभृतां महितम् असकृत् जितसंयुतं सप्रमदं त्वा पुरः ईक्षताम् ॥

इति जोषमवस्थिते द्विषः प्रणिधिं गामभिधाय सात्यकिः ।
वदति स्म वचोऽथ चोदितश्चलितैकभ्रु रथाङ्गपाणिना ॥१६॥

(पद्यान्तरे तु)……महतां महीभृताम् आहित…त्वां पुरः ईक्षताम् ॥१५॥

টীকা—বিজিতেতি। অসৌ মহীপতিশ্চৈদ্যঃ মুদিতঃ সন্ বিজিতক্রুধং সংত্যক্তক্রোধং মহতাং মহীভৃতাং রাজ্ঞামহিতং পূজিতম্। "মতিবুদ্ধীত্যাদিনা বর্ত্তমানে ক্তঃ, তদ্যোগে ষষ্ঠী। অসকৃদ্বহুশো জিতাঃ সংযতঃ আজয়ো যেন স তম্। "সমুদায়ঃ স্ত্রিয়াং সংযৎসমিত্যাজিসমিদ্যুধঃ" ইত্যমরঃ। সপ্রমদং সহর্ষং ত্বা ত্বাম্। "দ্বিতীয়ায়া" ইতি ত্বাদেশঃ। পুরোঽগ্রে ঈক্ষতাং পশ্যতু। পক্ষান্তরে তু। বিজিতক্রুধং সংত্যক্তক্রোধং মহতাং মহীভৃতাং চৈদ্যাদীনামহিতম্ অরিমসকৃজ্জিতশ্চাসৌ সংযতশ্চ। স্নাতানুলিপ্তবৎ পূর্বকালেতি সমাসঃ। "বদ্ধো নদ্ধশ্চ সংযত" ইতি বৈজয়ন্তী। সপ্রমদং সস্ত্রীকং ত্বামিতি পদচ্ছেদঃ অসকৃদীক্ষতাম্ ॥১৫॥

টিপ্পনী—বিজিতেতি। অত্র দ্বিতীয়ে পাদে বৃত্ত্যনুপ্রাসঃ, চতুর্থে চ ছেকানুপ্রাসঃ, পদশ্লেষস্য প্রধানালঙ্কার ইতি সর্বেষাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। বন্ধার্থস্যোৎকটত্বাৎ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥১৫॥

বাঙ্গালা—আপনি বড় বড় রাজাদের সম্মানিত এবং বহুবার যুদ্ধ জয় করিয়াছেন; এখনে আপনি (সন্ধি করিলে) আপনার ক্রোধ দূরীভূত হইবে এবং আপনি আনন্দিত হইবেন; এই অবস্থায় আমাদের রাজা শিশুপালও আনন্দিত হইয়া আপনাকে সম্মুখে দেখুন ॥

আপনি বড় বড় রাজাদের শত্রু; (সুতরাং আমাদের রাজা শিশুপালেরও শত্রু;) তাই তিনি বার বার যুদ্ধে জয় করিয়া, রমণীগণের সহিত আপনাকে আবদ্ধ করিয়া, আনন্দিত হইয়া, সম্মুখে দেখুন। তখন কিন্তু আর আপনার ক্রোধ থাকিবে না ॥১৫॥

অন্বয়:—অথ রথাঙ্গপাণিনা চলিতৈকভ্রু চোদিতঃ সাত্যকিঃ ইতি গাম্ অভিধায় জোষম্ অবস্থিতে দ্বিষঃ প্রণিধিং বচঃ বদতি স্ম ॥১৬॥

টীকা—ইতীতি। ইতীত্থম্ভূতাং গাং বাচম্ "স্বর্গেষুপশুবাগ্বজ্রদিঙ্নেত্রঘৃণিভূজলে। লক্ষ্যদৃষ্ট্যা স্ত্রিয়াং পুংসি গৌঃ" ইতি বিশ্বঃ। অভিধায় জোষমবস্থিতম্। "তূষ্ণীং জোষং অবিস্ময়েন ইতি বৈজয়ন্তী। দ্বিষঃ প্রণিধিং দূতং সাত্যকিঃ শৈনেয়ঃ অথ দূতবাক্যানন্তরং রথাঙ্গং চক্রং পাণৌ যস্য তেন রথাঙ্গপাণিনা হরিণা। "সপ্তম্যাধিকরণে চ" ইতি পাণেঃ পরনিপাতঃ। চলিতা প্রেরিতা একা ভ্রূর্যস্মিন্ কর্মণি তত্। গোস্ত্রিয়োরুপসর্জনস্যেতি হ্রস্বঃ। চোদিতঃ প্রেরিতঃ প্রত্যুত্তরং দেহীতি ভ্রূসংজ্ঞয়া প্রেরিতঃ সন্নিত্যর্থঃ বচো বদতি স্ম অবাদীৎ ॥১৬॥

টিপ্পনী—ইতীতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

বাঙ্গালা—শিশুপালের দূত এই কথা বলিয়া নীরবে অবস্থান করিতে লাগিলে, শ্রীকৃষ্ণের একটী ভ্রূসঞ্চালনের ইঙ্গিতে প্রণোদিত হইয়া সাত্যকি বাক্য বলিতে লাগিলেন ॥১৬॥

मधुरं बहिरन्तरप्रियं कृतिनाऽवाचि वचस्तथा त्वया ।
सकलार्थतया विभाव्यते प्रियमन्तर्बहिरप्रियं यथा ॥१७॥
अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम् ।
वहति स्फुटमेकमेव ते वचनं शाकपलाशदेश्यताम् ॥१८॥

---

**अन्वयः**—कृतिना त्वया बहिः मधुरम् अन्तः अप्रियं वचः तथा अवाचि, यथा सकलार्थतया अन्तः प्रियं बहिः अप्रियं विभाव्यते ॥१७॥

**टीका**—किन्त्वत्र वचस्येकविधं प्रतिश्लोकैराह । मधुरमित्यादि । कृतिना कुशलेन त्वया बहिः प्रकाशे मधुरं प्रियम् अन्तर्गर्भे अप्रियं वचस्तथा तेन प्रकारेणावाचि उक्तम् । वचेः कर्मणि लुङि चिणि वृद्धिः । यथा येन प्रकारेण सकलार्थतया सम्पूर्णाभयार्थतया हेतुना अन्तःप्रियं बहिरप्रियं विभाव्यते अवधार्यतेऽप्रियगर्भं प्रियं यदुक्तं तद्वाक्यं तु प्रियगर्भमप्रियमेव प्रतीयते । इदमुक्तचातुर्य्यं तवैवेत्यभिप्रेत्योक्तं कृतिनेति अतो न श्रद्धेय- मिदं वच इति भावः ॥१७॥

**टिप्पनी**—मधुरमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

**বাঙ্গালা**—তুমি বাক্‌পটু লোক কি না; তাই বাহিরে প্রিয় এবং ভিতরে অপ্রিয় কথাগুলি এমন ভাবে বলিয়াছ; যাহাতে সম্পূর্ণার্থ পর্য্যালোচনা করিলে, ভিতরেই প্রিয় এবং বাহিরেই অপ্রিয় বলিয়া আমাদের মনে হইতেছে ॥১৭॥

**अन्वयः**—एकतः अतिकोमलम् अन्यतः सरसाम्भोरुहवृन्तकर्कशम् एकम् एव ते वचनं स्फुटं शाकपलाशदेश्यतां वहति ॥१८॥

**टीका**—अथवा बहिरेव प्रियम् अन्तरेवाप्रियं तथापि न ग्राह्यमित्युपमया व्यनक्ति । अतीति । एकतो बहिरतिकोमलम् अन्यतः अन्तः सरसमार्द्रं यदम्भोरुहस्य वृन्तं प्रसव- बन्धनं तदिव कर्कशं परुषम् एकमेव ते तव वचनम् ईषदसमाप्तं शाकपलाशं महापला- श्यतरुपत्रं तत्तुल्यम् । "शाकः पलाशसारः स्यात् वरदारुः करच्छदः । महापत्रो महा- शाकः स्थिरदारुहं नीटक" इत्यभिधानरत्नमालायाम् । ईषदसमाप्तौ कल्पदेश्यदेशीय इति देश्यप्रत्ययः । कल्पदेश्यदेशीयानि सादृश्यवाचकानीति दण्डी । तस्य भावस्तत्ता तां स्फुटं वहति । अन्तःपरुषस्य बहिर्माधुर्य्यं शाकपलाशवदिति भावः । अत्र शाकपलाशोपमायाः पद्मवृन्तोपमासापेक्षत्वात् सङ्करः ॥१८॥

**टिप्पनी**—अतीति । अत्र प्रथमा लुप्तोपमा द्वितीया आर्थोपमा ; तयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

**বাঙ্গালা**—তোমার একই বাক্য, এক দিকে অতিকোমল এবং অপর দিকে সরস পদ্ম-বৃন্তের ন্যায় অত্যন্ত কঠিন; সুতরাং তোমার এ বাক্য, স্পষ্টতই সেগুণ গাছের পাতার সাদৃশ্য ধারণ করিয়াছে ॥১৮॥

প্রকটং মৃদু নাম জল্পতঃ পরুষং সূচয়তোঽর্থমন্তরা।
শকুনাদিব মার্গবর্ত্তিভিঃ পুরুষাদুদ্বিজিতব্যমীদৃশাৎ ॥১৯॥
হরিমর্চ্চিতবান্ স ভূপতির্যদি রাজ্ঞস্তব কোঽত্র মৎসরঃ।
ব্যসনায় সসৌরভস্য কস্তরুসূনস্য শিরস্যসূয়তি ॥২০॥

---

**অন্বয়ঃ**—প্রকটং মৃদু নাম জল্পতঃ অন্তরা পরুষম্ অর্থং সূচয়তঃ ঈদৃশাৎ পুরুষাৎ ঈদৃশাৎ শকুনাৎ মার্গবর্ত্তিভিঃ (জনৈঃ) ইব (জনৈঃ) উদ্বিজিতব্যম্ ॥১৯॥

**টীকা**—নন্বপ্রিয়গর্ভেঽপি বাক্যে গুণগ্রাহিভিঃ প্রিয়মেব গৃহ্যতাং হংসৈঃ ক্ষীরমিবাম্ভসী-ত্যাশঙ্ক্যাহ। প্রকটমিতি। প্রকটং প্রকাশং মৃদু নাম মৃদুকল্পং জল্পতঃ কথয়তঃ। অন্তরা অন্তঃ পরুষমনিষ্টমর্থং সূচয়তঃ ঈদৃশাদন্তঃশুদ্ধিশূন্যাৎ পুরুষাদীদৃশাৎ শকুনাদিব বহিঃ শুভঙ্করং কুর্ব্বতোঽন্তরা পরুষং সূচয়তঃ পিঙ্গলাদিপক্ষিণ ইব মার্গবর্ত্তিভিরধ্বগৈশ্চ উদ্বি-জিতব্যং সর্ব্বাত্মতোঽপি গ্রাহ্যং বিষসম্পৃক্তান্নবদখিলস্যানর্থহেতুত্বাদিতি ভাবঃ। বিজ ইড়ীতীট্, কিত্ত্বান্ন গুণঃ ॥১৯॥

**টিপ্পনী**—প্রকটমিতি। অত্র শ্রৌতোপমালঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৯॥

**বাঙ্গালা**—যে পক্ষী বাহিরে কোমল রব করে, অথচ ভিতরে অমঙ্গল সূচনা করে, সেই পক্ষীকে যেমন পথিকের ভয় করা উচিত; তেমন যে লোক বাহিরে কোমল অর্থ প্রকাশ করে এবং ভিতরে নিষ্ঠুর অর্থ সূচনা করে, সেই লোককেও জনসাধারণের ভয় করা উচিত ॥১৯॥

**অন্বয়ঃ**—সঃ ভূপতিঃ যদি হরিম্ অর্চ্চিতবান্, অত্র তব রাজ্ঞঃ কঃ মৎসরঃ? কঃ সসৌরভস্য তরু-সূনস্য শিরসি ব্যসনায় অসূয়তি ॥২০॥

**টীকা**—এবং দূতং নির্ভর্ৎস্য অথ চৈদ্যং তদ্দোষোদ্ঘাটনপূর্ব্বকং ভর্ৎসয়তি। হরিমিত্যাদি। স ভূপতির্যুধিষ্ঠিরো হরিমর্চ্চিতবান্ যদি পূজিতবাংশ্চেৎ। অত্র হর্য্যর্চ্চনে তব রাজ্ঞশ্চৈদ্যস্য মৎসরঃ কঃ নিরর্থক ইত্যর্থঃ। সসৌরভস্য পরিমলযুক্তস্য তরুসূনস্য। তরুগ্রহণং সূনস্য সাধারণতাদ্যোতনার্থম্। শিরসি ব্যসনায়ার্পণায় কোঽসূয়তি ন কোঽপীত্যর্থঃ। ক্রুধ-দ্রুহেত্যাদিনা সম্প্রদানসংজ্ঞা। সর্ব্বত্র গুণবন্তস্তু গুণমর্ব্বন্তু মন্যতে তটস্থানাং কিমনেন তথা সন্তাপেনেতি ভাবঃ। অত্র হরিতরুসূনয়োর্ব্বাক্যদ্বয়ে বিম্বপ্রতিবিম্বভাবেনার্চাশিরোধারণরূপ-সমানধর্ম্মনির্দ্দেশাৎ দৃষ্টান্তালঙ্কারঃ ॥২০॥

**টিপ্পনী**—হরিমিতি। অত্র চতুর্থপাদগতেন [illegible] টীকোক্তদৃষ্টান্তঃ সংদৃশ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২০॥

**বাঙ্গালা**—সে রাজা যদি শ্রীকৃষ্ণের পূজা করিয়া থাকেন, তাহাতে তোমার রাজার (শিশুপালের) বিদ্বেষের কি হইল? যদি কেহ বৃক্ষের সুগন্ধি পুষ্প মস্তকে স্থাপন করে, তাহাতে কোন্ ব্যক্তি অসূয়া প্রকাশ করে? ॥২০॥

सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः ।
सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनीषिणः ॥२१॥
उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥२२॥

---

**अन्वयः**—अहो ! लघीयसां हृदयं सुकुमारम् ; यतः अमी तद्गतम् अप्रियं सहसा एव समुद्गिरन्ति ; मनीषिणः (तु) तत् क्षपयन्ति एव हि ॥२१॥

**टीका**—अथ कथं महान् महतः पूजां सहत इत्याशङ्क्य हरिचैद्ययोर्महदन्तरं मनसि निधाय सामान्यतः सुजनदुर्जनयोरन्तरं चतुर्भिराह । सुकुमारमित्यादि । लघीयसामल्पाशयानां हृदयं सुकुमारं तुच्छम् । कुतः यतोऽमी लघीयांसस्तद्गतं हृदयगतम् अप्रियं सहसैव झटित्येव समुद्गिरन्ति समुच्चारयन्ति मनीषिणस्तु तदप्रियं कथञ्चित् सम्भाव्यमानमपीति शेषः । अन्तरेव क्षपयन्ति जरयन्ति न तूद्गिरन्तीत्यर्थः । अहो इत्याश्चर्ये । चैद्यश्चोद्गिरति नैवं हरिरिति अहो महदन्तरमनयोरिति भावः । अत एवाप्रस्तुतात् सामान्यात् प्रस्तुतविशेषप्रतिपत्तिरूपोऽयमप्रस्तुतप्रशंसाभेदः । "अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रितेति लक्षणात् । आदिशब्दात्सामान्यविशेषसंग्रहः । एवमुत्तरश्लोकत्रयेऽपि द्रष्टव्यं विशेषन्तु वक्ष्यामः ॥२१॥

**टिप्पनी**—सुकुमारमिति । अत्र 'एव' 'हि' इति द्वावेव शब्दौ अत्यन्तमवधारणं सूचयतः "यः कौमारहरः स एव हि वरः" इत्यादिवदिति न निरर्थकत्वदोषः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२१॥

**বাঙ্গালা**—কি আশ্চর্য্য ! অত্যন্ত হাল্কা লোকগুলির মন বড়ই কোমল ; যে হেতু উহারা মনের ভাব তখনই প্রকাশ করিয়া ফেলে ; আর বুদ্ধিমান্ লোকেরা মনের ভাব মনেই জীর্ণ করিয়া থাকেন ॥২১॥

**अन्वयः**—सज्जनः स्वभावतः (एव) सततं सर्वजनस्य उपकारपरः (भवति) ; अहो ! तथापि तदुन्नतिः असताम् अनिशं गुरुहृद्रोगकरी ॥२२॥

**टीका**—उपकारेति । किञ्च सज्जनः स्वभावतः सततं सर्वजनस्योपकारपरो भवति न तूपाधिवशात् कदाचित् कस्यचिदेवेति भावः । तथापि सर्वोपकारित्वेऽपि तदुन्नतिस्तस्य सज्जनस्योत्कर्षः असतामसाधूनामनिशं गुरुहृद्रोगकरी अत्यन्तहृदयसन्तापकारिणी अहो आश्चर्यम् । "कृञो हेत्वित्यादिना ताच्छील्ये टप्रत्यये टिड्ढाणञित्यादिना ङीप् । हरिचैद्यावेवम्भूताविति सैवाप्रस्तुतप्रशंसा ॥२२॥

**टिप्पनी**—उपेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

**বাঙ্গালা**—সজ্জন স্বভাবতই সর্বদা সকল লোকের উপকারপরায়ণ হইয়া থাকেন ; কি আশ্চর্য্য ! তথাপি তাঁহার উন্নতি, অসৎ লোকের সর্বদাই গুরুতর হৃদ্রোগ জন্মাইয়া থাকে ॥২২॥

परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः।
परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥२३॥
अनिराकृततापसम्पदम् फलहीनां सुमनोभिरुज्झिताम्।
खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥२४॥

---

अन्वयः—उत्तमः परवृद्धिभिः न परितप्यते एव, अपरः परवृद्धिभिः परितप्तः अपि सुसंवृतिः (तिष्ठति); अधमः (तु) परवृद्धिभिः आहितव्यथः (सन्) स्फुट-निर्भिन्नदुराशयः (भवति) ॥२३॥

टीका—परितप्यत इति। किञ्च उत्तमः परवृद्धिभिर्न परितप्यते न व्यथते एव उत्तमस्य परशुभद्वेष एव नास्तीत्यर्थः। अपरो मध्यम एवेत्यर्थः परितप्तोऽपि शोभना संवृतिः परितापगोपनं यस्य सः सुसंवृतिः सन्तमपि परशुभद्वेषं न प्रकाशयतीत्यर्थः। अधमस्तु परवृद्धिभिराहितव्यथः उत्पादितसन्तापः तथा स्फुटं निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः परशुभद्वेषं प्रकाशयत्येवेत्यर्थः। चैद्यस्त्वधमो हरिस्तूत्तम इति प्रतीतेः पूर्वोक्त एवालङ्कारः ॥२३॥

टिप्पनी—परीति। अत्र तिष्ठतीत्यादिपदानामनुक्तावपि सामर्थ्यादेवावगतेर्न न्यूनपदतादोषः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—উত্তম লোক পরের উন্নতিতে পরিতপ্তই হন না; মধ্যম লোক পরের উন্নতিতে মনে মনে কিঞ্চিৎ পরিতপ্ত হইলেও, বাহিরে সে ভাব গোপন করিয়া থাকেন; আর পরের উন্নতি অধম লোকের হৃদয়ে বেদনা জন্মাইয়া দেয়; তখন সে, নিজের দুরভিপ্রায় স্পষ্টতই প্রকাশ করিয়া ফেলে ॥২৩॥

अन्वयः—बुधः जनः अनिराकृततापसम्पदं फलहीनां सुमनोभिः उज्झिताम् असतीं खलताम् इव खलतां कथं प्रतिपद्येत ॥२४॥

टीका—ननु मानिनां परोत्कर्षे परद्वेषो भूषणमेवेत्याशङ्क्य नेत्याह। अनिराकृतेति। अनिराकृता अनिवारिता तापसम्पत्तापातिशयो यया ताम् एकत्र सन्तापजनकत्वस्वभावादन्यत्रातपच्छायाविरहाच्चेति भावः। तथा फलहीनाम् एकत्र दृष्टादृष्टोपकारशून्यां प्रत्युत भयत्राप्यनर्थकरीं चेति भावः। अन्यत्र सर्वार्थरहितां सुमनोभिर्बुधैरुज्झिताम् अन्यत्र पुष्पैर्वर्जिताम्। "सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमानिति वैजयन्ती। असतीं दुष्टाम् अन्यत्र निरुपाख्यां खलस्य भावः खलता तां खलतां दुर्जनत्वम्। खस्य लता तां खलतां गगनलतिकामिव बुधो जनः सदसद्विवेककुशलो जनः कथं प्रतिपद्येतावलम्बेत न कथमपीत्यर्थः। वृथा मत्सरो न कस्यापि गुण इति भावः। तथापि स खलतां प्रतिपद्यते न चैवं हरिरिति प्रतीतेः सैवाप्रस्तुतप्रशंसा खलतामिवेत्युपमया सङ्कीर्यते। सत्यं न सत्यपि ज्ञानमर्थं शब्दः करोति हीति न्यायादसत्या अपि खलतिकायाः प्रतीतिसत्यतया खलतोपमत्वप्रसिद्धिः ॥२४॥

प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुङ्कुरुते घनध्वनिं नहि गोमायुरुतानि केशरी ॥२५॥
जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ।
विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥२६॥

---

टिप्पनी—अनिरोक्रतेति । अत्र टीकायाम् "उपमया" इति पूर्वोपमयेत्यर्थः । खलता खलता-मिति यमकम् । तेन च टीकोक्तालङ्कारः पुनः संसृज्यते । मधुररचनावशान्माधुर्यं गुणः, वैदर्भी च रीतिः ॥२४॥

बाङ्गाला—आकाशलता, असती अर्थात् कोन समयेइ ताहा विद्यमान थाके ना; ताइ से सन्ताप निवारण करे ना, आर ताहाते फलओ थाके ना, फुलओ थाके ना; सुतरां बुद्धिमान् लोक येमन से आकाशलताके आश्रय करेन ना; सेइ रूप दुर्जनताओ असती, अर्थात् अतिदूषित; सुतरां से सन्ताप निवारण करे ना, (वरं जन्माय); इहलोक वा परलोक कोन लोकेइ से दुर्जनतार कोन फल नाइ; ताइ मनस्वीरा से दुर्जनताके परित्याग करिया थाकेन। अतएव बुद्धिमान् लोकेरा से दुर्जनताके कि करिया आश्रय करिबेन ॥२४॥

अन्वयः—केशवः शपमानाय चेदिभूभुजे प्रतिवाचं न अदत्त । केशरी घनध्वनिम् अनुहुङ्कुरुते, (किन्तु) गोमायुरुतानि नहि अनुहुङ्कुरुते ॥२५॥

टीका—नन्वेवं महानुभावो हरिः किमर्थं तथा सदसि राज्ञा निर्भर्त्स्यमानो मौनमाश्रित इत्याशङ्क्य सत्यमनादरान्न तु कातर्यादित्याह । प्रतीति । केशवः शपमानाय क्रोशते । स्वरितेत्वादात्मनेपदम् । चेदिभूभुजे । क्रियाग्रहणात् सम्प्रदानत्वम् । प्रतिवाचं प्रत्युत्तरं नादत्त । केशरी सिंहो घनध्वनिमनुहुङ्कुरुते प्रतिगर्जति गोमायुरुतानि शिवारुतानि नानुहुङ्कुरुते । "स्त्रियां शिवा भूरिमाय-गोमायुमृगधूर्त्तकाः" इत्यमरः । महतामधमेष्ववज्ञैव नीतिरिति भावः । दृष्टान्तालङ्कारः ॥२५॥

टिप्पनी—प्रतिवाचमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२५॥

बाङ्गाला—शिशुपाल ये आक्रोश प्रकाश करितेछिल, ताहाते श्रीकृष्ण कोन प्रत्युत्तर देन नाइ। केन ना, सिंह मेघेर गर्जन लक्ष्य करियाइ हुङ्कार करिया थाके; किन्तु शृगालेर रव लक्ष्य करिया हुङ्कार करे ना ॥२५॥

अन्वयः—महाधियः जितरोषरयाः, लघुः जनः सपदि क्रोधजितः । विजितेन जितस्य दुर्मतेः मतिमद्भिः सह विरोधिता का ॥२६॥

टीका—किञ्च राज्ञो हरिणा विरोधोऽपि न योग्य इत्याह । जितेति । महाधियः सुधियो जितो रोषरयो यैस्ते तथोक्ताः । लघुरल्पो जनस्तु सपदि क्रोधजितः विजितेन जितक्रोधेन जितस्येत्यर्थः । दुर्मतेर्मूर्खस्य मतिमद्भिः पण्डितैः सह विरोधिता स्पर्द्धा का ।

वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः ।
किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥२७॥
परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥२८॥

---

मूर्खपण्डितयोर्मन्त्रीव स्पर्द्धापि न सङ्गतेत्यर्थः । मूर्खस्यायं चैद्य इति अप्रस्तुतात् सामा-न्यात् विशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥२६॥

**टिप्पनी**—महीति । अत्र रोषपदेन प्रक्रान्तस्य क्रोधपदाभिधानात् पर्य्यायविषयो भग्नप्रक्रमतादोषः ; स च 'सहसा येन जितो लघुर्जनैः' इति द्वितीयचरणपाठेन समाधेयः । प्रसादो गुणः वैदर्भी च रीतिः ॥२६॥

**বাঙ্গালা**—বুদ্ধিমান্ লোকেরা ক্রোধের বেগ জয় করিয়া থাকেন ; আর ক্রোধ জন্মিয়া তখনই ক্ষুদ্রবুদ্ধি লোকগুলিকে জয় করিয়া ফেলে। সুতরাং বুদ্ধিমান্ লোক যে ক্রোধকে জয় করেন, সেই ক্রোধ আবার যাহাকে জয় করে, সেই মূর্খলোকের বুদ্ধিমান্ লোকদিগের সঙ্গে একটা বিরোধিতা কি ? ॥২৬॥

**अन्वयः**—उद्धतैः असतां वचनैः महीयसः गुरुत्वं न खलु व्येति । (तथाहि) औवरैः रजोभिः अवकीर्णस्य मणेः महार्घता किम् अपैति ॥२७॥

**टीका**—नापि चैद्यप्रलापैः कृष्णस्य किञ्चिल्लाघवमित्याशयेनाह । वचनैरिति । उद्ध-तैर्निष्ठुरैरसतां दुर्जनानां वचनैर्महीयसो महत्तमस्य गुरुत्वं गौरवम् न व्येति न पैति खलु । औवरैर्भौमैः "उर्वरा सर्वशस्याढ्याभूमौ स्यात् भूमिमात्रके" इति विश्वः । रजोभिर-वकीर्णस्य छन्नस्य मणेर्महार्घता महामूल्यत्वम् । "मूल्ये पूजाविधावर्घः" इत्यमरः । अपैति किं नापैत्येवेत्यर्थः । अत्र मणिमहीयसोर्वाक्यभेदेन प्रतिबिम्बकरणाद्‌ दृष्टान्तालङ्कारः । महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः हरिरुक्षीर्वपमा-ध्वनिश्च ॥२७॥

**टिप्पनी**—वचनैरिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

**বাঙ্গালা**—দুর্জনের কটুবাক্যে প্রধান জনের গৌরব নষ্ট হয় না। কারণ, কোন মণি, ভূমির ধূলিতে আবৃত হইলে, তাহার মহামূল্যতা নষ্ট হয় কি ? ॥২৭॥

**अन्वयः**—यस्य देहिनः स्वगतः परितोषयिता कश्चन गुणः न अस्ति, (सः) अल्पकः परदोषकथाभिः स्वजनं तोषयितुम् इच्छति किल ॥२८॥

**टीका**—युक्तञ्चैतत्तस्यावध्यं दुरात्मनामित्याह । परीति । यस्य देहिनो जन्तोः परि-तोषयिता परेषामानन्दयिता स्वगतो गुणः कश्चन कश्चिदपि नास्ति अल्पकः तुच्छः स इति शेषः । यत्तदोर्नित्यसम्बन्धात् । परदोषकथाभिरन्यजनदोषोक्तिभिः स्वजनं न तु मध्यस्थ-मिति भावः । तोषयितुमिच्छति किल ईहते खलु । चैद्यस्यापि निर्गुणत्वात्परदूषणं युक्त-मिति अत एवाप्रस्तुतप्रशंसाभेदः ॥२८॥

सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः।
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥२९॥
प्रकटान्यपि नैपुणं महत् परवाच्यानि चिराय गोपितुम्।
विवरीतुमथात्मनो गुणान् भृशमाकौशलमार्य्यचेतसाम् ॥३०॥

---

**टिप्पनी**—परेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

**বাঙ্গালা**—যে লোকের আত্মাতে অন্যের সন্তোষজনক কোন গুণ নাই ; সেই ক্ষুদ্র লোক পরের দোষ বলিয়া নিজের লোককে সন্তুষ্ট করিবার ইচ্ছা করে ॥২৮॥

**अन्वयः**—असाधवः स्वदुर्नये सहजान्धदृशः, परदोषेक्षणदिव्यचक्षुषः, स्वगुणोच्चगिरः, परवर्णग्रहणेषु मुनिव्रताः (भवन्ति) ॥२९॥

**टीका**—नन्वात्मनो निर्दोषत्वाभिमानादित्थं विजृम्भणमित्याशङ्क्याह। सहजेति। असाधवः खलाः स्वदुर्नये स्वदोषे महत्यपीति भावः। सहजा स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते जात्यन्धा इत्यर्थः। परदोषाणां सूक्ष्माणामपीति भावः। ईक्षणे दर्शने दिव्यचक्षुषोऽप्रतिहतदृष्टयः। किञ्च स्वगुणेषूच्चगिरः आत्मप्रशंसायामतिप्रगल्भवाच इत्यर्थः परवर्णग्रहणेषु परस्तुतिवचनेषु। "स्तुतौ वर्णन्तु वाचर" इत्यमरः। मुनिव्रता मौनव्रतिनः अर्शआदिभ्योऽच्। चैद्यश्चैवंविध इति प्रतीतेरप्रस्तुतप्रशंसा ॥२९॥

**टिप्पनी**—सहजेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

**বাঙ্গালা**—অসৎ লোকগুলি নিজেদের গুরুতর দোষের বেলাও স্বাভাবিক অন্ধচক্ষু ; কিন্তু পরের ক্ষুদ্র দোষ দেখিবার সময়েও দিব্যচক্ষু হইয়া থাকে ; আবার নিজেদের গুণ প্রকাশ করিবার বেলায় অত্যন্ত বাক্‌পটু ; অথচ পরের গুণ বলিবার সময়ে একেবারে মৌনী হইয়া পড়ে ॥২৯॥

**अन्वयः**—आर्य्यचेतसां प्रकटानि अपि परवाच्यानि चिराय गोपितुं महत् नैपुणम् (वर्त्तते) ; अथ आत्मनः गुणान् विवरीतुं भृशम् आकौशलम् (जायते) ॥३०॥

**टीका**—साधवस्तु नैवमित्याह। प्रकटानीति। आर्य्यचेतसां सुमनसां प्रकटान्यपि परवाच्यानि परदूषणानि चिराय गोपितुं गोपायितुं संवरितुमित्यर्थः। "आयादय आर्द्धधातुके वेति विकल्पादायप्रत्ययाभावः। महन्नैपुणं कौशलम्। अथेति वाक्यारम्भे। अथात्मनो गुणान् विवरीतुं प्रकटयितुम् आत्मप्रशंसां कर्त्तुमित्यर्थः भृशमाकौशलमत्यन्तमकौशलम्। साधवो न परान्निन्दन्ति न चात्मानं प्रशंसन्ति। आत्मप्रशंसां परगर्हामिव वर्जयेदित्यापस्तम्बीये निषेधस्मरणादिति भावः। नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानामिति विकल्पाच्च, पूर्वपदस्यापि वृद्धिः। कृष्णस्त्वेवंभूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥३०॥

**टिप्पनी**—प्रकटानीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३०॥

**বাঙ্গালা**—পরের নিন্দনীয় বিষয় সুস্পষ্ট থাকিলেও তাহা চিরকাল গোপন রাখিবার

किमिवाखिललोककीर्त्तितं कथयत्यात्मगुणं महामनाः।
वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥२१॥
विसृजन्त्यविकत्थिनः परे विषमाशीविषवन्नराः क्रुधम्।
दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥२२॥

---

বিষয়ে প্রশস্তচিত্ত লোকদিগের গুরুতর নিপুণতা থাকে ; আবার নিজেদের গুণ প্রকাশ করিবার বিষয়েও, তাঁহাদের বিশেষ অকৌশল উপস্থিত হয় ॥৩০॥

**अन्वयः**—महामनाः अखिललोककीर्त्तितम् आत्मगुणं किमिव कथयति ; लघीयसः स्वगुणं वदिता अपरः न (अस्ति), तेन असौ स्वयं वदति ॥२१॥

**टीका**—किमिति। किञ्च महामना महात्मा अखिललोककीर्त्तितं स्वत एव सर्वलोकप्रख्यातमात्मगुणं किमिव किमर्थं कथयत्येव स्वत एव सर्वैः लोकैः कीर्त्यमानत्वादित्यर्थः। लघीयसस्तुच्छस्य तु स्वगुणं वदिता वक्ता। वदेस्तृच् प्रत्ययः। अतएव न लोकेत्यादिना षष्ठीप्रतिषेधः। अपरोऽन्यो नास्ति तेन कारणेनासौ लघीयान् स्वगुणं स्वयमेव वदति न केवलं निषेधात् किञ्च प्रयोजनाभावादपि महान् आत्मप्रशंसां न करोति तुच्छस्तु वक्त्रन्तरासम्भवात् स्वयमेव तां प्रलपतीत्यर्थः। पूर्वार्द्धे पदार्थहेतुकं काव्यलिङ्गम् उत्तरार्द्धे वाक्यार्थहेतुकं चोन्नेयम्। तयोश्चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ॥२१॥

**टिप्पनी**—किमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२१॥

**বাঙ্গালা**—সকল লোকেই মহাত্মাদের গুণ কীর্ত্তন করিয়া থাকে ; সুতরাং তাঁহারা নিজেরা আর তাহা কীর্ত্তন করিবেন কেন ; কিন্তু ক্ষুদ্র লোকের গুণ বলে, এমন অন্য কেহ থাকে না ; তাই সেই ক্ষুদ্র লোক নিজেই নিজের গুণ বলিয়া থাকে ॥৩১॥

**अन्वयः**—परे नराः अविकत्थिनः (एव सन्तः) विषम् आशीविषवत् क्रुधं विसृजन्ति ; इतरे (तु) पटहाः इव अन्तरसाररूपतां दधतः (सन्तः) ध्वनिसाराः (भवन्ति) ॥२२॥

**टीका**—किञ्च महात्मानः क्रुद्धाः काले पराक्रमन्ति दुरात्मानस्तु केवलं प्रलपन्तीत्याह। विसृजन्तीति। परे नराः सत्पुरुषाः विषमाशीविषवत् क्रूरसर्पवदित्युपमा। अविकत्थिनो नात्मश्लाघिन एव क्रुधं क्रोधं विसृजन्ति वमन्ति पराक्रमन्तीत्यर्थः। अन्तरभ्यन्तरे असाररूपतां निःसाररूपतां दधतो दधानाः। नाभ्यस्ताच्छतुरिति नुमभावः। इतरे जना दुर्जनाः पटहा इव ध्वनिरेव सारो बलं येषां ते ध्वनिसारा वाक्शूरा एव न तु बाहुबलशालिन इति भावः। अत्रापीदृशौ कथञ्चिदप्रस्तुतसाम्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥२२॥

**टिप्पनी**—विसृजन्तीति। अत्र श्रौतोपमाद्वयस्य टीकोक्ताप्रस्तुतप्रशंसया सहाङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

नरकच्छिदमिच्छतीक्षितुं विधिना येन स चेदिभूपतिः ।
द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरम् ॥३३॥
समनह्य किमङ्ग ! भूपतिर्यदि सन्धित्सुरसौ सहामुना ।
हरिराक्रमणेन सन्नतिं किल बिभ्रीत भियेत्यसम्भवः ॥३४॥

---

बाङ्गाला—বিষধর সর্প যেমন (কিছু না বলিয়াই) বিষ উদ্গীরণ করে; সেইরূপ প্রধান লোকেরা আত্মশ্লাঘা না করিয়াই ক্রোধ প্রকাশ করিয়া থাকেন; কিন্তু ক্ষুদ্র লোকেরা ঢাকের ন্যায় ভিতরে অসারতা ধারণ করতঃ, কেবল শব্দমাত্রসারই হইয়া থাকে ॥৩২॥

अन्वयः—सः चेदिभूपतिः येन विधिना नरकच्छिदम् ईक्षितुम् इच्छति, तस्य सदृशम् उत्तरं विधातुं न हापयिष्यते (नरकच्छिदा), द्रुतम् एतु (सः चेदिभूपतिः) ॥३३॥

टीका—अभिधाय तदा तदप्रियमित्यादिना यद्दूतेन युगपत् प्रियाप्रिये अभिहिते तत्रोत्तरमाह । नरकेति । स महीपतिश्चेदिभूपतिर्येन विधिना येन प्रकारेण सन्धिना विग्रहेण वा नरकच्छिदं नरकस्यात्यन्तकं किमन्येषामस्मदादीनामिति भावः । ईक्षितुम् इच्छति तस्य विधेः सदृशमुत्तरं प्रतिक्रिया स्नेहो विरोधो वा विधातुं न हापयिष्यते अविलम्बेन विधास्यत इत्यर्थः । जहातेर्ण्यन्तात् कर्मणि लृट्, विधानक्रियया अनभिधानेऽपि प्रधानभूतक्रियया अभिहितत्वादुत्तरमिति न कर्मणि द्वितीया । द्रुतं शीघ्रमेतु आगच्छतु आगमने स्वयमेव ज्ञायत इति भावः ॥३३॥

टिप्पनी—नरकेति । अत्र प्रथमे पादे छेकानुप्रासोऽलङ्कारः । वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

बाङ्गाला—সেই চেদিরাজ, যে ভাবে (সন্ধির উদ্দেশ্যে, কিম্বা যুদ্ধের উদ্দেশ্যে) নরকাসুরহন্তা শ্রীকৃষ্ণকে দেখিতে ইচ্ছা করেন, শ্রীকৃষ্ণ তাহার উপযুক্ত উত্তর বিধান করিতে বিরত হইবেন না; তিনি যেন শীঘ্র আসেন ॥৩৩॥

अन्वयः—अङ्ग ! असौ भूपतिः यदि अमुना सह सन्धित्सुः, (तर्हि) किं समनह्य । हरिः आक्रमणेन भिया सन्नतिं बिभ्रीत इति असम्भवः किल ॥३४॥

टीका—नन्वभिधायेत्यादौ मया सान्त्वमेव विवक्षितं न विग्रहस्तत् किमुभयाभ्यनुज्ञयेत्याशङ्क्याह । समनह्येति । अङ्गेत्यामन्त्रणे । असौ भूपतिश्चैद्योऽमुना हरिणा सह सन्धित्सुर्यदि सन्धातुमिच्छुश्चेत् । दधातेः सन्नन्तादुप्रत्ययः । किं समनह्य किमर्थं सन्नद्धवान् ततो नायं सन्धित्सुरिति भावः । नह्यतेः स्वरितेत्त्वात् कर्तरि लुङि तङ्, "झलोझलीति सकारलोपः ।" सन्धाभीप्सयार्थं सन्नाह इत्यत आह । हरिः कृष्णस्तु किलाक्रमणेनाभिभावेन या भीस्तया सन्नतिं नम्रतां बिभ्रीत बिभृयादित्यसम्भवः सम्भवो नास्ति खलु इत्यर्थः ॥३४॥

टिप्पनी—समनह्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

মহতস্তরসা বিলঙ্ঘয়ন্ নিজদোষেণ কুধীর্বিনশ্যতি ।
কুরুতে ন খলু স্বয়েচ্ছয়া শলভানিন্ধনমিদ্ধদীধিতিঃ ॥৩৫॥
যদপূরি পুরা মহীপতির্ন মুখেন স্বয়মাগসাং শতম্ ।
অথ সম্প্রতি পর্য্যপূপুরত্ তদসৌ দূতমুখেন শার্ঙ্গিণঃ ॥৩৬॥

বাঙ্গালা—দূত! ঐ রাজা শিশুপাল যদি শ্রীকৃষ্ণের সহিত সন্ধি করিবারই ইচ্ছা করিতেন, তবে যুদ্ধসজ্জা করিলেন কেন? আক্রমণ করিলে, ভয়ে, শ্রীকৃষ্ণ অবনত হইয়া পড়িবেন; এটা একেবারেই অসম্ভব ।৩৪॥

অন্বয়ঃ—কুধীঃ তরসা মহতঃ বিলঙ্ঘয়ন্ নিজদোষেণ বিনশ্যতি। ইদ্ধদীধিতিঃ স্বয়া ইচ্ছয়া শলভান্ ইন্ধনং ন খলু কুরুতে ॥৩৫॥

টীকা—অথাক্রমণেঽনিষ্টমাচষ্টে। মহত ইতি। কুধীরাসন্নবিনাশত্বাদ্বিপরীতবুদ্ধিঃ জন্তুঃ মহতো মহানুভাবান্ তরসা বলেন। "তরসী বলরংহসী" ইতি বিশ্বঃ। বিলঙ্ঘয়ন্নাক্রামন্ নিজদোষেণ স্বাপরাধেনৈবোল্লঙ্ঘনরূপেণ বিনশ্যতি। তথাহি, ইদ্ধদীধিতির্দীপ্তার্চ্চির্বহ্নিঃ স্বয়া নিজয়েচ্ছয়া শলভান্ পতঙ্গান্। "সমৌ পতঙ্গশলভা"বিত্যমরঃ। ইন্ধনং দাহ্যং ন কুরুতে খলু কিন্তু তে এব নিজৌদ্ধত্যান্নিপত্য দহ্যন্ত ইত্যর্থঃ। ইতঃ পরং চস্যত ইতি ভাবঃ। দৃষ্টান্তালঙ্কারঃ ॥৩৫॥

টিপ্পনী—মহত ইতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৫॥

বাঙ্গালা—দুষ্টবুদ্ধি লোক, বলপূর্ব্বক প্রধান লোককে অতিক্রম করিয়া, নিজের দোষেই বিনষ্ট হইয়া থাকে। দেখ—প্রজ্বলিত অগ্নি নিজের ইচ্ছায় ফড়িংগুলিকে দগ্ধ করে না ॥৩৫॥

অন্বয়ঃ—মহীপতিঃ পুরা স্বয়ং মুখেন শার্ঙ্গিণঃ যৎ আগসাং শতং ন অপূরি, অথ সম্প্রতি অসৌ দূতমুখেন তৎ পর্য্যপূপুরত ॥৩৬॥

টীকা—নন্বস্য হননে শার্ঙ্গিণঃ শতাপরাধসহনপ্রতিজ্ঞাভঙ্গঃ স্যাদিত্যত্রাহ। যদিতি। পুরা পূর্ব্বং মহীপতিশ্চৈদ্যো মুখেন স্ববাচা যৎ আগসাম্ অপরাধানাং শতম্। "আগোঽপরাধো মন্তুশ্চে"ত্যমরঃ। শার্ঙ্গিণঃ কৃষ্ণস্য স্বয়ং নাপূরি নাপূরয়দিত্যর্থঃ। পূরয়তেঃ কর্ত্তরি লুঙ্, "দীপজনেত্যাদিনা বিকল্পাচ্চিণ্ প্রত্যয়ে তনো লুক্। অথ স্বপ্রলাপানন্তরং সম্প্রতীদানীমসৌ চৈদ্যঃ দূতমুখেন দূতবাচা তৎ আগসাং শতং পর্য্যপূপুরত পরিপূরয়ামাস। দূতমুখত্বাৎ রাজ্ঞা তেন কৃষ্ণক্রোধাবসরদানেন স্বহস্তপক্ষতমায়ুষ্যতেতি ভাবঃ। পূরয়তের্লুঙি ণৌ চঙ্যুপধায়া হ্রস্বঃ অভ্যাসদীর্ঘঃ ॥৩৬॥

টিপ্পনী—যদিতি। অত্র পরি-পুরেতি ছেকানুপ্রাসোঽলঙ্কারঃ, বীরো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৬॥

বাঙ্গালা—রাজা শিশুপাল পূর্ব্বে নিজ মুখে শ্রীকৃষ্ণের নিকট যে শত অপরাধ পূর্ণ করিয়াছিলেন না; এখন উনি দূতমুখে তাহা পূর্ণ করিলেন ॥৩৬॥

यदनर्गलगोपुराननस्त्वमितो वक्ष्यसि किञ्चिदप्रियम् ।
विवरिष्यति तच्चिरस्य नः समयोद्वीक्षणरक्षितां क्रुधम् ॥३७॥
निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनाप्तुरेनसाम् ।
पुनरुज्झितसाध्वसं द्विषामभिधत्ते स्म वचो वचोहरः ॥३८॥
विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः ।
यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥३९॥

---

अन्वयः—अनर्गल-गोपुराननः त्वम् इतः यत् किञ्चित् अप्रियं वक्ष्यसि, तत् चिरस्य समयोद्वीक्षण-रक्षितां नः क्रुधं विवरिष्यति ॥३७॥

टीका—निगमयन् फलितमाह । यदिति । अनर्गलमविष्कम्भं विवृतमिति यावत् । "तद्विष्कम्भोऽर्गलं न ना" इत्यमरः । यद्गोपुरं पुरद्वारं तदिवाननं यस्य स वाच्यावाच्यविवेकशून्य इत्यर्थः । त्वमितः इतः परं यदप्रियं वक्ष्यसि तदप्रियं चिरस्य चिरात्प्रभृति । "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" इत्यव्ययेष्वमरः । समयोद्वीक्षणेन संवित्प्रतीक्षणेन रक्षितां रुद्धामित्यर्थः । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । क्रुधं क्रोधं विवरिष्यति । "वृतो वेति दीर्घविकल्पः । इतः परं त्वमपि दण्ड्य एवेति भावः ॥३७॥

टिप्पनी—यदिति । अत्र अनर्गलेत्यत्र लुप्तोपमालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३७॥

বাঙ্গালা—দূত ! অর্গলশূন্য পুরদ্বারের ন্যায় অনিবারিতমুখে তুমি ইহার পর যে কিছু অপ্রিয় কথা বলিবে, তাহা, আমরা সময় প্রতীক্ষা করিয়া দীর্ঘকাল যাবৎ যে ক্রোধকে অবরুদ্ধ রাখিয়াছিলাম, আমাদের সেই ক্রোধকে প্রকাশ করিয়া দিবে ॥৩৭॥

अन्वयः—द्विषां वचोहरः एनसाम् अनाप्तुः शिनेः नप्तुः तत् ऊर्जितं वचनं निशमय्य उज्झितसाध्वसं वचः पुनः अभिधत्ते स्म ॥३८॥

टीका—निशमय्येति । एनसामनाप्तुः असंस्पृष्टः सत्यवादिन इति भावः । आप्नोतेस्तृच् । शिनेर्नाम्नः कस्यचिद्यादवस्य नप्तुः पौत्रस्य सात्यकेरिति भावः । तदूर्जितम् अर्थयुक्तं वचनं निशमय्य श्रुत्वा । ल्यपि लघुपूर्वादिति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वसं त्यक्तभयं यथा तथा द्विषां वचो हरतीति वचोहरो दूतः । हरतेरनुद्यमनेऽच् । वचोऽभिधत्ते स्म अभिहितवान् ॥३८॥

टिप्पनी—निशमय्येति । अत्र द्वितीये पादे छेकानुप्रासः, चतुर्थे च लाटानुप्रास इत्यनयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३८॥

বাঙ্গালা—অপাপস্পর্শী শিনিপৌত্র সাত্যকির সেই তেজস্বী বাক্যগুলি শুনিয়া, শত্রুর দূত, ভয় পরিত্যাগপূর্বক পুনরায় বাক্য বলিল ॥৩৮॥

अन्वयः—बुद्धिदुर्विधः पृथग्जनः स्वयम् एव स्वहितं न विविनक्ति ; (किन्तु) यत् परैः उदीरितम् अपि अदः न विजानाति, तत् महत् अद्भुतम् ॥३९॥

विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः ।
न परोपहितं न च स्वतः प्रमिमीतेऽनुभवाद्दतेऽल्पधीः ॥४०॥
कुशलं खलु तुभ्यमेव तत् वचनं कृष्ण ! यदभ्यधामहम् ।
उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः ॥४१॥

---

टीका—विविनक्तीति । बुद्ध्या दुर्विधो दरिद्रः बुद्धिशून्य इत्यर्थः । "निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतश्च सः" इत्यमरः । पृथग्जनः पामरजनः स्वयमेव परोपदेशं विना॰ वात्महितं न विविनक्ति तच्चक्रमेवेति भावः । किन्तु परैरुदीरितम् उपदिष्टमप्यदो हितं न विजानातीति यत् तन्महदद्भुतम् । यतः सूक्तं न गृह्णातीति भावः ॥३९॥

टिप्पनी—विविनक्तीति । अत्र द्वितीये पादे च्छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—বুদ্ধিশূন্য নীচশ্রেণীর লোক, নিজে যে নিজের হিত বিবেচনা করিতে পারে না ; তাহা আশ্চর্য্য নহে ; কিন্তু অন্যে উপদেশ দিলেও যে নিজের হিত বুঝিতে পারে না, সেইটাই গুরুতর আশ্চর্য্য ॥৩৯॥

अन्वयः—बुधाः आत्मना (एव) एष्यदपायं विदुः अथवा परतः श्रद्दधते ; (किन्तु) अल्पधीः अनुभवात् ऋते न परोपहितं न च स्वतः प्रमिमीते ॥४०॥

टीका—अथ किमद्भुतं मूर्खेष्वित्याशयेनाह । विदुरिति । बुधा बुद्धिमन्तः एष्यन्तमागामिनम् अपायमनर्थमात्मना स्वयमेव । "प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । विदुर्विदन्ति । "विदो लटो वेति विकल्पाज्जुसादेशः । अथवा परतोऽन्यस्मादाप्तात् श्रद्दधते विश्वसन्ति आप्तोक्तं गृह्णन्तीत्यर्थः । "श्रदन्तरोपसङ्ख्यानमिति उपसर्गसंज्ञोपसङ्ख्यानाच्छ्रातोः प्राक् प्रयोगः । अल्पधीर्मूढस्तु अनुभवादृते स्वानुभवं विना । "अन्यारादितरर्त्ते" इति पञ्चमी । न प्रमिमीते न जानाति अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः । अधमस्त्वमिति भावः । अत एवाप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥४०॥

टिप्पनी—विदुरिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४०॥

বাঙ্গালা—বুদ্ধিমান্ লোকেরা নিজেরাই নিজেদের ভাবী বিপদ বুঝিতে পারেন, অথবা বিশ্বস্ত লোকের উপদেশ হইতেও তাহা বিশ্বাস করেন ; কিন্তু ক্ষুদ্রবুদ্ধি লোকেরা একেবারে অনুভব না করিয়া, পরের উপদেশেও বুঝে না, নিজেরাও বুঝে না ॥৪০॥

अन्वयः—(हे) कृष्ण ! अहं यत् अभ्यधाम्, तत् वचनं तुभ्यम् एव कुशलं खलु । साधवः स्वविनाशाभिमुखेषु परेषु अपि उपदेशपराः (भवन्ति) ॥४१॥

टीका—अतः प्रस्तुते क्षिमायातं तत्राह । कुशलमिति । हे कृष्ण ! अहं यद्वचनमभ्यधाम् अभिधायेत्यादिना राज्ञां सन्धिगुणाय विग्रहस्त्वनर्थायेत्येवमवोचमित्यर्थः । तद्वचनं तुभ्यमेव कुशलं हितम् । "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरिति चतुर्थी ।

उभयं युगपन्मयोदितन्त्वरया सान्त्वमथेतरच्च ते।
प्रविभज्य पृथङ्मनीषया स्वगुणं यत्किल तत्करिष्यसि ॥४२॥
अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम्।
रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥४३॥

---

नन्वहितेषु हितोपदेशात्प्रत्ययः कथमित्याशङ्कामर्थान्तरन्यासेन परिहरति। साधवः सुजनाः स्वविनाशाभिमुखेषु प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः। परेषु शत्रुष्वपि उपदेशपराः उपदिशन्त्येव कृपालुत्वेति भावः ॥४१॥

टिप्पनी—कुशलमिति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः तृतीयपादगतेन च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥४१॥

बाङ्गाला—कृष्ण! आमि याहा बलियाछि, से कथागुलि आपनारइ मङ्गलेर जन्य। कारण, शत्रुओ यदि विनाशेर दिके धावित हय, तबे ताहादिगकेओ साधुलोकेरा उपदेश दिया थाकेन ॥४१॥

अन्वयः—(हे कृष्ण!) मया त्वरया सान्त्वम् अथ इतरच्च (एतत्) उभयं युगपत् ते उदितम्; (त्वन्तु) मनीषया पृथक् प्रविभज्य यत् स्वगुणं, तत् करिष्यसि किल ॥४२॥

टीका—तथापि अर्थद्वये त्वद्वाक्ये किं ग्राह्यं तत्राह। उभयमिति। मया सान्त्वं सामादि। अथेति पक्षान्तरे इतरदसान्त्वं विग्रहश्चेत्यर्थः। युगपदुदितं त्वन्तु मनीषया बुद्ध्या पृथगभेदेन प्रविभज्य विविच्य यत् स्वगुणं तत्र द्वयेऽपि त्वरया यच्छुभोदर्कं तत् करिष्यसि किल खलु। हंसः क्षीरमिवाम्भसीति भावः ॥४२॥

टिप्पनी—उभयमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४२॥

बाङ्गाला—हे कृष्ण! आमि त्वरावशतः सान्त्ववाद (सन्धिर कथा) एवं अपर (युद्धेर कथा) एइ दुइइ एकदा आपनार निकट बलियाछि। एखन आपनि बुद्धि द्वारा पृथक् पृथक् विवेचना करिया, येटी आपनार अनुकूल, सेइटीइ करिबेन ॥४२॥

अन्वयः—अथवा अभिनिविष्टबुद्धिषु सुभाषितं रविरागिषु कमलाकरेषु शीतरोचिषः करजालम् इव व्यर्थकतां व्रजति ॥४३॥

टीका—अथवा सुजनस्वभावात् कृतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह। अथवेति। अथवा अभिनिविष्टबुद्धिषु दुराग्रहग्रस्तचित्तेषु विषये सुभाषितं हितोपदेशवचनं रविरागिषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां निरर्थकतां व्रजति। तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥४३॥

टिप्पनी—अथवेति। अत्र श्रौतोपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४३॥

बाङ्गाला—अथवा सूर्य्येर अनुगामी पद्मसय सरोवरे चन्द्रेर किरणजाल येमन व्यर्थ हइया याय, तेमन दूषित विषये याहादेर मन धावित हय, ताहादेर प्रति सदुपदेश व्यर्थ हइया याय ॥४३॥

अनपेक्ष्य गुणागुणौ जनः स्वरुचिं निश्चयतोऽनुधावति ।
अपहाय महीशमार्चिचत् सदसि त्वां ननु भीमपूर्वजः ॥४४॥
त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ।
प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ? ॥४५॥

---

**अन्वयः**—जनः गुणागुणौ अनपेक्ष्य निश्चयतः स्वरुचिम् अनुधावति । (तथाहि) भीमपूर्वजः महीशम् अपहाय सदसि त्वां ननु आर्चिचत् ॥४४॥

**टीका**—नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्त्तयितव्य इत्याशङ्क्य न शक्यत इत्याह । अनपेक्ष्येति । जनस्त्वादृशः पृथग्जनः । गुणागुणौ गुणदोषौ । "विप्रतिषिद्धं चानधिकरणवाचीति विभाषया न द्वन्द्वैकवद्भावः । अनपेक्ष्याविमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छामनुधावति न तु स्वहितमनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह । भीमपूर्वजः भीमाग्रजो युधिष्ठिरः कुरूणामग्रणीरिति भावः । महीशं चेदिपम् अपहाय सदसि त्वामार्चिचत् अर्चितवान् खलु । अर्चयतेर्णौ चङि णाविष्ठवद्भावे "अत्र लोपोऽभ्यासस्य" इत्यत्र "दीर्घो लघोः" इति नन्द्राः संयोगादय इति रेफवर्जितस्यैकाचो द्विर्भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥४४॥

**टिप्पनी**—अनपेक्ष्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

**বাঙ্গালা**—নীচশ্রেণীর লোক গুণ ও দোষের বিবেচনা না করিয়া, নিজনির্বাচনের অভ্রান্ততা নিশ্চয় করিয়া, আপন ইচ্ছারই অনুসরণ করিয়া থাকে। দেখুন—যুধিষ্ঠির, মহারাজ শিশুপালকে পরিত্যাগ করিয়া সভাতে আপনাকেই পূজা করিলেন ॥৪৪॥

**अन्वयः**—(हे कृष्ण !) त्वयि भक्तिमता कुरुराजा न सत्कृतः चेदिपः गुरुः एव । प्रियमांसमृगाधिपोज्झितः करिकुम्भजः मणिः किम् अवद्यः ॥४५॥

**टीका**—पार्थानादरादेव राज्ञो लाघवं ज्ञेयमित्याशङ्क्य परिहरति । त्वयीति । हे कृष्ण ! त्वयि भक्तिमता प्रेमवता । कुरूणां राट् । सत्सूद्विषेत्यादिना क्विप् । तेन कुरुराजा कुरुराजेन पार्थेन न सत्कृतो नार्चितश्चेदिपो गुरुरेव पूज्य एव । तथाहि, प्रियं मांसं यस्य तेन मांसलुब्धेन मृगाधिपेन सिंहेनोज्झितस्त्यक्तः । करिकुम्भजो मणिस्तावदवद्यो गर्ह्यः किम् अनवद्य एवेत्यर्थः मूर्खानादरान्न महतां किञ्चिल्लाघवमित्यर्थः । "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः । "अवद्यपण्ये"त्यादिना निपातः । दृष्टान्तालङ्कारः ॥४५॥

**टिप्पनी**—त्वयीति । अत्र उज्झनं प्रति प्रियमांसपदस्यार्थो हेतुरिति पदार्थहेतुककाव्यलिङ्गेन टीकोक्तदृष्टान्तः सङ्कीर्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥४५॥

**বাঙ্গালা**—কৃষ্ণ ! যুধিষ্ঠির আপনার প্রতি ভক্তিমান্ হইয়া, মহারাজ শিশুপালের

ক্রিয়তে ধবলঃ খলূচ্চকৈর্ধবলৈরেব সিতেতরৈরধঃ ।
শিরসৌঘমধত্ত শঙ্করঃ সুরসিন্ধোর্মধুজিত্তমঙ্ঘ্রিণা ॥৪৬॥
অবুধৈঃ কৃতমানসংবিদস্তব পার্থৈঃ কুত এব যোগ্যতা ।
বহসি প্লবগৈরুপাসিতং ন হি গুঞ্জাফলমেতি সোষ্মতাম্ ॥৪৭॥

---

পূজা করেন নাই ; তথাপি তিনি প্রধানই আছেন । কেন না, মাংসপ্রিয় সিংহ পরিত্যাগ করে বলিয়া, করিকুম্ভজাত মণি কি নিন্দনীয় হয় ? ॥৪৫॥

অন্বয়ঃ—ধবলঃ খলু ধবলৈঃ এব উচ্চকৈঃ ক্রিয়তে ; সিতেতরৈঃ (তু ধবলঃ) অধঃ ক্রিয়তে । শঙ্করঃ সুরসিন্ধোঃ ওঘং শিরসা অধত্ত, মধুজিৎ (তু) তম্ অঙ্ঘ্রিণা অধত্ত ॥৪৬॥

টীকা—বিদুষাং তু পূজ্য এব ভবেৎ ইত্যাশয়েনাহ । ক্রিয়ত ইতি । ধবলো নির্মলো ধবলৈর্নির্মলৈরেব উচ্চকৈরুন্নতঃ ক্রিয়তে খলু । সিতেতরৈর্মলিনৈরধঃ ক্রিয়তে । তথাহি, শঙ্করঃ শিবঃ সুরসিন্ধোরোঘং মন্দাকিনীপূরং শিরসা অধত্ত উভয়োর্নির্মলত্বাদিতি ভাবঃ । মধুশত্রুর্বিষ্ণুস্তু তমোঘম্ অঙ্ঘ্রিণা অধত্ত স্বয়ং মলিনত্বাদিতি ভাবঃ । অতো বিশেষ-বিদুষাং রাজা পূজ্য এবেতি ভাবঃ । বিশেষেণ সামান্যসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥৪৬॥

টিপ্পনী—ক্রিয়ত ইতি । অত্র ক্রিয়ত ইত্যেকয়া ক্রিয়য়া ধবলৈঃ সিতেতরৈরিত্যুভয়োঃ অধত্ত ইত্যেকয়া ক্রিয়য়া চ শঙ্করঃ সুরজিদিত্যুভয়োঃ কর্তৃতয়াভিসম্বন্ধাৎ তুল্যযোগিতাদ্বয়মিতি টীকোক্তার্থান্তরন্যাসেন তয়োঃ সঙ্করঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪৬॥

বাঙ্গালা—নির্ম্মলকে নির্ম্মলেই উন্নত করে ; কিন্তু মলিনে নির্ম্মলকে নীচে ফেলে । দেখুন—মহাদেব গঙ্গার প্রবাহকে মাথায়, আর বিষ্ণু তাহাকে চরণে ধারণ করিয়াছিলেন ॥৪৬॥

অন্বয়ঃ—অবুধৈঃ পার্থৈঃ কৃতমান-সংবিদঃ তব কুতঃ এব যোগ্যতা (জাতা) । (তথাহি) বহসি প্লবগৈঃ উপাসিতং গুঞ্জাফলং সোষ্মতাং নহি এতি ॥৪৭॥

টীকা—কিঞ্চ যথা পার্থানাদরাদ্রাজ্ঞো ন কিঞ্চিল্লাঘবং তথা তদাদরাচ্চ ন কিঞ্চিদ্গৌ-রবমিত্যাহ । অবুধৈরিতি । অবুধৈরজ্ঞৈঃ পার্থৈঃ কৃতে মানসংবিদৌ পূজাতোষৌ যস্য তস্য । "সংবিৎ স্ত্রিয়াং প্রতিজ্ঞায়াং সঙ্কেতাচারনামসু । সম্ভাষয়ো তোষণে চেতি বিশ্বঃ । তব যোগ্যতা কুত এব ন কুতোঽপীত্যর্থঃ । তথাহি, বহসি মাঘশীর্ষে । "মার্গশীর্ষে সহা-মার্গ" ইত্যমরঃ । প্লবগৈরুপাসিতং সেবিতং গুঞ্জাফলং কাকফলানি । জাতাবেকবচনম্ । "কাকচিঞ্চীগুঞ্জে তু কৃষ্ণলেত্যমরঃ । সোষ্মতামুষ্মতাং নৈতি ন হি পুংসাং মূঢ়পরিগ্রহাপরি-গ্রহৌ গৌরবাগৌরবয়োঃ প্রযোজকাবিত্যর্থঃ । অত্র কৃষ্ণগুঞ্জাফলয়োর্বিশেষয়োরেব বাক্যভেদেন প্রতিবিম্বকরণাৎ দৃষ্টান্তালঙ্কারঃ ॥৪৭॥

টিপ্পনী—অবুধৈরিতি । অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪৭॥

বাঙ্গালা—কৃষ্ণ ! মূর্খ কুন্তীপুত্ত্রেরা আপনার সম্মান ও সন্তোষ সম্পাদন করিয়াছেন ; তাহাতেই আপনার সর্ব্বত্র সম্মানলাভের যোগ্যতা জন্মিল কোথা হইতে ? দেখুন—

अपराधशतक्षमं नृपः क्षमयात्येति भवन्तमेकया ।
हृतवत्यपि भीष्मकात्मजां त्वयि चक्षाम समर्थ एव यत् ॥४८॥
गुरुभिः प्रतिपादितां वधूमपहृत्य स्वजनस्य भूपतेः ।
जनकोऽसि जनार्दन ! स्फुटं हृतधर्मार्थतया मनोभुवः ॥४९॥

---

অগ্রহায়ণমাসে বানরগণ গুঞ্জাফলের (কুঁচের) সেবা করে; তাহাতেই সে গুঞ্জাফল (কুঁচ) গৌরবের উষ্ণতা লাভ করে না (গৌরবে গরম হয় না) ॥৪৭॥

**अन्वयः**—नृपः एकया क्षमया अपराधशतक्षमं भवन्तम् अत्येति । यत् समर्थः एव (सः) भीष्मकात्मजां हृतवति अपि त्वयि चक्षाम ॥४८॥

**टीका**—यदपूरीत्यादिना यत्नात्यक्तिना शतापराधक्षमत्वमुक्तं तत्रोत्तरमाह । अपराधेति । नृपश्चैद्यः अपराधस्य शतक्षमं राज्ञः शतापराधसहिष्णुं भवन्तम् एकया क्षमया एकापराधसहनेनेत्यर्थः । अत्येति अतिक्रामति । अपराधकोटीनामपि तद्दर्शनेनापि साम्यासम्भवादिति भावः । तामेव क्षमां दर्शयति । त्वयि भीष्मकात्मजां रुक्मिणीं हृतवत्यपि समर्थः प्रतीकारक्षम एव सन्नपि चक्षाम क्षान्तवानिति यत् तया क्षमयेत्यर्थः ॥४८॥

**टिप्पनी**—अपराधेति । अत्र प्रथमार्द्धे क्षम क्षमेति छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

**বাঙ্গালা**—মহারাজ শিশুপাল একটিমাত্র ক্ষমা দ্বারা, শতাপরাধক্ষমাকারী আপনাকে অতিক্রম করিয়াছেন। যে হেতু, আপনি রুক্মিণীকে হরণ করিলেও, তিনি তাহার প্রতিবিধান করিতে সমর্থ থাকিয়াই আপনার প্রতি ক্ষমা করিয়াছেন ॥৪৮॥

**अन्वयः**—(हे) जनार्दन ! गुरुभिः प्रतिपादितां स्वजनस्य भूपतेः वधूम् अपहृत्य [त्वं] हृतधर्मार्थतया स्फुटं मनोभुवः जनकः असि ॥४९॥

**टीका**—"राक्षसः क्षत्रियस्यैवमिति स्मरणात् राक्षसोद्वाहस्य क्षात्रधर्मत्वाद्रुक्मिणीहरणे कोऽस्माकमपराधः राज्ञो वा कात्र क्षमेत्याकाङ्क्षायामाह । गुरुभिरिति । हे जनार्दन ! गुरुभिः पित्रादिभिः प्रतिपादितां राज्ञे दत्ताम् अतएव स्वजनस्य बन्धोर्भूपतेश्चैद्यस्य वधूं जायामपहृत्य । हृतौ धर्मार्थौ येन तत्तया हेतुना हृतधर्मार्थतया स्फुटं मनोभुवः कामस्य जनकोऽसि हृतधर्मार्थतया कामलालनिष्ठोऽसीत्यर्थः । नायं राक्षसो विवाहः । "हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं तथा । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥" इति कन्याहरणस्य राक्षसत्वलक्षणात् । अयन्तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो पापिष्ठस्य कामान्धस्य ते परमसाहसिकत्वमिति भावः ॥४९॥

**टिप्पनी**—गुरुभिरिति । अत्र तृतीये चरणे जनजनेति छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

**বাঙ্গালা**—কৃষ্ণ! পিতাপ্রভৃতি গুরুজনেরা, মহারাজ শিশুপালের উদ্দেশ্যেই রুক্মি-

अनिरूपितरूपसम्पदस्तमसो वान्यभृतच्छदच्छवे:।
तव सर्वगतस्य सम्प्रति क्षितिप: क्षिप्नुरभीशुमानिव ॥५०॥
क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम।
प्रलयोल्लसितस्य वारिधे: परिवाहो जगत: करोति किम् ॥५१॥

---

ণীকে দান করিয়াছিলেন; তাহাতে রুক্মিণী, ধর্ম্মতঃ আপনার মাসতুতভাই শিশুপালের পত্নীই হইয়াছিলেন; এই অবস্থায় আপনি সেই রুক্মিণীকে অপহরণ করিয়া, ধর্ম্ম ও অর্থ নষ্ট করায় স্পষ্টতই কামের পিতা হইয়াছেন ॥৪৯॥

**অন্বয়:**—क्षितिप: अभीशुमान् इव अनिरूपित-रूप-सम्पद: सर्वगतस्य अन्यभृत-च्छद-च्छवे: तमस: वा तव सम्प्रति क्षिप्नु: ॥५०॥

**টীকা**—सत्यमीदृगेवाहं तत: किमित्याशङ्क्य किमन्यद्वधादित्याह। अनिरूपितेति। अनिरूपितरूपसम्पद: ध्रुवं लूषवद्वहुरूपधारित्वादज्ञातरूपविशेषस्याऽवाङ्मनसगोचररूपवैभवस्येति च गम्यते। अन्यत्र आरोपितकृष्णरूपं तम: तेजोविशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणानवधृतरूपसम्पद इत्यर्थ:। अन्यभृतच्छदच्छवे: कोकिलपक्षकान्तेस्तव तमसो वा तिमिरस्येव। "वा स्यात् विकल्पोपमयोरिति विश्व:। सर्वगतस्य क्षितिपश्चेदिपोऽभीशुमानंशुमानिव सम्प्रतीदानीमेव क्षिप्नु: क्षेप्ता आहन्तेत्यर्थ:। शास्तासौ दुरात्मनामिति भाव:। "त्रसिगृधिधृषिक्षिपे: क्नु"रिति क्नुप्रत्यय:। "न लोकेत्यादिना कर्मणि षष्ठ्या निषेधे शेषे षष्ठी पर्य्यवसानात्तु कर्मत्वलाभ:। "अभीषु: प्रग्रहे रश्मा"वित्यमर:। विश्वप्रकाशादय: सर्वेऽप्याभिधानिका मूर्द्धन्यान्तेषु पेठु:; लोकवेदयोस्तालव्यान्तो दृश्यते। "अभीशूनां महिमान"मित्यादि ॥५०॥

**টিপ্পনী**—अनिरूपितेति। अत्र अन्यभृतच्छदच्छवेरिति लुप्तोपमा, अभीशुमानिवेति श्रौतोपमा, तमसो वेति च पूर्णोपमा इत्येतासामङ्गाङ्गिभावेन सङ्कर:। तथा प्रथमे द्वितीये चतुर्थे च पादे च्छेकानुप्रास इति समुदाये पुन: संसृष्टि:। वर्ण्योत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुण:, गौड़ी च रीति:। अभियुक्तास्तु तमसो रूपमाहुर्यथा—"तमस्तमालवर्णाभं चलतीति प्रतीयते। रूपवत्त्वात् क्रियावत्त्वात् द्रव्यन्तु दशमं तम:।" इति ॥५०॥

**বাঙ্গালা**—(এক দল বলেন—আলোক সামান্যাভাবই অন্ধকার; অন্য দল বলেন—অন্ধকার দশম দ্রব্য এবং তাহা কৃষ্ণবর্ণ। সুতরাং) অদ্যাপি যাহার রূপ নির্ব্বাচিত হয় নাই, যাহা সর্বত্রগামী এবং যাহার কান্তি, কোকিলের পাখার ন্যায় কৃষ্ণবর্ণ; সেই অন্ধকারকে সূর্য্য যেমন ধ্বংস করেন; সেইরূপ আমাদের রাজা শিশুপালও, সম্প্রতি সেই অন্ধকারতুল্য আপনাকে ধ্বংস করিবেন ॥৫০॥

**অন্বয়:**—त्वयि क्षुभितस्य महीभृत: मम प्रशमोपन्यसनं वृथा। जगत: परिवाह: प्रलयोल्लसितस्य वारिधे: किं करोति ॥५१॥

प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥५२॥
तदयं समुपैति भूपतिः पयसां पूर इवानिवारितः ।
अविलम्बितमेधि वेतसस्तरुवन्माधव ! मा स्म भज्यथाः ॥५३॥

---

टीका—तर्ह्यमदर्थं त्वया राजा सान्त्वयितव्य इत्याशङ्क्य नेत्याह । क्षुभितस्येति । त्वयि विषये क्षुभितस्यातिक्रुद्धस्य महीभृतो राज्ञो मम प्रशमोपन्यसनं शान्त्युपदेशो वृथा निष्फलः । तथाहि, प्रलयोल्लसितस्य कल्पान्तक्षुभितस्य वारिधेः जगतः परिवाहो जगन्नुक्तो जलनिर्गममार्गः किं करोति न किञ्चिदित्यर्थः । दृष्टान्तालङ्कारः ॥५१॥

टिप्पनी—क्षुभितस्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

বাঙ্গালা—কৃষ্ণ ! মহারাজ শিশুপাল, আপনার প্রতি ক্রোধে একেবারে উদ্বেলিত হইয়া পড়িয়াছেন ; এ অবস্থায় তাঁহাকে শান্ত থাকিবার উপদেশ দেওয়া আমার নিষ্ফল। কেন না, প্রলয়কালে সমুদ্র যখন উদ্বেলিত হইয়া উঠে, তখন ভূতল দিয়া জলনিঃসরণের পথ তাহার কি করিতে পারে ? ॥৫১॥

अन्वयः—प्रधनाय माधवान् आकारयितुम् महीभृता अहं प्रहितः । महौजसः परेषु मलिम्लुचाः इव छलात् न अपकुर्वन्ति ॥५२॥

टीका—तर्ह्यसन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितस्तत्राह । प्रहित इति । प्रधनाय युद्धाय माधवान् यादवानाकारयितुमाह्वातुम । "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।" "हूतिराकारणाह्वानमिति चामरः । महीभृता राज्ञाहं प्रहितः प्रेषितः । ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत्राह । नेति । महौजसो महावीराः परेष्वरिषु मलिम्लुचाः पाटच्चरा इव "पाटच्चरो मलिम्लुचः इत्यमरः । छलात् कपटात् नापकुर्वन्ति । तस्मादाह्वानं कर्त्तव्यमिति वाक्यार्थहेतुकं काव्यलिङ्गमुपमालङ्कारसङ्कीर्णम् ॥५२॥

टिप्पनी—प्रहित इति । अत्र बन्धस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५२॥

বাঙ্গালা—যুদ্ধে যাদবগণকে আহ্বান করিবার জন্য, রাজা শিশুপাল আমাকে পাঠাইয়া দিয়াছেন। কারণ, মহাতেজস্বীরা চোরের ন্যায় শত্রুর প্রতি ছল করিয়া অপকার করেন না ॥৫২॥

अन्वयः—तत् अयं भूपतिः पयसां पूरः इव अनिवारितः समुपैति । (हे) माधव ! अविलम्बितं वेतसः एधि, तरुवत् मास्म भज्यथाः ॥५३॥

टीका—तदेवागमनप्रयोजनमुक्त्वा हितमुपदिशति । तदयमिति । तत्तस्माद्युद्धार्थत्वादयं भूपतिश्चैद्यः पयसाम्पूरः प्रवाह इवानिवारितः समुपैति, हे माधव ! अविलम्बितं शीघ्रं वेतसः एधि भव तद्वत्तस्य दासानं रचेत्यर्थः । अस्तेर्लोट् सिपि हेर्धिः ध्वसोरेद्धावभ्यासलोपश्चेति एत्वं धि चेति सकारलोपः । माधव ! त्वं तरुवत् महाद्रुमवत् मा स्म

परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ।
तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान् द्विषः ॥५४॥
न विदध्युरशङ्कमप्रियं महतः स्वार्थपराः परे कथम् ।
भजते कुपितोऽप्युदारधीरनुनीतिं नतिमात्रकेण सः ॥५५॥

---

अन्यथाः मा भञ्ज्यस्व अतः आत्मानं विनाशयेत्यर्थः । भजेः कर्मण्याशिषि लिङः स्मोत्तरे लङ् चेति लङ् न माङ्योगे इत्यडभावः । उपमालङ्कारः ॥५३॥

**टिप्पनी**—तदिति । अत्र प्रथमे चरणे पं ति पतीति छेकानुप्रासः, पयसां पूर इवेति श्रौतोपमा, वेतस एधीति निरङ्गं केवलरूपकम्, तद्वदिति च श्रौतोपमेति सर्वेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५३॥

**বাঙ্গালা**—অতএব এই রাজা শিশুপাল, জলের প্রবাহের ন্যায় অপ্রতিহতভাবে আসিতেছেন; অতএব কৃষ্ণ! শীঘ্র বেতসলতাস্বরূপ হউন (বেতসলতার ন্যায় অবনত হউন); বৃক্ষের ন্যায় ভাঙ্গিয়া যাইবেন না ॥৫৩॥

**अन्वयः**—सः केवलं शिशून् परिपाति इति तन्नामनि मा स्म विश्वसीः । (किन्तु) क्षमी शरण्यः सः शरणागतान् द्विषः तरुणान् अपि रक्षति ॥५४॥

**टीका**—ननु राज्ञि शिशुपाले यूनामस्माकमित्याशङ्क्याह । परिपातीति । न शिशुपालः केवलमित्यवधारणे क्रियाविशेषणम् । शिशून् परिपातीति शिशूनेव पालयतीति तन्नामनि तस्य शिशुपालसंज्ञायां मा स्म विश्वसीः मा विश्वासं कुर्वित्यर्थः । "श्वसेः स्मोत्तरे लङ् चेति लङि "रुदश्च पञ्चभ्य" इति ईडागमः । चकाराल्लुङि वा तत्र "अस्ति सिचोऽपृक्ते" इति ईडागमः "ह्म्यन्तक्षणश्वसजागृणिश्व्येदितामिति वृद्धिप्रतिषेधः" "न माङ्योगे" इत्यडभावस्तूभयत्र । किन्तु क्षमी क्षमावान् । शौच्यादित्वादिनिः । शरणे रक्षणे साधुः शरण्यः रक्षणक्षमः । "तत्र साधुरिति यत्प्रत्ययः । स शिशुपालः शरणं रक्षितारमागतान् प्राप्तान् । "शरणं गृहरक्षित्रोः," "शरणं रक्षणे गृहे" इत्युभयत्रापि विश्वः । द्विषः शत्रून् तरुणान् यूनोऽपि रक्षति । अतो निःशङ्कं शरणमागच्छेत्यर्थः ॥५४॥

**टिप्पनी**—परीति । अत्र यतः शरण्यः, अतः रक्षतीति पदार्थहेतुकं काव्यलिङ्गं द्वितीयार्धगतेन छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥५४॥

**বাঙ্গালা**—শিশুপাল কেবল শিশুকেই রক্ষা করিয়া থাকেন, ইহা তাঁহার নামানুসারে বিশ্বাস করিবেন না। কিন্তু শিশুপাল, ক্ষমাবান্ ও শরণাগতরক্ষক; সুতরাং শরণাগত শত্রু, যুবক হইলেও, তাহাদিগকে তিনি রক্ষা করিয়া থাকেন ॥৫৪॥

**अन्वयः**—स्वार्थपराः परे महतः कथम् अप्रियम् अशङ्कं न विदध्युः । (किन्तु) उदारधीः सः कुपितः अपि (सन्) नतिमात्रकेण अनुनीतिं भजते ॥५५॥

**टीका**—ननु वयं द्रोग्धारः सोऽप्यतिक्षुभितः किल कथं नः पालयेदित्याशङ्क्याह ।

हितमप्रियमिच्छसि श्रुतं यदि सन्धत्स्व पुरा न नश्यसि ।
अनृतैरथ तुष्यसि प्रियैर्जयताज्जीव भवावनीश्वरः ॥५६॥
प्रतिपक्षजिदप्यसंशयं युधि चैद्येन विजेष्यते भवान् ।
ग्रसते हि तमोऽपहं मुहुर्ननु राहाह्वमहर्पतिं तमः ॥५७॥

---

नेति । स्वार्थपराः स्वार्थनिष्ठाः परे शत्रवो महतोऽधिकस्य कथम् अप्रियम् अपकारम् अशङ्कं यथा तथा न विदध्युः कुर्युरेव कार्य्यवशादित्यर्थः । किन्तु उदारधीर्महामतिः । "उदारो दातृमहतोरित्यमरः । स राजा कुपितोऽपि नतिमात्रकेण प्रणतिमात्रकेण अनुनीतिम् अनुनयं भजते अनुग्रहीष्यतीत्यर्थः । "प्रणिपातः प्रतीकारः संरम्भो हि महात्मनामिति भावः ॥५५॥

टिप्पनी—नेति । अत्र द्वितीये पादे परे-परा इति च्छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—স্বার্থপরায়ণ ( ক্ষুদ্রহৃদয় ) শত্রু, প্রধান লোকের অপ্রিয় কার্য্য নিঃশঙ্কভাবে করিবে না কেন ? ( অবশ্যই করিবে ) । কিন্তু উদারচেতা শিশুপাল কুপিত হইয়াও, অবনতি মাত্রেই অনুগ্রহ করিবেন ॥৫৫॥

अन्वयः—( हे कृष्ण ! ) यदि (त्वम्) श्रुतम् अप्रियं हितम् इच्छसि, (तदा) सन्धत्स्व, (तथा च) पुरा न नश्यसि । अथ अनृतैः प्रियैः तुष्यसि (चेत्, तदा) जयतात्, जीव, अवनीश्वरः भव ॥५६॥

टीका—किं बहुना तवायं हितोपदेशसंग्रह इत्याशयेनाह । हितमिति । श्रुतम् अप्रियं हितमिच्छसि यदि अप्रियं हितं श्रुतमाप्तादाकर्णितं ग्रहीतुमिच्छसि चेदित्यर्थः । सन्धत्स्व राज्ञा सन्धेहि पुरा न नश्यसि अन्यथा विनङ्क्षासीत्यर्थः । "यावत् पुरानिपातयोर्लट्ति भविष्यदर्थे लट् । अथेति पक्षान्तरे । अनृतैरसत्यैः प्रियैस्तुष्यसि यदि जयतात् जयतु ! "तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति तोस्तातङ् देशः । जीव अवनीश्वरः सार्वभौमो भव । ततः किमेभिः प्रियालापैः अप्रियमपि प्रियमेव गृह्यायेति भावः ॥५६॥

टिप्पनी—हितमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—কৃষ্ণ ! যদি আপনি, অপ্রিয় হিতকর বাক্য শুনিতে ইচ্ছা করেন ; তাহা হইলে সন্ধি করুন ; ভবিষ্যতে নষ্ট হইবেন না । আর যদি মিথ্যা প্রিয়বাক্যে সন্তুষ্ট হন, তাহা হইলে জয় করুন, বাঁচিয়া থাকুন এবং পৃথিবীপতি হউন ॥৫৬॥

अन्वयः—प्रतिपक्षजित् अपि भवान् युधि चैद्येन असंशयं विजेष्यते । हि राहाह्वं तमः मुहुः तमोऽपहम् अहर्पतिं ग्रसते ननु ॥५७॥

टीका—ननु कंसाद्यनेकविजयी कृष्णः कथं विजेष्यते राज्ञेत्याशङ्क्याह । प्रतिपक्षेति । प्रतिपक्षजिदनेकारिहन्तापि भवान् असंशयं संशयो नास्ति । अर्थाभावेऽव्ययीभावः । युधि संग्रामे चैद्येन शिशुपालेन विजेष्यते । जयतेः कर्मणि लृट् कर्मणि प्रत्ययः ।

अचिराज्जितमीनकेतनो विलसन् वृष्णिगणैर्नमस्कृतः ।
क्षितिपः क्षयितोद्धतान्धको हरलीलां स विडम्बयिष्यति ॥५८॥
निहतोन्मददुष्टकुञ्जराद्दधतो भूरियशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि क्षितिपः का गणनास्य वृष्णिषु ॥५९॥

---

तमांस्यपहन्तीति तमोपहं सर्वतमोऽपहारिणम् । "अपे क्लेशतमसोरिति" हन्तेर्डप्रत्ययः । अह्नां पतिम् अहर्पतिं सूर्य्यम् । "अहरादीनां पत्यादिषूपसङ्ख्यानमिति" वैकल्पिको रेफादेशः । राह्वाख्यं राह्वाख्यं तमः । "आख्याह्वे अभिधानं चेत्यमरः । मुहुर्ग्रसते ननु गिलति हि । अत्र हरिसूर्य्ययोराहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥५७॥

टिप्पनी—प्रतिपचेति । अत्र राह्वाह्वमिति परुषवर्णतया प्रसक्तोऽपि दुःश्रवत्वदोषः समुद्धतवाच्यत्वात् प्रत्युत गुण एव । यथा दर्पणे—

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥"

प्रसादो गुणः, वैदर्भी च रीतिः ॥५७॥

বাঙ্গালা---আপনি বহু শত্রু জয় করিয়া থাকিলেও, যুদ্ধে শিশুপাল আপনাকে অবশ্যই জয় করিবেন। দেখুন—সূর্য্য বার বার অন্ধকার নাশ করিলেও, রাহুনামক অন্ধকার সে সূর্য্যকে গ্রাস করেই ॥৫৭॥

अन्वयः—सः क्षितिपः अचिरात् जितमीनकेतनः वृष्णिगणैः नमस्कृतः विलसन् (गणैः नमस्कृतः वृषे विलसन्) क्षयितोद्धतान्धकः (च सन्) हरलीलां विडम्बयिष्यति ॥५८॥

टीका—किंच न भवानेक एव विजेष्यते किन्तु सर्वैर्यादवैः सहेत्याह । अचिरादिति । स क्षितिपो राजा । अचिरादविलम्बितमेव जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः । वृष्णयो यादवभेदास्तेषां गणैरोघैर्नमस्कृतो भीत्या प्रणतः सन् । अतएव विलसन् दीप्यमानः । अन्यत्र वृष्णीति पदच्छेदः वृष्णि उक्षणि विलसन् वृषारूढ इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । "गणाः प्रथमसङ्घौघाः" इति वैजयन्ती । क्षयिता नाशिता उद्धता दीप्ता अन्धका यादवभेदाः । अन्यत्रान्धकासुरो येन सः । हरलीलां शम्भुविभ्रमं विडम्बयिष्यत्यनुकरिष्यति । अत्र हरलीलामिति सादृश्याक्षेपान्निदर्शना श्लेषसङ्कीर्णा ॥५८॥

टिप्पनी—अचिरादिति । अत्र "सादृश्याक्षेपान्निदर्शना" इति मल्लिनाथः । वस्तुतस्तु विडम्बनस्यानुकरणार्थवाचकतया सादृश्यस्य साक्षाद्वाचकत्वेन तदाक्षेपाभावात नेयं श्लेषसङ्कीर्णा निदर्शना, अपि तु पूर्णोपमेयमिति सुधीभिर्भाव्यम् । समीनुप्रासस्य वारोहावरोहाम्यान ओजो गुणः, गौडी च रीतिः ॥५८॥

বাঙ্গালা—রাজা শিশুপাল, শীঘ্রই প্রদ্যুম্নকে জয় করিয়া, যাদবগণকর্তৃক নমস্কৃত ও শোভিত হইয়া (প্রমথগণকর্তৃক নমস্কৃত হইয়া ও বৃষে আরোহণ করিয়া) এবং বলদৃপ্ত অন্ধকগণকে (অন্ধকাসুরকে) নিহত করিয়া, মহাদেবের চরিত্রের অনুকরণ করিবেন ॥৫৮॥

न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शत्रवः ।
द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥६०॥
प्रतनूल्लसिताचिरद्युतः शरदं प्राप्य विखण्डितायुधाः ।
दधतेऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोभृतः ॥६१॥

---

**अन्वयः**—क्षितिपः निहतोन्मददुष्टकुञ्जरात् क्रमार्जितं भूरि यशः दधतः हरेः अपि रणे न बिभेति; अस्य वृष्णिषु का गणना ॥५९॥

**टीका**—ननु देवासुरैरप्यजय्या यादवाः कथं राज्ञा जेष्यन्ते तत्राह। निहतेति। क्षितिपश्चेदिपो निहत उन्मदो दुष्टः कुञ्जरः कुवलयापीड़ाख्यो येन तस्मात्। अन्यत्र हता-नेकमत्तमातङ्गात्। अतएव क्रमार्जितं भूरि यशः दधतः हरेः कृष्णात् सिंहात् चेति ध्वनिः। रणे न बिभेति। अस्यैतादृशस्य वृष्णिषु यादवेषु मेषेषु च। "वृष्णिस्तु यादवे मेषे" इति विश्वः। का गणना कृष्णमगणयतो यादवाः के इत्यर्थः। अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेष्वित्यर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वात्युक्ताप्रकृत-श्लेषे तदनङ्गीकारादित्युक्तं प्राक् ॥५९॥

**टिप्पनी**—निहतेति। अत्र अर्थापत्तिरलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५९॥

**বাঙ্গালা**—যিনি মদমত্ত দুষ্ট কুবলয়াপীড় হস্তীকে বিনাশ করিয়াছেন এবং ক্রমিক প্রচুর যশ অর্জন করিয়াছেন; সেই কৃষ্ণ হইতেও আমাদের রাজা যুদ্ধে ভয় করেন না; সুতরাং তিনি বৃষ্ণিগণকে আবার কি গণনা করিবেন ॥৫৯॥

**अन्वयः**—युधि शत्रवः भिया अस्य मुखं यत् न पश्यन्ति, तत् अद्भुतं न; (किन्तु) सः अपि द्रवतां विद्विषां पृष्ठं ननु ईक्षते, जातु वदनं न ईक्षते (तत् एव अद्भुतम्) ॥६०॥

**टीका**—हरेरपि न बिभेति इत्युक्तं तदेव सम्भावयितुं तस्य पराक्रमानासर्गसमाप्तेः वर्णयति। नेति। युधि शत्रवो भियाऽस्य मुखं न पश्यन्तीति यत्तन्नाद्भुतम् अत्र कुतः सोऽपि द्रवतां भयात्पलायमानानां विद्विषां पृष्ठं कायपश्चाद्भागम् ईक्षते। जातु कदाचित् वदनं न ईक्षते ननु खलु द्वयोरन्यतरमुखेष्वन्योन्यस्य मुखविलोकनासम्भवात् स्वयं विद्वि-षाम् अभिमुखस्याप्यस्य मुखादर्शनादद्भुतमित्यर्थः। अतएव वाक्यार्थहेतुककाव्यलि-ङ्गम् ॥६०॥

**टिप्पनी**—नेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

**বাঙ্গালা**—শত্রুরা যুদ্ধে ভয়বশতঃ শিশুপালের মুখ যে দেখে না, সেটা আশ্চর্য্য নহে; কিন্তু শিশুপালও যে, পলায়মান শত্রুদের পৃষ্ঠই দেখেন, কিন্তু কখনও মুখ দেখেন না, সেইটাই আশ্চর্য্য ॥৬০॥

**अन्वयः**—शरदं प्राप्य विखण्डितायुधाः प्रतनूल्लसिताचिरद्युतः पयोभृतः यदि न आसारभृतः, (तदा) अस्य अरिभिः तुल्यतां दधते ॥६१॥

मलिनं रणरेणुभिर्मुहुर्द्विषताञ्जालितमञ्जनाम्बुभिः ।
नृपमौलिमरीचिवर्णकैः खलु यस्याङ्घ्रियुगं विलिप्यते ॥६२॥
समराय निकाममकर्कशं न्यगमात्कष्टमुपैति यस्य च ।
धनुषा सममाशु विद्विषां कुलमायञ्चितभङ्गमाननिम् ॥६३॥

---

टीका—शरन्विति । शरदम् ऋतुं प्राप्य विखण्डितायुधाः खण्डितेन्द्रचापाः अन्यत्र शरान् ददातीति शरदस्तं शरदं शरवर्षिणं प्राप्य खण्डितशस्त्राः शतन् छसिताविरलतोऽलक्ष्यरितविद्युतः अन्यत्र शतनूच्छसिताः स्वल्पोच्छसितास्त एवाचिरद्युतोऽस्थिरद्युतः । पयोभृतो मेघा आसारभृतः वृष्टिमन्तः न यदि शरदि वृष्टिशून्यत्वादिति भावः । सुहृद्बलशून्या इत्यर्थः । "आसारः स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले" इति वैजयन्ती । अस्यारिभिस्तुल्यतां दधते । अत्र पयोभृतामुपमानानामुपमेयभावोक्तेः प्रतीपालङ्कारः तेषामासारसम्बन्धेऽपि सम्भावनया तदसम्बन्धोक्तेरतिशयोक्तिर्भेदस्येति सङ्करः ॥६१॥

टिप्पनी—शरन्विति । अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥६१॥

বাঙ্গালা—শরৎকাল পাইলেই মেঘের ইন্দ্রধনু লুপ্ত হইয়া যায় এবং বিদ্যুৎ সকল অল্পমাত্র প্রকাশ পায় ; এহেন মেঘ সকল যদি ধারাবৃষ্টি না করে, তবে শিশুপালের শত্রুগণের সাদৃশ্য ধারণ করিতে পারে ; কেন না, শরবর্ষী শিশুপালকে পাইলেই তাঁহার শত্রুগণের অস্ত্র সকল ছিন্ন হইয়া যায়, তাহারা অল্পমাত্র উল্লসিত হয়, একটু মাত্র দীপ্তি পায় এবং অস্ত্রবর্ষণও করিতে পারে না ॥৬১॥

अन्वयः—मुहुः रणरेणुभिः मलिनं द्विषताम् अञ्जनाम्बुभिः क्षालितं यस्य अङ्घ्रियुगं नृपमौलिमरीचिवर्णकैः खलु विलिप्यते ॥६२॥

टीका—विशेषकमाह । मलिनमित्यादि । मुहुरसकृत् । रणरेणुभिर्मलिनम् अत एव द्विषताञ्जनाम्बुभिः क्षालितं नाहत्वारीन् रणान्निवर्त्तिन इति भावः । यस्याङ्घ्रियुगं चरणयुगलम् । अथ वैरिक्षालितानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मुकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैश्चन्दनैः । "चन्दने चापि वर्णकमिति विश्वः । विलिप्यते विलिप्यते । अत्राङ्घ्रियुगस्य विशेषणमहिम्ना स्नातानुलिप्तपुरुषसाम्यप्रतीतेः समासोक्तिः ॥६२॥

टिप्पनी—मलिनमिति । अत्र रणरेणुभिरिति च्छेकानुप्रासेन टीकोक्ता समासोक्तिः संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥६२॥

বাঙ্গালা—যাঁহার চরণযুগল, বার বার সমরাঙ্গনের ধূলিতে মলিন হইয়া যায়, তার পর শত্রুস্ত্রীগণের নয়নের জলে তাহা প্রক্ষালিত হয়, তাহার পর, আবার অবনত রাজগণের মুকুটমণির কিরণরূপ চন্দনে তাহা লিপ্ত হয় ॥৬২॥

अन्वयः—निकाममकर्कशं समराय आकृष्टम् चापम् आयञ्चितभङ्गं यस्य विद्विषां कुलञ्च धनुषा समम् आशु आनतिम् उपैति ॥६३॥

तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णकरं विरोधिनः ।
कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे ॥६४॥
दधतोऽसुलभक्षयागमास्तनुमेकान्तरताममानुषीम् ।
भुवि सम्प्रति न प्रतिष्ठिताः सदृशा यस्य सुरैररातयः ॥६५॥

---

टीका—समरायेति । किञ्चेति चार्थः । निकामकर्कशमतिकठिनं दुर्द्धर्षमित्यर्थः समराय सम्प्रहारायाकृष्टमाहृतमावर्जितं च चापम् आशङ्कितभङ्गं मनसोत्प्रेक्षितस्वपराजयम् अत्यन्तातिकर्षात् सम्भावितदलनं यस्य विद्विषां कुलम् आशु धनुषा सममानतिं नम्रता-मुपैति । अत्र धनुर्नमनकार्यस्य द्विषन्नमनस्य तत्सहभावोक्तेः कार्यकारणयोः पौर्वा-पर्यविपर्ययनिमित्तरूपातिशयोक्तिमूला सहोक्तिरलङ्कारः ॥६३॥

टिप्पनी---समरायेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६३॥

বাঙ্গালা—যাঁহার অতিদুর্দ্ধর্ষ শত্রুগণ যুদ্ধের জন্য আহূত হইয়া, ক্ষণকালের মধ্যেই আপনাদের পরাজয়ের আশঙ্কা করিয়া, ধনুর সহিত শীঘ্রই অবনত হইয়া পড়ে। ধনুখানাও কিন্তু অত্যন্ত কঠিন এবং প্রহার করিবার জন্য আকৃষ্ট হয়; আর তাহাতেই তাহা ভাঙ্গিয়া যাইবার আশঙ্কা জন্মে ॥৬৩॥

अन्वयः—सुहृज्जनाः अमुं तुहिनांशुं, विरोधिनः उष्णकरं कलयन्ति, यथा कृतिभिः कृतदृष्टिविभ्रमाः एके स्रजम्, अपरे भुजगं कलयन्ति ॥६४॥

टीका—तुहिनेति । अमुमेवंविधं चैद्यं सुहृज्जनाः तुहिनांशुं कलयन्ति । आह्लादकत्वाच्चन्द्रं मन्यन्ते, विरोधिनः उष्णकरं तपनं कलयन्ति । एकस्यानेकप्रतीतिमुपमिमीते । कृतिभिरिति । कृतिभिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमाः जनितदृष्टिविपर्यया एके नराः यथा स्रजं मालां कलयन्ति अपरे तु भुजगं कलयन्ति एकमेव रज्ज्वादिकमिति शेषः । उपमालङ्कारः स चैकस्य निमित्तवशादनेकधोल्लेखनात् कीर्त्तनोल्ले-खेन सङ्कीर्य्यते ॥६४॥

टिप्पनी—तुहिनांशुमिति । अत्र कलयन्तीत्येकया क्रियया सुहृज्जनादीनां चतुर्णां कर्तृतयाभि-सम्बन्धात् तुल्ययोगिता चेति तस्या अपि टीकोक्तसङ्करे प्रवेशः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—আত্মীয় লোকেরা শিশুপালকে চন্দ্রস্বরূপ মনে করে, আর শত্রুরা সূর্য্যস্বরূপ ধারণা করে। যেমন ঐন্দ্রজালিক, দৃষ্টির ভ্রম জন্মাইয়া দিলে, একই বস্তুকে এক দল মালা বলিয়া মনে করে, অপর দল সর্প বলিয়া ধারণা করে ॥৬৪॥

अन्वयः—असुलभक्षयागमाः एकान्तरताम् अमानुषीं तनुं दधतः भुवि न प्रतिष्ठिताः यस्य अरातयः सुरैः सदृशाः ॥६५॥

टीका—दधत इति । असुलभक्षयागमाः दुर्लभक्षयप्राप्तयः अन्यत्रामरत्वात् दुर्लभना-शयोगाः । "निलयापचयौ क्षयावित्यमरः । एकान्तरतां भयाद्विजनस्थाने निरताम् अमा-

अतिविस्मयनीयकर्मणो नृपतेर्यस्य विरोधि किञ्च न।
यदमुक्तनयो नयत्यसावहितानां कुलमक्षयं क्षयम् ॥६६॥
चलितोर्द्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः।
अतरत् स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥६७॥

---

तुषों काश्यं मालिन्यादिना पिशाचादिवत् प्रतीयमानाम्। अन्यत्र कान्तरतां नियतसुरतां नित्यभोगामग्लानुषों दिव्यां तनुं दधती दधानाः भुवि सम्प्रति क्वचन न प्रतिष्ठिताः राज्यभ्रंशात् क्वापि स्थितिमप्राप्ताः अन्यत्र च भुवं न स्पृशन्तीत्यर्थः दैवत्वात्। यस्यारातयः सुरैः सदृशाः। अत्राप्यस्तुमिति पूर्वेण सम्बन्धः। श्लिष्टविशेषणीयमुपमा श्लेष एवेत्यन्ये ॥६५॥

टिप्पनी—दधत इति। अत्र साहित्यदर्पणमते पूर्णोपमालङ्कारः। प्रसादो गुणः वैदर्भी च रीतिः ॥ ६५ ॥

বাঙ্গালা—যাঁহার শত্রুরা দেবগণেরই তুল্য। কেন না, দেবগণ অমর বলিয়া ক্ষয় প্রাপ্ত হন না; শিশুপালের শত্রুরাও যুদ্ধস্থান হইতে গৃহে যাইতে পারে না; দেবগণ অত্যন্ত ভোগব্যাপৃত দিব্য শরীর ধারণ করেন; শিশুপালের শত্রুরাও নির্জনস্থানগত পিশাচাদিবৎ কুৎসিত শরীর ধারণ করে এবং দেবগণ ভূতলে অবস্থান করেন না; শিশুপালের শত্রুরাও সম্প্রতি ভূতলে অবস্থান করে না ॥৬৫॥

অন্বয়ঃ—अतिविस्मयनीयकर्मणः यस्य नृपतेः किञ्च विरोधि न (अस्ति)। यत् अमुक्तनयः असौ अक्षयं अहितानाम् कुलं क्षयं नयति ॥६६॥

टीका—अतीति। अतिविस्मयनीयकर्मणः अत्यन्तविस्मितपौरुषस्य। स्मयतेरनीयर्प्रत्ययः। यस्य नृपतेर्यस्य विरोधि चेष्टितं द्वेषिरूपं न किञ्चिदस्तीत्यर्थः यस्मादमुक्तनयोऽत्यक्तनीतिमार्गोऽसौ अक्षयमविनाशि पूर्वं केनापि क्षयं न नीतमित्यर्थः अहितानां कुलं शत्रुव्रातं क्षयं नाशं नयति। नीतिपौरुषाभ्यां द्विषन्निर्मूलयितुरस्य का विरोधिवार्त्तेति भावः। अक्षयमपि क्षयं नयतीति विरोधस्य नैत्रमेदेन परिहाराद्विरोधाभासोऽलङ्कारः ॥६६॥

टिप्पनी—अतीति। अत्र द्वितीयार्द्धे छेकानुप्रास इति टीकोक्तविरोधाभासेन सह तस्य संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६६॥

বাঙ্গালা—যে রাজা শিশুপালের সকল কার্য্যই অত্যন্ত বিস্ময়জনক এবং যাঁহার বিরোধী কেহই থাকে না। যেহেতু, নীতিপথানুসারী শিশুপাল, অক্ষয় শত্রুগণকেও ক্ষয় করিয়া থাকেন ॥৬৬॥

অন্বয়ঃ—असौ स्वभुजौजसा चलितोर्द्ध्वकबन्धसम्पदः मकरव्यूहनिरुद्धवर्त्मनः महतः सङ्गरसागरान् मुहुः अतरत् ॥६৭॥

न चिकीर्षति यः स्मयोद्धतो नृपतिस्तच्चरणोपगं शिरः ।
चरणं कुरुते गतस्मयः स्वमसावेव तदीयमूर्द्धनि ॥६८॥
स्वभुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ।
बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदाहवम् ॥६९॥

---

टीका—चलितेति । यत्र च यद्धचलिताः प्रवृत्ता ऊर्द्ध्वं उत्थिताः कबन्धसम्पदः शिरो-हीनकलेवरसम्पद एव कबन्धसम्पदः उदकसम्पदो येषु तान् । श्लिष्टरूपकम् । "कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवर" इति वैजयन्ती । मकरव्यूहा मकराकारसैन्यविन्यासाः त एव, मकरव्यूहा इति श्लिष्टरूपकम् "व्यूहौ समूहविन्यासाविति वैजयन्ती । निबद्धवर्त्मनो निरुद्धप्रवेशमार्गान् । अतएव महतो दुस्तरान् सङ्गरसागरान् समरसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मुहुरसकृत् अतरत् भुजेनाप्लवितरणमदृष्टचरमत्यद्भुतमिति भावः । अत्र, कबन्धा एव कबन्धाः मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागर-रूपणहेतुत्वात् केवलं श्लिष्टपरम्परितरूपकम् ॥६७॥

टिप्पनी—चलितेति । अत्र उद्धतघटनाव्यञ्जकत्वात् बन्धस्य प्रगाढ़त्वाच्च ओजो गुणः, गौड़ी च रीतिः ॥६७॥

বাঙ্গালা—যেখানে দণ্ডায়মান কবন্ধরূপ জলপ্রবাহ চলিতে থাকে এবং যাহার পথ-গুলি, মকরাকার সৈন্যসজ্জারূপ জলজন্তুসমূহে নিরুদ্ধ হয়; সেইরূপ বড় বড় যুদ্ধসমূদ্র হইতে শিশুপাল কেবল বাহুবলেই উত্তীর্ণ হইয়াছেন ॥৬৭॥

अन्वयः—स्मयोद्धतः यः नृपतिः शिरः तच्चरणोपगं न चिकीर्षति, गतस्मयः असौ एव तदीयमूर्द्धनि स्वं चरणं कुरुते ॥६८॥

टीका—नेति । स्मयोद्धतो गर्वेण दुर्विनीतो नृपतिः शिरो निजोत्तमाङ्गं तस्य शिशुपा-लस्य चरणमुपगच्छतीति तच्चरणोपगं तत् पादगतं यो न चिकीर्षति कर्त्तुमिच्छति तदीये, तस्य नृपतेः सम्बन्धिनि मूर्द्धनि गतस्मयो विगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते निधत्त, इत्यर्थः अनमन्तं स्वयो नमयति नम्रानवतीति तात्पर्य्यम्॥६८॥

टिप्पनी—नेति । अत्र शिरःपदेन प्रक्रम्य मूर्द्धपदाभिधानात् पर्य्यायविषयो भग्नप्रक्रमतादोषः; स च 'स्वमसावेव शिरस्यमुष्य सः' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

বাঙ্গালা—অহঙ্কারোদ্ধত যে রাজা নিজ মস্তক শিশুপালের চরণের নিকটবর্ত্তী করিতে ইচ্ছা না করেন , নিরহঙ্কার শিশুপালই তাঁহার মস্তকে নিজের চরণ দিয়া থাকেন ॥৬৮॥

अन्वयः—सः चतुरङ्गां वाहिनीम् अपहाय स्वभुजद्वयकेवलायुधः (सन्) शक्रदन्तिना सह बहुशः चतु-र्दन्तम् आहवम् अगच्छत् ॥६९॥

टीका—स्वेति । स चैद्यश्चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तां चतुरङ्गां वाहिनीं सेनामपहाय स्वभुजद्वयं केवलमेकमायुधं यस्य सः सन् शक्रदन्तिना ऐरावतेन बहु ।

अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया ।
युवयोरिदमेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥७०॥
भूतभूतिरहीनभोगभाक् विजितानेकपुरोऽपि विद्विषाम् ।
रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥७१॥

---

चत्वारो दन्ता यस्मिन् तं चतुर्दन्तम् आहवं रणं वहुशोऽगच्छत्। चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्यः शक्त इति भावः। दन्तिनोराहवश्चतुर्दन्त इत्युक्तं न तु मनुष्यदन्तिनोरिति विरोधः स च शक्रदन्तिनेति परिहृतः तस्य चतुर्दन्तत्वा-दिति विरोधाभासः ॥६९॥

टिप्पनी—स्वेति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

बाङ्गाला—शिशुपाल निजের চতুরঙ্গসৈন্য পরিত্যাগ করিয়া, কেবল নিজের বাহুযুগল-কেই অস্ত্র করিয়া, ইন্দ্রের হস্তী ঐরাবতের সহিত বহুতর চতুর্দন্ত (হস্তিদ্বয়ের যুদ্ধের নাম চতুর্দন্ত) যুদ্ধে গিয়াছেন ॥৬৯॥

अन्वयः—(हे कृष्ण !) अविचालित-चारु-चक्रयोः अनुरागात् श्रिया उपगूढयोः युवयोः इदम् एव भिद्यते, यत् त्वम् उपेन्द्रः, सः अतीन्द्रः एव ॥ ७०॥

टीका—अविचालितेति। अविचालितं परैरपर्यासितम् अतएव चारु शोभनं चक्रं सुदर्शनं राष्ट्रं च ययोस्तयोः। "चक्रं राष्ट्ररथाङ्गयोरिति विश्वः। श्रिया कमलया सम्पदा चानुरागादुपगूढयोराश्लिष्टयोर्युवयोस्तव तस्य च। "त्यदादीनि सर्वैर्नित्यमित्येकशेषः। इदमेव भिद्यते विशेष्यते। कर्मकर्त्तरि लट्। किं तदित्यत्राह। त्वमिन्द्रमुपगत उपेन्द्र इन्द्रानुजः तदनुचर इति यावत्। स तु इन्द्रमतिक्रान्तः अतीन्द्र इन्द्रविजयीति यावत् इद-मेव भिद्यते इति सम्बन्धः। इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथेति भावः। अत्रोपमानात् उपमेयस्य चैद्यस्याधिक्यादुभेदप्राधान्यसाधर्म्योक्त्या व्यतिरेकालङ्कारः ॥७०॥

टिप्पनी—अविचालितेति। अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः; गौडी च रीतिः ॥७०॥

বাঙ্গালা—কৃষ্ণ! কেহই আপনার সুন্দর সুদর্শনচক্রটীকে বিপর্য্যস্ত করিতে পারে না এবং রাজা শিশুপালের সুন্দর সৈন্যগুলিকেও কেহ বিচলিত করিতে পারে না; তারপর লক্ষ্মীদেবী অনুরাগে আপনাকেও যেমন আলিঙ্গন করেন, আবার রাজলক্ষ্মী অনুরাগে রাজা শিশুপালকেও তেমন আলিঙ্গন করেন। সুতরাং এদিকে আপনারা দুইই সমান; কিন্তু এইটাই আপনাদের ভেদ যে, আপনি উপেন্দ্র; আর তিনি অতীন্দ্র ॥৭০॥

अन्वयः—भूतभूतिः अहीनभोगभाक् विद्विषां विजितानेकपुरः अपि अजः इन्दुदले रुचिं करोति; महीपतिः (तु) परिपूर्णेन्दुरुचिः ॥७१॥

टीका—किञ्च त्वत्तोऽप्यधिको राजेत्यवाचोऽयमर्थः; यदीश्वरादप्यधिक इत्याह—

नयति द्रुतमुद्धतिश्रितः प्रसभं भङ्गमभङ्गुरोदयः।
गमयत्यवनीतलस्फुरद्भुजशाखं भृशमन्यमुन्नतिम् ॥७२॥

---

भृतेति। भृता भूतिर्भस्म सम्पच्च येन स भृतभूतिः। "भूतिर्भस्मनि सम्प"दीत्यमरः। अहीनां भोगिनामिनोऽहीनः शेषः तस्य भोगं कायं भजतीत्यहीनभोगभाक् शेषभूषण इत्यर्थः। अन्यत्र अहीनमन्यूनं भोगं सुखानुभवं भजतीति अहीनभोगभाक्। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो"रित्यमरः। विद्विषां विजितानेकपुरः विजितानेकविद्विट्पुर इत्यर्थः एकत्र त्रिपुरविजयादन्यत्र शत्रुनगरविजयाच्चेति भावः। सापेक्षत्वेऽपि गमकत्वात् समासः। एवम्भूतोऽप्यसौ हरः। "अजा विष्णुहरच्छागा" इत्यमरः। इन्दुदले चन्द्रखण्डे विषये रुचिमभिलाषं करोति इन्दुदले या रुचिः शोभा तां करोति दधातीति चार्थः सामान्यशब्देन विशेषलक्षणा। महीपतिस्तु परिपूर्णेन्दो रुचिरिव रुचिः शोभा यस्य सः तस्मिन् रुचिरभिलाषो यस्येति च परिपूर्णेन्दुरुचिः। "रुचिर्मयूखशोभायामभिष्वङ्गाभिलाषयो"रिति विश्वः। अत्र हरः खण्डेन्दुरुचिः राजा पूर्णेन्दुरुचिरिति व्यतिरेकः स च रुच्योरभेदाश्रयादिति श्लेषमूलाभेदातिशयोक्त्या सङ्कीर्णः ॥७१॥

**टिप्पनी**—भृतेति। अत्रापि गुणरीती पूर्ववत् ॥७१॥

**বাঙ্গালা**—মহাদেবও ভস্ম ধারণ করেন, শিশুপালও সম্পদ ধারণ করেন; মহাদেবও অনন্তনাগকে অলঙ্কার করিয়াছেন, শিশুপালও অন্যূন ভোগ করিয়া থাকেন; এবং মহাদেব ও শিশুপাল দুই জনই শত্রুর অনেক পুরী জয় করিয়াছেন। সুতরাং এ বিষয়ে উঁহারা দুইই সমান; (কিন্তু ভেদ এই যে) মহাদেব চন্দ্রখণ্ডে রুচি পোষণ করেন; আর রাজা শিশুপাল পূর্ণচন্দ্রের রুচি ধারণ করেন ॥৭১॥

**अन्वयः**—अभङ्गुरोदयः उद्धतिश्रितं प्रसभं द्रुतं भङ्गं नयति, (तथा) अवनीतलस्फुरद्भुजशाखम् अन्यं भृशम् उन्नतिं गमयति ॥७२॥

**टीका**—अथ कलापकमाह। नयतीत्यादि। यः तटद्रुमैः सरितासुदकस्य पूर इव भूभृतां गर्वैः क्रीडतीति चतुर्थे वक्ष्यति तत्क्रीडाप्रकारं त्रिभिर्वर्णयति। अभङ्गुरोदयः स्थिरवृद्धिः य उद्धतिश्रित औद्धत्यभाजः अनम्रानिति यावत्। श्रयतेः क्विप्। नृपान् द्रुमांश्चेत्यर्थः। द्रुतं शीघ्रं प्रसभं प्रसह्य भङ्गं नयति। अवनीतले स्फुरन्त्यौ भुजौ शाखे इव भुजशाखे यस्य तं भुजौ प्रसार्य भुवि प्रणिपतितमित्यर्थः अन्यं नृपं द्रुमं च वेतसादिकं भृशमुन्नतिं गमयति ॥७२॥

**टिप्पनी**—नयतीति। अत्र प्रथमे पादे वृत्त्यनुप्रासः, द्वितीये च छेकानुप्रासः भुजशाखेति लुप्तोपमा चेत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७२॥

**বাঙ্গালা**—স্থিরোন্নতিশালী রাজা শিশুপাল, কতকগুলি উদ্ধত রাজাকে বলপূর্বক শীঘ্রই ভগ্ন করিয়া ফেলেন; আবার যাঁহার বাহুশাখা ভূতলে লুণ্ঠিত হইতে থাকে, তাদৃশ অন্য রাজাকে অত্যন্ত উন্নত করিয়া দেন ॥৭২॥

अधिगम्य च रन्ध्रमन्तरा जनयन् मण्डलभेदमन्यतः ।
खनति क्षतसंहति क्षणादपि मूलानि महान्ति कस्यचित् ॥७३॥
घनपत्रभृतोऽनुगामिनस्तरसाकृष्य करोति कांश्चन ।
दृढ़मप्यपरं प्रतिष्ठितं प्रतिकूलं नितरां निरस्यति ॥७४॥
इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः ।
क्वचनापि महानखण्डितप्रसरः क्रीड़ति भूभृतां गणैः ॥७५॥

---

अन्वयः—अभङ्गुरोदयः यः अन्तरा च रन्ध्रम् अधिगम्य अन्यतः मण्डलभेदं जनयन् क्षतसंहति क्षणात् कस्यचित् महान्ति मूलानि अपि खनति ॥७३॥

टीका—अधिगम्येति । किञ्चेति चार्थः । अन्तरा मण्डलमध्ये आलवालमध्ये च रन्ध्रमवकाशं शुषिरं वाधिगम्य । अन्यतः मण्डलस्यामात्यादिवर्गस्य भेदमुपजापं जनयन् अन्यत्र मण्डलस्याधारदेशस्य भेदं विदारणं कुर्वन्नित्यर्थः । क्षता संहतिरैकमत्यं मूलानामाप्तानाम् यस्मिन् कर्मणि तद्यथा तथा क्षणात् कस्यचिद्राज्ञः द्रुमस्य च महान्ति मूलानि मुख्यान् जनानपि खनति तापयति अन्यत्रान्वयानपि खनत्यवदारयति ॥७३॥

टिप्पनी—अधिगम्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

বাঙ্গালা—যিনি ভিতরে ফাঁক পাইয়া, অন্য দিকে মন্ত্রিপ্রভৃতির মধ্যে ভেদ (বিদারণ) জন্মাইয়া দিয়া, একতা বিনষ্ট করিয়া, ক্ষণকালের মধ্যেই কোন রাজার (কোন তীরস্থ বৃক্ষের) বিশাল মূলকেও বিশ্লিষ্ট করিয়া দেন ॥৭৩॥

অন্বয়ः—অভঙ্গুরোদয়ং যঃ ঘন-পত্র-ভৃতঃ কাংশ্চন তরসা আকৃষ্য অনুগামিনঃ করোতি । দৃঢ়ং প্রতিষ্ঠিতম্ অপি প্রতিকূলম্ অপরং নিতরাং নিরস্যতি ॥৭৪॥

टीका—घनेति । घनानि सान्द्राणि पत्राणि वाहनानि पर्णानि च बिभ्रतीति घनपत्रभृतः कांश्चन नृपान् द्रुमांश्च । तरसा बलेन वेगेन च । "तरसी बलरंहसी" इति विश्वः । आकृष्यानुगामिनोऽनुचरान् करोति । दृढ़ं यथा तथा प्रतिष्ठितं प्रतिष्ठां गतमपि । प्रतिकूलं प्रातिकूल्यभाजम् । अपरं नृपं द्रुमं च नितरां निरस्यति उत्पाट्यान्यतः क्षिपति द्रुमपक्षे प्रतिकूलकूले क्षिपतीति चार्थः ॥७४॥

टिप्पनी—घनेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

বাঙ্গালা—যাঁহাদের হস্তি ঘোটক প্রভৃতি প্রচুর বাহন আছে, (যে গুলির ঘন ঘন পাতা আছে) সেইরূপ কতকগুলি রাজাকে (তীরস্থ বৃক্ষকে) বলপূর্ব্বক আকর্ষণ করিয়া আনিয়া, নিজের অনুচর করিয়া থাকেন। আবার অন্য কোন রাজা (তীরস্থ বৃক্ষ) প্রতিষ্ঠিত থাকিয়াও প্রতিকূল হইলে, যিনি তাঁহাকে (তীরস্থ বৃক্ষকে) একেবারে উন্মূলন করিয়া ফেলেন ॥৭৪॥

अन्वयः—इति क्वचन अपि अखण्डितप्रसरः महान् यः प्रावृषिजः सरिताम् उदकस्य पूरः तटद्रुमैः इव भूभृतां गणैः क्रीड़ति ॥७५॥

अलघूपलपङ्क्तिशालिनीः परितो रुद्धनिरन्तराम्बराः ।
अधिरूढनितम्बभूमयो न विमुञ्चन्ति चिराय मेखलाः ॥७६॥
कटकानि भजन्ति चारुभिर्नवमुक्ताफलभूषणैर्भुजैः ।
नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलताः ॥७७॥

---

**टीका**—इतीति । इतौघं कपनाप्यखण्डितप्रसरः सर्वत्राखण्डितप्रवृत्तिरित्यर्थः । महान् यः शिशुपालः प्रावृषिजातः प्रावृषिजः । "सप्तम्यां जनेर्ड" इति डप्रत्ययः । "प्रावृट्-शरत्कालदिवाञ्ज" इत्यलुक् । प्रावृषिक इति पाठे जात इत्यर्थे तत्र प्रावृषः ठगिति ठक् प्रत्ययः ठस्येकः । सरितामुदकानां पूरस्तटद्रुमैरिव भूभृतां राज्ञां गणैः साधनैः क्रीडति । अत्र तः कुकुरेत्यागामिश्लोके स महीपतिरित्यनेनास्य सम्बन्धः ॥७५॥

**टिप्पनी**—इतीति । अत्र पूर्णोपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७५॥

**বাঙ্গালা**—সর্বত্র অপ্রতিহতবেগ শরৎকালীয় নদীজলের প্রবাহ যেমন তীরস্থ বৃক্ষ দ্বারা খেলা করে ; সেইরূপ সর্বত্র অপ্রতিহতবেগ প্রধান রাজা যে শিশুপাল এইভাবে রাজগণ দ্বারা খেলা করিয়া থাকেন ॥৭৫॥

**अन्वयः**—अधिरूढ-नितम्ब-भूमयः परितः रुद्ध-निरन्तराम्बराः अलघूपल-पङ्क्ति-शालिन्यः यस्य अरिस्त्रियः (तादृशीः) मेखलाः चिराय न विमुञ्चन्ति ॥७६॥

**टीका**—अथ विशेषकमाह । अलघ्वित्यादि । यस्यारिस्त्रियः सम्पद्यनुभूतमापद्यप्यनुभवन्तीति वक्ष्यति तत्प्रकारमेवाह । अधिरूढनितम्बभूमयः उन्नतश्रोणिभागाः अलघुभिः उपलानां मणीनां पाषाणानां च पङ्क्तिभिः शालन्त इति तच्छालिनीः । "उपलौ मणिपाषाणौ" इति विश्वः । परितो रुद्धमावृतं निरन्तरं सान्द्रं सन्निहितं च अम्बरं वस्त्रमाकाशं च याभिस्ताः अधिरूढनितम्बभूमीराक्रान्तश्रोणिभागाः प्राप्तकटकाश्चेति विभक्तिविपरिणामः । मेखला रशनाः पर्वतमध्यभूमीश्च चिराय न विमुञ्चन्ति । अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीनां वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः ॥७६॥

**टिप्पनी**—अलघ्विति । अत्र बन्धार्थस्य प्रगाढत्वात् समासवःहुल्याच्च ओजो गुणः, गौडी च रीतिः ॥७६॥

**বাঙ্গালা**—যাঁহার উচ্চনিতম্ব শত্রুস্ত্রীগণ সম্পদে যাহা ভোগ করে, বিপদেও তাহাই ভোগ করে। কারণ, তাহারা সম্পদের সময়ে মেখলা (কাঞ্চী) ধারণ করে ; সে মেখলাগুলি সকলদিকেই বস্ত্রগুলিকে রুদ্ধ রাখে এবং সে মেখলাগুলিতে বড় বড় মণি থাকে। আবার তাহারা বিপদের সময়েও মেখলা (পর্ব্বতের মধ্য দেশ) আশ্রয় করে; সে মেখলাও সকলদিকে আকাশ রুদ্ধ করে এবং তাহাতে বড় বড় মণি থাকে ॥৭৬॥

**अन्वयः**—(यस्य अरिस्त्रियः) चारुभिः नवमुक्ताफलभूषणैः भुजैः कटकानि भजन्ति, पृथु-गण्डशैलताः नियतं चित्रकैः अवियोगं दधते च ॥७७॥

---

ইতি যস্য সসম্পদঃ পুরা যদবাপুর্ভবনেষ্বরিস্ত্রিয়ঃ ।
স্ফুটমেব সমস্তমাপদা তদিদানীমবনীধ্রমূর্দ্ধসু ॥৭৮॥
মহতঃ কুকুরান্ধকদ্রুমানতিমাত্রং দববদ্দহন্নপি ।
অতিচিত্রমিদং মহীপতির্যদকৃষ্ণাং পৃথিবীং করিষ্যতি ॥৭৯॥

---

**টীকা**—কটকানীতি। কিঞ্চ নবমুক্তাফলানি নূতনমৌক্তিকানি ভূষণানি যেষাং তৈস্তাবভিঃ ভুজৈঃ কটকানি বলয়ানি ভজন্তি অন্যত্র নবমুক্তান্যচিরত্যক্তানি অতঃ অফলানি বৈধব্যান্নিষ্ফলানি আভরণানি যৈস্তৈর্ভুজৈরুপলক্ষিতাঃ কটকানি তটানি ভজন্তি। কিঞ্চেতি পাঠঃ। পৃথুগণ্ডস্থলতঃ পৃথুগণ্ডস্থলেষু চিত্রকৈঃ পত্ররচনাভির্নিয়তমবিয়োগং সম্পর্কং দধতে অন্যত্র চ্যুতস্থূলোপলেষু চিত্রকৈর্মৃগবিশেষৈঃ সহবাসং দধতে। অত্রাপি প্রকৃতগোচরঃ শ্লেষঃ ॥৭৭॥

**টিপ্পনী**—কটকানীতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৭॥

**বাঙ্গালা**—যাঁহার শত্রুস্ত্রীগণ সম্পদের সময়ে নূতন মুক্তাময় অলঙ্কারে অলঙ্কৃত মনোহর হস্তে বলয় পরিধান করে এবং বিশাল গণ্ডদেশে নানাবিধ তিলক ধারণ করে। আবার বিপদের সময়েও তাহারা, বৈধব্যবশতঃ নিষ্ফল অলঙ্কারগুলিকে নূতন পরিত্যাগ করিয়া, সুন্দর হস্তে যাইয়া পর্ব্বতের নিতম্বদেশ আশ্রয় করে এবং পর্ব্বত হইতে পতিত বিশাল প্রস্তরের উপরে বিচিত্র হরিণগণের সঙ্গে নিয়ত বাস করে ॥৭৭॥

**অন্বয়ঃ**—যস্য অরিস্ত্রিয়ঃ পুরা সসম্পদঃ (সত্যঃ) ইতি ভবনেষু যৎ অবাপুঃ, ইদানীম্ আপদা (অপি) অবনীধ্রমূর্দ্ধসু তৎ সমস্তম্ এব স্ফুটম্ অবাপ্নুবন্তি ॥৭৮॥

**টীকা**—ইতীতি। যস্যারিস্ত্রিয়ঃ পুরা পূর্ব্বং সসম্পদঃ সশ্রীকাঃ ভবনেষু সদনেষু যদবাপুর্মেখলাদিকমনুবভূবুঃ। সমস্তমশেষং তদিদানীমাপদা অবনীধ্রমূর্দ্ধসু গিরিশৃঙ্গেষু ইতীত্থং স্ফুটমেবাবাপুঃ ন ত্বস্য বৈরিণাং জীবিতাশেতি ভাবঃ। অত্রাপি যদর্থস্যোত্তরশ্লোকেনান্বয়ঃ ॥৭৮॥

**টিপ্পনী**—ইতীতি। অত্র প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৮॥

**বাঙ্গালা**—যাঁহার শত্রুস্ত্রীগণ পূর্ব্বে সম্পন্ন থাকিয়া এইভাবে গৃহে মেখলাপ্রভৃতি পাইয়াছিল; এখন বিপন্ন অবস্থায়ও পর্ব্বতের উপরে সেই মেখলা প্রভৃতি সমস্তই স্পষ্টতই পাইতেছে ॥৭৮॥

**অন্বয়ঃ**—(সঃ) মহীপতিঃ মহতঃ কুকুরান্ধকদ্রুমান্ দববৎ অতিমাত্রং দহন্ অপি পৃথিবীং যৎ অকৃষ্ণাং করিষ্যতি, ইদম্ অতিচিত্রম্ ॥৭৯॥

**টীকা**—মহত ইতি। যত্তদোর্নিত্যসম্বন্ধাৎ। স মহীপতির্মহতোঽধিকান্ কুকুরান্ধকাখ্যান্ যাদবভেদাংস্তানেব দ্রুমানতিমাত্রং দববৎ দবাগ্নিবৎ। "দবদাবৌ বনারণ্যবহ্নী" ইত্যমরঃ। দহন্নপি অবনীমকৃষ্ণামশ্যামাং করিষ্যতি ইতি যৎ ইদমতিচিত্রং

পরিতঃ প্রমিতাক্ষরাপি সর্ব্বং বিষয়ং প্রাপ্তবতী গতা প্রতিষ্ঠাম্।
ন খলু প্রতিহন্যতে কুতশ্চিৎ পরিভাষেব গরীয়সী যদাজ্ঞা ॥৮০॥
যামূঢ়বানূঢ়বরাহমূর্ত্তির্মুহূর্ত্তমাদৌ পুরুষঃ পুরাণঃ।
তেনোহ্যতে সাম্প্রতমচ্যুতৈব চ্যুতারিণা সম্যগসৌ পুনর্ভূঃ ॥৮১॥

---

বিরুদ্ধমিত্যর্থঃ কৃষ্ণারহিতামিত্যবিরোধঃ অতএব বিরোধাভাসোঽলঙ্কারঃ। কুকুরান্ধকৈঃ সহ কৃষ্ণং হনিষ্যতীতি শ্লেষার্থঃ ॥৭৯॥

**টিপ্পনী**—সহত ইতি। অত্র দ্বিতীয়পাদগতেন বৃত্ত্যনুপ্রাসেন টীকোক্তবিরোধাভাসঃ সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৯॥

**বাঙ্গালা**—দাবাগ্নি যেমন বৃক্ষসমূহকে দগ্ধ করে, সেইরূপ সেই রাজা শিশুপাল, বিশাল কুকুর ও অন্ধকবংশীয় যাদবগণকে অত্যন্ত দগ্ধ করিয়াও পৃথিবীকে যে অকৃষ্ণবর্ণা (কৃষ্ণশূন্যা) করিবেন, ইহা অতি আশ্চর্য্য ॥৭৯॥

**অন্বয়ঃ**—প্রমিতাক্ষরা অপি পরিতঃ সর্ব্বং বিষয়ং প্রাপ্তবতী প্রতিষ্ঠাং গতা গরীয়সী যদাজ্ঞা, পরিভাষা ইব কুতশ্চিৎ ন খলু প্রতিহন্যতে ॥৮০॥

**টীকা**—অথ যুগ্মেনাহ। পরিত ইতি। প্রকর্ষেণ মিতাক্ষরাপি একত্র মিতভাষিত্বাদন্যত্র তু সূত্রত্বাচ্চাল্পাক্ষরাপি সর্ব্বং বিষয়ং রাষ্ট্রকার্য্যং দেশঞ্চ পরিতো ব্যাপ্তবতী সর্ব্বত্র প্রবৃত্তেত্যর্থঃ। প্রতিষ্ঠাং প্রামাণ্যং স্থিতিং গতা গরীয়সী ভূয়িষ্ঠার্থা যদাজ্ঞা যস্য রাজ্ঞঃ শাসনং পরিভাষা অনিয়মনিবারকো ন্যায়বিশেষঃ সেব কুতশ্চিৎ কুত্রাপি ন প্রতিহন্যতে খলু ন বাধ্যতে হি। পরিভাষা চ তন্ত্রৈকদেশে স্থিতা সর্ব্বং শাস্ত্রমভিজ্বলয়তীতি ভাষ্যকারঃ। ইকো গুণবৃদ্ধী ইত্যাদিকা পরিভাষা বৃদ্ধো বৃদ্ধিরিত্যাদিবিষয়ঃ। উপমালঙ্কারঃ। ঔপচ্ছন্দসিকং বৃত্তম্ ॥৮০॥

**টিপ্পনী**—পরিত ইতি। অত্র "উপমালঙ্কারঃ" ইতি মল্লিনাথঃ। পূর্ণোপমেতি তদর্থঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮০॥

**বাঙ্গালা**—মহারাজ শিশুপালের আদেশ, অল্পাক্ষর হইলেও সকল দিকে সমস্ত স্থানেই যাইয়া থাকে এবং লোকে তাহা প্রমাণ বলিয়াও মনে করে, আর সে আদেশ গুরুতরও বটে; সুতরাং পরিভাষার ন্যায় সে আদেশ, কোথাও প্রতিহত হয় না ॥৮০॥

**অন্বয়ঃ**—পুরাণঃ পুরুষঃ ঊঢ়বরাহমূর্ত্তিঃ (সন্) আদৌ মুহূর্ত্তং যাম্ ঊঢ়বান্; সাম্প্রতং চ্যুতারিণা তেন অচ্যুতা এব অসৌ ভূঃ পুনঃ সম্যক্ উহ্যতে ॥৮১॥

**টীকা**—যামিতি। যাং ভুবমাদৌ পূর্ব্বং পুরাণপুরুষো বিষ্ণুঃ ঊঢ়বরাহমূর্ত্তিঃ ধৃতবরাহশরীরঃ সন্ ন তু স্বরূপেণেতি ভাবঃ। মুহূর্ত্তং ক্ষণমাত্রম্ ঊঢ়বান্ ধৃতবান্। চ্যুতারিণা সংহৃতসকলবিপক্ষেণ অত এবৈনাং পুনস্তেন রাজ্ঞা অবিরতেনেতি ভাবঃ। অচ্যুতৈব বিপ্লবৈরনুপদ্রুতৈব অসৌ ভূঃ সাম্প্রতমদ্যাপি ন তু মুহূর্ত্তমিতি ভাবঃ। সম্যক্ যথাশাস্ত্র-

भूयांसः क्वचिदपि काममस्खलन्तस्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि।
कल्लोलाः सलिलनिधेरवाप्य पारं शीर्य्यन्ते न गुणमहोर्मयस्तदीयाः ॥८२॥
लोकालोकव्याहतं घर्मरश्मेः शालीनं वा धाम नालं प्रसर्त्तुम्।
लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥८३॥

---

मुच्यते धार्य्यते। वहेः कर्मणि लट् वचिस्वपीत्यादिना सम्प्रसारणम्। अत्र राज्ञो विष्णो-राधिक्यकथनाद् व्यतिरेकः। अत्र ध्वनिः कश्चिद् वृद्धः स पौढ़वराहमूर्त्तिर्यानविक्रतामादौ प्रथमं मुहूर्त्तमूढ़वान् परिणीतवानिति अतएव अक्षता पूर्वं या अक्षतयोनिका। अत एवासौ भूर्वोढ़ुः। क्षतारिणा शौर्य्यादिगुणाढ्येनेत्यर्थः तेन केनचिद् यूना साम्प्रतं पुनरुह्यते पुनः पुनः परिणीयते। "सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हतीति स्मरणादिति भावः। सा पुनर्भूरुच्यते इति योज्यम्। "पुनर्भूर्दिधिषूरूढ़ा द्विस्तस्या दिधिषुः पतिरित्यमरः। अत्राभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतेर्ध्वनिरेव ॥८१॥

टिप्पनी—यामिति। अत्र च्छेकानुप्रासश्च शब्दालङ्कार इति टीकोक्तव्यतिरेकेणास्य संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८१॥

বাঙ্গালা—পুরাণপুরুষ নারায়ণ বরাহমূর্ত্তি ধারণ করিয়া, পূর্ব্বকালে একটুকালমাত্র যে পৃথিবীকে বহন করিয়াছিলেন ; সম্প্রতি সমস্ত বিপক্ষহন্তা শিশুপাল, অক্ষত অবস্থাতেই সেই পৃথিবীকে আবার সমীচীনভাবে বহন করিতেছেন ॥৮১॥

अन्वयः—द्वये अपि भूयांसः क्वचित् अपि अस्खलन्तः कामं तुङ्गत्वं यद्यपि दधति च ; (तथापि) सलिलनिधेः कल्लोलाः पारम् अवाप्य शीर्य्यन्ते, तदीयाः गुणमहोर्मयः (तु) न ॥८२॥

टीका—भूयांस इति। द्वयेऽपि समुद्रोर्मयो गुणोर्मयश्चेति द्वितया अप्यूर्मय इति। द्वितयप् तस्य द्वितिभ्यामित्यनेन अयजादेशः प्रथमचरमेत्यादिना जसि विभाषया सर्वनाम-संज्ञा। भूयांसो बहुतराः क्वचिदप्यस्खलन्तोऽप्रतिहतप्रसरा इत्यर्थः। कामं तुङ्गत्वं दधति यद्यपि दधत्येव। "यद्यपीत्यवधारणे" इति केशवः। तथापीति शेषः। सलिल-निधेः समुद्रस्य कल्लोला महोर्मयः। "अथोर्मिषु महत्सूल्लोलकल्लोलावित्यमरः। पारं तीरमवाप्य शीर्य्यन्ते विलीयन्ते। शीर्य्यतेर्दैवादिकात् कर्त्तरि लट्। तदीया गुण-महोर्मयस्तु पारमवाप्य न शीर्य्यन्ते। अत्र गुणमहोर्मीणां भूयस्त्वादिति साधर्म्ये गुरुत्वेन समुद्रस्याधिक्य द्व्यतिरेकः। अनेन राज्ञोऽपि समुद्राधिक्यं व्यज्यते। प्रहर्षिणी वृत्तम् ॥८२॥

टिप्पनी—भूयांस इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

বাঙ্গালা—যদিও দু-ই বহুতর, কখন ও প্রতিহত হয় না এবং অত্যন্ত উচ্চত্ব ধারণ করে ; তথাপি সমুদ্রের মহাতরঙ্গগুলি পারে যাইয়া বিলীন হইয়া যায় ; কিন্তু শিশুপালের গুণমহাতরঙ্গগুলি কোথাও বিলীন হয় না ॥৮২॥

विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकै-
रच्छाच्छे पतिताञ्जने च नयने श्रोण्यो लसन्मेखलाः ।
प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषा-
मित्थं नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥८४॥

---

**अन्वयः**—लोकालोकव्याहतं शालीनं वा घर्मरश्मेः धाम पश्यतः लोकस्य अग्रे प्रसर्तुं न अलं (भवति) ; (किन्तु) यस्य तेजः पश्यतः लोकस्य अग्रे धृष्टं (सत्) उच्चैः भूभृतः आशु क्रामति ॥८३॥

**टीका**—अथ युग्मेनाह । लोकालोकेत्यादि । लोक्यते आलोक्यते च पार्श्वान्तरैरिति लोकालोकः । "लोकालोकश्चक्रवालः" इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरति । अतएव शालीनमधृष्टतया लज्जया मन्दस्वभावमित्यर्थः । "शालीनकौपीने अधृष्टाकार्ययोः" इति निपातः । इवार्थो वाशब्दः तदुत्प्रेक्षा वा । घर्मरश्मेर्धाम तेजः पश्यतो लोकस्याग्रे उच्चैर्भूभृतः पर्वतान् राज्ञश्च प्रसर्तुं व्याप्तुं नालं न समर्थम् । लोकालोकव्याप्तस्य लोकाग्रे सञ्चरत्वादित्यर्थः । यस्य राज्ञस्तु तेजः पश्यतो लोकस्याग्रत एव धृष्टं केनाप्यव्याहतत्वात् प्रगल्भं सत् उच्चैर्भूभृतो राज्ञः पर्वतांश्च क्रामति व्याप्नोति । अत्राप्रतिहतप्रतापत्वेन राज्ञः सूर्यादाधिक्याद् व्यतिरेकः स च द्वयोर्लोकालोकयोर्द्वयानां भूभृताम् अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया सङ्कीर्यते । शालिनीवृत्तमेतत् ॥८३॥

**टिप्पनी**—लोकेति । अत्र द्वितीये पादे नीलं नालमिति वृत्त्यनुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते । बन्धार्थस्य प्रगाढत्वात् ओजो गुणः, गौडी च रीतिः ॥८३॥

**বাঙ্গালা**—সূর্য্যের তেজ, লোকালোকপর্ব্বত কর্ত্তৃক প্রতিহত হইয়া যেন লজ্জিত হইয়া পড়ে ; তাই সে তেজ, দ্রষ্টা লোকের সম্মুখে উচ্চপর্ব্বতগণকে ব্যাপ্ত করিতে সমর্থ হয় না। কিন্তু যে শিশুপালের তেজ, দ্রষ্টা লোকের সম্মুখেও অপ্রতিহত ভাবে প্রকাশিত হইয়া, উন্নত রাজগণকে (পর্ব্বতগণকে) আক্রমণ করিতে সমর্থ হয় ॥৮৩॥

**अन्वयः**—वपुषः नवचन्दनेन विच्छित्तिः, अधरः अलक्तकैः भिन्नः, अच्छाच्छे नयने च पतिताञ्जने, श्रोण्यः (लसन्मेखलाः) (अलसन्मेखलाः), उन्नतकुचाभोगः मौक्तिकहारं प्राप्तः, इत्थं तदीयद्विषां युवतयः सम्पत्सु च आपत्सु अपि नित्यविभूषणाः (तिष्ठन्ति) ॥८४॥

**टीका**—विच्छित्तिरिति । वपुषो नवचन्दनेन विच्छित्तिर्वियोग आपदि अन्यत्र चन्दनालेपनमिति यावत् । अधरोष्ठः अलक्तकैः लाक्षारागैर्भिन्नो वियुक्तः अन्यत्र युक्तः । नयने च पतिताञ्जने गलितकज्जले अत एवाच्छाच्छे अच्छप्रकारे । "प्रकारे गुणवचनस्य" इति द्विर्भावः, कर्मधारयवदिति सुपो लुक् । अन्यत्र अच्छाच्छे नयने पतिताञ्जने प्राप्ताञ्जने । श्रोण्यो नितम्बाः लसन्मेखला न भवन्तीत्यलसन्मेखला निर्मेखला इत्यर्थः । अन्यत्र लसन्मेखला इति पदच्छेदः । उन्नतः कुचाभोगः कुचविस्तारो मौक्तिकानां हारं हरणं प्राप्तः । अन्यत्र

विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्यः शिशुपालतां यथार्थाम् ।
रुदतां भवदङ्गनागणानां करुणान्तःकरणः करिष्यतेऽसौ ॥८५॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
षोड़शः सर्गः ॥१६॥

—०—

---

मुक्तादाम प्राप्तः । इत्थमुक्तरीत्या तदीयद्विषां युवतयः सम्पत्सु चापत्स्वपि नित्यविभूषणाः । अत्रापत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशेषणद्वारा वर्णनात् श्लेषः । शार्दूलविक्रीड़ितं वृत्तं लक्षणमुक्तम् ॥८४॥

**टिप्पनी**—विच्छित्तिरिति । अत्र वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥८४॥

**বাঙ্গালা**—শিশুপালের শত্রুপক্ষীয় স্ত্রীলোকগণের সম্পদের সময়ে নূতন চন্দনলেপনে শরীরের শোভা হয়, ওষ্ঠদেশ আল্‌তার রসে রঞ্জিত হয়, অত্যন্ত নির্ম্মল নয়নে কাজল পড়ে, নিতম্বদেশে কাঞ্চীদাম শোভা পায় এবং উন্নতস্তনদেশ মুক্তার হার লাভ করে।

আবার বিপদের সময়ে তাহাদের শরীর হইতে নূতন চন্দনের বিচ্ছেদ ঘটে, ওষ্ঠদেশ আল্‌তার রসে বর্জিত হয়, অতিনির্ম্মল নয়নযুগল কজ্জলবিহীন হয়, নিতম্বদেশে কাঞ্চীদাম শোভা পায় না এবং উন্নতস্তনদেশ হইতে মুক্তার মালা অপহৃত হইয়া যায়।

সুতরাং শিশুপালের শত্রুপক্ষীয় স্ত্রীলোকগণ সম্পদ ও বিপদ এই উভয়সময়েই এইরূপে নিত্যবিভূষণ হয় (সম্পদে সর্ব্বদা বিশিষ্টভূষণ যুক্ত। বিপদে—সর্ব্বদা বিগতভূষণ) ॥৮৪॥

**अन्वयः**—ऊर्जितश्रीः असौ युधि भवन्तं सद्यः विनिहत्य रुदतां भवदङ्गनागणानां (सम्बन्धे) करुणान्तःकरणः (सन्) शिशुपालतां यथार्थां करिष्यते ॥८५॥

**टीका**—सत्यमीदृशस्ते राजा ततः किमित्याशङ्क्य तर्हि तत्त्वमाकर्णयेत्याह । विनिहत्येति । ऊर्जितश्रीरधिकैश्वर्योऽसौ राजा युधि भवन्तं सद्यो विनिहत्य हत्वा रुदतां क्रन्दतां भवदङ्गनागणानां करुणान्तःकरणः कृपाविष्टचित्तः सन् शिशुपालतां यथार्थां करिष्यति अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः । अत्र रोदनकरुणापदार्थयोर्विशेषणगत्या क्रमात् करुणाशिशुपालनहेतुकत्वात् काव्यलिङ्गयोः सङ्करः । औपच्छन्दसिकं वृत्तम् ॥८५॥

इति श्रीमहोपाध्यायकोलाचल मल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
षोड़शः सर्गः ॥१६॥

—०—

টিপ্পনী—বিনিহত্যেতি। অত্র চতুর্থপাদে বৃত্ত্যনুপ্রাস ইতি তেন টীকোক্তালঙ্কারঃ পুনঃ সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৫॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশবিরচিতায়া

শিশুপালবধটিপ্পন্যা মাধুরীসমাখ্যায়া

ষোড়শঃ সর্গঃ ॥০॥

—০—

বাঙ্গালা = অত্যন্ত ঐশ্বর্য্যশালী মহারাজ শিশুপাল, যুদ্ধে সত্বই আপনাকে বধ করিবেন; পরে আপনার রমণীরা রোদন করিতে লাগিলে, তাহাদের প্রতি সদয়চিত্ত হইয়া, (শিশুদিগকে রক্ষা করতঃ) নিজের শিশুপালনামটীকে সার্থক করিবেন ॥৮৫॥

## सप्तदशः सर्गः ।

—:०:—

इतीरिते वचसि वचस्विनाऽमुना युगक्षयक्षुभितमरुद्गरीयसि ।
प्रचुक्षुभे सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः ॥१॥
सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥२॥

---

अन्वयः—इति वचस्विना अमुना युगक्षयक्षुभित मरुद्गरीयसि वचसि ईरिते (सति), सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः प्रचुक्षुभे ॥१॥

टीका—इतीति । इतीत्थम् अमुना वचस्विना वाग्मिना । मनस्विनेति पाठे मनस्विना धीरेण दूतेन युगक्षये कल्पान्ते क्षुभित उद्धतो मरुत्तद्वद्गरीयसि वचसि ईरिते सति । तदम्बुराशिना युगक्षयवर्त्तिना समं तुल्यं यथा तथा सदो हरेरास्थानं महाप्रलये सर्वसंहारे समुद्यतमुद्युक्तं सत् सपदि प्रचुक्षुभे प्रचुकोप । कल्पोद्धतमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः । उपमा । रुचिरा वृत्तम् । "चतुर्ग्रहैरिह रुचिरा जभस्जगा" इति लक्षणात् ॥१॥

टिप्पनी—इतीति । अत्र मरुद्गरीयसीति लुप्तोपमा, तदम्बुराशिना सममिति आर्थोपमा, वचसि वचस्विनेति लाटानुप्रासः, युगक्षयक्षुभितेति च्छेकानुप्रासश्चेत्येषां संसृष्टिः । बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥१॥

বাঙ্গালা—বাগ্মী শিশুপালের দূত, এইভাবে, প্রলয়কালে প্রচলিত বায়ুর ন্যায় (পূর্ব্বোক্তরূপ) গুরুতর কথাগুলি বলিলে, প্রলয়কালীন সমুদ্রের ন্যায় সমস্ত সংহার করিতে উদ্যত শ্রীকৃষ্ণের সেই সভাটা তৎক্ষণাৎ উদ্বেলিত হইয়া উঠিল ॥১॥

अन्वयः—सरागया स्रुत-घन-घर्मतोयया कराहति-ध्वनित-पृथूरु पीठया मुहुः मुहुः दशन-विखण्डितोष्ठया रुषा प्रियतमया इव नृपाः भेजिरे ॥२॥

टीका—अथाष्टादशभिः सभाक्षोभं वर्णयति । सरागयेत्यादि । नृपाः राजानः सह रागेण पाटलिम्ना अनुरागेण च सरागया । तेन सहेति तुल्ययोगे बहुव्रीहिः । स्रुतं घनं सान्द्रं घर्मतोयं स्वेदोदकं यस्यां सा तया कराहत्या पाणितलास्फालनेन ध्वनितं पृथु महदूरुः पीठमिव ऊरुपीठं यस्यां तया मुहुर्मुहुर्दशनविखण्डितोष्ठया दन्तदष्टाधरया रुषा प्रियतमयेव भेजिरे । आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः उपमालङ्कारः ॥२॥

अलक्ष्यत क्षणदलिताङ्गदे गदे करोदरप्रहितनिजांसधामनि ।
समुल्लसच्छकलितपाटलोपलैः स्फुलिङ्गवान् स्फुटमिव कोपपावकः ॥३॥
अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः ।
रुषारुणीकृतमपि तेन तत्क्षणं निजं वपुः पुनरनयन्निजां रुचिम् ॥४॥

---

**टिप्पनी**—सरागयेति । अत्र वीरो रसः, क्रोधस्तु तस्य व्यभिचारी भाव इति सप्तम परिच्छेदे दर्पण काराशयः । मल्लिनाथमते तु रौद्रो रस इति द्रष्टव्यम् । गुणरीती पूर्ववत ॥२॥

**বাঙ্গালা**—প্রিয়তমার ন্যায় ক্রোধ আসিয়া রাজগণকে আশ্রয় করিল ; তখন তাঁহাদের দেহ হইতে নিবিড় ঘর্ম্মজল নির্গত হইতে থাকিল ; হস্তের আঘাতে বিশাল উরুদেশ শব্দ করিয়া উঠিল এবং বার বার দন্তদ্বারা ওষ্ঠদংশন চলিতে লাগিল ॥২॥

**अन्वयः**—करोदर प्रहित-निजांस-धामनि क्षणदलिताङ्गदे गदे समुल्लसच्छकलितपाटलोपलैः कोपपावकः स्फुलिङ्गवान् इव स्फुटम् अलक्ष्यत ॥३॥

**टीका**—अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह । अलक्ष्यतेत्यादि । करोदरप्रहितं धावितं तलास्फालितं निजमंसधाम स्वांशप्रदेशो येन तस्मिन् । अतएव क्षणात् दलिताङ्गदे भग्नकेयूरे । गदे गदाख्ये कृष्णानुजे समुल्लसद्भिरुत्पतद्भिः शकलितैः शकलीकृतैरङ्गदगलितैः पाटलोपलैः पद्मरागैः कोपपावकः स्फुलिङ्गवानिव स्फुटं व्यक्तमलक्ष्यतेत्युत्प्रेक्षा । "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः ॥३॥

**टिप्पनी**—अलक्ष्यतेति । अत्र प्रथम चतुर्थपादगतेन छेकानुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते । रौद्रो रसः, ओजो गुणः, गौड़ी च रीतिः ॥३॥

**বাঙ্গালা**—শ্রীকৃষ্ণের কনিষ্ঠ ভ্রাতা গদ, করতল দ্বারা নিজের স্কন্ধদেশে আঘাত করিলে, তাঁহার কেয়ূর খুলিয়া পড়িল ; সুতরাং সে কেয়ূরের পদ্মরাগমণিখণ্ডগুলি ছড়াইয়া পড়িল ; তাহাতে তাঁহার ক্রোধানল যেন স্ফুলিঙ্গযুক্ত হইল বলিয়া স্পষ্ট লক্ষ্য হইতে লাগিল ॥৩॥

**अन्वयः**—बलः समुल्लसद्दशनमयूखमण्डलः (सन्) अवज्ञया यत् उच्चकैः अहसत् ; तेन रुषा अरुणीकृतम् अपि निजं वपुः तत्क्षणं निजां रुचिं पुनः अनयत् ॥४॥

**टीका**—अवज्ञयेति । बली बलभद्रः समुल्लसत् समन्ततः प्रसरद्दशनमयूखमण्डलं दन्तरश्मिपटलं यस्य स सन् अवज्ञया अनादरेण उच्चैः अहसदिति यत् तेन हासेन रुषारुणीकृतमपि निजं वपुः तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । पुनर्निजां रुचिं धावल्यमेवानयत् । अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात् तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयः" इति लक्षणात् ॥४॥

**टिप्पनी**—अवज्ञयेति । अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४॥

**বাঙ্গালা**—বলরাম অবজ্ঞা করিয়া যে উচ্চ হাস্য করিলেন, তাহাতে তাঁহার দন্তসমূ-

यदुल्पतत्पृथुतरहारमण्डलं व्यवर्त्तत द्रुतमभिदूतमुल्मुकः।
बृहच्छिलातलकठिनांसघट्टितं ततोऽभवद्भ्रमितमिवाखिलं सदः ॥५॥
प्रकुप्यतः श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनान्तमारुतैः।
युधाजितः कृतपरितूर्णवीजनं पुनस्तरां वदनसरोजमखिदत् ॥६॥

---

ত্বের কিরণরাশি ছড়াইয়া পড়িল ; সুতরাং তাঁহার নিজ শরীর ক্রোধে রক্তবর্ণ করিয়া থাকিলেও, সেই দন্তের কিরণরাশিতে সে শরীর আবার নিজের শুভ্রকান্তি গ্রহণ করিল ॥৪॥

অন্বয়:—উল্মুকঃ উৎপতৎ পৃথুতর হার মণ্ডলম্ অভিদূতং দ্রুতং যৎ ব্যবর্ত্তত ; ততঃ অখিলং সদঃ বৃহচ্ছিলা-তল-কঠিনাংসঘট্টিতং (সৎ) ভ্রমিতম্ ইব অভবৎ ॥৫॥

টীকা—যদিতি। উল্মুকো নাম রাজা উৎপতদুল্লুঠৎ পৃথুতরং হারমণ্ডলং মুক্তাকলাপী যস্মিন্ কর্মণি তদ্যথা তথা অভিদূতং দূতাভিমুখং ব্যবর্ত্তত বিবৃত্ত ইতি দ্রুতং যৎ ততো বিবর্তনাদখিলং সদঃ বৃহতা শিলাতলকঠিনেনাংসেন স্কন্ধেন ঘট্টিতং ভ্রমিতমিবাভবৎ। বিবর্তবেগবশাৎ সংঘট্টনাদ্ভ্রমিতমিবাভূদিত্যুৎপ্রেক্ষা ॥৫॥

টিপ্পনী—যদিতি। অত্র বীরো রসঃ, প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ ॥৫॥

বাঙ্গালা—উল্মুকনামে কোন রাজা, বেগে যখন শিশুপালের দূতের দিকে ফিরিলেন। তখন তাঁহার বিশাল হার ছড়া উপরের দিকে ফাল দিয়া উঠিল ; এবং তাহাতে (কোন স্তম্ভের গায়ে) বৃহৎ প্রস্তরের ন্যায় কঠিন স্কন্ধদেশের আঘাতে সমস্ত সভাটা সঞ্চালিত হইয়া যেন ঘূর্ণিত হইল ॥৫॥

অন্বয়:—প্রকুপ্যতঃ যুধাজিতঃ বদনসরোজং শ্বসনসমীরণাহতি স্ফুটোষ্মভিঃ তনু-বসনান্ত-মারুতৈঃ কৃত-পরিতূর্ণ-বীজনম্ (অপিসৎ) পুনস্তরাম্ অখিদৎ ॥৬॥

টীকা—প্রকুপ্যত ইতি। প্রকুপ্যতোঽতিক্রুধ্যতো যুধাজিতো নাম রাজ্ঞো বদনসরোজং শ্বসনসমীরণস্য নিঃশ্বাসমারুতস্যাহতিভিঃ স্ফুটঃ প্রকটঃ ঊষ্মা ঔষ্ণ্যং যেষাং তৈঃ তনুবসনান্তমারুতৈঃ সূক্ষ্মবস্ত্রাঞ্চলবাতৈঃ কৃতং পরিতূর্ণং বীজনং শীঘ্রবিধূননং যস্য তৎ অতিশীঘ্রং বীজ্যমানমপীত্যর্থঃ পুনস্তরাং পুনরত্যন্তম্। অব্যয়াদাম্প্রত্যয়ঃ। অখিদৎ খিদ্যতি স্ম। খিদেলুঙি পুষাদিত্বাদঙ্প্রত্যয়। শ্লেষবিশিষ্টবাগত্যা খেদহেতুত্বাৎ কাব্যলিঙ্গং, বীজনেঽপি খেদ ইতি বিরোধঃ। বীজিরয়ং চুরাদিষু অন্বেষণীয়ঃ ॥৬॥

টিপ্পনী—প্রকুপ্যত ইতি। অত্র শ্বসনসমীরণপদয়োঃ পর্য্যায়তয়া অর্থস্য পুনরুক্ততাপ্রতীতৌ পুনরুক্তবদাভাসোঽলঙ্কারস্তেন টীকোক্তকাব্যলিঙ্গবিরোধাভ্যাং সংসৃষ্টিঃ। রৌদ্রো রসঃ, বন্ধোদ্ধত্যস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ গৌড়ী চ রীতিঃ ॥৬॥

বাঙ্গালা—যুধাজিৎ নামে কোন রাজা অত্যন্ত ক্রুদ্ধ হইয়া, আপন মুখমণ্ডলে সূক্ষ্ম বস্ত্রাঞ্চল দ্বারা বায়ু সঞ্চালন করিতে লাগিলেন ; তথাপি নিশ্বাসবায়ুর আঘাতে সে বায়ুতে উষ্ণতা জন্মাইয়া দেওয়ায় তাঁহার মুখমণ্ডল আবার ঘর্ম্মাক্ত হইল ॥৬॥

प्रजापतिक्रतुनिधनार्थमुत्थितं व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम् ।
समुद्यतं सपदि वधाय विद्विषामतिक्रुधं निषधमनौषधं जनः ॥७॥
परस्परं परिकुपितस्य पिंषतः क्षतोर्मिकाकनकपरागपिञ्जिलम् ।
करद्वयं सपदि सुधन्वनो निजैरनारतस्रुतिभिरधाव्यताम्बुभिः ॥८॥
निरायतामनलशिखोज्ज्वलां ज्वलन्नखप्रभाकृतपरिवेषसम्पदम् ।
अविभ्रमभ्रूमदनलोल्मुकाकृतिं प्रदेशिनीं जगदिव दग्धुमाहुकिः ॥९॥

---

**अन्वयः**—जनः सपदि विद्विषां वधाय समुद्यतम् उद्धतम् अतिक्रुधम् अनौषधं निषधं प्रजापति-क्रतु-निधनार्थम् उत्थितं रौद्रं ज्वरम् इव व्यतर्कयत् ॥७॥

**टीका**—प्रजेति। जनः सपदि विद्विषां वधाय समुद्यतमुद्युक्तम् उद्धतं तीव्रम् अत एवातिक्रुधमधिकक्रोधमनौषधमप्रतीकारमित्यर्थः निषधं निषधाख्यं नृपं प्रजापतिक्रतु-निधनार्थं दक्षाध्वरध्वंसनार्थमुत्थितं रुद्रस्येमं रौद्रं रुद्रसम्बन्धिनं ज्वरमिव वीरभद्ररूपिण-मित्यर्थः व्यतर्कयत्। अत्र राज्ञोपि प्रजापतित्वात् पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः स च दक्षाध्वरविध्वंसी वीरभद्रः एवायमिति उत्प्रेक्षितवानित्यर्थः। उपमा ॥७॥

**टिप्पनी**—प्रजापतीति। अत्र चतुर्थपादगतेन छेकानुप्रासेन टीकोक्तोपमा संसृज्यते। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७॥

**বাঙ্গালা**—নিষধ নামে কোন দুৰ্দ্ধৰ্ষ রাজা অত্যন্ত ক্রোধোদ্ধত হইয়া, শীঘ্রই শত্রুগণের বধের জন্য উদ্‌যোগী হইলেন; তখন দক্ষপ্রজাপতির যজ্ঞ ধ্বংস করিবার জন্য উত্থিত বীর-ভদ্রের ন্যায় লোকে তাঁহাকে ধারণা করিল ॥৭॥

**अन्वयः**—परिकुपितस्य परस्परं (करद्वयमेव) पिंषतः सुधन्वनः क्षतोर्मिका कनक पराग-पिञ्जिलं करद्वयं सपदि निजैः अनारतस्रुतिभिः अम्बुभिः अधाव्यत ॥८॥

**टीका**—परस्परमिति। परिकुपितस्यातिक्रुद्धस्य अत एव परस्परं पिंषतः पीडयतः करद्वयमित्यर्थः सपदि सुधन्वनो राज्ञः क्षतानां पिष्टानामूर्मिकाणामङ्गुलीयकानां कनक-परागेण सुवर्णचूर्णेन पिञ्जिलं पङ्किलम्। पिच्छादित्वात्मत्वर्थीय इलच्प्रत्ययः। "अङ्गु-लीयकमूर्मिकेत्यमरः। करद्वयं पाणियुग्मं निजैः करद्वयजन्यैरेवानारतस्रुतिभिरविरतस्रा-वैरम्बुभिः स्वेदोदकैरेव व्यधाव्यत। "धावु गतिशुद्ध्योरिति धातोः कर्मणि लङ्। क्षतोर्मिकाणां करद्वयस्य च परागत्वपङ्किलत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ती तयोः सङ्करः ॥८॥

**टिप्पनी**—परस्परमिति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८॥

**বাঙ্গালা**—সুধন্বা নামে কোন রাজা অত্যন্ত ক্রুদ্ধ হইয়া, পরস্পর হাতে হাত নিষ্পে-ষণ করিতে লাগিলেন; তখন নিষ্পেষিত অঙ্গুরীসমূহ হইতে সোণার রেণু নির্গত হইয়া, হাত দুই খানাকে ব্যাপ্ত করিল; তার পর, অনবরত গলিত নিজেরই ঘর্ম্মজলে সে হাত দু'খানা আবার প্রক্ষালিত হইল ॥৮॥

दुरीक्षतामभजत मन्मथस्तथा यथा पुरा परिचितदाहधार्ष्ट्यया ।
ध्रुवं पुनः सशरममुं तृतीयया हरोऽपि न व्यषहत वीक्षितुं दृशा ॥१०॥
विचिन्तयन्नुपनतमाहवं रसादुरःस्फुरत्तनुरुहमग्रपाणिना ।
परामृशत् कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं पृथुः ॥११॥

---

अन्वयः—आहुकिः निरायताम् अनलशिखोज्ज्वलां ज्वलन्नखप्रभा-कृत-परिवेष सम्पदम् अमदन्नलो-पातुकाकृतिं प्रदेशिनीं जगत् दग्धुम् इव अविभ्रमत् ॥९॥

टीका—निरेति । अ हुकिर्नाम राजा निरायतां प्रसारिताम् अनलशिखाग्निज्वाला तद्वत् उज्ज्वलां ज्वलन्तीभिर्नखप्रभाभिः कृता परिवेषसम्पत् परिधिशोभा यस्यास्ताम् अतएव अमतोऽनलोल्मुकस्यालातस्येवाकृतिः संस्थानं यस्यास्ताम् । "अङ्गारोऽलातमुल्मुकमित्यमरः । प्रदेशिनीं जगद्दग्धुमिवेत्युत्प्रेक्षा । अविभ्रमत् भ्रमयति स्म । भ्रमेर्ण्यौ चङ् । दूतसन्तर्ज-नाय भ्राम्यमाणानखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणालातचक्रवदलक्षतेत्यर्थः ॥९॥

टिप्पनी—निरायतामिति । अत्र प्रथमे तृतीये च पादे लुप्तोपमा च्छेकानुप्रासश्चेति संसृष्टिः । रौद्रो रसः, ओजो गुणः, गौड़ी च रीतिः ॥९॥

বাঙ্গালা—আহুকি নামে কোন রাজা প্রসারিত, অগ্নিশিখার তুল্য উজ্জ্বল, দীপ্যমান নখের কিরণে পরিবেষ্টিত এবং ঘূর্ণিত জ্বলৎকাষ্ঠের সমান তর্জনী অঙ্গুলীটাকে জগৎ দগ্ধ করিবার জন্যই যেন ঘূর্ণিত করিতে লাগিলেন ॥৯॥

अन्वयः—मन्मथः तथा दुरीक्षताम् अभजत, यथा हरः अपि पुरा परिचितदाहधार्ष्ट्यया तृतीयया दृशा सशरम् अमुं ध्रुवं पुनः वीक्षितुं न व्यषहत ॥१०॥

टीका—दुरीक्षतामिति । मन्मथः प्रद्युम्नावतारः कामस्तथा दुरीक्षतां दुर्दर्शनम् । ईक्षतेः खलन्तात्तल प्रत्ययः । अभजत यथा हरोऽपि पुरा पूर्वजन्मनि परिचितमभ्यस्तं दाहधार्ष्ट्यं दहनसाहसं यस्या तया तृतीयया दृशा । सशरममुं मन्मथं ध्रुवं पुनर्वीक्षितुं न व्यषहत न शशाक । "परिनिविभ्यः सेवसितसयसिवुसहसुटस्तुस्वञ्जांसिवादीनां वाड्व्यवा-येऽपि इति विकल्पान्न षत्वम् । अजय्योत्प्रेक्षायां रुद्रस्यापि भीषणः किमुतान्येषामिति वस्तु व्यज्यते ॥१०॥

टिप्पनी—दुरीक्षतामिति । अत्र ध्रुवशब्दस्य उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षालङ्कारः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

বাঙ্গালা—কামদেব সেইরূপ দুর্দর্শনীয়তা প্রাপ্ত হইলেন যে, পূর্বজন্মে যাহার দাহ করার সাহস জন্মিয়াছিল, সেই তৃতীয় নয়ন দ্বারা মহাদেবও, বাণধারী সে কামদেবকে পুন-রায় দেখিতে নিশ্চয়ই সমর্থ হইলেন না ॥১০॥

अन्वयः—पृथुः उपनतम् आहवं विचिन्तयन् (सन्) रसात् अग्रपाणिना स्फुरत्तनुरुहं कठिन-कठोर-कामिनी कुच-स्थल प्रमुषित-चन्दनम् उरः परामृशत् ॥११॥

विलङ्घितस्थितिमभिवीक्ष्य रूक्षया रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ।
जनैस्तदा युगपरिवर्त्तवायुभिर्विवर्त्तिता गिरिपतयः प्रतीयिरे ॥१२॥
विवर्त्तयन् मदकलुषीकृते दृशौ कराहतक्षितिकृतभैरवारवः ।
क्रुधा दधत्तनुमतिलोहिनीमभूत् प्रसेनजिद्गज इव गैरिकारुणः ॥१३॥

---

**टीका**—विचिन्तयन्निति । पृथुर्नाम राजा उपनतं प्राप्तम् आहवं युद्धं तस्मादनुरागात् विचिन्तयन् कदेति ध्यायन् कठिनेन कर्कशेन कठोरेण प्रसङ्गेन कामिन्याः कुचस्थलेन प्रमुषितमपहृतं चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते । अतएव स्फुरत्तनुरुहमुद्धतपुलकमुरः अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । अतएव "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदयोरिति वामनः । तेनाग्रपाणिना पाणितलेन परामृशत् परामृष्टवान् । रणकण्डूलपाणित्वादिति भावः । अतएव यदन्येषां रोषजनकं दूतवाक्यं तदागामिरणकारणतयास्य हर्षहेतुरिति श्लेषार्थः ॥११॥

**टिप्पनी**—विचिन्तयन्निति । अत्र तृतीयचरणे छेकानुप्रासोऽलङ्कारः । वीरो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥११॥

**বাঙ্গালা**—পৃথুনামে কোন রাজা যুদ্ধ উপস্থিত হইয়াছে চিন্তা করিয়া, যুদ্ধের অনুরাগে হস্তাগ্র দ্বারা আপন বক্ষঃস্থল সম্মর্দ্দন করিতে লাগিলেন ; তাঁহার সে বক্ষঃস্থলে রোমাঞ্চ জন্মিয়াছিল এবং বয়স্থা রমণীর কঠিন স্তনমণ্ডলের ঘর্ষণে সে স্থানের চন্দনাঙ্গরাগ অপহৃত হইয়াছিল ॥১১॥

**अन्वयः**—रूक्षया रिपोः गिरा गुरुम् अपि गान्दिनीसुतं विलङ्घितस्थितिम् अभिवीक्ष्य जनैः तदा युगपरिवर्त्तवायुभिः विवर्त्तिताः गिरिपतयः प्रतीयिरे ॥१२॥

**टीका**—विलङ्घितेति । गुरुं स्वभावतो धीरमपि सन्तं रूक्षया परुषया रिपोर्गिरा दूतवाचा विलङ्घितस्थितिमुल्लङ्घितमर्य्यादं क्रोधादुन्मर्य्यादं विकुर्वाणमित्यर्थः गान्दिनीसुतमक्रूरमभिवीक्ष्य जनैस्तदा अक्रूरविक्रियालोकनसमये युगपरिवर्त्तवायुभिः कल्पान्तवातैर्विवर्त्तिताः स्थानाद्विचालिताः गिरिपतयोऽद्रयः प्रतीयिरे विश्वश्वसिरे । अक्रूरविक्रियादर्शनाद्गिरिचलनमपि युगान्ते संभावितमेवेति जनैर्विश्वस्तमित्यर्थः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । प्रतिपूर्वादिणः कर्मणि लिट् । अत्र कल्पान्ते गिरिचलनविक्रियाकल्पेयमक्रूरविक्रियेति वाक्यभेदेन सादृश्याक्षेपान्निदर्शनालङ्कारः । तेनाक्रूरस्य लोकोत्तरं धैर्य्यं नैसर्गिकमिति वस्तु व्यज्यते ।१२॥

**टिप्पनी**—विलङ्घितेति । अत्र प्रथमार्द्धगतच्छेकानुप्रासेन टीकोक्ता निदर्शना संसृज्यते । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—শত্রুদূতের কটুবাক্যে ধীরপ্রকৃতি অক্রূরেরও ধৈর্য্যচ্যুতি ঘটিয়াছে দেখিয়া লোকে তখন ইহা বিশ্বাস করিল যে, প্রলয়কালের বায়ুতে পর্ব্বতগুলিকেও বিচলিত করিতে পারে॥১২॥

सकुङ्कुमैरविरलमम्बुबिन्दुभिर्गवेषणः परिणतदाड़िमारुणैः।
स मत्सरस्फुटितवपुर्विनिःसृतैर्बभौ चिरं निचित इवासृजां लवैः ॥१४॥
ससम्भ्रमं चरणतलाभिताड़नस्फुटन्महीविवरवितीर्णवर्त्मभिः।
रवेः करैरनुचिततापितोरगं प्रकाशतां शिनिरनयद्रसातलम् ॥१५॥

---

अन्वयः—मद-कलुषीकृते दृशौ विवर्त्तयन् कराहत-क्षिति-कृत-भैरवारवः क्रुधा अतिलोहिनीं तनुं दधत् प्रसेनजित् गैरिकारुणः गजः इव अभूत् ॥१३॥

टीका—विवर्त्तयन्निति मदो मद्यविकारो दानं च। "मदो मद्यमदानयोरिति विश्वः। तेन कलुषीकृते आकुलीकृते दृशौ विवर्त्तयन् घूर्णयन् करेण पाणिना शुण्डादण्डेन चाहतायां क्षितौ भूमौ कृतो भैरवारवो भयङ्करध्वनिर्येन स क्रोधात् सध्वानं करेण क्षितिमाघ्नन्नित्यर्थः। क्रुधा क्रोधेन अतिलोहिनीमतिलोहिताम्। "वर्णादनुदात्तात्तोपधात्तो न इति विकल्पात् ङीष् तकारस्य च नकारः। तनुं वपुर्दधत् प्रसेनजिन्नाम राजा गैरिकारुणो धातुरक्तो गज इवाभूत् तद्वदलक्ष्यतेत्यर्थः ॥१३॥

टिप्पनी—विवर्त्तयन्निति। अत्र पूर्णोपमालङ्कारो द्वितीयपादगतेन छेकानुप्रासेन संसृज्यते। रौद्रो रसः, प्रसादो गुणः वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—প্রসেনজিৎ নামে কোন রাজা ক্রোধে আরক্তবর্ণ শরীর ধারণ করতঃ মত্ততানিবন্ধন রক্তবর্ণ নয়নযুগল ঘূর্ণিত করিয়া, ভূতলে করাঘাত করিলেন; তাহাতে ভূতল ভয়ঙ্কর শব্দ করিয়া উঠিল; এই অবস্থায় তিনি, গৈরিকধাতুতে রক্তবর্ণ হস্তীর ন্যায় দৃষ্টিগোচর হইলেন ॥১৩॥

अन्वयः—सः गवेषणः सकुङ्कुमैः परिणतदाड़िमारुणैः अम्बुबिन्दुभिः मत्सर-स्फुटित-वपुर्विनिःसृतैः असृजां लवैः अविरलं निचितः इव चिरं बभौ ॥१४॥

टीका—सकुङ्कुमैरिति। स प्रसिद्धो गवेषणो नाम राजा सकुङ्कुमैः सर्वाङ्गीणकुङ्कुमोपलेपैरित्यर्थः। अतएव परिणतदाड़िमारुणैः परिपक्वदाड़िमबीजरक्तैरम्बुबिन्दुभिः क्रोधसात्त्विकैः स्वेदबिन्दुभिरित्यर्थः। मत्सरेणान्तःसन्तापेनात्युत्कटेन स्फुटिताद्विभिन्नात् वपुषो विनिःसृतैरसृजां लवैरसृग्बिन्दुभिरविरलं निरन्तरं निचितो व्याप्त इव चिरं बभौ। उत्प्रेक्षा ॥१४॥

टिप्पनी—सकुङ्कुमैरिति। अत्र द्वितीयचरणे रिणरुणैरिति छेकानुप्रासेन टीकोक्ता क्रियोत्प्रेक्षा संसृज्यते। रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—গবেষণ নামে প্রসিদ্ধ কোন রাজার দেহ হইতে কুঙ্কুমযুক্ত, সুতরাং পরিপক্ব দাড়িমফলের বীজের ন্যায় অরুণবর্ণ ঘর্ম্মবিন্দুসকল নির্গত হইতে লাগিল; তাহাতে বোধ হইল যে, ক্রোধে তাঁহার শরীর বিদীর্ণ হওয়ায় রক্তবিন্দু সকলই যেন নির্গত হইতেছে; তাদৃশ ঘর্ম্মবিন্দুসমূহে ঘনভাবে ব্যাপ্ত হইয়া তিনি বহুকাল যাবৎ শোভা পাইলেন ॥১৪॥

প্রতিক্ষণং বিধুবতি শারণে শিরঃ শিখিদ্যুতঃ কনককিরীটরশ্ময়ঃ ।
অশঙ্কিতং যুধমধুনা বিশন্ত্বমী ক্ষমাপতীনিতি নিররাজয়ন্নিব ॥১৬॥
দধৌ চলৎপৃথুরসনং বিশঙ্কয়া বিদারিতং বিততবৃহদ্ভুজালতঃ ।
বিদূরথঃ প্রতিভয়মাস্যকন্দরং চলৎফণাধরমিব কোটরং তরুঃ ॥১৭॥

---

**অন্বয়ঃ**—শিনিঃ সসম্ভ্রমং চরণতলাভিতাড়ন-স্ফুটন্মহী-বিবর-বিতীর্ণ-বর্ত্মভিঃ রবেঃ করৈঃ অনুচিত-তাপিতোরগং রসাতলং প্রকাশম্ অনয়ৎ ॥১৫॥

**টীকা**—সসম্ভ্রমমিতি । শিনিঃ সাত্যকেঃ পিতামহঃ সসম্ভ্রমং সসত্বরং চরণতলাভিতাড়নেন পাদতলাভিঘাতেন স্ফুটন্ত্যা দলন্ত্যা মহ্যা বিবরৈঃ ছিদ্রৈঃ বিতীর্ণবর্ত্মভির্দত্তমার্গৈর্দত্তপ্রসরণৈরিত্যর্থঃ । রবেঃ করৈঃ অনুচিতং পূর্ব্বমপরিচিতমিদং যথা তথা তাপিতাঃ সন্তাপং গমিতাঃ উরগা যস্মিন্ তৎ রসাতলং প্রকাশতাং প্রকটত্বমনয়ৎ । অত্র মহীবিবরকরোরগরসাতলানাং ক্রমেণ স্ফুটনান্তপ্রবেশতাপপ্রকাশনৈরসম্বন্ধেঽপি সম্বন্ধোক্তেরতিশয়োক্তিঃ পাদাহননৈরমানুষীং তীব্রতাং ব্রজতি স্মেতি ধ্বনিঃ ॥১৫॥

**টিপ্পনী**—সসম্ভ্রমমিতি । অত্র রৌদ্রো রসঃ, সমাসবাহুল্যেন ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥১৫॥

**বাঙ্গালা**—শিনিনামক কোন যদুবংশীয় লোক (সাত্যকির পিতামহ), ব্যস্ততার সহিত ভূতলে পদাঘাত করিলেন ; তাহাতে ভূতল বিদীর্ণ হওয়ায় একটা গর্ত্ত হইল ; সেই গর্ত্ত, সূর্য্যরশ্মি প্রবেশ করার পথ দিল ; সূর্য্যরশ্মি সেই পথ দিয়া প্রবেশ করিয়া, পাতালের সর্পগুলিকে অপরিচিত সন্তাপ দান করিল এবং পাতালকে প্রকাশ করিল ॥১৫॥

**অন্বয়ঃ**—শারণে প্রতিক্ষণং শিরঃ বিধুবতি (সতি), শিখিদ্যুতঃ কনক-কিরীট-রশ্ময়ঃ, 'অমী অধুনা অশঙ্কিতং যুধং বিশন্তু' ইতি ক্ষমাপতীন্ নিররাজয়ন্ ইব ॥১৬॥

**টীকা**—প্রতীতি । শারণে নাম রাজ্ঞি প্রতিক্ষণং শিরো বিধুবতি ক্রোধাৎ কম্পয়তি সতি । ধুবস্তৌদাদিকাল্লটঃ শত্রাদেশঃ অচি শ্নুধাত্বিত্যাদিনা উবঙাদেশঃ । শিখিবৎ দ্যোতন্ত ইতি শিখিদ্যুতোঽগ্নিপ্রভাঃ । ক্বিপ্ । কনককিরীটরশ্ময়ো নীরাজনকর্ত্তারঃ অমী ভূপাঃ অধুনা অশঙ্কিতং নিঃশঙ্কং যুধমাজিম্ । "সমিত্যাজিসমিদ্যুধ" ইত্যমরঃ । বিশন্ত্বিতি ক্ষমাপতীন্নিররাজয়ন্নিব নীরাজয়ন্তি স্মেবেত্যুৎপ্রেক্ষা । "নীরাজনা স্যাদ্বিজয়" ইত্যাগমঃ ॥১৬॥

**টিপ্পনী**—প্রতীতি । অত্র শিখিদ্যুত ইতি লুপ্তোপময়া শার শির ইতি ছেকানুপ্রাসেন চ টীকোক্তোৎপ্রেক্ষা সংসৃজ্যতে । রৌদ্রো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥১৬॥

**বাঙ্গালা**—শারণনামে কোন রাজা অনবরত মস্তক কম্পন করিতে লাগিলে, তাঁহার স্বর্ণময় কিরীট হইতে অগ্নির ন্যায় উজ্জ্বল কিরণরাশি নির্গত হইয়া, 'এই সকল রাজারা এখন নিঃশঙ্কভাবে যুদ্ধে যাইতে পারেন' ইহা জানাইতে থাকিয়াই যেন সেই রাজাদের আরতি করিতে লাগিল ॥১৬॥

समाकुले सदसि तथापि विक्रियां मनोऽगमन्न मुरभिदः परोदितैः।
घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं न हि व्रजति विकारमम्बुधेः ॥१८॥
परानमी यदपवदन्त आत्मनः स्तुवन्ति च स्थितिरसतामसाविति।
निनाय नो विकृतिमविस्मितः स्मितं मुखं शरच्छशधरमुग्धमुज्ज्वलः ॥१९॥

---

**अन्वयः**—वितत-बृहद्भुजालतः विदूरथः विवक्षया विदारितं चलत्पृथुरसनं प्रतिभयम् आस्यकन्दरम्, चलत्फणाधरं कोटरम् तरुः इव दधौ ॥१७॥

**टीका**—दधाविति। वितते विस्तृते बृहत्यौ भुजे लते इव यस्य स विदूरथो नाम राजा। विवक्षया किमपि वक्तुमिच्छया विदारितं व्यात्तम् अत एव चलन्ती पृथुर्महती रसना जिह्वा यस्मिन् तम्। "रसज्ञा रसना जिह्वे"त्यमरः। प्रतिभयं भयङ्करमास्यं कन्दर इवास्यकन्दरस्तम्। "दरी तु कन्दरो वा स्त्री"त्यमरः। चलन् फणाधरः फणी यस्मिन् तत् कोटरं तरुरिव। "निष्कुहः कोटरं वा ना"इत्यमरः। दधौ। श्रौती पूर्णोपमा ॥१७॥

**टिप्पनी**—दधाविति। अत्र रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

**বাঙ্গালা**—বিদূরথ নামে কোন রাজা, লতার ন্যায় বৃহৎ বাহুযুগল বিস্তৃত করিয়া, কোন বিষয় বলিতে ইচ্ছা করিয়া, মুখব্যাদন করিলেন, তখন সেই মুখের ভিতরে বিশাল জিহ্বা চলিতে লাগিল; সুতরাং যাহার ভিতরে সর্প প্রবেশ করিতে থাকে, বৃক্ষ যেমন সেই কোটর ধারণ করে, তিনিও তেমন সেই মুখবিবর ধারণ করিতে লাগিলেন ॥১৭॥

**अन्वयः**—परोदितैः सदसि समाकुले (सति), तथापि मुरभिदः मनः विक्रियां न अगमत्। हि बहुलितनिम्नगाजलैः घनाम्बुभिः अम्बुधेः जलं विकारं न व्रजति ॥१८॥

**टीका**—समाकुल इति। परोदितैः शत्रुवाक्यैः सदसि आस्थाने तथा समाकुले क्षुभितेऽपि मुरभिदो हरेर्मनो विक्रियां क्षोभं नागमत्। तथाहि बहुलितानि बहुलीकृतानि क्षोभितानि निम्नगाजलानि यैस्तैर्घनाम्बुभिः मेघोदकैरम्बुधेर्जलं विकारं न व्रजति। यथा वर्षोदकैर्नद्यः क्षुभ्यन्ति न समुद्रस्तद्वदिति भावः। दृष्टान्तालङ्कारः ॥१८॥

**टिप्पनी**—समाकुल इति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

**বাঙ্গালা**—শত্রুর বাক্যে সমস্ত সভা উদ্বেলিত হইল; তথাপি শ্রীকৃষ্ণের মন বিকার প্রাপ্ত হইল না। কারণ, মেঘের জল নদীসমূহের জলকে বর্দ্ধিত করিয়া বিকৃত করে বটে; কিন্তু তাহাতে সমুদ্রের জল বিকার প্রাপ্ত হয় না ॥১৮॥

**अन्वयः**—अमी (असन्तः) यत् परान् अपवदन्ते, आत्मनश्च स्तुवन्ति, असौ असतां स्थितिः; इति (मत्वा) अविस्मितः उज्ज्वलः स्मितं शरच्छशधरमुग्धं मुखं विकृतिं नो निनाय ॥१९॥

**टीका**—परानिति। अमी खलाः परानन्यानपवदन्ते निन्दन्ति। "अपाद्वद" इत्यात्मनेपदम्। आत्मनः स्वानि स्तुवन्ति चेति यत् असावसतां खलानां स्थितिः प्रकृतिरिति इति मत्वेत्यर्थः। गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः। विस्मितुं

निराकृते यदुभिरिति प्रकोपिभिः स्पशे शनैर्गतवति तत्र विद्विषाम् ।
सुरद्विषः स्वनितभयानकानकं बलं क्षणादथ समनह्यताजये ॥२०॥
मुहुः प्रतिस्खलितपरायुधा युधि स्थवीयसीरचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशनास्तनूरयन्नय इति वृष्णिभूभृतः ॥२१॥

---

न भवतीति अविकृतो दूतप्रलापैर्विस्मयं न गतः उद्धवः स्मितं स्मेरम्। उभयत्र कर्त्तरि क्तः। अतएव शरच्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा। मुखं विकृतिं न निनाय न प्रापयामास। न हि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥१९॥

**टिप्पनी**—परानिति। अत्र तृतीयपादगतेन च्छेकानुप्रासेन टीकोक्ता लुप्तोपमा संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—এই সকল অসৎ লোকেরা যে অন্যের নিন্দা করে এবং আত্মীয়ের প্রশংসা করে; এটা উহাদের স্বভাব; ইহা মনে করিয়া উদ্ধব বিস্মিত ও হইলেন না এবং শরচ্চন্দ্রের ন্যায় মনোহর সহাস্য মুখখানিকে বিকৃতও করিলেন না ॥১৯॥

**अन्वयः**—तत्र इति प्रकोपिभिः यदुभिः विद्विषां स्पशे निराकृते शनैः गतवति (सति) अथ स्वनित-भयानकानकं सुरद्विषः बलं क्षणात् आजये समनह्यत ॥२०॥

**टीका**—निराकृत इति। तत्र सदसि इतीत्थं प्रकोपिभिरतिक्रुद्धैर्यदुभिर्विद्विषां स्पशे चरे। "अपसर्पश्चरः स्पशः" इत्यमरः। निराकृते धिक्कृते शनैर्गतवति गच्छति सति। सागसोऽपि दूतस्यावध्यत्वादिति भावः। अथ दूतागमनानन्तरं स्वनितेन ध्वनिना भयानकाः भयङ्कराः आनकाः पटहा यस्मिन् तत् सुरद्विषो बलं क्षणादाजये युद्धाय समनह्यत सन्नद्धम् ॥२०॥

**टिप्पनी**—निराकृत इति। अत्र तृतीयपादे च्छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

**বাঙ্গালা**—সেই সভায় এইরূপে ক্রুদ্ধ যদুবংশীয়েরা শত্রুর দূতকে ধিক্কার দিলে, সে ধীরে ধীরে প্রস্থান করিল; তাহার পর, শ্রীকৃষ্ণের সৈন্য যুদ্ধের জন্য ক্ষণকালের মধ্যেই সজ্জিত হইল; তখন যুদ্ধের ঢাকগুলি শব্দ করিয়া ভয়ঙ্কর হইয়া উঠিল ॥২০॥

**अन्वयः**—वृष्णिभूभृतः मुहुः युधि प्रतिस्खलितपरायुधाः स्थवीयसीः अचल-नितम्ब-निर्भराः अरहित-शौर्य्य दंशनाः तनूः 'अयं नयः' इति अदंशयन् ॥२१॥

**टीका**—मुहुरिति। वृष्णिभूभृतो यादवनरेन्द्राः मुहुरसकृद्युधि प्रतिस्खलितपरायुधाः भग्नप्रतिपक्षायुधाः स्थवीयसीः स्थूलतराः पराक्रमानुरूपप्रकर्षवतीरित्यर्थः। स्थूलदूरेत्यादिना पूर्वस्य गुणलोपौ। अचलनितम्बनिर्भराः अद्रिकटकनिविडाः अन्तःसारवतीरित्यर्थः। अरहितमत्यक्तं शौर्य्यमेव दंशनं वर्म यासां तास्तनूर्देहान् अयं नय इति वर्मधारणं नीतिरिति चैतोर्न तु भयादिति भावः। अदंशयन् अवर्मयन्। दंशिरनु-

दुरुद्वहाः क्षणमपरैस्तदन्तरे रणश्रवादुपचयमाशु बिभ्रति।
महीभुजां महिमभृतां न सम्ममुर्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥२२॥
सकल्पनं द्विरदगणं वरूथिनस्तुरङ्गिणो जयनयुजश्च वाजिनः।
त्वरायुजः स्वयमपि कुर्वतो नृपाः पुनःपुनस्तदधिकृतानतत्वरन् ॥२३॥

---

दात्तत्वात् परस्मैपदं चिन्त्यमित्याहुः अत एव भट्टमल्लः "संवर्मयति सन्नह्यत्यात्मने सज्जतीत्यमी। सन्दंशते दंशयते सर्वाण्येते पदद्वयस्य सनिति। केचित्तु चुरादिषूभयपदिषु पठन्ति। अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥२१॥

टिप्पनी—मुहुरिति। अत्र प्रथमे पादे छेकानुप्रासः अचलेत्यादौ च लुप्तोपमेति नाम्ना टीकोक्तः परिकरः संसृज्यते। बन्धार्थस्य उत्कटत्वादोजो गुणः, गौड़ी च रीतिः ॥२१॥

বাঙ্গালা—বহুতর যুদ্ধে যে সকল শরীরে শত্রুদিগের অস্ত্র লাগিয়া প্রতিহত হইয়া গিয়াছে; যে সকল শরীর অত্যন্তস্থূল এবং পর্ব্বতনিতম্বের ন্যায় সারবান্; আর যে সকল শরীরে বীরত্বই বর্ম্ম ছিল; 'ইহা যুদ্ধের নীতি' বলিয়া সেই সকল শরীরে যাদব রাজগণ বর্ম্ম পরিধান করিলেন ॥২১॥

अन्वयः—महिमवतां महीभुजां रणश्रवात् आशु उपचयं बिभ्रति वपुषि तदन्तरे अपरैः क्षणं दुरुद्वहाः मुदः अन्तरा, बहिः कञ्चुकाश्च न सम्ममुः ॥२२॥

टीका—दुरुद्वहा इति। महिमभृतामैश्वर्यवतां महीभुजां राज्ञां सम्बन्धिनि रणश्रवात् युद्धश्रवणात् आशु शीघ्रम् उपचयं वृद्धिं बिभ्रति बिभ्रःयौ वपुषि अपरैरन्यैः क्षणमपि दुरुद्वहा दुर्भरा मुदः सन्तोषाः अन्तरा न संमतुस्तदन्तरे बहिः कञ्चुकाश्च न संमग्नः न मान्ति स्म नावर्त्तन्तेत्यर्थः पूर्वत्र आधेयाधिक्यादुत्तरत्राधाराधिक्यादिति विवेकः। अत्र मुदां कञ्चुकानां च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥२२॥

टिप्पनी—दुरुद्वहा इति। अत्र तृतीयचरणे मही-महीति छेकानुप्रासेन टीकोक्ता तुल्ययोगिता संसृज्यते। वीरो रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥२२॥

বাঙ্গালা—ঐশ্বর্য্যশালী রাজগণের শরীর, যুদ্ধ হইবে শুনিয়া শীঘ্রই বৃদ্ধি লাভ করিল, তথাপি অন্যের পক্ষে ক্ষণকালের জন্যও যাহা দুর্ব্বহ, সেইরূপ আনন্দ তখন সে শরীরের ভিতরে ধরিল না এবং বাহিরে বর্ম্মও লাগিল না (ছোট হইয়া গেল) ॥২২॥

अन्वयः—नृपाः द्विरदगणं सकल्पनं, वरूथिनः तुरङ्गिणः, वाजिनश्च जयनयुजः कुर्वतः अपि, स्वयं त्वरायुजः तदधिकृतान् पुनः पुनः अतत्वरन् ॥२३॥

टीका—सकल्पनमिति। द्विरदगणं सह कल्पनया सकल्पनं यथोचितसन्नाहवद्भिः तम्। "कल्पना सज्जना समा" इत्यमरः। वरूथो रथगुप्तिरेषामस्तीति वरूथिनो रथान्। "रथगुप्तिर्वरूथो ना" इत्यमरः। तुरङ्गिणोऽश्वयुक्तान्। वाजिनोऽश्वान्, जयनयुजः पल्ययनाद्

युधे परैः सह दृढवद्धकच्छया कलक्वणन्मधुपकुलोपगीतया ।
अदीयत द्विपघटया सवारिभिः करोदरैः स्वयमथ दानमक्षयम् ॥२४॥
सुमेखलाः सिततरदन्तचारवः समुल्लसत्तनुपरिधानसम्पदः ।
रणैषिणां पुलकभृतोऽधिकन्धरं ललम्बिरे सदसिलताः प्रिया इव ॥२५॥

---

दिसन्नाहसंयुक्तान्। सम्मदादिभ्यः क्विप्। "जयनः स्यात्तु रङ्गादिसन्नाहे विजयेऽपि चेति विश्वः। स्वयं त्वरायुजः त्वरायुक्तान् स्वतः कुर्वतोऽपि स्वत एव त्वरया कुर्वाणानपीत्यर्थः तदधिकृतान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनःपुनरतत्वरन् त्वरयन्ति स्म तेषां तथा ऽयौत्सुक्यादिति भावः। त्वरेर्णौ चङि "अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इत्यभ्यासस्याकारः ॥२३॥

**टिप्पनी**—सकल्पनमिति। अत्र वीरो रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥२३॥

**বাঙ্গালা**—সেই সেই কার্য্যে নিযুক্ত লোকেরা নিজেরাই সত্বর হইয়া, হাতীগুলিকে সজ্জিত করিতেছিল; রথগুলিতে ঘোড়া জুড়িতেছিল এবং ঘোড়াগুলিতে পালান লাগাইতেছিল; তথাপি রাজারা তাহাদিগকে বার বার ত্বরা করিতে লাগিলেন ॥২৩॥

**अन्वयः**—अथ परैः सह युधे दृढवद्धकच्छया कलक्वणन्मधुपकुलोपगीतया द्विपघटया स्वयं सवारिभिः करोदरैः अक्षयं दानम् अदीयत ॥२४॥

**टीका**—युध इति। अथ परैः सह युधे युद्धाय दृढवद्धा कच्छा मध्यबन्धनं यस्याः तया। "कच्छा हस्तिकायां स्यात् काञ्च्यां मध्येभबन्धने" इति विश्वः। अन्यत्र दृढो-द्योगयेत्यर्थः। कलं क्वणता मधुपकुलेनालिगणेनोपगीतया वन्दिमागधस्तुतया चेति गम्यते। द्विपघटया करिण्या स्वयं सवारिभिः सोदकैः करोदरैः पुष्कराग्रैः पाणितलाग्रैश्चाक्षयमपरिमितं दानं मदः अदीयत दानं द्रव्यञ्च अदीयत दत्तम्। अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्त्तृप्रतीतिः समासोक्तिरलङ्कारः ॥२४॥

**टिप्पनी**—युध इति। अत्र गुणरीती पूर्ववत् ॥२४॥

**বাঙ্গালা**—তাহার পরে, শত্রুদিগের সহিত যুদ্ধের জন্য, হস্তিসমূহের মধ্যদেশে কাঞ্চী বন্ধন করিয়া দিল এবং (সে গুলির মদজলের সৌরভে) মধুররবকারী ভ্রমরগণ আসিয়া নিকটে গান করিতে লাগিল; এহেন হস্তিসমূহ ধর্ম্মাক্ত শুঁড়ের অগ্রদেশ দ্বারা অবিচ্ছিন্নভাবে মদজল নিঃসারণ করিতে থাকিল ॥২৪॥

**अन्वयः**—सुमेखलाः सिततरदन्तचारवः समुल्लसत्तनुपरिधानसम्पदः पुलकभृतः सदसिलताः प्रियाः इव रणैषिणाम् अधिकन्धरं ललम्बिरे ॥२५॥

**टीका**—सुमेखला इति। शोभना मेखला बन्धनसूत्राणि काञ्च्यश्च यासां ताः सुमेखलाः। "मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोरिति विश्वः। सिततरैर्दन्तमय-

मनोहरैः प्रकृतिमनोरमाकृतिर्भयप्रदैः समितिषु भीमदर्शनः ।
सदैवतैः सततमथानपायिभिर्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥२६॥
अवारितं गतमुभयेषु भूरिशः क्षमाभृतामथ कटकान्तरेष्वपि ।
मुहुर्युधि क्षतसुरशत्रुशोणितप्लुतप्रधिं रथमधिरोहति स्म सः ॥२७॥

---

तनुभिदं शर्नश्च चारवः वल्लसन्त्यः तनवः सूक्ष्माः परिधानसम्पदः कोशसम्पदो वस्त्रसम्पदश्च यासां ताः पुलकभृतः छायाभृतः रोमाञ्चधारिण्यश्च सदसिलताः चारुखड्गावल्यः प्रिया इव वर्यायिणां रणाकाङ्क्षिणां कन्धरास्वधिकन्धरम् अधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । व्यलम्बिरे लग्ना इत्यर्थः । श्लेषः श्लिष्टोपमा वा मतभेदात् ॥२५॥

टिप्पनी---समेखला इति । अत्र साहित्यदर्पणमते पूर्णोपमालङ्कारः । बन्धार्थस्य प्रगाढ़त्वादोजो गुणः, गौड़ी च रीतिः ॥२५॥

বাঙ্গালা---প্রিয়তমার ন্যায় সুন্দর সুন্দর তরবারি সকল, যুদ্ধাভিলাষী বীরগণের কণ্ঠ-দেশে ঝুলিতে লাগিল ; প্রিয়তমাদের যেমন কাঞ্চীদাম থাকে, তরবারিগুলির ও তেমন বন্ধনসূত্র ছিল ; প্রিয়তমারা যেমন অত্যন্ত শুভ্রদন্তে মনোহর হয়, তরবারিগুলিও তেমন অত্যন্ত শুভ্র ধারে মনোহর ছিল ; প্রিয়তমাদের পরিধানে যেমন সুন্দর সূক্ষ্ম বস্ত্র থাকে, তরবারিগুলির গাত্রেও তেমন সুন্দর কোষ ছিল এবং প্রিয়তমাদের যেমন তখন গাত্রে রোমাঞ্চ থাকে, তরবারিগুলির গাত্রেও তেমন তখন কান্তি ছিল ॥২৫॥

अन्वयः—अथ मनोहरैः भयप्रदैः सदैवतैः सततम् अनपायिभिः आयुधैः निजाङ्गवत् प्रकृतिमनोरमाकृतिः समितिषु भीमदर्शनः मुरजित् असेव्यत ॥२६॥

टीका—मनोहरैरिति । अथ प्रकृतिमनोरमाकृतिः स्वभावसुन्दरमूर्त्तिः समितिषु युद्धेषु भीमं दर्शनं यस्य सभीमदर्शनो मुरजिद्धरिः मनोहरैः प्रकृतिमनोहरैः समितिषु भयप्रदैः सदैवतैः अधिदेवतायुक्तैः सततम् अनपायिभिः आयुधैः शार्ङ्गादिभिर्निजाङ्गवत् पृथगवस्थितैः शरीरैरिवेत्युत्प्रेक्षा । असेव्यत सेवितः ॥२६।

टिप्पनी---मनोहरैरिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—তাহার পর মনোহর, যুদ্ধে ভয়ঙ্কর, অধিষ্ঠাতৃদেবতাযুক্ত এবং সর্ব্বদাই অবিনশ্বর অস্ত্র সকল, স্বভাবসুন্দর অথ চ যুদ্ধে ভীমদর্শন শ্রীকৃষ্ণের নিকটে উপস্থিত হইল ॥২৬॥

अन्वयः—अथ सः उभयेषु क्षमाभृतां कटकान्तरेषु अपि भूरिशः अवारितं गतं मुहुः युधि क्षत-सुरशत्रु-शोणितप्लुत-प्रधिं रथम् अधिरोहति स्म ॥२७॥

टीका—अवारितमिति । अथायुधसन्निधानानन्तरं स हरिरुभयेषु द्वयेषु द्विविधेष्वित्यर्थः । क्षमाभृतां राज्ञां गिरीणां च कटकान्तरेष्वपि शिविराभ्यन्तरेषु नितम्बावकाशेषु च भूरिशः बहुशः अवारितमप्रतिहतं गतं प्रस्थितं मुहुरसकृत् युधि क्षतानां सुरशत्रूणामसुराणां

उपेत्य च स्वनगुरुपक्षमारुतं दिवस्त्विषा कपिशितदूरदिङ्मुखः ।
प्रकम्पितस्थिरतरयष्टि तत्क्षणं पतत्पतिः पदमधिकेतनं दधौ ॥२८॥
गभीरताविजितमृदङ्गनादया स्वनश्रिया हतरिपुहंसहर्षया ।
प्रमोदयन्नथ मुखरान् कलापिनः प्रतिष्ठते नवघनवद्रथः स्म सः ॥२९॥

---

शोणितैः प्लुताः सिक्ताः प्रधयो नेमयो यस्य तम् । "चक्रधारा प्रधिर्नेमिरिति हलायुधः ।
रथमधिरोहति स्म आरुरोह ॥२७॥

टिप्पनी—अवारितमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—তদনন্তর, রাজাদের শিবিরের ভিতর এবং পর্ব্বতের নিতম্বের ভিতর এই দুই স্থানেই যে রথ, বহুবার অবারিত ভাবে গমন করিয়াছিল এবং যে রথের চাকাগুলির ধার সকল, বহুযুদ্ধে নিহত অসুরগণের রক্তে প্লাবিত হইয়াছিল ; শ্রীকৃষ্ণ সেই রথে আরোহণ করিলেন ॥২৭॥

অন্বয়ঃ—পতত্পতিঃ ত্বিষা কপিশিতদূরদিङ্মুখঃ (সন্) স্বনগুরু-পক্ষ-মারুতং দিবঃ উপেত্য চ তত্ক্ষণং প্রকম্পিতস্থিরতরযষ্টি অধিকেতনং পদং দধৌ ॥২৮॥

টীকা—উপেত্যেতি । কিঞ্চেতি চার্থঃ পতত্পতিঃ অণ্ডজমণ্ডলেশ্বরঃ । "পতত্পত্ররথ অণ্ডজা" ইত্যমরঃ । ত্বিষা কান্ত্যা কপিশিতানি কপিলীকৃতানি দূরাণি দিঙ্মুখানি যেন সঃ । স্বনেন গুরুণ্ডঃ বহুলান্ পক্ষমারুতৌ যস্মিন্ কর্মণি তত্তথা দিবঃ স্বর্গাদুপেত্যাগত্য তত্ক্ষণং তস্মিন্ ক্ষণে প্রকম্পিতা স্থিরতরা নিশ্চলা যষ্টিরাবাসস্তম্ভো যস্মিন্ তত্তথা অধিকেতনং কেতনে । বিভক্ত্যর্থেঽব্যয়ীভাবঃ । পদং দধৌ নিহিতবান্ ॥২৮॥

টিপ্পনী—উপেত্যেতি । অত্র পতত্পতিরিতি ছেকানুপ্রাসোঽলঙ্কারঃ । বন্ধার্থস্য প্রগাঢ়ত্বাত্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৮॥

বাঙ্গালা—পক্ষিরাজ গরুড়, নিজের দেহকান্তি দ্বারা দূরবর্ত্তী সমস্ত দিঙ্মণ্ডলকে পিঙ্গলবর্ণ করিয়া, আকাশ হইতে আসিয়া ধ্বজের উপরে পদক্ষেপ করিলেন ; তখন পতনের বেগে তাঁহার পক্ষ হইতে গুরুতর শব্দ ও ভীষণ বায়ু উত্থিত হইল এবং ধ্বজটা প্রথমে কাঁপিয়া পরে আবার স্থির হইল ॥২৮॥

অন্বয়ঃ—অথ সঃ রথঃ নবঘনবত্ গভীরতা-বিজিত মৃদঙ্গনাদয়া হত-রিপু-হংস-হর্ষয়া স্বনশ্রিয়া মুখরান্ কলাপিনঃ প্রমোদয়ন্ প্রতিষ্ঠতে স্ম ॥২৯॥

টীকা—গভীরতেতি । অথ গরুড়াগমনানন্তরং স রথো নবঘনবত্ নবঘনেন নবাম্বুদেন তুল্যম্ । "তেন তুল্যমিতি বতিপ্রত্যয়ঃ । গভীরতয়া গাম্ভীর্য্যেণ বিজিতো মৃদঙ্গনাদো যয়া তয়া হতো রিপুহংসানাং হংসানামিব রিপূণাং হর্ষো যয়া তয়া স্বনশ্রিয়া ধ্বনিসম্পদা মুখরান্ কূজতঃ কলাপিনো ময়ূরান্ প্রমোদয়ন্ প্রতিষ্ঠতে স্ম প্রতস্থে । "সমবপ্রবিভ্যঃ স্থ" ইত্যাত্মনেপদং, "লট্ স্মে তি ভূতে লট্ । তদ্বিগতা শ্রৌতী পূর্ণোপমা ॥২৯॥

निरन्तरस्थगितदिगन्तरं ततः समुच्चलद्बलमवलोकयन् जनः।
विकौतुकः प्रक्रतमहाप्लवेऽभवद्विशृङ्खलं प्रचलितसिन्धुवारिणि ॥३०॥
ववृंहिरे गजपतयो महानकाः प्रदध्वनुर्जयतुरगा जिहेषिरे।
असम्भवद्गिरिवरगह्वरैरभूत् तदा रवैर्दलित इव स्व आश्रयः ॥३१॥

---

**टिप्पनी**—गभीरतेति। अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥२९॥

**বাঙ্গালা**—তদনন্তর, শ্রীকৃষ্ণের সেই রথ খানা নূতন মেঘের ন্যায় শব্দ করিয়া চলিতে লাগিল; তখন সেই শব্দ, গম্ভীরতা দ্বারা মৃদঙ্গের শব্দকে জয় করিল, হংসের ন্যায় শত্রু-দিগের আনন্দ নষ্ট করিল এবং শব্দায়মান ময়ূরগুলিকে আনন্দিত করিল ॥২৯॥

**अन्वयः**—ततः निरन्तर-स्थगित-दिगन्तरं समुच्चलत् बलम् अवलोकयन् जनः प्रक्रतमहाप्लवे विशृङ्खलं प्रचलित-सिन्धुवारिणि विकौतुकः अभवत् ॥३०॥

**टीका**—निरन्तरेति। ततो रथप्रस्थानानन्तरं निरन्तरं नीरन्ध्रं स्थगितानि आच्छादितानि दिगन्तराणि येन तत्। समुच्चलत् प्रतिष्ठमानं तद्बलं सैन्यम् अवलोकयन् जनो लोकः प्रक्रतः प्रक्रान्तो महाप्लवो महापूरो जगत्संप्लवरूपो येन तस्मिन् विशृङ्खलमप्रतिघातं प्रचलितं क्षुभितं यत् सिन्धोरब्धेर्वारि तस्मिन् विकौतुको निवृत्तकौतूहलोऽभवत्। कल्पान्तक्षुभितवारिधेर्वारिवच्च तद्बलं सकलजगत्संहारशङ्कया अलक्ष्यतेत्यर्थः। अत्रान्यदर्शनादन्यदिदृक्षानिवृत्तेर्बलवारिधिवारिणोरेकत्वाध्यारोपे बाधात् सादृश्याक्षेपात् वाक्यभेदेन प्रतिबिम्बकरणात् निदर्शनालङ्कारः ॥३०॥

**टिप्पनी**—निरन्तरेति। अत्र द्वितीयपादगतेन बल-वलो इति छेकानुप्रासेन टीकोक्तनिदर्शनरसंसृज्यते। गुणरीती पूर्ववत् ॥३०॥

**বাঙ্গালা**—তাহার পর, সেই সৈন্যগণ সমস্ত দিকের অন্তরালভাগ ঘনভাবে আবৃত করিয়া চলিতে লাগিল; তাহা দেখিয়া, জগৎ প্লাবিত করিতে প্রবৃত্ত এবং বিশৃঙ্খল ভাবে প্রচলিত সমুদ্রজলের প্রতি লোকের কৌতুক নিবৃত্তি পাইল ॥৩০॥

**अन्वयः**—गजपतयः ववृंहिरे, महानकाः प्रदध्वनुः, तुरगाः जिहेषिरे; तदा असम्भवद्गिरिवरगह्वरैः रवैः स्वः आश्रयः दलितः इव अभूत् ॥३१॥

**टीका**—ववृंहिरे इति। गजपतयः ववृंहिरे ववृंहुः बृंहणां चक्रुरित्यर्थः। बृहि वृद्धौ शब्दे चात्मनेपदं चिन्त्यम्। अतएव भट्टमल्ल: दिग्गतङ्गपतेऽस्मानां हस्तिनां बृंहतीति चेति। महानकाः प्रदध्वनुर्यशोलास्तुरगा जयतुरगा जिहेषिरे हेषां चक्रुरित्यर्थः। हेषृ ह्रेषृ अव्यक्ते शब्दे। तदा तस्मिन् काले असम्भवन्त्यन्तर्धातुमपर्याप्नुवन्ति गिरिवरगह्वराणि येषां तैः गिरिवरगह्वरेषु अमाद्भिः अवर्त्तमानैरित्यर्थः। रवैर्बृंहणादिघोषैः स्व आश्रयः खसमवायि कारणमाकाशो दलित इव विदारित इवाभूदित्युत्प्रेक्षा तया तेषामतितीव्रत्वं व्यज्यते ॥३१॥

अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः ।
विनिष्पतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाद्रयः ॥३२॥
जडीकृतश्रवणपथे दिवौकसां चमूरवे विशति सुराद्रिकन्दराः ।
अनर्थकैरजनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः ॥३३॥

---

**टिप्पनी**—वृंहिरे इति । अत्र बन्धार्थस्य प्रगाढत्वात् ओजो गुणः, गौडी च रीतिः ॥३१॥

**বাঙ্গালা**—বিশাল হস্তিসকল বৃংহিত ধ্বনি করিতে লাগিল; বড় বড় ঢাকগুলি বাজিয়া উঠিল এবং বিজয়-ঘোটকগণ হ্রেষারব করিতে থাকিল; সুতরাং তখন সেই সকল শব্দ, পর্ব্বতের বৃহৎ গুহার ভিতরেও ধরিল না এবং আকাশমণ্ডল যেন সেই সকল শব্দে বিদীর্ণ হইতে লাগিল ॥৩১॥

**अन्वयः**—मधुद्विषः दुन्दुभौ जयाय अनारतं रसति (सति) फलदलघुप्रतिस्वनैः विनिष्पतन्मृगपतिभिः गुहामुखैः अद्रयः परां मुदं गताः (सन्तः) अहसन् इव ॥३२॥

**टीका**—अनारतमिति । मधुद्विषो हरेः दुन्दुभौ रणभेर्यां जयायानारतमश्रान्तं रसति ध्वनति सति फलन्तः सङ्क्रामन्तोऽलघवो महान्तः प्रतिध्वनयो येषु तैः । विनिष्पतन्तः क्षोभान्निर्गच्छन्तः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव । सिंहानां धावल्याद्विनियोगाच्च हसनोत्प्रेक्षा ॥३२॥

**टिप्पनी**—अनारतमिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

**বাঙ্গালা**—শ্রীকৃষ্ণের দুন্দুভি, জয়লাভের জন্য শব্দ করিতে লাগিলে, তাহার বিশাল প্রতিশব্দ যাইয়া পর্ব্বতের গুহার ভিতরে উত্থিত হইতে লাগিল; তাহাতে সে স্থান হইতে সিংহগণ নির্গত হইতে থাকিল; সুতরাং সে পর্ব্বতগুলি অত্যন্ত আনন্দ লাভ করিয়াই যেন হাস্য করিতে লাগিল ॥৩২॥

**अन्वयः**—दिवौकसां जडीकृतश्रवणपथे चमूरवे सुराद्रिकन्दराः विशति (सति) विदग्ध-कामिनी-रतान्तर-क्वणित-विलास-कौशलैः अनर्थकैः अजनि ॥३३॥

**टीका**—जडीकृतेति । दिवमोको येषां तेषां दिवौकसां देवानां कन्दरान्तर्गतानामित्यर्थः । जडीकृतश्रवणपथे बधिरीकृतश्रोत्रमार्गे । सापेक्षत्वेऽपि गमकत्वात् समासः । चमूरवे सेनाघोषे सुराद्रिकन्दराः मेरुगह्वराणि विशति सति । विदग्धकामिनीनां प्रौढाङ्गनानां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसम्पदस्तासु यानि कौशलानि तैरनर्थकैरजनि जातं प्रेयसां बाधिर्यादिति भावः । अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिङ्गं तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥३३॥

**टिप्पनी**—जडीकृतेति । अत्र प्रसादो गुणः, पाञ्चाली च रीतिः ॥३३॥

**বাঙ্গালা**—সৈন্যগণের কোলাহল দেবগণের কর্ণপথ বধির করিয়া সুমেরুপর্ব্বতের

अरातिभिर्युधि सहयुध्वनो हतान् जिघृक्षवः श्रुतरणतूर्यनिस्वनाः ।
अकुर्वत प्रथमसमागमोचितं चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥३४॥
प्रचोदिताः परिचितयन्तृकर्मभिर्निषादिभिर्विदितयताङ्कुशक्रियैः ।
गजाः सकृत्करतललोलनालिका हता मुहुः प्रणदितघण्टमाययुः ॥३५॥

---

গুহায় প্রবেশ করিলে, নিপুণ রমণীগণের রমণসময়ে মধুরকূজনরূপ বিলাসনৈপুণ্যগুলি অনর্থক হইয়াছিল ॥৩৩॥

**अन्वयः**—सहयुध्वनः अरातिभिः युधि हतान् जिघृक्षवः सुरगणिकाः श्रुत-रण-तूर्य्य-निस्वनाः (सत्यः) चिरोज्झितं प्रथमसमागमोचितं प्रसाधनम् अकुर्वत ॥३४॥

**टीका**—अरातिभिरिति। सह युध्यन्त इति तान् सहयुध्वनः। "सहे च" इति क्वनिप्। अतएवारातिभिर्युधि हतान् जिघृक्षवो ग्रहीतुमिच्छवः स्वयं वरणकामाः। ग्रहेः सनन्तादुप्रत्ययः। सुरगणिकाः अप्सरसः श्रुतरणतूर्य्यनिस्वनाः सत्यश्चिरोज्झितं प्रायेण प्रवीरसंवादाभावादिति भावः। प्रथमसमागमोचितम् अतिमोहनमित्यर्थः। प्राधन्यं च पुंसामिदं प्रथमत्वादिति भावः। प्रसाधनम् अकुर्वत परिष्कृतवत्य इत्यर्थः। "प्रतिकर्म प्रसाधनमित्यमरः। अत्र स्वयंवरणतूर्य्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात् काव्यलिङ्गम् ॥३४॥

**टिप्पनी**—अरातिभिरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

**বাঙ্গালা**—যুদ্ধে শত্রুরা সহযোধীদিগকে নিহত করিলে, তাহাদিগকে বরণ করিয়া নিয়া যাইবার জন্য অভিলাষিণী অপ্সরারা রণভেরীর শব্দ শুনিয়া, তৎক্ষণাৎ চিরপরিত্যক্ত প্রথম সম্মেলনের উপযুক্ত বেশভূষা করিতে লাগিল ॥৩৩॥

**अन्वयः**—परिचितयन्तृकर्म्मभिः विदित-यताङ्कुशक्रियैः निषादिभिः प्रचोदिताः गजाः सकृत् कर-तल-लोल-नालिका-हताः (तथापि) मुहुः प्रणदितघण्टम् आययुः ॥३५॥

**टीका**—प्रचोदिता इति। परिचितं यन्तृकर्म सादिकृत्यं यैस्तैः स्वभ्यस्तगजशास्त्रैरित्यर्थः। अतएव विदिते यताङ्कुशक्रिये यतयाताख्ये पदाङ्कुशकर्मणी यैस्तैः। "पादकर्म यतं प्रोक्तं यातमङ्कुशवारणमिति हलायुधः। निषादिभिर्यन्तृभिः प्रचोदिताः प्रेरिताः गजाः सकृदेकवारमेव करतललोलाभिः पाणितलचलिताभिर्नालिकाभिरन्तर्नाडिकाभिर्हताः ताडितास्तथापि मुहुः प्रणदिता अशक्तम् ध्वनन्तो घण्टा यस्मिन् कर्मणि तत्तथा आययुः प्रत्यागताः। स्वभावोक्तिः ॥३५॥

**टिप्पनी**—प्रचोदिता इति। अत्र तृतीयपादे एकलकारस्य असकृत् साम्यात् वृत्त्यनुप्रास इति टीकोक्तः; स्वभावोक्तिस्तु न स लक्ष्यते। बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३५॥

**বাঙ্গালা**—যাহারা মাহুতের কার্য্য ভাল করিয়া শিখিয়াছিল এবং চরণতাড়ন ও অঙ্কুশাঘাত ভাল জানিত, সেই সকল মাহুতরা চালাইয়া দিল এবং একবারমাত্র হস্তধৃত চঞ্চল

सविक्रमक्रमणचलैरितस्ततः प्रकीर्णकैः क्षिपत इव क्षितेरजः।
व्यरंसिषुर्न खलु जनस्य दृष्टयस्तुरङ्गमादभिनवभाण्डभारिणः ॥३६॥
चलाङ्गुलीकिसलयमुद्धतैः करैरनृत्यत स्फुटकृतकर्णतालया।
मदोदकद्रवकटभित्तिसङ্গिभिः कलस्वरं मधुपगणैरगीयत ॥३७॥

---

ছড়া দিয়া তাড়ন করিল ; তাহাতেই হাতীগুলি যুদ্ধে যাইবার জন্য আসিতে লাগিল ; তখন সেগুলির ঘণ্টা সকল অনবরত বাজিতে লাগিল ॥৩৫॥

**अन्वयः**—जनस्य दृष्टयः सविक्रम-क्रमण-चलैः प्रकीर्णकैः इतस्ततः क्षितेः रजः क्षिपतः इव (स्थितात्) अभिनव-भाण्ड भारिणः तुरङ्गमात् न खलु व्यरंसिषुः ॥३६॥

**टीका**—सविक्रमेति। सविक्रमेण साङ्घ्रिविन्यासविशेषेण क्रमणेन गमनेन चलैः प्रकीर्णकैश्चामरैः। "चामरं तु प्रकीर्णकमित्यमरः। क्षितेः रजः खखुरोद्धूतमितस्ततः क्षिपतो निरस्यत इव स्थितादित्युत्प्रेक्षा। अभिनवभाण्डभारिणः प्रत्यग्राभरणधारिणः। "स्याद्भाण्डमश्वाभरणमित्यमरः। तुरङ्गमात्तुरङ्गमेभ्यः। जातावेकवचनम्। जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानमित्यपादानत्वम्। जनस्य दृष्टयो न व्यरंसिषुर्न विरताः खलु। रमेर्लुङि "व्याङ्परिभ्यो रम" इति परस्मैपदम्, "यमरमनमातां सक्चेति सगिड़ागमौ इटि "नेटीति वृद्धिप्रतिषेधः ॥३६॥

**टिप्पनी**—सविक्रमेति। अत्र प्रथमार्द्धगतेन छेकानुप्रासेन टीकोक्ता उत्प्रेक्षा संसृज्यते। बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥३६॥

**বাঙ্গালা**—ঘোড়াগুলি নানাপ্রকার পদক্ষেপ করিয়া চলিতে লাগিলে, সে গুলির চামর সকলও চলিতে থাকিল ; তাহাতে বোধ হইল, সে ঘোড়াগুলি যেন চারিদিকে ভূতলের ধূলি নিক্ষেপ করিতেছে ; এহেন নূতন অলঙ্কার শোভিত ঘোড়াগুলির উপর হইতে লোকের দৃষ্টি ফিরিল না ॥৩৬॥

**अन्वयः**—स्फुट-कृत-कर्ण-तालया (द्विपघटया) चलाङ्गुली-किसलयम् उद्धतैः करैः अनृत्यत; (तथा) मदोदक-द्रव-कट-भित्ति-सङ्गिभिः मधुपगणैः कलस्वरम् अगीयत ॥३७॥

**टीका**—अथ विशेषकेणाह। चलेत्यादि। स्फुटं कृतः कर्णतालः कर्णताड़नं यया तया द्विपघटया कर्त्र्या चलाङ्गुल्य एव किसलया यस्मिन् कर्मणि तत्तथोद्धतैः करैर्हस्तैरनृत्यत आनर्त्ति। भावे लङ्। तथा मदोदकेन द्रवास्वार्द्रासु कटभित्तिषु गण्डस्थलेषु सङ्गिभिरासक्तैः मधुपगणैर्भ्रमरगणैः कलस्वरं मधुरस्वरमगीयत गीतम्। भावे लङ् ॥३७॥

**टिप्पनी**—चलेति। अत्र बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥३७॥

**বাঙ্গালা**—হস্তিগণ কর্ণের তাল দিয়া নৃত্য করিতে থাকিল ; তখন তাহারা পল্লবতুল্য অঙ্গুলী সঞ্চালন করিয়া হস্ত উত্তোলন করিল ; আর মদজলে সেই হস্তিগণের গণ্ডদেশ আর্দ্র হইয়াছিল, ভ্রমরগণ সেখানে বসিয়া মধুর স্বরে গান করিতে লাগিল ॥৩৭॥

असिच्यत प्रशमितपांशुभिर्मही मदाम्बुभिर्धृतनवपूर्णकुम्भया।
अवाद्यत श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरु तूर्यमाननैः ॥३८॥
उदासिरे पवनविधूतवाससस्ततस्ततो गगनलिहस्त केतवः।
यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं व्यधीयत द्विपघटयेति मङ्गलम् ॥३९॥
न शून्यतामगमदसौ निवेशभूः प्रभूततां दधति बले चलत्यपि।
पयस्यभिद्रवति भुवं युगावधौ सरित्पतिर्न हि समुपैति रिक्तताम् ॥४०॥

---

अन्वयः—धृत-नव-पूर्ण-कुम्भया (द्विपघटया) प्रशमितपांशुभिः मदाम्बुभिः मही असिच्यत ; (तथा) आननैः श्रवणसुखं समुन्नमत् पयोधर-ध्वनि गुरु तूर्यम् अवाद्यत ॥३८॥

टीका—असिच्यतेति। धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया द्विपघटया कर्त्र्या। "कुम्भौ घटेभमूर्द्धांशौ" इत्यमरः। प्रशमितपांशुभिर्मदाम्बुभिर्मही असिच्यत सिक्ता। आननैर्मुखैः करणैः श्रवणयोः सुखयतीति सुखं सुखकरम्। "सुखहेतौ सुखे सुखमिति शब्दार्णवे" समुन्नमत्पयोधरध्वनिगुरु उदयन्मेघगर्जितगम्भीरं तूर्यम् अवाद्यत वादितम्। स्वमुखव्यापारैरेव तूर्यं सम्पादितमित्यर्थः ॥३८॥

टिप्पनी—असिच्यतेति। अत्र समुन्नमदित्यादौ लुप्तोपमालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥३८॥

বাঙ্গালা—মস্তকে নবপূর্ণকুম্ভধারী হস্তিগণ, মদজলে ধূলিনিবৃত্তি করিয়া ভূতল সিক্ত করিতে লাগিল আর মুখদ্বারা উত্থিত মেঘগর্জনের ন্যায় গম্ভীর অথচ শ্রুতিমধুর ধ্বনি করিতে থাকিল ॥৩৮॥

अन्वयः—पवनविधूतवासः गगनलिहः केतवः ततस्ततः उदासिरे ; इति द्विपघटया प्रतिरिपु यतः शार्ङ्गिणः पुरः स्वयं मङ्गलं व्यधीयत ॥३९॥

टीका—उदासिरे इति। पवनेन विधूतवाससः कम्पितपटाः गगनलिहोऽभ्रङ्कषाः केतवो ध्वजाश्च ततस्तत उदासिरे उत्क्षिप्ताः इतीत्थं द्विपघटया प्रतिरिपु रिपून् प्रति। आभिमुख्येऽव्ययीभावः। यतो गच्छतः। इणो लटः शत्रादेशः। शार्ङ्गिणः पुरोऽग्रे स्वयं मङ्गलं व्यधीयत विहितम्। अत्र श्लोकार्थे प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतिः समासोक्तिरलङ्कारः ॥३९॥

टिप्पनी—उदासिरे इति। अत्र तृतीयपादे पुरः रिपु इति वृत्त्यनुप्रासेन टीकोक्ता समासोक्तिः संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥३९॥

বাঙ্গালা—আর হস্তিগণ, পবন-সঞ্চালিত-পতাকাশালী এবং আকাশস্পর্শী ধ্বজসকল উত্তোলন করিল ; এইভাবে সেই হস্তীগণ, শত্রুর অভিমুখগামী শ্রীকৃষ্ণের সম্মুখে নিজেরাই মাঙ্গলিক অনুষ্ঠানগুলি করিল ॥৩৯॥

अन्वयः—प्रभूततां दधति बले चलति अपि, असौ निवेशभूः न शून्यताम् अगमत्। हि युगावधौ पयसि भुवं द्रवति (सति) सरित्पतिः रिक्ततां न समुपैति ॥४०॥

যিযাসিতামথ মধুভিদ্বিবস্বতা জনো জরন্মহিষবিষাণধূসরাম্ ।
পুরঃ পতৎপরবলরেণুমালিনীমলক্ষয়দ্দিশমভিধূমিতামিব ॥৪১॥
মনস্বিনামুদিতগুরুপ্রতিশ্রুতিঃ শ্রুতস্তথা ন নিজমৃদঙ্গনিস্বনঃ ।
যথা পুরঃ সমরসমুদ্যতদ্বিষদ্বলানকধ্বনিরুদকর্ষয়ন্মনঃ ॥৪২॥

---

টীকা—নেতি । প্রভূততাং ভূমানং দধতি দধানে বলে সৈন্যে চলতি প্রতিষ্ঠমানেঽপি অসৌ নিবেশভূঃ সেনানিবেশভূমিঃ শূন্যতাং রিক্ততাং নাগমৎ । তথাহি, যুগাবধৌ যুগান্তে পয়সি ভুবনমভিদ্রবত্যভিপ্লবমানে সতি সরিৎপতিঃ সমুদ্রো রিক্ততাং ন সমুপৈতি হি । দৃষ্টান্তালঙ্কারঃ ॥৪০॥

টিপ্পনী—নেতি । অত্র প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥৪০॥

বাঙ্গালা—প্রচুর সৈন্য (শ্রীকৃষ্ণের সঙ্গে) চলিলেও তাঁহার সেনানিবেশ শূন্য হইয়া গেল না। কারণ, প্রলয়কালে সমুদ্রের জল ভূতল প্লাবিত করিয়া চলিলেও, মূল সমুদ্র শূন্য হইয়া যায় না ॥৪০॥

অন্বয়ঃ—অথ জনঃ মধুভিদ্বিবস্বতা যিযাসিতং পতৎ-পর-বল-রেণু-মালিনীং জরন্মহিষ-বিষাণ-ধূসরাং পুরঃ দিশম্ অভিধূমিতাম্ ইব অলক্ষয়ৎ ॥৪১॥

টীকা—যিযাসিতামিতি । অথ মধুভিদ্বিরেব বিবস্বান্ তেন যিযাসিতাং যাতুমিষ্টাং জিগমিষিতাম্ । যাতেঃ সনন্তাৎ কর্মণি ক্তঃ । পততোঽভিধাবতঃ পরবলস্য প্রতিসৈন্যস্য রেণুমালাং ধারয়তীতি তন্মালিনী । অতইনি'নিপ্রত্যয়ঃ । অত এব জরতো বৃদ্ধস্য মহিষস্য বিষাণবদ্ধূসরাং ধূম্রাং পুরোঽগ্রে দিশমভিতো ধূমোঽস্যাঃ সঞ্জাতস্তামভিধূমিতামিব জনো লোকোঽলক্ষয়ৎ । মধুভিদ্বিবস্বতেতি রূপকোত্থাপিতাগ্নিদিগ্ধূমিতত্বোৎপ্রেক্ষেতি সঙ্করঃ । অত্রাহুঃ "অঙ্গারিণী দিগ্রবিবিপ্রযুক্তা যস্যাং রবিস্তিষ্ঠতি সা প্রদীপ্তা । প্রধূমিতা যাস্যতি যাং দিনেশঃ শেষাঃ প্রশস্তাঃ শুভদাশ্চ তাঃ স্যুরিতি ॥৪১॥

টিপ্পনী—যিযাসিতামিতি । অত্র বন্ধোৎকর্ষস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪১॥

বাঙ্গালা—শ্রীকৃষ্ণরূপ সূর্য্য যে দিকে যাইতে ইচ্ছা করিয়াছিলেন এবং শত্রুসৈন্য আসিতে থাকায় যে দিকে ধূলিজাল ধারণ করিয়া, বৃদ্ধ মহিষের শৃঙ্গের ন্যায় ধূসরবর্ণ হইয়াছিল ; জনসাধারণ সম্মুখের সেই দিক্‌টাকে ধূমাবৃতের ন্যায় দেখিল ॥৪১॥

অন্বয়ঃ—উদিত-গুরু-প্রতিশ্রুতিঃ নিজ-মৃদঙ্গ নিস্বনঃ শ্রুতঃ (সন্) মনস্বিনাং মনঃ তথা ন উদকর্ষয়ৎ ; যথা পুরঃ সমর-সমুদ্যত-দ্বিষদ্বলানকধ্বনিঃ মনস্বিনাং মনঃ উদকর্ষয়ৎ ॥৪২॥

টীকা—মনস্বিনামিতি । উদিতা উৎপন্না গুরুর্গম্ভীরা প্রতিশ্রুতিঃ প্রতিধ্বনির্যস্য সঃ নিজমৃদঙ্গনিস্বনঃ স্বসেনাতূর্য্যঘোষঃ শ্রুতঃ সন্ তথা মনস্বিনাং মনো নোদকর্ষয়ৎ নাপকৃষ্টং । রূপিরয়ং স্বার্থং স্বন্তঃ । যথা পুরোঽগ্রে সমরসমুদ্যতে সমরোদ্যুক্তে দ্বিষদ্বলে প্রতিসৈন্যে

यथा यथा पटहरवः समीपतामुपागमत्स हरिवराग्रतःसरः।
तथा तथा हृषितवपुर्मुदाकुला द्विषां चमूरजनि जनीव चेतसा ॥४३॥
प्रसारिणी सपदि नभस्तले ततः समीरणभ्रमितपरागरूषिता।
व्यभाव्यत प्रलयजकालिकाकृति विदूरतः प्रतिबलकेतनावलिः ॥४४॥

ये आनकाः तेषां ध्वनिवदकर्षयत्। एतेनैषां वीरस्थायी महोत्साह उक्तः। अत्र भयजनकस्यापि परसैन्यघोषस्योत्साहजनकत्वं महावीरेषु न विरुध्यत इति विरोधाभासोऽलङ्कारः भीहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्तिर्विरुद्धकार्योत्पत्तेर्विषममेदश्चेति सङ्करः ॥४२॥

**टिप्पनी**—मनस्विनामिति। अत्र वीरो रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥४२॥

**বাঙ্গালা**—যাহার গুরুতর প্রতিধ্বনি উৎপন্ন হইতেছিল, সেরূপ নিজ সৈন্যের তূর্য্যধ্বনি, মনস্বী বীরগণের মন তেমন আকর্ষণ করিতে পারিয়াছিল না; যেমন সম্মুখে সমরোদ্যত শত্রু সৈন্যের তূর্য্যধ্বনি, তাঁহাদের মন আকর্ষণ করিয়াছিল ॥৪২॥

**अन्वयः**—हरि-वराग्रतःसरः सः पटहरवः यथा यथा समीपताम् उपागमत्, तथा तथा द्विषां चमूः जनी इव चेतसा मुदाकुला हृषितवपुः अजनि ॥४३॥

**टीका**—यथा यथेति। हरिर्वरो जामातेव हरिवरः। "वरो जामातृवर्य्ययोरिति विश्वः। तस्याग्रतः सरतीत्यग्रतःसरोऽग्रेसरः। "पुरोऽग्रतोऽग्रेषु सर्त्तेरिति टच् प्रत्ययः। स पूर्वोक्तः पटहरवो यथा यथा यावद्यावत्समीपतामासन्नतामुपागमत्। तथा तथा तावत्तावद् द्विषां द्विषतां चमूर्जनीव वधूरिव। "जनी सीमन्तिनी वधूरिति विश्वः। चेतसा मुदाकुला आनन्दाविला हृषितवपुः रोमाञ्चिताङ्गी। हृषेर्लोमस्विति इड़ागमः। अजनि जाता। जनेः कर्त्तरि लुङ्, दीपजनेत्यादिना चिण् प्रत्ययः। वधूवरसमागमवत् प्रतिद्वन्द्विसमागमो जहोत्साहवर्द्धनो वीरसेनाया इत्युपमार्थः। तेन सैन्ययोरन्योऽन्यप्रद्वन्द्वित्वया कारिणी प्रत्यासत्तिरासीदिति व्यज्यते ॥४३॥

**टिप्पनी**—यथेति। अत्र प्रथमार्द्धे मीप-मुपेति च्छेकानुप्रासः, हरि-वरेति लुप्तोपमा, चतुर्थ पादे अजनि जनीति च्छेकानुप्रासः, जनीवेति श्रौतोपमा चेत्येतेषां संसृष्टिः। वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४३॥

**বাঙ্গালা**—জামাতাদের ন্যায় শ্রীকৃষ্ণের সম্মুখবর্ত্তী সেই তূর্য্যধ্বনি যেমন যেমন নিকটবর্ত্তী হইতে লাগিল; তেমন তেমন শত্রুসেনা নববধূর ন্যায় মনে মনে আনন্দবিহ্বলা এবং রোমাঞ্চিতাঙ্গী হইতে থাকিল ॥৪৩॥

**अन्वयः**—ततः सपदि नभस्तले प्रसारिणी समीरण-भ्रमित पराग-रूषिता प्रलयज-कालिकाकृतिः प्रतिबलकेतनावलिः विदूरतः व्यभाव्यत (कृष्णसैन्यैः) ॥४४॥

क्षणेन च प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना।
भयङ्करा भृशमपि दर्शनीयतां ययावसावसुरचमूश्च भूभृताम् ॥४५॥
पयोमुचामभिपततां दिवि द्रुतं विपर्ययः परित इवातपस्य सः।
समक्रमः समविषमेष्वथ क्षणात् क्षमातलं बलजलराशिरानशे ॥४६॥

---

**टीका**—प्रसारिणीति। ततः अवधानानन्तरं सपद्यविलम्बेन नभस्तले प्रसारिणी व्याप्ता समीरणेन वायुना असितेन परागेण रूषिता रूक्षीकृता। अतएव प्रलयजायाः कल्पान्त प्रादुर्भूतायाः कालिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा। प्रतिबलं प्रतिपक्षसैन्ये केतनावलिध्वजपङ्क्तिं दूरतो दूरादलक्ष्यत। एतावता प्रत्यासत्तिरासीदित्यर्थः। उपमालङ्कारः ॥४४॥

**टिप्पनी**—प्रसारिणीति। अत्र वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

**বাঙ্গালা**—তদনন্তর, আকাশে বিস্তৃত, বায়ু সঞ্চালিত ধূলিতে ব্যাপ্ত এবং প্রলয়কাল-প্রাদুর্ভূত মহাকালীর ন্যায় ভীষণমূর্ত্তি বিপক্ষসৈন্যের ধ্বজশ্রেণীকে দূর হইতে সত্বরই শ্রীকৃষ্ণের সৈন্যেরা দেখিতে পাইল ॥৪৪॥

**अन्वयः**—प्रतिमुख-तिग्मदीधिति प्रतिप्रभा-स्फुरदसि-दुःख-दर्शना भयङ्करा अपि असौ असुर चमूः क्षणेन च भूभृतां भृशं दर्शनीयतां ययौ ॥४५॥

**टीका**—क्षणेनेति। प्रतिमुखस्याभिमुखस्य तिग्मदीधितेः उष्णांशोः प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः स्फुरद्भिर्दीप्यमानैरसिभिः खड्गैर्दुःखं दुष्करं दर्शनं यस्याः सा दुर्दर्शेत्यर्थः। असावसुरचमूश्चैद्यसेना क्षणेन च भूभृतां हरिसैनिकानां भृशं भयङ्करीति भयङ्करापि। "मेघर्त्तिभयेषु कृञः" इति खच् प्रत्ययः। दर्शनीयतां मनोहरतामिति विरोधः। दृष्टिविषयतां ययावित्यविरोधः अतएव विरोधाभासोऽलङ्कारः ॥४५॥

**टिप्पनी**—क्षणेनेति। अत्र वीरो रसः, समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥४५॥

**বাঙ্গালা**—সম্মুখবর্ত্তী সূর্য্যের কিরণ প্রতিবিম্বিত হওয়ায় তরবারি সকল চক্‌মক্ করিতেছিল; তাহাতে শিশুপালের সৈন্যগণকে কষ্টে দেখা যাইতেছিল; এহেন শিশুপালের সৈন্য ভয়ঙ্কর হইলেও, ক্ষণকালের মধ্যেই শ্রীকৃষ্ণসৈন্যের অত্যন্ত দর্শনীয় হইল ॥৪৫॥

**अन्वयः**—अथ सम-विषमेषु समक्रमः बलजलराशिः दिवि द्रुतम् अभिपततां पयोमुचाम् आतपस्य विपर्ययः इव परितः क्षणात् क्षमातलम् आनशे ॥४६॥

**टीका**—पयोमुचामिति। अथासुरसेनादर्शनानन्तरं समविषमेषु निम्नोन्नतेषु समक्रमस्तुल्यसञ्चारः बलजलराशिः सैन्यसागरः दिवि व्योम्नि द्रुतमभिपततामभिधावतां पयोमुचां सम्बन्धी आतपस्य विपर्ययः छायेव परितः क्षणात् क्षमातलं भूतलम् आनशे। "अशू व्याप्तौ" "अत आदेरित्यभ्यासदीर्घः, "अश्नोतेश्चेति नुमागमः। उपमालङ्कारः ॥४६॥

**टिप्पनी**—पयोमुचामिति। अत्र वर्णोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥४६॥

असौ पुरः क्षणमिव पश्यतो महत् तनूदरस्थितभुवनत्रयस्य सत् ।
विशालतां दधति नितान्तमायते बलं द्विषां मधुमथनस्य चक्षुषि ॥४७॥
भृशस्विदः पुलकविकासिमूर्त्तयो रसाधिके मनसि निविष्टसाहसाः ।
सुखे युधः सपदि रतेरिवाभवन् ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥४८॥

---

**বাঙ্গালা**—তাহার পর, সমতল ভূমি এবং নিম্নোন্নত ভূমি এই দুই ভূমিতেই সমান ভাবে গমনকারী সেই সৈন্যসাগর, আকাশে দ্রুতগামী মেঘের ছায়ার ন্যায় ক্ষণকালের মধ্যেই সকল দিকের ভূতল ব্যাপ্ত করিল ॥৪৬॥

**अन्वयः**—पुरः क्षणम् इव पश्यतः तनूदर-स्थित-भुवनत्रयस्य मधुमथनस्य विशालतां दधति नितान्तम् आयते चक्षुषि महत् द्विषां बलं असौ ॥४७॥

**टीका**—असाविति । पुरोऽग्रे क्षणमिव पश्यतः क्षणमात्रं विलोकयतः । इवशब्दो वाक्यालङ्कारे तनौ क्षोदीयस्युदरे कुक्षौ स्थितं भुवनत्रयं यस्य तस्य मधुमथनस्य हरेः सम्बन्धिनि विशालतां वैपुल्यं दधति दधाने नितान्तमायते दीर्घे द्राघीयसि चक्षुषि महत् द्विषां बलं असौ वव्रते । क्षणमीक्षणादेव परबलं इयत्ता परिचिच्छेदेत्यर्थः । क्षोदीयस्यपि कुक्षौ भुवनत्रयं परिच्छिन्दतः हरेरतिचक्षुषि अल्पबलपरिच्छेदः कियानिति भावः । अत्र भुवनत्रयापेक्षयाधारस्य कुक्षेरल्पत्वाच्च रपेक्षयाधेयस्य बलस्याल्पत्वाच्चाधिकालङ्कारौ सङ्कीर्ष्येते ॥४७॥

**टिप्पनी**—असाविति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥४७॥

**বাঙ্গালা**—যাঁহার ক্ষুদ্র উদরের ভিতরে ত্রিভুবন অবস্থান করিতেছে, সেই শ্রীকৃষ্ণ সম্মুখের দিকে ক্ষণকালমাত্র দৃষ্টিপাত করিলে পরই তাঁহার বিশাল ও অত্যন্তবিস্তৃত নয়নে শত্রুপক্ষের বিশাল সৈন্য ধরিল ॥৪৭॥

**अन्वयः**—क्षितिप-चमू वधूगणाः रतेः इव युधः सुखे सपदि भृशस्विदः पुलक-विकासिमूर्त्तयः रसाधिके मनसि निविष्टसाहसाः ससम्भ्रमाः च अभवन् ॥४८॥

**टीका**—भृशेति । क्षितिपचम्वो वध्व इवेत्युपमितसमासः रतेरिवेति लिङ्गात् । तासां गणाः युधो सुखे युद्धारम्भे रतेर्सुखे रत्यारम्भ इव सपदि भृशं स्विद्यन्तीति भृशस्विदः । क्विप् । पुलकविकासिमूर्त्तयो रोमाञ्चोदञ्चितगात्राः रसः वीरः शृङ्गारश्च तेनाधिके निर्भरे मनसि निविष्टसाहसाः प्रविष्टधाष्टर्याः ससम्भ्रमाः ससम्बराश्चाभवन् । यादृशी वधूनां सुरतसंरम्भेऽत्युत्कण्ठा तादृशी चमूनां समरकर्मणीत्य पमार्थः तेन तासां समरसुरतयोः समरसत्वं व्यज्यते ॥४८॥

**टिप्पनी**—भृशेति । अत्र रतेरिवेति श्रौतोपमा, अपरा च पूर्णोपमा, इत्यनयोरङ्गाङ्गिभावेन सङ्करः । वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

**বাঙ্গালা**—রমণারম্ভের ন্যায় যুদ্ধারম্ভের সময়ে রাজাদের রমণীতুল্য সেনাগণের দেহ

ध्वजांशुकैर्भुवमनुकूलमारुत प्रसारितैः प्रसभकृतोपहूतयः ।
यदूनभि द्रुततरमुद्यतायुधाः क्रुधा परं रयमरयः प्रपेदिरे ॥४९॥
हरेरपि प्रति परकीयवाहिनीरधिस्यदं प्रववृतिरे चमूचराः ।
विलम्बितुं न खलु सहा मनस्विनो विधित्सतः कलहमवेक्ष्य विद्विषः ॥५०॥

---

তৎক্ষণাৎ অত্যন্ত ঘর্ম্মাক্ত হইল এবং রোমাঞ্চ উৎপন্ন হওয়ায় সে দেহ শোভা পাইতে লাগিল ; আর অভ্যন্তরসম্পূর্ণ চিত্তে সাহস জন্মিল ও ব্যস্ততা আসিল ॥৪৮॥

**अन्वयः**—अरयः अनुकूलमारुतप्रसारितैः ध्वजांशुकैः भुवं प्रसभकृतोपहूतयः यदून् अभि द्रुततर-मुद्यतायुधाः (सन्तः) क्रुधा परं रयं प्रपेदिरे ॥४९॥

**टीका**—ध्वजांशुकैरिति । अरयः चैद्यपक्षाः अनुकूलमारुतेन प्रसारितैः ध्वजांशुकैर्भुवं प्रसभेन बलात्कारेण कृतोपहूतयः कृताह्वाना इवेत्यर्थः यदून् अभि यादवान् प्रति द्रुततरमुद्यतायुधाः उत्क्षिप्तायुधाः सन्तः क्रोधा क्रोधेन परम् अधिकं रयं त्वरां प्रपेदिरे । ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्वमुत्प्रेक्ष्यते भुव-मिति ॥४९॥

**टिप्पनी**—ध्वजेति । अत्र प्रसारितैः प्रसभेति रयमरय इति च छेकानुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते । वीरो रसः, वक्त्रोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥४९॥

**বাঙ্গালা**—অনুকূল বায়ু শ্রীকৃষ্ণের সেনাগণের পতাকাগুলিকে সম্মুখের দিকে প্রসারিত করিয়া নিয়াছিল ; তাহাতে বোধ হইতেছিল—সেই পতাকাগুলি যেন যুদ্ধের জন্য বিপক্ষসৈন্যগণকে বলপূর্বক আহ্বান করিতেছে ; তাহাতে বিপক্ষসৈন্যগণ ক্রোধে যাদবগণের প্রতি সত্বর অস্ত্র উত্তোলন করিয়া, অত্যন্ত বেগে ধাবিত হইয়াছিল ॥৪৯॥

**अन्वयः**—हरेः अपि चमूचराः परकीयवाहिनीः प्रति अधिस्यदं प्रववृतिरे । (तथाहि) मनस्विनः कलहं विधित्सतः विद्विषः अवेक्ष्य विलम्बितुं सहाः न खलु ॥५०॥

**टीका**—हरेरिति । हरेरपि चमूषु चरन्तीति चमूचराः सैनिकाः । चरेष्टः । परेषा-मिमाः परकीयाः वाहिनीः सेनाः प्रति अधिस्यदम् अधिवेगं यथा तथा । "रंहस्तरसी तु रयः स्यद" इत्यमरः । प्रववृतिरे प्रवृत्ताः । तथाहि, मनस्विनो धीराः कलहं युद्धं विधि-त्सतः विधातुमिच्छतः । दधातेः सन्नन्ताल्लटः शतरि रूपम् । तान् विद्विषः शत्रून् अवेक्ष्य विलम्बितुम् । शकधृषेत्यादिना तुमुन् प्रत्ययः । सहन्त इति सहाः क्षमाः । पचाद्यच् । न खलु । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥५०॥

**टिप्पनी**—हरेरिति । अत्र वीरो रसः, वक्त्रोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥५०॥

**বাঙ্গালা**—শ্রীকৃষ্ণের সৈন্যগণও, শত্রুসৈন্যগণের প্রতি অত্যন্ত বেগে ধাবিত হইল ; কারণ, মনস্বী লোকেরা শত্রুগণকে যুদ্ধাভিলাষী দেখিয়া বিলম্ব করিতে পারেন না ॥৫০॥

उपाहितैर्वपुषि निवातवर्म्मभिः स्फुरन्मणिप्रसृतमरीचिसूचिभिः ।
निरन्तरं नरपतयो रणाजिरे रराजिरे शरनिकराचिता इव ॥५१॥
अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति ।
बलैः स्खलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः ॥५२॥

---

अन्वयः—रणाजिरे नरपतयः वपुषि उपाहितैः स्फुरन्मणि-प्रसृत-मरीचि-सूचिभिः निवातवर्म्मभिः निरन्तरं शरनिकराचिताः इव रराजिरे ॥५१॥

टीका—उपाहितैरिति । रणाजिरे रणाङ्गने नरपतयो राजानो वपुषि उपाहितैरामुक्तैः स्फुरन्तो मणिप्रसृता रत्ननिर्गता मरीचय एव सूचयो येषां तैः निवातवर्मभिः अच्छिद्रकञ्चुकैः । "निवातो दृढसन्नाहे निर्वाते वाश्रयेऽपि च" इति विश्वः । "तनुत्रं वर्म दंशनम्" इत्यमरः । निरन्तरं नीरन्ध्रं शरनिकरैराचिताः प्रोता इव रराजिरे । फणानां च सुमानामिति विकल्पादित्वाभ्यासलोपाभावः । मणिरोचिषः साहश्याच्छरनिकरत्वोत्प्रेक्षा ॥५१॥

टिप्पनी—उपाहितैरिति । अत्र द्वितीयार्द्धे छेकानुप्रास इति तेन टीकोक्तोत्प्रेक्षा संसृज्यते । बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥५१॥

বাঙ্গালা—সমরাঙ্গনে রাজারা, শরীরে যে অখণ্ড বর্ম্ম সকল পরিধান করিয়াছিলেন, সূচিস্বরূপ তাহার কিরণগুলি চক্‌মক্ করিতে থাকিয়া চারিদিকে ছড়াইয়া পড়িয়াছিল; তাহাতে বোধ হইতেছিল যে,—তাঁহারা যেন সর্বাঙ্গে ঘনভাবে বাণবিদ্ধ হইয়া বিরাজ করিতেছেন ॥৫১॥

अन्वयः—अथ उच्चकैः जरठ कपोत-कन्धरा तनूरुहप्रकर-विपाण्डुर-द्युति बलैः स्खलच्चरणविधूतं क्षमारजः उच्चरद्घनावलीः उदचरत ॥५२॥

टीका—अथेति । अथानन्तरम् उच्चकैरुन्नतं जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्युपमा । "पारावतः कलरवः कपोत" इत्यमरः । बलैः सैन्यैः स्खलद्भिश्चरणैर्विधूतमुद्धूतं प्रेरितं सदुच्चरदुत्पतत् क्षमारजो भूरेणुर्घनावलीर्घनपङ्क्तीरुदचरत प्रचक्रामेत्यर्थः । "उदश्चरः सकर्मकादित्यात्मनेपदम् । अस्य प्रत्युदाहरणमुच्चरदिति । अत्र भूरेणोर्घनमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥५२॥

टिप्पनी—अथेति । अत्र परार्द्धे छेकानुप्रास इति तेन टीकोक्तसङ्करः पुनः संसृज्यते । समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः ॥५२॥

বাঙ্গালা—তাহার পর, সৈন্যেরা চলিত চরণ-দ্বারা ভূতল হইতে যে ধূলি তুলিয়াছিল; সেগুলি, বৃদ্ধ কপোতের গ্রীবার লোমের ন্যায় ধূসরবর্ণ ছিল এবং উপরে উঠিয়া, ঊর্দ্ধে বিচরণশীল মেঘগুলিকে অতিক্রম করিয়া গিয়াছিল ॥৫২॥

विषङ्गिभिर्भृशमितरेतरं क्वचित् तुरङ्गमैरुपरि निरुद्धनिर्गमाः ।
चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥५३॥
गरीयसः प्रचुरसुखस्य रागिणो रजोऽभवद् व्यवहितसत्वमुत्कटम् ।
सिसृक्षतः सरसिजजन्मनो जगत् बलस्य तु क्षयमपनेतुमिच्छतः ॥५४॥

---

**अन्वयः**—चलाचलैः खुरैः अनुपदम् आहताः भृशम् इतरेतरं विषङ्गिभिः तुरङ्गमैः उपरि निरुद्ध-निर्गमाः धूलयः क्वचित् चिरम् अधः एव विबभ्रमुः ॥५३॥

**टीका**—विषङ्गिभिरिति । चलाचलैश्चटुलैः खुरैरनुपदं प्रतिपदम् आहताः उद्धताः भृशमितरेतरं परस्परं निरन्तरमिति पाठे अभितो निरन्तरं नीरन्ध्रं विषङ्गिभिर्मिथःश्लिष्टै-स्तुरङ्गमैरुपरि निरुद्धो निर्गमो यासां ताः धूलयः क्वचित् चिरमध एव विबभ्रमुर्नोत्पेतुरिति भावः । अत्रोद्धतानाम् अधोभ्रमणविरोधस्योपरिनिर्गमरोधेन विशेषणगत्या परिहाराद् काव्यलिङ्गसङ्कीर्णो विरोधाभासोऽलङ्कारः ॥५३॥

**टिप्पनी**—विषङ्गिभिरिति । अत्र बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५३॥

**বাঙ্গালা**—ঘোড়াগুলির প্রত্যেক পদক্ষেপে চঞ্চল খুরের আঘাতে ধূলি উঠিয়া-ছিল ; কিন্তু পরস্পর অত্যন্তসংলগ্ন সেই ঘোড়াগুলির শরীর, সে ধূলিরাশির উপরে উঠা নিরুদ্ধ রাখিয়াছিল ; সুতরাং সে ধূলিরাশি কোন স্থানে চিরকাল নীচেই ঘুরিয়া-ছিল ॥৫৩॥

**अन्वयः**—गरीयसः प्रचुरसुखस्य रागिणः सरसिजजन्मनः जगत् सिसृक्षतः (सतः) व्यवहितसत्त्वं रजः उत्कटम् अभवत् ; बलस्य तु जगत् क्षयम् अपनेतुम् इच्छतः (सतः) व्यवहितसत्त्वं रजः उत्कटम् अभवत् ॥५४॥

**टीका**—गरीयस इति । गरीयसः सर्वलोकपितामहत्वात् पूज्यतरस्य अन्यत्र महत्तरस्य प्रचुरसुखस्य चतुर्मुखस्येत्यर्थः अन्यत्र बहुप्रवाहस्य रागिणो रक्तवर्णस्य अन्यत्र रणे रागिणो-ऽनुरागवतः एवम्भूतस्य सरसिजजन्मनो ब्रह्मणो जगत्सिसृक्षतः जगत् स्रष्टुमिच्छतः सतः । सृजेः सन्नन्ताल्लटः शत्रादेशः । व्यवहितसत्त्वं तिरस्कृतसत्त्वगुणकम् अन्यत्र तिरोहितजन्तुकं रजो रजोगुणो रेणुश्चोत्कटमुद्रिक्तमभवत् । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमिच्छतः सतोऽभवत् । अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्देन एकस्य सिसृक्षोरन्यस्य संजिहीर्षोरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥५४॥

**टिप्पनी**—गरीयस इति । अत्र बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥५४॥

**বাঙ্গালা**—অত্যন্ত পূজনীয়, চতুর্ম্মুখ এবং রক্তবর্ণ ব্রহ্মা যখন জগৎ সৃষ্টি করিতে ইচ্ছা করেন, তখন তাঁহার সত্ত্বগুণ দুর্ব্বল হয় এবং রজোগুণ প্রবল হইয়া উঠে ; কিন্তু অতিবিশাল, বহুশ্রেণীতে বিভক্ত ও যুদ্ধোৎসাহী সেই সৈন্যগণ যখন জগৎ সংহার করিতে ইচ্ছা করিয়াছিল, তখন জন্তুগণ দূরে পলাইয়া গিয়াছিল এবং বহুতর ধূলি উত্থিত হইয়া-ছিল ॥৫৪॥

पुरा शरक्षतिजनितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम्।
इति ध्रुवं व्यलगिषुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः॥५५॥
क्वचिल्लसद्घननिकुरम्बकर्वुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः।
क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुद्ययौ॥५६॥
महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि।
विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः॥५७॥

---

**अन्वयः**—संयुगे शरक्षतिजनितानि असृञ्जि प्रसभं नः पङ्कतां पुरा नयन्ति; इति ध्रुवम् आत्तभीतयः अनलसखस्य केतवः उच्चकैः खं व्यलगिषुः॥५५॥

**टीका**—पुरेति। संयुगे युद्धे सति शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मान् प्रसभं प्रसह्य पङ्कतां पुरा नयन्ति नेष्यन्ति। "यावत् पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। इतीत्थमालोक्य ध्रुवमात्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याग्निमित्रस्य वायोः केतवो रेणवः तल्लिङ्गत्वात्तस्येति भावः। उच्चकैरुन्नतं खमाकाशं व्यलगिषुः वियदारूढा इत्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्॥५५॥

**टिप्पनी**—पुरेति। अत्र ध्रुवशब्दोपादानात् वाच्या क्रियोत्प्रेक्षालङ्कारः, बन्धार्थस्य प्रगाढत्वात् ओजो गुणः, गौड़ी च रीतिः॥५५॥

**বাঙ্গালা**—যুদ্ধে শরপ্রহার জনিত রক্ত, পরবর্ত্তী কালে আমাদিগকে বলপূর্ব্বক কাদা করিয়া ফেলিবে ইহা আলোচনা করিয়া, ভীত হইয়াই যেন ধূলিগুলি উচ্চ আকাশে যাইয়া লাগিতে লাগিল॥৫৫॥

**अन्वयः**—क्वचित् लसद्घन-निकुरम्ब-कर्वुरः क्वचित् हिरण्मयकण-पुञ्जपिञ्जरः क्वचित् शरच्छशधर खण्डपाण्डुरः खुरक्षतक्षितितलरेणुः उद्ययौ॥५६॥

**टीका**—क्वचिदिति। क्वचिल्लसन् घननिकुरम्बवन्नवाभ्रपटलवत् कर्वुरः शवलः। क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः कनकचूर्णराशिकपिशः। क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरैः क्षतस्य क्षितितलस्य रेणुरुद्ययौ उज्जगाम। अत्रोपमात्रयस्य संसृष्टिः॥५६॥

**टिप्पनी**—क्वचिदिति। अत्र शेषपादत्रये छेकानुप्रास इति तस्यापि टीकोक्तसंसृष्टौ प्रवेशः। बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः॥५६॥

**বাঙ্গালা**—অশ্বের খুরবিদীর্ণ ভূতল হইতে কোন স্থানে বিরাজমান মেঘ সমূহের ন্যায় কর্ব্বুরবর্ণ ধূলি উঠিতে লাগিল; কোন স্থানে স্বর্ণরেণুপুঞ্জের ন্যায় পিঙ্গলবর্ণ ধূলিপুঞ্জ উঠিতে থাকিল এবং কোন স্থানে শরৎকালের চন্দ্রখণ্ডের ন্যায় শুভ্রবর্ণ ধূলিরাশি উত্থিত হইল॥৫৬॥

**अन्वयः**—महति अनीकजे रजसि महीयसां दिगन्तदन्तिनां मुखानुषङ्गिणि (सति) कोकिलावलीमलीमसाः जलदमदाम्बु राजयः विसारिताम् अजिहत॥५७॥

**शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एवं मा।**
**बलोद्धतं धवलितमूर्द्धजानिति ध्रुवं जनान् जरत इवाकरोद्रजः ॥५८॥**

---

**टीका**—महीयसामिति। महति अनीकजे सैनासमुत्थे रजसि महीयसां दिगन्ता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानि इति श्लिष्टरूपकम्। तेष्वनुषञ्जति लग्ने सति। कोकिलावलीवन्मलीमसा मलिना जलदा दिङ्मुखसङ्गिन एव ये मेघास्त एव मदाम्बुराजयो मदरेखाः विसारितां प्रसृमरत्वमजिह्नत अगच्छन् प्राप्ता इत्यर्थः। पांशुपातस्य दन्तिनां मदहेतुत्वादिति भावः। तदुक्तं महाभारते। "स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः। कुञ्जराः पांशुवर्षेण ब्राह्मणाः परनिन्दयेति। दिगन्तवर्त्तिनो मेघाः सैनारजोमेलनाद्बहुलीबभूवुरित्यर्थः। अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात् समस्तवस्तुवर्त्ति सावयवरूपकं सुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः। अजिह्नतेति ओहाङो लङि तङ्, श्नाभ्यस्तयोरात इत्याकारलोपः अदभ्यस्तादित्यदादेशः ॥५७॥

**टिप्पनी**—महीयसामिति। अत्र प्रथमार्द्धे च्छेकानुप्रासः, द्वितीयार्द्धे तु वृत्त्यनुप्रास इति तयोः टीकोक्तसङ्करः पुनः संसृज्यते। मधुररचनावशान्माधुर्यं गुणः, वैदर्भी च रीतिः ॥५७॥

**বাঙ্গালা**—সৈন্য হইতে উত্থিত বিশাল ধূলিরাশি, দিক্‌প্রান্তরূপ বিশাল হস্তিগণের মুখে সংলগ্ন হইলে; কোকিল শ্রেণীর ন্যায় কৃষ্ণবর্ণ মেঘরূপ মদজলধারা সকল বিস্তৃতি লাভ করিল ॥৫৭॥

**अन्वयः**—अलिकुलकोमलैः शिरोरुहैः (उपलक्षिताः) अमी (राजानः) युवानः एव मुधा मृधे मा मृषत इति (आलोच्य) बलोद्धतं रजः धवलितमूर्द्धजान् जनान् जरतः इव अकरोत् ध्रुवम् ॥५८॥

**टीका**—शिरोरुहैरिति। अलिकुलकोमलैः भ्रमरवृन्दमनोरमैः शिरोरुहैः—केशैरुपलक्षिताः, अमी राजानो युवान एव मुधा वृथा मृधे युद्धे। "मृधमास्कन्दनम्" इति युद्धपर्य्यायेष्वमरः। मा मृषत न म्रियन्ताम्। म्रियतेर्माङि लुङि "न माङ्योगे" इत्यड्भावः, "उश्चेति सिचः कित्त्वान्न गुणः। इतीत्थमालोच्येत्यर्थः बलोद्धतं रजः कर्त्तृ धवलितमूर्द्धजान् धवलीकृतकेशान् जनान् जरत इवाकरोत् वृद्धानिवाकरोदित्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्। अत्रैवशब्दस्यावधारणार्थत्वान्न तेन पौनरुक्त्यम्। "इवौपम्येऽवधारणे" इति विश्वः। "प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपीत्यमरः। "जीर्य्यतेरतृन्निति अतृन्प्रत्ययः ॥५८॥

**टिप्पनी**—शिरोरुहैरिति। अत्र च्छेकानुप्रासवृत्त्यनुप्रासाभ्यां वाच्या क्रियोत्प्रेक्षा संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः ॥५८॥

**বাঙ্গালা**—'ভ্রমরসমূহের ন্যায় সুন্দরকেশশালী এই রাজারা, যুবক অবস্থাতেই যেন বৃথা যুদ্ধে মরিয়া যান না' এইরূপ আলোচনা করিয়াই যেন সৈন্যোত্থিত ধূলিসকল, কেশগুলিকে ধবলবর্ণ করিয়া তাহাদিগকে নিশ্চয়ই বৃদ্ধের ন্যায় করিয়া দিল ॥৫৮॥

सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परैः ।
यतः क्षितेरवयवसम्पदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥५९॥
द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितम् ।
युगक्षयक्षणनिरवग्रहे जगत् पयोनिधेर्जल इव मग्नमाबभौ ॥६०॥
समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिताम्बरश्रियः ।
दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणां परिहरणीयतां ययुः ॥६१॥

---

अन्वयः—बहुभिः सुसंहतैः परैः धाम दधत् अपि असंशयं तिरस्कृतिं नीयते । यतः अणवः क्षितेः अवयवसम्पदः त्विषां निधेः वपुः अपि आवरीषत ॥५९॥

टीका—सुसंहतैरिति । धाम तेजो दधदपि दधानोऽपि तेजस्वी अपीत्यर्थः । परैरन्यैः सुसंहतैः सुसङ्गतैः परैरैक्यं गतैश्च बहुभिः तिरस्कृतिं नीयते । असंशयं निःसंशयम् । अर्थाभावेऽव्ययीभावः । कुतः यतः अणवः सूक्ष्माः क्षितेरवयवसम्पदो रेणुसमूहाः त्विषां निधेः सूर्य्यस्यापि वपुरावरीषत आच्छादितवन्तः । वृञो लुङि "वृतो वेति" इटो दीर्घः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥५९॥

टिप्पनी—सुसंहतैरिति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५९॥

বাঙ্গালা—অন্য বহুতর পদার্থ মিলিত হইয়া, তেজস্বী পদার্থকেও আবৃত করিতে পারে। যেহেতু, ভূতলের ক্ষুদ্র ক্ষুদ্র অবয়বগুলি (ধূলিসমূহ), তেজোনিধি সূর্য্যের শরীরকেও আবরণ করিয়াছিল ॥৫৯॥

अन्वयः—द्रुत-द्रवद्रथ-चरण-क्षत-क्षमा-तलोल्लस-द्बहुल रजोऽवगुण्ठितं जगत् युग-क्षयक्षण-निरवग्रहे पयोनिधेः जले मग्नम् इव आबभौ ॥६०॥

टीका—द्रुतेति । द्रुतं शीघ्रं द्रवतां धावतां रथानां चरणैश्चक्रैः क्षतात् क्षुण्णात् क्षमातलादुल्लसता पतता बहुलेन सान्द्रेण रजसावगुण्ठितमाच्छादितं जगद्युगक्षयक्षणे प्रलयान्तकाले निरवग्रहे निष्प्रतिबन्धे पयोनिधेर्जले मग्नमिवाबभावित्युत्प्रेक्षा ॥६०॥

टिप्पनी—द्रुतेति । अत्र छेकानुप्रासस्य शब्दालङ्कार इति तेन टीकोक्तोत्प्रेक्षा संसृज्यते । समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ॥६०॥

বাঙ্গালা—যে সকল রথ দ্রুত চলিতেছিল, তাহার চক্রের আঘাতে যে স্থানগুলি ক্ষত-বিক্ষত হইতেছিল, তথা হইতে বহুতর ধূলি উঠিয়া, জগৎটাকেই আবৃত করিল। সুতরাং তৎকালে সে জগৎ যেন প্রলয়সময়ের অপ্রতিহত সমুদ্রজলে মগ্ন হইয়া শোভা পাইতে থাকিল ॥৬০॥

अन्वयः—समुल्लसद्दिनकरवक्त्रकान्तयः रजस्वलाः परिमलिताम्बरश्रियः अविलोकनक्षमाः दिगङ्गनाः शरीरिणां क्षणं परिहरणीयतां ययुः ॥६१॥

निरीक्षितुं वियति समेत्य कौतुकात् पराक्रमं समरमुखे महीभृताम् ।
रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ॥६२॥
विषङ्गिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि समीरलक्ष्मणि ।
शनैः शनैरुपचितपङ्कभारिकाः पयोमुचः प्रययुरपेतवृष्टयः ॥६३॥

---

**टीका**—समुल्लसदिति। समुल्लसन्ती दिनकरस्यैव वक्त्रस्य कान्तिर्यासां ताः रजो रेणुरेव रज आर्त्तवमासामस्तीति रजस्वलाः। "रजःकृष्यासुतिपरिषदो वलच्" इत्यादिना मत्वर्थीयो वलच्प्रत्ययः। धूलिधूसराः उदक्याश्च। परिमलिता परितः संजातमला अम्बरस्याकाशस्यैवाम्बरस्य वस्त्रस्य च श्रीर्यासां ताः। अतएवाविलोकनक्षमा विलोकनानर्हाः दिश एवाङ्गनाः शरीरिणां प्राणिनां क्षणमीषत्कालं परिहरणीयतामगम्यतां ययुः। "स्नात् मलवद्वाससं न संविशेदि"त्यादिनिषेधादिति भावः। श्लिष्टपरम्परितरूपकम् ॥६१॥

**टिप्पनी**—समुल्लसदिति। अत्र चतुर्थपादगतेन छेकानुप्रासेन टीकोक्तरूपकं संसृज्यते। बन्धार्थस्य प्रगाढत्वात् ओजो गुणः, गौड़ी च रीतिः ॥६१॥

**বাঙ্গালা**—যাহাদের সূর্য্যরূপ মুখের শোভা প্রকাশ পাইতেছিল, ধূলিরূপ রজ উপস্থিত হইয়াছিল এবং আকাশরূপ বস্ত্রের শোভা মলিন ছিল; এই জন্য যাহারা দর্শনের যোগ্য ছিল না; সেই সকল দিক্-কামিনীগণ, ক্ষণকালের জন্য পুরুষদিগের পরিত্যাজ্য হইয়াছিল ॥৬১॥

**अन्वयः**—त्रिदशगणैः समरमुखे महीभृतां पराक्रमं निरीक्षितुं कौतुकात् वियति समेत्य रजस्ततौ अनिमिषलोचनोत्पलव्यथाकृति (सत्याम्) पलाय्यत ॥६२॥

**टीका**—निरीक्षितुमिति। त्रिदशगणैर्देवगणैः समरमुखे रणारम्भे महीभृतां राज्ञां पराक्रमं निरीक्षितुं वियति कौतुकात्समेत्य रजस्ततौ रजःस्तोमे न निमिषन्त्यनिमिषाणि अक्षिपातरहितानि। निमिषः पचाद्यच्, कुटादित्वान्न गुणः। तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम्। कृञः क्विप्। पलाय्यत अधाव्यत। भावे परापूर्वादयतेर्लङि तङ्, "उपसर्गस्यायता"विति रेफस्य लत्वम्। अत्र लोचनोत्पलानां व्यथाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥६२॥

**टिप्पनी**—निरीक्षितुमिति। अत्र व्यथाकरणं प्रति अनिमिषपदस्यार्थो हेतुरिति पदार्थहेतुककाव्यलिङ्गेन टीकोक्तातिशयोक्तिः सङ्कीर्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥६२॥

**বাঙ্গালা**—যুদ্ধারম্ভে রাজাদের পরাক্রম দেখিবার জন্য, কৌতুকবশতঃ দেবতারা আকাশে আসিলে পর, ধূলিরাশি তাঁহাদের নিমেষহীন নয়নগুলিকে পীড়িত করিতে লাগিল, তাঁহারা পলায়ন করিলেন ॥৬২॥

**अन्वयः**—विषङ्गिणि हताचिरद्युतिनि समीरलक्ष्मणि प्रतिपदम् अपः आपिबति (सति), अपेतवृष्टयः पयोमुचः उपचितपङ्कभारिकाः (सन्तः) शनैः शनैः प्रययुः ॥६३॥

नभोनदीव्यतिकरधौतमूर्त्तिभिर्वियद्गतैरनधिगतानि लेभिरे।
चलच्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः॥६४॥
गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा।
नभस्तलं बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम्॥६५॥

---

टीका—विषङ्गिणीति। विलाङ्गणि विषक्ते अतएव हृताचिरद्युतिनि विरमिताचिरद्युतिनि समीरलक्ष्मणि वातकेतौ रजसि प्रतिपदं प्रतिक्षणम् अपोऽम्भांसि आपिबत्याकर्षति सति अतएव अपि वृष्टयो निवृत्तवर्षाः पयोमुचः। उपचिताः प्रवर्द्धिताः पङ्कभारिकाः पङ्कभरणानि येषां ते उपचितपङ्कभारिकाः सन्तः। "पर्य्यायार्हर्णोत्पत्तिषु ण्वुलित्यर्हणार्थे ण्वुल् प्रत्ययः। अर्हणाच्च करणसामर्थ्यम्। अतएव भाराच्छन्नैः शनैः प्रययुः प्राप्ताः। अत्र पयोमुचां पङ्कभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः॥६३॥

टिप्पनी—विषङ्गिणीति। अत्र बन्धार्थस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः॥६३॥

বাঙ্গালা—ধূলিরাশি যাইয়া মেঘের গায়ে লাগিলে, তাহার বিদ্যুৎগুলি তিরোহিত হইয়া গেল এবং সে ধূলিরাশি প্রত্যেক ক্ষণে মেঘের জল পান করিতে লাগিল (কাদা করিতে লাগিল); তাহাতে মেঘগুলি বৃষ্টিবিহীন হইয়া, স্তূপীকৃত কর্দ্দম বহন করিয়া, ধীরে ধীরে যাইতে লাগিল॥৬৩॥

अन्वयः—नभोनदी-व्यतिकर-धौत-मूर्त्तिभिः वियद्गतैः दिग्गजैः अनधिगतानि चलच्चमू-तुरग-खुराहतोत्पतन्महीरज-स्नपन सुखानि लेभिरे॥६४॥

टीका—नभोनदीति। नभोनदीव्यतिकरेणाकाशगङ्गाया अवगाहेन धौतमूर्त्तिभिः क्षालिताङ्गैः वियद्गतैः खेचरैः अतएव दिग्गजैरनधिगतानि अननुभूतचराणि चलन्तीश्चमूतुरगखुरैराहतम् अतएवोत्पतदुद्गच्छत् महीरजस्तेन स्नपनमभिषेचनं तेन यानि सुखानि तानि लेभिरे। कुञ्जराः पांशुवर्षणेत्युदाहृतम्। अत्रापि दिग्गजानां रजःस्नपनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥६४॥

टिप्पनी—नभ इति। अत्र समासबाहुल्यात् ओजो गुणः, गौड़ी च रीतिः॥६४॥

বাঙ্গালা—সৈন্যগণ গমন করিতে লাগিলে, ঘোড়াগুলির খুরের আঘাতে ভূতল হইতে ধূলি উঠিতে থাকিল; তখন আকাশগঙ্গার জলে অবগাহন করায় যাহাদের শরীর পরিষ্কৃত ছিল; আকাশগামী সেই সকল দিগ্‌হস্তীরা অননুভূতপূর্ব্ব ধূলিস্নানের সুখ অনুভব করিতে লাগিল॥৬৪॥

अन्वयः—यत् गज व्रजाक्रमण-भरावनम्रया भुवा अखिलं रसातलम् आनशे; (यच्च) बहुलतरेण रेणुना नभस्तलम् आनशे; ततः स्फुटं त्रिजगत् एकताम् अगमत् इव॥६५॥

टीका—गजेति। यद्यस्माद्गजव्रजानाम् आक्रमणभरेण पादक्षेपगौरवेणावनम्रया भुवाखिलं रसातलं पातालमानशे व्याप्तम्। यद्यस्माच्च नभस्तलं बहुलतरेण रेणुनानशे

समस्थलीकृतविवरेण पूरिता महीभृतां बलरजसा महागुहाः ।
रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥६६॥
गते मुखच्छदपटसादृशीं दृशः पथस्तिरोदधति घने रजस्यपि ।
मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥६७॥

---

ततः कारणात् त्रिजगत् जगत्त्रयम् । तद्धितार्थेत्यादिना समाहारे द्विगुरेकवचनम् । एकतां भूलोकतामिवागमत् । स्फुटमित्युत्प्रेक्षायाम् ॥६५॥

**टिप्पनी**—गजेति । अत्र आनशे इत्येकया क्रियया भूरेणोः कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता, तृतीयपादे रेण-रेणुरिति च्छेकानुप्रासश्चेति तयो टीकोक्तोत्प्रेक्षया सह संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

**বাঙ্গালা**—হস্তিগণের পদক্ষেপের ভরে অবনত হইয়া ভূতল, যেহেতু পাতালে যাইয়া লাগিয়াছিল এবং যেহেতু বহুতর ধূলিরাশি আকাশকেও ব্যাপ্ত করিয়াছিল; সেই হেতু ত্রিভুবনই যেন স্পষ্টতঃ একতা প্রাপ্ত হইয়াছিল ॥৬৫॥

**अन्वयः**—समस्थलीकृतविवरेण बलरजसा पूरिताः महीभृतां महागुहाः रहः त्रपाविधुरवधूरतार्थिनां नभःसदाम् उपकरणीयतां ययुः ॥६६॥

**टीका**—समेति । समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन बलरजसा पूरिताः महीभृतां भूधराणां महागुहाः । रहो रहसि । अत्यन्तसंयोगे द्वितीया । त्रपया विधुराणां विलज्जाणां वधूनां रतं सुरतमर्थयन्त इति तदर्थिनां नभःसदां सुराणाम् उपकरणीयतामुपकारकत्वं ययुः तासां रजःपूरणात् पुंसामन्धकरणात्वादिति भावः । "कृत्यल्युटो बहुलमित्यनीयरः कर्त्तर्थे ता । अत्र रजःपूरणस्य विशेषणगत्योपकारकहेतुत्वात् काव्यलिङ्गभेदस्तथोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥६६॥

**टिप्पनी**—समेति । अत्र तृतीयचरणे विधुर-वधूरेति च्छेकानुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते । बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥६६॥

**বাঙ্গালা**—সৈন্যগণকর্তৃক উত্তোলিত ধূলিরাশি, ভূতলের গর্ত্ত গুলিকে সমতল করিয়া, পর্ব্বতের বৃহৎ গুহাগুলির মুখদেশ আবরণ করিল; তাহাতে সেই নির্জন গুহার ভিতরে লজ্জাসমাকুল রমণীগণের রমণার্থী দেবগণের পক্ষে সেই ধূলিরাশি উপকারী হইল ।৬৬॥

**अन्वयः** - मुख-च्छद-पट सादृशीं गते घने रजसि दृशः पथः तिरोदधति (सति) अपि द्विपाः अधिमधु चूत-गन्धिभिः मदानिलैः रंहसा द्विपान् अभिययुः एव ॥६७॥

**टीका**—गत इति । छाद्यतेऽनेनेति छदः मुखस्य छदो मुखच्छदः । "पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः, "छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः । स चासौ पटश्च तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ प्रत्यये "षिद्गौरादिभ्यश्चेति ङीष्, स च ष्यञ् षित्कर

मदाम्भसा परिगलितेन सप्तधा गजान् जनः शमितरजश्चयानधः ।
उपर्यवस्थितघनपांशुमण्डलानलोकयत्ततपटमण्डपानिव ॥६८॥

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः ।
वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाः
काले कालिकायकालवपुषः पांशून् गजाम्भोमुचः ॥६९॥

---

ध्यादीकारो बहुलमिति वामनवचनाद्ध्वंकल्पकः । गते प्राप्ते । गजानां युद्धपूर्वं काले सुखा-वरणकारणात् तत्सदृशे घने सान्द्रे रजसि दृशो दृष्टेः पथो मार्गान् तिरोदधति छादयति सत्यपि । अधिमधोः अधिकमकरन्दस्य चूतस्येव गन्धो येषां तैः । उपमानाच्चेति गन्ध-स्येत्वं तदेकान्तग्रहणं तु व्यभिचारि । मदानिलैरभिज्ञानैर्द्विपा गजा द्विपान् गजान् प्रति रंहसा वेगेनाभिययुरेव । अत्र तिरोहितदृष्टेरभियानविरोधस्य मदानिलैः परिहाराद्विरो-धाभासोऽलङ्कारः ॥६७॥

टिप्पनी---गत इति । अत्र सुखेत्यादौ आर्थोपमा, 'दृशो दृशः' इति छेकानुप्रासः, अधीत्यादौ पुन-र्लुप्तोपमा चेत्येतैः टीकोक्तविरोधाभासः, संसृज्यते । गुणरीती पूर्ववत् "६७॥

বাঙ্গালা—ঘন ধূলিজালে, হস্তিসমূহের মুখাবরণবস্ত্রের সাদৃশ্য ধারণ করিয়া, দৃষ্টির পথ আবৃত করিলেও, মধুপূর্ণ আম্রের ন্যায় সুগন্ধি মদজলবায়ুর আঘ্রাণ অনুসারে সেই হস্তিসমূহ, বেগে প্রতিপক্ষ হস্তিসমূহের অভিমুখে যাইতে লাগিলই ॥৬৭॥

अन्वयः—जनः सप्तधा परिगलितेन मदाम्भसा अधः शमितरजश्चयान् उपर्यवस्थित-घन पांशुमण्डलान् गजान् तत-पटमण्डपान् इव अलोकयत् ॥६८॥

टीका—मदाम्भसेति । सप्तधा "करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुति-रिति पालकाप्ये । सप्तभिः स्रोतोभिः परिगलितेन स्रुतेन मदाम्भसा अधः शमितो रजश्चयो यैस्तान्, उपर्यवस्थितानि तथैव स्थितानि घनानि सान्द्राणि पांशुमण्डलानि पुञ्जीकृतरजः-पुञ्जा येषां तान्, गजान्, जनो लोकस्तता उपरि वितताः पटमण्डपाः येषां तानिवेत्युत्-प्रेक्षा । अलोकयत् ॥६८॥

टिप्पनी—मदेति । अत्र उपरिततपटमण्डपत्वं प्रति उपर्यवस्थितेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गेन टीकोक्तोत्प्रेक्षा सङ्कीर्यते । प्रसादो गुणः वैदर्भी च रीतिः ॥६८॥

বাঙ্গালা—হাতীগুলির মুখ, শুঁড়, দুইটা গাল, লিঙ্গ এবং দুইটা চোখ হইতে মদস্রাব হইতেছিল; তাহাতে নীচের ধূলিরাশি নিবারিত হইতেছিল বটে; কিন্তু উপরে নিবিড় ধূলিজাল থাকিয়া যাইতেছিল, সুতরাং সেগুলির উপরে যেন পটমণ্ডপ বিস্তৃত করিয়া দেওয়া হইয়াছিল বলিয়া লোকে দেখিতে লাগিল ॥৬৮॥

अन्वयः—अन्यूनोन्नतयः, अतिमात्रपृथवः, पृथ्वीधरश्रीभृतः, कनकावलीभिः (करणैः) सौदामिनी

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये यदुवंश-
क्षोभणो नाम सप्तदशः सर्गः ॥१७॥

—०—

दामभिः उपमां तन्वन्तः, उपलसच्छृङ्गारलेखायुधाः, कालिय-काय-काल-वपुषः, गजाम्भोमुचः, काले (मदाम्बु) वर्षन्तः (सन्तः) पांशून् शमम् आनयन् ॥६९॥

टीका--अनून्नेति। अनून्नोन्नतयो महोच्छ्रायाः अतिमात्रपृथवोऽत्यन्तविपुलाः अतएव पृथ्वीधरश्रीभृतः शैलश्रीमाधारिण इति निदर्शनालङ्कारः। कनकावलीभिरावरणहेतु-हेमराजिभिः करणैः। सुदाम्नः पर्वतेनेन्द्रदिग्गः सौदामिन्यो विद्युतः। तेनेकादिगित्यण्-प्रत्यये ङीप्। ताभिर्दामभिरिव सौदामिनीदामभिर्विद्युल्लताभिः उपमां सादृश्यं तन्वन्तः। "तड़ित् सौदामिनी विद्युदित्यमरः। "अतुलोपमाभ्यामिति सदृशवचनस्यैव निषेधादिह सादृश्यवाचित्वात् तृतीया। उपलसन्तः शृङ्गाराः सिन्दूरादिमण्डलान्येव लेखायुधानि सुर-धनूंषि येषां ते तथोक्ताः। "शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। लेखालेख्ये सुर" इति च विश्वः। कालियस्य कालियनागस्य कायवत् कालवपुषः कृष्णदेहाः। गजा एव अम्भोमुचो मेघाः काले योग्यकाले वर्षन्तो मदाम्बु मुञ्चन्तः पांशून् शमं शान्तिम् आनयन् प्रापयन्। रूपकालङ्कारः। शार्दूलविक्रीड़ितं वृत्तमुक्तम् ॥६९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्य-
व्याख्याने सर्वङ्कषाख्ये सप्तदशः सर्गः ॥१७॥

—०—

टिप्पनी---अनून्नेति। अत्र उपमां तन्वन्त इत्यार्थोपमा, सौदामिनी-दामभिरिति छेकानुप्रासः, उपलसदित्यादौ निरङ्गं केवलरूपकम्, काल इत्यादौ च वृत्त्यनुप्रास इति टीकोक्तनिदर्शनारूपकाभ्यां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

इति श्रीहरिदास सिद्धान्तवागीश विरचितायां
शिशुपालवधटिप्पन्यां माधुरीसमाख्यायां
सप्तदशः सर्गः ॥०॥

—०—

বাঙ্গালা—হস্তিরূপ মেঘসকল অতিশয় উচ্চ ও অতিশয় স্থূল ছিল; সুতরাং পর্বতের শোভা ধারণ করিতেছিল; আর সুবর্ণময় আভরণ দ্বারা বিদ্যুতের সাদৃশ্য বিস্তার করিতে-ছিল, সিন্দূরপ্রভৃতি চিত্রগুলি ইন্দ্রধনুস্বরূপ শোভা পাইতেছিল এবং সে সকলের শরীরগুলি কালিয়নাগের শরীরের ন্যায় কৃষ্ণবর্ণ ছিল; তাহারা যথাসময়ে মদজল বর্ষা করিয়া, ধূলিরাশির নিবৃত্তি করিতেছিল ॥৬৯॥

## अष्टादशः सर्गः ।

—:o:—

सञ्जग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।
पक्षच्छेदात् पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥१॥
पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ।
इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥२॥

---

अन्वयः—अपायानपेक्षौ धीरनादौ तौ सेनाम्भोधी, पक्षच्छेदात् पूर्वम् एकत्र देशे निलेतुं वाञ्छन्तौ विन्ध्यसह्यौ वा रयेण सञ्जग्माते ॥१॥

टीका—अथास्मिन्सर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलनं तावदाह । सञ्जग्माते इति । अपायोऽपगमो युद्धादपसरणं तस्यानपेक्षौ तमनिच्छन्तौ युद्धानिवर्त्तिनावित्यर्थः । ईक्षतेः पचाद्यचि नञ्समासः । धीरनादौ गम्भीरघोषौ तौ सेनाम्भोधी सेनासागरौ । पक्षच्छेदात् पूर्वं पश्चादसम्भवादिति भावः । एकत्र देशे एकस्थाने निलेतुं वस्तुम् । लिङ् गताविति धातोस्तुमुन्प्रत्यये गुणः । वाञ्छन्ताविच्छन्तौ सह्यविन्ध्यौ वा सह्यविन्ध्याख्यौ पर्वताविव । "वा स्याद्विकल्पोपमयोरिति विश्वः । सञ्जग्माते मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकाल्लिटि "समोगम्यृच्छ्यादिना आत्मनेपदम् । अत्र सह्यविन्ध्ययोरप्येकत्र मिलनस्याप्रसिद्धस्य सम्भावनामात्रयोक्तत्वादुपमानाप्रसिद्धेर्नोपमा किन्तूत्प्रेक्षेति सङ्क्षेपः । अस्मिन् सर्गे मालिनी वृत्तम् । "मालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरिति लक्षणात् ॥१॥

टिप्पनी—सञ्जग्माते इति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥१॥

বাঙ্গালা—বিন্ধ্য ও সহ্য পর্বত যেমন পক্ষচ্ছেদের পূর্বে এক জায়গায় অবস্থান করিতে ইচ্ছা করিয়া বেগে সম্মিলিত হইত; তেমন পলায়নেচ্ছাবিহীন ও গম্ভীরকোলাহলকারী সেই সৈন্যসাগর দুইটা বেগে সম্মিলিত হইল ॥১॥

अन्वयः—पत्तिः पत्तिम्, वाजी वाहम्, नागः नागम्, स्यन्दनस्थः रथस्थम् एयाय; इत्थं सेना रागात् अङ्गेन वल्लभस्य इव प्रत्यनीकस्य अङ्गं भेजे ॥२॥

टीका—सेनाम्भोधी संजग्माते इत्युक्तं ततसङ्गतिप्रकारन्तावद्वर्णयति । पत्तिरिति । पत्तिः पदातिः पत्तिं पदातिम् । "पदातिपत्तिपदगपदातिकपदातय" इत्यमरः । एयाय प्राप । आङ्पूर्वादिणो लिट् । वाज्यश्वो वाहमश्वमेयाय । "वाजिवाहार्वगन्धर्वा" इत्यमरः । नागो गजो नागम् एयाय । स्यन्दनस्थो रथस्थमेयाय न तु व्युत्क्रमेण भूमं

रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिनां ह्रेषया च।
व्योमव्यापी सन्ततं दुन्दुभीनामव्यक्तोऽभूदीशितेव प्रणादः ॥३॥

---

युक्तत्वादिति भावः। इत्थमुक्तरीत्या सेना रागाद्रथरागात् रतिरागाच्च अङ्गेन स्वाङ्गेन पत्त्यादिना करचरणादिना च वल्लभस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य। "वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः। अङ्गं पत्त्यादिकं करचरणादिकं च भेजे। यथा कान्ता कान्तस्योत्सुकतया करं करेण मुखं मुखेन भजति तथा सेना प्रतिसैन्यस्य पत्तिं पत्तिना अश्वमश्वेनेत्यादिक्रमेण भेजे न तु व्युत्क्रमेणेत्यर्थः। वल्लभस्येवेत्युपमया समरसुरतयोः समरसत्वं व्यज्यते ॥२॥

टिप्पनी---पत्तिरिति। अत्र एयाय इत्येकया क्रियया पत्तिरित्यादीनामनेकेषां कर्तॄणामभिसम्बन्धात् तुल्ययोगिता श्रौतोपमा च व्यज्यते। तथा वाहपदेन स्यन्दनपदेन च प्रक्रम्य वाजिपदस्य रथपदस्य चाभिधानात् प्रक्रमभङ्गदोषद्वयम्; तच्च 'वाहमेयाय वाहः, नागं नागो वा रथास्था रथस्थम्' इति पाठेन परिहार्यम्। अत्र पाठे वाशब्दः समुच्चये। वीरो रसः, बन्धार्थस्य प्रगाढत्वात् ओजो गुणः, गौड़ी च रीतिः ॥२॥

বাঙ্গালা---পদাতি পদাতির দিকে, ঘোড়া ঘোড়ার দিকে হাতী হাতীর দিকে এবং রথী রথীর দিকে চলিল ; এই ভাবে রমণী যেমন প্রত্যেক অঙ্গ দ্বারা প্রিয়তমের প্রত্যেক অঙ্গ অবলম্বন করে; তেমন সেই সৈন্য দুইটা, পদাতিপ্রভৃতি প্রত্যেক অঙ্গ দ্বারা বিপক্ষের প্রত্যেক অঙ্গ অবলম্বন করিল ॥২॥

अन्वयः—सन्ततं व्योमव्यापी दुन्दुभीनां प्रणादः रथ्याघोषैः वारणानां बृंहणैः वाजिनां ह्रेषया च ऐक्यं गच्छन् (सन्) ईशिता इव अव्यक्तः अभूत् ॥३॥

टीका—रथ्येति। सन्ततं व्योमव्यापी गगनस्पृक्, अन्यत्र सर्वगत इत्यर्थः। दुन्दुभीनां रणभेरीणां प्रणादो महाघोषः। "उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम्। रथानां समूहो रथ्या। "त्रिषु द्वैपादयो रथ्या रथकड्या रथव्रज" इत्यमरः। "खलगोरथादिनि यत्प्रत्ययः समूहार्थे। तासां घोषैः वारणानां बृंहणैः कण्ठघोषैः। "बृंहणं गजगर्जितमिति वैजयन्ती। वाजिनामश्वानां ह्रेषया ह्रेषणेन च। "हेषा ह्रेषा च निस्वन" इत्यमरः। "गुरोश्च हल" इत्यप्रत्यये टाप्। ऐक्यं मेलनं गच्छन्। अन्यत्र तत्त्वंपदार्थशोधनादद्वितीयतां गच्छन्। ईशिता ईशयिता ईश्वरत्वोपाधिमान् परमात्मेव। ईशेस्तृच्। अव्यक्तोऽभूत् अयं दुन्दुभिघोष इति दुर्भेदो बभूव। अन्यत्र जीवेश्वरोपाधिविलयादयमीश्वरोऽयं जीव इति भेदरहितोऽभूदित्यर्थः। अत्रैक्यगमनस्य विशेषणगत्या अव्यक्तहेतुत्वात् काव्यलिङ्गमुपमाङ्गमिति सङ्करः ॥३॥

टिप्पनी—रथ्येति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

বাঙ্গালা—সর্বদা আকাশব্যাপী রণভেরীর শব্দ, রথসমূহের নির্ঘোষ, হস্তিগণের বৃংহিতধ্বনি এবং অশ্বগণের হ্রেষারবের সঙ্গে সম্মিলিত হইয়া, ঈশ্বর ও জীবের ন্যায় অপৃথগ্‌ভাবে প্রকাশ পাইতে লাগিল ॥৩॥

रोषावेशाद्गच्छतां प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।
दीर्घास्तिर्य्यग्वैजयन्तीसदृक्षाः पादातानां भेजिरे खड्गलेखाः ॥४॥
वर्ध्रैर्बद्धा धौरितेन प्रयातामश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्त्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः ॥५॥

---

**अन्वयः**—रोषावेशात् प्रत्यमित्रं गच्छतां दूरोत् क्षिप्त-स्थूल-बाहुध्वजानां पादातानां खड्गलेखाः दीर्घाः तिर्य्यग् वैजयन्ती सदृक्षः भेजिरे ॥४॥

**टीका**—रोषावेशादिति । रोषावेशात् प्रत्यमित्रमभिशत्रु म् । आभिमुख्येऽव्ययीभावः । गच्छतां धावतां द्रवतां दूरादुत्क्षिप्ताः स्थूलाः पीवराः बाहुध्वजा ध्वजस्तम्भा इव बाहवो येषां तेषां पादातानां पदातिसमूहानाम् । "पादात' पात्तिसंहतिरित्यमरः । भिक्षादिभ्योऽण् । तिर्य्यग्दीर्घास्तिर्य्यगायता इत्यर्थः । लेखा इव खड्गा खड्गलेखाः वैजयन्तीसदृक्षः पताकासदृक्ष्य सत्य इत्यर्थः । "वैजयन्ती पताका स्यादित्यमरः । दृशेः समानान्ययोश्चेति कञ् च वक्तव्य इति समानशब्दोपपदात् दृशेः कञ्प्रत्ययः । "दृक्षे चेति वक्तव्य इति समानस्य सभावः । भेजिरे रेजिरे । भ्राजृ दीप्ताविति धातोः कर्त्तरि लिट्, "फणानां च सप्तानामिति विकल्पादेत्वाभ्याससलोपौ । आर्थीयमुपमा ॥४॥

**टिप्पनी**—रोषेति । अत्र वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४॥

**বাঙ্গালা**—পদাতিগণ ক্রোধবশতঃ শত্রুদিগের প্রতি ধাবিত হইল ; তখন তাহাদের স্থূলবাহুরূপ ধ্বজগুলি উচ্চে উত্তোলিত ছিল এবং তাহাতে দীর্ঘ ও তেরছাভাবে সঙ্গলিত পতাকার ন্যায় তরবারি সকল দীপ্তি পাইতে লাগিল ॥৪॥

**অন্বয়ঃ**—धौरितेन प्रयाताम् अश्वीयानाम् उच्चकैः उच्चलन्तः वर्ध्रैर्बद्धा रौक्माः स्थासकाः व्याप्तदेहस्य दर्पस्य मूर्त्तिभाजः शेषाः इव रेजुः ॥५॥

**टीका**—वर्ध्रैरिति । धौरितेन धौरिताख्येन गतिविशेषेण प्रयातां धावताम् । यातेर्लटः शत्रादेशः । अश्वीयानामश्वसमूहानाम् । "केशाश्वाभ्यां यञ्छावन्यतरस्यामिति छप्रत्ययः । उच्चकैरुच्चलन्तो गतिवशादूर्द्ध्वमुत्पतन्तः । वर्द्धते इति वर्ध्राणि पर्य्याणबन्धनचर्माणि । "वर्ध्रं स्त्रपुवरत्र पुरिति विश्वः । "वृधुवधिवपिभ्यो रन्निति रन्प्रत्ययः लघूपधगुणो रपरः । तैर्बद्धाः स्थापिता रौक्माः सौवर्णाः स्थासकाः बुद्बुदाकारमण्डलानि व्याप्तदेहस्य सर्वाङ्गीणस्य मूर्त्तिभाजो मूर्त्तिभृतः दर्पस्यान्तरस्य तेजसः शेषाः अन्तरमानाद्बहिर्निर्गता अतिरेका इव रेजुरित्युत्प्रेक्षा ॥५॥

**टिप्पनी**—वर्ध्रेति । अत्र वस्तस्य प्रगाढ़त्वादोजो गुणः, गौड़ी च रीतिः ॥५॥

**বাঙ্গালা**—অশ্বগণ গতিবিশেষে ধাবিত হইতেছিল ; তখন তাহাদের পালান বাঁধা দড়িতে লাগান সোণার বাটীগুলি উপরের দিকে চলিতে থাকিয়া, সর্বাঙ্গব্যাপী দর্পের মূর্ত্তিমান্ অবশিষ্টাংশের ন্যায় শোভা পাইতে লাগিল ॥৫॥

सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्षा आङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।
कल्पस्यान्ते मारुतेनोपनुन्नाश्चेलुश्चण्डं गण्डशैला इवेभाः ॥६॥
संक्रीडन्ती तेजिताश्वस्य रागादुच्चस्यारामग्रकायोल्लसितस्य ।
रंहोभाजामक्षधूः स्यन्दनानां हाहाकारं प्राजितुः प्रत्यनन्दत् ॥७॥

---

अन्वयः—सान्द्रत्वक्काः तल्पलाश्लिष्टकक्षाः चतुर्थीम् आङ्गीं शोभाम् आप्नुवन्तः इभाः कल्पस्य अन्ते मारुतेन उपनुन्नाः गण्डशैलाः इव चण्डं चेलुः ॥६॥

टीका—सान्द्रेति । सान्द्रत्वक्काः सान्द्रवर्माणः । शैषिकः कप्प्रत्ययः । तल्पलाः पृष्ठवंशाः तेषु श्लिष्टाः कक्षाः मध्यबद्धवरत्रा येषां ते । "दूष्या कक्षा वरत्रा स्यादित्यमरः । गजानां विंशत्युत्तरशतायुषां द्वादश दशा भवन्ति तत्र चतुर्दशारूढ़ा प्रौढ़शोभा । तदेवाह अथ चतुर्थीमाङ्गीं शारीरीं शोभामाप्नुवन्तः चत्वारिंशद्वर्षदेश्या इत्यर्थः । इभाः गजाः कल्पस्यान्ते मारुतेनोपनुन्नाः प्रलयमारुतप्रेरिताः गण्डशैलाः स्थूलोपला इव चण्डं तीव्रं चेलुः प्रतस्थिरे इत्युपमा ॥६॥

टिप्पनी—सान्द्रेति । अत्र चण्डं गण्डेति छेकानुप्रासेन टीकोक्तोपमा संसृज्यते । पूर्ववदोजो गुणः, गौड़ी च रीतिः ॥६॥

বাঙ্গালা—অঙ্গের চতুর্থ-শোভাশালী (চত্বারিংশদ্বর্ষবয়স্ক । টীকা দ্রষ্টব্য) হস্তিগণ, প্রলয়কালের বায়ুকর্ত্তৃকপ্রেরিত বৃহৎ প্রস্তরখণ্ডসমূহের ন্যায় ভয়ঙ্করভাবে চলিতে লাগিল ; সে গুলির বর্ম্ম সকল ঘন ছিল এবং পৃষ্ঠদেশে আস্তরণ ছিল ॥৬॥

अन्वयः—रंहोभाजां स्यन्दनानां संक्रीड़न्ती अक्षधूः रागात् आराम् उच्चस्य अग्रकायोल्लसितस्य तेजिताश्वस्य प्राजितुः हाहाकारं प्रत्यनन्दत् (इव) ॥७॥

टीका—संक्रीड़न्तीति । संक्रीड़न्ती संघर्षात् कूजन्ती । "समोऽकूजने वक्तव्यमिति वचनात् कूजने "क्रीड़ोऽनुसंपरिभ्यश्चेति नात्मनेपदम् । रंहोभाजां वेगभाजां स्यन्दनानां रथानामक्षस्य चक्रधारकाष्ठस्य धूरक्षधूः । "अक्षं रथाङ्ग आधार" इति वैजयन्ती । "अनक्षे इति निषेधात् ऋक्पूरित्यादिना न समासान्तः । रागात् आरां प्रतोदमुच्चस्य तेजिता उत्ताडिता अश्वा येन तस्य अग्रं प्राग्भागो कायस्य स उल्लसितो यस्य तस्योल्लसितपूर्वकायस्येत्यर्थः । आहिताग्न्यादित्वात् साधुः । प्राजितुः सारथेः । "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिरित्यमरः । हाहाकारमुत्साहवर्द्धनार्थं हाहाशब्दम् । एवकार इत्यत्र वर्णस्योपलक्षणत्वात् अन्यत्रापि यथादर्शनं शब्दनिर्देशात् कारप्रत्ययः । अथवा हाहाकारं हाहाकरणम् । भावे घञ्प्रत्ययः । प्रत्यनन्दत् साधुसाध्वित्यन्वमोदत । किमित्युत्प्रेक्षा ॥७॥

टिप्पनी—समिति । अत्र इवाद्यभावात् प्रत्यनन्ददिवेति क्रियोत्प्रेक्षालङ्कारः । वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥७॥

বাঙ্গালা—বেগগামী রথগুলির চাকারাখার কাঠগুলি অব্যক্ত শব্দ করিতে লাগিল ;

কুর্ব্বাণানাং সাম্পরায়ান্তরায়ং ভূরেণূনাং মৃত্যুনা মার্জ্জনায় ।
সম্মার্জ্জন্যো ন্যূনমুদ্ধূয়মানা ভান্তি স্মোচ্চৈঃ কেতনানাং পতাকাঃ ॥৮॥
উদ্যন্নাদং ধন্বিভির্নিষ্ঠুরাণি স্থূলান্যুচ্চৈর্মণ্ডলত্বং দধন্তি ।
আস্ফাল্যন্তে কার্ম্মুকাণি স্ম কামং হস্ত্যারোহৈঃ কুঞ্জরাণাং শিরাংসি ॥৯॥

---

তখন সারথিরা উৎসাহে দেহের সম্মুখভাগ তুলিয়া, চাবুক উঠাইয়া, ঘোড়াগুলিকে উত্তেজিত করিবার জন্য 'হেই হেই' শব্দ করিতে থাকিল ; সে শব্দকে যেন সে কাঠগুলি অভিনন্দন করিল (অর্থাৎ আরও বেগে যাইতে লাগিল) ॥৭॥

অন্বয়ঃ—উচ্চৈঃ কেতনানাং পতাকাঃ সাম্পরায়ান্তরায়ং কুর্ব্বাণানাং ভূরেণূনাং মার্জ্জনায় মৃত্যুনা নূনম্ উদ্ধূয়মানাঃ সম্মার্জ্জন্যঃ ভান্তি স্ম ॥৮॥

টীকা—কুর্ব্বাণানামিতি । উচ্চৈরুন্নতাঃ কেতনানাং ধ্বজস্তম্ভানাং পতাকা জয়ন্ত্যঃ সাম্পরায়ান্তরায়ং যুদ্ধবিঘ্নং কুর্ব্বাণাম্ । "অনীকং সাম্পরায়িকমিত্যমরঃ । ভূরেণূনাং মার্জ্জনায় প্রমার্জ্জনার্থং মৃত্যুনা অন্তকেনোদ্ধূয়মানাঃ প্রকম্প্যমানাঃ সম্মার্জ্জন্যঃ শোধিন্য ইব ভান্তি স্ম । "সম্মার্জ্জনী শোধিনী স্যাদিত্যমরঃ । ন্যূনমিত্যুৎপ্রেক্ষা ॥৮॥

টিপ্পনী—কুর্ব্বাণানামিতি । অত্র বন্ধোৎকর্ষস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৮॥

বাঙ্গালা—ধ্বজের পতাকাগুলি উপরে উড়িতে থাকিয়া শোভা পাইতেছিল ; তাহাতে বোধ হইতেছিল যে, ভূতলের ধূলিরাশি (সৈন্যগণের নয়ন আবৃত করিয়া) যুদ্ধের বিঘ্ন করিতেছিল ; তাই যম যেন নিশ্চই সেই ধূলিরশিকে ঝাইট দিয়া ফেলিবার জন্য ঝাটা সকল উপরে কাঁপাইতেছেন ॥৮॥

অন্বয়ঃ—ধন্বিভিঃ নিষ্ঠুরাণি স্থূলানি উচ্চৈঃ মণ্ডলত্বং দধন্তি কার্ম্মুকাণি, হস্ত্যারোহৈঃ কুঞ্জরাণাং শিরাংসি (চ) কামম্ আস্ফাল্যন্তে স্ম ॥৯॥

টীকা—উদ্যন্নাদমিতি । ধন্বিভির্ধনুষ্মদ্ভিঃ । ব্রীহ্যাদিত্বাদিনিপ্রত্যয়ঃ । নিষ্ঠুরাণি কর্কশানি স্থূলানি পীবরাণি উচ্চৈরুন্নতানি মণ্ডলত্বং দধন্তি বর্ত্তুলত্বং দধানানি । একত্র কর্ষণাদন্যত্র স্বভাবাচ্চেতি ভাবঃ । কর্ম্মণি প্রভবন্তীতি কার্ম্মুকাণি ধনূংষি । উকঞ্ । উদ্যন্নাদমুজ্জৃম্ভমাণঘোষং যথা তথা কামমাস্ফাল্যন্তে স্ম পাটবপরীক্ষার্থং পাণিভিরাস্ফালিতানি । হস্তিনং রোহন্তি ইতি হস্ত্যারোহৈর্নিষাদিভিঃ । কর্ম্মণ্যণ্ । কুঞ্জরাণাং শিরাংসি আস্ফাল্যন্তে স্ম উৎসাহার্থমিতি ভাবঃ । অত্র কার্ম্মুকাণাং কুঞ্জরশিরসাঞ্চ প্রকৃতানামেব নিষ্ঠুরত্বাদিবিশেষণসাম্যেনৌপম্যাবগমাৎ কেবলপ্রকৃতাস্পদা তুল্যযোগিতা ॥৯॥

টিপ্পনী—উদ্যদিতি । অত্র বীরো রসঃ, বন্ধোৎকর্ষস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৯॥

বাঙ্গালা—ধনুর্দ্ধারী সৈন্যেরা দৃঢ়, স্থূল, উন্নত এবং গোলাকার ধনুগুলিকে পর্য্যাপ্তরূপে

घण्टानादो निस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि ।
आमित्येवं प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य ॥१०॥
यातैश्चातुर्विध्यमस्त्रादिभेदादव्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन् दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥११॥

---

আস্ফলন করিল আর হস্ত্যারোহী সৈন্যেরাও সেই প্রকারই হস্তিগণের মস্তকগুলিকে আস্ফলন করাইল ॥৯॥

**अन्वयः**—घण्टानादः, डिण्डिमानां निस्वनः, ग्रैवेयाणाम् आरवः गजानां बृंहितानि उत्साहार्थम् आधोरणस्य वाचम् 'आम्' इति एवं प्रत्यवोचन् ॥१०॥

**टीका**—घण्टानाद इति । घण्टानादः किङ्किण्यादिघोषः डिण्डिमानां वाद्यविशेषाणां निस्वनः । ग्रीवासु भवानां ग्रैवेयाणां कण्ठशृङ्खलानां ग्रीवाभ्यः एवेति ढक्प्रत्ययः । आरवः । बृंहितानि बृंहणानि गजानाम् उत्साहार्थमाधोरणस्य हस्तिपकस्य । "आधोरणा हस्तिपका" इत्यमरः । वाचं बृंहणादिशब्दम् आमिति प्रत्यवोचन्निवैवमेवेत्यनुकूलमूचिर इवेत्युत्प्रेक्षा । "आमानुगुण्ये स्मरणे" इत्यमरः ॥१०॥

**टिप्पनी**—घण्टेति । अत्र एकवचनान्तकर्त्तृपदानि प्रक्रम्य बृंहितानीति बहुवचनाभिधानाद् भग्नप्रक्रमतादोषः ; स च 'बृंहितञ्च' इति पाठेन समाधेयः । वीरो रसः, पूर्ववद् गुणरीती ॥१०॥

**বাঙ্গালা**—ঘণ্টার শব্দ, ডিণ্ডিমের শব্দ, গ্রীবাভূষণের শব্দ এবং হস্তিগণের বৃংহিত শব্দ এই সকল শব্দ যেন 'আং' 'আং' এইরূপে উৎসাহের জন্য উচ্চারিত মাহুতের বাক্যগুলির প্রত্যুত্তর করিল ॥১০॥

**अन्वयः**—आयुधीयाः शिक्षाशक्तिं दर्शयन्तः अस्त्रादिभेदात् चातुर्विध्यं यातैः सौष्ठवात् लाघवाच्च अव्यासङ्गैः मुक्तामुक्तैः आयुधैः प्राहरन् ॥११॥

**टीका**—यातैरिति । आयुधेन जीवन्तीत्यायुधीयाः आयुधजीविनः । "शस्त्राजीवि काण्डपृष्ठायुधीयायुधिकाः समाः" इत्यमरः । "आयुधाच्छ चे"ति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः अस्त्रादिभेदादस्त्रशस्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः । सुष्ठु भावः सौष्ठवं नैपुण्यादिगुणवत्त्वं तस्मात् । उद्गात्रादित्वादञ्प्रत्ययः । लाघवाद्वेगवत्त्वाच्च । इगन्ताच्च लघुपूर्वादित्यण्प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः मुच्यन्त इति मुक्तानि शरादीनि न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैर्मुक्तामुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् । स्वभावानुप्रासयोः संसृष्टिः ॥११॥

**टिप्पनी**—यातैरिति । अत्र वीरो रसः, गुणरीती पूर्ववत् ॥११॥

**বাঙ্গালা**—আয়ুধ সকল, অস্ত্রাদিভেদে চারি প্রকার ; উৎকর্ষবশতঃ এবং লঘুতাবশতঃ সেগুলি আবার অপ্রতিহতভাবেই চলিয়া থাকে ; তাহা আবার নিক্ষিপ্ত ও হয় এবং অনিক্ষিপ্তও থাকে ; এহেন আয়ুধ সমূহদ্বারা সৈন্যেরা প্রহার করিতে লাগিল ॥১১॥

रोषावेशादाभिमुख्येन कौचित् पाणिग्राहं रंहसैवोपयातौ।
हित्वा हेतीर्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥१२॥
शुद्धाः सङ्गं न क्वचित्प्राप्नवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः।
अन्तःसैन्यं विद्विषामाविशन्तो युक्तं चक्रुः सायका वाजितायाः ॥१३॥

---

अन्वयः—कौचित् रोषावेशात् आभिमुख्येन रंहसा उपयातौ (सन्तौ) पाणिग्राहं हेतीः हित्वा मल्लवत् मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥१२॥

टीका—रोषावेशादिति। कौचिद्योधौ रोषावेशाद्रोषपारवश्यादाभिमुख्येन रंहसा वेगेनैवोपयातौ मिथःप्रत्यासन्नौ अतएव पाणिग्राहमन्योन्यं पाणिं गृहीत्वा। "द्वितीयायाञ्चेति णमुल् प्रत्ययः। हेतीः शस्त्राणि हित्वा त्यक्त्वा वैकल्यादिति भावः। "हेतिस्तु शस्त्रे द्वयोरिति केशवः। मल्लवन्मल्लाभ्यां तुल्यम्। "तेन तुल्यमिति वतिप्रत्ययः। मुष्टिघातं मुष्टिभिर्हत्वा। "करणे हन इति णमुल् प्रत्ययः। घ्नन्तौ प्रहरन्तौ। हन्तेर्लटः शत्रादेशः कषादित्वादनुप्रयोगः। मुष्टिभिर्घ्नन्ताविव्यर्थः। बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धम्। "तत्र तेनेदमिति सरूपे" इति बहुव्रीहाविच् कर्मव्यतीहारे" इतीच् प्रत्ययः समासान्तः "अन्येषामपि दृश्यते" इति दीर्घः तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम्। अत्र व्यासृजेतां व्यासक्तवन्तौ। कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदम्। मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ॥१२॥

टिप्पनी—रोषेति। अत्र वीरो रसः, ओजो गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—কোন দুই জন যোদ্ধা ক্রোধবশতঃ পরস্পর পরস্পরের সম্মুখে উপস্থিত হইয়া, অস্ত্র ত্যাগ করিয়া, পরস্পর হস্তধারণপূর্ব্বক মল্ল যোদ্ধার ন্যায় মুষ্টি দ্বারা প্রহার করতঃ, হাতাহাতী যুদ্ধে প্রবৃত্ত হইল ॥১২॥

अन्वयः—शुद्धाः, क्वचित् सङ्गं न प्राप्नवन्तः, दूरात् मुक्ताः, शीघ्रतां दर्शयन्तः, विद्विषाम् अन्तःसैन्यम् आविशन्तः सायकाः वाजितायाः युक्तं चक्रुः ॥१३॥

टीका—शुद्धा इति। शुद्धा निर्विषाः। "न फणिभिर्नापि दग्धैर्नाग्निज्वलिततेजनै-रिति निषेधादिति भावः। अन्यत्र जात्येत्यर्थः। क्वचित् कुत्रापि सङ्गं प्रतिबन्धं न प्राप्नवन्तः न प्राप्ताः दुर्वारा इत्यर्थः। दूरान्मुक्ता दूरत एव विसृष्टाः। "स्तोकान्तिकदूरार्थ-कृच्छ्राणि क्तेनेति समासः, "पञ्चम्याः स्तोकादिभ्य इत्यलुक्। शीघ्रतां जवनत्वं दर्शयन्तः। विद्विषां सैनास्वन्तः अन्तःसैनम्। विभक्त्यर्थेऽव्ययीभावः। आविशन्तः सैनामध्यं प्रविशन्त इत्यर्थः। सायकाः बाणाः। वाजितायाः पक्षवत्तायाः अश्ववत्त्वस्य च। "वाजिता स्वन-पक्षयोरिति विश्वः। युक्तमनुरूपं कर्म चक्रुः। एवंविधसैनाप्रवेशस्य वाजिनामेव संभवादिति भावः। अत्राभिधायाः प्रकृतपक्षमात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीतेः ध्वनिरेवेति न श्लेषावकाशः किन्तु शुद्धादिपदार्थपुञ्जविशेषणगत्या सायकानां युक्तकारितां हेतुत्वात् पदार्थहेतुकाव्यलिङ्गम् ॥१३॥

आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च।
हेलालोला वर्त्म गत्वातिमर्त्यं द्यामारोहन्मानभाजः सुखेन ॥१४॥
रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि।
केचिद्गुर्वीमेत्य संयन्निषद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥१५॥

---

**टिप्पनी**—शुद्धा इति। अत्र बन्धस्य प्रगाढ़त्वात् ओजो गुणः, गौड़ी च रीतिः ॥१३॥

**বাঙ্গালা**=যে সকল বাণ শুদ্ধ অর্থাৎ নির্বিষ ছিল, কোন স্থানে ব্যাঘাত পাইয়াছিল না, দূর হইতে নিক্ষিপ্ত হইয়াছিল, শীঘ্রতা দেখাইতেছিল এবং বিপক্ষ সৈন্যের ভিতরে প্রবেশ করিয়াছিল; সে সকল বাণ, পক্ষশালিতার উপযুক্ত কার্য্যই করিয়াছিল ॥১৩॥

**अन्वयः**—मानभाजः उच्चैः आजेः अग्रिमस्कन्धम् आक्रम्य, अथो वीतशङ्कं शिरश्च आस्थाय हेलालोलाः (सन्तः) अतिमर्त्यं वर्त्म गत्वा सुखेन द्याम् आरोहन् ॥१४॥

**टीका**—आक्रम्येति। मानभाजोऽभिमानवन्तः। उच्चैरुन्नतम् आजेर्युद्धस्याग्रिमस्कन्धमग्रभागमंसप्रदेशं चाक्रम्यारुह्य वीतशङ्कं शिरःसम्मुखम् उत्तमकायं चास्थायारुह्य हेलासु युद्धक्रीड़ासु लीलासु च लोला उत्सुकाः सन्तः अतिमर्त्यं वर्त्म गत्वा अमानुष्यं युद्धं कृत्वेत्यर्थः। अन्यत्रानानुपगम्यमारोहणमार्गं गत्वा सुखेनानायासेन द्यां स्वर्गमभ्रङ्कषं गिरिशिखरादि क्रीड़ास्थानम्। "द्यौः स्वर्गसुखवर्त्मनोरिति विश्वः। आरोहन्नारूढ़ाः। "युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः" इति मनुस्मरणादिति भावः। यथा कथञ्चित् कश्चित् स्कन्धमूर्द्धारोहणक्रमेण किञ्चिद्दुरारोहमद्रितटादिकमारोहति तद्वदिति प्रकृतविशेषणमहिम्नागता समासोक्तिः ॥१४॥

**टिप्पनी**—आक्रम्येति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१४॥

**বাঙ্গালা**—গর্ব্বশালী যোদ্ধারা বিপক্ষসৈন্যের সম্মুখভাগ আক্রমণ করিয়া, তাহার পর নিঃশঙ্কচিত্তে তাহার উৎকৃষ্ট স্থানে থাকিয়া, যুদ্ধকার্য্যে উৎসুক হইয়া, অলৌকিক পথে গমন করিয়া, অনায়াসে স্বর্গে আরোহণ করিতে লাগিল ॥১৪॥

**अन्वयः**—केचित् गुर्वीं संयन्निषद्याम् एत्य अङ्गस्य अन्तः मापितैः लोलैः प्राणमूल्यैः रोदोरन्ध्रं व्यश्नुवानानि स्थावराणि यशांसि क्रीणन्ति स्म ॥१५॥

**टीका**--रोदोरन्ध्रमिति। केचिद्वीराः गुर्वीं महतीं संयतो युध एव निषीदन्त्यस्यामिति निषद्याम्। "आपणस्तु निषद्यायामित्यमरः। "संज्ञायां समजनिषदेत्यादिना क्यप्। एत्यप्राप्य। आङ्पूर्वादिणः क्त्वो ल्यप्। देहस्यान्तरभ्यन्तरे मापितैः परिच्छिन्नैः। मातेर्माङो वा ण्यन्तात् कर्मणि क्तः। अर्त्तिह्रीत्यादिना पुगागमः। लोलैरस्थिरैः प्राणैरेव मूल्यैः प्राणमूल्यैः रोदसोर्द्यावापृथिव्यो रन्ध्रमन्तरालं व्यश्नुवानानि व्याप्नुवन्ति। अश्नोतेर्लटः शानजादेशः। स्थावराणि स्थिराणि यशांसि क्रीणन्ति स्म स्वीचक्रुरित्यर्थः। अथ

वीर्य्योत्साहश्लाघि कृत्वावदानं संग्रामाग्रे मानिनां लज्जितानाम् ।
अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥१६॥
आधावन्तः सम्मुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।
वक्षःपीठैरात्मरीरात्मनैव क्रोधेनान्धाः प्राविशन् पुष्कराणि ॥१७॥

---

न्यूनैः प्राणैः ततोऽधिकयशः परिवर्त्तनात् न्यूनपरिवृत्तिरलङ्कारः । "समन्यूनाधिकानां च यदा विनिमयो भवेत् । सार्क समाधिकन्यूनैः परिवृत्तिरसौ मतेति लक्षणात् ॥१५॥

टिप्पनी—वीर इति । अत्र संयन्नेत्यर्थ्यति निरङ्गकेवलरूपकेण टीकोक्ता परिवृत्तिः सङ्कीर्य्यते । वीरो रसः ओजो गुणः, गौड़ी च रीतिः ॥१५॥

বাঙ্গালা—কতকগুলি যোদ্ধা, যুদ্ধরূপ বিশাল দোকানে আসিয়া, দেহের ভিতরে ওজন করা এবং অচিরস্থায়ী প্রাণরূপ মূল্য দ্বারা, স্বর্গও মর্ত্ত্যের মধ্যদেশব্যাপী এবং চিরস্থায়ী যশ ক্রয় করিল ॥১৫॥

• अन्वयः—नग्नाः संग्रामाग्रे वीर्य्योत्साहश्लाघि अवदानं कृत्वा लज्जितानां शत्रुभिः अज्ञातानां मानिनां श्रीमत् नाम उच्चैः श्रावयन्ति स्म युक्तं ॥१६॥

टीका—वीर्य्योत्साहेति । संग्रामाग्रे रणाग्रे वीर्य्योत्साहाभ्यां श्लाघ्यते इति श्लाघि विक्रमोत्साहश्लाघि । अवदानं महत् कर्म कृत्वा । "अवदानं कर्म वृत्तमित्यमरः । लज्जितानां मानित्वात् स्वनामाख्याने सङ्कोचवतामित्यर्थः । शत्रुभिरज्ञातानाम् अज्ञातनामकानां मानिनां मानशालिनां शूराणां सम्बन्धि श्रीमत् शौर्य्यश्रीयुक्तं नाम नग्नाः वन्दिनः । "वन्दिनि क्षपणे नग्न" इति विश्वः । उच्चैः श्रावयन्ति स्म अयमसाविति कथयामासुरित्यर्थः । युक्तं सर्वमेतदुचितमित्यर्थः । अत्र लज्जमानाज्ञातयोर्विशेषणगत्या वन्दिश्रावणहेतुत्वात् काव्यलिङ्गभेदः ॥१६॥

टिप्पनी—वीर्य्येति । अत्र वीरो रसः, वर्ण्योत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥१६॥

বাঙ্গালা—যে সকল সম্মানশালী মহাবীর, সমরাঙ্গনে শক্তি ও উৎসাহে শোভিত গুরুতর কার্য্য করিয়া লজ্জিত হইয়াছিলেন এবং শত্রুপক্ষ তাঁহাদিগকে চিনিতেছিল না; স্তুতিপাঠকেরা তাঁহাদের শ্লাঘ্য নাম উচ্চস্বরে শুনাইতেছিল; এ কার্য্য তাহাদের সঙ্গতই হইয়াছিল ॥১৬॥

अन्वयः—क्रोधेन अन्धाः अन्ये आधावन्तः (सन्तः) अन्यैः सम्मुखं धारितानां तीक्ष्णकौक्षेयकाणां पुष्कराणि वक्षःपीठैः आ त्सरोः आत्मना एव प्राविशन् ॥१७॥

टीका—आधावन्त इति । क्रोधेनान्धाः अपश्यन्तोऽन्ये भटाः आधावन्तोऽभिमुखमापतन्तः सन्तः अन्यैः सैन्यैः प्रतिद्वन्द्वाभिसम्मुखं धारितानां धृतानां तीक्ष्णकौक्षेयकाणां निशितासीनाम् । "कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढक्प्रत्ययः । पुष्कराणि फलानि

मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः ।
आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती सम्मुखो यः परोऽसौ ॥१८॥
सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणावबद्धा ।
नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित् स्वा कृपाणी ॥१९॥

---

खड्गमुखानीत्यर्थः । "पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च" इति विश्वः । वक्षांसि पीठानीव वक्षःपीठैः वक्षःस्थलैः आ त्सरोरासुष्टेः । "त्सरुः खड्गादिमुष्टौ स्यादित्यमरः । आङ्मर्य्यादाभिविध्योरिति विकल्पादसमासः । आत्मना स्वयमेव परप्रयत्नं विनेत्यर्थः । प्राविशन् प्रविष्टाः । अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात् काव्यलिङ्गभेदः ॥१७॥

टिप्पनी—धावावन्त इति । अत्र रसादयः पूर्ववत् ॥१७॥

বাঙ্গালা—ক্রোধান্ধ অন্য কতকগুলি যোদ্ধা, শত্রুদের প্রতি ধাবিত হইল; তখন যাহাদের প্রতি ধাবিত হইয়াছিল, তাহাদের সম্মুখে অন্যেরা কতকগুলি তীক্ষ্ণ তরবারি সোজা করিয়া ধরিল; তাহাতে ধাবিত যোদ্ধারা আসিয়া বক্ষঃস্থল দ্বারা নিজেরাই সেই তরবারিগুলির মুখ হইতে মুষ্টিপর্য্যন্ত প্রবিষ্ট (বিদ্ধ) হইয়া গেল ॥১৭॥

अन्वयः—तत्र सैन्यद्वये अपि मिश्रीभूते (सति) प्रायेण अयं विशेषः आसीत्, पुरस्तात् ये पराञ्चः, ते आत्मीयाः (आसन्) ; यः पुरस्तात् अभ्यावर्त्ती (सन्) सम्मुखः, असौ परः (आसीत्) ॥१८॥

टीका—मिश्रीभूत इति । तत्र युद्धे सैन्यद्वयेऽपि मिश्रीभूते मिलिते सति प्रायेणायं विशेषोऽसाधारणधर्मो व्यक्तमासीत् । क इत्याह । पुरस्तादग्रे ये पराञ्चः पराङ्मुखाः परेऽपीति भावः । ते आत्मीया अवध्या इत्यर्थः । "न भीतं न परावृत्तमिति वधनिषेधस्मरणात् । यः पुरस्तादभ्यावर्त्ती परावर्त्ती सम्मुखोऽभिमुखः स्वकीयोऽपीति भावः । असौ परः शत्रुर्वध्य इत्यर्थः । प्राणलुब्धस्य स्वामिद्रोहित्वादित्यर्थः ॥१८॥

टिप्पनी—मिश्रीति । अत्र पराञ्चोऽपि आत्मीयाः, सम्मुखोऽपि पर इति विरोधात् पराङ्मुखत्वादिना च तत्समाधानाद्विरोधाभासोऽलङ्कारः । रसादयः पूर्ववत् ॥१८॥

বাঙ্গালা—সেই দুইটা সৈন্য পরস্পর সম্মিলিত হইলে, (অন্যান্য যুদ্ধাপেক্ষা সেই যুদ্ধে) প্রায় জায়গায়ই এইটা বিশেষ হইয়াছিল যে, যাহারা সম্মুখে আসিয়াই পরাঙ্মুখ হইল, তাহারা আত্মীয় অর্থাৎ অবধ্য থাকিল; আর যে যোদ্ধা ধাবিত হইয়া আসিয়া সম্মুখবর্ত্তী হইল, সেই পর অর্থাৎ বধ্য হইল ॥১৮॥

अन्वयः—सद्वंशत्वात् अङ्ग-सङ्गिनीत्वं नीत्वा गौरवेण कामम् अवबद्धा कस्यचित् स्वा कृपाणी परेण वञ्चयित्वा हस्तं नीता (सती) द्रोहं चक्रे ॥१९॥

टीका—सदिति । सद्वंशत्वाच्छुद्धकरत्वात् कुलीनत्वाच्चाङ्गसंसङ्गिनीत्वमङ्गसम्बन्धित्वं नीत्वा । भागुरुत्वविवक्षायां त्वतलोर्गुणवचनस्येति न पुंवद्भावः । कामं गौरवेण भारवत्त्वेन आदरेणावबद्धा संयता च कस्यचित् स्वा स्वकीया कृपाणी असिलता । परेणान्येन वञ्च;

नीते भेदं धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य।
सास्रग्राजिस्तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्रः कङ्कटे लक्ष्यते स्म ॥२०॥
आमूलान्तात् सायकेनायतेन स्यूते बाहौ मण्डूकाश्लिष्टमुष्टेः।
प्राप्यासह्यां वेदनामस्तधैर्यादप्यस्रंस्यच्चर्म नान्यस्य पाणेः ॥२१॥

---

यित्वा प्रतार्य्य वस्तु नीता स्वायत्तीकृता सती द्रोहं हिंसां व्यभिचारं च चक्रे कृतवती। अत्र प्रकृतखड्गपाण्योर्विशेषणसाम्यादप्रकृतस्वैरिण्याप्रतीतेः समासोक्तिः ॥१९॥

**टिप्पनी**—यदिति। अत्र प्रथमार्द्धगतच्छेकानुप्रासेन टीकोक्तसमासोक्तिः संसृज्यते। वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

**বাঙ্গালা**—কোন একখানি অসিলতা, শুদ্ধ আকরে উৎপন্ন হইয়াছিল বলিয়া, কেহ তাহাকে অঙ্গসঙ্গিনী করিয়া আদরপূর্ব্বক ইচ্ছানুসারে রক্ষা করিয়া আসিতেছিল; তখন অন্য কোন ব্যক্তি প্রতারণা করিয়া সে অসিলতা খানিকে হস্তগত করিল; তাহাতে সেই অসিলতাই বিদ্রোহ ঘটাইল ॥১৯॥

**अन्वयः**—शात्रवेण धौतधाराभिघातात् भेदं नीते अम्भोदाभे अपरस्य कङ्कटे सास्रग्राजिः तीक्ष्णमार्गस्य मार्गः विद्युद्दीप्रः लक्ष्यते स्म ॥२०॥

**टीका**—नीत इति। शात्रवेण शत्रुणा। प्रज्ञादित्वात् स्वार्थेऽण् प्रत्ययः। धौताया उत्तेजितायाः धारायाः खड्गधारायाः अभिघातात् भेदं नीते विदारिते अम्भोदाभे मेघश्यामे अपरस्य भटस्य कङ्कटे कवचे। "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमरः। असृग्राज्या सास्रग्राजिः सरक्तरेखः तीक्ष्णमार्गस्य खड्गस्य मार्गः प्रहारो विद्युद्दीप्रस्तडिदुज्ज्वलो लक्ष्यते स्म। उपमालङ्कारः ॥२०॥

**टिप्पनी**—नीत इति। अत्र विद्युद्दीप्रत्वं प्रति सास्रग्राजिपदस्यार्थो हेतुरिति पदार्थहेतुककाव्यलिङ्गेन टीकोक्तोपमा सङ्कीर्य्यते। वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२०॥

**বাঙ্গালা**—কোন শত্রু নিশিত তরবারির আঘাতে অন্য যোদ্ধার মেঘতুল্য শ্যামবর্ণ কবচটাকে খণ্ডিত করিলে, সেই আঘাতের স্থানে রক্তের রেখা বাহির হইল; সুতরাং তীক্ষ্ণধার তরবারির সেই পথটাকে বিদ্যুতের ন্যায় উজ্জ্বল দেখা যাইতে লাগিল ॥২০॥

**अन्वयः**—अन्यस्य बाहौ आयतेन सायकेन आमूलान्तात् स्यूते (सति), असह्यां वेदनां प्राप्य अस्तधैर्यात् अपि मण्डूकश्लिष्टमुष्टेः पाणेः चर्म न अस्रंस्यत् ॥२१॥

**टीका**—आमूलान्तादिति। अन्यस्य भटस्य बाहौ आयतेन दीर्घेण सायकेन आमूलान्तात् मूलप्रदेशपर्य्यन्तम् आकक्षमित्यर्थः। विकल्पादसमासः। स्यूते प्रोते सति असह्यां वेदनां व्यथां प्राप्य अत एवास्तधैर्य्यात् त्यक्तधैर्य्यादपि धारयितुमक्षमादपि मण्डूके संग्रहे श्लिष्टा संदष्टा मुष्टिर्यस्य तस्मात् पाणेश्चर्म फलकम्। "फलकोऽस्त्री फलं चर्म संग्राही

भित्त्वा घोणामायसेनाधिवक्षः स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः ।
शिक्षाहेतोर्गाढरज्ज्वेव बद्धो हर्त्तुं वक्त्रं नाशकद् दुर्मुखोऽपि ॥२२॥
कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाजानेयो दन्तिनस्त्रस्यति स्म ।
कर्मोदारं कीर्त्तये कर्त्तुकामान् किं वा जात्याः स्वामिनो ह्रेपयन्ति ॥२३॥

---

मुष्टिरस्य यं' इत्यमरः। नाभ्रश्यन्नापतत् । अत्र सायकप्रोतमुष्टिस्थैर्ययोर्विशेषणगत्या धैर्यत्यागचर्मभ्रंशौ प्रति हेतुत्वात् काव्यलिङ्गभेदः ॥२१॥

**टिप्पनी**—आमूलान्तादिति । अत्र वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२१॥

**বাঙ্গালা**—অন্য কোন যোদ্ধার বাম বাহুখানা, কক্ষদেশের সহিত, সুদীর্ঘ বাণ দ্বারা আমূল সেলাই করিয়া দিলে; অসহ্য বেদনা পাইয়া সে হাতের ধৈর্য্য লোপ হইলেও, চর্ম্ম-ফলকের গুঠ্‌নিধারী সে হাত হইতে সে চর্ম্মফলক পড়িয়া গেল না ॥২১॥

**अन्वयः**—आयसेन गार्ध्रपक्षेण घोणां भित्त्वा अधिवक्षः विद्धः स्थूरीपृष्ठः शिक्षाहेतोः गाढरज्ज्वा बद्धः इव दुर्मुखः अपि वक्त्रं हर्त्तुं न अशकत् ॥२२॥

**टीका**—भित्त्वेति । आयसेनायोमयेन गार्ध्रो गृध्रसम्बन्धी पक्षः पत्रं यस्य तेन गार्ध्रपक्षेण बाणविशेषेण घोणां नासां भित्त्वा । "घोणा नासा च नासिके"त्यमरः । अधिवक्षो वक्षसि । विभक्त्यर्थेऽव्ययीभावः । विद्धः प्रहृतः । व्यधेः कर्मणि क्तः, ग्रहिज्ये'त्यादिना सम्प्रसारणम् । स्थूरीपृष्ठो नवारूढोऽश्वः शिक्षैव हेतुः तस्य शिक्षाहेतोः शिक्षया निमित्तेन शिक्षार्थमिति यावत् । "षष्ठी हेतुप्रयोगे" इति षष्ठी । गाढरज्ज्वा गाढपाशेन बद्ध इवेत्युत्प्रेक्षा । दुर्मुखोऽप्यशिक्षितमुखोऽपि वक्त्रं हर्त्तुमपाक्रष्टुं नाशकत् न शक्तः । शकेर्लुङि पुषादित्वात् च्लेरङादेशः । शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते अशिक्षितस्तु निबद्धोऽपि झटिति मुखमपहरतीति भावः । अपिर्विरोधे । अतएव विरोधाभासोऽलङ्कारः ॥२२॥

**टिप्पनी**—भित्त्वेति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥२२॥

**বাঙ্গালা**—কোন যোদ্ধা লৌহময় বাণ দ্বারা নবারূঢ় কোন ঘোড়ার নাসিকা ভেদ করিয়া, তাহার বক্ষঃস্থল বিদ্ধ করিল; তাহাতে সে ঘোড়াটাকে শিক্ষার নিমিত্ত দৃঢ় রজ্জু দ্বারা বদ্ধ বলিয়া বোধ হইতে লাগিল; সুতরাং সে ঘোড়াটা অশিক্ষিতমুখ হইয়াও মুখ ফিরাইতে পারিল না ॥২২॥

**अन्वयः**—आजानेयः सादिना कुन्तेन हन्तुम् इष्टात् दन्तिनः न त्रस्यति स्म । जात्याः कीर्त्तये उदारं कर्म कर्त्तुकामान् स्वामिनः किं वा ह्रेपयन्ति ॥२३॥

**टीका**—कुन्तेनेति । आजानेयः कुलीनाश्वः । "आजानेयाः कुलीनाः स्यु"रित्यमरः । "शुभ्रादिभ्यश्चे"ति ढक्प्रत्ययः । सादिना अश्वारोहेण कर्त्रा । उच्चैरुन्नतेन कुन्तेन प्रासेन करणेन हन्तुं प्रहर्त्तुमिष्टादभिप्रेतात् दन्तिनो न त्रस्यति स्म न त्रस्तः । "वा भ्रासे"त्यादिना

**জৈতুং জৈত্রাঃ শেকিরে নারিসৈন্যৈঃ পশ্যন্তোঽধো লোকমস্তেষুজালাঃ ।**
**নাগারূঢ়াঃ পার্বতানি শ্রয়ন্তো দুর্গাণীব ত্রাসহীনাশ্চলানি ॥২৪॥**
**বিষ্বদ্রীচীর্বিক্ষিপন্ সৈন্যবীচীরাজাবন্তঃ ক্বাপি দূরং প্রয়াতম্ ।**
**বভ্রামৈকো বন্ধুমিষ্টং দিদৃক্ষুঃ সিন্ধৌ বাদ্ধৌ মণ্ডলং গোর্বরাহঃ ॥২৫॥**

---

খঞ্ প্রত্যয়ঃ। তথাহি জাত্যাঃ কুলীনাঃ। ভবার্থে যত্প্রত্যয়ঃ। কৌর্ত্যৈ উদারং কর্ম্ম মহাপৌরুষং কর্ত্তুং কামো যেষাং তান্ কর্ত্তুকামান্। "তুং কামমনসোরপীতি মকারলোপঃ। স্বমেষামস্তীতি স্বামিনো ভর্ত্তৄন্। "স্বামিন্নৈশ্বর্য্যে ইতি নিপাতঃ। হ্রেপয়ন্তি লজ্জয়ন্তি কিং ন হ্রেপয়ন্তীত্যর্থঃ। "অর্ত্তিহ্রীত্যাদিনা পুগাগমঃ। সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥২৩॥

টিপ্পনী—কুন্তেনেতি। অত্র বীরো রসঃ, গুণরীতী পূর্ববৎ ॥২৩॥

বাঙ্গালা—কোন অশ্বারোহী কুন্ত দ্বারা কোন হস্তীকে বধ করিবার ইচ্ছা করিল; তখন তাহার বাহন সেই সৎকুলোৎপন্ন অশ্ব, সে হস্তীর সম্মুখে থাকিয়াও ভীত হইল না। কারণ, স্বামীরা যখন যশের জন্য কোন গুরুতর কার্য্য করিবার ইচ্ছা করেন, তখন কুলীন সেবকেরা তাঁহাদিগকে কি লজ্জিত করিয়া থাকে? (কখনই না) ॥২৩॥

অন্বয়ঃ—অরিসৈন্যৈঃ জৈত্রাঃ, লোকম্ অধঃ পশ্যন্তঃ, অস্তেষুজালাঃ, নাগারূঢ়াঃ (অতএব) চলানি পার্বতানি দুর্গাণি শ্রয়ন্তঃ ইব ত্রাসহীনাঃ (যোদ্ধারঃ) জেতুং ন শেকিরে ॥২৪॥

টীকা—জেতুমিতি। জেতার এব জৈত্রাঃ জয়শীলাঃ। জৈত্রপ্রভৃতেঃ প্রজ্ঞাদিত্বাৎ স্বার্থেঽণ্ প্রত্যয়ঃ। লোকং জনমধঃ পশ্যন্তঃ স্বয়মুপর্য্যবস্থানাৎ লোকমধোদেশে পশ্যন্তঃ অধঃকৃতং মন্যমানাশ্চ। অস্তেষুজালাঃ ক্ষিপ্তশরনিকরাঃ ত্রাসহীনা দুর্গস্থত্বান্নির্ভীকাঃ। নাগারূঢ়াঃ গজারোহাঃ চলন্তি গচ্ছন্তীতি চলানি জঙ্গমানি। "চরিষ্ণুজঙ্গমচরত্রসমিঙ্গং চরাচরমিত্যমরঃ। পার্বতানি পর্বতসম্বন্ধীনি দুর্গাণি গিরিদুর্গাণীত্যর্থঃ। শ্রয়ন্তোঽধিতিষ্ঠন্ত ইব ইতি উৎপ্রেক্ষা। তেঽপ্যেবংভূতা এবেতি ভাবঃ। অরিসৈন্যৈঃ কর্তৃভিঃ জেতুং ন শেকিরে অশক্যা বভূবুরিত্যর্থঃ। শক্তেঃ কর্ম্মণি লিট্। অত্র মনুঃ। "ধনুর্দুর্গং মহীদুর্গমব্দুর্গং বনমেব চ। নৃদুর্গং গিরিদুর্গঞ্চ সমাশ্রিত্য বসেন্নৃপঃ। সর্বেণৈব প্রকারেণ গিরিদুর্গং সমাশ্রয়েৎ। তেষাং হি বহুগুণ্যেন গিরিদুর্গং বিশিষ্যতে" ইতি ॥২৪॥

টিপ্পনী—জেতুমিতি। অত্র বীরো রসঃ, ওজো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৪॥

বাঙ্গালা—যাহারা হস্তীতে আরোহণ করিয়াছিল, তাহারা যেন গমনশীল পার্ব্বত্য-দুর্গ আশ্রয় করিয়াছিল; সুতরাং তাহারা নির্ভয় হইয়া বাণজাল নিক্ষেপ করিতেছিল, জয় করিতেছিল এবং অন্যান্য লোককে নীচে দেখিতেছিল; অতএব তাহাদিগকে বিপক্ষ-সৈন্যেরা জয় করিতে পারিল না ॥২৪॥

অন্বয়ঃ—একঃ বিষ্বদ্রীচীঃ সৈন্যবীচীঃ বিক্ষিপন্ অন্তঃ ক্বাপি দূরং প্রয়াতম্ ইষ্টং বন্ধুং দিদৃক্ষুঃ (সন্) ক্বাপি প্রয়াতং গোঃ মণ্ডলং দিদৃক্ষুঃ আদ্যঃ বরাহঃ সিন্ধৌ বা আজৌ বভ্রাম ॥২৫॥

यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य।
सैनाज्ञानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन् दानकुल्याः ॥२६॥

क्रुध्यन् गन्धादन्यनागाय दूरादारोढारं धूतमूर्द्धावमत्य।
घोरारावध्वानिताशेषदिक्कं विष्वक् नागः पर्य्यणंसीत् स्व एव ॥२७॥

---

**टीका**—विष्वगिति। एकः कोऽपि वीरः। विष्वगञ्चतीति विष्वद्रीचीः सर्वव्यापिनीः। "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" इति टेरद्र्यादेशः धातोरप्यञ्चतेरुपसङ्ख्यानादुगितश्चेति ङीप् अच इत्यकारलोपे चाविति दीर्घः। सैन्यानि वीचिरिव सैन्यवीचिरित्युपमितसमासः। सिन्धौ वेति लिङ्गात् विपिचपत्तपाक्षुवंश। अन्तः आजिमध्ये क्वापि दूरं प्रयातम इष्टं बन्धुं दिदृक्षुर्द्रष्टुमिच्छुः सन्। दृशेः सनन्तादुप्रत्ययः क्वापि प्रयातं मग्नं भीमं गोमण्डलं दिदृक्षुराद्यो वराहः सिन्धौ वा समुद्रे इव। "उपमायां विकल्पे वे"त्यमरः। आजौ बभ्राम एकवीरस्य कुतो भयमित्यर्थः ॥२५॥

**टिप्पनी**—विष्वगिति। अत्र श्रौतोपमालङ्कारः। औत्सुक्यं व्यभिचारी भावः। ओजो गुणः, गौड़ी च रीतिः ॥२५॥

**বাঙ্গালা**—পূর্ব্বকালে গোসমূহ কোন স্থানে গিয়াছিল, সে গুলিকে দেখিবার ইচ্ছা করিয়া আদি বরাহ যেমন সমুদ্রমধ্যে ভ্রমণ করিয়াছিল; সেইরূপ কোন প্রিয় বন্ধু যুদ্ধের মধ্যে দূরে কোন স্থানে গিয়াছিল, তাহাকে দেখিবার ইচ্ছা করিয়া কোন অদ্বিতীয় বীর, সর্ব্বব্যাপী সৈন্যতরঙ্গগুলিকে বিক্ষিপ্ত করিয়া যুদ্ধমধ্যে ভ্রমণ করিতে লাগিল ॥২৫॥

**अन्वयः**—व्युत्थानज्ञ हस्तिचारी मदस्य बोधनाय यावत् अञ्जनं न चक्रे, तावत् सैनाज्ञानात् आत्मना एव दन्तिनां स्थूलाः दानकुल्याः प्रावहन् ॥२६॥

**टीका**—यावदिति। व्युत्थानं गजोत्थापनं जानातीति व्युत्थानज्ञः हस्तिनि चरतीति हस्तिचारी यन्ता। मदस्य बोधनायोत्थापनायाञ्जनमुद्दीपनं कर्म यावन्न चक्रे तावत प्रागेव। असमाप्ते विधावित्यर्थः। सैनाज्ञानात् सैन्यकलकलश्रवणादित्यर्थः। दन्तिनामात्मना स्वयमेव स्थूला महत्यो दानकुल्या मदसरितः प्रावहन् इति दन्तिनामुत्साहातिरेकोक्तिः। अञ्जनात् प्राग् दानसम्बोक्त्यतिशयोक्तिः ॥२६॥

**टिप्पनी**---यावदिति। अत्र वन्योत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ॥२६॥

**বাঙ্গালা**—হস্তিগণের উত্থাপনে অভিজ্ঞ হস্ত্যারোহীরা, সে গুলির মত্ততা জন্মাইবার জন্য যে পর্য্যন্ত উদ্দীপনা না করিয়াছিল; তাহার মধ্যেই সৈন্যগণের কোলাহল শুনিয়া সেই হস্তিগণের নিজ হইতেই বৃহৎ মদজলের নদী সকল প্রবাহিত হইল ॥২৬॥

**अन्वयः**—नागः दूरात् गन्धात् अन्यनागाय क्रुध्यन् धूतमूर्द्धा (सन्) आरोढारम् अवमत्य, घोरारावध्वानिताशेषदिक्कं स्वः एव विष्वक् पर्य्यणंसीत् ॥२७॥

**टीका**—क्रुध्यन्निति। दूरात् दूरत एव गन्धात् मदगन्धाघ्राणात् अन्यनागाय प्रति-

प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि ।
क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षाञ्चक्रे नैव किञ्चिन्मदान्धः ॥२८॥
तूर्णं यावन्नापनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य ।
तावत्पूगैरन्यनागाधिरूढः कादम्बानामेकपातैरसीव्यत् ॥२९॥

---

गजाय क्रुध्यन् तं जिघांसुरित्यर्थः । क्रुधद्रुहेत्यादिना सम्प्रदानत्वम् । नागो धूतमूर्द्धा विधूतमस्तकः सन् । आरोढारं यन्तारम् अवमत्य अवधुय । घोरारावैर्दारुणक्रन्दनैः ध्वानिता अशेषदिशो येन तस्मिन् तथा उच्चैराक्रोशतीत्यर्थः । शेषिकः कप्प्रत्ययः । स्वे स्वकीय एव स्वपुत्र एवेत्यर्थः । "पूर्वादिभ्यो नवभ्यो वेति विकल्पान्न स्मिन्नादेशः । अतएव स्वे स्वपुत्रे विप्के इति श्लिष्टगत्या व्याख्याय पुत्रस्यापि ज्ञातित्वाच्च सर्वनामसंज्ञेति वल्लभोक्तिः प्रामादिकी । विप्के विंशतिवर्षके डिम्भे । "विप्को विंशतिवर्षक" इति वैजयन्ती । पर्य्यशंसीत् तिर्य्यक् प्रजहारेत्यर्थः । "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मत" इति हलायुधः । "यमरमनमातां सक् चेति नमेलुङि सगिडागमौ नेटीति वृद्धिप्रतिषेधः ॥२७॥

टिप्पनी—क्रुध्यन्निति । अत्र पूर्ववत् ओजो गुणः, गौड़ी च रीतिः ॥२७॥

বাঙ্গালা—কোন হস্তী দূর হইতেই গন্ধ পাইয়া, বিপক্ষহস্তীর প্রতি ক্রুদ্ধ হইয়া, মস্তক কম্পিত করিয়া, আরোহীকে অবজ্ঞা করিয়া ধাবিত হইল; তখন তাহারই বিংশতি-বর্ষবয়স্ক পুত্র ভয়ঙ্কর চীৎকার করিয়া সমস্ত দিক্ প্রতিধ্বনিত করিতে লাগিল; এমন সময়ে সেই হস্তী আসিয়া সেই পুত্রের উপরেই তেরচা ভাবে দন্তপ্রহার করিল ॥২৭॥

अन्वयः—प्रातिपक्षे दन्तिनि प्रत्यासन्ने (सति) यन्त्रा प्रास्तवक्त्रच्छदः अपि क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः मदान्धः नागः न किञ्चित् एव प्रेक्षाञ्चक्रे ॥२८॥

टीका—प्रत्यासन्न इति । प्रातिपक्षे प्रतिपक्षसम्बन्धिनि । तस्येदमित्यण् । दन्तिनि गजे प्रत्यासन्ने सति यन्त्रा सादिना प्रास्तवक्त्रच्छदोऽपि निरस्तमुखपटोऽपि क्रोधाक्रान्तः अत एव क्रूरं घोरं निर्दारिताक्षः तथापि मदान्धो नागो न किञ्चिदेव प्रेक्षाञ्चक्रे । किमपि पुरोगतं प्रातिपक्षमन्यद्वा न ददर्शेत्यर्थः । आवरणान्तराभावेऽपि मदावरणस्यानपायादिति भावः । "इजादेश्च गुरुमतोऽनृच्छ" इत्यादेशः इत्याम्प्रत्ययः । अत्रानावृतोन्मीलिताक्षस्याप्यदर्शनविरोधस्य मदान्धेनाविरोधाद्विरोधाभासोऽलङ्कारः ॥२८॥

टिप्पनी—प्रत्यासन्न इति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥२८॥

বাঙ্গালা—বিপক্ষের হাতী নিকটবর্ত্তী হইলে, মাহুত নিজের হাতীর মুখের আবরণ খুলিয়া দিলেও, সে হাতী ক্রোধে ভয়ঙ্করভাবে চোখ মেলিয়াও, মদজলে অন্ধ থাকায় কিছুই দেখিতে পাইল না ॥২৮॥

अन्वयः—निषादी वारणस्य चक्षुर्वारणं वासः यावत् तूर्णं न अपनिन्ये, तावत् अन्यनागाधिरूढः एकपातैः कादम्बानां व्रातैः पूगैः असीव्यत् ॥२९॥

আস্থদ্দৃষ্টেরাচ্ছদস্য প্রমত্তো যন্তা যাতুঃ প্রত্যরীভং দ্বিপস্য।
মগ্নস্যোচ্চৈর্বর্হভারেণ শঙ্কোরাবধ্নাতি বীক্ষণে চ ক্ষণেন ॥৩০॥
যত্নাদূহন্ সুস্থিতত্বাদনাশং নিশ্চিত্যান্যশ্চেতসা ভাবিতেন।
অন্ত্যাবস্থাকালযোগ্যোপযোগং দধ্রেঽভীষ্টং নাগমাপদ্ধনং বা ॥৩১॥

---

**টীকা**—তূর্ণমিতি। নিষাদী যন্তা বারণস্য গজস্য চক্ষুর্বারণং নেত্রাবরণং বাসো মুখপটং যাবত্তূর্ণং নাপনিন্যে নাপচকার তাবদন্যনাগাধিরূঢ়ঃ প্রতিগজাধিরোহঃ একঃ এককালীনঃ পাতো যেষান্তৈরেকপাতৈর্যুগপৎপাতিভিরিতি শ্রীমন্তোক্তিঃ। কাদম্বানাং শরাণাম্। "কাদম্বমার্গণশরাঃ" ইত্যমরঃ পূগৈর্ব্রাতৈরসীব্যত। চক্ষুষা সহ তদ্বাসঃ স্যূতবানিত্যর্থঃ। সীব্যতের্লঙ্। অত্র চক্ষুষঃ সীবনাসম্বন্ধেঽপি সম্বন্ধোক্তেরতিশয়োক্তিঃ ॥২৯॥

**টিপ্পনী**—তূর্ণমিতি। অত্র বারণং বারণস্যেতি ছেকানুপ্রাসেন টীকোক্তাতিশয়োক্তিঃ সংসৃজ্যতে। বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৯॥

**বাঙ্গালা**—মাহুত নিজের হাতীর চোকের আবরণবস্ত্র যে পর্য্যন্ত তাড়াতাড়ি না সরাইয়া দিল; তাহার মধ্যেই অন্য হস্ত্যারোহী বিপক্ষ যোদ্ধা, এককালীন বহুতর বাণ দ্বারা সে হাতীটার আবরণবস্ত্রের সহিত চোখ দুইটাকে সেলাই করিয়া দিল ॥২৯॥

**অন্বয়ঃ**—যন্তা প্রমত্তঃ (সন্) প্রত্যরীভং যাতুঃ দ্বিপস্য দৃষ্টেঃ আচ্ছদম্ আস্থৎ চ; মগ্নস্য শঙ্কোঃ উচ্চৈঃ বর্হভারেণ ক্ষণেন বীক্ষণে আবধ্নাতি চ ॥৩০॥

**টীকা**—আস্থদিতি। যন্তা প্রমত্তঃ সন্ প্রত্যরীভমরিগজং প্রতি আভিমুখ্যেঽব্যয়ীভাবঃ। যাতুর্গন্তুঃ। যাতেস্তৃচ্। দ্বিপস্য দৃষ্টেরাচ্ছদমাবরণম্। পুংসি সংজ্ঞায়াং ঘঃ। আস্থৎ নিরস্তবান্। "অস্যতিবক্তিখ্যাতিভ্যোঽঙিতি চ্লেরঙাদেশঃ "অস্যতেস্থুগিতি থুগাগমঃ। মগ্নস্য মুখনিমগ্নস্য শঙ্কোঃ শল্যায়ুধস্য। "বা পুংসি শল্যং শঙ্কুর্না"ইত্যমরঃ। উচ্চৈর্বর্হভারেণ পিচ্ছপটলেন বীক্ষণে চক্ষুষী ক্ষণেনাবধ্নাতি আবৃণোতি বধ্নাতেঃ কর্মণি লট্। অন্যোন্যসমুচ্চয়চকারাভ্যাম্ আবরণনিরাসে পুনরাবরণয়োরেককালে সম্বন্ধোক্তেরতিশয়োক্তিঃ ॥৩০॥

**টিপ্পনী**—আস্থদিতি। অত্র চতুর্থপাদগতেন ছেকানুপ্রাসেন টীকোক্তাতিশয়োক্তিঃ সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩০॥

**বাঙ্গালা**—নিজের হাতী, বিপক্ষের হাতীর দিকে যাইতে লাগিল; তখন মাহুত অসাবধান হইয়া তাহার চোখের আবরণের কাপড় যেই সরাইয়া দিল; অমনি ক্ষণকালের মধ্যেই তাহার মুখমগ্ন অঙ্কুশের ময়ূরপাখা আসিয়া পড়িয়া, সে হাতীর চোখ দুইটাকে আবৃত করিল ॥৩০॥

**অন্বয়ঃ**—অন্যঃ ভাবিতেন চেতসা সুস্থিতত্বাৎ অনাশং নিশ্চিত্য যত্নাৎ ঊহন্ (সন্) অন্ত্যাবস্থাকালযোগ্যোপযোগম্ অভীষ্টং নাগম্ আপদ্ধনং বা দধ্রে ॥৩১॥

अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः ।
उन्मूर्द्धानः सन्निपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥३२॥
द्राघीयांसः संहताः स्थेमभाजश्चारुदंष्ट्रास्तीक्ष्णतामत्यजन्तः ।
दन्ता दन्तैराहताः सामजानां भङ्गं जग्मुर्न स्वयं सामजाताः ॥३३॥

---

**टीका**—यत्नादिति । अन्यः गजारोहः भावितेनालोचितेन चेतसा सुस्थितत्वादनपायिदेशत्वादनाशमनपायं निश्चित्य यत्नाद्रक्षन् वस्तुकेभ्यस्त्रायन् सन् । अन्त्यावस्थाकाले साधनान्तरकाले नाशकाले योग्योपयोगम् अतएवाभीष्टं नागं गजमापद्धनं वापद्धनमिव दध्रे अन्यतोपसर्त्यं धारयामास । धरतेः स्वरितेत्त्वात् कर्त्तरि लिट् तङ् ॥३१॥

**टिप्पनी**—यत्नादिति । अत्र पूर्णोपमालङ्कारः, वीरो रसः, ओजो गुणः, गौडी च रीतिः ॥३१॥

**বাঙ্গালা**—অন্য কোন হস্ত্যারোহী যোদ্ধা, আপন ভাবুক চিত্তদ্বারা, 'নিরাপদ স্থানে রহিয়াছে বলিয়া নষ্ট হইবে না' ইহা নিশ্চয় করিয়া, যত্নপূর্ব্বক রক্ষা করতঃ, চরম অবস্থার সময়ে উপযোগী বলিয়া প্রিয় হাতীটাকে, আপদ্ধনের ন্যায় সাবধানে রাখিতে লাগিল ॥৩১॥

**अन्वयः**—इभाः पुष्करैः अन्योन्येषां दानोद्भेदान् आमृशन्तः उच्चकैः भुग्नवालाः उन्मूर्द्धानः (सन्तः) स्पष्टदन्तध्वनि सन्निपत्य अपरान्तैः (सह) प्रायुध्यन्त ॥३२॥

**टीका**—अन्योन्येषामिति । इभा गजाः अन्योन्येषां परस्परेषाम् । "कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः" इति वक्तव्यात् द्वित्वम् । "समासवच्च बहुलमिति विकल्पादसमासत्वपक्षे पूर्वपदस्य प्रथमैकवचनं वक्तव्यम् । उद्भिद्यन्ते एष्विति उद्भेदाः । "अकर्त्तरि च कारके संज्ञायामित्यधिकरणार्थे घञ् प्रत्ययः । दानोद्भेदान् । कटादिमदस्थानानि पुष्करैः हस्ताग्रैः । "पुष्करं करिहस्ताग्रमित्यमरः । आमृशन्तो जिघ्रन्त उच्चकैरत्यन्तं भुग्नवालाः प्रह्वीकृतपुच्छाः । "वालः केशे शिशौ मूर्खे वालो वाजीभपुच्छयोरित्यमरः । उन्मूर्द्धानः उन्नतमस्तकाः सन्तः स्पष्टदन्तध्वनि यथा तथा सन्निपत्यापरान्तैः सह प्रायुध्यन्त । दिवादियुध्यतेः कर्त्तरि लङ् । स्वभावोक्तिः ॥३२॥

**टिप्पनी**—अन्योन्येषामिति । अत्र ओजो गुणः, गौडी च रीतिः ॥३२॥

**বাঙ্গালা**—হস্তিসমূহ শুণ্ডদ্বারা পরস্পর পরস্পরের মুখপ্রভৃতি মদজলের স্থানগুলিকে স্পর্শ করতঃ, দীর্ঘ লাঙ্গুলগুলিকে অবনত করিয়া এবং মস্তক উত্তোলন করিয়া, ধাবিত হইয়া স্পষ্ট দন্তধ্বনি করিয়া, বিপক্ষের সঙ্গে যুদ্ধ করিতে লাগিল ॥৩২॥

**अन्वयः**—द्राघीयांसः संहताः स्थेमभाजः चारुदंष्ट्राः तीक्ष्णताम् अत्यजन्तः सामजानां दन्ताः दन्तैः आहताः (सन्तः) भङ्गं जग्मुः ; सामजाताः स्वयं (तु) भङ्गं न जग्मुः ॥३३॥

**टीका**—द्राघीयांस इति । द्राघीयांसो दीर्घतराः । "प्रियस्थिरेत्यादिना दीर्घस्य ईयसुनि द्राघादेशः । संहताः सुघटिताः अतएव स्थेमभाजः स्थैर्यभाजः । "प्रियस्थिरेत्यादिना स्थिरशब्दस्येमन्विषये स्थादेशः । चारवो रम्या उदग्रा उन्नताः ते चारुदंष्ट्राः । विशे-

मातङ्गानां दन्तसङ्घट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ।
लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥३४॥
ओघामासे मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मावहां घर्षयोत्थैः ।
यौगान्तैर्वा वह्निभिर्वारणानामुच्चैर्मूर्द्धव्योम्नि नक्षत्रमाला ॥३५॥

---

षष्ठसमासः। तीक्ष्णतां नैशित्यम् अत्यजन्तः सामजानां गजानां दन्ता दन्तैः प्रतिगजविषाणैः आहताः सन्तो भङ्गं भेदं जग्मुः बभञ्जुः। सामजाताः दन्तिनस्तु स्वयं भङ्गं पराजयं न जग्मुः दन्तभङ्गेऽपि स्वयं न परावर्त्तन्त इत्यर्थः। अत्रापरावर्त्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयानां दन्तिनामुपमानदन्तापेक्षया अभग्नत्वेनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगितायाः वाधक इति गमयितव्यम् ॥३३॥

**टिप्पनी**—द्राघीति। अत्रापि गुणरीती पूर्ववत् ॥३३॥

**বাঙ্গালা**—হস্তিসমূহের দন্তসকল সুদীর্ঘ, সুঘটিত, সুদৃঢ়, সুন্দর, উচ্চ ও তীক্ষ্ণ ছিল; সেই দন্তগুলি বিপক্ষ হস্তীর দন্ত দ্বারা আহত হইয়া ভাঙ্গিয়া গেল; কিন্তু সে হস্তিসমূহ স্বয়ং পরাস্ত হইল না ॥৩৩॥

**अन्वयः**—मातङ्गानां दन्त-संघट्ट-जन्मा हेम-च्छेदच्छाय चञ्चच्छिखाग्रः अग्निः माञ्जिष्ठेषु चामरेषु लग्नः अपि सैन्यैः प्रकामं न व्यज्यते स्म ॥३४॥

**टीका**—मातङ्गानामिति। मातङ्गानां दन्तिनां दन्तसङ्घट्टजन्मा दन्तसङ्घर्षोत्थः हेमच्छेदच्छायानि कनकपरागवर्णानि चञ्चन्ति चलन्ति च शिखाग्राणि ज्वालाग्राणि यस्य सोऽग्निः मञ्जिष्ठया ओषधिविशेषेण रक्तेषु माञ्जिष्ठेषु। "तेन रक्तं रागादित्यण् प्रत्ययः। "मञ्जिष्ठा विकसा जिङ्गीत्यमरः। चामरेषु लग्नोऽपि सैन्यैः प्रकामं न व्यज्यते न विविच्यते स्म सावर्ण्यादिति भावः। अतः सामान्यालङ्कारः। "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता" इति लक्षणात्। स च विशेषणोत्थया व्यलिङ्गसङ्कीर्णः ॥३४॥

**टिप्पनी**—मातङ्गानामिति। अत्र द्वितीयपादगतलुप्तोपमायाश्चानुप्रासाभ्यां टीकोक्तसङ्करः पुनः संसृज्यते। ओजो गुणः, गौड़ी च रीतिः ॥३४॥

**বাঙ্গালা**—হস্তিগণের পরস্পর দন্তঘর্ষণে অগ্নি উৎপন্ন হইয়াছিল; তাহার শিখাগুলি স্বর্ণরেণুর ন্যায় চারিদিকে ছড়াইয়া পড়িয়াছিল; সে অগ্নি, মঞ্জিষ্ঠারঞ্জিত চামরে লাগিলেও, সৈন্যেরা তাহা ভাল করিয়া বুঝিতে পারিয়াছিল না ॥৩৪॥

**अन्वयः**—मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मावहां घर्षयोत्थैः यौगान्तैः वा वह्निभिः वारणानाम् उच्चैः मूर्द्धव्योम्नि नक्षत्रमाला ओघामासे ॥३५॥

**टीका**—ओघामासे इति। मत्सरो वैरमेवोत्पातवातः आकस्मिकवायुस्तेनाश्लिष्यतां संयुज्यमानानां दन्तानामेव क्ष्मावहां वृक्षाणां घर्षयोनोत्थं जन्म येषां तैर्वह्निभिर्यौगान्तैर्वा युगान्तभवैर्वह्निभिरिव वारणानामुच्चैरुन्नतैः मूर्धा व्योमेव तस्मिन् मूर्द्धव्योम्नि नक्षत्रमाला

সান্দ্রাম্ভোদশ্যামলে সামজানাং বৃন্দে নীতাঃ শোণিতৈঃ শোণিমানম্ ।
দন্তাঃ শোভামাপুরম্ভোনিধীনাং কন্দোদ্ভেদা বৈদ্রুমা বারিণীব ॥৩৬॥
আকম্প্রাগ্রৈঃ কেতুভিঃ সন্নিপাতং তারোদীর্ণগ্রৈবনাদং ব্রজন্তঃ ।
মগ্নানঙ্গে গাঢ়মন্যদ্বিপানাং দন্তান্ দুঃখাদুৎখনন্তি স্ম নাগাঃ ॥৩৭॥

---

হারবিশেষঃ। "সৈব নক্ষত্রমালা স্যাৎ সপ্তবিংশতিমৌক্তিকৈ"রিত্যমরঃ। জ্যোতিষাং নক্ষত্রস্য ওষামাস তত্ত্বৌষ দগ্ধেত্যর্থঃ। ওষ দাহে ইতি ধাতোঃ কর্ম্মণি লিট্। "উষবিদজাগৃভ্যোঽন্যতরস্যা"মিত্যাম্প্রত্যয়ঃ লঘূপধগুণঃ "কৃঞ্চানুপ্রযুজ্যতে লিটী"ত্যস্তেরনুপ্রয়োগঃ। অত্র নক্ষত্রজালয়োরভেদাধ্যবসায়েন নির্দ্দেশাৎ রূপকস্য প্রসক্তাবার্থ্যুপমা ॥৩৫॥

টিপ্পনী—ওষামাস ইতি। অত্র ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৫॥

বাঙ্গালা—ক্রোধরূপ বায়ুর বেগে হস্তিগণের দন্তরূপ বৃক্ষ সকল পরস্পর সম্মিলিত হইয়াছিল; তাহার ঘর্ষণে প্রলয়কালীন অগ্নির ন্যায় অগ্নি উৎপন্ন হইয়াছিল; সেই অগ্নি, হস্তিগণের উন্নত মস্তকরূপ আকাশে যে নক্ষত্রমালা (মুক্তার মালা, তারাসমূহ) ছিল তাহাকে দগ্ধ করিল ॥৩৫॥

অন্বয়ঃ—সান্দ্রাম্ভোদশ্যামলে সামজানাং বৃন্দে শোণিতৈঃ শোণিমানং নীতাঃ দন্তাঃ অম্ভোনিধীনাং বারিণি বৈদ্রুমাঃ কন্দোদ্ভেদাঃ ইব শোভাম্ আপুঃ ॥৩৬॥

টীকা—সান্দ্রেতি। সান্দ্রং চ তদম্ভোদশ্যামলং চ তস্মিন্ সামজানাং গজানাং বৃন্দে শোণিতৈঃ শোণিমানমারক্তত্বং নীতাঃ দন্তাঃ অম্ভোনিধীনাং বারিনিধীনাং বারিণীব বিদ্রুমাণাং প্রবালানাম্ ইমে বৈদ্রুমাঃ। "বিদ্রুমঃ পুংসি প্রবালং পুংনপুংসক"মিত্যমরঃ। কন্দো মূলপিণ্ডঃ তস্যোদ্ভেদাঃ প্ররোহা ইব শোভামাপুরিত্যুপমা ॥৩৬॥

টিপ্পনী—সান্দ্রেতি। অত্র দ্বিতীয়পাদগতচ্ছেকানুপ্রাসেন টীকোক্তোপমা সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩৬॥

বাঙ্গালা—মেঘের ন্যায় নিবিড় শ্যামবর্ণ সমুদ্রের জলে প্রবালের অঙ্কুর যেমন শোভা পায়; সেইরূপ মেঘের ন্যায় নিবিড় শ্যামবর্ণ হস্তিসমূহের গাত্রে রক্ত দ্বারা রক্তবর্ণ দন্তসকল শোভা পাইতে লাগিল ॥৩৬॥

অন্বয়ঃ—আকম্প্রাগ্রৈঃ কেতুভিঃ সন্নিপাতং ব্রজন্তঃ নাগাঃ তারোদীর্ণগ্রৈবনাদম্ অন্যদ্বিপানাম্ অঙ্গে গাঢ়ং মগ্নান্ দন্তান্ দুঃখাৎ উৎখনন্তি স্ম ॥৩৭॥

টীকা—আকম্প্রাগ্রৈরিতি। আকম্প্রাণি দন্তোৎখননসংক্ষোভাদ্ভৃশং কম্পনশীলান্যগ্রাণি যেষাং তৈঃ কেতুভির্ধ্বজৈঃ সন্নিপাতং সঙ্ঘর্ষং ব্রজন্ত ইতি দুঃখহেতূক্তিঃ। নাগা গজাস্তারমুচ্চৈরুদীর্ণাঃ উৎপন্নাঃ গ্রৈবাণাং গ্রীবাসূৎপন্নানাং ঘণ্টাশৃঙ্খলভূষণাদীনাং নাদো যস্মিন্ কর্ম্মণি তত্তথা অন্যদ্বিপানাং প্রতিগজানাম্ অঙ্গে গাঢ়ং মগ্নান্ অন্তঃপ্রবিষ্টান্ দন্তান্ দুঃখাদুৎখনন্তি

উৎক্ষিপ্যোচ্চৈঃ প্রস্ফুরন্তং রদাভ্যামীষাদন্তঃ কুঞ্জরং শারদীয়ম্।
শৃঙ্গপ্রোতপ্রাবৃষেণ্যাম্বুদস্য স্পষ্টং প্রাপৎ সাম্যমুর্বীধরস্য॥৩৮॥
ভগ্নেঽপীভে স্বে পরাবৃত্য দেহং যোদ্ধা সার্দ্ধং ব্রীড়য়া মুঞ্চতীষূন্।
সাকং যন্তুঃ সম্মদেনানুবন্ধী দূনোঽভীক্ষ্ণং বারণঃ প্রত্যরোধি॥৩৯॥

---

চ তেষাং গাঢ়মগ্নত্বাৎ স্বয়ং কেতুমারাক্রান্তত্বাচ্চ কম্পাদুজ্জৃম্ভুরিত্যর্থঃ। অলঙ্কারমঞ্জনয়োর্বিশেষণগত্যা দুঃখাদুৎখননহেতুত্বাৎ কাব্যলিঙ্গম্॥৩৭॥

**টিপ্পনী**—আকম্প্রেতি। অত্র ওজো গুণঃ, গৌড়ী চ রীতিঃ॥৩৭॥

**বাঙ্গালা**—হস্তিগণ যখন বিপক্ষ হস্তীগুলির গাত্রে প্রগাঢ়ভাবে আপনাদের দন্তগুলি প্রবেশ করাইয়া দেয়; তখন সেগুলির গলার অলঙ্কারের উচ্চ শব্দ হইয়াছিল এবং ধ্বজে ধ্বজে সংঘর্ষ লাগিয়া সেগুলির অগ্রভাগ কাঁপিয়া উঠিয়াছিল; তাহার পর সেই হস্তিগণ কষ্টে আপনাদের দাঁতগুলি তুলিয়া আনিয়াছিল॥৩৭॥

**অন্বয়ঃ**—ঈষাদন্তঃ (হস্তী) রদাভ্যাং প্রস্ফুরন্তং শারদীয়ং কুঞ্জরম্ উচ্চৈঃ উৎক্ষিপ্য, শৃঙ্গ-প্রোত-প্রাবৃষেণ্যাম্বুদস্য উর্বীধরস্য সাম্যং স্পষ্টং প্রাপৎ॥৩৮॥

**টীকা**—উৎক্ষিপ্যেতি। ঈষে লাঙ্গলদণ্ডাবিব দন্তৌ যস্য স ঈষাদন্তো মহাদন্তো দন্তী। "ঈষা লাঙ্গলদণ্ডঃ স্যাৎ" ইত্যমরঃ। প্রস্ফুরন্তং প্রত্যাক্রমণাদুৎসাহাদুল্লসন্তং শরদি ভবং শারদীয়ং কুঞ্জরং রদাভ্যাং দন্তাভ্যাম্ উচ্চৈরুৎক্ষিপ্যোর্দ্ধমুৎক্ষিপ্য শৃঙ্গে শিখরে প্রোতঃ স্যূতঃ প্রাবৃষেণ্যঃ প্রাবৃষি ভবোঽম্বুদো যস্য তস্য। প্রাবৃষ এণ্য ইত্যেণ্যপ্রত্যয়ঃ। উর্বীধরস্য গিরেঃ সাম্যং সাদৃশ্যং স্পষ্টং প্রাপৎ। আপ্নোতের্লুঙি পুষাদিত্বাৎ চ্লেরঙাদেশঃ। উপমা॥৩৮॥

**টিপ্পনী**—উৎক্ষিপ্যেতি। অত্রাপি গুণরীতী পূর্ব্ববৎ॥৩৮॥

**বাঙ্গালা**—যাহার দন্তযুগল লাঙ্গলদণ্ডের ন্যায় বৃহৎ, সেই হস্তী সেই দন্তযুগল দ্বারা স্পন্দমান বিপক্ষহস্তীকে ঊর্দ্ধে উত্তোলন করিয়া, যাহার শৃঙ্গে বর্ষাকালের মেঘ লাগিয়া থাকে, সেই পর্ব্বতের স্পষ্ট সাদৃশ্য লাভ করিল॥৩৮॥

**অন্বয়ঃ**—স্বে ইভে ভগ্নে অপি দেহং পরাবৃত্য ব্রীড়য়া সার্দ্ধম্ ইষূন্ মুঞ্চতা যোদ্ধ্রা অভীক্ষ্ণং দূনঃ অনুবন্ধী বারণঃ যন্তুঃ সম্মদেন সাকং প্রত্যরোধি॥৩৯॥

**টীকা**—ভগ্নেঽপীতি। স্বে স্বকীয়ে ইভে গজে ভগ্নেঽপি দেহং স্বাঙ্গং পরাবৃত্য প্রতিপক্ষাভিমুখমাবর্ত্য। হৃতীযং ল্যল্যপ্। অন্যত্রস্বপাঠঃ অকর্ম্মকস্য কর্ম্মাগমত্বাৎ। ব্রীড়য়া সার্দ্ধমিষূন্ মুঞ্চতা ইষুমোচনেন স্বগজভঙ্গব্রীড়াং নিরস্যতেত্যর্থঃ। যোদ্ধ্রা ভগ্নেন ভটেন কর্ত্রা অভীক্ষ্ণং দূনঃ ইষুভিস্তপ্তঃ। "দূ হিংস্য" ইতি নিষ্ঠানত্বম্। অনুবন্ধাতীত্যনুবন্ধী ধাবমানো যন্তুঃ মহামাত্রস্য সম্মদেন সাকং স্বজয়জন্যেন হর্ষেণ সহ। "প্রমদসম্মদৌ হর্ষে" ইতি নিপাতঃ। প্রত্যরোধি প্রতিহতঃ তৎপ্রতিরোধেন তৎকৃতম্মদস্যাপি

व्याप्तं लोकैर्दुःखलभ्यापसारं संरम्भित्वादेत्य धीरो महीयः ।
सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदैत्योदरान्तः ॥४०॥
भृङ्गश्रेणीश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ।
निर्भीकत्वादाहवेनाहतेच्छो ह्रष्यन् हस्ती हृष्टरोमेव रेजे ॥४१॥

---

प्रतिरोधव्यापारोऽभूदिति भावः । "साकं सार्द्धं समं सह" इत्यमरः । अत्र व्रीडितपुनोद्ययोः सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्य्यते ॥३९॥

**टिप्पनी**—भग्न इति । अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥३९॥

**বাঙ্গালা**—নিজের হস্তী পরাজিত হইয়া ফিরিয়া গেলেও, তাহার উপরের আরোহী যোদ্ধা, শরীর ফিরাইয়া, লজ্জার সহিত বাণ ত্যাগ করিতে থাকিয়া, বিপক্ষ হস্তীকে অত্যন্ত আঘাতে পীড়িত করিয়া তাহার আরোহীর বিজয়ানন্দের সহিত সেই হস্তীকে রুদ্ধ করিল ।৩৯।

**अन्वयः**—वारणः संरम्भित्वात् धीरः (सन्) एत्य महीयः लोकैः व्याप्तं दुःखलभ्यापसारं सेनामध्यं प्राक् आदिदैत्योदरान्तः ब्रह्मा इव गाहते स्म ॥४०॥

**टीका**—व्याप्तमिति । वारणः कश्चिद्धस्ती संरम्भित्वात् क्रोधित्वात् । "संरम्भः संभ्रमे कोपे" इति विश्वः । धीरो निर्भीकः सन् एत्यागत्य महीयो विपुलं लोकैः जनैः अन्यत्र भुवनैश्च व्याप्तम् । "लोकस्तु भुवने जने" इत्यमरः । अतो दुःखलभ्योऽपसारोऽपसरणं यत्र तत् सेनामध्यं प्राक् पुरा आदिदैत्यस्य उदरान्तरुदराभ्यन्तरं ब्रह्म स्रष्टेव गाहते स्म प्रविवेश । पुरा किल यथा वाच्यं 'स्रष्टा ब्रह्मा पूर्वं सृष्टिदिदृक्षया विष्णोः कुक्षिं प्राविशदिति पौराणिकी कथा । केचित् ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते सोऽपि भगवतश्चतुर्दशभुवनावलोकनकौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः । "ब्रह्मा विप्रः प्रजापतिरित्यमरः" । उपमालङ्कारः ॥४०॥

**टिप्पनी**—व्याप्तमिति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥४०॥

**বাঙ্গালা**—পূর্ব্বকালে ব্রহ্মা যেমন নারায়ণের উদরের ভিতরে বিচরণ করিয়াছিলেন, সেইরূপ কোন হস্তী ক্রুদ্ধ বলিয়া নির্ভীক হইয়া আসিয়া, বহুলোকপূর্ণ বিশাল সৈন্যমধ্যে বিচরণ করিতে লাগিল ; কিন্তু তখন তাহার মধ্য হইতে অপসরণ করা দুষ্কর ছিল ।৪০।

**अन्वयः**—भृङ्गश्रेणीश्यामभासां नाराचानां समूहैः विद्धनीरन्ध्रदेहः निर्भीकत्वात् आहवेन आहतेच्छः ह्रष्यन् हस्ती हृष्टरोमा इव रेजे ॥४१॥

**टीका**—भृङ्गेति । भृङ्गश्रेणीश्यामभासां श्यामवर्णानां नाराचानामयोमयेषुविशेषाणां समूहैः विद्धो नीरन्ध्रो निर्विवरो देहो यस्य सः तथापि निर्भीकत्वादाहवेनाहतेच्छः अव्याहतोत्साहः अतएव हृष्य मोदमानो हस्ती हृष्टरोमेव हर्षात् पुलकित इवेत्युत्प्रेक्षा । "हृषेर्लोमसु" इति विकल्पादिड़भावः । रेजे शुशुभे । "फणां च सप्तानां" इतिविकल्पादेत्वाभ्यासलोपौ ॥४१॥

আতাম্রাভা রোষভাজঃ কটান্তাদাশূৎখাতে মার্গণে ধূর্গতেন।
নিশ্চ্যোতন্তী নাগরাজস্য জজ্ঞে দানস্যাহ্না লোহিতস্যেব ধারা ॥৪২॥
ক্রামন্ দন্তৌ দন্তিনঃ সাহসিক্যাদীষাদণ্ডৌ মৃত্যুশয্যাতলস্য।
সৈন্যৈরন্যস্তৎক্ষণাদাশশঙ্কে স্বর্গস্যোচ্চৈরর্দ্ধমার্গাধিরূঢ়ঃ ॥৪৩॥

---

**টিপ্পনী**—ভৃঙ্গেতি। অত্র ভৃঙ্গস্যেবাস্যামীতি লুপ্তোপময়া টাকৌনামুৎপ্রেক্ষা সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪১॥

**বাঙ্গালা**—ভ্রমরের ন্যায় কৃষ্ণবর্ণ নারাচসমূহ পতিত হইয়া কোন হস্তীকে এমন ভাবে বিদ্ধ করিয়াছিল; যাহাতে তাহার দেহে একটুও ফাঁক ছিল না; তথাপি নির্ভয় বলিয়া সে হস্তীর যুদ্ধের ইচ্ছা অপ্রতিহতই ছিল এবং সে বরং আনন্দিতই ছিল; তাই সে রোমাঞ্চিতের ন্যায় শোভা পাইতেছিল ॥৪১॥

**অন্বয়ঃ**—রোষভাজঃ নাগরাজস্য কটান্তাৎ নিশ্চ্যোতন্তী দানস্য ধারা আহ্নো ধূর্গতেন মার্গণে আশু উৎখাতে (সতি) লোহিতস্য ধারা ইব আতাম্রাভা জজ্ঞে ॥৪২॥

**টীকা**—আতাম্রেতি। রোষভাজঃ ক্রুদ্ধস্য নাগরাজস্য মহেভস্য কটান্তাৎ গণ্ডস্থলান্নিশ্চ্যোতন্তী প্রগলন্তী স্রবন্তী দানস্য মদস্য ধারা আতাম্রাভা ক্রোধাদরুণবর্ণা জজ্ঞে জাতা আহ্নো ধূর্গতেন পুরোগতেন যন্ত্রা মার্গণে শরে আশু উৎখাতে লোহিতস্য ক্ষতজস্যেব ধারা জজ্ঞে। জনিঃ কর্ত্তরি লিট্। ক্রোধজং ক্রোধাদরুণা মদধারা শরোদ্ধরণজন্যা রক্তধারা নিত্যুৎপ্রেক্ষা-কারণসম্ভবাৎ সাদৃশ্যাচ্চ সংশয়ঃ সং চ বিকল্পিতস্যাদৃশ্যমূল উৎপ্রেক্ষালঙ্কারঃ ॥৪২॥

**টিপ্পনী**—আতাম্রেতি। অত্র সন্দেহালঙ্কার ইতি মল্লিনাথস্যমতম্। বস্তুতস্তু শ্রৌতীপমৈব তন্নাশ্রী ধূর্গতেন মার্গণোৎখাতে তৎসম্ভবেন লোহিতধারায়া যদি সম্ভবাৎ। অহ্নো ইত্যাশ্চর্য্যে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪২॥

**বাঙ্গালা**—ক্রুদ্ধ কোন মহাহস্তীর গণ্ডদেশ হইতে মদজলধারা নির্গত হইতেছিল; মাহুত শীঘ্র বাণ উত্তোলন করিলে রক্তধারার ন্যায় সেই মদজলধারা (ক্রোধরক্ত গণ্ডের আভায়) রক্তবর্ণ হইয়াছিল ॥৪২॥

**অন্বয়ঃ**—সৈন্যৈঃ মৃত্যুশয্যাতলস্য ঈষাদণ্ডৌ (ইব) দন্তিনঃ দন্তৌ সাহসিক্যাৎ ক্রামন্ অন্যঃ তৎক্ষণাৎ উচ্চৈঃ স্বর্গস্য অর্দ্ধমার্গাধিরূঢ়ঃ আশশঙ্কে ॥৪৩॥

**টীকা**—ক্রামন্নিতি। মৃত্যুশয্যাতলস্যান্তকপর্য্যঙ্কস্য। "অধঃ স্বরূপয়োরস্ত্রী তলমিত্যমরঃ। ঈষাদণ্ডৌ দণ্ডবিশেষৌ তদ্দৃশ্যাবায়তাবিত্যর্থঃ দন্তিনো দন্তৌ সাহসা বর্ত্তত ইতি সাহসিকঃ। "ওজঃসহোঽম্ভসা বর্ত্ততে" ইতি ঠক্প্রত্যয়ঃ। তস্য ভাবাৎ সাহসিক্যাৎ ক্রামন্ সাহসবানিত্যর্থঃ। অন্যস্তৎক্ষণাদুচ্চৈরূর্দ্ধ্বং স্বর্গস্য অর্দ্ধমার্গমারূঢ় ইতি তদর্দ্ধমার্গাধিরূঢ় ইতি সৈন্যৈরাশশঙ্কে উৎপ্রেক্ষিত ইত্যুৎপ্রেক্ষা ॥৪৩॥

**টিপ্পনী**—ক্রামন্নিতি। অত্র শ্রৌতোপময়া টাকৌনামুৎপ্রেক্ষা সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪৩॥

কুর্ব্বন্ জ্যোৎস্নাবিপ্রুষাং তুল্যরূপস্তারস্তারাজালসারামিব দ্যাম্ ।
খড়্গাঘাতৈর্দারিতাদ্দন্তিকুম্ভাদাভাতি স্ম প্রোচ্ছলন্মৌক্তিকৌঘঃ ॥৪৪॥
দূরোৎক্ষিপ্তক্ষিপ্রচক্রেণ কৃত্তং মত্তো হস্তং হস্তিরাজঃ স্বমেব ।
ভীমং ভূমৌ লোলমানং সরোষঃ পাদেনাসৃক্পঙ্কপেষং পিপেষ ॥৪৫॥

---

বাঙ্গালা—কোন হাতীর দাঁত দুইটা, যমের খাটের পায়ার উপরের কাঠের মত লম্বা ছিল; কোন যোদ্ধা সাহসের বলে সেই দাঁত দুইটাকে আক্রমণ করিল; তৎক্ষণাৎ (হাতী তাহাকে দাঁতের উপরে তুলিয়া লওয়ায়) সে যেন উচ্চ স্বর্গলোকের অর্দ্ধপথে আরোহণ করিয়াছে বলিয়া অন্য সৈন্যেরা আশঙ্কা করিল ॥৪৩॥

অন্বয়ঃ—জ্যোৎস্নাবিপ্রুষাং তুল্যরূপঃ তারঃ খড়্গাঘাতৈঃ দারিতাৎ দন্তিকুম্ভাৎ প্রোচ্ছলন্ মৌক্তিকৌঘঃ দ্যাং তারাজালসারাম্ ইব কুর্ব্বন্ আভাতি স্ম ॥৪৪॥

টীকা—কুর্ব্বন্নিতি। জ্যোৎস্নাবিপ্রুষাং তুল্যরূপঃ চন্দ্রিকাবিন্দুস্বরূপঃ তারঃ শুভ্রঃ। "তারো মুক্তাদিসংশুদ্ধাবিতি বিশ্বঃ। খড়্গাঘাতৈর্দারিতাদ্দন্তিকুম্ভাৎ প্রোচ্ছলন্ উৎপতন্ মৌক্তিকৌঘো মুক্তাপুঞ্জো দ্যামাকাশং তারাজালসারাং নক্ষত্রশবলিতাং তারকিতাং কুর্ব্বন্নিত্যুৎপ্রেক্ষা। "সারঃ শবলপীতয়োরিতি বিশ্বঃ। আভাতি স্ম বভৌ ॥৪৪॥

টিপ্পনী—কুর্ব্বন্নিতি। অত্র প্রথমে পাদে আর্থোপমা, দ্বিতীয়ে ছেকানুপ্রাস ইতি তাভ্যাং টীকোক্তোৎপ্রেক্ষা সংসৃজ্যতে। বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪৪॥

বাঙ্গালা—কোন যোদ্ধা তরবারির আঘাত করিয়া কোন হস্তীর কুম্ভদেশ বিদীর্ণ করিল; তথা হইতে জ্যোৎস্নাবিন্দুর ন্যায় বিশুদ্ধ মুক্তাসমূহ নির্গত হইয়া, আকাশকে যেন নক্ষত্রপুঞ্জশোভিত করিয়া দীপ্তি পাইতে লাগিল ॥৪৪॥

অন্বয়ঃ—মত্তঃ হস্তিরাজঃ দূরোৎক্ষিপ্তক্ষিপ্রচক্রেণ কৃত্তং ভূমৌ লোলমানং ভীমং স্বম্ এব হস্তং সরোষঃ সন্ পাদেন অসৃক্পঙ্কপেষং পিপেষ ॥৪৫॥

টীকা—দূরোৎক্ষিপ্তেতি। মত্তো হস্তিরাজঃ করীন্দ্রঃ দূরাদুৎক্ষিপ্তেন প্রাস্তেন অতএব ক্ষিপ্রেণ সত্বরেণ চক্রেণ কৃত্তম্ অতএব ভূমৌ লোলমানং লুঠমানম্। লোলতের্নামনৈঃপদিত্বাত্তাচ্ছীল্যবয়োবচনশক্তিষু চানশ্। ন তাচ্ছীল্যে চানশ্ প্রত্যয়ঃ অতএব "লোলমানাদয়শ্চানশীতি বামনঃ। ভীমং ভয়ঙ্করং স্বং স্বকীয়মেব হস্তং সরোষঃ সন্ পাদেনাঙ্ঘ্রিণা অসৃক্পঙ্কেন পঙ্কীভূতেন সৃজা পিষ্টা অসৃক্পঙ্কপেষম্। "স্নেহনে পিষ" ইতি ণমুল্। পিপেষ। কষাদিত্বাদনুপ্রয়োগঃ। রক্তপঙ্কেন স্নেহদ্রব্যেণ মমর্দেত্যর্থঃ। মত্তত্বমত্তয়োঃ ক্রুতো বিবেক ইতি ভাবঃ। অত্র পেষণাসম্বন্ধেঽপি সম্বন্ধোক্তেরতিশয়োক্তিঃ ॥৪৫॥

টিপ্পনী—দূরেতি। অত্র ছেকানুপ্রাসেন টীকোক্তাতিশয়োক্তিঃ সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪৫॥

বাঙ্গালা—কোন যোদ্ধা, দূর হইতে বেগগামী চক্র দ্বারা একটা মত্ত মহাহস্তীর শুণ্ড

আপস্কারাল্লূনগাত্রস্য ভূমিং নিঃসাধারং গচ্ছতোঽবাঙ্মুখস্য।
লব্ধায়ামং দন্তয়োর্যুগ্মমেব স্বং নাগস্য প্রাপদুত্তম্ভনত্বম্ ॥৪৬॥
লব্ধস্পর্শং ভূব্যধাদব্যথেন স্থিত্বা কিঞ্চিদ্দন্তয়োরন্তরালে।
ঊর্দ্ধাৰ্দ্ধাসিচ্ছিন্নদন্তপ্রবেষ্টং জিত্বোত্তস্থে নাগমন্যেন সদ্যঃ ॥৪৭॥

---

কাটিয়া ফেলিল; তখন সেই ভয়ঙ্কর শুঁড়টা ভূতলে পড়িয়া ছট্‌ফট্ করিতে লাগিল; তার পর সেই হস্তী ক্রুদ্ধ হইয়া চরণ দ্বারা নিজেরই সেই শুঁড়টাকে রক্তকর্দ্দমের ন্যায় নিষ্পেষণ করিল ॥৪৫॥

অন্বয়ঃ—আপস্কারাৎ লূনগাত্রস্য অবাঙ্‌মুখস্য নিঃসাধারং ভূমিং গচ্ছতঃ নাগস্য লব্ধায়ামং স্বং দন্তয়োঃ যুগ্মম্ এব উত্তম্ভনত্বং প্রাপৎ ॥৪৬॥

টীকা—আপস্কারাদিতি। গাত্রমূলমাপস্কারম আপস্কারাদামূলাৎ। আঙো বিকল্পাদসমাসঃ। লূনগাত্রস্য ছিন্নজঙ্ঘস্য। "দ্বৌ পূর্ব্বপশ্চাজ্জঙ্ঘাদিদেশৌ গাত্রাঽবরে ক্রমাদি"ত্যমরঃ। অত এবাবাঙ্‌মুখস্য সতঃ সাধারং সাবলম্বনং ন ভবতীতি নিঃসাধারং যথা তথা ভূমিং গচ্ছতঃ পতত ইত্যর্থঃ। নাগস্য লব্ধায়ামং প্রাপ্তদৈর্ঘ্যং ম আয়তমিত্যর্থঃ। স্বং স্বকীয়ং দন্তয়োর্যুগ্মমেবোত্তম্ভনত্বমবলম্বনত্বং প্রাপৎ। জঙ্ঘাচ্ছেদেঽপি দন্তাবষ্টম্ভাদ্‌ নাপতদিত্যর্থঃ। অত্র স্বভাবোক্তিপ্রয়োক্ত্যোঃ সংসৃষ্টিঃ ॥৪৬॥

টিপ্পনী—আপেতি। অত্র ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪৬॥

বাঙ্গালা—কোন যোদ্ধা কোন হস্তীর জঙ্ঘার মূলদেশ হইতে জঙ্ঘা কাটিয়া ফেলিল; তখন সে হস্তী অধোমুখ হইয়া নিরাশ্রয়ে ভূতলে পড়িতে লাগিলে, তাহার নিজের সুদীর্ঘ দন্তযুগলই তাহার অবলম্বন হইল ॥৪৬॥

অন্বয়ঃ—ভূব্যধাৎ অব্যথেন অন্যেন দন্তয়োঃ অন্তরালে লব্ধস্পর্শং স্থিত্বা ঊর্দ্ধাৰ্দ্ধাসি-ছিন্ন দন্তপ্রবেষ্টং নাগং জিত্বা সদ্যঃ উত্তস্থে ॥৪৭॥

টীকা—লব্ধস্পর্শমিতি। ভূব্যধাদ্দন্তাভ্যাং ভুবো বিদ্ধত্বাদিত্যর্থঃ "ব্যধজপোরনুপসর্গে" ইত্যপ্‌প্রত্যয়ঃ। অব্যথেন স্বয়মবিদ্ধত্বাদব্যথেন সতাঽন্যেন কেনচিদ্ভটেন দন্তয়োরন্তরালে কিঞ্চিৎ লব্ধস্পর্শো যস্মিন্ কর্ম্মণি তদ্দন্তাভ্যাং সস্পর্শং যথা তথা স্থিত্বা ঊর্দ্ধং প্রসারিতেনার্দ্ধাসিনা খড়্গৈকদেশেন ছিন্নঃ চ্যুতো দন্তপ্রবেষ্টো দন্তবেষ্টনং যস্য তং নাগং জিত্বা সদ্য এব উত্তস্থে উত্থিতম্। ভাবে লিট্। অত্রাপি তয়োঃ উত্থানাদ্যসম্বন্ধেঽপি সম্বন্ধোক্তেরতিশয়োক্তিঃ ॥৪৭॥

টিপ্পনী—লব্ধেতি। অত্র বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৪৭॥

বাঙ্গালা—কোন হস্তী কোন যোদ্ধাকে দন্তপ্রহার করিতে যাইয়া দন্তযুগল দ্বারা ভূতল বিদ্ধ করিল; তখন সে যোদ্ধা সে হাতীর দন্তযুগলের মধ্যে স্পর্শপূর্ব্বক থাকিয়া, ঊর্দ্ধে অর্দ্ধোত্তোলিত তরবারি দ্বারা দন্তের বেষ্টন চ্ছেদন করিয়া, সে হাতীটাকে জয় করিয়া তৎক্ষণাৎ উঠিল ॥৪৭॥

हस्तेनाग्रे वीतभीतिं गृहीत्वा कश्चिद्व्यालः क्षिप्तवानूर्द्ध्वमुच्चैः ।
आसीनानां व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ॥४८॥
कश्चिद्दूरादायतेनान्तःक्षतेन द्राघीयःप्रासप्रोतस्रोतसान्तःक्षतेन ।
हस्ताग्रेण प्राप्तमेवाग्रतोऽभूदानैश्वर्य्यं वारणस्य ग्रहीतुम् ॥४९॥
तन्वाः पुंसो नन्दगोपात्मजायाः कंसेनेव स्फोटितायाः गजेन ।
दिव्या मूर्त्तिर्व्योममार्गे कृत्युत्पतन्ती वीक्षामासे विस्मितैः खण्डिकेव ॥५०॥

---

अन्वयः—व्यालः हस्तेन अग्रे वीतभीतिं कञ्चित् गृहीत्वा ऊर्द्ध्वम् उच्चैः क्षिप्तवान् (सन्) तस्य एव हेतोः व्योम्नि आसीनानां दिव्यस्त्रीणाम् नूनम् अर्पयामास ॥४८॥

टीका—हस्तेनेति । व्यालो दुष्टदन्ती । "व्यालो दुष्टगजे सर्पे" इति विश्वः । अग्रे वीतभीतिं निर्भीकं भीरोः स्वर्गाभावादिति भावः । कश्चिद्वीरं हस्तेन गृहीत्वा ऊर्द्ध्वमत्युच्चैः क्षिप्तवान् । उत्प्रेक्षते तस्यैव हेतोस्तेनैव हेतुना तत्प्रेरणार्थमेवेत्यर्थः । "सर्वनाम्नस्तृतीया चेति चकारात् षष्ठी । व्योम्नि आसीनानामवस्थितानाम् । "ईदासः" इति आनच ईकारः । स्वर्गस्त्रीणामप्सरनारीणामर्पयामास नूनम् ॥४८॥

टिप्पनी—हस्तेनेति । अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥४८॥

বাঙ্গালা—কোন দুষ্ট হস্তী শুণ্ড দ্বারা, সম্মুখে উপস্থিত কোন নির্ভয় যোদ্ধাকেই ধারণ করিয়া, উপরে উচ্চে নিক্ষেপ করতঃ, তাহারই জন্য আকাশে উপবিষ্ট অপ্সরাদিগের নিকট যেন সমর্পণ করিল ॥৪৮॥

अन्वयः—दूरात् आयतेन अन्तःक्षतेन द्राघीयः प्रास-प्रोत-स्रोतसा हस्ताग्रेण अग्रतः प्राप्तम् एव कञ्चित् ग्रहीतुं वारणस्य आनैश्वर्य्यम् अभूत् ॥४९॥

टीका—कश्चिदिति । दूरादायतेनान्तःक्षतेन विक्षतेन अतएव द्राघीयसा प्रासेन प्रोतं स्रोतो यत्र तेन हस्ताग्रेण करेण अग्रतः प्राप्तमपि कञ्चिद्भटं ग्रहीतुम् आदातुं वारणस्य अनीश्वरस्य भावः आनैश्वर्य्यम् असामर्थ्यमभूत् । नञः शुचीश्वरेत्यादिना नञ्पूर्वपदोभय-पदवृद्धिः । अत्रापि आनैश्वर्य्यमत्वन्योक्तेरतिशयोक्तिः ॥४९॥

टिप्पनी—कश्चिदिति । अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥४९॥

বাঙ্গালা—কোন হস্তী, দূর হইতে আপনার সুদীর্ঘ শুণ্ড দ্বারা সম্মুখে উপস্থিত যোদ্ধাকেই ধারণ করিতে সমর্থ হইল না; কারণ, তাহার সে শুণ্ড ভিতরে ক্ষত হইয়াছিল এবং সুদৃঢ় কুন্তের আঘাতে সে শুণ্ড হইতে রক্তের স্রোত বহিতেছিল ॥৪৯॥

अन्वयः—विस्मितैः व्योमगैः, गजेन स्फोटितायाः पुंसः तन्वाः कंसेन स्फोटितायाः नन्दगोपात्म-जायाः इव उत्पतन्ती दिव्या मूर्त्तिः खण्डिका इव वीक्षामासे ॥५०॥

टीका—तन्वा इति । गजेन स्फोटितायाः विदारितायाः पुंसः कस्यचिद्वीरस्य तन्वाः शरीरात् कंसेन स्फोटितायाः नन्दगोपात्मजायाः नन्दकन्यायाः इवोत्पतन्ती दिव्या मूर्त्तिः

आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददानः करेण ।
सास्थिस्वानं दारुवद्दारुणात्मा कञ्चिन्मध्यात्पाटयामास दन्ती ॥५१॥
शोचित्वाग्रे भर्तृयोर्मर्त्यभाजोरर्थ्यः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापादाप दाहं यथान्तः ॥५२॥

---

चाणूरकेव नन्दकन्याशरीराद्‌ाविर्भवन्ती कालिकेव विस्मितैर्व्योमगैः खेचरैः वीक्षामासे वीक्षिता । ईक्षतेः कर्मणि लिट्, "इजादेश्च गुरुमतोऽनृच्छ" इत्याम्प्रत्ययः । मनुष्यभावमुत्सृज्य दैवभावङ्गतेत्यर्थः । उपमा व्यक्ता । पुरा किल दुरात्मनः कंसस्य प्रताडनात् भगवदाज्ञया तन्मायाशक्तिर्नन्दगोपात्मजा नभः सैव दिवि स्थितेति पौराणिकाः ॥५०॥

टिप्पनी—तस्या इति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५०॥

বাঙ্গালা—পূর্ব্বকালে কংস, নন্দকন্যাকে আছাড় দিলে, তাহা হইতে কালী আবির্ভূত হইয়াছিলেন, খেচরগণ যেমন বিস্মিত হইয়া তাঁহাকে দেখিয়াছিলেন; তেমন কোন হস্তী কোন যোদ্ধাকে আছাড় দিলে, তাহার শরীর হইতে দিব্য মূর্ত্তি বাহির হইল, খেচরগণ বিস্মিত হইয়া তাহাকে দেখিতে লাগিলেন ॥৫০॥

अन्वयः—दारुणात्मा दन्ती अग्रपादेन एकां जङ्घाम् आक्रम्य उच्चैः करेण अन्याम् आददानः (सन्) सास्थिस्वानं कञ्चित् दारुवत् मध्यात् पाटयामास ॥५१॥

टीका—आक्रम्येति । दारुणात्मा क्रूरचित्तो दन्ती एकां जङ्घामग्रपादेनाक्रम्यान्यां जङ्घामुच्चैरुन्नतेन करेणाददानः आकर्षयन् । सास्थिस्वानं भज्यमानास्थिपटकारशब्दयुक्तं यथा तथा कञ्चिद्वीरं दारुवत् काष्ठवत् मध्यात् पाटयामास विभज्य पाटयामासेत्यर्थः । ल्यब्लोपे पञ्चमी । उपमा ॥५१॥

टिप्पनी—आक्रम्येति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

বাঙ্গালা—ভয়ঙ্করস্বভাব কোন হস্তী, চরণাগ্র দ্বারা একটা জঙ্ঘাকে আক্রমণ করিয়া, উন্নত শুণ্ডদ্বারা অন্য জঙ্ঘা আকর্ষণ করিয়া, অস্থিভঙ্গের শব্দের সহিত কোন যোদ্ধাকে কাষ্ঠের ন্যায় মধ্যদেশ হইতে বিপাটিত করিল ॥৫১॥

अन्वयः—अर्थ्यः अग्रे मर्त्यभाजोः भर्त्रोः शोचित्वा वल्लभस्य प्रेम्णा तथा अन्तः दाहं नो आप, यथा इतरस्य पूर्वं प्रसादं न कृत्वा पश्चात्तापात् अन्तः दाहम् आप ॥५२॥

टीका—शोचित्वेति । न्याय्यमित्यर्थः । "अर्थ्यः स्वामिवैश्ययोरिति" अर्थ्यस्य अन्यार्थे निपातः । अग्रे समक्षमेव मर्त्यभाजोर्मरणं गतयोर्भर्त्रोः शोचित्वा वल्लभस्य तयोर्मध्ये प्रियभृत्यस्य सम्बन्धिना प्रेम्णा तद्गतप्रेम्णेत्यर्थः । तथा तेन प्रकारेणान्तर्दाहं सन्तापं नो आप । यथा येन प्रकारेण इतरस्यावल्लभस्य पूर्वं जीवनकाले प्रसादं प्रीतिदानाद्यनुग्रहं न कृत्वा पश्चात्तापः शोऽयमस्माभिरप्रोषित एव मायान् प्रादादित्यनुशयात् दाहमाप । प्रियकृतमरणादप्यप्रियमरणमेव स्वामिनो दुःसहदुःखहेतुरासीदित्यर्थः । स्वभावोक्तिः ॥५२॥

उत्प्लुत्याराादर्द्धचन्द्रेण लूने वक्त्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते ।
सैन्यैः कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गतः सासिपाणेः ॥५३॥
तूर्य्यारावैराहितोत्तालतालैर्गायन्तीभिः काहलं काहलाभिः ।
नृत्ते चक्षुःशून्यहस्तप्रयोगं कायेकूजन् कम्बुरुच्चैर्जहास ॥५४॥

---

**টিপ্পনী**—शोचिलेति । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥५२॥

**বাঙ্গালা**—কোন প্রভু, নিজের সমক্ষেই মৃত ভৃত্য দুইটীর জন্য শোক করিয়া, তাহাদের মধ্যে যেটী বিশেষ প্রিয় ছিল, তাহার জন্য সেরূপ অন্তর্দাহ অনুভব করিলেন না; যেরূপ অপরটীকে পূর্ব্বে অনুগ্রহ না করায় অনুতাপবশতঃ অন্তর্দাহ অনুভব করিলেন ॥৫২॥

**अन्वयः**—अर्द्धचन्द्रेण लूने क्रोधदष्टोष्ठदन्ते अन्यस्य वक्त्रे आरात् उत्प्लुत्य भूयः कण्ठच्छेदलीने (सति) वल्गतः सासिपाणेः कबन्धात् सैन्यैः बिभ्ये ॥५३॥

**टीका**—उत्प्लुत्येति । अर्द्धचन्द्रेण बाणेन लूने छिन्ने तथापि क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन् अन्यस्य योधस्य वक्त्रे आरादनतिदूरमुत्प्लुत्य । "आराद्दूरसमीपयोरित्यमरः । भूयः पुनरपि कण्ठस्य छेदः छिन्नदेशः तत्र लीने स्थिते सति वल्गतो नृत्यतः सासिः पाणिर्यस्य तस्मात् कबन्धादपमूर्द्धकलेवरात् । "भीत्रार्थानां भयहेतुरिति पञ्चमी । सैन्यैर्बिभ्ये भीतम् भावे लिट् । लूनस्यापि वक्त्रस्य पुनः स्वस्थानपातित्वाद्वल्गनासिधारणाभ्यां कबन्धादस्य कबन्धभ्रान्त्या सर्वे बिभ्युरित्यर्थः । अतएव भ्रान्तिमदलङ्कारः ॥५३॥

**টিপ্পনী**—उत्प्लुत्येति । अत्र भयानको रसः, ओजो गुणः, गौड़ी च रीतिः ॥५३॥

**বাঙ্গালা**—কোন যোদ্ধা অর্দ্ধচন্দ্র বাণ দ্বারা অন্য কোন যোদ্ধার মস্তক ছেদন করিল; তথাপি ক্রোধে দন্ত দ্বারা ওষ্ঠ দংশন করিয়া, একটু মাত্র লাফাইয়া উঠিয়া আবার সেই মস্তকটা সেই ছিন্ন কণ্ঠে যাইয়া লাগিল; তখন তরবারিহস্তে সেই কবন্ধটা নৃত্য করিতে থাকিল, ইহা দেখিয়া সৈন্যেরা ভীত হইল ॥৫৩॥

**अन्वयः**—आहितोत्तालतालैः तूर्य्यारावैः काहलं गायन्तीभिः काहलाभिः (च) काये चक्षुःशून्यहस्तप्रयोगं नृत्ते (सति) कूजन् कम्बुः उच्चैः जहास (इव) ॥५४॥

**टीका**—तूर्य्यारावैरिति । आहिताः सम्पादिताः उत्तालाः प्रस्फुटाः तालाः करपुटादिक्रियामानानि येषु तैः । "तालः कालक्रियामानमित्यमरः । तूर्य्यारावैर्मृदङ्गादिवाद्यघोषैस्तथा काहलं भृशं गायन्तीभिः ध्वनन्तीभिः काहलाभिः शुष्कैर्वाद्यविशेषैश्च करणैः । "काहलं भृशशुष्कयोः । वाद्यभाण्डविशेषे तु काहलाः काहलः खलु" इति विश्वः । काये अपमूर्द्धिकलेवरे । अतएव चक्षुःशून्यो दृष्टिरहितः हस्तप्रयोगो यस्मिन् कर्मणि तत्तथा नृत्ते नृत्यति सति । कर्त्तरि क्तः । कूजन् ध्वनन् कम्बुः शङ्खस्तटस्थ इवेत्यर्थः । उच्चै-

প্রত্যাবৃত্তং ভঙ্গভাজি স্বসৈন্যে তুল্যং মুক্তৈ রাকিরন্তি স্ম কঞ্চিৎ ।
একৌঘেন স্বর্ণপুঙ্খৈর্দ্বিষন্তঃ সিদ্ধা মাল্যৈঃ সাধুবাদৈর্দ্বয়েঽপি ॥৫৫॥
বাণাচ্ছিন্নারোহশূন্যাসনানাং প্রক্রান্তানামন্যসৈন্যৈর্গ্রহীতুম্ ।
সংরব্ধানাং ভ্রাম্যতামাজিভূমৌ বারী বারৈঃ সস্মরে বারণানাম্ ॥৫৬॥

---

স্বরং জহাস। দৃষ্টিশূন্যাভিনয়স্য নাট্যশাস্ত্রবিরোধাৎ অট্টহাসমকারীদিত্যর্থঃ। ব্যঞ্জকাপ্রয়োগাৎ গম্যোৎপ্রেক্ষা। "অঙ্গেনালম্বয়েদ্গীতং হস্তেনার্থং প্রদর্শয়েৎ। দৃষ্টিভ্যাং ভাবয়েদ্ভাবং পাদাভ্যাং তালনির্ণয়" ইতি নাট্যবিদঃ ॥৫৪॥

**টিপ্পনী**—তূর্য্যেতি। অত্র প্রথমার্দ্ধগতচ্ছেকানুপ্রাসেন টীকোক্তোৎপ্রেক্ষা সংসৃজ্যতে। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৫৪॥

**বাঙ্গালা**—তূর্য্যধ্বনি হইতে লাগিল, তাহাতে স্পষ্ট তাল দেওয়া হইতে থাকিল এবং জয়ঢাক অত্যন্ত বাজিতে লাগিল ; এমন সময়ে একটা কবন্ধ চোখশূন্য অবস্থায় হস্তভঙ্গী করিয়া নৃত্য করিতে থাকিল ; ইহা দেখিয়া শঙ্খ যেন রব করিতে থাকিয়া উচ্চ অট্ট হাস্য করিল ॥৫৪॥

**অন্বয়ঃ**—স্বসৈন্যে ভঙ্গভাজি (সতি) প্রত্যাবৃত্তং কঞ্চিৎ তুল্যং মুক্তৈঃ স্বর্ণপুঙ্খৈঃ একৌঘেন দ্বিষন্তঃ আকিরন্তি স্ম ; সিদ্ধাঃ মাল্যৈঃ আকিরন্তি স্ম ; দ্বয়ে অপি সাধুবাদৈঃ আকিরন্তি স্ম ॥৫৫॥

**টীকা**—প্রত্যাবৃত্তমিতি। স্বসৈন্যে ভঙ্গভাজি সতি প্রত্যাবৃত্তমভ্যমিত্রং কঞ্চিদ্বীরং তুল্যমেককালং মুক্তৈঃ স্বর্ণপুঙ্খৈঃ শরবিশেষৈঃ একৌঘেন একপ্রহারেণ দ্বিষন্তঃ আকিরন্তি স্ম। সিদ্ধাঃ খেচরাঃ মাল্যৈর্দিব্যমালাভিঃ। চাতুর্বর্ণ্যাদিত্বাৎ ষ্যঞ্প্রত্যয়ঃ। আকিরন্তি স্ম। দ্বয়েঽপি দ্বিষন্তঃ সিদ্ধাশ্চ সাধুবাদৈঃ সাধু সাধ্বিতি বাক্যৈরাকিরন্তি স্ম। এতত্ত্রিতয়মপি যুগপৎ প্রবৃত্তমিত্যর্থঃ। অত্র স্বর্ণপুঙ্খস্রগ্মাল্যসাধুবাদানাং প্রকৃতানামেব তুল্যকালৌঘপ্রবৃত্তিসাম্যাদৌপম্যাবগমাৎ কেবলপ্রকৃতাস্পদা তুল্যযোগিতা ॥৫৫॥

**টিপ্পনী**—প্রত্যাবৃত্তমিতি। অত্র বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৫৫॥

**বাঙ্গালা**—নিজের সৈন্য পরাজিত হইলে, কোন্ যোদ্ধা ফিরিয়া বিপক্ষদিগের প্রতি ধাবিত হইল ; তখন বিপক্ষগণ একদা এক সঙ্গে তাহার উপরে স্বর্ণপুঙ্খ বাণসমূহ নিক্ষেপ করিল ; আকাশচারী সিদ্ধগণও একদা এক সঙ্গে তাহার উপরে পুষ্পমালা নিক্ষেপ করিলেন এবং বিপক্ষগণ ও সিদ্ধগণ এই উভয়েই একদা এক সঙ্গে তাহার উপরে সাধুবাদ বর্ষণ করিলেন ॥৫৫॥

**অন্বয়ঃ**—বাণাচ্ছিন্নারোহশূন্যাসনানাম্ অন্যসৈন্যৈঃ গ্রহীতুং প্রক্রান্তানাং সংরব্ধানাম্ আজিভূমৌ ভ্রাম্যতাং বারণানাং বারৈঃ বারী সস্মরে ॥৫৬॥

**টীকা**—বাণেতি। বাণৈরাচ্ছিন্নাঃ পাতিতাশ্চ আরোহাঃ সাদিনো যেভ্যস্তানি অতএব শূন্যানি রিক্তান্যাসনানি আস্তরণানি যেষাম্। অত এবান্যৈঃ সৈন্যৈঃ পরসৈন্যৈর্গ্রহীতুং

পৌনঃপুন্যাদস্রগন্ধেন মত্তো মৃদ্নন্ কোপাল্লোকমায়োধনোর্ব্যাম্ ।
পাদে লগ্নামত্র মালামিভেন্দ্রঃ পাশীকল্পামায়তামাচকর্ষ ॥৫৭॥
কশ্চিন্মূর্চ্ছামেত্য গাঢ়প্রহারঃ সিক্তঃ শীতৈঃ শীকরৈর্বারণস্য ।
উচ্ছ্বাস প্রস্থিতা তং জিহীর্ষুর্ব্যর্থাকূতা নাকনারী মুমূর্চ্ছ ॥৫৮॥

---

প্রক্রান্তানামবন্ধ্যানাং সমন্তাদবরুধ্যমানানামিত্যর্থঃ । অতএব সংরব্ধানাং ক্ষুভিতানাম্ অতএব আজিভূমৌ সংস্থানাম্ অনবতিষ্ঠমানানাং বারণানাং বারবৃন্দৈঃ বারী বন্ধনস্থানম্ । "বারঃ সূর্য্যাদিদিবসে বারো বরণবৃন্দয়োঃ । বারী কটীগবন্ধন্যোরিতি বিশ্বঃ । স্মরে স্মৃতা তজ্জন্ম যোগাদিতি ভাবঃ । কর্ম্মণি লিট্ । অত্র শূন্যাসনত্বাদীনাং বিশেষণগত্যা বারীস্মরণ-হেতুত্বাৎ কাব্যলিঙ্গম্ ॥৫৬॥

টিপ্পনী—বাণেতি । অত্র দ্বিতীয়চতুর্থপাদগতচ্ছেকানুপ্রাসেন টীকোক্তকাব্যলিঙ্গং সংসৃজ্যতে । ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৫৬॥

বাঙ্গালা—বাণাঘাতে হাতীগুলির উপর হইতে আরোহীদিগকে পাতিত করিলে, হাতীগুলির পিঠের উপরের আস্তরণগুলি শূন্য হইয়া গেল ; তখন বিপক্ষসৈন্যেরা সে হাতী-গুলিকে ধরিবার উপক্রম করিল ; কিন্তু হাতীগুলি ক্রুদ্ধ হইয়া সমরাঙ্গনে ভ্রমণ করিতে থাকিয়া আপনাদের বন্ধনস্তম্ভ সকল স্মরণ করিতে লাগিল ॥৫৬॥

অন্বয়ঃ—অথ আয়োধনোর্ব্যাং পৌনঃপুন্যাৎ অস্রগন্ধেন মত্তঃ ইভেন্দ্রঃ কোপাৎ লোকং মৃদ্নন্ পাদে লগ্নাং পাশীকল্পাম্ আয়তাং মালাম্ আচকর্ষ ॥৫৭॥

টীকা—পৌনঃপুন্যাদিতি । অত্র আয়োধনোর্ব্যাং যুদ্ধভূমৌ পৌনঃপুন্যাৎ পুনঃপুনরাবৃত্তে-রিত্যর্থঃ । ব্রাহ্মণাদিত্বাৎ ষ্যঞ্ প্রত্যয়ঃ, অব্যয়ানাং ভমাত্রে টিলোপস্য প্রাতিপদিকার্থ উপসংখ্যানমিতি টিলোপঃ । অস্রগন্ধেন রক্তগন্ধগ্রহণাদিত্যর্থঃ । মত্ত ইভেন্দ্রো মহাগজঃ কোপাল্লোকং জনং মৃদ্নন্ ক্ষুভ্নন্ পাদে লগ্নাম্ ঈষদসমাপ্তাং পাশীকল্পাং পাশবন্ধনসদৃশীম্ । "পাশস্ত্বশ্বাদিবন্ধনমিতি বিশ্বঃ । বহ্বাদিভ্যশ্চেতি বিকল্পাদীকারঃ, অভাষিতপুংস্কত্বাৎ ঘরূপেত্যাদিনা হ্রস্বো ন ভবতি । আয়তাং দীর্ঘাং মালামাচকর্ষ । পাশীকল্পেত্যত্র তদ্ধিত-গতা পূর্ণোপমা ॥৫৭॥

টিপ্পনী—পৌনরিতি । অত্র গুণরীতী পূর্ববৎ ॥৫৭॥

বাঙ্গালা—সেই সমরাঙ্গণে বার বার রক্তের গন্ধ পাইয়া মত্ত কোন মহাহস্তী, ক্রোধ-বশতঃ বহুতর লোককে মর্দ্দন করতঃ, বন্ধনরজ্জুর তুল্য পাদলগ্ন সুদীর্ঘ এক ছড়া মালাকে আকর্ষণ করিতে লাগিল ॥৫৭॥

অন্বয়ঃ—গাঢ়প্রহারঃ কশ্চিৎ মূর্চ্ছাম্ এত্য শীতৈঃ বারণস্য শীকরৈঃ সিক্তঃ (সন্) উচ্ছ্বাস ; (কিন্তু) তং জিহীর্ষুঃ প্রস্থিতা নাকনারী ব্যর্থাকূতা (সতী) মুমূর্চ্ছ ॥৫৮॥

টীকা—কশ্চিদিতি । গাঢ়ঃ প্রহারো যস্য সঃ কশ্চিদ্বীরো মূর্চ্ছামেত্য বারণস্য শীতৈঃ

लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः ।
त्रेसे मुग्धैः सैंहिकेयानुकाराद्रौद्राकारादप्सरोवक्त्रचन्द्रैः ॥५९॥
वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम ।
त्यक्ता नाप्नौ देहमेति स्म यावत् पत्नी सद्यस्तद्वियोगासमर्था ॥६०॥

---

शीकरैः पुष्करतुषारैः सिक्तः सन् उच्छ्वास उज्जीवति स्म किन्तु तं मूर्च्छामागतं जिहृक्षु-ग्रंहीतुमिच्छुः । ग्रहेः सनन्तादुप्रत्ययः । प्रस्थिता तं वरीतुमागतेत्यर्थः । नाकनारी व्यर्थाकूता तदुज्जीवनाद्विफलमनोरथा सती मुमूर्च्छ । अत्र कूतवैयर्थ्यस्य विशेषणगत्या नाकनारीमूर्च्छाहेतुत्वात् काव्यलिङ्गं मूर्च्छासम्बन्धातिशयोक्त्या सङ्कीर्य्यते ॥५८॥

टिप्पनी—कश्चिदिति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥५८॥

বাঙ্গালা—কোন যোদ্ধা প্রগাঢ় প্রহারের বেদনায় মূর্চ্ছিত হইয়া, হাতীর শুঁড়ের শীতল জলবিন্দুতে সিক্ত হইয়া আবার চৈতন্য লাভ করিল। কিন্তু তাহাকে বরণ করিয়া নিয়া যাইবার জন্য আগত অপ্সরার ইচ্ছা নিষ্ফল হওয়ায় সে মূর্চ্ছিত হইল ॥৫৮॥

अन्वयः—मुग्धैः अप्सरोवक्त्रचन्द्रैः सायकेन लूनग्रीवात् द्याम् अत्युच्चैः उत्पतिष्णोः सैंहिकेयानु-कारात् रौद्राकारात् अपरस्य आननात् त्रेसे ॥५९॥

टीका—लूनग्रीवादिति । अपरस्य सायकेन लूनग्रीवाच्छिन्नकण्ठात् अतएव द्यामाकाशं अति आशु उच्चैरुत्पतिष्णोरुत्पतनशीलात् । अलङ्कृञित्यादिना इष्णुच् प्रत्ययः । अतएव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः । "तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधु-न्तुद" इत्यमरः । स्त्रीभ्यो ढक् । तमनुकरोतीति तदनुकारः तत्सदृशादित्यर्थः । कर्म-ण्यण् प्रत्ययः । रौद्राकारात् भीषणाकृतेरस्य वीरस्य आननात् मुग्धैः सुन्दरैः अप्सरसां वक्त्रैरेव चन्द्रैस्त्रेसे त्रस्तम । भावे लिट् । अत्र राहुहेतुकत्रासस्य चन्द्र एव सम्भव इत्य-चन्द्रैरिति रूपकं सिद्धं तस्य सैंहिकेयानुकारादिति स्पष्टोपमापेक्षत्वात् सङ्करः ॥५९॥

टिप्पनी—लूनेति । अत्र द्वितीयाङ्गतेन काव्यकारेति च्छेकानुप्रासेन टंकोलङ्कारः पुनः संसृ-ज्यते ओजो गुणः, गौड़ी च रीतिः ॥५९॥

বাঙ্গালা—কোন যোদ্ধা বাণদ্বারা অন্য কোন যোদ্ধার কণ্ঠ চ্ছেদন করিল; তখন তাহার সেই ভীষণাকার মুখখানা আকাশে অতি উচ্চে উঠিতে থাকিয়া, রাহুর অনুকরণ করিতে লাগিল; সুতরাং অপ্সরাদিগের সুন্দর মুখ-চন্দ্রগুলি তাহা হইতে ভীত হইল ॥৫৯॥

अन्वयः—काचित् युद्धे वृत्तं शूरम् आश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जं जगाम यावत् तद्वियोगासमर्था पत्नी सद्यः अग्नौ देहं त्यक्ता न एति स्म ॥६०॥

टीका—वृत्तमिति । काचिदमरनारी युद्धे वृत्तं मृतम् । "वृत्तोऽतीते दृढ़े ख्याते वृत्तं चेऽपि वृते मृते इति विश्वः । शूरमाश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जं गह्वरञ्जगाम ।

त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।
प्राप्याखण्डं देवभूयं सतीत्वादाश्लिक्षत् स्वैव कञ्चित् पुरन्ध्री ॥६१॥
स्वर्गे वासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।
कश्चिद्भेजे दिव्यनार्या परस्मिन् लोके लोकं प्रीणयन्त्येह कीर्त्या ॥६२॥

---

यावत्तद्वियोगासमर्था तद्विरहासहा पत्नी सद्योऽग्नौ देहं त्यक्त्वा नैति स्म नाजगाम। अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥६०॥

टिप्पनी—वृत्तमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—কোন অপ্সরা যুদ্ধে মৃত কোন বীরকে আলিঙ্গন করিয়া লইয়া, রমণ করি-বার জন্য শীঘ্রই সুমেরুপর্বতের কুঞ্জে উপস্থিত হইল ; সেই বীরের বিরহদুঃখ সহ্য করিতে না পারিয়া, তাহার স্ত্রী, সদ্য অগ্নিতে দেহ ত্যাগ করিয়া যাবৎ না আসিল ॥৬০॥

अन्वयः—हस्तिनीस्था स्वा एव पुरन्ध्री संयुगे त्यक्तप्राणं (पतिं) वीक्ष्य प्रेम्णा तत्क्षणात् उद्गतासुः (सती) सतीत्वात् अखण्डं देवभूयं प्राप्य (तं पतिं) आश्लिक्षत् ॥६१॥

टीका—त्यक्तेति। संयुगे युद्धे त्यक्तप्राणं कञ्चिद्वीरं हस्तिन्यां तिष्ठतीति हस्तिनीस्थां करिणीमारूढा सती वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुर्गतप्राणा। स्वैव पुरन्ध्री स्वभार्यैव सतीत्वात्पतिव्रतात्वादखण्डमक्षयं देवभूयं देवत्वम्। "भुवो भावे" इति क्यप्। प्राप्याश्लिक्षत्। स्त्रीणां पातिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः। अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वानुक्तेन काव्यलिङ्गमतिशयोक्त्यादिकं तु यथासम्भव-मूह्यम् ॥६१॥

टिप्पनी—त्यक्तेति। अत्र गुणरीती पूर्ववत् ॥६१॥

বাঙ্গালা—হস্তিনীর উপরে আরূঢ়া নিজেরই স্ত্রী, পতিকে যুদ্ধে মৃত দেখিয়া, প্রণয়-বশতঃ তৎক্ষণাৎ প্রাণত্যাগ করিয়া, সতীত্বনিবন্ধন সম্পূর্ণ দেবত্ব লাভ করিয়া, সেই পতিকে আলিঙ্গন করিল ॥৬১॥

अन्वयः—चिराय स्वर्गे वासं कारयन्त्या प्रत्यहं प्रत्यग्रत्वं धारयन्त्या लोकं प्रीणयन्त्या दिव्यनार्या परस्मिन् इह (च) लोके कीर्त्या (च) कश्चित् भेजे ॥६२॥

टीका—स्वर्गे इति। कश्चिद्वीरश्चिराय चिरकालं स्वर्गे वासम्। शयवासवासिष्वकालादिति विकल्पादलुक्। कारयन्त्या अनुभावयन्त्या अहन्यहनि प्रत्यहम्। नपुंसका-दन्यतरस्यामित्यव्ययीभावे समासान्तष्टच् प्रत्ययः, अव्ययानां भमात्रे टिलोप इत्युक्तम्। प्रत्य-ग्रत्वं नूतनत्वं धारयन्त्या। परप्रेम सदृत्वमिति भावः। लोकं प्रीणयन्त्या अन्नतत्त्वं प्रापयन्त्या। प्रीञो ण्यन्ताल्लटः शतरि ङीप्, धूञ्प्रीञोर्नुग्वक्तव्य इति नुगागमः। दिव्य-नार्या परस्मिल्लोके इहलोके कीर्त्या च भेजे प्राप्तः। भजेः कर्मणि लिट्। स्वर्गमर्त्यलोक-द्वयमपि जिगायेत्यर्थः। अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्मसम्बन्धात् केवल-प्रकृतास्पदा तुल्ययोगिता ॥६२॥

গত্বা নূনং বৈবুধং সদ্ম রম্যং মূর্চ্ছাভাজামাজগামান্তরাত্মা।
ভূয়া দৃষ্টপ্রত্যয়াঃ প্রামসংজ্ঞাঃ সাধীয়স্তে যদ্রণায়াদ্রিয়ন্তে ॥৬৩॥
কশ্চিচ্ছস্ত্রাপাতমূঢ়োঽপবোঢ়ুর্লব্ধ্বা ভূয়শ্চেতনামাহবায়।
ব্যাবর্তিষ্ট ক্রোশতঃ সখ্যুরুচ্চৈস্ত্যক্তাস্থাত্মা কা চ লোকানুবৃত্তিঃ ॥৬৪॥

---

টিপ্পনী—স্বর্গ ইতি। অত্র ছেকানুপ্রাসশ্চ শব্দালঙ্কার ইতি তেন টীকাকৃতা তুল্যযোগিতা সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ॥৬২॥

বাঙ্গালা—যে, চিরকাল স্বর্গে বাস করাইবে, প্রতিদিন নূতন নূতন বলিয়া পরিগণিত হইবে এবং লোককে সন্তুষ্ট করিবে, সেই স্বর্গীয় রমণী এবং ইহলোক ও পরলোকসঞ্চারিণী কীর্ত্তি এই উভয়েই কোন বীরকে আশ্রয় করিল ॥৬২॥

অন্বয়ঃ—মূর্চ্ছাভাজাম্ অন্তরাত্মা রম্যং বৈবুধং সদ্ম গত্বা আজগাম নূনম্। যত্ প্রাপ্তসংজ্ঞাঃ (সন্তঃ) দৃষ্টপ্রত্যয়াঃ তে ভূয়ঃ সাধীয়ঃ রণায় আদ্রিয়ন্তে ॥৬৩॥

টীকা—গত্বেতি। মূর্চ্ছাভাজামন্তরাত্মা জীবঃ রম্যং বৈবুধং সদ্ম দিব্যভবনং গত্বা আজগাম। মূর্চ্ছাসময়ে সুরলোকরামণীয়কং দৃষ্ট্বা আজগাম। নূনমুত্প্রেক্ষায়াম্। কুতঃ যদ্যস্মাত্ প্রাপ্তসংজ্ঞাঃ লব্ধবোধাঃ সন্তঃ দৃষ্টপ্রত্যয়াঃ দৃঢ়বিশ্বাসাঃ ভূয়ঃ পুনরপি সাধীয়ো গাঢ়তরম্। গাঢ়শব্দস্য অন্তিকবাঢ়য়োর্নেদসাধাবিতি সাধাদেশঃ। রণায় রণং কর্ত্তুম্ আদ্রিয়ন্তে উত্সহন্তে ইত্যর্থঃ। কর্ত্তরি লট্, প্রত্যয়ঃ। কথঞ্চিদুজ্জীবিতানাং পুনর্জন্মপ্রাপ্তিঃ শ্রেয়োদর্শনহেতুকেতি ভাবঃ ॥৬৩॥

টিপ্পনী—গত্বেতি। অত্র বাচ্যা প্রেয়োত্প্রেক্ষা, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬৩॥

বাঙ্গালা—মূর্চ্ছিত বীরগণের জীবাত্মা, নিশ্চয়ই মনোহর দেবভবনে গমন করিয়া ফিরিয়া আসিয়াছিল। যেহেতু, তাঁহারা চৈতন্য লাভ করিয়া, দৃঢ়বিশ্বাসী হইয়া, পুনরায় প্রগাঢ়ভাবে যুদ্ধের জন্য আগ্রহ করিতে লাগিলেন ॥৬৩॥

অন্বয়ঃ—শস্ত্রাপাতমূঢ়ঃ কশ্চিত্ চেতনাং লব্ধ্বা অপবোঢ়ুঃ সখ্যুঃ উচ্চৈঃ ক্রোশতঃ ভূয়ঃ আহবায় ব্যাবর্তিষ্ট, আস্থা ত্যক্তা। লোকানুবৃত্তিশ্চ কা ॥৬৪॥

টীকা—কশ্চিদিতি। শস্ত্রাপাতমূঢ়ঃ প্রহারমূর্চ্ছিতঃ কশ্চিদ্বীরশ্চেতনাং সংজ্ঞাং লব্ধ্বা অপবোঢ়ুর্মূর্চ্ছাসময়ে যুদ্ধভূমেরপনেতুঃ সখ্যুর্মিত্রস্যোচ্চৈঃ ক্রোশতঃ আগচ্ছাগচ্ছেত্যাক্রোশতি। বহতী বাহয়তীতি বহতি বস্তো। ক্রোশন্তমনাদৃত্যেত্যর্থঃ। ভূয়ঃ পুনরপি আহবায় রণায় ব্যাবর্তিষ্ট। আস্থা দেহস্য ত্যক্তা। তথাহি লোকানুবৃত্তিশ্চ কা নৈবেত্যর্থঃ সুহৃজ্জনানুরোধস্তু হিতার্থিনঃ পরিচ্ছেত্তুং ব্রয়েত্যর্থঃ। সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥৬৪॥

টিপ্পনী—কশ্চিদিতি। অত্র বীরো রসঃ, বন্দীতুকম্পস্য আরোহাবরোহাভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৬৪॥

বাঙ্গালা—কোন বীর অস্ত্রাঘাতে মূর্চ্ছিত হইল, অমনি তাহার সখা তাহাকে যুদ্ধ

भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव ।
अन्योऽन्यावष्टम्भसामर्थ्ययोगादूर्द्ध्वाविव स्वर्गतावप्यभूताम् ॥६५॥
भिन्नानस्त्रैर्मोहभाजोऽभिजातान् हन्तुं लोलं वारयन्तः स्ववर्गम् ।
जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थः कस्य न स्याज्जनेन ॥६६॥

---

স্থান হইতে সরাইয়া নিল; তাহার পর সে, চৈতন্য লাভ করিয়া পুনরায় যুদ্ধে যাইতে লাগিল; তখন সেই সখা তাহাকে 'ফের ফের' বলিয়া উচ্চস্বরে ডাকিতে লাগিল; সে বীর তাহা গ্রাহ্য না করিয়া যুদ্ধেও গেল—দেহত্যাগও করিল। কারণ, লোকের অনুরোধ রক্ষাটা কি? ॥৬৪॥

**अन्वयः**—शत्रुणा दूरात् आकृष्य आसन्नत्वात् एकेषुणा एव भिन्नोरस्कौ कौचित् अन्योन्यावष्टम्भसामर्थ्ययोगात् ऊर्द्ध्वौ एव स्वर्गतौ अपि अभूताम् ॥६५॥

**टीका**—भिन्नोरस्काविति। शत्रुणा दूरादाकृष्यासन्नत्वात्तयोरित्यर्थः। सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ कौचिद्वीरावन्योऽन्यावष्टम्भ एव सामर्थ्यं तस्य योगात् स्वभावादूर्द्ध्वाविव ऊर्द्ध्वं तिष्ठन्ताविव स्वर्गतावपि मृतावभूताम् अपिचार्थः। तत्र मृतयोरूर्द्ध्वावस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥६५॥

**टिप्पनी**—भिन्नेति। अत्र रसादयः पूर्ववत् ॥६५॥

**বাঙ্গালা**—কোন শত্রু, দূর হইতে ডাকিয়া আনিয়া, নিকটবর্ত্তী হওয়ায় একটা বাণ দ্বারাই দুই জনের বক্ষ বিদারণ করিল; তখন তাহারা পরস্পর পরস্পরের অবলম্বনবশতঃ দাঁড়াইয়া থাকিয়াই মরিয়া গেল ॥৬৫॥

**अन्वयः**—अन्ये अस्त्रैः भिन्नान् मोहभाजः अभिजातान् हन्तुं लोलं स्ववर्गं वारयन्तः (सन्तः) जीवग्राहं ग्राहयामासुः। योग्येन जनेन कस्य अर्थः न स्यात् ॥६६॥

**टीका**—भिन्नानिति। अन्ये वीरा अस्त्रैर्भिन्नान् विदारितान् अतएव मोहभाजो मूर्च्छाभाजो मूर्च्छागतानभिजातान् कुलीनान्। "अभिजातः स्थितौ न्याय्ये कुलीनप्राज्ञयोरपीति विश्वः। हन्तुं लोलम् उत्सुकं स्ववर्गं वारयन्तः जीवं गृहीत्वा जीवग्राहं ग्राहयामासुः जीवमेव ग्राहयामासुरित्यर्थः। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति णमुल् प्रत्ययः कषादित्वादनुप्रयोगः। जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाह तथाहि योग्येन जनेन हेतुना कस्य पुंसोऽर्थः कीर्त्यादिप्रयोजनं न स्यात् स्यादेव सर्वस्यापीत्यर्थः अतो वीराणां रणेष्वपि अति-परिक्षतरक्षणमेव श्रेयः। "नार्त्तं नातिपरिक्षतमिति हननिषेधादिति भावः ॥६६॥

**टिप्पना**—भिन्नानिति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६६॥

**বাঙ্গালা**—কতকগুলি সৎকুলোৎপন্ন যোদ্ধা অস্ত্রাঘাতে বিদীর্ণ হইয়া মূর্চ্ছিত হইল; তখন স্বপক্ষীয় যোদ্ধারা তাহাদিগকে বধ করিবার জন্য উৎসুক হইলে, অন্য যোদ্ধারা তাহা

भग्नैर्दण्डैरातपत्राणि भूमौ पर्य्यस्तानि प्रौढ़चन्द्रद्युतीनि ।
आहाराय प्रेतराजस्य रौप्यस्थालीनीव स्थापितानि स्म भान्ति ॥६७॥
रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् ।
हासाल्लक्ष्म्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्तासवस्य ॥६८॥
निम्ने स्रोणीभूतमस्त्रक्षतानामसृं भूमौ यच्चकासाञ्चकार ।
रागार्थं तत्किन्नु कौसुम्भमम्भः संव्यानानामन्तकान्तःपुरस्य ॥६९॥

---

দিগকে বারণ করিয়া, জীবিত অবস্থাতেই তাহাদিগকে বন্দী করাইল। কারণ, যোগ্য ব্যক্তি দ্বারা কাহার প্রয়োজন সিদ্ধ না হয়? ।৬৬।

**अन्वयः**—भग्नैः दण्डैः भूमौ पर्य्यस्तानि प्रौढ़चन्द्रद्युतीनि आतपत्राणि प्रेतराजस्य आहाराय स्थापितानि रौप्यस्थालीनि इव भान्ति स्म ॥६७॥

**टीका**—भग्नैरिति। भग्नैर्दण्डैर्हेतुना भग्नदण्डत्वादिति भावः। भूमौ पर्य्यस्तानि उत्तानपतितानि प्रौढ़चन्द्रद्युतीनि पूर्णेन्दुप्रभाणि आतपत्राणि श्वेतच्छत्राणीत्यर्थः प्रेतराजस्यान्तकस्य आहाराय भोजनाय स्थापितानि विहितानि रौप्यस्थालीनि राजतभाजनानीव भान्ति स्मेत्युत्प्रेक्षा ॥६७॥

**टिप्पनी**—भग्नैरिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

**বাঙ্গালা**—চন্দ্রের ন্যায় শুভ্রবর্ণ কতকগুলি ছত্র, দণ্ড ভগ্ন হওয়ায় ভূতলে চিৎ হইয়া পড়িয়াছিল; সেগুলি যেন যমের ভোজনের জন্য স্থাপিত রৌপ্যপাত্রের ন্যায় শোভা পাইয়াছিল ॥৬৭॥

**अन्वयः**—व्यसूनां पार्थिवानां वक्षसः भ्रष्टाः कुङ्कुमाङ्काः मुक्ताहाराः पूर्णकामस्य पीतरक्तासवस्य मृत्योः हासात् लक्ष्म्याः दन्ताः रेजुः (इति) मन्ये ॥६८॥

**टीका**—रेजुरिति। व्यसूनां मृतानां पार्थिवानां वक्षसो भ्रष्टाः पतिताः कुङ्कुमाङ्काः कुङ्कुमाङ्किता इत्यर्थः। मुक्ताहाराः पूर्णकामस्य सकलराजकसंहारात् सफलमनोरथस्य अतएव पीतं रक्तमेवासवं येन तस्य मृत्योः हासादट्टहासाल्लक्ष्म्या दृश्या दन्ता रेजुरिति मन्ये इत्युत्प्रेक्षा ॥६८॥

**टिप्पनी**---रेजुरिति। अत्र कुङ्कुमाङ्क इति च्छेकानुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

**বাঙ্গালা**—মৃত রাজগণের বক্ষঃস্থল হইতে নিপতিত কুঙ্কুমরঞ্জিত মুক্তাময় হারগুলি, পূর্ণকাম রক্তরূপমদ্যপায়ী যমের অট্টহাস্যবশতঃ দৃশ্য দন্তসমূহের ন্যায় শোভা পাইয়াছিল ইহা আমি মনে করি ॥৬৮॥

**अन्वयः**—स्रोणीभूतम् अस्त्रक्षतानां यत् असृं भूमौ निम्नेषु चकासाञ्चकार ; तत् अन्तकान्तःपुरस्य संव्यानानां रागार्थं कौसुम्भम् अम्भः किं नु ? ॥६९॥

रामेण त्रिःसप्तकृत्वो ह्रदानाञ्चित्रं चक्रे पञ्चकं क्षत्रियास्रैः।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन् सङ्ख्येऽसङ्ख्याः प्रावहन् द्वीपवत्यः॥७०॥
सन्दानान्तादङ्घ्रिभिः शिञ्जितास्त्रैराविश्याधः शातशस्त्रावलूनाः।
कूर्मौपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीनाम्॥७१॥

---

टीका—निम्नेष्विति। भूमौ निम्नेषु निम्नस्थलेषु ओघीभूतं राशीभूतम् अस्त्रहतानां सम्बन्धि यदसृग् रक्तं चकासाञ्चकार दिदीपे। चकास्तृ दीप्ताविति धातोर्लिट्, वानेकाच आम् वक्तव्यमित्याम्प्रत्यये कृञोऽनुप्रयोगः। तदसृक् अन्तकान्तःपुरस्य कृतान्तावरोधस्य संव्यानानामुत्तरीयाणां रागार्थं रञ्जनार्थं कुसुम्भस्येदं कौसुम्भम् अम्भः किंनु कौसुम्भद्रवो नु वेत्युत्प्रेक्षा॥६९॥

टिप्पनी—निम्नेष्विति। अत्र द्वितीयार्द्धे छेकानुप्रास इति तेन टीकोक्तोत्प्रेक्षा संसृज्यते। ओजो गुणः, गौड़ी च रीतिः॥६९॥

বাঙ্গালা—অস্ত্রাঘাতে ক্ষতবিক্ষত সৈন্যগণের রাশীকৃত যে রক্ত, নিম্ন ভূমিতে দীপ্তি পাইতেছিল; তাহা কি, যমের অন্তঃপুরের উত্তরীয় বস্ত্রগুলি রঞ্জিত করিবার নিমিত্ত কুসুম-ফুলের জল ছিল॥৬৯॥

अन्वयः—रामेण त्रिःसप्तकृत्वः क्षत्रियास्रैः चित्रं ह्रदानां पञ्चकं चक्रे; (किन्तु) तस्मिन् सङ्ख्ये तत्क्षणात् एव रक्ताम्भोभिः असङ्ख्याः द्वीपवत्यः प्रावहन्॥७०॥

टीका—रामेणेति। रामेण भार्गवेण सामर्थ्यात् त्रीन् वारान् त्रिः। "द्वित्रिचतुर्भ्यः सुच्" इति सुच्प्रत्ययः। त्रिरावृत्ताः सप्त त्रिःसप्तकृत्वः एकविंशतिवारानित्यर्थः। "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति कृत्वसुच्प्रत्ययः। क्षत्रियास्रै राजन्यरक्तैः चित्रम् अद्भुतं ह्रदानां पञ्चपरिमाणमस्य पञ्चकम्। "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" इति सङ्ख्यार्थे कन्प्रत्ययः चक्रे कृतं तस्मिन् सङ्ख्ये युद्धे "मृधमास्कन्दनं सङ्ख्यम्" इत्यमरः। क्षणादेव रक्तैरेवाम्भोभिः असङ्ख्या द्वीपवत्यो नद्यः प्रावहन्। प्रासरन्, रामेण बहुकालेन च क्षमन्तपञ्चकाख्यं ह्रदपञ्चकमेव कथञ्चित् कृतम् अत्र तु क्षणमात्रेणासङ्ख्या नद्यः प्रवृत्ता इत्युपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः॥७०॥

टिप्पनी—रामेणेति। अत्र चतुर्थपादगतेन छेकानुप्रासेन टीकोक्तो व्यतिरेकः संसृज्यते। ओजो गुणः, गौड़ी च रीतिः॥७०॥

বাঙ্গালা—পরশুরাম একুশবার ক্ষত্রিয়রক্ত দ্বারা সুন্দর পাঁচটী হ্রদ করিয়াছিলেন; কিন্তু সেই যুদ্ধে তখনই রক্তময় জল দ্বারা অসংখ্য নদী প্রবাহিত হইল॥৭০॥

अन्वयः—शिञ्चितास्त्रैः अङ्घ्रिभिः अधः आविश्य सन्दानान्तात् शातशस्त्रावलूनाः ऐभाः अङ्घ्रयः असृङ्मयीनां नदीनाम् अन्तः व्यक्तं कूर्मौपम्यं प्रापन्॥७१॥

टीका—सन्दानान्तादिति। शिञ्चितास्त्रैरभ्यस्तास्त्रविद्यैरङ्घ्रिभिरायुधीयैः अधः पदा-

पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैरेव हंसैः।
सोपस्काराः प्रावहन्नस्रतोयाः स्रोतस्विन्यो वीचिषूच्चैस्तरङ्गैः ॥৭২॥
उत्क्रान्तानामामिषायोपरिष्टादध्याकाशं बभ्रमुः पत्रवाहाः।
मूर्त्ताः प्राणा नूनमद्याप्यवेक्षामासुः कायं त्याजिता दारुणास्त्रैः ॥৭৩॥

---

नामधस्तादाविश्य प्रविश्य षन्दानान्तात् बन्धनप्रदेशात् गुल्फदेशमधिकृत्येत्यर्थः। शातं शितम्। "शाच्छोरन्यतरस्याम्" इति विकल्पादीत्वाभावः। तेन शस्त्रेणावलूनाः छिन्नाः। इभानामिमे ऐभाः अङ्घ्रयश्चरणाः असृङ्मयीणां नदीनामन्तरभ्यन्तरे व्यक्तं कूर्मौपम्यं कमठोपमाम्। स्वार्थे ष्यञ्प्रत्ययः। अत एवौपम्यादयः चातुर्वर्ण्यवदिति वामनः। प्रापन् प्रापुः। आपो लुङि पुषादित्वात् च्लेरङादेशः। उपमा ॥৭১॥

टिप्पनी—षन्दानेति। अत्र ओजो गुणः, गौड़ी च रीतिः ॥৭১॥

বাঙ্গালা—অস্ত্রবিদ্যায় সুশিক্ষিত সৈন্যগণ রথের নীচে প্রবেশ করিয়া, নিশিত শস্ত্র দ্বারা হস্তিগণের গোরালি হইতে চরণগুলি ছেদন করিয়া ফেলিল; তখন সে চরণগুলি, রক্তময়ী নদীর ভিতরে স্পষ্টতঃ কূর্ম্মের সাদৃশ্য লাভ করিল ॥৭১॥

अन्वयः—उच्चैः वीचिषु तरङ्गैः पद्माकारैः योधवक्त्रैः इभानां कर्णभ्रष्टैः चामरैः एव हंसैः सोपस्काराः अस्रतोयाः स्रोतस्विन्यः प्रावहन् ॥৭২॥

टीका—पद्माकारैरिति। उच्चैर्वीचिषु तरङ्गैः प्लवमानैः पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भटमुखैरिभानां कर्णेभ्यो भ्रष्टैश्चामरैर्हंसैः सोपस्काराः सपरिकराः। "सम्पर्युपेभ्यः करोतौ भूषणे" इति सुडागमः। अस्रतोयाः रक्तजलाः स्रोतस्विन्यो नद्यः प्रावहन्। अत्र रूपकोपमयोः सङ्करः सुगमः ॥৭২॥

टिप्पनी—पद्मेति। अत्रापि गुणरीती पूर्ववत् ॥৭২॥

বাঙ্গালা—বড় বড় তরঙ্গের উপরে পদ্মের ন্যায় সৈন্যদিগের মুখগুলি ভাসিতেছিল এবং হস্তিগণের কর্ণ হইতে পতিত চামরগুলি হংসস্বরূপ ছিল; সুতরাং সেগুলি দ্বারা ভূষিত রক্তজলপূর্ণ নদীসকল বহিত হইতে লাগিল ॥৭২॥

अन्वयः—पत्रवाहाः आमिषाय उत्क्रान्तानाम् उपरिष्टात् अध्याकाशं बभ्रमुः। दारुणास्त्रैः कायं त्याजिताः मूर्त्ताः प्राणाः अद्य अपि नूनम् कायम् अवेक्षामासुः ॥৭৩॥

टीका—उत्क्रान्तानामिति। पत्राणि वहन्तीति पत्रवाहाः पक्षिणः आमिषाय आमिषमत्तुम्। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी। उत्क्रान्तानां मृतानामुपरिष्टादध्याकाशमाकाशे। विभक्त्यर्थेऽव्ययीभावः। बभ्रमुः भ्रेमुः। "वा जॄभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपाभावः। अत्रोत्प्रेक्षते दारुणास्त्रैः घोरास्त्रैः कायं त्याजिताः विसर्जिताः। त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः। "ण्यन्ते कर्त्तुश्च कर्मणाम्" इति वचनात्। मूर्त्ताः मूर्त्तिमन्तः। प्राणा अद्येदानीमपि कायमवेक्षामासुः पूर्वाभिमानात् पुनः

आतन्वद्भिर्दिक्षु पक्षाग्रनादं प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः।
आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्रिपूगैरपायि ॥७४॥
ओजोभाजां यद्रणे संस्थितानामादत्तीव्रं साद्धमङ्गेन नूनम्।
ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा वनाशि ॥७५॥

---

कायप्रवेशापेक्षिणो मूर्त्ताः प्राणा एव नूनमाराद् भ्रमन्तीत्युत्प्रेक्षार्थः। "इजादेश्च गुरुमतोऽनृच्छ" इत्याम्प्रत्ययः "कृञ्चानुप्रयुज्यते" लिटीत्यस्तेरनुप्रयोगः आम्प्रत्ययवदित्यत्र कृञ एवेति नियमादस्तेर्नात्मनेपदम् ॥७३॥

टिप्पनी—उत्क्रान्तानामिति। अत्र ओजो गुणः, गौड़ी च रीतिः ॥७३॥

বাঙ্গালা—পক্ষিগণ মাংস ভোজন করিবার জন্য, মৃত ব্যক্তিগণের উপরে আকাশে ভ্রমণ করিতে লাগিল ; সুতরাং বোধ হইল যে, দারুণ অস্ত্রের আঘাতে দেহ হইতে নির্গত প্রাণগুলি যেন মূর্ত্তিমান্ হইয়া, এখনও সেই দেহ দেখিতেছিল ॥৭৩॥

अन्वयः—दिक्षु पक्षाग्रनादम् आतन्वद्भिः दूरात् आशु प्राप्तैः अजीवैः पत्रिपूगैः तीक्ष्णैः मुखाग्रैः आदौ सैनिकानां रक्तम् अपायि पश्चात् जीवैः पत्रिपूगैः तीक्ष्णैः मुखाग्रैः सैनिकानां रक्तम् अपायि ॥७४॥

टीका—आतन्वद्भिरिति। दिक्षु पक्षाग्रनादं पक्षान्तघोषम् आतन्वद्भिर्विस्तारयद्भिर्दूराद्दूरादाशु प्राप्तैरागतैरजीवैरचेतनैः। पचाद्यजन्तेन नञ्समासः। पत्रिपूगैर्बाणव्रातैरित्यर्थः। तीक्ष्णैर्मुखाग्रैः करणैः सैनिकानां रक्तमपायि पीतम्। पिबतेः कर्मणि लुङ्। "आतो युक् चिण्कृतोरि"ति युगागमः। पश्चाज्जीवैश्चेतनैः पत्रिपूगैः पक्षिसङ्घैः कर्तृभिस्तीक्ष्णैर्मुखाग्रैश्चञ्चुपुटैः करणैरपायि। अत्रोभयेषां पत्रिणां प्रकृतत्वात् केवलप्रकृतविषयः श्लेषः ॥७४॥

टिप्पनी—आतन्वद्भिरिति। अत्र ओजो गुणः, गौड़ी च रीतिः ॥७४॥

বাঙ্গালা—সকল দিকে পক্ষপ্রান্তের শব্দ বিস্তার করিয়া, দূর হইতে শীঘ্র নিপতিত হইয়া, প্রথমে অচেতন পত্রিগণ (বাণসমূহ) তীক্ষ্ণ মুখাগ্র দ্বারা সৈন্যগণের রক্ত পান করিল ; পরে চেতন পত্রিগণ (পক্ষিগণ) তীক্ষ্ণ চঞ্চুপুট দ্বারা তাহাদের রক্ত পান করিতে থাকিল ॥৭৪॥

अन्वयः—दीप्तजिह्वा रणे संस्थितानाम् ओजोभाजाम् अङ्गेन सार्द्धं यत् तीव्रं तेजः आदत ; तत् अन्तः तेजः ज्वालाव्याजात् उद्वमन्ती (सती) नूनं तारं ववाशे ॥७५॥

टीका—ओजोभाजामिति। दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा। रणे संस्थितानां मृतानामोजोभाजामोजस्विनाम्। अङ्गेन गात्रेण सार्द्धं यत्तीव्रं तिग्मं तेज आदभक्षयत्। आदेर्लुङ् अदः सर्वेषामित्यडागमेऽपृक्तस्य आडजादीनामित्याडागमोऽङ्गस्य आदश्चेति वृद्धिः। तदन्तरन्तरेऽन्तरितं तेजो ज्वालाव्याजान्मुखोल्कच्छलादुद्वमन्ती तारमुच्चैर्ववाशे रौति स्म। "तिरश्चां वाशितं रुतमि"त्यमरः। नूनमित्युत्प्रेक्षायाम्। अत्र व्याजशब्देन ज्वालात्वापह्नवेन तेजस्त्वोत्प्रेक्षणे सापह्नवोत्प्रेक्षेति सङ्करः ॥७५॥

टिप्पनी—ओजो इति। अत्रापि गुणरीती पूर्ववत् ॥७५॥

নৈরন্তর্য্যচ্ছিন্নদেহান্তরালং দুর্ভক্ষস্য জ্বালিনা বাশিতেন।
যোদ্ধুর্বাণপ্রোতমাদীপ্য মাংসং পাকাপূর্বস্বাদমাদে শিবাভিঃ ॥৭৬॥
স্বানিচ্ছেদি ক্ষুত্প্রবোধায় পীত্বা রক্তারিষ্টং শোষিতাজীর্ণশেষম্।
স্বাদুঙ্কারং কালখণ্ডোপদংশং ক্রোষ্টা ডিম্বং ব্যস্বনদ্ ব্যস্বনচ্চ ॥৭৭॥

---

বাঙ্গালা—শৃগালগণ, যুদ্ধে মৃত তেজস্বী সৈন্যগণের অঙ্গের সহিত যে তীব্র তেজ ভক্ষণ করিয়াছিল; মুখের অগ্নিচ্ছলে অন্তরিত সেই তেজই যেন বাহির করিতে থাকিয়া, উচ্চস্বরে রব করিয়াছিল ॥৭৫॥

অন্বয়:—শিবাভিঃ নৈরন্তর্য্য-চ্ছিন্ন-দেহান্তরালং বাণপ্রোতং দুর্ভক্ষস্য যোদ্ধুঃ মাংসং জ্বালিনা বাশিতেন আদীপ্য পাকাপূর্বস্বাদম্ আদে ॥৭৬॥

টীকা—নৈরন্তর্য্যেতি। নৈরন্তর্য্যেণাবিচ্ছেদেন ছিন্নং দেহস্যান্তরালং যস্মিন্ কর্মণি তদ্যথা তথা বাণৈঃ প্রোতং স্যূতম্ অতএব দুর্ভক্ষস্য ভক্ষিতুমশক্যস্য। অশক্যার্থে খল্-প্রত্যয়ঃ যোদ্ধুর্যোধস্য সম্বন্ধি মাংসং জ্বলিনা জ্বালাবতা বাশিতেন রুতেন শিবানাং বাশ্যেন জিহ্বা জ্বলতীতি প্রসিদ্ধিঃ। আদীপ্য প্রজ্বাল্য। বাণদাহায় মাংসপাকায় চেতি ভাবঃ। অতএব পাকেনাপূর্বোঽভিনবঃ স্বাদো রুচির্যস্য তত্তথা শিবাভির্গোমায়ুভিঃ। "স্ত্রিয়াং শিবা ভূরিমায়গোমায়ুমৃগধূর্ত্তকাঃ" ইত্যমরঃ। আদে জঘসে ভক্ষিতমিত্যর্থঃ। "লিট্যন্যতরস্যাম্" ইতি বিকল্পাদদের্ঘস্লাদেশঃ। বাশিতচ্ছয়া জিহ্বাজ্বালাদগ্ধেষু অপ্রতিবন্ধেন পাকরুচিরং জঘস ইত্যর্থঃ। অত্র পাকাপূর্বস্বাদাদ্যসম্বন্ধেঽপি সম্বন্ধোক্তেরতিশয়োক্তিঃ ॥৭৬॥

টিপ্পনী—নৈরেতি। ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭৬॥

বাঙ্গালা—বাণসমূহ পড়িয়া কোন যোদ্ধার দেহটাকে এমন ভাবে বিদ্ধ করিয়াছিল যে, তাহাতে আর ফাঁক ছিল না; সুতরাং তাহার মাংস ভক্ষণ করা শৃগালের পক্ষে দুষ্কর ছিল; তাই অগ্নিশিখাশালী রব দ্বারা সেই বাণগুলিকে দগ্ধ করিয়া এবং মাংসগুলিকে পাক করিয়া, শৃগালগণ সেই অপূর্ব্বস্বাদ পক্ব মাংস ভক্ষণ করিতে লাগিল ॥৭৬॥

অন্বয়:—ক্রোষ্টা ক্ষুত্প্রবোধায় স্বানিচ্ছেদি শোষিতাজীর্ণশেষং রক্তারিষ্টং পীত্বা স্বাদুঙ্কারং কালখণ্ডোপদংশং ডিম্বং ব্যস্বনাত্ ব্যস্বনচ্চ ॥৭৭॥

টীকা—স্বানীতি। ক্রোষ্টা জম্বুকঃ ক্ষুত্প্রবোধায় স্বানিচ্ছেদি খেদহারি শোষিতৌ জারিত অজীর্ণশেষো যেন তদ্রক্তমেবারিষ্টং পানবিশেষ ইতি রূপকম্। তত্পীত্বা স্বাদুঙ্কারং স্বাদূকৃত্য। "স্বাদুমীতি ণমুল্"। কালখণ্ডেন যকৃতা উপদংশং কালখণ্ডমুপদংশং কৃত্বেত্যর্থঃ। "কালখণ্ডযকৃতী তু সমে" ইত্যমরঃ। "উপদংশস্তৃতীয়ায়াম্" ইতি ণমুল্। কালখণ্ডস্য দংশনক্রিয়াকর্মত্বেঽপি ভুজিক্রিয়াকরণত্বাত্ তৃতীয়োপপদতয়া "তৃতীয়াপ্রভৃতীন্যন্যতরস্যাম্" ইতি বিকল্পেনোপপদসমাসঃ। ডিম্বং কলেবরং ব্যস্বনাত্ ভুক্তবানিত্যর্থঃ। "বেশ্বনৌ ভোজন" ইতি ষত্বম্। ব্যস্বনদ্ যাদয়চ্চেতি সমুচ্চয়ঃ। অভোজনার্থত্বাত্ ষত্বং ন ॥৭৭॥

টিপ্পনী—স্বানীতি। অত্র রক্তারিষ্টমিতি নিরঙ্গং কেবলরূপকমলঙ্কারঃ। গুণরীতী পূর্ববত্ ॥৭৭॥

क्रव्यात्पूगैः पुष्कराण्यानकानां प्रत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राणिनः प्रत्यवस्यन् कालो नूनं व्याददावाननानि ॥৭৮॥
कीर्णा रेजे साजिभूमिः समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः ।
वप्रारम्भैरर्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥৭৯॥

---

বাঙ্গালা—শৃগালগণ ক্ষুধার উদ্রেক জন্মাইবার জন্য, পরিশ্রমনাশক এবং অবশিষ্ট-অজীর্ণতাহারক রক্তরূপ অরিষ্ট পান করিয়া, পরে সুস্বাদু যকৃৎ ভক্ষণপূর্ব্বক সৈন্যগণের শরীর ভক্ষণ করিতে লাগিল এবং মধ্যে মধ্যে শব্দ করিতে থাকিল ॥৭৭॥

अन्वयः—क्रव्यात्पूगैः मेदसः प्रत्याशाभिः दारितानि आनकानां मुखानि, प्राणिनः प्रत्यवस्यन् कालः आभीलानि आननानि नूनं व्याददौ ॥৭৮॥

टीका—क्रव्यादिति । क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः कङ्कगृध्रादयः । "क्रव्ये चेति विट्प्रत्ययः । तेषां पूगैः कदम्बैः मेदसो वपायाः । "मेदस्तु वपा वसेत्यमरः । प्रत्याशाभिस्तृष्णाभिर्दारितानि मेदस्वित्वभ्रान्त्या पाटितान्यानकानां तूर्य्याणां पुष्कराणि मुखानि । "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इत्यमरः । प्राणिनः करितुरगादीन् प्रत्यवस्यन् अभ्यवहरन् । "अभ्यवहारः प्रत्यवसानं भोजनं जग्धिरिति हलायुधः । कालोऽन्तकः आभीलानि भयङ्कराणि । "आभीलं भीमकृच्छ्रयोरिति विश्वः । आननानि व्याददौ विददार । आङ्पूर्वो दाञ् विवरणे इत्यस्य प्रत्युदाहरणमेतत् । यानि विदारितानि पुष्कराणि तान्येवाननानि । नूनमित्युत्प्रेक्षायाम् ॥৭৮॥

टिप्पनी—क्रव्यादिति । अत्र ओजो गुणः, गौड़ी च रीतिः ॥৭৮॥

বাঙ্গালা—মাংসভোজী পশু-পক্ষিগণ বসা পান করিবার আশায় ভেরীর মুখগুলি বিদারণ করিয়া ফেলিল; তাহাতে বোধ হইল যে, সৈন্যভোজনকারী যম যেন ভয়ঙ্কর মুখ ব্যাদান করিয়াছেন ॥৭৮॥

अन्वयः—अप्राणद्भिः प्राणभाजां प्रतीकैः समन्तात् कीर्णा सा आजिभूमिः वप्रारम्भैः (तथा) अर्धसंयोजितैः रूपैः स्रष्टुः सृष्टिकर्मान्तशाला वा रेजे ॥৭৯॥

टीका—कीर्णेति । अप्राणद्भिरजीवद्भिः छिन्नत्वान्निष्प्राणैरित्यर्थः । 'अन प्राणने' इति धातोर्लटः शत्रादेशः । प्राणभाजां प्राणिनां प्रतीकैरवयवैः । "अङ्गं प्रतीकोऽवयव" इत्यमरः । समन्तात् कीर्णा सा आजिभूमिः ईषदसमाप्तारम्भैरिति वप्रारम्भैः किंचिदूनसृष्टैरित्यर्थः । "विभाषा सुपो बहुच् पुरस्तादिति बहुच्प्रत्ययः । तथार्धसंयोजितैरर्धसृष्टैश्च रूपैः आकारैः । "रूपं स्वरूपे सौन्दर्य्ये आकारश्लोकयोरपीति विश्वः । कीर्णा स्रष्टुः धातुः सृष्टिकर्मान्तशाला वा सृष्टिकर्मणो नियतागारमिव रेजे इत्युत्प्रेक्षा ॥৭৯॥

टिप्पनी—कीर्णेति । अत्र द्वितीयचतुर्थपादगतेन च्छेकानुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते ओजो गुणः, गौड़ी च रीतिः ॥৭৯॥

আয়ন্তীনামবিরতরয়ং রাজকানীকিনীনা-
মিত্থং সৈন্যৈঃ সমমলঘুভিঃ শ্রীপতেরূর্ম্মিমদ্ভিঃ।
আসীদোঘৈর্ম্মুহুরিব মহদ্বারিধেরাপগানাং
দোলাযুদ্ধং কৃতগুরুতরধ্বানমৌদ্ধত্যভাজাম্ ॥৮০॥

ইতি শ্রীমাঘকৃতৌ শিশুপালবধে মহাকাব্যে শঙ্কুল-
যুদ্ধবর্ণনো নামাষ্টাদশঃ সর্গঃ ॥১৮॥

—০—

বাঙ্গালা—সেই সমরভূমি, মৃত প্রাণিগণের অঙ্গ প্রত্যঙ্গ দ্বারা সকল দিকেই ব্যাপ্ত হইল; তাহাতে বোধ হইল যে, প্রায় সম্পূর্ণনির্ম্মিত এবং অর্দ্ধনির্ম্মিত আকৃতিসমূহ দ্বারা সৃষ্টিকর্ত্তার সৃষ্টিকরার ঘর যেন শোভা পাইতেছে ॥৭৯॥

অন্বয়ঃ—ইত্থম্ অবিরতরয়ম্ আয়ন্তীনাম্ ঔদ্ধত্যভাজাং রাজকানীকিনীনাম্ অলঘুভিঃ ঊর্ম্মিমদ্ভিঃ শ্রীপতেঃ সৈন্যৈঃ সমম্ আপগানাং বারিধেঃ ওঘৈঃ ইব কৃতগুরুতরধ্বানং মহৎ দোলাযুদ্ধম্ আসীৎ ॥৮০॥

টীকা—আয়ন্তীনামিতি। ইত্থমুক্তরীত্যা অবিরতরয়মবিচ্ছিন্নবেগং যথা তথা আয়ন্তীনামভিধাবন্তীনামৌদ্ধত্যভাজাং প্রাগল্‌ভ্যভাজাং রাজ্ঞাং সমূহা রাজকানি। গোত্রো-ক্ষেত্যাদিনা বুঞ্ প্রত্যয়ঃ। তেষামনীকিন্যঃ সেনাস্তাসাং রাজকানীকিনীনাম্ অলঘুভির্ম-হদ্ভিরূর্ম্মিমদ্ভিস্তরঙ্গবদ্ভিঃ শ্রীপতেঃ কৃষ্ণস্য সৈন্যৈঃ সমং সেনাভিঃ সহ অপাং সমূহঃ আপম্। ভিক্ষাদিভ্যোঽণ্। আপেন গচ্ছন্তীতি আপগানাং সুক্তবিশেষণবিশিষ্টানাং বারিধেরোঘৈঃ প্রবাহৈরিব কৃতো গুরুতরধ্বনির্মহাধ্বনির্যস্মিন্ তন্মহদ্দোলাযুদ্ধম্ অনিয়তজয়পরাজয়যুদ্ধং মুহুরাসীৎ। উপমা। মন্দাক্রান্তা বৃত্তমেতৎ ॥৮০॥

ইতি শ্রীমহোপাধ্যায়কোলাচলমল্লিনাথসূরিবিরচিতে
মাঘকাব্যব্যাখ্যানে সর্ব্বঙ্কষাখ্যে
অষ্টাদশঃ সর্গঃ ॥১৮॥

—০—

টিপ্পনী—আয়ন্তীনামিতি। অত্র বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৮০॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশবিরচিতায়াং
শিশুপালবধটিপ্পন্যাং মাধুরীসমাখ্যায়াং
অষ্টাদশঃ সর্গঃ ॥০॥

—০—

বাঙ্গালা—বিশাল ও তরঙ্গশালী সমুদ্রপ্রবাহের সহিত, অবিরতবেগে আগত এবং উদ্ধত নদীগুলির যেমন যুদ্ধ হয়; সেইরূপ বিশাল ও তরঙ্গশালী শ্রীকৃষ্ণসৈন্যের সহিত, অবিরত বেগে আগত এবং উদ্ধত বিপক্ষ রাজসেনার এই ভাবে মহাদোলাযুদ্ধ (জয়পরাজয়-শূন্য যুদ্ধ) হইতে লাগিল এবং উভয় সৈন্যেরা গুরুতর কোলাহল করিতে থাকিল ॥৮০॥

## ऊनविंशः सर्गः ।

—:०:—

अथोत्तस्थे रणाटव्यामसुहृद्वेणुदारिणा ।
नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥१॥
आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥२॥

---

अन्वयः—अथ रणाटव्याम् असुहृद्वेणुदारिणा वेणुदारिणा नृपाङ्घ्रिपौघसंघर्षात् अग्निवत् उत्तस्थे ॥१॥

टीका—तदेवमष्टादशसर्गे तुमुलं युद्धमभिधायेदानीमेकोनविंशतिसर्गे द्वन्द्वयुद्धमनुष्टुभेन छन्दसा चित्रबन्धेन वर्णयितुमारभते । अथेत्यादि । अथेदं तुमुलयुद्धानन्तरम् । रणोऽटवीवेत्युपमितसमासः अग्निवदिति तद्धितौपम्यलिङ्गात् । एवमुत्तरत्रापि द्रष्टव्यम् । तस्यां रणाटव्याम् असुहृदः शत्रवो वेणवो वंशा इव । "वेणुमस्करतेजनाः" इति वंशपर्य्यायेष्वमरः । तां दारयति यस्तेनासुहृद्वेणुदारिणा वेणुदारिणा बाणात्मजेन । नृपा अङ्घ्रिपाः पादपा इव तेषामोघाः सङ्घास्तेषां संघर्षात् मत्सरात् श्लेषाच्च अग्निवदग्नितुल्यम् । "तेन तुल्यमिति तुल्यार्थे वतिप्रत्ययः । उत्तस्थे उत्थितम् । भावे लिट् । अत्राग्निवदिति तुल्यार्थेन वतिना धर्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा । सा च रणाटव्यादिसमासगतोपमासापेक्षेति सङ्करः । सर्गेऽस्मिन् अनुष्टुभं वृत्तम् । "पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च सर्वेषामेतत् श्लोकस्य लक्षणमिति लक्षणात् । अत्रैकान्तरश्लेषयमकाद्यन्यतमशब्दालङ्कारनियमः सर्वत्र यथासम्भवमर्थालङ्कारस्य । तत्र यमकलक्षणमुक्तं दण्डिना । "अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः । यमकन्तच्च पादानामादिमध्यान्तगोचरम् । एकद्वित्रिचतुष्पादयमकानां विकल्पना । आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः" इति । अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः ॥१॥

टिप्पनी—अथेति । अत्र युद्ध वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१॥

বাঙ্গালা—পূর্ব্ববর্ণিত তুমুল যুদ্ধের পর, বনের মধ্যে বৃক্ষসমূহের পরস্পর সংঘর্ষবশতঃ বংশদাহী অগ্নি যেমন উত্থিত হয়; সেইরূপ সমরাঙ্গনে রাজগণের পরস্পর সংঘর্ষ দেখিয়া, শত্রুহন্তা বেণুদারী (বাণরাজার পুত্র) যুদ্ধ করিবার জন্য উত্থিত হইলেন ॥১॥

জজৌজোজাজিজ্জাজী তং ততোঽতিততাতিতুৎ।
ভাভোঽভীভাভিভূভাভূরারারিররিরীররঃ ॥৩॥ একাক্ষরপাদঃ।

---

**অন্বয়ঃ**—অঙ্গীকৃতপরাক্রমঃ বলঃ কেসরী মাতঙ্গম্ ইব দূরাৎ আপতন্তম্ অমুম্ অবলোকয়াঞ্চক্রে ॥২॥

**টীকা**—আপতন্তমিতি। আপতন্তমাধাবন্তম্ অমুং বৈণুদারিং দূরাৎ অঙ্গীকৃতপরাক্রমোঽঙ্গীকৃতপৌরুষত্বেন সর্ব্বানুগতসংপ্রহার ইত্যর্থঃ। বলো বলভদ্রঃ কেসরী সিংহো মাতঙ্গং গজমিবাবলোকয়ামাস অনয়োরিব তদন্তরমিতি ভাবঃ। অতোঽলঙ্কারেণ বস্তুধ্বনিঃ ॥২॥

**টিপ্পনী**—আপতন্তমিতি। অত্র উপমাচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিঃ। যুদ্ধবীরো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২॥

**বাঙ্গালা**—হস্তী আসিতে লাগিলে, সিংহ যেমন তাহাকে দেখিতে থাকে; তেমন বেণুদারী দূর হইতে আসিতেছিলেন, তখন বলরাম পরাক্রমপূর্ব্বক তাঁহাকে দেখিতে থাকিলেন ॥২॥

**অন্বয়ঃ**—ততঃ জজৌজোজাজিজিৎ জাজী অতিততাতিতুৎ ভাভঃ অভীভাভিভূভাভূঃ অরিরীররঃ অরিঃ তম্ আর ॥৩॥

**টীকা**—জজাবিতি। ততোঽবলোকনানন্তরং জজন্তীতি জজাঃ যোধাঃ। জজ যুদ্ধে পচাদ্যচ্। জজানামোজসা জাতা জজৌজোজা তামাজিং জয়তীতি জজৌজোজাজিজিৎ। জয়তেঃ ক্বিপ্। জজতীতি জাজী যোধী। তাচ্ছীল্যে ণিনিঃ। অতিততানত্যুদ্ধতান্ অতিতুদতি অতিব্যথয়তীতি অতিতুৎ। তুদতেঃ ক্বিপ্। ভস্যেবাভা যস্য স ভাভো নক্ষত্রকান্তিঃ। "নক্ষত্রমৃক্ষং ভং তারা" ইত্যমরঃ। নাস্তি ভীর্যেষাং তেঽভিয়ো নির্ভীকাঃ তানিভান্ গজান্ অভিভবতীতি অভীভাভিভূঃ। ক্বিপ্। তস্যাঃ আভস্তেজসো ভূঃ স্থানম্ অভীভাভিভূভাভূঃ। অরাঃ সন্ত্যেষামিত্যরীণ্যা চক্রাণি তৈঃ রীয়ন্তি গচ্ছন্তীতি অরিরীঃ রথাঃ। রী গতিস্রেষণয়োরিতি ধাতোঃ ক্বিপ্। তেষাম্ ঈরং প্রেরণং রাতি অরিরীররো-রথিকঃ। আতোঽনুপসর্গে কঃ। অরিঃ শত্রুর্বলভদ্রঃ তং বৈণুদারিম্ আর যোদ্ধুমাসসাদে-ত্যর্থঃ ঋ গতাবিতি ধাতোর্লিট্ দ্বির্ভাবতীত্যলি বৃদ্ধিঃ অভ্যাসস্যোরদত্বে অত আদেরিতি দীর্ঘে পুনঃ সবর্ণদীর্ঘঃ। ভিন্নৈকাক্ষরপাদাখ্যোঽনুপ্রাসভেদঃ ভাভ ইত্যুপমানুপ্রাসয়োরেকবাচকানুপ্রবেশলক্ষণসঙ্করঃ ॥৩॥

**টিপ্পনী**—জজাবিতি। অত্র প্রত্যেকপাদে একৈকাক্ষরস্য প্রয়োগাদাবর্ত্তনে ত্বনুপ্রাসচতুষ্টয়মিতি মল্লিনাথাশয়ঃ। যুদ্ধবীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩॥

**বাঙ্গালা**—তাহার পর, যোদ্ধাদিগের তেজে যে যুদ্ধ হইত সেই যুদ্ধ যিনি জয় করিতেন, যিনি স্বয়ং যোদ্ধা ছিলেন, যিনি অত্যন্ত উদ্ধত বীরগণকে অত্যন্ত ব্যথিত করিতেন, নক্ষ;

भवन् भयाय लोकानामाकम्पितमहीतलः ।
निर्घात इव निर्घोषभीमस्तस्यापतद्रथः ॥४॥
रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
कोपादथैनं श्रितया महेष्वा स विचक्षणे ॥५॥

ত্রের ন্যায় যাঁহার কান্তি ছিল এবং নির্ভয় হস্তিগণকেও পরাজিত করিতে পারে, এমন তেজের যিনি, আধার ছিলেন ; সেই শত্রু বলরাম রথসঞ্চালন পূর্ব্বক বেণুদারীর প্রতি ধাবিত হইলেন ॥৩॥

**अन्वयः**—लोकानां भयाय भवन् आकम्पितमहीतलः निर्घोषभीमः तस्य रथः निर्घातः इव आपतत् ॥४॥

**टीका**—भवन्निति । लोकानां जनानां जगतां च । "लोकस्तु भुवने जने" इत्यमरः । भयाय भवन् सम्पद्यमानः भयं जनयन्नित्यर्थः । "क्लृपि सम्पद्यमाने चतुर्थी च वक्तव्येति क्लृपेरर्थनिर्देशाच्चतुर्थी । आकम्पितमहीतलो भूकम्पं कुर्वन्नित्यर्थः । निर्घोषेण भीमो भयङ्करः तस्य बलभद्रस्य रथो निर्घात इवापतत् आधावत् । श्रौतीपूर्णोपमा ॥४॥

**टिप्पनी**—भवन्निति । अत्र तृतीयपादगतेन च्छेकानुप्रासेन टीकोक्ता पूर्णोपमा संसृज्यते । रसादयः पूर्ववत् ॥४॥

**বাঙ্গালা**—বলরামের রথখানা লোকের ভয় জন্মাইয়া, ভূতল কম্পিত করিয়া এবং শব্দ দ্বারা ভয়ঙ্কর হইয়া, নির্ঘাতের ন্যায় ধাবিত হইল ॥৪॥

**अन्वयः**—रिपुः आजिमहेषु विचक्षणे रामे शरान् आस । अथ सः कोपात् श्रितया महेष्वा एनं विचक्षणे ॥५॥

**टीका**—राम इति । रिपुर्वेणुदारी आजिमहेषु रणोत्सवेष्विति रूपकम् । "मह उद्धव उत्सव" इत्यमरः । विचक्षणे प्रगल्भे । विचष्ट इति कर्त्तरि ल्युडिति न्यासकारः । असनयोश्च प्रतिषेधो वक्तव्य इति चक्षिङः ख्याञादेशाभावः । रामे बलभद्रे शरान् आस चिक्षेप । असतेर्लिट् अत आदेरित्यभ्यासदीर्घे सवर्णदीर्घः । कोपात्तु राम एनं वेणुदारिणं श्रितया शातया । शाच्छोरन्यतरस्यामितीत्वम् । महेष्वा महेषुणा । "पत्नी रोप इषुर्द्वयोरित्यमरः । विचक्षणे जघान । क्षणु हिंसायामिति धातोः कर्त्तरि लिट् । अभिन्नसमपादो नाम पादाभ्याससमकभेदः । एवमुत्तरत्रापि द्रष्टव्यम् ॥५॥

**टिप्पनी**—राम इति । अत्र युद्धवीरो रसः, ओजो गुणः, गौडी च रीतिः ॥५॥

**বাঙ্গালা**—বেণুদারী, যুদ্ধোৎসবনিপুণ বলরামের প্রতি বহুতর বাণক্ষেপ করিলেন। তাহার পর, বলরাম ক্রোধবশতঃ নিশিত মহাবাণ দ্বারা বেণুদারীকে প্রহার করিলেন ॥৫॥

दिशमर्कमिवावाचीं मूर्च्छागतमपाहरत्।
मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः ॥६॥
कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम्।
ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम् ॥७॥
उल्मुकेन द्रुमं प्राप्य सङ्कुचत्पत्रसञ्चयम्।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥८॥

---

**अन्वयः**—सूतः मूर्च्छागतं मन्दप्रतापं तम्, अवाचीं दिशं (प्राप्तम्) अर्कम् इव आजिविहायसः शीघ्रम् अपाहरत् ॥६॥

**टीका**—दिशमिति। मूर्च्छागतं रामेषुपातान्मोहमुपगतम्। अतएव मन्दप्रतापमल्पप्रकाशं तं वेणुदारिणम् अवाचीं दक्षिणां दिशं प्राप्तम्। अतएवं मन्दप्रतापमर्कमिव सूतः सारथिरनूरुश्च आजेर्विहायसः आकाशादिव आजिविहायस इत्युपमितसमासः। शीघ्रमपाहरत् अपसारितवान्। उपमा ॥६॥

**टिप्पनी**—दिशमिति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥६॥

**বাঙ্গালা**—সারথি অরুণ যেমন দক্ষিণদিকে গত ক্ষীণতেজ সূর্য্যকে আকাশপথে সরাইয়া নেয়; তেমন বেণুদারীর সারথি, (বলরামের বাণাঘাতে) মূর্চ্ছিত ক্ষীণতেজ বেণুদারীকে তাড়াতাড়ি যুদ্ধস্থান হইতে সরাইয়া নিল ॥৬॥

**अन्वयः**—सप्रभावा शिनेः चमूः शाल्वचमूं जितां कृत्वा वक्त्रैः फुल्लाब्जसप्रभा (सती) ऊर्जितां वाचं ससर्ज ॥७॥

**टीका**—कृत्वेति। प्रभावेण सह वर्त्तत इति सप्रभावा महानुभावा शिनेः सात्यकिपितामहस्य चमूः सेना। शाल्वो नाम चैद्यपक्षो राजा तस्य चमूं सेनां जितां कृत्वा जित्वेत्यर्थः। अतएव वक्त्रैर्मुखैः। "येनाङ्गविकार" इति तृतीया विकारस्यापि विकारत्वात्। फुल्लं अब्जं प्रफुल्लारविन्दस्य सप्रभा समानप्रभा हर्षेण विकासितवतीत्यर्थः। ऊर्जितामुदारां वाचं ससर्ज के यूयमस्मदग्र इत्याद्युच्चैर्जगर्ज जगादेत्यर्थः। उपमायमकयोः संसृष्टिः ॥७॥

**टिप्पनी**—कृत्वेति। अत्र युद्धवीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥७॥

**বাঙ্গালা**---শিনির তেজস্বিনী সেনা, শাল্বরাজার সেনাকে জয় করিয়া, হর্ষোৎফুল্ল মুখদ্বারা বিকসিত পদ্মের তুল্য কান্তিযুক্ত হইয়া, তেজের বাক্য বলিতে লাগিল ॥৭॥

**अन्वयः**—दिक्षु तेजः प्रकिरता उल्मुकेन सङ्कुचत् पत्रसञ्चयं द्रुमं प्राप्य सप्रतापम् अदीप्यत ॥८॥

**टीका**—उल्मुकेनेति। दिक्षु तेजः प्रभावं प्रकाशञ्च प्रकिरता विक्षिपता उल्मुकेन भागवतेन राज्ञा अलातेन च। सङ्कुचन्ती पत्रसम्पद्वाहनसम्पत्पर्णसम्पच्च यस्य तम्। सप्रतापं सपराक्रमं प्रकटतापसहितं च। द्रुमं द्रुमाख्यं राजानं वृक्षञ्च प्राप्यादीप्यत

पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ।
तयैव वाचाऽपगमं ययाचापमुदा युधः ॥९॥
समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥१०॥
दधानैर्घनसादृश्यं लसदायसदंशनैः ।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥११॥ निरोष्ठ्यः ।

---

प्रजज्वलि । भावे लङ् । अत्राभिधायाः प्रकृतार्थे नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव न श्लेषः ॥८॥

**टिप्पनी**—उलूकेनेति । अत्र "ध्वनिरेव" इति मल्लिनाथः । उपमाध्वनिरित्याशयः । वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८॥

**বাঙ্গালা**—শ্রীকৃষ্ণপক্ষীয় উলূকনামক যোদ্ধা, সকল দিকে তেজ বিস্তার করিয়া, শিশুপালপক্ষীয় দ্রুমরাজাকে পাইয়া, প্রতাপের সহিত দীপ্তি পাইতে লাগিলেন; তৎকালে দ্রুমরাজার বাহনগুলি ক্ষয় পাইতে থাকিল ॥৮॥

**अन्वयः**—रुक्मी उदायुधः (सन्) यया पृथोः चापम् अध्यक्षिपत्, अपमुदा तया एव वाचा युधः अपगमं ययाच ॥९॥

**टीका**—पृथोरिति । रुक्मी भीष्मकात्मजो रुक्मिणीभ्राता उदायुधः उद्यतायुधः सन् यया वाचा पृथोराज्ञश्चापमध्यक्षिपत् धिगिदं तवाग्रा कष्टमिति निनिन्द । अपगता मुद्यस्यास्तया अपमुदा निरुत्साहया तयैव वाचा युधो युद्धादपगममपसरणं ययाच । मां त्वाहि पलायमानं शरणागतोऽस्मीति प्रार्थयामासेत्यर्थः । याचिः उभयपदी ॥९॥

**टिप्पनी**—पृथोरिति । एतेन रुक्मी पराजित इति सूचितम् । अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

**বাঙ্গালা**—রুক্মী অস্ত্র উত্তোলন করিয়া, যে বাক্য দ্বারা পৃথুরাজার ধনুর নিন্দা করিলেন; আনন্দবিহীন সেই বাক্য দ্বারাই যুদ্ধ হইতে পলায়ন প্রার্থনা করিলেন ॥৯॥

**अन्वयः**—सरस्वान् निम्नगाः इव एकः कार्ष्णिः समं समन्ततः आपतन्तीः राज्ञाम् अनीकिनीः प्रत्यग्रहीत् ॥१०॥

**टीका**—सममिति । समं युगपत्समन्तत आपतन्तीरागच्छन्तीराज्ञां चैद्यपक्षाणामनीकिनीः सेनाः । कृष्णस्यापत्यं पुमान् कार्ष्णिः प्रद्युम्नः । अत इञ् । निम्नगाः नदीः सरस्वान् समुद्र इवैकोऽसहायः प्रत्यग्रहीत् प्रत्यवरोध ॥१०॥

**टिप्पनी**—सममिति । अत्र श्रौतोपमालङ्कारः प्रथमपादगतेन छेकानुप्रासेन संसृज्यते । वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—এক সমুদ্র যেমন বহুতর নদী গ্রহণ করে; তেমন এক প্রদ্যুম্ন, চারিদিক হইতে একদাই ধাবিত বিপক্ষ রাজগণের সৈন্যগুলিকে গ্রহণ করিলেন (বাধা দিলেন) ॥১০॥

नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः।
बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥१२॥
प्राप्य भीममसौ जन्यं सौजन्यं दधदानते।
विध्यन् मुमोच न रिपूनरिपूगान्तकः शरैः ॥१३॥

---

**अन्वयः**—लसदायसदंशनैः घनसादृश्यं दधानैः तैः तत्र काञ्चनसच्छाया शराशनिः ससृजे ॥११॥

**टीका**—दधानैरिति। लसन्ति आयसानि अयोमयानि दंशनानि वर्माणि तेषां तैः। "तनुत्रं वर्म दंशनमित्यमरः। अतएव घनसादृश्यं कार्ष्ण्यमेघसाम्यं दधानैस्तैः सैनिकैः तत्र कार्ष्णौ काञ्चनसच्छाया सुवर्णवर्णा शरा एवाशनिः विद्युत्ससृजे उत्सृष्टा। उपमारूपकयोः संसृष्टिः। ओष्ठ्यवर्णविरहान्निरौष्ठ्यं चित्रभेदः शब्दालङ्कारः ॥११॥

**टिप्पनी**---दधानैरिति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥११॥

**বাঙ্গালা**—দীপ্যমান লৌহবর্ম্মে আবৃতদেহ, সুতরাং মেঘের সাদৃশ্যশালী সেই বিপক্ষ সৈন্যগণ, প্রদ্যুম্নের প্রতি স্বর্ণবর্ণ বাণরূপ বজ্র সকল নিক্ষেপ করিতে লাগিল ॥১১॥

**अन्वयः**=असौ नखांशु-मञ्जरी कीर्णाम् अधिरूढशिलीमुखां धनुःशाखां बिभ्रत् (सन्) उच्चकैः तरुः इव बभौ ॥१२।

**टीका**—नखेति। नखांशवो मञ्जर्य इव ताभिः कीर्णां व्याप्ताम् अधिरूढाः शिलीमुखा बाणा भ्रमराश्च यस्यां ताम्। "अलिबाणौ शिलीमुखावित्यमरः। धनुः शाखेव तां बिभ्रदसौ कार्ष्णिरुच्चकैरुन्नतस्तरुरिव बभौ। तरुरिवेति लिङ्गसर्वलोपमितसमासः। शिलीमुखेति श्लिष्टविशेषणेयमुपमा ॥१२॥

**टिप्पनी**---नखेति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१२॥

**বাঙ্গালা**—যাহা মঞ্জরীসমূহে ব্যাপ্ত থাকে এবং যাহার উপরে ভ্রমরগণ অবস্থান করে, সেই শাখা ধারণ করিয়া উন্নত বৃক্ষ যেমন শোভা পায়; সেইরূপ নখকিরণব্যাপ্ত এবং বাণযুক্ত ধনু ধারণ করিয়া প্রদ্যুম্ন শোভা পাইতে লাগিলেন ॥১২॥

**अन्वयः**—अरिपूगान्तकः असौ भीमं जन्यं प्राप्य आनते सौजन्यं दधत् (सन्) शरैः रिपून् विध्यन् न मुमोच ॥१३॥

**टीका**--प्राप्येति। अरिपूगानां शत्रुसङ्घानामन्तकः अरिपूगान्तकोऽसौ कार्ष्णिः भीमं भयङ्करं जन्यं युद्धं प्राप्य। "युद्धमायोधनं जन्यमित्यमरः। आनते नम्रे सौजन्यं सौहार्दं दधत् न तु विध्यन्। "न क्लीबं न कृताञ्जलिमिति निषेधादिति भावः। रिपून् प्रतिपक्षान् शरैर्विध्यन् प्रहरन् न मुमोच न ररक्षेत्यर्थः। संदंशयमकभेदः ॥१३॥

**टिप्पनी**—प्राप्येति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१३॥

**বাঙ্গালা**—শত্রুসমূহের যম সেই প্রদ্যুম্ন, ভয়ঙ্কর যুদ্ধে উপস্থিত হইয়া, অবনত ব্যক্তির

কৃতস্য পূর্বং ক্ষিতিপৈর্বিজয়াশংসয়া পুরঃ।
অনীকস্য চকারাসৌ বাণৈর্বাণস্য খণ্ডনম্ ॥১৪॥
যা বভার কৃতানেকমায়া সেনা সসারতাম্।
ধনুঃ স কর্ষন্ রহিতমায়াসেনাসসার তাম্ ॥১৫॥
ওজো মহৌজাঃ কৃত্বাধস্তৎক্ষণাদুত্তমৌজসঃ।
কুর্বন্নাজাবমুখ্যত্বমনয়ন্নাম মুখ্যতাম্ ॥১৬॥

---

প্রতি সৌজন্য প্রকাশ করতঃ, বাণ দ্বারা শত্রুদিগকে বিদ্ধ করিবার পক্ষে উপেক্ষা করিলেন না ॥১৩॥

অন্বয়ঃ—অসৌ পূর্বং ক্ষিতিপৈঃ বিজয়াশংসয়া পুরঃকৃতস্য অনীকস্য বাণস্য বাণৈঃ খণ্ডনং চকার ॥১৪॥

টীকা—কৃতস্যেতি। অসৌ কার্ষ্ণিঃ পূর্বং ক্ষিতিপৈর্বিজয়াশংসয়া বিজয়াকাঙ্ক্ষয়া পুরোঽগ্রে কৃতস্য নিযুক্তস্য প্রযুক্তস্য বা অনীকস্যানীকাধিপঃ সসহায়স্যেত্যর্থঃ। অন্যত্রানেকস্য বহুসঙ্খ্যস্য বাণস্য বাণাসুরস্য রাজঃ তস্য চ বাণৈঃ খণ্ডনং ছেদং চকার। অত্র বাণযোর্দ্বয়োরপি প্রকৃতত্বাৎ কেবলপ্রকৃতয়োঃ শ্লেষঃ ॥১৪॥

টিপ্পনী—কৃতস্যেতি। অত্রাপি রসাদয়ঃ পূর্ববৎ ॥১৪॥

বাঙ্গালা—পূর্বের রাজারা জয় লাভ করিবার আশায়, সহচরদিগের সহিত বাণরাজাকে অগ্রবর্ত্তী করিয়া দিলেন এবং প্রথমে বহুতর বাণক্ষেপও করিলেন, তখন প্রদ্যুম্ন বাণ দ্বারা বাণরাজার পরাজয় এবং বাণগুলির ছেদন করিলেন ॥১৪॥

অন্বয়ঃ—কৃতানেকমায়া যা সেনা সসারতাং বভার, সঃ ধনুঃ কর্ষন্ আয়াসেন রহিতং (যথা তথা) তাম্ আসসার ॥১৫॥

টীকা—যেতি। যা সেনা কৃতানেকমায়া কৃতবহুকপটা সতী সসারতাং সারবত্তাং বভার তাং সেনাং স কার্ষ্ণিঃ ধনুঃ কর্ষন্ ধনুষা বিধ্যন্নিত্যর্থঃ। আয়াসেন রহিতমনায়াসং যথা তথা আসসার অভিযুক্তবানিত্যর্থঃ বাণং ভঙ্ক্ত্বা সেনাং বভঞ্জেত্যর্থঃ ॥১৫॥

টিপ্পনী—যেতি। অত্র পাদযমকমলঙ্কারঃ। বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥১৫॥

বাঙ্গালা—যে সৈন্য নানাপ্রকার কূটকৌশল প্রকাশ করিয়া, অদ্ভুত বিক্রম দেখাইতেছিল; প্রদ্যুম্ন ধনু আকর্ষণ করতঃ, অনায়াসে সেই সৈন্যকে আক্রমণ করিলেন ॥১৫॥

অন্বয়ঃ—মহৌজাঃ (প্রদ্যুম্নঃ) আজৌ তৎক্ষণাৎ উত্তমৌজসঃ ওজঃ অধঃ কৃত্বা (তন্নাম্নঃ) অমুখ্যত্বং কুর্বন্ (নিজং) নাম মুখ্যতাম্ অনয়ৎ ॥১৬॥

টীকা—ওজ ইতি। মহৌজা মহাবলঃ প্রদ্যুম্নঃ উত্তমৌজসো নাম রাজ্ঞঃ ওজস্তৎক্ষণাদেবাধঃ কৃত্বাভিভূয় আজৌ যুদ্ধে অমুখ্যত্বমপ্রধানত্বং কুর্বন্ অথবা অমুখ্যত্বম্ অমুখ্যার্থত্বং তন্নাম্নঃ কুর্বন্ নাম নিজং প্রদ্যুম্ননামধেয়ং মুখ্যতাং প্রধানতাং প্রসিদ্ধার্থতাঞ্চানয়ৎ। "প্রকৃষ্টং দ্যুম্নং বলং যস্যেতি প্রদ্যুম্ন" ইতি স্বামী ॥১৬॥

दूरादेव चमूभल्लैः कुमारो हन्ति स स्म याः ।
न पुनः सांयुगीं ताः स्म कुमारो हन्ति सस्मयाः ॥१७॥
निपीड्य तरसा तेन मुक्ताः काममनास्थया ।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥१८॥
तस्यावदानैः समरे सहसा रोमहर्षिभिः ।
सुरैरशंसि व्योमस्थैः सह साधो महर्षिभिः ॥१९॥

---

**टिप्पनी**—ओज इति । अत्र उत्तमौजसो नाम्नः अमुख्यत्वं स्वनाम्नो मुख्यत्वस्य प्रति औजः अत्र: क्षत्वेति पदार्थो हेतुरिति काव्यलिङ्गमलङ्कारः । रसादयः पूर्ववत् ॥१६॥

**বাঙ্গালা**—মহাবলবান্ প্রদ্যুম্ন, যুদ্ধমধ্যে তৎক্ষণাৎ উত্তমৌজানামক রাজার তেজ খর্ব করিয়া, তাঁহার নামের অমুখ্যার্থতা করতঃ, নিজের প্রদ্যুম্ন নামটীকে মুখ্যার্থ করিলেন ॥১৬॥

**अन्वयः**—सः कुमारः दूरात् एव भल्लैः सस्मयाः याः चमूः हन्ति स्म, ताः पुनः सांयुगीं कुं न आरोहन्ति स्म ॥१७॥

**टीका**—दूरादिति । स कुमारः प्रद्युम्नः सस्मयाः सगर्वाः याश्चमूर्दूरादेव भल्लैर्बाणविशेषैर्हन्ति स्म जघान तास्चमूः पुनर्भूयः संयुगस्येमां सांयुगीं कुं पृथ्वीं रणभुवमित्यर्थः । "गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः । न आरोहन्ति स्म नारूढाः ॥१७॥

**टिप्पनी**—दूरादिति । अत्र पादयमकमलङ्कारः, वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१७॥

**বাঙ্গালা**—কুমার প্রদ্যুম্ন দূর হইতেই ভল্ল দ্বারা যে গর্বিত সৈন্যগণকে প্রহার করিয়াছিলেন, সে সৈন্যগণ আর যুদ্ধভূমিতে যাইতে পারিয়াছিল না ॥১৭॥

**अन्वयः**—तेन तरसा कामं निपीड्य अनास्थया मुक्ताः विद्विषः विलक्षत्वम् उपाययुः, शिलीमुखाः (तु) विलक्षत्वं न उपाययुः ॥१८॥

**टीका**—निपीड्येति । तेन प्रद्युम्नेन तरसा बलेन कामं निपीड्य अनास्थया अनादरेण मुक्ताः । "आर्त्ता न परिहन्तव्याः" इति निषेधेनावध्या इति जीवन्तो मुक्ता इत्यर्थः । अन्यत्र क्षिप्ताः विद्विषो विलक्षत्वं सत्रपत्वमाययुः । "विलक्षस्तु त्रपान्वित" इत्यमरः । शिलीमुखा बाणास्तु विलक्षत्वं लक्ष्यभ्रष्टत्वं नाययुः । अत्र द्वयोरपि विलक्षत्वयोरभेदाध्यवसायादयं व्यतिरेको विद्विषां शिलीमुखानां च प्रकृतत्वात्तुल्ययोगितौपम्याश्रित इति सङ्करः ॥१८॥

**टिप्पनी**—निपीड्येति । अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥१८॥

**বাঙ্গালা**—প্রদ্যুম্ন বেগে ইচ্ছানুসারে প্রহার করিয়া, অনাদরপূর্বক যে শত্রুগণকে ছাড়িয়া দিলেন, তাহারা লজ্জিত হইল ; কিন্তু নিক্ষিপ্ত বাণগুলি লক্ষ্যভ্রষ্ট হইল না ॥১৮॥

**अन्वयः**—समरे तस्य अवदानैः सहसा रोमहर्षिभिः व्योमस्थैः सुरैः महर्षिभिः सह साधु अशंसि ॥१९॥

सुगन्धयद्दिश: शुभ्रमम्लानि कुसुमं दिव:।
भूरि तत्रापतत्तस्मादुत्पपात दिवं यश: ॥२०॥
सोढ़ं तस्य द्विषो नालमपयोधरवा रणम्।
जगुंनाव यशस्य द्यामपयोधरवारणम् ॥२१॥

---

टीका—तस्येति। समरे तस्य प्रद्युम्नस्यावदानैरद्भुतकर्मभि: कारणै: सहसा सद्य: रोमहर्षिभि: रोमाञ्चवद्भि: व्योमस्थै: सुरै: महर्षिभि: सह साधुं सारो बलमशंसि प्रशंसित: ॥१९॥

टिप्पनी—तस्येति। अत्र पादयमकमलङ्कार:, ओजो गुण:, गौड़ी च रीति: ॥१९॥

বাঙ্গালা—প্রদ্যুম্ন যুদ্ধে যে কার্য্য করিলেন, তাহাতে সত্বই আকাশস্থ দেবগণের রোমাঞ্চ জন্মিল; পরে মহর্ষিগণের সহিত সেই দেবগণ প্রদ্যুম্নের বলের প্রশংসা করিতে লাগিলেন ॥১৯॥

अन्वय:—दिश: सुगन्धयत् शुभम् अम्लानि भूरि कुसुमं दिव: अत्र अपतत्, तस्मात् यश: दिवम् उत्पपात ॥२०॥

टीका—सुगन्धयदिति। दिश: सुगन्धयत् सुगन्धा: कुर्वत्। सुगन्धास्तत्करोतीति ण्यन्तात्शट: प्रत्यय:। शुभ्रं धवलम् अम्लानि म्लानिरहितं भूरि प्रभूतं कुसुमं दिवोऽन्तरीक्षात्तत्र प्रद्युम्ने अपतत् तस्मात्प्रद्युम्नाद्यश: पूर्वोक्तगुणयुक्तं दिवमन्तरिक्षं प्रति उत्पपात। अत्र द्युप्रद्युम्नयो: कुसुमयशोभ्यामन्योन्योपकारजननादन्योऽन्यालङ्कार:। "परस्परं क्रियाजननेऽन्योऽन्यमिति लक्षणात् ॥२०॥

टिप्पनी—सुगन्धयदिति। अत्र अपतदिति अद्यतन्या प्रत्ययस्य उत्पपातेति परोक्षाप्रयोगात् प्रत्ययविषयो भग्नप्रक्रमतादोष:; स च 'विमलश्च दिवं यश:" इति पाठेन समाधेय:। प्रसादो गुण:, वैदर्भी च रीति: ॥२०॥

বাঙ্গালা—তখন আকাশ হইতে প্রদ্যুম্নের উপরে প্রচুর পুষ্পবৃষ্টি হইতে লাগিল; সে পুষ্পগুলি শুভ্রবর্ণ ছিল, ম্লান ছিল না এবং সকল দিক্ সৌরভময় করিয়াছিল; আবার প্রদ্যুম্ন হইতেও যশ যাইয়া আকাশে উঠিল ॥২০॥

अन्वय:—अपयोधरवा: द्विष: तस्य रणं सोढ़म् अलं न (बभूवु:); यशस्य अपयोधरवारणं (सत्) द्याम् जगुंनाव ॥२१॥

टीका—सोढ़मिति। अपगता भयान्निवृत्ता योधानां रवा: सिंहनादा येषां ते अपयोधरवा: द्विष: शत्रव: तस्य कार्य्यै: रणं सोढ़ं नालमसमर्था:। अतएव यशस्य अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् अपयोधरवारणं सत् द्यामूर्णुनाव मेघमण्डलं व्यतिलङ्घ्य स्वर्गमाच्छादयामासेत्यर्थ:। ऊर्णोतेर्लिट्। अजादेर्द्वितीयस्येति द्वितीयस्याचो द्विर्भाव:। नुवद्भावाद्गुणप्रतिषेध:। यमकवाक्यार्थहेतुककाव्यलिङ्गयो: संसृष्टि: ॥२१॥

केशप्रचुरलोकस्य पर्य्यस्कारि विकासिना ।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥२२॥

सादरं युध्यमानापि तेनान्यनरसादरम् ।
सा दरं पृतना निन्ये हीयमाना रसादरम् ॥२३॥

---

टिप्पनी—सोढ़ मिति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२१॥

বাঙ্গালা—শত্রুপক্ষ প্রদ্যুম্নের যুদ্ধ সহ্য করিতে পারিল না; সুতরাং তাহাদের যোদ্ধা-দিগের আনন্দকোলাহল তিরোহিত হইয়া গেল; প্রদ্যুম্নের যশও, মেঘের বাধা এড়াইয়া যাইয়া স্বর্গলোক আবৃত করিল ॥২১॥

अन्वयः—शेखरेण इव विकासिना कुसुमलक्ष्मणा केशरप्रचुरलोकस्य युद्धस्य शिरः पर्य्यस्कारि ॥२२॥

टीका—केशेति। विकासिना विविधमार्गचारिणा विकस्वरेण च कुसुमलक्ष्मणा। पुष्प-केतुना प्रद्युम्नेन अन्यत्र कुसुमचिह्नेन तन्मयेनेत्यर्थः। केशवत्प्रचुराः प्रभूताः लोकाः जना यस्मिन् तस्य युद्धस्य शिरोऽग्रभूमिः अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरः मूर्द्धाशेखरेणापीड़ेनेव शिखामाल्येनेवेत्यर्थः। "शिखास्वापीड़शेखरावित्यमरः। पर्य्य-स्कारि परिष्कृतं भूषितमित्यर्थः। परिपूर्वात् करोतेः कर्मणि लिट्, "सम्पर्य्युपेभ्यः करोतौ भूषणे" इति सुड़ागमः अड़्भ्यासव्यवायेऽपीति नियमात्परिनिविभ्य इत्यादिना षत्वे सिचा-दिनां वाड़व्यवायेऽपीति विकल्प। उपमा ॥२२॥

टिप्पनी—केशेति। अत्र ओजो गुणः, गौड़ी च रीतिः ॥२२॥

বাঙ্গালা—প্রস্ফুটিত পুষ্পের মালা যেমন লোকের কেশপূর্ণ মস্তকের শোভা করে; তেমন নানাপথসঞ্চারী পুষ্পকেতু প্রদ্যুম্ন, বহুলোকপূর্ণ যুদ্ধভূমির উপরিভাগের শোভা করি-লেন ॥২২॥

अन्वयः—तेन सादरं युध्यमाना अपि अरं रसात् हीयमाना सा पृतना अन्य-नर-सादरं दरं निन्ये ॥२३॥

टीका—सादरमिति। सादरं साभिनिवेशं युध्यमानापि सम्प्रहरन्त्यपि अरं द्रुतं झटादिति यावत् रसात् रणे रागात् हीयमाना अपकृष्यमाणा प्रद्युम्नमच्छिन्नेति भावः। अत एवात्र विरोधाभासोऽलङ्कारः। जहातेः कर्मणि लटः शानजादेशः। सा पृतना चैद्यसेना तेन प्रद्युम्नेन अन्येषां तटस्थानामपि नराणां सादं निर्य्यत्तां राति ददातीति अन्यनरसा-दरम्। आतोऽनुपसर्गे कः इति कप्रत्ययः। दरं भयं "दरोऽस्त्रियां भये श्वभ्रे इत्यमरः। निन्ये नीता। नयतेः प्रधाने कर्मणि लिट्। प्रधानकर्मण्याख्येये लादीन्याहुर्द्विकर्मणा-मिति वचनात्। विरोधाभासयमकयोः संसृष्टिः ॥२३॥

टिप्पनी—सादरमिति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२३॥

বাঙ্গালা—সেই বিপক্ষ সৈন্য আগ্রহের সহিত যুদ্ধ করিতে থাকিলেও, (প্রদ্যুম্নের

इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।
क्रुधयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥२४॥
अह्नितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गत्कलभसमानीचतुरङ्गया ॥२५॥
ततस्ततधनुर्मौर्वीविस्फारस्फारनिस्वनैः ।
तूर्य्यैर्युगक्षये क्षुभ्यदकूपारानुकारिणी ॥२६॥

---

প্রভাবে) শীঘ্রই সে যুদ্ধের আগ্রহ হইতে বিচ্যুত হইয়া পড়িল ; তাহার পর, প্রদ্যুম্ন তাহাদিগকে এমন ভয় পাওয়াইয়া দিলেন যে, সে ভয়ে অন্য লোকেরও অবসাদ জন্মায় ॥২৩॥

अन्वयः—इति जयलक्ष्म्या आलिङ्गितं झषध्वजम् आलोक्य क्रुधया इव क्रुधा सद्यः चेदिभूपतिः प्रपेदे ॥२४॥

टीका---इतीति। इतीत्थं जयलक्ष्म्या आलिङ्गितं झषध्वजं मकरध्वजं प्रद्युम्नम्। "पृथुरोमा झषो मत्स्य" इत्यमरः। आलोक्य सद्यः क्रुधया सपत्न्यागमनात् कोपितयेवेत्युत्प्रेक्षा। क्रुधा प्रद्युम्नाश्रितया क्षणं कल्या चेदिभूपतिः प्रपेदे प्राप्तः तं विद्यायेति शेषः। कामिन्यः प्रायेण स्वाहस्तिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्ते इति भावः। विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यस्तु कोपित्यर्थः ॥२४॥

टिप्पनी—इतीति। अत्र क्रुधया क्रुधा इति च्छेकानुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते। वीरो रसः। कोपस्तु वीरव्यभिचारी। प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

বাঙ্গালা—এই ভাবে বিজয়লক্ষ্মী প্রদ্যুম্নকে আলিঙ্গন করিয়াছেন দেখিয়া, ক্রোধ যেন ক্রুদ্ধ হইয়াই যাইয়া তৎক্ষণাৎ শিশুপালকে আশ্রয় করিল ॥২৪॥

अन्वयः—मानी सः वल्गत्कलभ-समानीचतुरङ्गया चतुरङ्गया वाहिन्या अह्नितान् अभि चचाल ॥२५॥

टीका—अह्नितानिति। मानी अभिमानवान् स क्रुद्धश्चैद्यः वल्गन्तः प्लवमानाः कलभसमाः कलभप्रमाणाः अत एवानीचा उच्चास्तुरङ्गा यस्यां तया वल्गत्कलभसमानीचतुरङ्गया। चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तया चतुरङ्गया वाहिन्या करणेन अह्नितानभि शत्रून् प्रति चचाल। कलभसमेत्युपमा यमकेन संसृज्यते ॥२५॥

टिप्पनी—अह्नितानिति। अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२५॥

বাঙ্গালা—অভিমানী শিশুপাল চতুরঙ্গিনী সেনার সহিত, শত্রুগণের প্রতি ধাবিত হইলেন ; সেই সেনার মধ্যে লম্ফনশীল হস্তিশাবকের ন্যায় উচ্চ উচ্চ অশ্ব ছিল ॥২৫॥

अन्वयः—ततः तत-धनुर्मौर्वी-विस्फार स्फार-निस्वनैः तूर्य्यैः युगक्षये क्षुभ्यदकूपारानुकारिणी (वाहिनी) ॥२६॥

स का र ना ना र का स
का य सा द द सा य का ।
र सा ह वा वा ह सा र
ना द वा द द वा द ना ॥२७॥ सर्वतोभद्रः ।
लीलासिकालियकुला यमस्येव स्वसा स्वयम् ।
चिकीर्षु वत्ससत्त्वोद्भवसं श्यामा सहायताम् ॥२८॥

---

टीका—अथ कल्पान्तकालीन सेनां वर्णयति । ततस्ततेत्यादि । ततश्च चलनानन्तरं तता-नामाकृष्टानां धनुर्मौर्वीणां विस्फारैः स्फाराः प्रभूताः निस्वना येषां तैस्तूर्यैः युगपद्भिः कल्पान्ते क्षुभ्यन्तमुद्वेलमकूपारं समुद्रमनुकरोतीति तदनुकारिणी सा सेनैव तरिष्यत्यन्वयः । उपमा ॥२६॥

टिप्पनी—तत इति । अत्र वृत्त्यनुप्रासेन टीकोक्तोपमा च व्यज्यते । वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२६॥

বাঙ্গালা—তাহার পরে, তূর্য্যধ্বনি হইতে লাগিল ; তাহার মধ্যে বিস্তারিত ধনুর্গুণের আস্ফালন নিবন্ধন বহুতর শব্দ হইতে থাকিল ; তাহাতে সেই সেনা প্রলয়কালে উদ্বেলিত সমুদ্রের অনুকরণ করিতে থাকিল ॥২৬॥

अन्वयः—सकार नानार कास-काय-सादद-सायका रसाहवा वाह-सार-नाद-वादद-वादना (सा-सेना) ॥२७॥

टीका—सकारेति । पुनः कीदृशी । "कारो वधे निश्चये च बले यत्ने" इत्यादपीति । विश्वः । सकाराः सयत्नाः सोत्साहाः नाना नानाविधाश्च ये आरा अरीणां समूहाः । भिक्षा-दिभ्योऽण् । तेषां कासा गतिभेदाः काया विग्रहाश्च तेषां सादं ददतीति सादकाः नाश-कारकाः सायका यस्यां सा तथोक्ता । रसेन रागेणाहवो यस्याः सा रसाहवा रणरागिणी-त्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा ह्रेषाविशेषास्तेषां वादं कलहं ददातीति वाददानि तैः सह कलहायमानानि वादनानि वाद्यानि यस्यां सा वाहसारनाद-वाददवादना । अतएव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्वतो समन्तात् सर्वतोभद्राख्य-चित्रबन्धः । अतएव दण्डी । "तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वत" इति । उद्धारस्तु । चतुःषष्टिकोष्ठे चतुरङ्गबन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्ति-चतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्वतः वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि ॥२७॥

टिप्पनी—सकारेति । अत्र वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥२७॥

বাঙ্গালা—নিক্ষিপ্ত বাণসমূহ, যত্নবান্ বহুবিধ শত্রুগণের নানাবিধ গতির ব্যাঘাত ও শরীরের অবসাদ জন্মাইতে লাগিল ; আগ্রহের সহিত যুদ্ধ চলিতে থাকিল ; আর নানাবিধ বাদ্যধ্বনি, উৎকৃষ্ট অশ্বগণের হ্রেষারবের সঙ্গে বিবাদ করিতে লাগিল ॥২৭॥

सा से ना ग म ना र म्भे
र से ना सी द ना र ता ।
ता र ना द ज ना म त्त
धी र ना ग म ना म या ॥२९॥ मुरजबन्धः । कालापकम् ।

---

अन्वयः—लोलासि-कालिय कुला उल्लस-लोहवर्म-श्यामा यमस्य सहायतां चिकीर्षुः स्वयं स्वसा इव (स्थिता सा सेना) ॥२८॥

टीका—लोलेति । लोलान्यसीनामेव कालियानां कालसर्पविशेषाणां कुलानि यस्यां सा उल्लसद्भिर्लोहवर्मभिरयःकञ्चुकैः श्यामा अतएव यमस्यान्तकस्य सहायतां आत्मसेवा-दर्शिन् सेनाद्वारे साहाय्यं चिकीर्षुः स्वयं साक्षात् स्वसा तस्यैव भगिनी यमुनेव स्थिते-त्युत्प्रेक्षा ॥२८॥

टिप्पनी—लोलेति । अत्र असि-कालियेति निरङ्गं केवलरूपकम् च्छेकानुप्रासश्च ताभ्यां टीकोक्तोत्-प्रेक्षा संसृज्यते । ओजो गुणः, गौडी च रीतिः ॥२८॥

বাঙ্গালা—সেই সেনার মধ্যে তরবারিরূপ কৃষ্ণবর্ণ সর্প সকল চলিতেছিল এবং সেই সেনা, দীপ্যমান লৌহবর্ম্মে শ্যামবর্ণ ছিল ; সুতরাং যমের সাহায্য করিবার ইচ্ছায় উপস্থিত যমভগিনী স্বয়ং যমুনাদেবীর ন্যায় সেই সেনা বিরাজ করিতেছিল ॥২৮॥

अन्वयः—तार-नाद-जना अनामया सा सेना मत्त-धीर-नागं गमनारम्भे रसेन अनारता आसीत् ॥२९॥

टीका—सा सेनेति । तारोऽत्युच्चैर्नादः सिंहनादो येषां ते जना यस्यां सा तारनाद-जना अनामयाऽव्यथा सा पूर्वोक्ता सेना मत्ता धीरा अदुष्टाश्च नागा गजा यस्मिन् कर्मणि तत्तथा गमनारम्भे रसेन रागेण अनारता अविरता आसीत् अविच्छिन्नरथारागाभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु । “तिर्य्यग्रेखा लिखेत्पञ्च नवोर्द्ध्वास्तत्र पङ्क्तयः । अष्टकोष्ठा-श्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् । तत्राद्यद्वित्रितुर्य्यासु तुर्य्यं लिह्यादपङ्क्तिषु । आद्य-द्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः । दृश्यते प्रथमः पादस्तुर्यस्यैवमेव हि । चतुर्थपङ्क्ति-प्राथम्यात् प्रथमावधितीर्व्वचात् । द्वितीयादावाद्यद्वित्र्योर्द्वितुर्य्ये लिंतुरीयकी । तुर्य्यत्रिद्वो-स्तृतीयाद्यो द्रष्टव्योऽङ्घ्रिर्द्वितीयकः । तृतीयोऽङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः । द्वित्रि-पञ्चमयोस्तुर्य्यं षष्ठसप्तमयोः क्रमात् । तृतीयान्त्ये च तत्रोऽयमथान्त्यः क्रम उच्यते । आद्यान्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः । आद्यं कं द्वितीयं हे च द्वयमेकमिति क्रमात् । यद्वा द्वितीयमेकं च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेव विन्यास-द्वितीयं भवेत् । यद्वा प्रथमतुर्य्याङ्घ्री स्वपङ्क्त्योस्तदनुक्रमात् । द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये । व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये । व्युत्क्रमेण द्वितीयस्यां तृती-यस्यां क्रमेण च द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये । विन्यासभेदाश्चान्येऽपि सन्त्येव बहवोऽत्र हि विस्तारात्तु न लिख्यन्ते स्वयमूह्या विपश्चितैः” ॥२९॥

ধূতধৌতাসয়ঃ প্রষ্ঠাঃ প্রাতিষ্ঠন্ত চমূভৃতাম্।
শৌর্য্যানুরাগনিকষঃ সা হি বেলানুজীবিনাম্ ॥৩০॥
দিবমিচ্ছন্ যুধা গন্তুং কোমলামলসম্পদম্।
দধৌ দধানোঽসিলতাং কোঽমলামলসং পদম্ ॥৩১॥

---

**টিপ্পনী**—ইতি। অত্র বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৯॥

**বাঙ্গালা**—সেই সেনার সৈন্যগণ উচ্চ স্বরে সিংহনাদ করিতেছিল, তাহাদের মনে কোনরূপ বেদনা ছিল না, গমনারম্ভের সময়ে তাহারা অবিরতযুদ্ধোৎসাহী ছিল এবং তাহাদের মধ্যে মত্ত ও নির্দোষ হস্তিসমূহ চলিতেছিল ॥২৯॥

**অন্বয়ঃ**---চমূভৃতাং প্রষ্ঠাঃ ধূত-ধৌতাসয়ঃ (সন্তঃ) প্রাতিষ্ঠন্ত। হি সা বেলা অনুজীবিনাং শৌর্য্যানুরাগনিকষঃ ॥৩০॥

**টীকা**—ধূতেতি। চমূভৃতাং রাজ্ঞাং প্রতিষ্ঠন্ত ইতি প্রষ্ঠাঃ অগ্রেসরাঃ। "সুপি স্থঃ" ইতি কপ্রত্যয়ঃ "প্রষ্ঠোঽগ্রগামিনী"তি ষত্বে ষ্টুত্বম্। ধূতাঃ কম্পিতাঃ ধৌতা উত্তেজিতাঃ অসয়ো যৈস্তে ধূতধৌতাসয়ঃ সন্তঃ প্রাতিষ্ঠন্ত প্রস্থিতাঃ। "সমবপ্রবিভ্যঃ স্থঃ" ইতি তঙ্। সা বেলা অনুজীবিনাং সেবকজীবিনাং শৌর্য্যানুরাগয়োঃ পুরুষকারস্বামিভক্ত্যোর্নিকষঃ পরীক্ষাস্থানং হি যতোঽগ্রে স্থাতব্যম্। অন্যথা জীবনং স্বামিদ্রোহশ্চ স্যাতামিতি ভাবঃ। বাক্যার্থহেতুকং কাব্যলিঙ্গম্ ॥৩০॥

**টিপ্পনী**---ধূতেতি। অত্র প্রথমার্দ্ধগতেন ছেকানুপ্রাসেন টীকোক্তকাব্যলিঙ্গং সংসৃজ্যতে। বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩০॥

**বাঙ্গালা**—রাজগণের অগ্রগামী সৈন্যগণ, নিশিত তরবারি সকল কম্পিত করিয়া গমন করিতে লাগিল। কারণ, সেই সময়টাই অনুজীবীদিগের বীরত্ব ও অনুরাগ পরীক্ষার সময় ॥৩০॥

**অন্বয়ঃ**---যুধা কোমলামলসম্পদং দিবং গন্তুম্ ইচ্ছন্ কঃ অমলাম্ অসিলতাং দধানঃ (সন্) অলসং পদং দধৌ ? ॥৩১॥

**টীকা**—দিবমিতি। যুধা যুদ্ধেন কোমলা মৃদবঃ অমলাঃ প্রীতীর্ষ্যাদিদোষবর্জিতাঃ সম্পদো যস্যাস্তাং কোমলামলসম্পদং দিবং স্বর্গং গন্তুমিচ্ছন্ কঃ পুমান্ অমলাং ধৌতাম্ অসিলতাং দধানঃ অলসং পদং দধৌ সর্ব্বোঽপি নিঃশঙ্কমাক্রমত ইত্যর্থঃ। অত্র স্বর্গেচ্ছাবিশিষ্টতয়া নিঃশঙ্কপ্রস্থানহেতুত্বাৎ কাব্যলিঙ্গং তদযমকেন সংসৃজ্যতে ॥৩১॥

**টিপ্পনী**—দিবমিতি। অত্র বীরো রসঃ, ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৩১॥

**বাঙ্গালা**—যুদ্ধ দ্বারা, সুন্দর ও নির্ম্মল সম্পৎসমন্বিত স্বর্গে গমন করিতে ইচ্ছা করিয়া, কোন্ ব্যক্তি পরিষ্কৃত তরবারি ধারণ করতঃ, মন্দ মন্দ ভাবে পদক্ষেপ করিয়াছিল ? ॥৩১॥

सवितुः परिभावुकै र्मरीचीनचिराभ्यक्तमतङ्गजाङ्गभाभिः।
जलदैरभितः स्फुरद्भिरुच्चै र्विदधे केतनतेव धूमकेतोः॥६९॥
ज्वलतः शमनाय चित्रभानोः प्रलयाप्लावमिवाभिदर्शयन्तः।
ववृषुर्वृषनादिनो नदीनां प्रतटारोपितवारि वारिवाहाः॥७०॥

हास एव दृहासो यस्य तत्तथोक्तम् अनुवृत्तोऽनुस्यूतः समुन्नतस्तारोऽम्बरवाहानां ध्वनिताडम्बरो गर्जिताडम्बरो यस्य तदम्बरं बभूव। तदाम्बरवाहैर्विद्युत्प्रभाभिर्गर्जिताडम्बरैश्च दृहासं कुर्वद्भिरिवाम्बरमभावित्यर्थः। व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा॥६८॥

टिप्पनी—तपनीयेति। अत्र द्वितीयार्द्धगतहस्त्यनुप्रासेन टीकोक्तोत्प्रेक्षा संसृज्यते। ओजो गुणः, गौड़ी च रीतिः॥६८॥

बाङ्गाला—মেঘসকল, প্রস্তরের উপরে স্বর্ণরেখার ন্যায় পীতবর্ণ এবং ভীষণ বিদ্যুৎ স্বরূপ অট্টহাস্য করিয়া, শ্রেণীবদ্ধভাবে উপরে চলিতে থাকিয়া, গম্ভীর গর্জন করিতে লাগিল; তাহাতে আকাশ পরিপূর্ণ হইল।৬৮॥

अन्वयः—सवितुः मरीचीन् परिभावुकैः अचिराभ्यक्तमतङ्गजाङ्गभाभिः अभितः स्फुरद्भिः उच्चैः जलदैः धूमकेतोः केतनता इव विदधे॥६९॥

टीका—सवितुरिति। सवितुर्मरीचीन् मयूखान् परिभावुकैस्तिरस्कुर्वद्भिः। लषपतेत्यादिना उकञ् प्रत्यये न लोकेत्यादिना षष्ठीप्रतिषेधः। अचिराभ्यक्तस्य सद्यस्तैलाभ्यक्तस्य मतङ्गजाङ्गस्य नागदेहस्येव भासो येषां तैस्तथोक्तैः। भोभगो इत्यादिना रोर्यकारस्य हलि सर्वेषामिति लोपः। अभितः स्फुरद्भिर्भ्रमद्भिरुच्चैरुन्नतैर्जलदैर्धूमकारस्य वह्नि सर्वेषामिति लोपः। अभितः स्फुरद्भिर्नभमावोच्चैरुन्नतैर्जलदैर्धूम-केतोरग्नेः केतनता केतुत्वं विदध इव विहितेव। धूमकेतोः केतुत्वं प्राप्तमित्यर्थः। उत्प्रेक्षालङ्कारः॥६९॥

टिप्पनी—सवितुरिति। अत्र प्रथमार्द्धे हस्त्यनुप्रासच्छेकानुप्रासयोरिति ताभ्यां टीकोक्तोत्प्रेक्षा संसृज्यते। ओजो गुणः, गौड़ी च रीतिः॥६९॥

बाङ्गाला—সদ্য তৈললিপ্ত হস্তীর অঙ্গের ন্যায় দীপ্তিশালী এবং সকল দিকেই বর্দ্ধমান উন্নত মেঘসকল, সূর্য্যের কিরণ আচ্ছাদন করিয়া, অগ্নির ধ্বজত্বই যেন ধারণ করিল।৬৯॥

अन्वयः—ज्वलतः चित्रभानोः शमनाय प्रलयप्लावम् अभिदर्शयन्तः इव वृषनादिनः वारिवाहाः नदीनां प्रतटारोपितवारि ववृषुः॥७०॥

टीका—ज्वलन इति। ज्वलतश्चित्रभानोरग्नेः प्रशमनाय प्रलये कल्पान्ते य आप्लावो जलप्लावः तमभिदर्शयन्त इवेत्युत्प्रेक्षा। वृषवद्वृषभवत् नदन्ति गर्जन्तीति वृषनादिनः। "कर्त्तर्य्युपमाने" इति णिनिः। अतएवोपमा। वारि वहन्तीति वारिवाहा मेघाः। नदीनां प्रतटेषु प्रतीरेषु आरोपितानि भावितानि वारीणि यस्मिन् कर्मणि कर्मव्ययम्। नदीनां प्रतटेषु प्रतीरेषु आरोपितानि भावितानि वारीणि यस्मिन् कर्मणि तद्यथा तथा ववृषुः प्रलयकालमेघवद्वर्षन्नित्यर्थः॥७०॥

मधुरैरपि भूयसा स मेघ्यैः प्रथमं प्रत्युत वारिभिर्दिदीपे।
पवमानसखस्ततः क्रमेण प्रणयक्रोध इवाशमद्विवादैः ॥७१॥
परितः प्रसभेन नीयमानः शरवर्षैरवसायमाश्रयाशः।
प्रबलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम् ॥७२॥

---

टिप्पनी—ज्वलत इति। अत्र चतुर्थपादगत लाटानुप्रासेन टीकोक्तो उपमाधीपमे संसृज्येते। गुणरीती पूर्ववत् ॥७०॥

বাঙ্গালা—দুষের ন্যায় গর্জনকারী মেঘসকল, জাজ্বল্যমান অগ্নি নির্বাণের জন্য, প্রলয়ের প্লাবন দেখাইতে থাকিয়াই যেন বর্ষা করিতে লাগিল; সে বর্ষা নদীর তীরে জল উঠাইয়া দিল ॥৭০॥

अन्वयः—पवमानसखः सः मधुरैः अपि विवादैः प्रणयक्रोधः इव मधुरैः अपि मेघ्यैः वारिभिः प्रथमं प्रत्युत भूयसा दिदीपे ततः क्रमेण अशमत् ॥७१॥

टीका—मधुरैरिति। पुनाति पवत इति पवमानो वायुः। "पूङ्यजोः शानन्"। तस्य सखा पवमानसखः अग्निः। "राजाहःसखिभ्यष्टच्"। संज्ञाभावविवक्षायामयमादेशः। स्वसहकारिणो संज्ञेति नियमात् सहकारित्वाविवक्षायां वैपरीत्यात् बहुव्रीहौ तु न समासान्तः। स्वामी तु रोहिताश्वो वायुसखेति असमासान्तपाठेन बहुव्रीहिमाह। अत्रापि तथा पाठे न कश्चिदुपद्रवः। सोऽग्निः मधुरैः प्रियैरपि विवादैर्विविधवाक्यैः प्रणयक्रोधः प्रणयप्रयुक्तकोप इव मधुरैः स्वादुभिः अनुद्दीपकैरित्यर्थः मेघ्यैर्मेघभवैः। दिगादिभ्यो यत्। वारिभिः प्रथमं प्रत्युत वैपरीत्येनापि। प्रत्युतेति वैपरीत्ये इति गणव्याख्याने। भूयसात्यन्तं भृशमित्यर्थः दिदीपे प्रजज्वाल ततः क्रमेणाशमत् शान्तोऽभूत्। शाम्यतेर्लुङि पुषादित्वात् च्लेरङ् देशः। जलाहतोऽग्निर्ज्वलितो नश्यति प्रणयकोपोऽपि प्रियैः भृशायित्वा शाम्यतीति प्रसिद्धम्। उपमा ॥७१॥

टिप्पनी—मधुरैरपीति। अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७१॥

বাঙ্গালা—প্রণয়ক্রোধ যেমন নানাবিধ মধুর বাক্য দ্বারা প্রথমে অত্যন্ত জ্বলিয়া উঠে, তাহার পর ক্রমে নিবৃত্তি পায়; বায়ুর সখা সেই অগ্নিও তেমন মেঘের সুস্বাদু জল দ্বারা প্রথমে অত্যন্ত জ্বলিয়া উঠিল; তাহার পর ক্রমে নিবৃত্তি পাইল ॥৭১॥

अन्वयः—परितः प्रसभेन शरवर्षैः अवसायं नीयमानः कृती आश्रयाशः विद्युद्व्यपदेशेन प्रबलेषु घनेषु अनुप्रवेशं चकार ॥७२॥

टीका—परित इति। परितः प्रसभेन बलात्कारेण शरवर्षैर्नीरसेकैः। "शरं नीरे शरे वाणे" इति विश्वः। अवसायमवसादं नीयमानः। कृती कुशलः आश्रयमश्नातीति आश्रयाशोऽग्निः। कर्मण्यण्। प्रबलेषु घनेषु मेघेषु विद्युद्व्यपदेशेन तड़िच्छलेन अनुप्रवेशं चकार। अत्राग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः। बलवताभिभूतस्य [illegible]

প্রযতঃ প্রশমং হুতাশনস্য ক্বচিদালক্ষ্যত মুক্তমূলমর্চিঃ।
বলভিৎপ্রহিতায়ুধাভিঘাতাৎ ত্রুটিতং পক্ষিপতেরিবৈকপত্রম্ ॥৭৩॥
ব্যগমন্ সহসা দিশাং মুখেভ্যঃ শময়িত্বা শিখিনং ঘনা ঘনৌঘাঃ।
উপকৃত্য নিসর্গতঃ পরেষামুপরোধং ন হি কুর্ব্বতে মহান্তঃ ॥৭৪॥

---

তদনুপ্রবিষ্টো বেতি নীতাৰ্হ্যতি ভাবঃ। অত্র বিদ্যুদ্ব্যাজেনাগ্নিপ্রবেশোক্ত্যাপহ্নুতিঃ ত্বলঙ্কারপ্রতীতিঃ সমাসোক্তিঃ ॥৭২॥

টিপ্পনী—পরিত ইতি। অত্র ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭২॥

বাঙ্গালা—সকল দিকেই জলবর্ষণ, বলপূর্ব্বক সেই অগ্নিকে ক্ষীণ করিয়া আনিল; তখন নিপুণ সেই অগ্নি বিদ্যুতের ছলে প্রবল মেঘের ভিতরে প্রবেশ করিল ॥৭২॥

অন্বয়ঃ—প্রশমং প্রযতঃ হুতাশনস্য মুক্তমূলম্ অর্চিঃ, বলভিৎপ্রহিতায়ুধাভিঘাতাৎ ত্রুটিতং পক্ষিপতেঃ একপত্রম্ ইব ক্বচিৎ আলক্ষ্যত ॥৭৩॥

টীকা—প্রযত ইতি। প্রশমং নাশং প্রযতো গচ্ছতঃ। প্রতীতি প্রযন্ তস্য প্রযতঃ। ইণঃ শতরি যণাদেশঃ। হুতাশনস্যাগ্নেঃ সম্বন্ধি মুক্তমূলং ত্যক্তমূলং ত্যক্তাশ্রয়মর্চির্জ্বালা। "বহ্নের্দ্বয়োর্জ্বালকীলাবর্চির্হেতিঃ শিখা স্ত্রিয়া"মিত্যমরঃ। বলভিদা শক্রেণ প্রহিতস্য প্রযুক্তস্যায়ুধস্য বজ্রস্যাভিঘাতাৎ প্রহারাৎ ত্রুটিতং ছিন্নং পক্ষিপতেঃ পক্ষিরাজস্য গরুত্মত একং পত্রং পক্ষমিব ক্বচিদালক্ষ্যত অদৃশ্যত ইত্যুপমা। পুরা মাতুর্দাস্যবিমোকায়ামৃতমাহরতা গরুড়েনেন্দ্রপ্রযুক্তবজ্রগৌরবাদেকং পত্রং ত্যক্তমিত্যাগমঃ ॥৭৩॥

টিপ্পনী—প্রযত ইতি। অত্র চতুর্থপাদগতশ্চ্ছেকানুপ্রাসেন টীকোক্তোপমা সংসৃজ্যতে। বন্ধোৎকর্ষ ইহ গাঢ়োদারোক্তিভ্যাম্ ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭৩॥

বাঙ্গালা—অগ্নি নির্ব্বাণ পাইতে লাগিলে, তাহার মূলশূন্য শিখাটাকে, ইন্দ্রনিক্ষিপ্ত বজ্রের আঘাতে ছিন্ন গরুড়ের একখানি পাখার ন্যায় কোথাও দেখা গেল ॥৭৩॥

অন্বয়ঃ—ঘনাঃ ঘনৌঘাঃ শিখিনং শময়িত্বা দিশাং মুখেভ্যঃ সহসা ব্যগমন্। মহান্তঃ নিসর্গতঃ পরেষাম্ উপকৃত্য উপরোধং নহি কুর্ব্বতে ॥৭৪॥

টীকা—ব্যগমন্নিতি। ঘনা ঘনৌঘাঃ বর্ষুকাব্দসমূহাঃ। "অভ্রং মেঘো বারিবাহঃ স্তনয়িত্নুর্বলাহকঃ। ধারাধরো জলধরস্তড়িত্বান্ বারিদোঽম্বুভৃৎ॥ ঘনজীমূতমুদিরজলমুগ্ধূমযোনয়ঃ"... "শক্রধনুঃ স্যাদিন্দ্রায়ুধম্" ... "ঘনাঃ" ... কাব্দা ঘনা ঘনা" ইত্যমরঃ। শিখিনমগ্নিং শময়িত্বা সহসা দিশাং মুখেভ্যো ব্যগমন্ অপসস্রুঃ। গমেলুঙি পুষাদিত্বাদঙ্ তেরিড়াদেশঃ। তথাহি মহান্তো নিসর্গতঃ স্বভাবাদেব পরেষাম উপকৃত্য উপকারং কৃত্বা উপরোধং ন হি কুর্ব্বতে। মহতাং নিষ্কামস্থানং পরোপরোধায়েতি ভাবঃ। সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসঃ ॥৭৪॥

টিপ্পনী—ব্যগমন্নিতি। অত্র ঘনা ঘনৌঘা ইতি চ্ছেকানুপ্রাসেন টীকোক্তার্থান্তরন্যাসঃ সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৪॥

বাঙ্গালা—নিবিড় মেঘমালা অগ্নি নির্ব্বাপণ করিয়া তৎক্ষণাৎ সমস্ত দিক্ হইতে অপঃ

কৃতদাহমুদর্চিষঃ শিখাভিঃ পরিষিক্তং মুহুরম্ভসা নবেন।
বিগতাম্বুধরব্রণং প্রপেদে গগনং তাপিতপায়িতাসিলক্ষ্মীম্ ॥৭৫॥
ইতি নরপতিরস্ত্রং যদ্যদাবিশ্চকার প্রকুপিত ইব রোগঃ ক্ষিপ্রকারী বিকারম্।
ভিষগিব গুরুদোষচ্ছেদিনোপক্রমেণ ক্রমবিদথ মুরারিঃ প্রত্যহংস্তত্তদাশু ॥৭৬॥
শুদ্ধিং গতৈরপি পরাসৃজুভির্বিদিত্বা বার্ষ্ণেয়মবিঘটিতমর্মভিস্তম্।
মর্মাতিগৈরনৃজুভির্নিতরামশুদ্ধৈর্বাক্সায়কৈরথ তুতোদ তদা বিপক্ষঃ ॥৭৭॥

---

হৃত হইল। কারণ, প্রধান ব্যক্তিরা স্বভাবতঃ পরের উপকার করিয়া, তাহার অবরোধ করেন না ॥৭৪॥

অন্বয়ঃ—উদর্চিষঃ শিখাভিঃ কৃতদাহং নবেন অম্ভসা মুহুঃ পরিষিক্তং বিগতাম্বুধরব্রণং গগনং তাপিতপায়িতাসিলক্ষ্মীম্ প্রপেদে ॥৭৫॥

টীকা—কৃতেতি। উদর্চিষোঽগ্নেঃ শিখাভিঃ জ্বালাভিঃ কৃতদাহং বিহিততপনং ততো নবেনাম্ভসা মুহুঃ পরিষিক্তং বিগতা অম্বুধরা এব ব্রণা দোষা যস্য তদ্গগনং সন্তাপিতস্তাপং প্রাপিতঃ স পশ্চাৎ পায়িতঃ পানং কারিতঃ। পিবতের্ণ্যন্তাৎ কর্মণি ক্তঃ। "শাচ্ছাসাহ্বা-ব্যাবেপাং যুগিতি যুগাগমঃ। তস্য তাপিতপায়িতস্য যোঽসিস্তস্যাসেঃ খড়্গস্য লক্ষ্মীং প্রপেদে প্রাপ। ইতি নিদর্শনালঙ্কারঃ অম্বুধরব্রণেতি রূপকসঙ্কীর্ণঃ ॥৭৫॥

টিপ্পনী—কৃতেতি। অত্র ওজো গুণঃ, গৌড়ী চ রীতিঃ ॥৭৫॥

বাঙ্গালা—প্রথমে অগ্নির শিখা আকাশকে দগ্ধ করিল; পরে আবার নূতন জল তাহাকে অত্যন্ত সিক্ত করিল; তাহার পর আবার মেঘরূপ ব্রণ তাহা হইতে অপসৃত হইল; সুতরাং তখন আকাশটা প্রথমে দগ্ধ, পরে আবার সিক্ত তরবারির শ্রী ধারণ করিল ॥৭৫॥

অন্বয়ঃ—ইতি ক্ষিপ্রকারী নরপতিঃ প্রকুপিতঃ (সন্) রোগঃ বিকারম্ ইব যৎ যৎ অস্ত্রম্ আবিশ্চকার; অথ ক্রমবিৎ মুরারিঃ ভিষক্ ইব গুরুদোষচ্ছেদিনা উপক্রমেণ আশু তৎ তৎ প্রত্যহন্ ॥৭৬॥

টীকা—ইতীতি। ইতীত্থং ক্ষিপ্রং করোতীতি ক্ষিপ্রকারী শীঘ্রপ্রযোক্তা অন্যত্র বিকারকারী নরপতিশ্চৈদ্যঃ প্রকুপিতঃ প্রক্ষুভিতঃ সন্ যদ্ যদস্ত্রম্ আবিশ্চকার রোগো বিকারমিব অথ ক্রম-বিৎপরিপাটীবেদী মুরারির্ভিষগ্বৈদ্য ইব গুরুদোষচ্ছেদিনা গুরুদোষপ্রতিঘাতকেন দোষনিবর্ত্ত-কেন চোপক্রমেণোপায়েন প্রত্যস্ত্রপ্রয়োগেণেত্যর্থঃ। অন্যত্র মহৌষধপ্রয়োগেণ তত্তদস্ত্রম আশু শীঘ্রং তদ্বিকারমিবেতি ভাবঃ। প্রত্যহন্ প্রতিজঘান। হন্তের্লুঙ্ অদাদিত্বাচ্ছপো লুক্ হল্ঙ্যাবিতি তিলোপঃ। উপমা ॥৭৬॥

টিপ্পনী—ইতীতি। অত্র দ্বিতীয়পাদগতচ্ছেকানুপ্রাসেন টীকোক্তোপমা স সৃজ্যতে। বীরো রসঃ, মধ্যাদো গুণঃ, বৈদর্ভী রীতিঃ, মালিনী চ বৃত্তম্ ॥৭৬॥

বাঙ্গালা—লঘুহস্ত মহারাজ শিশুপাল ক্রুদ্ধ হইয়া, এই ভাবে, রোগ যেমন বিকার আবিষ্কার করে, তেমন যে যে অস্ত্র আবিষ্কার করিলেন; ক্রমাভিজ্ঞ শ্রীকৃষ্ণ চিকিৎ-সকের ন্যায় গুরুতরদোষনাশক চেষ্টা দ্বারা শীঘ্র শীঘ্রই সেই সেই অস্ত্র নষ্ট করিলেন ॥৭৬॥

राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा।
तेनाक्रोशत एव तस्य मुरजित्तत्कालल्लोलानल-
ज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥७८॥

अन्वयः—तदा विपक्षः परां शुद्धिं गतैः ऋजुभिः अपि अविघट्टित मर्म्मभिः वाणैः तम् अजय्यं विदित्वा, अथ अनृजुभिः नितराम् अशुद्धैः मर्म्मभिद्भिः वाक्सायकैः तं तुतोद ॥७७॥

टीका—शुद्धिमिति। तदा तस्मिन् समये विपक्षोऽरिश्चैद्यः परामुत्कृष्टां शुद्धिं लोहशुद्धिं गतैर्ऋजुभिरप्यविघट्टितमर्म्मभिरस्पृष्टमर्म्मस्थानैः तं हरिमजय्यं जेतुमशक्यम्। क्षय्यजय्यौ शक्यार्थे निपातः। विदित्वाथ मिन्नवसरे मर्म्माणि अतिगच्छन्तीति मर्म्मातिगैर्मर्म्मभेदिभिरनृजुभिर्वक्रैः नितरामशुद्धैरपवित्रैः वाच एव सायकास्तैः वाक्सायकैरिति रूपकं तुतोद व्यथयामास। चक्रप्रयोगस्याप्यनुपोद्वात इति भावः। अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूपकयोः सङ्करः। वसन्ततिलका वृत्तम् ॥७७॥

टिप्पनी—शुद्धिमिति। अत्र तुतोद तदैति च्छेकानुप्रासेन टीकोक्तसङ्करः पुनः संसृज्यते। वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ॥७७॥

বাঙ্গালা—তখন শিশুপাল, অত্যন্ত শুদ্ধ ও সরল হইলেও পরের অমর্ম্মবিদারক বাণ দ্বারা শ্রীকৃষ্ণকে অজেয় মনে করিয়া, তাহার পর বক্র, অত্যন্ত অশুদ্ধ এবং পরের মর্ম্মবিদারক বাক্যবাণ দ্বারা শ্রীকৃষ্ণকে ব্যথিত করিতে লাগিলেন ॥৭৭॥

अन्वयः—येन सहसा अश्लथालिङ्गनव्यापारैक-विनोद-दुर्ललितयोः राहुस्त्रीस्तनयोः कार्कश्यलक्ष्मीः वृथा अकारि; मुरजित् तत्काल-लोलानल ज्वाला-पल्लवितेन तेन चक्रेण आक्रोशतः एव तस्य वपुः मूर्द्धविकलं चक्रे ॥७८॥

टीका—राह्विति। येन चक्रेण सहसा झटिति अश्लथो दृढ़ो य आलिङ्गनव्यापारः स एव एका मुख्य। "एके मुख्यान्यकेवलाः" इत्यमरः। विनोदस्तत्र दुर्ललितयोर्लौलुपयोः राहुस्त्रीस्तनयो राहुरमणीकुचयोः कार्कश्यलक्ष्मीः काठिन्यशोभा वृथा व्यर्था अकारि कृता। शिरोमात्रावशेषितस्य राहोरालिङ्गनसुखसंभवादिति भावः। मुरजिद् हरिः तत्काले तस्मिन् समये लोलाभिश्चञ्चलाभिरनलज्वालाभिरग्निदीप्तिभिः पल्लवितेन सञ्जातपल्लवेन तारकादित्वादितच्। तेन चक्रेन आक्रोशत एव शपमानस्यैव तस्य शिशुपालस्य वपुर्मूर्द्धविकलं शिरोहीनं चक्रे चकार। शिरश्चिच्छेदेत्यर्थः। कर्त्तरि लिट्। राहोः शिरो वपुर्विकलमकारि, अस्य तु वपुः शिरोविकलं कृतमिति तात्पर्य्यम्। अत्र चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात् "अस्तुत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यते" इति पर्य्यायोक्तम् ॥७८॥

टिप्पनी—राह्विति। अत्र शेषार्द्धे वृत्त्यनुप्रासच्छेकानुप्रासयोरिति ताभ्यां टीकोक्तपर्य्यायोक्तं संसृज्यते। वीरो रसः, ओजो गुणः, गौड़ी च रीतिः। शार्द्दूलविक्रीड़ितं वृत्तम् ॥७८॥

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय।
प्रकाशेनाकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥७९॥

---

**বাঙ্গালা**—রাহুর স্ত্রীর স্তন দুইটী, গাঢ় আলিঙ্গনরূপ অদ্বিতীয় আনন্দকার্য্যের জন্য অত্যন্ত লুব্ধ ছিল এবং সেই স্তন দুইটীতে কাঠিন্যশোভাও খুব ছিল; কিন্তু শ্রীকৃষ্ণ যে চক্র দ্বারা সেই কাঠিন্যশোভাকে নিষ্ফল করিয়াছিলেন; সেই চক্র দ্বারা শ্রীকৃষ্ণ, কটূক্তি করিবার সময়েই শিশুপালের দেহটাকে মস্তকবিহীন করিলেন; তখন সেই চক্রের সকল দিকেই চঞ্চল অগ্নিশিখা বিস্তৃতভাবে ঘুরিতেছিল ॥৭৮॥

**अन्वयः**—अथ विस्मिताक्षैः नरेन्द्रैः श्रिया जुष्टं दिव्यैः सपटहरवैः पुष्पवर्षैः अन्वितम् ऋषिगणैः क्षणं स्तूयमानं चैद्यस्य वपुष्टः निरीय आकाशे प्रकाशेन दिनकर-करान् विक्षिपत् औपेन्द्रं वपुः विशत् धाम वीक्षाम्बभूवे ॥७९॥

**टीका**—श्रियेति। अथ शिरश्छेदानन्तरं श्रिया शोभया जुष्टं सेवितं दिव्यैर्दिवि भवैः सपटहरवैः सदुन्दुभिघोषैः पुष्पवर्षैः अन्वितं क्षणम् ऋषिगणैः स्तूयमानं तथा चैद्यस्य वपुष्टः शरीरतः। पञ्चम्यास्तसिल्। निरीय निर्गत्य। "इण् गतौ" इति धातोः "समासेऽनञ्पूर्वे क्त्वो ल्यप्" प्रकाशेन आकाशे दिनकरकरानर्करश्मीन् विक्षिपत् उपेन्द्रस्येदमौपेन्द्रं वपुर्हरेर्विग्रहं विशत् प्रविशत् धाम शिशुपालतेजो विस्मिताक्षैर्विकसितनयनैर्नरेन्द्रैः राजन्यैः ईक्षाम्बभूवे ईक्षितम्। ईक्षतेः कर्मणि लिट्। "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्। "कृञ्चानुप्रयुज्यते लिटि" इति भुवोऽनुप्रयोगः "भावकर्मणोः" इत्यात्मनेपदम्। अत्र भगवान् व्यासः "ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः। उत्पपात यदा राजन् तदा तेजो विवेश च॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः" इति। एतेन भगवद्वपुषोऽपि तदानीं सारूप्यमित्यनुसन्धेयम्। यदाह नारदः—"कामाद्गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो" इति। सूर्यसहस्राभिभाविनः शिशुपालतेजसो हरिशरीरप्रवेशवर्णनात्त-स्यालौकिकस्याद्भुतस्य प्रत्यक्षवदाभासनाद्भाविकालङ्कारः। तदुक्तं "यदद्भुतस्य प्रत्यक्षं भाविकं तदुदाहृतम्" इति। मेघविस्फूर्जिता वृत्तम्। "रसर्त्वश्वैर्यम्नौ स्रौ गुरुयुता मेघविस्फूर्जिता स्यात्" इति लक्षणात् ॥७९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये विंशः सर्गः
समाप्तः ॥२०॥

**टिप्पनी**—श्रियेति। अत्र परार्धगतेन छेकानुप्रासेन टीकोक्तभाविकालङ्कारः संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥७९॥

## অথ কবিবংশবর্ণনম্।

সর্ব্বাধিকারী সুকৃতাধিকারঃ শ্রীধর্ম্মনামস্য বভূব রাজ্ঞঃ।
আসন্নদৃষ্টির্বিরজাঃ সদৈব দেবোঽপরঃ সুপ্রভদেবনামা ॥৮০॥
কালে মিতং তথ্যমুদর্কপথ্যং তথাগতস্যেব জনঃ সুচেতাঃ।
বিনানুরোধাত্ স্বহিতেচ্ছয়ৈব মহীপতির্যস্য বচশ্চকার ॥৮১॥

---

বাঙ্গালা---তাহার পর, রাজারা দেখিলেন—, শিশুপালের দেহ হইতে সুন্দর একটী তেজ নির্গত হইয়া শ্রীকৃষ্ণের শরীরে যাইয়া প্রবেশ করিল। সে তেজের উপরে দুন্দুভিধ্বনির সহিত স্বর্গীয় পুষ্পবৃষ্টি হইতেছিল; ঋষিরা ক্ষণকাল তাহার স্তব করিতেছিলেন এবং সে তেজ আকাশবর্ত্তিনী উজ্জ্বলতার গুণে সূর্য্যের কিরণগুলিকেও পরাস্ত করিয়াছিল ॥৭৯॥

অন্বয়ঃ—সদা এব আসন্নদৃষ্টিঃ বিরজাঃ সুকৃতাধিকারঃ সুপ্রভদেবনামা (কশ্চিত্ ব্রাহ্মণঃ) অপরঃ দেবঃ (ইব) শ্রীধর্ম্মনামস্য রাজ্ঞঃ সর্ব্বাধিকারী বভূব ॥৮০॥

টীকা—*সর্ব্বাধিকারীতি। শ্রীধর্ম্মনামস্য রাজ্ঞঃ শ্রীধর্ম্মনামাভিধানস্য নৃপতেঃ অখিলকর্ম্মস্থানাধিকৃতো মহাসেনাপতিঃ সুপ্রভদেবনামা বভূব সুপ্রভদেবাভিধানোঽভূত। কিংলক্ষণঃ সুপ্রভদেবনামা সুকৃতাধিকারঃ সুকৃতে পুণ্যে কর্ম্মণ্যধিকারী ব্যাপারো যস্য স তথা ধর্ম্মেঽবসক্তঃ। যস্য সুকৃত এবাধিকারঃ স কথং সর্ব্বাধিকারী। তথা অপরো দেবঃ দ্বিতীয়ো রাজেব। তত্সাদৃশ্যাত্। রাজা হি সর্ব্বাধিকারী ভবতি। অথবা অপরো দেবো দেবসদৃশঃ। সুরা হি সুকৃতাধিকৃতাঃ অসন্নদৃষ্টয়োঽনিমিষাঃ বিরজস্কা নির্ম্মলাঃ। বৃত্তমিদমুপজাতিঃ ॥৮০॥

টিপ্পনী—সর্বেতি। অত্র প্রতীয়মানোত্প্রেক্ষালঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮০॥

বাঙ্গালা—যাঁহার দৃষ্টি (সমস্ত বিষয়েই) সর্ব্বদা আসক্ত থাকিত; রজোগুণনিবন্ধন যাঁহার অন্যায় ক্রোধ ছিল না এবং কেবল পুণ্যকার্য্যেই যাঁহার অধিকার ছিল; সেই সুপ্রভদেবনামক কোন ব্রাহ্মণ, অপর রাজার ন্যায়, ধর্ম্মনাভ রাজার সমস্ত কার্য্যের অধিকারী (মহামন্ত্রী) ছিলেন ॥৮০॥

অন্বয়ঃ—সচেতাঃ জনঃ তথাগতস্য ইব মহীপতিঃ অনুরোধাত্ বিনা স্বহিতেচ্ছয়া এব কালে মিতং তথ্যম্ উদর্কপথ্যং যস্য বচঃ চকার ॥৮১॥

টীকা--কালে ইতি। যস্য সুপ্রভদেবস্য কালে সময়ে যদ্বচনম্ উপদেশবাক্যং মহীপতির্ধর্ম্মনামাখ্যশ্চকার অকরোত্। কঃ কস্যেব বচশ্চকারেত্যাহ তথাগতস্য বুদ্ধভট্টারকস্য বচো যথা সচেতাঃ প্রাজ্ঞো জনোঽন্বতিষ্ঠত্। কথঞ্চিন্মন্দাদরশ্চকার নেত্যাহ—কুতঃ অনুরোধাদ্বিনা উপরোধমাবমৃতে। কথং চকারেত্যাহ—স্বহিতেচ্ছয়ৈব স্বস্যাত্মনো হিতেচ্ছয়ানুকূলচিকীর্ষয়া। যথাঽসৌ সচেতাঃ প্রাজ্ঞঃ। কিংলক্ষণং বচঃ হিতাহিতমাহ—মিতং স্বল্প-

---

* মল্লিনাথকৃতা টীকা নাস্তীতি বল্লভদেবকৃতা টীকৈবেয়ং নিবেশিতা।

तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ।
यं वीक्ष्य वैयासमजातशत्रोर्वचोगुणग्राहि जनैः प्रतीये ॥८२॥
सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।
यश्च द्वितीयः स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥८३॥

---

चरम् । तथा तथ्यं सत्यं । अपरं किं लघ्व्यं वचः उदर्कपथ्यमायत्यां हितम् । "उदर्कः फलमुत्तरम्" इत्यमरः । तथागतस्य बुद्धभट्टारकस्य सचेताः प्राज्ञो जनो मितं तथ्यमुदर्कपथ्यं वचो यथा स्वहितेच्छयैव करोति तत्तानुरोधात् क्वचिदभयतः किञ्चिदमुक्तमिति ॥८१॥

**टिप्पनी**—काव इति । अत्र श्रौतोपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८१॥

**বাঙ্গালা**—হৃদয়বান্ লোকেরা যেমন অন্যের অনুরোধ ব্যতীত নিজের হিতের জন্যই বুদ্ধদেবের উপদেশবাক্য গ্রহণ করিত ; সেইরূপ ধর্ম্মনাভ রাজাও অন্যের অনুরোধ ব্যতীত নিজের হিতের জন্যই যাঁহার উপদেশ বাক্য যথাসময়ে গ্রহণ করিতেন। কেন না, সে বাক্য পরিমিত, সত্য ও পরিণামে হিতকর ছিল ॥৮১॥

**अन्वयः**—तस्य दत्तकः इति उदात्तः क्षमी मृदुः धर्म्मपरः तनूजः अभवत् । जनैः यं वीक्ष्य अजातशत्रोः गुणग्राहि वैयासं वचः प्रतीये ॥८२॥

**टीका**—तस्येति । तस्य सुप्रभदेवस्य दत्तक इति दत्तकाख्यस्तनूजोऽभवत् पुत्रोऽभूत् । किंलक्षणो दत्तकः उदात्तो विपुलचित्तः । तथा क्षमी क्षमाशीलः । अपरं किंलक्षणो दत्तकः अतएव मृदुरकठोरः । तथा धर्म्मपरः सुकृतैकासक्तः । यं दत्तकं जनैर्वीक्ष्य लोकैर्दृष्ट्वा वैयासं व्यासस्येदं कृष्णद्वैपायनीयमजातशत्रोर्युधिष्ठिरस्य गुणग्राहि गुणग्राहकं वचः प्रतीये वचनं प्रतिपन्नमङ्गीकृतं भवति । सत्यं गुणिनः पुरुषाः भगवता कृष्णद्वैपायनेन पार्थस्याधिक्षाख्यंस्य वचनं किञ्चिदुक्तम् । अत्र च दत्तकोऽयं निखिलगुणभाजनं निदर्शनम् । अन्यथा कथमेवं गुणोऽयं स्यात् । क्षमीति क्षमादिभ्योऽस्त्यर्थे इनुण् । व्यासस्येदं वैयासं वचो भारतम् । वृद्धाय भवादिभ्यादन्यत्र नरस्यासुलभः । गुणान् गृह्णातीति गुणग्राहि । आख्यानकी वृत्तम् ॥८२॥

**टिप्पनी**—तस्येति । अत्र प्रथमपादे छेकानुप्रासोऽलङ्कारः । द्वितीयार्द्धेन दत्तकस्य युधिष्ठिरतुल्यत्वं व्यज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

**বাঙ্গালা**—সেই সুপ্রভদেবের দত্তক নামে একটী পুত্র জন্মিয়াছিল ; তিনি উদারস্বভাব, ক্ষমাশীল, কোমলপ্রকৃতি এবং ধর্ম্মপরায়ণ ছিলেন। যাঁহাকে দেখিয়া লোকে যুধিষ্ঠিরের গুণবর্ণনাবিষয়ক বেদব্যাসের বাক্য (মহাভারত) বিশ্বাস করিত (দত্তককে যখন সর্ব্বপ্রকারেই যুধিষ্ঠিরের ন্যায় দেখা যায়, তখন মহাভারতে যুধিষ্ঠিরের গুণবর্ণনা মিথ্যা নহে এইরূপ বিশ্বাস করিত) ।৮২।

**अन्वयः**—सतां मुख्यः स्वयम् अद्वितीयः यश्च आनन्दभाजा सर्वेण जनेन जनितं 'सर्वाश्रयः' इति गौणम् अनिन्द्यं द्वितीयं नाम अवाप ॥८३॥

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म लक्ष्मीपतेश्चरितकीर्त्तनचारु माघः ।
तस्यात्मजः सुकविकीर्त्तिदुराशयादः काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥८४॥

इति श्रीशिशुपालवधे महाकाव्ये श्रीदत्तकसूनुकवि-
श्रीमाघविरचिते शिशुपालवधो नाम
विंशः सर्गः समाप्तः ॥२०॥

—०—

---

टीका—सर्व्वेति। यश्च दत्तकः स्वयमात्मना सर्व्वाश्रय इत्येवम्भूतं नाम संज्ञान्तरमवाप लेभे। किं लक्षणं द्वितीयं नाम सर्वेणाखिलेन जनेन लोकेन आनन्दभाजा तुष्टेन सता जनितं कृतम्। अपरं किं लक्षणं नाम गौणं गुणप्रवृत्तिनिमित्तभूतमागतमर्थानुगम्। सर्वेषामाश्रयत्वात्। यथा हि सर्वं तत्र द्विजदीनानाथातिथिमित्रबान्धवा विश्राम्यन्ति तथासौ सर्व्वाश्रयः। ननु तं लपायिकावचामभालेण। अतएवानवद्यमनिन्द्यं प्रशस्यं श्लाघ्यम्। किं लक्षणो यः अद्वितीयः सर्वोत्कृष्टः। अविद्यमानो गुणादधिको गुणी यस्य सोऽद्वितीयः इति कृत्वा। तथा सतां मुख्यः प्रधानः अग्रणीः। सर्वं त्वेतद्विरुद्धमिवावभासते। तथा हि यस्य हि द्वितीयं नाम विद्यते कथमसावद्वितीयो भवेत्। यश्च मुख्यः स कथं गौणमप्रधानं स्यात्। यस्य च लोकैरपरं नाम जनितं स कथं तत्स्वयं लेभे। अविरोधस्तु मुख्यः स्यादेव। इति नामस्वरूपमात्राविवक्ष्यमानस्य सर्वाश्रयस्य प्रातिपदिकार्थमात्रे सति कर्म्मत्वाभावात् द्वितीयानुपपत्तिः। मुखमिव मुख्यः। "शाखादिभ्यो यत्"। विरोधालङ्कारः। इन्द्रवज्रा वृत्तम् ॥८३॥

टिप्पनी—सर्वेति। अत्र च्छेकानुप्रासेन वल्लभदेवोक्तो विरोधाभासः संसृज्यते। मधुररचनायामाश्माधुर्यं गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—সাধু লোকের মধ্যে শ্রেষ্ঠ এবং (গুণেরবিষয়ে) অদ্বিতীয় যে দত্তক, গুণনিবন্ধন ও অনিন্দনীয় 'সর্ব্বাশ্রয়' এইরূপ দ্বিতীয় নাম লাভ করিয়াছিলেন। সমস্ত লোক তাঁহার গুণে আনন্দিত হইয়া, সেই 'সর্ব্বাশ্রয়' নামটী করিয়াছিল ॥৮৩॥

अन्वयः---तस्य आत्मजः माघः सुकवि-कीर्त्ति-दुराशया श्री-शब्द-रम्य-कृत-सर्ग-समाप्ति-लक्ष्म लक्ष्मीपतेः चरितकीर्त्तनचारु शिशुपालवधाभिधानम् अदः काव्यं व्यधत्त ॥८४॥

टीका—श्रीशब्देति। तस्य दत्तकस्यात्मजोऽपत्यमदः एतत् काव्यं शिशुपालवधाभिधानं शिशुपालवधनामकं काव्यं ग्रन्थरूपं व्यधत्तारचयत्। शिशुपालवध इत्यभिधानं यस्य तत्तथा। कया हेतुना सुकविकीर्त्तिदुराशया। सुकवीनां श्रेष्ठविदुषां वररुचि-सुबन्धु-सोमनाथ-भवभूति-श्रीहर्षानन्द-कालिदास-विह्लण-भारवि-बाण-मयूरादीनां या कीर्त्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया। महाकविकीर्त्तिविषयेत्यर्थः। दुष्टत्वं त्वाशायाः स्वल्पबुद्धित्वेन सुकविकीर्त्तेरप्राप्यत्वात्। तथा च कालिदासः—"मन्दः कवियशः

१२५१

प्रार्थी गमिष्याम्युपहास्यताम् । प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" ॥ इति । किं लक्षणं काव्यं श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म । श्रीरित्ययं शब्दो ध्वनिमङ्गलवाचकत्वात् तेन रम्यं कृतं मनोहरं विहितं सर्गाणां समाप्तौ अर्थादध्यायानां समापने लक्ष्म चिह्नं यत्र तत्तथोक्तम् । अपरं किं लक्षणं काव्यं लक्ष्मीपतेः श्रीनारायणस्य कीर्त्तनमात्रचारु कीर्त्तनमात्रेण वर्णनमात्रेण चारु मनोज्ञम् । न त्वलङ्कारादिनेत्यनौद्धत्यकथनम् । भङ्ग्या तु सर्वोऽत्र काव्ये गुणाः सन्तीत्युक्तं भवति । श्रीरित्ययं शब्दः मयूरव्यंसकादित्वात् समासः । यदि श्रीश्चासौ शब्दश्चेति कर्म्मधारयः केवलमेव । चरितकीर्त्तनमात्रमित्यस्वपदेन विग्रहः । सुप् सुपेति समासः । वसन्ततिलका वृत्तम् । उदात्तो मध्यमोऽलङ्कारः ॥८४॥

—०—

**टिप्पनी**—श्रीति । अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, पाञ्चाली च रीतिः ॥८४॥

सप्त-वेद-वसु-चन्द्र-सम्मिते वत्सरे शककृपस्य कार्त्तिकी ।
पूर्णतामभजत पूर्णिमातिथौ माधुरी तनुरटीतमाधुरी ॥
कोटालिपाड़ीनशिवानिवासी नन्दीपुरेशस्य सभाप्रवासी ।
सत्काव्यपोऽध्यापनमुख्यकर्म्मा व्यधादिमां श्रीहरिदासशर्म्मा ॥

इति ᵒगङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज-श्रीहरिदाससिद्धान्तवागीश-
भट्टाचार्य्यविरचितायां शिशुपालवधटिप्पन्यां माधुरी-
समाख्यायां विंशः सर्गः ॥०॥

—०—

**বাঙ্গালা**—সেই দত্তকের পুত্র মাঘ, সুকবির যশ লাভ করিবার দুরাশায় 'শিশুপাল-বধ' নামক এই কাব্য রচনা করিলেন। কেবল শ্রীকৃষ্ণের চরিত্র কীর্ত্তন থাকায় এই কাব্য মনোহর হইয়াছে এবং 'শ্রী' শব্দের প্রয়োগ করিয়া সুন্দরভাবে ইহার সকল সর্গই সমাপ্ত করা হইয়াছে এবং তাহাই এই কাব্যের লক্ষণ ॥৮৪॥

---

# समाप्तम् ।

4-8-6
0-6-0
4-14-0

